श्रीः



श्री व्यासोक्ताष्टादश पुराणान्तर्गत

# श्री स्कान्दमहापुराणे



## शंकर संहितायां शिवरहस्यखंडः



# ॥ प्रस्तावना ॥

## श्री व्यासोक्ताष्टादश पुराणान्तर्गत श्री स्कान्दमहापुराणे शंकरसंहितायां शिवरहस्यखण्डः।



कैलासवासी श्रीपरमेश्वरः ज्ञानदातेति — ज्ञानमिच्छेन्महेश्वरादिति — शास्त्रमुपदिशति। ज्ञानादेवतु कैवल्यमिति च। तादृशज्ञानदातुः पार्वतीकान्तस्य महिमातावदस्मिन्ग्रन्थे विशेषेणानुवर्ण्यते। तदात्मजस्य ज्ञानरूपस्य स्कन्दस्य अवतारादि चरित्रं विभूतिमहिमा स्कन्देन क्षेत्राटनं तारकादि शूरपद्मान्तानां असुराणां वधः नित्यकल्याणप्रद वल्लीदेवसेना परिणयः एकादश कोटि रुद्रैः श्रीमध्यार्जुन क्षेत्रे श्रीमहालिङ्गाराधनं, श्रीदाक्षायणी तपश्चरणं, शिवदर्शनं, दक्षेण शिव निन्दा, दधीचि महर्षीणा शिवमहिमानुवर्णनं, श्रीशिव कारुण्य वर्णनं, विभूतिरुद्राक्ष महिम प्रतिपादनं, पञ्चाक्षर महिमा, महाप्रदोष व्रतं, शिवालय जीर्णोद्धारणं, शिवलिंगप्रतिष्ठा, शिवपूजा, भैरव व्रतं, सोमवार व्रतं, शिवनाम वैभवः, शिवार्चनं, पुष्पवाटिकानिर्माणादि बहूनि आश्चर्यकराणि महापापनिवर्तकानि महामंगलप्रदानि अन्यानि बहूनि चरित्राणि अस्मिन् शिवरहस्य खण्डे सन्ति॥

कुमारसंभवश्चैव धन्यः पुण्यस्तथैव च।<br>
भक्तश्च यः कार्तिकेये काकुत्स्थभुवि मानवः॥<br>
आयुष्मान् पुत्रपौत्रैश्च स्कन्द सालोक्यतां व्रजेत्॥

इति श्रीमद्रामायणे अभिहितं॥ किञ्च जातकवशात्, अंगारकः दोषयुक्तश्चेत् रक्तदोषः ऋणबाधादिकं भ्रातिकलहः द्रव्यनाशश्च भवेदिति ज्योतिश्शास्त्रे अभिहितः। तद्वत्, सूर्य बृहस्पत्यादि ग्रहाः दोषयुक्ताः यदिस्युः तदा शिवापचारः मान्द्य रोगः उदररोगः पुत्रोत्पत्ति प्रतिबन्धकादयः बहवो दोषाभवेयुः इत्यप्यभिहितः॥ एतत् पुराण पठनेन, तादृशदोषाः सर्वेपि विनश्येरन् मंगलप्राप्तिश्च ध्रुवं भवेदेव॥ तस्मादास्तिकवराः सर्वेपि ग्रन्थमिमं पठित्वा सर्वा आशिषः प्राप्नुयुरिति श्रीभगवन्तं पार्वतीनाथं श्रीवल्लीदेवसेनापतिश्च प्रार्थयामि॥

एषोयं ग्रन्थः सप्तति वर्षेभ्यः प्राक् दक्षिणदेशप्रसिद्ध ग्रन्थाक्षरेण मुद्रापितः। इदानीं स कोशोपि नोपलभ्यते। उपलभ्योपि कोशः जीर्णपत्रयुक्तः हस्ते गृहीत्वा पठितुमपि नार्होस्ति। तस्मात् देवनागरलिप्या मुद्रापयित्वा आस्तिकानां उपकाराय प्रकाशीकृतः।

देवनागरी द्राविडाक्षर श्लोकयुक्तं द्राविड भाषानुवादसहितं एतदेव शिवरहस्यखण्डात्मकं पुस्तकं मया इदानीमेव मुद्राप्य प्रकटीकृतमस्ति।

इत्थं
शोङ्गालिपुरं अनन्तरामदीक्षितः

25, North Maravaneri,
SALEM-7.

# विषयसूचिका

## ॥ संभवकाण्डम् ॥

## ॥ आसुरकाण्डम् ॥



## ॥ वीरमाहेन्द्रकाण्डम् ॥



## ॥ युद्धकाण्डम् ॥

## ॥ देवकाण्डम् ॥



## ॥ दक्षकाण्डम् ॥

## ॥ उपदेशकाण्डम् ॥

॥ श्री मद्दा गुरुभ्यो नमः ॥ ॥ अविघ्नमस्तु ॥ ॥ श्री विघ्नेश्वराय नमः ॥

# श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे

## ॥ संभवकाण्ड प्रारम्भः ॥



मङ्गलं दिशतु मे विनायको मङ्गलं दिशतु मे षडाननः ।
मङ्गलं दिशतु मे महेश्वरी मङ्गलं दिशतु मे महेश्वरः ॥ १

ओंकारनिलयं देवं गजवक्त्रं चतुर्भुजम् । पिचण्डिलमहं वन्दे सर्वविघ्नोप शान्तये ॥ २
सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लम्बोदरश्च विकटो विघ्नराजो विनायकः ॥ ३
धूमकेतुर्गणाध्यक्षः फालचन्द्रो गजाननः । वक्रतुण्डः शूर्पकर्णः हेरम्बः स्कन्दपूर्वजः ॥ ४
षोडशैतानि नामानि यः पठेत् शृणुयादपि । विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ॥ ५
संग्रामे संकटे चैव विघ्नस्तस्य न जायते । सुब्रह्मण्यं प्रवक्ष्यामि सर्वज्ञं सर्वगं सदा ॥ ६
अभीप्सितार्थ सिद्ध्यर्थं प्रवक्ष्ये नाम षोडश । प्रथमो ज्ञानशक्त्यात्मा द्वितीयो स्कन्द एव च ॥ ७
अग्निभूश्च तृतीय स्यात् बाहुलेयश्चतुर्थकः । गांगेयः पञ्चमो विद्यात् षष्ठः शरवणोद्भवः ॥ ८
सप्तमः कार्तिकेयः स्यात् कुमारस्स्यादथाष्टकः । नवमः षण्मुखश्चैव दशमः कुक्कुटध्वजः ॥ ९
एकादशः शक्तिधरः गुहो द्वादश एव च । त्रयोदशो ब्रह्मचारी षाण्मातुरश्चतुर्दशः ॥ १०
क्रौञ्चभित्पञ्चदशकः षोडशः शिखिवाहनः । एतत् षोडश नामानि जपेत् सम्यक् सदादरम् ॥ ११
विवादे दुर्गमे मार्गे दुर्जये च तथैव च । कवित्वे च महाशास्त्रे विज्ञानार्थी फलं लभेत् ॥ १२
कन्यार्थी लभते कन्यां जयार्थी लभते जयम् । पुत्रार्थी पुत्रलाभं च धनार्थी लभते धनम् ॥ १३
आयुरारोग्य वश्यं च धनधान्य सुखावहम् । पुरा काञ्च्यां चतुर्वक्त्रः तताप परमं तपः ॥ १४
स्रष्टुकामः प्रजाः सर्वाः कृपया परमेशितुः । तस्मिन् महेशचरण परिचर्या परायणे ॥ १५
मुनयः कतिचित् पुण्ये स्थित्वा गार्हस्थ्य उत्तमे । वैखानसाश्रमे तन्तुं तपस्समयत मानसाः ॥ १६
*प्राप्तुस्तन्निकटं स्रष्टुं तदर्हं स्थानमुत्तमम् । ततस्तमभिवाद्यैतेऽपृच्छन्नार्तमयो विधिम् ॥ १७*
देव कुत्र वयं स्थित्वा वानप्रस्थ परायणाः । तपः कुर्मो वदैतत्वं नमस्ते प्रपितामह ॥ १८
इति तेषां समाकर्ण्य वचनं वारिजासनः । ध्यात्वा मुहूर्तमादाय कुशाकूर्चमनोव्यधात् ॥ १९
तानालोक्याह पद्मानः शीर्यते विजने वने । तद्वनं वः क्षमं कर्तुं तप इत्यनुशास्यतान् ॥ २०
विससर्ज तदा ब्रह्मा शिवं ध्यात्वा शिवामपि । ततस्तु नेमिस्सास्यापि चारु श्लक्ष्ण शिलातले ॥ २१
शीर्णा तैरन्यतारण्ये तद्वन तेन नैमिशम् । गङ्गा हिमवतो यत्र चन्द्रमण्डल निःसृता ॥ २२
अवतीर्णाऽवनीभागे भगीरथ पदानुगा । शम्भोः कपर्दविलसत्कृतमाला सुगन्धिनी ॥ २३
तया सन्नैमिशं पुण्यं सर्वलोकैक पावनम् । नानामुनिगणाकीर्णं नानामृगसमाकुलम् ॥ २४

नानापक्षिगणालाप मुखरीकृतपादपम् । स्निग्धच्छाया तरुलता संछन्न पृथिवीतलम् ॥ २५
अच्छाच्छ स्वादु पानीयं अतिस्निग्ध तरुच्छलम् । तदासीत्तपसस्तेषां उचितं नैमिशं तदा ॥ २६
तप्त्वा तपश्चिरं सर्वे प्रीतये पार्वतीपतेः । ततस्सत्रं समारब्धं सहस्रसम संज्ञितम् ॥ २७
इच्छद्भिरैश्वरीं तुष्टिं यष्टिः ब्राह्मणपुंगवैः । तत्र सत्रे समाकर्ण्य समारब्धं मुनीश्वरैः ॥ २८
मुनेः सत्यवतीसूनोः अन्तेवासी तपोनिधिः । सूतः पौराणिकः श्रीमान् पुरारि चरणप्रियः ॥ २९
संप्राप सरसा तेषां मुनीनां भाग्यगौरवात् । तं दृष्ट्वा ते मुनिश्रेष्ठाः प्रीतिकण्ठकितत्व चः ॥ ३०
सपर्यया तदा सूतं ते सर्वे पर्यपूजयन् । निर्दिष्टमासनं भेजे तत्पूजा मुदितान्तरः ॥ ३१
सूतः पौराणिकः श्रीमान् स्मयमान मुखाम्बुजः । तदा तमनुकूलाभिः वाग्भिस्ते वाग्विदां वरम् ॥ ३२
प्रीतं विधाय तेऽपृच्छन् कथाः पौराणिकीः शुभाः । मुनयः — वयं नैमिशमासाद्य कृतार्था वचनाद्विभोः ॥
तदिदानीं यदास्माकं स्कन्दस्य चरितं महत् । उत्पत्तिस्तेजसस्तस्य शाम्भवाज्जगदद्भुताद् ॥ ३४
कथं कथय सर्वज्ञ तदा शरवणान्तरात् । किं वीर्यं किं कृतं तेन पार्वती येन संयुगे ॥ ३५
के वा दनु सुतास्तेन निहता वीर्यशालिना । रथ नाग तुरङ्गेभ्यः कथं बर्हीस्य वाहनम् ॥ ३६
कृकवाकुः कथं तस्य शक्ति वज्रादि हेतिभिः । अलंकरोति हस्ताब्जं पार्श्वे के वनिते उभे ॥ ३७
श्रवणादस्य वीर्याणां किं श्रेयः संभवेद्भुवि । वद तस्य महाभाग विक्रमश्चो यथा तथम् ॥ ३८

सूतः —

मुनयो हे महाभागाः श्रुणुध्वं संशितव्रताः । श्रेयसामपि सर्वेषां निदानमिदमुत्तमम् ॥ ३९
धर्मार्थं काममोक्षाणां इदमेकं हि साधनम् । शृणुयादिदं महदाख्यानं वन्ध्यापि लभते सुतम् ॥ ४०
कन्यार्थी चाप्नुयात् कन्यां धनार्थी धनमाप्नुयात् । विद्यार्थी चाप्नुयात् विद्यां राज्यार्थी राज्यमाप्नुयात् ॥
नियमाद्विवमासान्तं दंपती श्रद्धया पुनः । अनन्य मानसा भूत्वा श्रृणुयातामतन्द्रितौ ॥ ४२
एकवारेण तौकामं आप्नुयातामसंशयम् । अवश्यं श्रद्धयाभ्यर्च्य पुराणमिदमुत्तमम् ॥ ४३
जायापती यदि कन्यां अनपत्यावपि द्विजाः । श्रृणुयातां तथाधन्यं कुमारागतमानसौ ॥ ४४
सत्यं सत्यं पुनः सत्यं आप्नुयातां बहून् सुतान् । तस्मादभ्यर्च्य मुनयः सर्वे श्रृण्वन्तु सादरम् ॥ ४५
आख्यानैर्बहुभिर्युक्तं अभीष्ट फलसाधनम् । आदरेण मुनिश्रेष्ठाः श्रृणुध्वं कथयामि वः ॥ ४६

इति खिलं कथितं ते सूतमुख्येन विप्राः श्रुतिसुखमनुभूय श्रोत्रपीयूष धाराम् ।
शिवसुत चरितं ते श्रोतुकामाः विचित्रम् बहुतरमभवंस्ते साधु साध्वित्यमन्दम् ॥ ४७

श्रीशिवादि महापुराणे श्रीस्कान्दे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे सूतमुनिसंवादो नाम प्रथमोऽध्यायः ॥

---

॥ द्वितीयोऽध्यायः ॥

अथ सूतो महादेवं ध्यात्वा सांबं सपुत्रकम् । व्यासं सत्यवतीसूनुं उवाच वचनं शुभम् ॥ १

श्री सूतः —

शौनकाद्या महाभागाः तपः क्षीणाघसंचयाः । श्रृणुध्वमृषयस्सर्वे गदतो मत्कथां शुभाम् ॥ २
स्कन्दस्य कीर्तिमतुलां कलिकल्मष नाशिनीम् । आदिकल्पे युगावृत्या द्वापरे समुपस्थिते ॥ ३
प्रजानामपि सर्वासां बुद्धिलाघवतस्तदा । अभावेदो वेदार्थः विद्यास्सर्वाश्च हे द्विजाः ॥ ४

तदा केचिज्जगद्धेतुं ब्रह्ममाहुर्विमोहिताः । प्राणं मनोऽथविज्ञानं आनन्दमपरे जगुः ॥ ५
आदित्यमनिलं वह्निं अब्जजं कमलापतिम् । प्रकृतिं पुरुषं चान्ये कर्मकेवलमात्मनाम् ॥ ६
अन्यमन्यत्परं शंसन्ति बौद्धचार्वाकसंकुलाः । बहुना किं मुनिश्रेष्ठाः ईशादन्यपरं जगुः ॥ ७
सर्वाधिकारे सन्दिग्धे तदैवं कालयोगतः । तदा विष्णुमुखा देवाः ब्राह्मणास्सर्व एव ते ॥ ८
कालस्य तु तदा दृष्ट्वा बुद्धिमोहकरीं कृतिम् । कैलासवासिनं देवं सर्वेशं सकलेश्वरम् ॥ ९
साक्षादेव परंब्रह्म संसारामयभेषजम् । दिव्यसिंहासनारूढं देव्या सह शिवाख्यया ॥ १०
समासाद्य महादेवं प्रणम्याग्रे व्यजिज्ञपन् । भगवन् प्राणिनस्सर्वे ब्राह्मणाद्या द्विजातयः ॥ ११
गुर्वाज्ञामननुप्राप्य कालेन किल देवप । नाधीयतेह्यवेदान् भवन्तं चान्यमतिभ्रमात् ॥ १२
अन्यान्यपि च शास्त्राणि न पठन्त्यत्र वालिशाः । कर्तारं जगतां त्वत्तः ब्रुवते ते विमोहिताः ॥ १३
ब्रह्माणमपरे विष्णुं इन्द्रं मित्रं परेऽनिलम् । त्वां ब्रह्मपरमं नैव जानन्ति हि विमोहिताः ॥ १४
सर्वाधिकारे सन्दिग्धे धर्ममार्गे बहिर्गते । गुरुशिष्यक्रमे नष्टे लोभमोहसमावृते ॥ १५
निःस्वाध्यायवषट्कारे जगत्यस्मिंश्चराचरे । ब्रह्मांशभाजामस्माकं का गतिस्त्वदृते विभो ॥ १६
इति विज्ञाप्य देवेशं देवा विष्णुपुरोगमाः । बहुमानेन देवेशं अपृच्छन् जगतां हितम् ॥ १७
तानुवाच महादेवः प्रभुर्गम्भीरया गिरा । विष्णो विधे युवां भूमौ द्वापरे द्वापरे युगे ॥ १८
व्यासौ मनुष्य संभूय वेदशाखे क्रमे युवाम् । संक्षिप्य कुरुतं सम्यक् अनन्ते ते यथा नृणाम् ॥ १९
अधिकर्तुं क्षमे बुद्धिविहीनानां कलौ युगे । कर्मब्रह्मविधातॄणां शास्त्राणां सूत्रवर्तनम् ॥ २०
ऋषिभिस्सहितावन्यैः शीघ्रं कुरुतमाचिरम् । देवाश्च शुभपक्षान्ये निर्वक्ष्यन्ति हितायवै ॥ २१
शास्त्राणि च पुराणानि संक्षिप्यन्तु ममाज्ञया । इति देवाज्ञया देवाः विष्ण्वाद्या ब्राह्मणद्विजाः ॥ २२
व्यासादि संज्ञया जन्म संप्राप्य पृथिवीतले । वेदानपि पुराणानि धर्मशास्त्राणि चक्रुशः ॥ २३
विधूयन्तीह संक्षेपात् ईशाज्ञाहि गरीयसी । मुनयोऽस्मिन्युगावर्ते कृष्णद्वैपायनो मुनिः ॥ २४
भूत्वा नारायणो व्यासः सत्यवत्यास्सुतो महान् । संक्षिप्य चतुरो वेदान् समुनिर्बादरायणः ॥ २५
पैलादिभ्यो विभज्यैतान् पृथक् पृथगसंशयम् । दशधाचाष्टधा कृत्वा पुराणानि मुनीश्वराः ॥ २६
मह्यं करुणया प्रादात् गुरुस्सत्यवतीसुतः । ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ॥ २७
भविष्यन्नारदीयं च मार्कण्डेयमतः परम् । आग्नेयं ब्रह्मवैवर्तं लैङ्गं वाराहमेव च ॥ २८
स्कान्दं च वामनं चैव मात्स्यं कौर्मं च गारुडम् । ब्रह्माण्डं चेति पुण्योऽयं पुराणानामनुक्रमः ॥ २९
तत्र शैवानि शैवं च भविष्यञ्च द्विजोत्तमाः । मार्कण्डेयं तथा लैङ्गं वाराहं स्कान्दमेव च ॥ ३०
मात्स्यमन्यत्तथा कौर्मं वामनं च मुनीश्वराः । ब्रह्माण्डं [illegible] दशेमानि त्रीणि लक्षाणि संख्यया ॥ ३१
ग्रन्थानां महिमासर्वैः शिवस्यैव प्रकाश्यते । असाधारणयामूर्त्या नाम्ना साधारणेन च ॥ ३२
वदन्ति शिवमेतानि शिवस्तेषु प्रकाश्यते । विष्णोर्हि वैष्णवं तद्वत् तथा भागवतं तथा ॥ ३३
नारदीयं पुराणं च गारुडं वैष्णवं विदुः । ब्राह्मं पाद्मं ब्रह्मणो द्वे अग्नेराग्नेयमेककम् ॥ ३४
सवितुर्ब्रह्मवैवर्तं एवमष्टादशस्मृतम् । चत्वारि वैष्णवानीशा विष्णोरमाख्य वराणि वै ॥ ३५
ब्रह्मादिभ्योऽधिकं विष्णुं प्रवदन्ति जगत्पतिम् । ब्रह्म विष्णु महेशानां साम्यं ब्राह्मे पुराणके ॥ ३६
अन्येषामधिकं देवं ब्रह्माणं जगतां पतिम् । प्रवदन्ति दिनाधीशं ब्रह्मविष्णु शिवात्मकम् ॥ ३७
प्रातर्मध्याह्न सायाह्न समयेषु प्रतीतिहि । अग्निं वैश्वानरं साक्षात् आत्मानं त्रिगुणात्मकम् ॥ ३८
आग्नेयं ब्रह्मवैवर्तं अपि तौ जगदीश्वरौ । शिवात्मानौ विशेषेण यदतोऽस्य तनू उभे ॥ ३९
ग्रन्थसंख्या पुराणानां चतुर्लक्षं प्रमाणतः । यथा शास्त्रेषु वेदेषु विश्वाधिक उमापतिः ॥ ४०
पुरुषः परमः साक्षात् पतिः पाशविमोचकः । परं ब्रह्म परं धाम परं ज्योतिरनाकुलम् ॥ ४१

मङ्गलं मङ्गलानां च पावनानां च पावनम् । सर्वमङ्गलयोपेतं ततश्च सुमङ्गलं ॥ ४२
आगमान्त शिरो नित्य श्रमूर्तं प्रवदन्ति हि । तद्वदेव पुराणानि शिवं साम्ब शिवप्रदकम् ॥ ४३
स्वतन्त्रमेकमद्वैतं प्रवदन्ति निरङ्कुशम् । तत्र स्कान्दं प्रवक्ष्यामि पुराणेषु त्रयोदशम् ॥ ४४
संहिताभि तथा षड्भि लक्षैर्ग्रन्थैर्विराजितम् । दश चैव पुराणानि सात्त्विकानि विदुर्बुधा ॥ ४५
श्रद्धेयानि द्विजवरै तेषा धर्मास्तु तत्परत् । सत्त्व शुद्ध समाधिश्च सुखज्ञानास्पद तु यत् ॥ ४६
विद्योपदेष्टा योगिभ्य शुद्धस्फटिक सन्निभ । न निद्राति शिव श्चापि ब्राह्मणाधिपति श्रुत ॥ ४७
द्वयत्येव पुराणानि ब्राह्मणाना कथा शुभा । दश चैव पुराणानि हिंसा दोष पराङ्मुखम् ॥ ४८
वैष्णवानि च चत्वारि तामसानि मुनीश्वरा । क्षत्रियाणा श्रुता धर्मा तेषु तद्देवता हरि ॥ ४९
तम कृष्णमुदासीन कूटस्थ विशारदम् । निद्रालस्य प्रमादाद्या तद्गुणा परिकीर्तिता ॥ ५०
कृष्णो विष्णु स्मृत शेष शायी भक्त विमोहन । तेषु च क्षत्रियाणा च धर्मा विप्रेन्द्रदाहृता ॥ ५१
ब्राह्मेतु राजसे चैव सेव्ये सर्वत्र सम्मते । दु खास्पद रक्तवर्ण मङ्गल च रजो मतम् ॥ ५२
गुणत्रय समायुक्त आग्नेय सौरमेव च । तस्माच्छैवानि विप्राणा पुराणानि हितानि हि ॥ ५३
तेष्वपीद मुनिश्रेष्ठा स्कान्द सुखदमुत्तमम् । सर्ववेदान्तसारस्य पञ्चाशत् खण्डमण्डितम् ॥ ५४
आद्या सनत्कुमारीया द्वितीया सूतसंहिता । ब्राह्मी तु संहिता पश्चात् तृतीया वैष्णवी मता ॥ ५५
पञ्चमी शाङ्करीज्ञेया सौरी षष्ठी तु संहिता । आद्या तु पञ्च पञ्चाशत् सहस्रै श्लोककैर्युता ॥ ५६
द्वितीया संहिता विप्रा षट्सहस्रैरलङ्कृता । त्रिसाहस्रैर्युता ब्राह्मी पञ्चभिर्वैष्णवीयुता ॥ ५७
त्रिंशत्भिश्शाङ्करीयुक्ता खण्डैर्द्वादशभिस्तथा । षष्ठी तु सौरी संयुक्ता सहस्रेणैक केवला ॥ ५८
ग्रन्थलक्षैर्युत स्कान्द पञ्चाशत् खण्डमण्डितम् । तद्वत्सप्रवक्ष्यामि युष्माक विप्रपुङ्गवा ॥ ५९
तत्रयासंहिता प्रोक्ता शाङ्करी वेदसम्मता । त्रिंशत् सहस्रैर्ग्रन्थाना विस्तरेण सुविस्तृता ॥ ६०
आद्यो शिवरहस्याख्य खण्डमद्य वदामि व । तत्रयोदश साहस्री सप्तकाण्डरलङ्कृतम् ॥ ६१
पूर्वं सम्भवकाण्डाख्य द्वितीयस्त्वासुर स्मृत । माहेन्द्रस्तु तृतीयो हि युद्धकाण्डस्तत स्मृत ॥ ६२
पञ्चमो देवकाण्डाख्य दक्षकाण्डस्तत परम् । सप्तमस्तु मुनिश्रेष्ठा उपदेश इति स्मृत ॥ ६३
[illegible] सर्व गुहस्यैव चरित वर्णित पुरा । विक्रम तस्य सेनान्य व्यासेन मुनिना द्विजा ॥ ६४

इदमिह विबुधाना आर्तिमोहापनोदम् प्रकटित पहुमाय कीतयन्त्येव नित्यम् ।
श्रुतिपुटमधुभूयो भूप एवाद्रियन्ते श्रुविस्तुत पशुपत्नी बन्धुमित्रैरमन्ते ॥ ६५

इत्यादि महापुराणे स्कान्दे शङ्करसंहितायां शिवरहस्यखण्डे
सम्भवकाण्डे द्वितीयोऽध्याय ॥

---

॥ तृतीयोऽध्याय ॥

कैलास शिखरे पूर्वं शङ्कर लोकशङ्करम् । देवी दक्षस्य दुहिता देवदेवमुवाच सा ॥ १
देवाति लङ्घ्य वचन अह गेह पितुर्गता । अनुभूतस्तत सम्यक् अवमान सुदु सह ॥ २
सोऽपि वीरेण भवता शिक्षित ससुतन्तुना । तथापि जनता देवा सदादाक्षायणीति माम् ॥ ३
तदह नैव शक्तास्मि सोढु त्रिभुवनेश्वर । तदद्य मे वर देहि कुत्र चित् जनिरस्तु मे ॥ ४
इति देव्यार्थितो देव स्मितपूर्वमभाषत । आर्ये दाक्षायणीच्छा चेत् आहिता हृदये दृढा ॥ ५
तथैव कुरु महाचपल हिमवन्त गुरु गिरिम् । सत्वामेव सुताभाप्तु तपस्या तनुते भृशम् ॥ ६
ध्यायमानौ त्रियुग्म ते पितरौ मानसी च सा । तौ कुरुष्व कृतार्थौ [illegible] अधागत्य तयो प्रिये ॥ ७
अथ जन्मोत्सुकाधान्तु तस्या तत्र हिमाचल । तापसीं तनुमादाय तताप परम तप ॥ ८

जटाभिरावृतो मूर्ध्नि लताभिरिव पर्वत । मौञ्जीं च मेखला तन्वीं दधानो रौरवीं त्वचम् ॥ ९
भस्माश्रम हतिर्भस्म रुद्राक्ष विलसत् तनु । शान्तो दान्तो जितक्रोध मनसा परदेवताम् ॥ १०
ध्यायमानोऽखिलेशानीं तामेव मनसा शिवाम् । फल पर्णाम्बु पवनै भावयन् वृत्तिमात्मन ॥ ११
शुचौ पञ्चाग्नि मध्यस्थ सूर्ये विन्यस्त लोचन । प्रावृषेषु दिनेष्वेव केवल व्योम सवृत ॥ १२
हैमन्ते हिमसगीत हिमवानेव पूर्ववत् । शैशिरे जलमध्यस्थः वसन्ते रवि सम्मुख ॥ १३
सधीयान सदा देवी मुक्त मन्य पराङ्मुख । भार्या च तस्य शुश्रूषा निरता योगिनी च सा ॥ १४
अन्ववर्तत सा नित्य छायेव सुचिर मुदा । तस्यैव तप्यमानस्य नीहार पृथिवी सृत ॥ १५
प्रतीपाय महान्काल प्राससाद शिवा यदा । तस्मिन्सरसि सम्प्राप्ते मानसे स्नातुमद्रिपे ॥ १६
देवी बालेव सञ्जाता स्वेच्छयेवोत्पलोपरि । ता दृष्ट्वा हिमवानीश वामार्द्धां जगतोरणिम् ॥ १७
चतुर्भुजा त्रिनयना चन्द्रबिम्ब निभाननाम् । मुकपर्दां मृगाकार्धं विलसन्तीं शुचिस्मिताम् ॥ १८
दृष्ट्वा हृष्टमना राजा निधि लब्ध्वेव निर्धन । प्रणम्य ता समादाय जगाम भवन मुदा ॥ १९
तत्र मेनास्य महिषी निवृत्त तपसो यमात् । प्रत्युज्जगाम सहसा पाद्यमादाय सादरम् ॥ २०
प्रणम्यालोक्य तद्धस्ते बाला त्रैलोक्य मातरम् । अथादायात्म हस्ताभ्या अङ्कमारोप्य सा मुदा ॥ २१
सा भवद्वत्सला तस्या पय पूर्णाङ्कुरो शुचौ । अपायय तदा देवी मुखमुद्वीक्ष्य तत्स्तनौ ॥ २२
तदासीं मातृवृन्दाना अभूत्सानन्दमानसम् । ववर्षु पुष्पवर्षाणि खेचराः सिद्ध चारणा ॥ २३
दिव्याना दुन्दुभीना च नादो यदिरयद्दिश । ननृतुर्मुनयस्सर्वे स्वर्णकुलक्षिप्य तत्क्षणम् ॥ २४
आसन्मनांसि यमिना आनन्द विपदानि च । आखण्डलाग्निशमन मिहायास जलेश्वरा ॥ २५
समीर राज राजेश महाच्युत दिगीश्वरा । स वधूकारसहर्षे मातेयुक्ते महोत्सवम् ॥ २६
मेना हिमाद्रिराजो तौ मेनाते कृतिनाशुमौ । तदा तुष्टुवतुस्तौ ता मम्भाव्यानामिषात्मजाम् ॥ २७
एताञ्जलिपुटौ भूत्वा सप्रश्रयमिमामम् । स्तुती राज स्तुवते जनिष्ये जगता तदा ॥ २८
या त्वयि प्रथमासेव आदौ महामहेशितु । प्रपिणाद्या परत्येका तस्या भवतु नमस्त्विदम् ॥ २९
या शक्तिरेव देवस्य शरीरमधिदैवतम् । ज्ञानमिच्छाक्रियासैव मनस्तस्यै इद नम ॥ ३०
यया शुभमङ्गलदाभु सर्वमङ्गलमभवत् । कामज्ञामानतावावा सर्वमङ्गलदायिनीम् ॥ ३१
श्रिय लक्ष्मीमङ्गलागा अम्बिका विजया जयाम् । षष्ठीमाहुस्तपाद्येया भार्यामाया स्व माश्रिता ॥ ३२
ते समनाजगत्यस्मिन् तेषामेव धनानि च । तेषा यशांसि ये देवीं अपमाऽशरण शिवाम् ॥ ३३
अन्तोरक्षीके धात्राद्यान्यक्षराण्यशिवानितु । न्यस्तानि यत्प्रसादेन विलीयन्ते तु तान्तुय ॥ ३४
यदीय चरणाम्भोज युग्मासक्तमनाजन । न जातु लभसे दु ख ता त्वा स्वशरण गती ॥ ३५
इति स्तुवन्तौ तौ देवी प्रोवाच जगदम्बिका । शृणु त वचन माता पितरौ स्यो युवा मम ॥ ३६
शक्तिरीशस्य वामाग निलयाह पुरातनी । ब्रह्माद्याभ्यर्थित साहं ईशार्धाङ्गवर्तिनी ॥ ३७
विभवे याऽभवत्तस्मात् दक्षस्य दुहिता सती । स तु दैवहतो दक्ष शिवद्रोह परोऽभवत् ॥ ३८
तदीया तनुमुत्सृज्य पितराचभितायुवाम् । युवाभ्यामर्थिताऽसाह तपोध्यान समाधिभि ॥ ३९
इत्युक्त्वा सञ्जहाराशु तयो स्थापिया स्मृतिम् । बभूव द्विभुजा देवी द्विनेत्रोत्पल सप्रभा ॥ ४०
उत्पलाक्षपुटलाभोदा नीलोत्पल सुकेशिनी । मेना च हिमवाञ्शोभो मेना ते स्व सुता तदा ॥ ४१
तन्मायापहृतज्ञानौ तस्या सञ्जातव त्सलौ । जातकर्मं तदा चक्रे सचिवैस्सपुरोधसा ॥ ४२
तदोत्सवो महानासीत् पुरे सर्वत्र सर्वदा । पौरजानपदाना च कौतुक सुमहत्तदा ॥ ४३
नामचास्यै द्वादशेऽह्नि चकार गिरि भूमिप । पञ्चधासादानमासि सप्तमे निष्क्रम तदा ॥ ४४
रेजे देवी वपु कान्त रत्न शाणशित यथा । दिने दिने वर्धमाना रेखा चान्द्रमसी यथा ॥ ४५
अपुष्पद्वपुषो वृद्धि मान द्वन पितुस्सह । पर्वतापत्यता प्राप्ता पार्वतीत्यभिधान्दधे ॥ ४६
पूर्णे तु पञ्चमे वर्षे तस्या आसीत्तपो रति । मातापितृभ्यामपि साऽकथयत्स्वममीप्सितम् ॥ ४७

मात्रोमेति निषिद्धापत्न् उमाख्या प्रणवात्मिका। मस्या आहार्ये सकल्प अत्रगम्य हिमान्यग ॥ ४८
सखीभि प्रवयामास तपसे तान्तदा मुदा। सा तत्रैव हिमान्यद्रौ गौरी शिवसमाश्रिता ॥ ४९
चचार ससखी यत्ना तपस्यामतुला मुदा। एतस्मिन्नन्तरे देव कैलासे रजताचले ॥ ५०
सनकादि मुनीन्द्रेभ्य त्रिपदार्थार्थसम्मितम्। रहस्यमागमान्ताख्य सिद्धान्त कथयन् स्थित ॥ ५१
हिरण्यगर्भसकल्प सम्भवास्त मुनीश्वरा। पित्रानियुक्तास्ते स्रष्टौ जगत किल ते पुरन् ॥ ५२
वय धातरि मे सर्वे नागीकुर्मो शुभा मतिम्। अगसृणै मुमुक्षुणा ईशोपास्तिर्हि शर्मदा ॥ ५३
तपोऽतपन्निति धिया सर्वे सम्भूय योगिन। स्थापयामास विभु आविर्भूयमलानिमान् ॥ ५४
न्यग्रोधमूलमाश्रित्य दक्षिणामूर्तिरव्यय। यधीत्य विधिवद्देशान् सरहस्यान् शिवास्तत। ५५
न ते प्रतिष्ठितस्थाना अभयधीश मायया। ते सम्भूय चिर भूय प्रवृत्ताना उमापतिम् ॥ ५६
कैलासशिखर प्राप्य कलधौतशिलातलम्। तत्र भोगपुरे शम्भो अमितानन्द निर्भरे ॥ ५७
स्मरणान्मोक्षद दिव्य भवन विविधशुभम्। शैलादिनेशमासाद्य प्रणम्य आर्थयन् प्रभुम् ॥ ५८
जगत्सृजस्यवस्यसि अनुगृह्णासि लीलया। तिरोभवसि सर्वेश कोयेच्छि त्वा कृपानिधे ॥ ५९
आसाद्य जन्तुयस्यावि राजीव एव एककम्। भवेतिवार्धि दुस्तार ससार मृत्युमप्यसौ ॥ ६०
भवन्त शरण प्राप्ता नमन्ति विबुधादय। ब्राभरपृशन्ति पापानि ब्रह्महत्यादि कान्यपि ॥ ६१
एतेषप्रमुनाकान्त ससार भय भीरव। त्वा प्रपन्ना अधीयानर ब्राह्मणा ब्राह्मणाधिपम् ॥ ६२
चिन्त्यापानामेक त्वा धन्यमोक्षकर प्रभुम्। पशूना पतिमीशान पशवस्म प्रभो तव। ६३
इत्युवैव स्तुतिभि स्तुत्य सर्वमनार्थवर्जितम्। अध्यापयामास भवान् अस्मानाशी वटाश्रित ॥ ६४
आगमानखिलान् वेदान् शैवोपपद भूषितान्। तत्र यानि त्वयोक्तानि वेदार्थानि कृपा बलात् ॥ ६५
स्वानुभूति प्रसिद्धानि वेदसिद्धान्त रूपत। प्रतिभिन्नानि चैतानि विस्तरत्वादहीश्वर ॥ ६६
इदानीं कृपयाऽस्माभ्य वद सक्षिप्य विश्वप ॥ ६६½

विभुरिति सनकाद्यैर्विश्वकर्तायनस्सन् तदनुकरुणयैव सम्यगध्यापयिष्यन्।
शुद्धरखिल गुरूणा कोटिसूर्यांशुतेजा वचनमथ समीपे नन्दिकेश विलोक्य ॥ ६७

इत्यादि महापुराणे स्कान्द शङ्करसंहिताया शिवरहस्यखण्डे
सम्भवकाण्डे तृतीयोऽध्याय ॥

---

॥ चतुर्थं अध्याय ॥

सूत —

ततश्शैलादिमालोक्य भगवान् भगनेत्र हा। शशासेति मुनिश्रेष्ठा सर्वकर्ता जगत्पति ॥ १

ईश्वर —

शैलादेयावदेतेभ्य शर्मद ज्ञानमुत्तमम्। कथयिष्ये रहस्य तत् तावन्महाक्षय गौरवात् ॥ २
एकोपि न प्रवेष्टव्य यो वा को वा सदाद्दते। इत्युक्त्वा द्वारि नन्दीश भवस्थान्येतैस्सहाविशत् ॥ ३
स्वविशत् तन्निशाधीश कलाकलित शेखर। अकल्ङस्तैष तत्राशु वीरासनमुदाश्रयी ॥ ४
प्राग्वर्या क्रियायोग निष्णातेभ्य कृपानिधि। दक्षिणामूर्तिमास्थाय चित्स्वैरैरव्यक्त मुद्रया ॥ ५
चिन्मुद्रया तया सेपा छिन्नास्सर्वेपि सशया। एतार्थाश्चाभवन्देव दृष्ट्वा हृष्टेन्दुशेखरम् ॥ ६
वीरासने समासीन व्याघ्रचर्मोपरिप्रभुम्। अक्षानोपरि विन्यस्त दक्षिणाङ्घ्रि सरोरुहम् ॥ ७
तस्योपरि लसद्धाम योगपट्टमनोरमम्। ब्रह्मेन्द्र विष्णुयोगीन्द्र विबुधागोचर शिवम्। ८

शुद्धस्फटिकसंकाशं त्रिनेत्रं चन्द्रशेखरम्। भासयन्तं जगद्भासा स रवीन्दुकृशानुकम्॥ ९
तदन्तरेऽमरास्सेन्द्राः साशापाल पुरोधसः। शूलधरभयात्रस्ताः कैलासमगमन्ययुः॥ १०
शान्तौ तपश्चरन्त्यान्तु चिन्मुद्रावति तत्पतौ। सर्वेषां न मनांस्यासन् शान्त्यानि मनो भुवः॥ ११
ततोऽपि दुःख भूयिष्ठं विश्राणा स्वान्तरं सुराः। उवाह चिन्तं वृत्रारेः इन्द्राण्यामरतिं तदा॥ १२
ब्रह्मणोऽपि तदा वाचि विष्णोरपि रमोपरि। जगद्विरक्तमभवत् चेतना चेतनात्मकम्॥ १३
प्रजाश्च न व्यवर्धन्त पीडा वृद्धाऽऽसुरीतराम्। एषामुपद्रवानांस्तान् ईशानेति निवारणी॥ १४
अखण्डधर्ममासाद्य कैलासं धाम शूलिनः। नालभन् सन्निधिं शंभोः ध्यान निष्ठस्य ते भृशम्॥ १५
तथातपस्सुरैर्विन्द्रः तप उग्रतरं महत्। असुरोपप्लुतं लोकं आत्मना परिरक्षितुम्॥ १६
तदन्तौ कुसुमास्त्रोऽपि स्मरः कालमनाकुलः। तापसं वेषमास्थाय रम्यां रतिपराङ्मुखः॥ १७
विनिवृत्ताधिकारत्वात् हृदिकृत्या शिवे रतिम्। सनकादिमुनीन्द्राणां शिष्यो ब्रह्मसुतां सदा॥ १८
हृदिस्थमाच्छिनन्मोहं कृपया मधुरात्मयान्। तपसा महता चापि विबुधाश्च सुधाश्रमाः॥ १९
ध्यजिज्ञिपन् प्रणवेष्वे शालंकाय न जन्मने। आत्मागमनमादिष्टाः सेनायं समयो नयः॥ २०
नस्यात्वयं शिरायत्र चिपुष्टा इति तेन ते। जग्मुः सुरालयवरं तत्र ब्रह्म दिदृक्षवः॥ २१
मनोवती पुरी [illegible] धातुः परमशोभना। विचित्रोपवनैर्युक्ता दीर्घिका निर्झरावृता॥ २२
सर्वर्तुकुसुमनोज्ञा द्रुमसंघावितावृता। कपित्थाश्वत्थहिन्ताल तमालापलकासनैः॥ २३
विभीतकरसालाढ्य न्यग्रोधोदुंबराम्रकैः। जम्बूप्लक्षधवाङ्कोल तिन्त्रिणी लिकुचार्ककैः॥ २४
निंबतिन्दुक खर्जूर बदरीलक्षपर्णकैः। अशोककाञ्चनपूग पनसश्रीफलद्रुमैः॥ २५
भद्रश्रीपाटलीवृक्ष भल्लातकागरूमदैः। पद्ममादिभिरन्यैश्च शोभते सा पुरी सदा॥ २६
भवनानि मनोज्ञानि यस्यामाश्चर्यवन्ति च। नानामणिमयूखानां निकरैरुज्ज्वलानि च॥ २७
यत्रस्थितिर्नराणस्य क्रोधलोभादि विद्विषाम्। तत्रास्ते भगवान् ब्रह्मा स्तूयमानो महर्षिभिः॥ २८
भारत्या प्रियया वेदवर्णाकल्पमनोज्ञया। दिव्यसिंहासनवरे निषण्णस्तं पितामहम्॥ २९
आसीनं मघवांस्तत्र त्रिदशैः सहसादरम्। प्रणम्य परया भक्त्या प्राञ्जलिः प्रार्थतोऽभवत्॥ ३०
देवाश्च तुष्टुवुर्देवं दिग्वस्त्रं वारिजोद्भवम्। प्रणम्य वाक्पतिं देवं वाचस्पति पुरोगमाः॥ ३१

देवाः —

त्वं माता त्वं पिता देव त्वं गुरुस्त्वं पितामहः। त्वं भ्राता त्वं सखाप्यथो अस्माकमधिदैवतम्॥ ३२
समष्टिश्चत्वं तथा व्यष्टिः आत्मनामात्म नायकः। त्वं तत्त्वं तत्त्वविज्ञासि तत्त्वातीतः परात्परः॥ ३३
स्रष्टा त्वं जगतां धातः इदं त्वमवसिस्फुटम्। यदुपक्रम ओंकारः त्रिभिर्न्यायैरुदीरणम्॥ ३४
मन्युः कर्मगतिर्नाकः ते ते मुखसमुद्भवाः। नमस्त्रिमूर्तये तुभ्यं सर्गस्थित्यन्तहेतवे॥ ३५
ब्रह्मा त्वं सृजसीशान विष्णुस्त्वं विश्वरक्षकः। हरस्त्वं हरसि क्षिप्रं जगदेतच्चराचरम्॥ ३६
नमस्ते विश्वनाथाय नमस्ते विश्वमूर्तये। नमस्ते विश्वनिर्मात्रे शर्वे सर्वस्य हेतवे॥ ३७
यदन्तरं सर्वमिदं यस्यान्तस्थितमद्भुतम्। यस्य रूपाणि भूतानि तेऽस्तु नित्यमिदं नमः॥ ३८
इति स्तुतः सुरश्रेष्ठैः सुरश्रेष्ठैर्नतार्थितैः। प्रसन्नाभिमुखो भूत्वा प्राहस करुणानिधिः॥ ३९

इत्यादि महापुराणे स्कान्दे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे चतुर्थोऽध्यायः॥

जाग्रत्यस्य निशान्ते ते घण्टाहस्ता निशास्वपि। आदित्या द्वादशाप्यस्य तत्र तत्रगृहाङ्गणे ॥ ३४
तमोनिरस्यै कुर्वन्ति दीपमाला दिनेदिने। अन्येतु लेखा भृत्यस्य तत्तत्कार्यंकृतस्तदा ॥ ३५
गोग्रास हरणोद्युक्ता केचित्तद्रक्षणोद्यता। पलालोद्धातनिरता पलसपादनोद्यता ॥ ३६
क्षणवेषु च सर्वेत्र अपाहरणतत्पराः। आराधितोऽपि तैस्तै शुल्पस सुरेतर ॥ ३७
जगद्विप्रकरो येव चालाभ बलोद्धत। अपकारे खलो यश्च नोपकारशतैरपि ॥ ३८
बन्दीकृताश्च देवाना रम्योऽनेनमायिना। मुञ्चन्ति दीर्घनिश्वास चिर कारागृहाङ्गणे ॥ ३९
गन्धर्वा उरगा यक्षा राक्षसाश्च पिशाचका। सर्वे तद्भृत्यभृत्याना द्वारि तिष्ठन्ति नित्यश ॥ ४०
मन तस्सर्पराजश्च तक्षकश्च महाबल। कार्कोटक महानाग कपलाश्वतरावुभ ॥ ४१
धृतराष्ट्रश्च शखश्च गुलिकश्च महोरग। तस्य सिंहासनस्याग्रे पादुका मणिमौलय ॥ ४२
भासत्यनाथ पातालमण्डलानामसुराधिप। महोरगसहस्राणा बाधतेऽसाविति श्रुति ॥ ४३
अनेकयुगपर्यन्त अस्यशूरस्य साम्प्रतम्। अन्तकस्य विधेह्यस्य विधे विविधकर्मण ॥ ४४
गुरुवाक्य गुरुविधौ श्रुतौ कुर्वंति वृषदा। मा्द्दे वचन भूप कमलासनसन्निधौ ॥ ४५
यदुक्त गुरुणा तेन तारकाप्रमुख प्रभो। जगत्पीडासहस्राश सहस्राक्ष तदीश्वर ॥ ४६
इयत्तया परिच्छेत्तु अशक्य तत्पपीडनम्। अस्माभिरस्य शान्त्यर्थं उपाया परिकल्पिता ॥ ४७
निवृत्तामेयजातीव विकारेस्सन्निपातिके। अनुक्रमश्च सोऽसुरोऽण्डाना द्विशतानिपृथक्पृथक ॥ ४८
विभज्यपाद्दात् स्वपक्षाद्दाधिकपद शतमण्डलात्। सिंहासो द्विशताण्डाना शासका परिकल्पित ॥ ४९
तारकोद्विशताण्डाना मध्यगोऽण्डच शास्त्यसौ। दिवारात्रमविश्रान्त जगत्सर्वमनुत्तमम् ॥ ५०
तदीयै पुरुषैरेतत् पीड्यते हन्तसाम्प्रतम्। तस्मात्तमेव जेष्यामो नशूरश्चान्यमेवथा ॥ ५१
मयाकाशाधिपै सार्धं अन्यगाधासहिष्णुभि। भादावेव समारभि मृधोऽस्यधर्मकश ॥ ५२
काादिशीकेपुलर्वेषु घघ्रमस्मेमपेरितम्। कुण्ठिताश्च वमत्कील तिर्यगम पपातह ॥ ५३
पावकस्य तथा शक्ति दण्डो दण्डधरस्यवै। कौक्षेयक पल्लवास्य पाश पाशभृतस्तथा ॥ ५४
पश्चिमाशाधिपोऽस्य ध्वजोवायोस्तु सयुगे। गदासोमस्य सम्भिन्ना गदभङ्गाकृशोद्यत् ॥ ५५
शूल शूलभृतोस्योर प्राप्तु किञ्चिन्नपारयत्। चक्र चक्रभृत कण्ठे तस्य निष्कमियापितम् ॥ ५६
ततोऽस्मानागता भीति मानसेनाशकोद्भवा। स्तुतिभिस्तोषयामोऽद्य आमोपायपराणय ॥ ५७
इव पर तद्गतीक महाद्भुम इमे विधे। यद् बुद्धिमतोऽस्माक भ्रातह्यापहविस्मयम् ॥ ५८

शतमन्युरेवमभिधाय विधि विरराम ससद्वि सुमेरु गिरे।
बहुधा श्वसन्मुहुरथास्यगिर प्रतिदध्वने द्विगुणमेवसद ॥ ५९

इत्यादि महापुराणे स्कान्दे शकरसहितायां शिवरहस्यखण्डे
सम्भवकाण्डे पञ्चमोऽध्याय ॥

---

॥ षष्ठोऽध्याय ॥

अथ ब्रह्मा विनिश्चत्य विचार्यमनसा बहु। जगाम विबुधै सार्धं वैकुण्ठ माधवालयम् ॥ १
तमासेदुर्दरेर्धाम नानामणिविराजितम्। सहस्रहैम्यप्रासाद गोपुराट्टालमण्डितम् ॥ २
हिरण्मय महाद्वार कवाटाति मनोहरम्। वैष्णवैर्मर्णपैर्युत तच्चिह्नपरिचिह्नितै ॥ ३
नयरत्नविचित्राढ्य राजवीथिविराजितम्। नानामणिप्रभाजाल निर्मीरितदिगन्तरम् ॥ ४

मत्तवारणिकायुक्तं विद्रुमद्वारतोरणम्। मध्यान्तपरिसंस्थं अरुणां प्रसरत्तरकम् ॥ ५
वासुदेवस्य ये भक्ताः शान्तास्तद्गतमानसाः। यद्गत्वा न निवर्तन्ते तत्पदं वैष्णवं सुराः ॥ ६
संप्रापुर्यथसातूर्णं दिव्यं प्राकारसंवृतम्। रक्षितं रक्षिभिर्दिव्यैः अकुतोभयमच्युतम् ॥ ७
तत्र भोगिपतेर्भोगं अधिष्ठाय मनोहरम्। शयानं त्रिदशाधीशं नीलमेघसमद्युतिम् ॥ ८
पद्माङ्घ्रिं पद्मनयनं पद्मास्यं पद्मकोमलम्। पद्मामृदुकराम्भोजस्पर्शरक्ताङ्घ्रिपङ्कजम् ॥ ९
भूमिवत्सलमाश्लेषं परमेश्वरवल्लभम्। भावयन्तं सदा शंभुं योगनिद्रासमाधिना ॥ १०
अस्तुवन् स्तुतिभिः स्तुत्यं मानम्र शिरसो मुदा। अच्युतं तमजं विष्णुं अव्यक्तमजकारणम् ॥ ११

सुरा—

नमस्ते पद्मनाभाय पयोर्धिपतये नमः। पद्मबंधुनिशानाथ लोचनाय परात्मने ॥ १२
पद्माकरनिवासाय भक्तचित्तनिवासिने। नारायणाय नाथाय नमो वेदान्तवेदिने ॥ १३
ध्यानादिगम्यवपुषे योगिनां योगदायिने। भोगिनां भोगदात्रे तु मुक्तिवरदायिने ॥ १४
नमः परमकल्याणगुणरत्नाकराय ते। वासुदेवाय शान्ताय महते विष्णवे नमः ॥ १५
यदा यदा जगत्कार्यं उपप्लुतमरोसुरैः। तदा तदाऽवतीर्यत्वं हंसि धर्मस्य संप्लवम् ॥ १६
रक्ष रक्ष सदेवार्थं अतोऽस्मानसुरार्दितान्। स्तुत्यैवं नेमुरीशं तेऽस्मात्तस्तवेऽब्जभूमुखाः ॥ १७
अथ देवोऽनघास्तुत्या प्रीतः प्रोवाचतान् स्मयन्। भो विधे वृषध्वजस्त्वं मतैः सहमदन्तिकम् ॥ १८
किमर्थमागतास्त्वद्य क्रियतां वा मयाऽथ किम्। विधास्मीत इवास्यर्थं शुद्धामासाद्य मेरयीम् ॥ १९
स्वपामि निर्भयो नित्यं स्वप्ने तथापि तद्भयात्। पर्यटित्वा जगत्सर्वं प्रबुद्धो निर्भयः पुनः ॥ २०
श्रुत्वेति वाक्यवचनात् कामुमे कंपते मनः। मेरुस्थानमीशेन परित्राणाय कल्पितः ॥ २१

द्विजाः —

कथं सूतमहाबुद्धे महामेरुः सुरालयः। अगस्त्योऽसुरमुख्यैश्च कथमीशेन रक्षितः ॥ २२

सूतः —

पुरैकस्य विधेः कल्पे कदाचित् कालगौरवात्। देवासुराणामभवत् संग्रामो भीमदर्शनः ॥ २३
तदाऽसुरबलैस्त्रस्ताः विबुधा दुद्रुवुर्भयात्। मेरोरुपरि ते देवाः शङ्करं शरणं ययुः ॥ २४
तथापि ते बलोत्सृष्टाः प्रवृत्ता बाधितुं सुरान्। ईशेश्वरस्तु संक्रुद्धो • दैतेयानशपत् प्रभुः ॥ २५
यतो यूयं दुरात्मानो मदीयान् शरणार्थिनः। प्रवृत्ता बाधितुं दैत्याः हतायातवराभयम् ॥ २६
स्वभावादुग्रकर्माणो यज्ञमार्गोनवोऽस्तुयत्। निन्दिताश्रमभावेन ब्राह्मणैश्च महत्तरैः ॥ २७
अयं च मेरुर्नैवयात् ऊर्ध्वमार्गोनगोचरः। दृष्टोऽपियोऽस्तु मनसस्सदोपेक्षाचिरोद्गमे ॥ २८
अद्यप्रभृत्ययं शैले दैत्यदानवरक्षसाम्। ऊर्ध्वस्त्वपम्योभागो यो ममाज्ञापरमाहृता ॥ २९
स [illegible] मुख्याः लोकानां यज्ञभागभुजश्चते। यजन्तु होमैः सततं वेदैर्विष्णुमुखास्सुराः ॥ ३०
विक्रमन्तां भुवं देवाः अभिमातिजितश्चते। गायत्रैरेव छन्दोभिः अन्तरिक्षं च ते पुनः ॥ ३१
अभिशास्त जयेनैव त्रिष्टुभाच्छन्दसादिवम्। अरातिविजयेनैव जागतेनैव छन्दसा ॥ ३२
विक्रमन्तां दिशश्चामी शत्रून् जित्वा ममाज्ञया। असुरेषुच यः कश्चित् अस्मानाराध्य भक्तितः ॥ ३३
बाह्यास्तु सर्वे जेता मान्यथेस्याद्विभ्रमाः। तस्माच्च मैत्रीमत्र निवसन्ति सुरालये ॥ ३४

सूतोक्तमित्येतामधिगम्यकर्णौ मुनीश्वरा नैमिशकाननीयाः ।
शशंसुरेतं कृतिनां वरिष्ठं वाचामनोभिर्विनयेन सूतम् ॥ ३५

इत्यादि महापुराणे स्कान्दे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे षष्ठोऽध्यायः ॥

---

॥ सप्तमोऽध्यायः ॥

सूतः —

आह नारायणो देवः सुराणां लोकपालिनां पुरा । मद्य ब्रह्मन् विदित्वाऽहं देवागमनमात्मना ॥ १
गुहां विहाय येनेन वैकुण्ठं प्राप्तवानहम् । यदायदाऽसुरोद्वेगो यल्लाभाद्गुमापतेः ॥ २
तदा तदा सदाऽस्माभिर्निवासो मेरुरावृतः । तस्मादस्माभिरमरैः जेतुं शक्यास्तेऽसुराः ॥ ३
सएव जगतामीशः शंकरो लोकशंकरः । श्रीनन्दीशान् व्यधात् पूर्वं त्रिपुरान्तकाः स्तुतः ॥ ४
हलन् सघुणपाऽस्माद्धु हालाहलगराशनः । तस्मात्ते शूलपक्षस्य सिद्धयन्त्रस्य पापिनः ॥ ५
तारकस्य च दुष्टस्य हर्त्ताकोऽन्यो जगत्त्रये । तमीशं सर्वभूतैकदमनं संश्रयामहे ॥ ६
तपसा त्वादरं देवाः सर्वेणापि गरीयसा । इति नारायणस्सर्वैः सहदेवैः पिनाकिनम् ॥ ७
आराधयितुमहता नियमेन जपादिभिः । कृष्णाजिनोत्तरासंगो मौञ्जीकाञ्चयवितादृतिः ॥ ८
रुद्राक्षमालिकापल्लव भूषणो विमलाकृतिः । भस्मनासजलेनैव भावितेन विधंयकैः ॥ ९
त्रिपादयुतेन तारेण पंचाक्षरसमन्वितैः । त्रिपुंड्रावलिभिर्दीप्तः शतरुद्रीय तत्परः ॥ १०
अजार्पकमना ध्यायन् शिवं सर्वजगत्पतिम् । महाव मघवानग्निः आशापालास्सुरास्तदा ॥ ११
आपयश्च तथा तेपुः ध्यायन्तः शिवमव्ययम् । ध्यायतां सुचिरं तेषां पयं कालो महांस्तदा ॥ १२
व्यतीयाय तदा देवः शिवः प्रादुरभूत्स्वयम् । नन्दीभ्वरकरालम्बी दर्शितायगमलापरः ॥ १३
दृष्ट्वा देवं पशुपतिं देवा विष्णुपुरोगमाः । तुष्टुवु 'हमतसो हृष्टसर्वतनूरुहाः ॥ १४
नम शिवाय देवाय नमःशिवतरायते । सर्वेशाय महेशाय शर्वरीभ्वरमौलये ॥ १५
नित्याय नीलकण्ठाय सत्याय भवते सते । ऋतायानृतरूपाय सत्यानृत विधायिने ॥ १६
सर्वेशाय परेव्याय शंभवेऽस्तुमयोभवे । नमस्ते शङ्करायास्तु नमो भूयो मयस्कर ॥ १७
शूलिने मालिने नित्यं हारिणेऽस्तु किरीटिने । कालकालायकालाय नमः कालाग्नये सताम् ॥ १८
सतामवनशीलाय सदसद्वपुषे नमः । नमोऽष्टमूर्तये तुभ्यं इष्टिप्राय यमारये ॥ १९
कामदायात्ममक्तानां नमः कामारयेऽस्तुते । सर्वाधिपाय शर्वाय नमः सर्वस्य साक्षिणे ॥ २०
विश्वाधिकाय रुद्राय वेदान्तानां महर्षये । वेदान्तगम्यविज्ञानसुनिश्चितधियां सताम् ॥ २१
सन्यासिनां विरक्तानां मुक्तिदाय नमो नमः । परामृताय भवते भक्तिगम्याय ते नमः ॥ २२
परात्पराय देवाय धात्रेऽस्माकं जगद्गुरुम् । दत्रे भत्रेऽखिलाण्डानां पित्रे नेत्रे नमोनमः ॥ २३

नमःशिवाय प्रभवेसुराणां त्रियंबकाय त्रिपुरान्तकाय ।
महेश्वरायास्त्वखिलात्मभाजां हितप्रदायास्तु नमो नमस्ते ॥ [illegible]

स्तुवत्स्वेवं हरिब्रह्म प्रमुखैस्त्रिदशैर्हरः । स्मितज्योत्स्नाहतध्वान्तः पद्धोऽभणद्वचः ॥ २५
हरेविधेमहेन्द्राद्याः यस्मन्हृदयं किमुच्यताम् । आदरादागतानीह तपांसि सुचिरं सुरैः ॥ २६
मत्तोनममोघंहि सर्वेस्य जगतस्सदा । इति वादिनि देवेशे हर्षेण महता सुराः ॥ २७

जयेशान जयेशेति सर्वे हरहरेति च । अथ सर्वान्निवार्याह विष्णुर्विश्वाधिकं प्रभुम् ॥ २८
देवदेव वयं दैत्यैः शूरपद्ममुखैस्तराम् । बाधितास्सततं देव त्वत्तो लब्धवरोल्बणैः ॥ २९
तदिदानीं गतिं त्वत्तो नान्यां विद्म विभो वयम् । शूरश्च सिंहवक्त्रश्च तारकश्च महासुराः ॥ ३०
अस्मान् विजित्य स्थानानि जहुस्सर्वाणि तेजसा । तद्भयात् शरणं प्राप्तान् रक्षास्मान् करुणाबलात् ॥ ३१
क्वतेशो विग्रहे तस्य जेतारं त्रिदशेष्वमी । इति शृण्वन्वचः शंभुर्वैष्णवं त्रिदशप्रियम् ॥ ३२
प्राह मौलिगतस्येन्दोर्धैर्यं दशनत्विषा । हरेविधे त्यज भयं देवास्सर्वेऽपि सांप्रतम् ॥ ३३
उपायमुक्तमथाहं संहरिष्येऽसुरान् क्षणात् । अचिरेणैव कालेनेत्यन्तर्धानं गतः शिवः ॥ ३४
ततस्तु ते हरिमुखाः नमस्कृत्य महेश्वरम् । चित्तमिस्थाप्य धैर्येण तद्गृहादमराः क्षणात् ॥ ३५
तत्र संभूय ते सर्वे सुरास्सब्रह्मकास्तदा । नारायणमपृच्छन्ते कथं कार्यं प्रभो वद ॥ ३६
प्रसन्नेऽपि शिवेऽस्माकं दैवभाग्यं किमीदृशम् । अदृष्टपरिपाकोऽयं कृतार्थास्तेऽसुरास्तराम् ॥ ३७
अतः परं हरेऽस्माकं क उपायोऽवधार्यते । हरात्कुमारो येनाशु जातो दैत्यान् हनिष्यति ॥ ३८
तदुपाकर्ण्य वचनं वैबुधं मधुसूदनः । विचिन्त्यालोच्य विधिना बभाषे सुरसंसदि ॥ ३९
यदा प्रभृति शर्वाणी हित्वा दाक्षायणीं तनुम् । अभजत्पर्वतश्रेष्ठं जन्मने जननी शिवा ॥ ४०
तत आरभ्य सचिवः सर्वेशो जगतां पतिः । नियम्य करणग्रामान् संस्तभ्यात्मानमात्मना ॥ ४१
योगिभ्यस्सनकादिभ्यः स्वस्वरूपं सुदुर्ग्रहम् । उपदेष्टुमनामूलं कैलासे वटभूरुहः ॥ ४२
संश्रित्य दक्षिणामूर्तिं सर्वेशो गुरुतामगात् । चिन्मुद्राङ्गुलिरध्यास्ते छिन्दन् तेषां च संशयम् ॥ ४३
तन्मयत्वाच्च जगतः चरस्याप्यचरस्य च । विरक्तं सर्वभोगेभ्यो विबुधा विमलाशिमाः ॥ ४४
देवेषु देवलोकेषु देव आत्मान आसते । स्त्रीपुंभावो न तेषां हि तन्मयत्वाच्चराचरे ॥ ४५

ओमित्यादि महापुराणे श्रीस्कान्दे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे सूतमुनिसंवादो नाम सप्तमोऽध्यायः ॥

---

॥ अष्टमोऽध्यायः ॥

विष्णुः—युष्माकं हि मतान्यासन् निर्विकाराभिलाषतम् । आशापाशा अपि स्वास्तु निराशा सनातनो ॥ १
पौलोमीरतिराहित्यं मनोवृत्तिषोर्मतम् । अयं पितामहश्चापि विरज्य निखिलस्पृहः ॥ २
मम मास्तु मनोभावो वदतीति दिवानिशम् । नपुंसकत्वं लोकेषु मनसा बध्यते सताम् ॥ ३
तद्यथार्थमभ्युद्य न शक्यं मनो भुवः । स्त्रीपुंभावरहिते जगत्यस्मिंश्चराचरे ॥ ४
कथं स्रष्टुर्भवेत्सृष्टिरक्षाकार्यं मयापि वा । ककुभामधिपानां च कोऽधिकारो विरच्यताम् ॥ ५
वैश्वानरेष्टिर्या पुत्रे जाते कार्या च यज्वभिः । तयाहीने जगत्यस्मिन् का तृप्तिस्त्रिदशात्मनाम् ॥ ६
तेजस्विता का जन्तूनां अभावश्चेन्द्रियोचिता । तस्मात्सर्वजगत्सृष्टिः मैथुनेन नचान्यथा ॥ ७
तदत्र सर्वे संभूय वयमाहूय मन्मथम् । सन्तोषयित्वा विविधैः उपायैरुचितैस्तराम् ॥ ८
विधातुं शिवयोरैक्यं विधेयो यत्न उत्तमः । इति निश्चित्य तैस्सार्कं सस्मार स्मरमच्युतः ॥ ९
आविरासीदथाभवन् सन्निधौ दनुजद्विषाम् । साकं रत्या च मधुना सशरं कार्मुकं वहन् ॥ १०
विधाय प्रणतिं तेभ्यः बभाषे सस्मितः स्मरः । किमर्थमद्य भो देवाः स्मृतोऽहं जगदीश्वरैः ॥ ११
हरेविधेऽमराधीश नियुङ्ध्वं मां स्वकिंकरम् । जगत्त्रयेऽस्ति वः कार्यं यत्तत् ब्रूताविशंकितम् ॥ १२

साधयिष्यामि तत्सर्वं कृपयायोऽद्यमच्युत । १२½

विष्णुः — साधुकाममहायुद्धे संग्रामैको विराजसि ॥ १३

भूतस्यापि च भव्यस्य संमतं कुरु सांप्रतम् । देवकार्ये जगत्यस्मिन् स्त्रीपुंभावेन योजय ॥ १४

न ते योजयितुं शक्यं जगदेतच्चराचरम् । यावदेतद्वियुक्तं यत् मिथुनं कृष्णपिङ्गलम् ॥ १५

सव्यासव्यात्मकं ह्येतत् मागद्वयमुमापतेः । इयं ह्येवद्धि जगतां जननीजनकात्मकम् ॥ १६

तत्रैकजननीभूतं भूत्वा गिरितनूजताम् । तपश्चरति तत्रैव भूधरे प्रीतये विभोः ॥ १७

अग्यग्मूलं समाश्रित्य न्यग्रोधस्याचलोत्तमे । कैलासे योगिवर्यस्य ध्यानमास्ते वदत्सुखम् ॥ १८

तयोरैक्यं त्वया चेत्स्यात् कृतं स्वस्थं जगत्त्रयम् । तथाप्यतीव जगति वीर्यवत्ता महत्तरा ॥ १९

इलाघनीयतमोऽसिस्त्वं अप्रयत्नेन सांप्रतम् । कुसुमानीयवो यस्मात् तैरेवाभ्यर्चनं विभोः ॥ २०

प्रीतये सर्वलोकेषु कृतीत्यमत एव हि । माधवेऽश्व वस्त्रयेयमात्रदे वचनं स्मरः ॥ २१

मोमव्यूत्पु वचो विष्णो सत्यं वरत्वद्विधौ विधे । अहं सर्वत्र विजयी कृपया तैव कथितः ॥ २२

तज्जये पतमातिष्ठन् स्वामिद्रोही न संशयः । स्वामिद्रोहवतां पुंसां न स्वर्गो नरको ध्रुवम् ॥ २३

नानुष्मिकीगतिस्त्वास्तु मास्तु तिष्ठतु संप्रति । ईशोपश्यति मां क्षिप्रं कोपाद् युगुक्षुरूलयित् ॥ २४

भवद्भिरर्चनातुल्यं उक्तं पुष्पेषु मोचनम् । पुष्पं प्रियतरं वापि क्षीरं वा भावर्जितम् ॥ २५

नाङ्गीकरोति देवेशः चन्द्रखण्डशिरोमणिः । भावपूतेन यद्दत्तं तृणगुल्म शिलादिकम् ॥ २६

महान्तमपि सर्वेशः प्रतिगृह्णाति धूर्जटिः । भावहीनामिरत्यर्थं गोभिर्मुक्तं पयः पुरा ॥ २७

अप्रियं तत्प्रभूत्तथा तासां दार्ढ्यं कारणम् ॥ २७½

सूतः — इत्येतद्वचनं तेन स्मरेण परिभाषितम् ॥ २८

पप्रच्छुरमरा विप्राः कथमेतदिति स्मरम् ।

मारः — पुरामन्दरशैलेन्द्रे चन्द्रमौलिर्जगत्पतिः ॥ २९

दाक्षायण्या सहाध्यास्ते सेव्यमानो मरुद्गणैः । नन्दिभृङ्गि महाकाल स्कन्द विघ्नेश संवृतः ॥ ३०

हास्योपहासकुशलकद्भृकथाप्तदोषणैः । अतिसंवाधसविधः मधुमाधव संभृतैः ॥ ३१

सुमनोभिस्सुमनसां नायको नायको विभुः । स्वलंकृत्यातमदयितां मातरं जगतां शिवाम् ॥ ३२

अतिहृष्टमनास्तस्थौ आसने सैव उत्तमे । तदन्तरे मुनिश्रेष्ठः काश्यपो ब्रह्मनन्दनः ॥ ३३

प्रजापतिस्स्वयं साक्षात् गव्यं स्वादु पयोऽस्तु नः । पत्नीभ्यां प्रार्थितश्चैवं दित्याऽदित्याच सादरम् ॥ ३४

क्रियासमभिहारेण अगाम वत्याान्तिकम् । अप्रार्थयच्च तं पुत्रं दिवागास्त्वे पयस्विनीः ॥ ३५

वितीर्णोऽथ पुत्रस्तेन बह्वयो दोग्ध्र्यस्सुधेनवः । प्रजापतिस्तु ताः स्त्रीभ्यां दण्डमादाय चालयन् ॥ ३६

प्रतस्थे अगलोकाय प्रहृष्टेनान्तरात्मना । नयान्तितद्धवेताश्च जग्मुर्व्योम्नि यदृच्छया ॥ ३७

यत्रयत्राभिजग्मुस्ताः तत्रतत्र धरोपरि । नदीनदतटाकाश्च तासांक्षीरैः प्रपूरिताः ॥ ३८

क्रमेणसञ्चरन्त्यस्ताः धावंत्यस्त्यक्ततर्णकाः ॥ ३८½

मुनिरपि सहसा तद्दण्डमादाय ताभ्यां सह निजयुवतीभ्यां अन्वधावत्त्वरायान् ।

बहुतरमतिखेदादुच्छ्वसन् शुष्कतालुः चिरमपिसस्वभूवापापयन् धावितुं ताः ॥ ३९½

इतिमहापुराणे श्रीस्कान्दे शंकरसंहितायां शिवरहस्यखण्डे

संभवकाण्डे अष्टमोऽध्यायः ॥

---

॥ नवमोऽध्यायः ॥

॥ मन्मथस्य श्रीशिवसमीपगमनम् ॥

सूत —

मदनः पुनराहस्म तान् सुरान् माधवादिकान् । मन्दरोपरि अभुक्ता क्षीरसमुद्र क्षणात् ॥ १
न्यपतन् क्षीरवर्षाणि सोमस्योपरि तत्रवाम् । अवलोकितस्तस्मिन् अवमानेन वै नभः ॥ २
भस्मसादभवन् गावो वह्नयस्तास्तत्क्षणाद्दहो । क्षीराभिषेकमीशस्य वदन्ति मुनय प्रियम् ॥ ३
अपापादपतत् यापि गव्यान्यपि च पञ्चवा । पशुना पतितप्येष ददाह कथमन्यथ ॥ ४
भावहीनपदार्थस्य तस्मादस्यमवप्रियम् । भावपूतेन मनसा दण्डकोदण्डताडनम् ॥ ५
अपि देयार्चनं नूनं विशेषप्रसादकृत्सु । पञ्चानां कौसुमेषूणां कथं लक्ष्यं करोमितम् ॥ ६
इषुपुष्पा पविकरोऽस्येव पुष्पा जगत्पते । मद्भ्रमनिखिलामसि महेनाथ नमशयः ॥ ७
अतोऽस्मि कर्तानैवाद यज्ञनश्य हरे तव । श्रुत्वा भूयासमस्वेतत् भामसुरावदेवच ॥ ८
आहूय सविधे मारं उवाच परिसान्त्वयन् । सुराः प्रार्थयितारस्ते काय विप्रगतामपि ॥ ९
ईशाज्ञाहि तथैव हि जगत्सृष्ट्यभिवृद्धये । तस्मात्तुभ्यमथ नैव कुप्येदीश समर्थवित् ॥ १०
अहो यस हृद्दस्तेऽस्य काठिन्यमयसोऽधिकम् । देहीतिवचनं शृण्वन् अपि देयमुपेक्षितम् ॥ ११
नवार्द्रमभवच्चित्तं चित्र वित्तभुजोऽपि यत् । ईशाज्ञाया विधेयाश्च प्रददावुत्तरं स्मर ॥ १२
यथाहं विश्वसृट् सर्वं तत्तथानाम सेवाय । ईशाज्ञयैव सर्वत्र प्रवृत्तिर्मम नान्यथा ॥ १३
अपीति यममाप्यापि जगन्मयजयादभूत् । विशिखा नतिवर्तन्तेऽसि साध्यां ससुरासुरे ॥ १४
सप्तज्ञातेऽण्डजस्वेदजोद्भिज्जेषु जरायुजे । क्व वर्तिष्ये पुनः स्यामह सद्धृतोपरि ॥ १५
चतुराग स्यकथं तथापि किं विस्मृत विभो । महर्षीन् दारुविपिने मायायामोहमाधवे ॥ १६
मोहितान् पादपतितान् नचकार किमाश्रमे । जलधरकुङ्कविया वृन्दाख्या पिदारथया ॥ १७
कारागृहगतोप्येष चकमे मच्छराहित । अमरीपसुतारागात् साक्षाद्धि पुण्यमतीहरिः ॥ १८
वञ्चयित्वा जहारैनां नारद पर्वतवतम् । वसुवृषसुतन्वेऽपि नन्दगोप गृहेऽवसन् ॥ १९
गोपिका अपि तारेमे विद्ध स्वतु मयाशरैः । इन्द्रोऽपि गौतमसतीं चकमे मच्छरार्दितः ॥ २०
चन्द्रस्यापि गुरोर्भार्यां यानीतमनोभया । छायामपि रविस्सप्ताधियारेमे शतलमा ॥ २१
वरुणस्य तथा पत्नीरपोऽभिवकमेमया । नारदोऽपिमया विद्धोहरिरूपामाश्रयद्व्रतिम् ॥ २२
पराशरस्सत्यवतीं दाशकन्यामकामयत् । विश्वामित्रस्य तपसो मेनका विघ्नमाचरत् ॥ २३
देवासुर मनुष्येषु मद्बाणवशवर्तिन । कतिवाकतिवालोके वसन्ति परिमोहिता ॥ २४
ऋते कृशानुरेतस्क ईशान कृत्तिवाससम् । अन्येषामाननामसि मदस्त्रा कुसुमायुधैः ॥ २५
स्वघस्पतिजगत्सृत्क मलीकनयनाग्निना । कर्त्ता स एव जगतां हर्ता भर्त्ता नियामकः ॥ २६
तमजं शाश्वतं रुद्रं चेकितानं परं प्रभुम् । प्रतीपयेत् कोऽनुलोके आत्मज्ञानविशङ्कित ॥ २७
नाहं बिभेमि सर्वत्र बिभेम्यस्मान्महेश्वरात् । तस्मादयं सुरवरा मानियुङ्क्ष्व नचेश्वरे ॥ २८
न शृणोत्ययमस्माकं वच इत्यासाद्य व्यथा । नवोभवतु मोक्षाय क्षमस्वेत्यवदत् स्मर ॥ २९
ततो ब्रह्माऽब्रवीत् क्रुद्धः कन्दर्पं वाक्प्रतीपगम् । धिक् धिक् त्वा यदि ॥ लोके न शृण्वन्ति हितं जनाः ॥
न लज्जा हृदये तेषां इति लोके वचः खलु । तथाहं किमुवक्तव्य प्रथमोसि रिपूणाम् ॥ ३१
उपकारपरालोके कीर्तिरिह विराजिता । तिष्ठन्ति पूर्वे पूर्वेते यावदा भूतसम्प्लवम् ॥ ३२

अर्थितस्तु पुरा देवैः अस्थीनि स्वाङ्गजान्यपि । ददौ दधीचो मदनव्याजनिर्वज्रमायुधम् ॥ ३३
शिविश्चन्द्रपतिश्रेष्ठः कपोतार्थे दयार्द्रधीः । स्वशरीरास्थि मांसानि विदाय समनाकुलः ॥ ३४
कानीनोरविसंभूतः कवचं सहजं मुदा । इन्द्रायाभ्यर्थिने प्रादाच्छक्तिमादाय तद्गताम् ॥ ३५
कदर्यस्त्वादृशो लोके नभूतो नभविष्यति । यद्वोऽस्य मौर्ख्यं पश्येति कंपयन्मौलिमात्मनः ॥ ३६
हस्तेन हस्तं सन्ताड्य जहास कमलासनः । त्रिदशाश्च पुनस्सर्वे भूयोभूयस्तमार्थयन् ॥ ३७
ऊचे नारायणश्चैनं तवेदं सदृशं नु किम् । सर्वेषां वर्तसेत्वग्रे सतांबंधुस्तथा सताम् ॥ ३८
स्वयंभुरितिलर्षैस श्रुतोऽसि रतिवल्लभ । अतोमहेशमुमया संयोज्य सुकृतीभव ॥ ३९
तौ च प्रीतौ तवास्यर्थं इच्छातामिष्टमीश्वरौ ।
कामः — अहं सर्वात्मना नैव गमिष्यामि शिवान्तिकम् ॥ ४०
अन्यदद्योत्र कर्तव्यं करिष्ये तत्क्षणादहम् । यो युष्मान् बाधतेऽजस्रं तं शूरमपि दानवम् ॥ ४१
सबान्धवं शाल्यं तं करोमि रतिकीलवत् । तिष्ठन्तुचिरं कालं यशोवामदशां सदा ॥ ४२
नाहं सर्वगुरुं शंभुं भुवनानामधीश्वरम् । सर्वज्ञं सर्वकर्तारं करोमि शरलक्ष्यताम् ॥ ४३
अथोत्थाय पुनर्ब्रह्मा तं कोपस्फुरिताधरः । बभाण वचनं रूक्षं कटुकर्णपुटस्यतत् ॥ ४४
दुरात्मानमनुं किंचाऽनुलवच्युतासुरम् । असुरं स्ववशं नीत्वा सुरदारापहारकम् ॥ ४५
शपामि क्षणमात्रेण नकरोत्यद्यवचनम् । देवकार्यं खलो नूनं दंडसाध्यो नसांत्वनैः ॥ ४६
ततः कोलाहलो दिक्षु जज्रंभे विधुधेरितः । बधिरौ रचयन् कर्णौ क्षितसागरवारिदः ॥ ४७
ब्रह्मशापभयात्त्रस्तः चिन्तामाप परंस्मरः । किंकरोमीति बहुधा रत्या सार्धं निषेदुषा ॥ ४८
साऽवदत् स्मरमुद्वीक्ष्य नमस्तस्य त्वया प्रिय । ईशागारमनुप्य त्वा शापः किंवा करिष्यति ॥ ४९
भयमानोऽस्ति शापस्य शिवद्रोहस्य न क्वचित् । दहेश सहसाऽधीशः त्रिजगत् स्मितकेशवः ॥ ५०
धर्मिलोक्तिरधिक्षेप इत्यभाति भवादृशे । नैवाप्यमानप्रियया वागेषा हितकारिणी ॥ ५१
मैवं कुरुष्वत्यंतं मानपरं जगत्पतिम् । भवमानकृतो लोके नश्यन्ति क्षिप्रमंहसा ॥ ५२
निशम्य वचनं तस्याः मन्मथः प्रत्युवाचताम् । यथार्थवचनं सुभ्रु संशयो नतथैवतत् ॥ ५३
अपपभ्रमुमाकान्तात् भगमतोऽन्तकान्तकात् । कल्पायुरपि वाम्यसात अल्पायुरियतन्मतम् ॥ ५४
मार्थयन्ति हि मां हेते जगतां प्रभवस्सुराः । नाप्रतीपवचामूयाः शापोमय्यपि भामिनि ॥ ५५
सांत्वयित्वेति तां पश्चात् समुत्थाय कृताञ्जलिः । यथाक्रमं प्रणम्याह देवान् विष्णुपुरोगमान् ॥ ५६

इत्यादि महापुराणे स्कान्दे शंकरसंहितायां शिवरहस्यखण्डे
संभवकांडे नवमोऽध्यायः ॥

---

॥ अथ दशमोऽध्यायः ॥

॥ मन्मथस्य शिवदर्शनम् ॥

मन्मथः — अहं गमिष्ये देवेन योद्धुं त्रिपुरविद्विषा । संयोजयिष्ये ■ देव्या मात्रा त्रिजगतांशिवम् ॥ १
विजयोऽस्तु ममाधीशाः युष्मदाशीर्भिरंजसा । वितरंत्वद्य यूयं ते मह्यं तांबूलमुत्तमम् ॥ २
योऽस्तु कार्यमविघ्नेन यतिष्ये स्वजयावधि । ततः प्रीतमना ब्रह्मा श्रुत्वा वाक्यं तथाविधम् ॥ ३
मरालसस्रजं दत्वा तस्मै लांगतां तदा । हरिश्च निष्कमत्यर्थं नवरत्नविराजितम् ॥ ४

वासवः पारिजाताख्यपरिकर्माणि चादरात् । दिशामधीशाश्च ददुः नानोपायनमद्भुतम् ॥ ५
अस्तुवन्मुनियोगीन्द्राः आशीर्भिश्चाभ्यवर्धयन् । स्मरोऽप्यभूत् प्रीतमनाः दृष्ट्वा तेषां तु संभ्रमम् ॥ ६
रतिस्तु विमनास्तत्र वेपमानान्वतिष्ठत । ब्रह्मविष्णू तमाश्लिष्य प्रेषयामासतुर्मुदा ॥ ७
तौ प्रणम्य तदासाकं रत्या देवान् परीत्य च । प्रतस्थे तत्क्षणादेव जयशब्दादिमंगलैः ॥ ८
रथः प्रादुरभूत्तस्य मलयश्वसनात्मकः । रथ्यैः शुकगणैस्तस्य दिशः शाद्वलतां ययुः ॥ ९
इषवः पञ्चकुसुमान्यामोदमधुरात्मताम् । पौण्ड्रेऽस्य चापे मधुकृत् ज्यानिनादो व्यजृंभत ॥ १०
संनह्य कक्ष्यां कौसुंभकर्पासैरतिलोहिताम् । चूलिकाः स्वशिखाः स्निग्धाः सुगंधिस्रगलंकृताः ॥ ११
कौसुम्भेनैव साध्वारुवस्त्रेणावेष्ट्यशृंगिणा । कुण्डलीकवचीमाली भद्रश्रीपंकचर्चितः ॥ १२
भूषितो भूषणैर्दिव्यैः पुरुहूतसमुद्भवैः । तदा मनांसि सर्वेषां दृष्ट्वा लावण्यवारिधिम् ॥ १३
समीपस्थितसापत्न्यं तदङ्गश्लेष वांछया । ततः प्रतस्थे मदनो रथमारुह्य तादृशम् ॥ १४
जिगीषया महेशस्य सविधं धृतकार्मुकः । अर्णवानां च सप्तानां भेरीभावमुपेयुषाम् ॥ १५
जजृंभे निनदैः सार्धं परभृत्काहलध्वनिः । पाटलीसुमनोभाग स्वरषड्जविधमानुगः ॥ १६
मल्लिकाशङ्खनिनदो जजृंभे मधुपावृतः । निन्यू रथं क्षणेनैव कैलासं शुकपङ्क्तयः ॥ १७
ध्वजमीनमुखप्रस्त पयोमुक्पयसोज्ज्वलम् । सदृष्ट्वा रजताद्रीशं अवतीर्य रथादयम् ॥ १८
चमत्कार सरतिः तं कामः कामितार्थदम् । सिद्धचारणगन्धर्वयक्षकिंनरसंकुलम् ॥ १९
नानातरुलतावण्डमंडितं मण्डनं भुवः । दर्पणोदरसङ्काशं त्रिदशश्रीमुखश्रियम् ॥ २०
जन्तुभिः सेवितं पक्षिः सिंहव्याघ्रमृगाकुलम् । गिरिं प्रदक्षिणीकृत्य आरुरोह रतिप्रियः ॥ २१
पद्भ्यां विनयसंपन्नः रत्या तादृशया सह । चापस्यात्र सन्धाय धनुष्यस्त्रं सकौतुकम् ॥ २२
मुमोच वृक्षषण्डेषु नानामृगगणेष्वपि । क्षणेन मोहयंस्तत्र विना भावयतो मृगान् ॥ २३
गतमंत्रं क्षमस्तूष्णीं नन्दीशाज्ञावशो वै । चकंपिरे न वृक्षाश्च चचम्भुर्मा न चेष्टितम् ॥ २४
कामोऽपि स्वममोघत्वं मोघं दृष्ट्वाऽस्त्रमद्भुतम् । प्रभावान्नन्दिकेशस्य वेपमानस्वयान्वितः ॥ २५
सहसाऽभ्येत्य नन्दीशं प्रणिपत्य व्यजिज्ञपत् । भगवन् शृणु शीलादे देवा विष्णुपुरोगमाः ॥ २६
दुरुपद्रवभयत्रस्ताः विध्यधिकमुखाभवन् । श्रुत्वा स्वामी न विज्ञप्तिं आर्तिक्षोभ्यनश्य तान् ॥ २७
शृण्वन्तु वचनं देवाः दूरपदाऽसुरोऽब्रवाम् । आराध्य स भावेन चिरकालमनन्यधीः ॥ २८
प्रसेदिवानहं तस्मै प्रादां वरमनुत्तमम् । भव पूज्योऽसुराणां त्वं भण्डानां च सहस्रकम् ॥ २९
शाधि चाष्टोत्तरं दैत्य निस्सपत्नं ममाज्ञया । उमाभ्यामनुज्ञाभ्यां त्वं वरमन्यद् वृणुष्व मत् ॥ ३०
यद्यदिष्टमहं तत्तत् दास्यामि सकलं तव । उक्ते मयि पुनश्चायं प्रणम्य दनुसंभवः ॥ ३१
अपृच्छद्वरमन्यच्च भावयुक्तेन चेतसा ।
असुरः — देव देव महादेव करुणाकर शंकर ॥ ३२
वरदानैक शौण्डस्त्वं महादेव दयानिधे । स सुरासुर लोके यत् आधिपत्यं ममास्ति च ॥ ३३
स्वामिनस्तत्कृपालब्धं नान्यथा पुष्टिवर्धन । अधिपस्त्वोऽसि महतां स्वमनामर्पितांघ्रिभो ॥ ३४
ये भूता ये च भव्याश्च वर्तमानाश्च ये सुराः । ऋते तवांगसंभूतात् भवन्वोऽत्र भवाम्यहम् ॥ ३५
योद्धास्पदं तस्य मां च वदेदीशावयोर्न च । प्रणमाद्रीनि संमन्त्र्य मया वृतवरश्च सः ॥ ३६
तस्मात्सुराद भो देवाः स्वामिनं जगतां गुरुम् । कुमारं सुकुमाराभं निहन्तिष्येऽसुराधमम् ॥ ३७

इत्युक्त्वाऽन्तर्हिते देवे मेरौ विबुधसत्तमाः । मां समाहूय संभूय प्रार्थयन्ति स्म ते सुराः ॥ ३८
शिवया योजयेशानं जगतामृद्धयेऽधुना । तपश्चरति सा देवी शैले देवाकलिप्सया ॥ ३९
[illegible] देवो राजते शैले दक्षिणामूर्ति रूपधृक् । विवृणोति मुनीन्द्रेभ्यः सदानं वेदमूर्धगम् ॥ ४०
तयोरैक्य त्वया कार्यं अस्मद्रक्षाविधित्सया । आदिष्टोह सुरैरेव आगतोऽस्म्यनयाऽधुना ॥ ४१
त्वमेव कर्त्ता नन्दीश त्वं पिता त्वं पितामहः । गुरुस्त्वं करुणामूर्ते वद बुद्धिं ममाधुना ॥ ४२
सूत. — यदित्थं सुकुमारेण मारेण मुनिसत्तमाः । श्रुत्वा स्मृत्वा विभो राज्ञां नन्दीशो लोकवन्दित. ॥ ४३
आददे वचनं भूयः मार सर्पतिमादरात् । मत्तोपि त्वं महाभाग मारैतमर्हसितु' ॥ ४४
तत्प्रविश्य त्वमेवाशु कुरु कार्यं दिवौकसाम् । किन्तु तेषां हितं वक्ष्ये सावधानो भवात्वरः ॥ ४५
प्रविश्य पश्चिमद्वार मार्गेण प्रभुसन्निधिम् । यथेष्ट सुरकार्यं त्वं कृत्वा ख्यातश्रममवाप्नुहि ॥ ४६
इत्युक्तो नन्दिकेशेन रत्याकामो महामना. । विलङ्घ्य दक्षिणद्वार पश्चिमद्वारमाश्रित. ॥ ४७
तत्रानुपदमभ्येत्य त्रिदशा दिवि संस्थिताः । तत्प्रविश्यालय मार. साक रत्याऽमजापया ॥ ४८
ददर्श देवमासीन दिव्ये वीरासने सुखम् । उपास्यमान योगीन्द्रैः योगिनं योगिवन्दितम् ॥ ४९
शुद्धस्फटिकसङ्काश भूषित भूषणै. शुभे । सिंहासनमुत्तरासंग व्याघ्रचर्माम्बरावृतम् ॥ ५०
लोचनत्रयताराणा लक्ष्मीहृतसमुद्भवम् । योगपट्टाभिरामं तं वेदवाचामगोचरम् ॥ ५१
निस्तरङ्गसमुद्राभ नीलकण्ठ जगत्प्रभुम् । नित्यानां नित्यमीशान चेतनानाम चेतनम् ॥ ५२
भासयन्त सदाभासा' पावकेन्दुदिवाचिषान् । सर्वज्ञ सर्वकर्तारं सततममपराजितम् ॥ ५३
महतोऽपि महीयांसं अणीयांसमणोरपि । समस्त साक्षिण देवं परस्तात्तमसः स्थितम् ॥ ५४
सर्वैश्वर्येण संपन्न शम्भुमाद्य सनातनम् । अद्युत्माक्षन्तताभूत मधृष्यं मनसापिया ॥ [illegible]
आसन्नदेहपाऽतोय सनवाहु' सलाघसाद् । नाल्लभयध्कर चाप स्वहस्ताच्च्युतमाग्रभू ॥ ५६
~देवस्य महिमा हेन यजन्ते येन जन्तव । रतिस्त्वमीशमालोक्य परां चिन्तामवाप सा ॥ ५७

इति महापुराणे स्कान्दे शङ्करसंहितायां शिवरहस्यखण्डे
सम्भवकाण्डे दशमोऽध्याय. ॥

---

॥ एकादशोऽध्याय. ॥

रति — अहो धिगार्यपुत्रोऽयमनार्यैकारणेरित । कथ गमिष्यति स्वस्ति भूयादस्मै महेश्वरात् ॥ १
किमर्थमागतो मौर्ख्यात् विलङ्घ्य वचन मम । क्षेमेणैव निवृत्तश्चेत् मातासुतामुमस्यदै ॥ २
नाकिंकरोऽस्य निकटं गतो भूयो निवर्तते । देवदेवस्य देवस्य यमोऽपि किमुतापरे ॥ ३
अथ क्षणेन निर्मुक्तमोहः पञ्चशरस्तदा । पुनश्चादाय सदार येपमालदशासनम् ॥ ४
शनैर्निलिल्ये सन्निधे नमेत्तकमण्डले । सज्ज कृत्वा सचकित धनुस्सम्मोहनाह्वयम् ॥ ५
सन्धाय तत्र त लक्ष्यं अलक्ष्य योगिनामपि । कृत्वापि महतीं चिन्ता नाकिनो मा पिनाकिनि ॥ ६
किमर्थं प्रेषयामासुः दुष्ट कर्म ममेदृशम् । वाम चक्षुश्च बाहुश्च भयदासि स्फुरत्यहो ॥ ७
कथ भविष्यति क्षेमं सयुगे त्रिपुरद्विष । तत्तिष्ठतु तथासर्वं जीवामि यदि [illegible] प्रिये ॥ ८
नेत्रानन्दकर देव नेत्राभ्यामीक्षिपि प्रभुम् । तस्मात्द्रागपचता मध्ये भाग्यवानहमेव हि ॥ ९

इति तस्मिन् प्रजपति संमोहनमहामनुम् । ततः प्राञ्जलयः सर्वे देवा विष्णुपुरोगमाः ॥ १०
स्वस्तिकामाय कामाय स्वस्तीति मनसाऽजपन् । मण्डलीकृतकोदण्डं नमेदतदपण्डगम् ॥ ११
सर्वेशस्य ततस्तस्य सर्वेशस्य दयानिधेः । तृतीयादक्षिणः कोणात् कीलो जातः कृशान्वणुः ॥ १२
भस्मीचकार सहसा महिषाक्षाणुपुञ्जवत् । मोहेन सा रतिर्नैव विवेद पतिपञ्चताम् ॥ १३
अथ धूमः समुद्भूतः कपोतगलकर्बुरः । ददृशे विविषद्वृन्दैः दिवि दुर्गन्धदुस्सहः ॥ १४
तदैव सर्वदेवानां जज्वाल जठरेऽनलः । गिरा जयजयेतीश अलदुर्दिविसस्थिताः ॥ १५
सम्मोहनास्त्रं सहसा स्वयमेव धनुश्च्युतम् । देवस्यासह्यहुंकारात् निवृत्तः गिरिजापतिः ॥ १६
कैलासाद्धिमशैलेन्द्रं क्षणेन गिरिजापतिः । तामाक्षिणोऽष्टदिद्द विशीर्णवपुषोऽस्यतत् ॥ १७
शिवाशुद्धिग्ध तेनैतत् मुक्तं यत्पुष्पधन्वना । तयोरेकतरं स्पृष्ट्वा ता दुरत्ता जघानतत् ॥ १८
एतत्सर्वमजानान किल देवो मुनीश्वरे । ध्यानस्थामुद्रालसद्बाहु आस्ते तूष्णीं यथा पुरा ॥ १९
ततस्त्रिदशमुख्यास्ते ब्रह्मविष्णुपुरोगमाः । भवरुह्य गिरेः शृङ्गे कैलासस्यास्तुवन्विभुम् ॥ २०
प्रणम्य सर्वकर्तारं सर्वेशं सर्वकारणम् । यदयन्तोऽञ्जलिं मूर्ध्नि कामारिं कामितार्थदम् ॥ २१

देवा —

यतो जाता इमे येन जाता जीवन्ति जन्तवः । यस्मिन् प्रजन्ति विलयं यस्तु न तनुते स्मृतिम् ॥ २२
अनुगृह्णाति तान् सर्वान् तस्मै तुभ्यमिदं नमः । यतो वाचो निवर्तन्ते मनसान्यैस्तु धीन्द्रियैः ॥ २३
यद्दानन्दोऽपि तत्साक्ष् ईशायेत नमोऽस्तु ते । असिद्धार्थानि यस्येमान्यायुधानि जगत्त्रये ॥ २४
स्मर्तव्यात्माहतो येन मारस्तस्मादहं नमः । य आनन्दमयोऽभ्यासात् आनन्दप्रचुरो यतः ॥ २५
आतन्वानन्दयिनैव निमेत्यस्मात् नमः । त्रयीमूलं त्रयीचक्रं त्रयीमण्डलमध्यग ॥ २६
त्रयीसार नमस्तुभ्यं नीलग्रीवाय ते नमः । यतो जन्मलयौ यस्मिन् येनानन्दि जगत्त्रयम् ॥ २७
ततस्सकलुनैश्वर्य सर्वोत्कृष्टो नमोऽस्तु ते । इदं सदेवसोम्याग्रे यदीयलक्षणा श्रुतिः ॥ २८
महदप्येति तत् ब्रह्मपुरुषं सम्महो नमः । सत्यं ज्ञानमनन्तं च ब्रह्मेतिपदिशा श्रुतिः ॥ २९
सैषतं सत्यमित्याह यमस्माक नमोऽस्तु ते । विश्वाचिन्त्यजगतस्य शरीरं यन्नियामकम् ॥ ३०
विश्वाधिकाय पतये जगतां प्रभवे नमः । नमः परमकल्याणनिधये परमात्मने ॥ ३१
हार्दाय सर्वजन्तूनां तुभ्यं भूमाय ते नमः । त्वयि धाराधिधौ देव शीकराः स सुरासुराः ॥ ३२
रक्ष रक्ष सदासाम्ब प्रसीद सततं प्रभो । स्तुवत्सु विबुधेष्वेवं अन्तःपुरगतः शिवः ॥ ३३
नन्दिनं सविधं प्राप्तं समालोक्येदमब्रवीत् । कोऽयं कोलाहलो नन्दिन् केनवा समुदीरितः ॥ ३४
किमर्थमिति संपृष्टो नन्दी प्रोवाच साञ्जलिः ।
नन्दिकेश्वर — भगवन् विबुधास्सेन्द्राः सब्रह्ममधुसूदनाः ॥ ३५
असुरैरर्दितास्तूर्णं आयताक्षशरणं प्रभुम् । चिराय जगतामीश दर्शनाकाङ्क्षिणः प्रभो ॥ ३६
ततः प्रोवाच तं देवः प्रवेशय सुरानिति । तच्छ्रुत्वा सहसा पुत्रः शिलादस्य महामुने ॥ ३७
निर्गत्य सहसा देवान् आहूय सहसाऽऽविशत् । ते सर्वे सहसा देवं प्रणेमुः भक्तिभाविताः ॥ ३८
तानालोक्य महादेवः प्रोवाच वचनं त्विदम् । सुप्रीतोऽस्म्यनया स्तुत्या वृणीध्वं मनसीप्सितम् ॥ ३९
युष्माभिर्यत्कृतं स्तोत्रं इदं हृद्यतमं मम । ये पठन्ति च शृण्वन्ति मनुष्या वीतकल्मषाः ॥ ४०
लभन्तां ते सहस्रापि कामानपि च दुर्लभान् । पुत्रार्थी लभतां पुत्रं कन्यार्थी कन्यकां शुभाम् ॥ ४१

पशुकामः पशूनिद्याकामो विद्यामवाप्नुयात् । स्वर्गार्थी लभते स्वर्गं मोक्षार्थी मोक्षमाप्नुयात् ॥ ४२
महापातकिनोवापि शुद्धात्मानो भवन्ति ते । बहुनात्र किमुक्तेन मत्प्रियास्ते न संशयः ॥ ४३
इत्येवं श्रुतिसुखमीश्वरस्य देवा विष्ण्वाद्या वचननवामृतं निपीय ।
दृष्यान्तःकरणविकासितानताब्जाः विश्वेशं पुनरपिते प्रणेमुरीशम् ॥ ४४

इति महापुराणे स्कान्दे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे एकादशोऽध्यायः ॥

---

॥ द्वादशोऽध्यायः ॥

रतिप्रलापः शिवेन पार्वतीपरीक्षा च ॥

ततस्त्रिदशवर्यास्ते सर्वे संभूय शङ्करम् । पूर्वप्रोक्तं कुमारस्य संभवं भीतिनाशनम् ॥ १
प्रार्थयामासुरानम्य भवं भवभयापहम् । ततः स्वयन्वचो देवो वभाष्य बहुमानतः ॥ २
उत्पत्स्यते यः कामोऽयं कञ्चित्कालं प्रतीक्ष्यताम् । अचिरादिति तान् देवान् विससर्ज जगत्पतिः ॥ ३
एतस्मिन्नन्तरे कामवधूर्मोहवशं गता । ववेद क्षणमात्रं सा पतिं नेत्राग्निसात्कृतम् ॥ ४
हा नाथ जीवतीत्याशु प्रयत्नोत्थितया तया । कणशः कणशो भस्म समालोकि नभःस्थले ॥ ५
ततः सा बहुशोकार्ता विलुठन्ती धरातले । विकीर्णमूर्धजाकाय विलापाकुलेन्द्रिया ॥ ६
अयि नाथ विशालाक्ष तवांगमतिसुन्दरम् । । जगत्सु सुकुमाराणां उपमानं क्वागतम् ॥ ७
अहो विधे न जानासि मामनाथामनागसीम् । किमर्थं मामप्रीणीथाः किमयं वध्यते त्वया ॥ ८
माता न मे पिता नैव भ्राता नैव सुहृन्मम । का गतिर्मे वद विधे कुटुंबस्य त्वमेवहि ॥ ९
अयि मां क पराधीनजीवितां त्यक्तसौहृदः । विहाय विद्रुतोऽसित्वं निरस्तेर्बन्धुजनंसुवत् ॥ १०
अपराद्धं मयाकिंते त्वया महो नकिंचन । अकस्मादृर्शनं मह्यं विलपन्ती नदीयते ॥ ११
बन्धनं मेखलादाम्ना त्वं गोत्रस्खलितेषु ते । नूनं स्मरसि सर्वंतत् प्रमस्याज्ञानतःकृतम् ॥ १२
क्षमस्व तद्य मे कान्त स्वकर्णोत्पलताडनम् । मम त्वं हृदये नित्यं वससीति मृषावचः ॥ १३
न सत्य यदि तत् सत्यं त्वयि दग्धे न मे क्षतिः । अस्माल्लोकादमुं लोकं प्रस्थितस्य तवाधुना ॥ १४
पदवीं प्रतिपद्येऽहं विधिना वंचिता मुधा । अथाहमनुयामि त्वा यदि कांत त्वया विना ॥ १५
स्थिता क्षणार्धेया धिङ्मां वचनीयस्य भाजनम् । प्रतिपद्य वपुःकान्तं उत्थितः पुनरादिश ॥ १६
रतिदूत्ये परभृतो मधुरध्वनिपेशलान् । त्वया कृतमिदं मैत्रे मण्डवं पौष्पमातेयम् ॥ १७
दृश्यते न त्वमद्येत्थं कथमीशेन शासितः । दाक्षायणीविधुरस्य प्रेषितोऽसि हरान्तिकम् ॥ १८
अन्यापायेन चतुराः आयापरिशोधकाः । तदानीमेव बहुशो निषिद्धोऽसि मया प्रिय ॥ १९
श्रुतवानसि मे वाक्यं ब्रह्मशापभयात् किल । यत्र मूर्धा पतेद्यस्य तत्र पादो न गम्यते ॥ २०
जानाति नैव शकुनं स्त्रीमात्रवचनान्यपि । गणयन्त्येव नोमूढाः बलाद्दैववशानुगाः ॥ २१
इत्येवं लोकयदोऽत्र दृष्टः प्रत्यक्षतो मया । अथवा सर्वजन्तूनां शास्ता रुद्रो हृदिस्थितः ॥ २२
तत्संकल्पवशेनैव सर्वे धावन्ति जन्तवः । वात्यावायुवशेनेव तृणजातानि सन्ततम् ॥ २३
अनाथाया गतिर्मेऽद्य स एव जगतांपतिः । पिता पितॄणां भ्रातॄणां भ्राता मातामहोऽपि सः ॥ २४
तत्पादकमलद्वन्द्वं शरणं यामि सन्ततम् । एष देवो जगन्नाथो मन्मथेन गतांगतिम् ॥ २५

कृपया प्रापयेन्मां च कृपावारांनिधिः प्रभुः । अथवा भूय एवेशः पुनरुज्जीवयेत् स्मरम् ॥ २६
शक्तोऽसौ शक्तिमान्कर्तुमकर्तुमथवा प्रभुः । अन्यथाकर्तुमीशोऽसौ आत्मनां परमेश्वरः ॥ २७

सुस्वरं प्रलपंत्येव करोदोः महत्यसा । तस्याः शुश्राव देवेशः परिदेवनवर्णकान् ॥ २८
पप्रच्छ किमिदं चेति नन्दिनं कुलनंदिनम् । विज्ञापयामास तदा प्रश्रयेण स शंभवे ॥ २९
इदानीमागतः स्वामिन् कामस्त्वत्कं स्वभार्यया । योद्धुकामो जगद्वन्द्य देवैः संचोदितोऽधुना ॥ ३०
प्रभुं दृष्ट्वैव निर्दग्धः कर्मणा स्वेन शंकर । ततः सा तेन दुःखेन कुर्वन्ती परिदेवनम् ॥ ३१
कामपत्नी रुदत्यार्त्ता प्रसीद करुणानिधे । इति तां दर्शयामास शंभवे नंदिकेश्वरः ॥ ३२
सा प्रणम्य तदा देवं पितरं जगतां पतिम् । असंयोजितधम्मिल्ला वेपमानाश्रुलोचना ॥ ३३
दीनानना धूसरांगी निपतन्ती पदेपदे । प्रभुस्तां तादृशीं वीक्ष्य कृपया परयान्वितः ॥ ३४
उवाच सनकादीनां पश्यतां तत्र तां स्मयन् । मा त्वं वत्से शुचं गच्छ मह्यं द्रुह्यति स्वपतिः ॥ ३५

यद्यप्यस्तु तवप्रीतः प्राणितस्येव सुमते । पतिमुज्जीवयिष्यामि कश्चित्कालः प्रतीक्ष्यताम् ॥ ३६
सांत्वयित्वेति तां भूयः सनकादिमुनीन्स्थ तान् । मानयिध्वं सदा यूयं एवं मामधुनाऽप्यहम् ॥ ३७
गच्छामि देवकार्यार्थं इत्युक्त्वान्तर्दधे शिवः । एतस्मिन्नंतरे देवी पार्वती जगदंबिका ॥ ३८
तप उग्रं समास्थाय दध्यौ शिवमगात्मजा । हेमाद्रौ एवसतपसा भक्तिं तस्याः परीक्षयन् ॥ ३९
ययौ जगदधीशानः तस्या आश्रममश्रमः । दण्डजीर्णं वपुर्धृत्वा पलितापघनं घनम् ॥ ४०
सिराक्षत्रिरितास्यांघ्रियुगलं प्रस्खलत्पदम् । अत्युन्नतस्कन्धयोर च्युतवासोविलम्बकम् ॥ ४१
निम्ननाभीहृदुल्लसत् पिचण्डिल वलित्रयम् । लम्बतोटोलसल्लोल कंपमानपयोधरम् ॥ ४२
ग्रहसूत्रजटाकीर्णं लताभिरिव भूधरम् । धवलश्मश्रुकविभ्रूयवकं सितपक्ष्मलम् ॥ ४३

शारदाम्भोद संवीत चन्द्रमण्डल सन्निभम् । सुनासिकं सुकर्णं च विदन्तास्यं चलच्छदम् ॥ ४४
प्रलिप्तवपुर्षिकं भाल पलितश्वेतमूर्धजम् । ईदृशं वपुरास्थाय भस्मपाण्डुरविग्रहः ॥ ४५
त्रिपुण्ड्रावलिभिर्दीप्तो रुद्राक्षकणलंकृतः । अवलंब्य दण्डं यष्टिं वैणवीममलाशयः ॥ ४६
अधीयानस्सदा वेदं अत्युन्नतकलेवरः । वयोतिपात वातातंकदिवाहृदनिघ्नकः ॥ ४७
प्रविश्याश्रमं वृद्धो मन्दं मन्दगतिः स्मयन् । तां तादृशीं तपस्यन्तीं मुनिभ्योऽपि च योगिषु ॥ ४८
दृष्ट्वा प्रणम्य वृद्धेषु निर्गतेषु शनैःशनैः । लब्धातिथ्येषु सर्वेषु स्वयं च परमेश्वरः ॥ ४९

वृद्ध त्वं वदतां सम्यक् वेदानामर्थमर्थयन् । वृद्धो विवेश शनकैः द्रष्टुकामः किलाद्रिजाम् ॥ ५०
पर्णशालागुहाभ्येभ्याः अपर्णायास्सखीजनम् । अपश्यत्तत्र ता वृद्धं पितरं मुनिपुंगवम् ॥ ५१
तूर्णं निन्युरुमादेव्याः निशान्तं पत्रनिर्मितम् । अभ्युत्थाय तदा देवी पाद्यार्घ्याचमनीयकैः ॥ ५२
भक्त्या दत्तासनावृद्धं उपचारैरुपाचरत् । तालवृन्तानिलैस्तस्य श्रमांबु समुपाहरत् ॥ ५३
परिश्रमं विनीयैव वर्षीयान् क्षणमात्रतः । उमां सवचनं प्रेक्ष्य बभाषे मुनिपुंगवः ॥ ५४
आर्ये सुवदनाऽऽरथेका त्वं दृष्टा वरवर्णिनी । अहो सर्वानवद्यांगी नगराजतपःफलम् ॥ ५५
कच्चित्ते कुशलं भद्रे कच्चित्ते कुशलं तपः । कच्चित्स्वशक्त्या तपसि प्रवृत्तासि वरानने ॥ ५६
शरीरं रक्ष कल्याणि धर्माणामेकसाधनम् । न शरीरं विना लोके किञ्चिदस्ति सुखं शुभे ॥ ५७
जलान्यपि स्नानविधिक्षमाण्यपि शुभे वद । इदं सुमहदाश्चर्यं यदद्भुतमिदं वपुः ॥ ५८
दुर्लभं प्राप्य लोकेऽस्मिन् श्रेयो न कुरुते जनः । त्वं तु राजसुता बालाऽनवद्यांगी सुयौवना ॥ ५९

तथाऽपि च तपोवृद्धा तपसा वयसाऽप्यहं । धर्मवृद्धाऽसि गिरिजे जगतां जननी ध्रुवम् ॥ ६०
त्वामप्यस्त्वा नमस्यार्थे देवाश्च यमिनां वराः । किं तु मे प्रतिभासि त्वं तपसा भावितात्मनः ॥ ६१
कमपि ध्यायसीवाद्य पुमांसं प्रतिभासि मे । सत्यं वद महाभागे सत्यसाराऽहि साधय ॥ ६२
अनन्यं मां च विप्रेन्द्र त्वां च द्रष्टुमिहागतम् । तदत्र त्यक्तलज्जा त्वं वद सत्यं यथा तथम् ॥ ६३
जरातिभाररसभूतपलितेन मयाऽद्य यत् । पृष्टं तद्रहस्यं चेत् वद शुभ्रु क्षमं यदि ॥ ६४

इति वाक्यमीशितुरुमापतेरवधार्य नम्रवदना निरीक्ष्य तम् ।
मुहुरेजमानहृदयाऽस्य तेजसा न विवेद सा क्षपामनु क्षमप्यहो ॥ ६५

इति श्रीस्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
सप्तमकाण्डे द्वादशोऽध्याय ॥

---

## ॥ त्रयोदशोऽध्यायः ॥

### वृद्धरूपिणा श्री शिवेन देव्या सह विवाद ॥

सूत —

ततश्चित्तं समाधाय तस्मिंस्तत्प्रेमकातरम् । जया च विजया सख्यावादिष्टे दृशा मुदा ॥ १
शुभः कथयतं सख्यौ कारणं तपसो मम । एष विप्रवरः श्रीमान् नैकधा कल्याऽन्वितः ॥ २
एनं विदितवृत्तान्तं कुरुतं महितं द्विजम् । इति देवीदृशाऽऽज्ञप्ते जया च विजया च ते ॥ ३
आज्ञाप्यैव प्रसादान्तेषां सि याचित विष्टिम । समुत्तीय मुखं कृत्वा प्रक्रमेते निवेदितुम् ॥ ४
शृणु तात द्विजश्रेष्ठ यदर्थं त्वां कथं सुता । आयापौत्रियी समाधेहि कृपया शृण्वद्य नौ वच ॥ ५
यत्कारणमिदं दृष्ट्वा नीतं काश्यं वपुः शुभम् । सख्यौ — इयं हिमगिरीन्द्रस्य तनया विदिता त्वया ॥ ६
रूपलावण्यसम्पन्ना शीलाचारगुणान्विता । प्रियवकं जगद्वन्द्यं सुगन्धिं पुष्टिवर्धनम् ॥ ७
त्र्यम्बकं पुरुषमनाद्यन्तं सुमङ्गलमजं शिवम् । युवानं पुरुषश्रेष्ठं सर्वमङ्गलदायकम् ॥ ८
आत्मनोऽपि सखी सर्वमङ्गलार्थमभीप्सति । पतिमाप्तुमुमा देव्यत्र जगतां पतिमात्मन ॥ ९
श्रुत्यागमपुराणेषु ख्यातदेवं पितामह । पितुर्गेहेषु बाल्येऽपि ध्यायन्तीशाङ्घ्रिपङ्कज ॥ १०
यन्नामकीर्तने च स्मृत्वा प्राप्नुवन्ति सुखं जनाः । तन्नामजप्यनिरता तत्कथाश्रवणोन्मुखी ॥ ११
तन्मयं च जगत्सर्वं पश्यन्ती ध्यानचक्षुषा । नीतसुखमपाप बहुलं वत्सरोत्तरमीश्वरे ॥ १२
दिवा वसन्ती सन्तापात् इव धारा गृहान्तरे । पल्लवास्तरणे रात्रौ जागर्त्येषा निर्वेदुषी ॥ १३
क्षणनिद्रां गता बालाऽप्यरात्रौ प्रतिक्षणम् । स्वप्ने दृष्ट्वा पतिं भूयः प्रबुद्धा विललाप च ॥ १४
हे कान्त व्रजसि क्व इति गृह्णाति बाहुना । सर्वेऽपि च त्वां वेदान्ता रोदसी व्याप्य निष्ठितम् ॥ १५
चिदाकाशोऽपि मूर्त्यापि परिपूर्णं वदन्ति हि । क्व वर्तेऽसि मायस्थ जन जगदधीश्वर ॥ १६
अहो सुमहदाश्चर्यं यदिमं जनमीश्वर । नानुगृह्णाति जगतामनुग्रहकरः कथम् ॥ १७
इतीव काङ्क्षती शम्भोः सङ्गमं चिरमद्रिजा । नैव लेभे यदा माता पितृभ्यां विनिवेद्य सा ॥ १८
यथाविधि महासाभिः तपसेऽमुं तदाश्रमम् । तपस्यन्त्याऽनया वृक्षाः पृथुकायेऽधिरोपिता ॥ १९
तेऽपि सर्वे सदा पुष्पफलाढ्याः पृथुलायताः । हरिणा पुत्रपौत्राद्यैः आसन् बहुगुणान्विता ॥ २०
सर्वप्रभुस्तदा शम्भुः परिपूर्णस्सदाशिव । अस्ये नैवतु सान्निध्यं किंचाऽत्र कुरुतेऽद्भुतम् ॥ २१

कृपया प्रापयेन्मां च कृपावारांनिधिः प्रभुः । अथवा भूय एवेशः पुनरुज्जीवयेत् स्मरम् ॥ २६
शक्तोऽसौ शक्तिमान्कर्तुमकर्तुमथवा प्रभुः । अन्यथाकर्तुमीशोऽसौ आत्मनां परमेश्वरः ॥ २७

सुस्वरं प्रलपन्त्येवं रुरोदोच्चैः प्रहृत्यसा । तस्याः शुश्राव देवेशः परिदेवनवर्णकम् ॥ २८
पप्रच्छ किमिदं चेति नन्दिनं कुलनन्दिनम् । विज्ञापयामास तदा प्रश्रयेण स शंभवे ॥ २९
इदानीमागतः स्वामिन् कामस्माकं समायया । योद्धुकामो जगद्वन्द्य दैवैस्संचोदितोऽधुना ॥ ३०
प्रभुं दृष्ट्वैव निर्दग्धः कर्मणा स्वेन शंकर । ततः सा तेन दुःखेन कुर्वन्ती परिदेवनम् ॥ ३१
कामपत्नी रुदत्यार्त्ता प्रसीद करुणानिधे । इति तां दर्शयामास शंभवे नंदिकेश्वरः ॥ ३२
सा प्रणम्य तदा देवं पितरं जगतां पतिम् । असंयोजितधम्मिल्ला वेपमानाश्रुलोचना ॥ ३३
दीनानना धूसराङ्गी निपतन्ती पदेपदे । प्रभुस्तां तादृशीं वीक्ष्य कृपया परयान्वितः ॥ ३४
उवाच सनकादीनां पश्यतां तत्र तां स्मयन् । मा त्वं वत्से शुचं गच्छ मह्यं द्रुह्यति स्वःपतिः ॥ ३५

यद्यप्यस्तु तवप्रीतिः पातिव्रत्येन सुव्रते । पतिमुज्जीवयिष्यामि कञ्चित्कालः प्रतीक्ष्यताम् ॥ ३६
सांत्वयित्वेति तां भूयः सनकादिमुनींश्च तान् । आश्वसिध्वं सदा यूयं यत्नं मामधुनाह्यहम् ॥ ३७
गच्छामि देवकार्यार्थं इत्युक्त्वान्तर्दधे शिवः । एतस्मिन्नंतरे देवी पार्वती जगदंबिका ॥ ३८
तप उग्रं समास्थाय दध्यौ शिवमगात्मजा । तेनातिदुस्सहतपसा भक्तिं तस्याः परीक्षयन् ॥ ३९
ययौ जगदधीशानः तस्या आश्रममश्रमः । वृद्धजीर्णं वपुर्बिभ्रं पलितापघनं घनम् ॥ ४०
सिराहर्षितमांसास्थियुगळं प्रस्खलत्पदम् । अत्युन्नतहनुकपोल च्युततयालोचितप्रभम् ॥ ४१
निम्ननाभीहृदलसत् पिचण्डिल वलित्रयम् । श्लथतोरोलसल्लोल कंपमानपयोधरम् ॥ ४२
प्रक्षस्तजटाकीर्णं लताभिरिव भूधरम् । धवलश्मश्रुलंबिभ्रूवदनं सितपक्ष्मलम् ॥ ४३

शारदांभोद संवीत चन्द्रमण्डल सन्निभम् । सुनासेव सुकपोलश्च विद्रुमास्यं सकच्छदम् ॥ ४४
अतिस्वल्पशिरोजं च चारु पलितश्वेतमूर्धजम् । ईदृशं वपुरास्थाय भस्मपाण्डुरविग्रहः ॥ ४५
त्रिपुण्ड्रावलिभिर्दान्तो रुद्राक्षस्रगलंकृतः । अवलंब्य दृढां यष्टिं वैणवीमवलाशयः ॥ ४६
अधीयानस्सदा वेदं अत्युच्चतरकंठवः । वयोतिपात वातार्तकटिबाहुलसत्त्रिकः ॥ ४७
प्रविश्योमाश्रमं वृद्धो मन्दं मन्दगतिः स्मयन् । तां तादृशीं तपस्यन्तीं मुनिष्वपि च योगिषु ॥ ४८
दृष्ट्वा प्रणम्य इष्टेषु निर्गतेषु शनैःशनैः । लब्धातिथ्येषु सर्वेषु स्वयं च परमेश्वरः ॥ ४९

वृद्ध त्वं पदतां सम्यक् वेदानामर्थमर्थयन् । वृद्धो विवेश शनकैः प्रयुक्तमः किलाद्रिजाम् ॥ ५०
पर्णशालामुमावेश्याः अपर्णायास्सरोजनम् । अपश्यत्तत्र सा वृद्धं पितरं मुनिपुङ्गवम् ॥ ५१
तूर्णं निन्युरुमावेश्याः निशान्तं पत्रनिर्मितम् । प्रत्युद्गम्य तदा देवी पाद्यार्घ्याचमनीयकैः ॥ ५२
भक्त्या दत्तासनावृद्धं उपचारैरुपाचरत् । तालवृन्तानिलैस्तस्य श्रमांबु समुपाहरत् ॥ ५३
परिश्रमं विनीयैव चर्चयान् क्षणमात्रतः । उमां सवचनं प्रेक्ष्य बभाषे मुनिपुंगवः ॥ ५४
आर्ये सुवदनारण्ये त्वं दृष्टा वरवर्णिनी । अहो सर्वानवद्याङ्गी नगराजतपःफलम् ॥ ५५
कच्चित्ते कुशलं भद्रे कच्चित्ते कुशलं तपः । कच्चित्स्वशक्त्या तपसि प्रवृत्तासि वरानने । ५६
शरीरं रक्ष कल्याणि धर्माणामेकसाधनम् । न शरीरं विना लोके किञ्चिदस्ति सुखं शुभे । ५७
जलान्यपि स्नानविधिक्षमाण्यपि शुभे यत् । इदं सुमहदाश्चर्यं यदभुग्नमिदं वपुः ॥ ५८
दुर्लभं प्राप्य लोकेस्मिन् श्रेयो न कुरुते जनः । त्वं तु राजसुता बालाऽनवद्यांगी सुयौवना ॥ ५९

तथापिच तपोवृद्धा तपसा यत्प्रकर्षिह । धर्मवृद्धासि गिरिजे जगतां जननी ध्रुवम् ॥ ६०
ऋषयस्त्वां नमस्यायै देवाश्च यमिनांवराः । किं तु मे प्रतिभासीत्थं तपसा भावितात्मनः ॥ ६१
कमपि ध्यायसीवाङ्ग पुमांसं प्रतिभातिमे । सत्यं वद महाभागे सत्यसाराहि साधवः ॥ ६२
अनन्यं मांच विप्रश्च त्वांच द्रष्टुमिहागतम् । तदत्र त्यक्तलज्जा त्वं वद सर्वं यथा तथम् ॥ ६३
जराळिमावसंभूतपलितेन मयाऽद्य यत् । पृष्टं तत्रहस्यं चेत् वद शुभ्रु क्षमं यदि ॥ ६४
इति वाक्यमीशितुरुमापतेरथार्यं नम्रवदना विलोक्य तम् ।
मुहुरेजमानहृदयास्यतेजसा न विवेद सा क्षणममुं स्वमप्यहो ॥ ६५
इतिश्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे द्वादशोऽध्यायः ॥

---

॥ त्रयोदशोऽध्यायः ॥

वृद्धरूपिणा श्री शिवेन देव्या सह विवादः ॥

सूतः —

ततश्चित्तं समाधाय तस्मिंस्तत्प्रेमकातरम् । जयांच विजयां सख्यावादिदेश दृशा मुदा ॥ १
युवां कथयतं सख्यौ कारणं तपसो मम । एष विप्रवरः श्रीमान् लैकया कलयाऽन्वितः ॥ २
एनं विदितवृत्तान्तं कुरुतं मद्धितं द्विजम् । इति देवीदृशाऽऽज्ञप्ते जयाच विजयाच ते ॥ ३
आज्ञायैव प्रसादास्ते पात्रिण्याविव विस्थिते । संमुखीनं मुखं कृत्वा प्रक्रमेते निवेदितुम् ॥ ४
शृणु तात द्विजश्रेष्ठ वदन्ति त्वां कथं सुताः । आवांपीप्रियौ समाधेहि कृपां शृण्वच नौ वचः ॥ ५
यत्कारणमिदं देव्या नीतं कार्श्यं वपुः शुभम् । सख्यौ — इयं हिमगिरीन्द्रस्य तनया विदिता त्वया ॥ ६
रूपलावण्यसंपन्ना शीलाचारगुणान्विता । त्रियंबकं जगद्वन्द्यं सुगन्धि पुष्टिवर्धनम् ॥ ७
मृत्युंजयमनाद्यन्तं सुमंगलमजं शिवम् । गुणातीतं पुरुषश्रेष्ठं सर्वमंगलदायकम् ॥ ८
आत्मनोपि सखी सर्वमंगलार्थमभीप्सति । पतिमाप्तुमुवाहेच्छां जगतांपतिमात्मनः ॥ ९
श्रुतागमपुराणेभ्यः स्वादरेभ्यः पितामह । पितुर्गेहेषु बालैषा ध्यायन्तीशांघ्रिपंकजं ॥ १०
नश्यमंहेमे यं स्मृत्वा प्राप्नुवन्ति सुखं जनाः । तन्नामजपनिरता तत्कथाश्रवणोन्मुखी ॥ ११
तन्मयं च जगत्सर्वं पश्यन्ती ध्यानचक्षुषा । औत्सुक्यमाप बहुळे उत्तरोत्तरमीश्वरे ॥ १२
दिवा वसन्ती सन्तापात् इयं पाप गृहान्तरे । पल्लवास्तरणे रात्रौ आगत्यैषा निषेदुषी ॥ १३
क्षणनिद्रां गता बालाप्यरात्रौ प्रतिक्षपम् । स्वप्ने दृष्ट्वा पतिं भूयः प्रबुद्धा विललाप च ॥ १४
हे कान्त व्रजसि क्वचं इति गृह्णाति बाहुना । सर्वेऽपि च त्वां वेदान्ताः रोदसी व्याप्यतिष्ठितम् ॥ १५
विद्वांसोऽपि गुराचार्याः परिपूर्णं वदन्ति हि । कथं नचेक्षसि मावत्सो जने जगदधीश्वर ॥ १६
अहो सुमहदाश्चर्यं यदिमंजनमीश्वरः । नानुगृह्णाति जगतां अनुग्रहकरः कथम् ॥ १७
इतीयं कांक्षती शंभोः संगमं चिरमद्विजा । नैव लेभे यदा माता पितृभ्यां विनिवेद्य सा ॥ १८
यथाविधं सहास्माभिः तपसेऽमुं तदाश्रमम् । तपस्यन्त्याश्च्या वृक्षाः पृथुकायेऽधिरोपिताः ॥ १९
तेऽपि सर्वे सदा पुष्पफलाढ्याः पृथुतांगताः । हरिणाः पुत्रपौत्राद्यैः आसन् बहुगुणान्विताः ॥ २०
सर्वप्रभुस्तदा शंभुः परिपूर्णस्सदाशिवः । अस्यै नैवतु सान्निध्यं किमाऽत्र कुरुतेऽद्भुतम् ॥ २१

त्वं तात परमेशानं शीघ्रमस्ये प्रसीदतु । अनुगृहाण भो ब्रह्मन् सदस्नेन्दु यथार्हसि ॥ २२
उक्त्वोपरेमतुस्सरयौ ययाच विनया च सा । ततः सभगवान् वृद्ध विहस्यास्फोटयत् करौ ॥ २३
उमामुख समालोक्य सस्मेय वचाद्विजे । परिहास्यमुताहोस्वित् भवत्या सख्युदीरितम् ॥ २४
श्रुत्वाऽस्य वचनं देवी वृद्धस्य जगतां गुरोः । अद्रिजा जगतां माता [illegible] ब्राह्मणमब्रवीत् ॥ २५

देवी —

भो भो ब्राह्मण सर्वज्ञ तातवृद्धमहामते । इदमेव सुदुष्प्रापं प्रार्थयामि शिवं सुरै ॥ २६
तत्प्राप्ति साधनं ब्रह्मन् तप किल भवेदिदम् । मनोरथोऽयमेवैष गतिरस्य महत्यसे ॥ २७
अहं तु बालिशा बाला क्वासौ वाचामगोचर । तथाऽपि भक्तवात्सल्यमीशस्येति जगुस्सुरा ॥ २८
अनुगृह्णीष्व मे शम्भु प्रसीदेदिति भो द्विज । इति तस्या वच शृण्वन् शिर स्वं कम्पयन् मुहु ॥ २९
अहोकष्टमहोकष्टमार्यापि गिरिसम्भवा । यद्वक्ष्यमनिर्देश्यं चकमे लोकनिन्दितम् ॥ ३०
ईदृशी बुद्धिरुत्पन्ना ननु ते केन चोदिता । अनुमन्तुमहं नैतदुत्सहे मनसाऽपि वा ॥ ३१
त्वा च सर्वाभरणधारिणीं तथावै सर्वमङ्गलाम् । श्मशाननिलयं रुद्रं सर्पभूषं कपर्दिनम् ॥ ३२
खगास्थिभूषणं भीमं भूतप्रेतावृतं सदा । विचार्य सूक्ष्मया बुध्या खिद्यते मे मनो भृशम् ॥ ३३
प्रथमं शृणु तन्वङ्गि दम्पती कोमलाकृती । भद्रासनार्हा त्वं तेन कथं स्याद्वृषपृष्ठगौ ॥ ३४
पट्टदुकूलप्रतिसर बन्धनार्हासि शोभने । सफूत्काराहिशीर्षागबन्धनं सहसे कथम् ॥ ३५
सर्वासा क्रियते लोके हेम्ना मागल्यतन्तुना । कण्ठे यथाऽपि सुभगे शूलीकाळाहि मगळम् ॥ ३६
वधूर्दुकूलवसनं परिधत्ते वरार्पितम् । त्वं तु चर्मद्रवद्रक्त सैंह वैयाघ्रमेव च ॥ ३७
परीतौ दम्पती लोके हुत्वा लाजान् हविर्भुजि । त्वं तु तेन चितावह्नेः प्रदक्षिणकृतोऽधमा ॥ ३८

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
सम्भवकाण्डे त्रयोदशोऽध्याय ॥

॥ अथ चतुर्दशोऽध्याय ॥

श्रीपार्वत्यै श्रीशिवेन निजरूपदर्शनम् ॥

मत्तवारणमारूढौ दम्पती द्विजपुङ्गवे । स्वस्तिवाचनकैस्तूर्यं स्तुवन्ति किल वन्दिन ॥ १
युवा वृद्धोक्षमारूढौ भूतवेतालसेवितौ । निरीक्ष्य जनता लोके सोत्प्रहासा भविष्यति ॥ २
अन्यच्च शृणु चार्वङ्गि त्वदीयो निर्गुणो वरः । कौलिकं च न जानाति नष्टो विरतलक्षण ॥ ३
श्मशाननिलयोऽप्येषं चर्मास्थ्युरगभूषणः । अपस्मारमधिष्ठाय विकीर्यैव जटाच्छटाः ॥ ४
विघ्नदर्शिव डमरु नानर्ति प्रेतकानने । परेत भूतवेताळ करताळ लयानुग ॥ ५
इत्यान्येतानि नान्यस्मिन् लोके सन्ति वरानने । वरस्तवच लोकेऽस्मिन् बन्धुलक्षण शीलवान् ॥ ६
विद्याधनसमृद्धात्मा कुलीनो रोगवर्जित । नविद्यते निमर्थ्यास्मिन् विशेषे पश्य सुन्दरि ॥ ७
[illegible] वच्मि भवतीमत्र वच्मि ते मातरं गुरु । यौ त्वामपथगां नैव निवारयत ईदृशीम् ॥ ८
किन्तु सर्वकलाभिज्ञ रुद्रोऽसौ विदितो मया । येनैतादृशमप्येव मुनय पर्युपासते ॥ ९
सा त्वं [illegible] पतिता दस्ते तस्य माया विनोदित । अहो सख्यौ किमितिवा सदीय न निवार्यते ॥ १०
किन्तु वच्मि हितं तथ्यं रुद्रात्पूनो परोऽह्यहम् । वृद्धोऽपि गुणवान् शीली सदाचारवता मत ॥ ११
सर्वविद्यासु लोकेऽस्मिन् संख्यायायेव भारदा । मर्मज्ञ्यैण सपच्य नमचो विद्यते भुवि ॥ १२

तं त्वं प्रार्थयसे भ्रान्त्या प्रार्थये त्वामहं सदा । त्रियम्बकः सखा तूष्णीम् कुबेरस्य धनैरहम् ॥ १३
सखा सर्वस्य लोकस्य स्वाश्रितस्य यशस्विनि । दास्याम्यभीप्सितं धनिनोऽपि धनी ह्यहम् ॥ १४
महास्यनिरतानांहि गेहे सन्ति कामधेनवः । तद्गृहद्वारमनिलयाः सर्वभूमिरुहपदस्थपः ॥ १५
अतोऽत्र सर्वमालोच्य मां वृणीष्व वरानने । अहं तु तपसा नित्यः वृद्धोऽपि च युवाऽप्यहम् ॥ १६
यस्तोऽयं रुद्रमतघे ■ मानय गिरा गुणम् । उद्धृत्यैक्षत मुखं देव्याः किंचित् स्मेराननो विभुः ॥ १७
इति वृद्धवचः श्रोत्रे कृत्वा कोपपरिप्लुता । कर्णौ पिधाय सहसा कृत्वा तं वृषतो द्विजम् ॥ १८
अपि वृद्धोऽसुरः कश्चिदागतो मत्तपोवनम् । अथवाऽऽगो मयापूर्वं कृतं किंवाऽन्यजन्मसु ॥ १९
सदिदं मूर्तमाहोस्वित् विप्रोऽयं केन निर्मितः । निवार्यतामालिपुनः विपक्षुः वृद्धपुरुषः ॥ २०
स्थुनामनाद्यमेनेशं एकं प्रति सुभाषितम् । गुणत्रयपथातीतः तमःपारे प्रतिष्ठितः ॥ २१
आदित्यवर्णो भगवान् निर्गुणः ■ स्वयेरितः । अस्तु सर्वं त्वयोक्तं यत् विश्वाक्रान्तच्युतामला ॥ २२
ब्रह्मा विष्णुश्च भगवान् आद्यन्तौ नोपलब्धवान् । यस्य सर्वेश्वरस्यास्य यो वेद महिमालयम् ॥ २३
कथं वा श्रावते शंभुः त्वया वृद्धेन विश्वपाः । निवार्यतामसावालि वृद्धः पलितमूर्धजः ॥ २४
पुनर्विपक्षुर्यत्किञ्चित् प्रस्फुरद्दशनच्छदः । क्वायं वृद्धो द्विजोऽपिद्वान् क्व सर्वज्ञो महेश्वरः ॥ २५
भृगुमेवपुराशाप मण्डगो गौतमस्यदि । दधीचशाप निर्दग्धस्त्वयथा तात्र संशयः ॥ २६
अथवाऽसौ तपो विघ्नः मूर्तिमान् समुद्भुतम् । आत्मानात्मविवेकस्तः सर्वेषामपि रोगवान् ॥ २७
न गच्छेत्साहसी वृद्धः वारितोऽपि पतिष्यति । इतो गमिष्याम्यधुना नास्याग्रे स्थातुमक्षमा ॥ २८
इति क्रुद्धतरा देवी गन्तुमिच्छत् पराङ्मुखी । ततः प्रसन्नो भगवान् स्वयमात सुजाम्बुजः ॥ २९
स्वं रूपमास्थितो देव्याः प्रादुरासीत् पुरः प्रभुः । नीलकण्ठो विरूपाक्षः स्मितो नित्यं मनोहरः ॥ ३०
देववृन्दकरोन्मुक्त पुष्पवृष्टि समुज्ज्वलः । प्रोवाचाद्योऽन्यथापि त्वदीय तपसाह्यहम् ॥ ३१
क्रीतोऽस्मि वद किं तेऽद्य ददानि वरमुत्तमम् । इति वादिनि देवेशे शंकरे भवभेषजे ॥ ३२
अजाय सा नियमजं क्लेशमुत्सृज्य पार्वती । सकंपपयरोमांच हर्षगद्गदया गिरा ॥ ३३

प्रणम्याथिपदाब्जयुगलं देवं तुष्टाव साञ्जलिः ।

देवी — यमाहुरेकं पुरुषं वेदान्तेषु . विचक्षणाः ॥ ३४

ध्यात्य तिष्ठति यो देवः कुहरे ते नमोनमः । यत् पादकमलद्वंद्व ध्याननिर्धूतकल्मषाः ॥ ३५
प्राप्नुयुर्निर्भया मुक्ति तस्मै तुभ्यं नमोनमः । यत्कृपादृष्टि दृष्टानां न मोहो नापि दुष्कृतिः ॥ ३६
भवन्ति ते जगद्वन्द्याः तं त्वामीशं श्रितास्म्यहम् । यं विनिद्रा जितश्वासाः शान्ता भक्तिसमन्विताः ॥ ३७
ज्योतिर्मयं प्रपश्यन्ति तं त्वामीशं श्रितास्म्यहम् । अनुगृहाण देवेश त्वमङ्गीकृत्य मां प्रभो ॥ ३८
भक्तार्तिघ्नो महादेव प्रतीतो भुवनत्रये । भक्ता तेऽहं दयासिन्धो त्वं मामङ्गीकुरु प्रभो ॥ ३९
इति तत् स्तुतिसन्तुष्टः प्राह मुग्धेन्दुशेखरः । गृह्णामि तेऽद्रिजे पाणिं श्वस्समेत्य महोत्सवे ॥ ४०
त्वत्पित्रभ्यामनुज्ञातः सुरसिद्धनिषेवितः । इति दत्वा वरं शंभुः कैलासमगमाधयत् ॥ ४१
तत्र सप्तऋषीनीशः सस्मार स्मरशासनः । स्मृतमेव समाचयतः मनसा मुनिपुंगवान् ॥ ४२
स्मरणाद्देवदेवस्य ते प्रापुः सन्निधिं विभोः । त्वायाऽवतन्तस्ते दृष्ट्वा देवाधिनायकम् ॥ ४३
छत्याकृत्यमज्ञानतः विवशेनान्तरात्मना । इदमूचुरनूचानाः गृणन्तो ब्रह्मशाश्वतम् ॥ ४४
किमिदं येन सृजसि येन पालयसि प्रभो । अत्सि येनानुगृह्णासि यदेतद्रूपमीश्वर ॥ ४५
क्रियावानक्रियस्त्वं हि कलावानपि निष्कलः । निरवद्योपि रूपत्वे नीलकण्ठो निरञ्जनः ॥ ४६

सदाशिवोऽसि नित्यत्वान्निर्मलत्वाच्च विश्रुत । त्वमेकोसि परब्रह्म नेह नानास्ति किञ्चन ॥ ४७
रुद्रस्त्वं भवसि ब्रह्मा [illegible] विष्णुश्च प्रजापति । त्वं स्वाहा त्वं वषट्कार त्वं यज्ञस्त्वं तनूनपात् ॥ ४८
आनीमो न विभो यत्र नासि कालत्रयेष्वपि । विश्वाधिकोसि विदितो विश्वं भूतमनेकधा ॥ ४९
अतर्क्यैश्वर्यविभवे भवेभुवि महात्मना । अनुग्रहेण ते भक्ति भवेदव्यभिचारिणी ॥ ५०
अधीतस्य सदाऽस्माभि वेदस्यानुष्ठितस्य च । तपसश्च फलं भूरि यस्य स्मरणपात्रताम् ॥ ५१

इत्येव कथयन्त ईशितुरिमे देवस्य शम्भो क्षणात् संप्रापुर्निलयं गिरौ गिरिवरे कैलासशैले द्विजा ।
भक्तानुग्रहतत्परस्य सततं रुद्रस्य सद्दर्शनात् न दीशा वरोपुपाह्णगत नेमु प्रहृष्टान्तरा ॥ ५२

मुनिवरगदिता स्तुतिं गृणन्त शिवदयिता श्रवणेन संपिबन्त ।
भुवि सुतदयिता पशून् लभन्ते सकलमपि सुखं पुनश्च मुक्तिम् ॥ ५३

इति श्रीस्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
सम्भवकाण्डे चतुर्दशोऽध्यायः ॥

---

## ॥ अथ पञ्चदशोऽध्यायः ॥

### श्रीपरमेश्वरेण सप्तर्षि प्रेषणम् ॥

सूत —

ततस्ते सप्तमुनयः शम्भोर्दर्शनकाङ्क्षिणः । को देवावसरोऽहीति प्रार्थयन्ति स्म तं द्विजाः ॥ १
लब्धानुज्ञोऽथ देवस्य शिलादमुनिसम्भवः । प्रावेशयदमून् विप्रान् निकटं तस्य धूर्जटेः ॥ २
प्रणम्य ददृशुर्देवं आरादेव पिनाकिनम् । विराजमानं विप्रेन्द्रा युवानमतिकोमलम् ॥ ३
मण्डितं मण्डनैर्दिव्यैः विचित्रकुसुमोज्ज्वलम् । प्रमोदविवशास्ते हर्षाश्रुव्याकुलेक्षणा ॥ ४
स तान्विनाय शैलादि मुनीन् सविधमीशितुः । ते विलोक्यातिनिकटे चेकितानमजं प्रभुम् ॥ ५
इत्थेव मेनिरे सत्यं पद्ममालोपमं मन्मथ । श्रीळयाबद्धता प्राप्त नाळीकेक्षणकौलया ॥ ६
नाळीकनेत्रोऽमुं वीक्ष्य नारीभावमुपागत । नासिकाकिमुनीन्द्राणां चित्रं पत्न्योऽपि मोहिता ॥ ७
पुंसामपि मनस्तेन स्त्रीणां किमु जगत्तौ । इत्येव वीक्ष्य ते भूयो वीक्ष्य वीक्ष्याक्षियुग्मकै ॥ ८
प्रणेमुर्भावितात्मान भर्गं भवभयापहम् । तानुवाच महादेव वाचा मधुरवर्णया ॥ ९

ईश्वर —

निषीदन्तु भवन्तोऽत्र भक्त्या मय्यतुलात्मना । आसनेषु महाभागा यूयं मे हृदयङ्गमा ॥ १०
इति वादिनि देवेशे सर्वे प्राञ्जलयस्तदा । निषेदुरासनेष्वेते यथा वृद्धपरम्परा ॥ ११
ततस्तेषां समुत्थाय वसिष्ठो वदतां वरः । व्यजिज्ञिपन्महेशाय प्राञ्जलि प्रणतस्तदा ॥ १२
यन्मनःसरसीहंस त्वा [illegible] तु धन्यतमाग्रणी । किमु देव स्मृताना नो भविता भाग्यगौरवम् ॥ १३
तदिमाश्चाधि भगवन् किङ्करास्तव शङ्कर । अथवा रक्ष रक्षास्मान् अनन्यान् भवसागरात् ॥ १४

सूत —

अथ देवोऽवदत् यूयं यदर्थमिह सम्भृता । अहं मूर्तिभिरष्टाभि अनुगृह्णामि सर्वदा ॥ १५
त मां विष्णुमुखा देवाः प्रार्थयन्ति स्म भूसुरा । अरिविग्रहतास्तेषा शा तपेऽस्त्वनूभवम् ॥ १६
सेनान्य शान्तये तेषां मुनीन्द्रास्सुरविद्विषाम् । प्रतिज्ञातं च तेषान्तत् श्रोत्रियैव मयापि च ॥ १७

भूषणैर्भूषयामासुः पुण्येऽहनि सुमङ्गलम् । दुहिता च तदा ताभिः जननी जगतामुमा ॥ ४०
अलंकृता सा संरेजे शारदीवेन्दवीकला ॥ ४०½

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे संभवकाण्डे पञ्चदशोऽध्यायः ॥

---

॥ अथ षोडशोऽध्यायः ॥

सप्त ऋषिभिः श्रीशिवाय पार्वती वरणम् ।

सूतः —

संशाप जगतांसाक्षात् जननी सविधं पितुः । मुनयस्तस्य ते सर्वे तदा गिरिवरात्मजाम् ॥ १
अरुन्धती च संप्रेक्ष्य प्रणेमुर्मनसा मुहुः । हिमवानात्मजां तत्र मन्दाक्षविलसन्मुखीम् ॥ २
वात्सल्यादङ्कमारोप्य मन्दस्मितमुखोऽब्रवीत् । मुनीश्वरा ब्रह्मविदः इयमुक्तवसितं मम ॥ ३
चक्षुः कनीनिका सर्वं यथा मे कुलभूषणम् । तमुवाचाङ्गिरा लोकमातेयं महिताकृतिः ॥ ४
शृणु मद्वचनं राजन् यदर्थं वयमागताः । य एको जगतां धाता विधाता वेधसामपि ॥ ५
कारणं कारणानां च नियन्तेश्च नियामकः । रक्षणामपि यस्त्राता रक्षकाणां च रक्षकः ॥ ६
संहर्तॄणां च संहर्त्ता महात्मासौ महीधर । परमात्मा परंज्योतिः परंब्रह्म परात्परम् ॥ ७
पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् । यस्मात्परं नाण्वपरं नापीयानो महांस्तथा ॥ ८
येनादौ क्रियते विश्वं पाल्यते येन पश्यते । यस्मिन्नीश्वर इत्युक्तैः यथार्थो नौपचारिकः ॥ ९
नाम्यगामी च शब्दोऽयं वर्तते चाणिमादिभिः । नित्यानां चैव यो नित्यः चेतनानां च चेतनः ॥ १०
कालः कालयतां चापि कालकालः कलाधरः । तस्य इयं जगत्पित्रे पत्नी देया त्वयाऽनघ ॥ ११
न पत्पादौ वराहेण लभ्यते द्रष्टुमद्भुतम् । विष्णुनाऽऽदौ मृगपता देयाऽसौ कन्यका त्वया ॥ १२
पितामहेन हंसेन यन्मूर्धा न विलोकितः । तस्मै जगदधीशाय देया पत्नी त्वया सुता ॥ १३
पद्मीक्षणेन पुरारिः स्तवयन्यो जटीकृतः । क्षणेनैकेन विबुधाः जयादप्यच्युताशयः ॥ १४
तस्मा इमां त्वं कल्याणीं प्रयच्छ पृथिवीपते । यद्भ्रूप्रणिहिताब्धमीः देयासुरवरात्मजाम् ॥ १५
यद्दानत्यागमतां मुक्तिः भवती तव पुत्रिका । सभार्येण त्वया देया जगतामिष्टसाहितम् ॥ १६
भस्मामीशात्मजो भावि शूरादीनां खलात्मनाम् । संहर्ता भविताऽलोके सुकुमारो महाभुजः ॥ १७
धन्योऽसि कृतकृत्योऽसि कुलीनानां त्वमुत्तमः । पूज्योऽसि यस्य ते शंभुः जामाता जगतांगुरुः ॥ १८
इत्युक्त्वोपरते तस्मिन् मुनयो हृष्टमानसाः । प्रशशंसुः तदा सर्वे हिमवन्तं महागिरिम् ॥ १९
पत्नीश्च पत्न्यो भूभर्त्तुः मुनीनां मुदिताननाः । मेनामध्यां तदा राज्ञो महिषीं मुनियोषितः ॥ २०
तदा कण्टकितान्यङ्गान्यभोर्दानमुतान्यपि । अंगमत्वोञ्चितानीव कण्टकैरेव सर्वदाः ॥ २१
आनन्दाश्रुजलापूर्णनयनो गद्गदस्वरः । सुतामालिङ्ग्य वात्सल्यात् उवाच ■ मुनीनमून् ॥ २२
इयं मे जगतां माता कन्यका यमलेक्षणा । अनयाऽहं कृतार्थोऽस्मि कृतो युष्माभिरद्य वै ॥ २३
यूयं रक्षत मामद्य कृपया केवलं द्विजाः । विज्ञाप्य देवदेवाय पूरयध्वं मनोरथम् ॥ २४
शुभस्य शीघ्रमितिद्धि लोके सर्वत्र विश्रुतः । उत्थाय सर्वानद्रीन्द्रः प्रणनाम पुनः पुनः ॥ २५
साधु साध्विति तं सर्वे प्रशशंसुर्मुनीश्वराः । ययाङ्गिराः पुनश्चाह महिषीः सचलेन्द्रितुः ॥ २६

सर्वासां यो महीभर्तुः पत्नीनामस्तु सम्मतिः । मातृणामेव सम्मत्या कन्या देया कुटुम्बिभिः । २७
ओमित्युक्तासु सर्वासु मेना किंचिद् वचोऽब्रवीत् । भवंतु स्थावराः प्रायोऽचेतना विदिताज्ञनैः ॥ २८
रागद्वेषादयो दोषाः विशेषेणाविवेकिनाम् । दृष्टा लोकत्रये देवतिर्यङ्मानुषभोगिषु ॥ २९
व्यत्यासाश्च भवन्त्येव वचसामखिलात्मनाम् । विशेषाद्यत्र संबन्धः संबन्धिभ्यामहर्निशम् ॥ ३०
वाग्व्यत्यासो भवेल्लोकेऽनिवार्यः सर्वदा भवेत् । मतस्समानयोरेव संबन्धस्सुखदो भवेत् ॥ ३१
चूर्णानि गजरूढाय गजारूढेन सर्वशः । देयानि किल लोकेऽस्मिन् इति -सर्वजनश्रुतिः ॥ ३२
एष देवो जगद्धाता महादेवो महेश्वरः । महायासो जगन्मृत्युः भयो मृत्युञ्जयो हरः ॥ ३३
तत्रास्तां पुनरस्येह चरित्रं दुर्विभावनम् । ब्रह्मादयो न जानन्ति दण्डिताश्च सुराऽसुराः ॥ ३४
ब्रह्मणश्च शिरश्छिन्नं नखेनानेन लीलया । विष्णोरपि नृसिंहाद्याः अवताराश्च शासिताः ॥ ३५
प्रभूणां तादृशं कर्म किमस्माकं विचार्यते । श्वशुरोऽस्य तु यो दक्षः यजमानो द्विजाग्रणीः ॥ ३६
वाग्व्यत्यासवशोऽनैव छिन्नमूर्धा स चोरवत् । ऋत्विजो मुनयस्सर्वे सर्वे सभ्याश्च देवपैः ॥ ३७
यज्ञो यज्ञपतिर्देवता माधवो यज्ञरक्षकः । यज्ञोऽपि मृगरूपेण सह वीरेण दण्डितः ॥ ३८
इयं च नस्सुता बाला यथाऽस्माभिश्च शोचति । वाग्वाशोकासहिष्णूनां अस्माकं च भवेद्दुःखम् ॥ ३९
तथा विचार्य युष्माभिः दयाद्दृत्यो विधीयताम् । किंचास्य देवदेवस्य नो माता नापिता पिता ॥ ४०
न भ्राता न सुहृद्बन्धुः न कुलं नापि किंचन । एकएवह्यसौ रुद्रः न द्वितीयाय तस्थिवान् ॥ ४१
इति संस्मृत्य संस्मृत्य महिमानं च तं विभोः । प्रीतं मम मनो भीतं देवर भवति कातरम् ॥ ४२
इत्युक्तवत्यां तस्यां तु यशांसि प्रथितान्युवि । अरुन्धती वसिष्ठस्य भार्याऽऽहार्यां गिरेस्सतीम् ॥ ४३

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे षोडशोऽध्यायः ॥

---

॥ अथ सप्तदशोऽध्यायः ॥

कल्याणमण्टप निर्माणम् ॥

अरुन्धती —

शृणु मेने न माताऽस्य न पिताऽसौ जगत्पिता । राजाधिराजस्सर्वेषां राजराजसखाऽप्यसौ ॥ १
सर्वैश्वर्येण संपन्नः नाम्ना सर्वेश्वरेश्वरः । शास्ताऽशेषस्य जगतः भीषास्माद्वर्तते जगत् ॥ २
दण्ड्या न दण्डिता राज्ञा मध्यस्थेन महीयसा । शूले मत्स्यानिवाधाक्षुः दुर्बलान् बलवत्तराः ॥ ३
तस्माद्राजसु ये द्रोहं आचरन्ति मनस्विनि । दण्ड्यास्ते सहसा भूपैः सपुत्रपशुबान्धवाः ॥ ४
एष दक्षोऽस्य श्वशुरः सतीमात्माङ्गसंभवाम् । अग्रे दृष्ट्वाऽपि मूढात्मा निनिन्द बहुधा शिवम् ॥ ५
अकस्मादेव देवेशं अज्ञाताशेषदूषणम् । बहुधाऽनेन पापेन ऋत्विग्भिस्सह दण्डितः ॥ ६
ब्रह्मादयोऽपि ते देवाः सदोषा एव दण्डिताः । तस्मात्ते मे दृशी भूयात् बुद्धिर्दृढा महेश्वरे ॥ ७
वार्तासु त्वादृशीयासु संशयं मा कृथाश्शुभे । सदाशिवे महादेवे शंकरे लोकशंकरे ॥ ८
मृडे शुभङ्कळे शर्मौ भक्त्यासंशयं वृथा । मेने त्वां योगिनीं श्रेष्ठां मेनेऽहं वरवर्णिनि ॥ ९
धन्याऽसि कृतकृत्याऽसि दत्वा रुद्राय कन्यकाम् । एते तु सप्तविख्याताः मुनयो ब्रह्मवादिनः ॥ १०
तद्रूपस्या भावितात्मानः तमेव शरणं गताः । नमस्कृत्य तानेतान् प्रार्थयस्व दयापरान् ॥ ११

ततश्चेयं मया देवा निर्वाचा शूलिने मुदा । अरुन्धतीगिरा मेना शिवं त्रिदशवन्दितम् ॥ १२
ज्ञात्वा विगतसन्देहा मुनीनत्रिमुखांस्तदा । प्रणम्य प्रार्थयामास भगिनी योऽहमत्र यत् ॥ १३
अज्ञानान्या मयोक्तं तत् क्षमध्वं मुनिपुङ्गवाः । पाणिं गृह्णातु मत्पुत्र्याः यथा देवो महेश्वरः ॥ १४
तथा सम्यगनुष्ठेयः उपायोऽत्र मुनीश्वरैः । प्रणमन्तीं प्रियामद्रेः मेनामेवं मुनीश्वराः ॥ १५
प्रशशंसुर्महीपालं प्रोचुश्च मृदुभाषिणः ।

मुनयः — भो भो भूधरराजेन्द्र फलं गृह्णातु पार्वती ॥ १६

आरोपयैनामात्माङ्कं अचलाधिप सांप्रतम् । अरुन्धती च पत्न्यश्च मुनीन्द्राणां तथोचिरे ॥ १७
अथाद्रिराजे कल्याणीं अङ्कमारोप्य तस्थुषि । अरुन्धती फलान्यस्यै सह स्त्रीभिर्द्विजन्मनाम् ॥ १८
हस्ताभ्यां हस्तयोर्दत्त्वा नेमे तत्पादपङ्कजम् । इयं हि जगतां माता शर्वाणी सर्वमङ्गला ॥ १९
अनन्यसुकरं शम्भोः अङ्कमेषाऽधितिष्ठतु । अनया भगवानीशः गृही तेन गृहिण्यसौ ॥ २०
एताभ्यां चित्रकृत्याभ्यां जगत्सृष्टं च रक्षितम् । ततस्स हिमवान् सर्वान् अभिवाद्य कृताञ्जलिः ॥ २१
आह स हे मुनिश्रेष्ठाः को मुहूर्तश्शुभावहः । कालः को वा मुहूर्तार्हः चन्द्रतारादिशोभनः ॥ २२
दैवस्य चोभयोरस्याः चानुकूल्यं किमस्ति वा । राशिनक्षत्रयोगानां ब्रूत सम्यग्विचार्य नः ॥ २३
ततस्ते मुनिशार्दूलाः प्रोचुः भूधरपुङ्गवम् । श्वो मुहूर्तश्शुभोऽत्यन्तं फल्गुन्योरुत्तरापदयोः ॥ २४
राशौ जामित्रसंशुद्धे देया देवाय पार्वती । सर्वानुकूल्यमस्त्येव सर्वबन्धोर्महेशितुः ॥ २५
संभार्यास्सर्वसंभाराः यैरलं सत्कृतेस्तराम् । महोत्सवं दिदृक्षूणां आगतानां गिरीश्वर ॥ २६
स्वस्तितेऽस्तु गमिष्यामः श्वः कल्याणे महेशितुः । उक्त्वैवं ते मुनिश्रेष्ठाः देवदेवान्तिकं ययुः ॥ २७
गतेषु तेषु हिमवान् बन्धुदारसुतावृतः । चिन्तामवाप महतीं महोभावी श्व ईशितुः ॥ २८
कथं देति मया शम्भुः अनिन्द्योऽभ्येति मेनया । तद्विवेदास्य कृपया सर्वमेतच्चराचरम् ॥ २९
सुखीर्यं प्राप्य निष्कार्द्र इति नीहारसानुमान् । अवकाशः कथं भावी दिदृक्षूणां महोत्सवम् ॥ ३०
अथोपाधाय वै पुत्रः मैनाकः पर्वतेश्वरम् । शीघ्रं त्वष्टारमाहूय महान् कल्याणमण्टपः ॥ ३१
कार्यस्सर्वेश्वराहोऽत्र मा विलम्बस्व भोः पितः । इति तेनोदिते सर्वं भूभृतां नायको मुदा ॥ ३२
आजुहाव स तक्षाणं स्वर्गिणां शिल्पिपुङ्गवम् । त्वष्टाऽऽविरासीदाश्वग्रे पर्वतेन्द्रस्य साञ्जलिः ॥ ३३
तं स्वागतासनार्घाद्यैः संभाव्य नगनायकः । उवाच च गिरिश्रेष्ठः विश्वकर्माणमादरात् ॥ ३४
त्वं स्वर्गशिल्पिनां नाथः नाथाय जगतां मयः । देया श्वः पार्वती कन्या शिवाय शिवदायिने ॥ ३५
अतस्त्वयाऽत्र कल्याणमण्डपः परमाद्भुतः । सुविशालो विचित्राढ्यो भूरिशालरसचित्रकः ॥ ३६
कुत्राप्यनीदृशस्सद्यो निर्मितव्यः प्रयत्नतः । इति संभावयामास वस्त्रमाल्यानुलेपनैः ॥ ३७
ततः प्रीतमनाश्शिल्पी विश्वकर्माऽत्र संभ्रमात् । चकार मण्टपं क्षिप्रं मनसा मणिपेशलम् ॥ ३८
योजनाशतसाहस्रविस्तारायाम सुप्रभम् । अनेकशतशालाभिः विशालाभिर्विराजितम् ॥ ३९
सहस्रभौमप्रासादैः लेलिहानमिवाम्बरम् । क्वचिज्जलनिभैः स्थलैः सन्निवेश विशेषतः ॥ ४०
तरङ्गकुलसंव्याप सरितांपतिसन्निभम् । क्वचिद्भूमिभ्रमकर जलाशयसमाकुलम् ॥ ४१
क्वचित् द्वारभ्रमकर कुड्यभ्रमनोहरम् । कुड्यदेशनिभैः क्वापि द्वारपङ्क्तिभिरावृतम् ॥ ४२
आकाशप्रतिमं कुड्यं क्वचित्कुड्यनिभं नभः । क्वचित्स्तम्भनिभाकार व्योमपङ्क्तिसमुज्ज्वलम् ॥ ४३
क्वचिद्व्योमनिभैस्तम्भैस्सर्वतः समलङ्कृतम् । अनेकरत्नस्तम्भाढ्य मण्टपैरुपशोभितम् ॥ ४४
मुक्तामणिगवाक्षाढ्य विद्रुमद्वारतोरणम् । वज्रकल्पितसोपानं स्वच्छस्फटिकवेदिकम् ॥ ४५

अत्युच्छ्रितपताकाग्रनिरुद्ध दिनकृत्पथम् । महावृषभसंबाध प्राकाराग्रमनोहरम् ॥ ४६
त्वष्टेदं विचित्राढ्यमण्टपं मनसा मुदा । कृत्वा सन्दर्शयामास गिरिराजाय सादरम् ॥ ४७

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे सप्तदशोऽध्यायः ॥

---

॥ अथ अष्टादशोऽध्यायः ॥

पार्वत्याः भूषणैरलङ्कारः ॥

हिमवान् स विलोक्याथ पुत्र्या कल्याणमण्डपम् । तदा संभाव्य तं दिव्यभोगैस्त्वष्टारमद्भुतैः ॥ १
महोत्सवार्थं श्वोभूते समागच्छेति तं मुदा । विसृज्य सहसा गौरीं दिव्यमाल्यानुलेपनैः ॥ २
अलंकुर्वन्तु तरसा सुमङ्गल्योऽभ्यवादिति । अथ तस्याज्ञया सर्वाः स्त्रियस्तामरसेक्षणाः ॥ ३
मङ्गलाभरणैश्शीघ्रं अलंचक्रुस्सुमङ्गलाम् । गायन्त्यस्सन्निवेश्यैनां भद्रपीठेऽद्रिसंभवाम् ॥ ४
अभ्यङ्गं कारयामासुः प्राङ्मुखीमायतेक्षणाम् । शङ्खस्तम्भमृदङ्गानां दुन्दुभीनां च निस्वनैः ॥ ५
अभ्यषिञ्चन् विशालाक्षीं अंबिकामुष्णवारिभिः । शालीचूर्णनिशारेणु मुद्गपिष्टरसैश्शुभैः ॥ ६
सुगन्धिशीतलैस्तोयैः सुकेशीममलैश्शुभैः । गाङ्गेयैर्यामुनाद्यैश्च चतुरर्णवसम्भवैः ॥ ७
सर्वतीर्थजलैर्देवीं चन्द्रबिंबनिभाननाम् । जगत्पूज्याङ्गना वृद्धाः देवीसूक्तानि सूरयः ॥ ८
सर्वेषामेव लोकानां मङ्गलान्यभवंस्तदा । मुनीनां पन्नगश्चैव देवानामपि पक्षयः ॥ ९
अदितिश्च दितिश्चैव सुपर्णी सुरसा तथा । स्वाहा स्वधाऽनसूया च गार्गी साक्षादरुन्धती ॥ १०
सर्वास्तास्सर्वलोकेशीं सर्वलोकैकमातरम् । शनैश्शनैरभ्यषिञ्चन् स्वस्वनैः कलशैश्शुभैः ॥ ११
ततश्श्लक्ष्णेन मृदुना सुकेशीं वाससा शनैः । उद्वर्तयन्ति स्म तदा शीघ्रमंभोजलोचनाम् ॥ १२
परिधाप्य ततः पट्टदुकूले शुभलक्षणे । अलंचक्रुर्मुदा दक्षाः पार्वत्याः केशमंबिकाम् ॥ १३
नवयावकपङ्केन पादौ कमलकोमलौ । ररञ्जुः सहसा देव्या मङ्गलार्थमतन्द्रिताः ॥ १४
ऊरुश्च गिरिजामायाः इमौ कमलकोमलौ । निषेदि चन्द्रकलया सह मौळौ जगत्पतेः ॥ १५
तालदा गिरिजा सर्वाः स्निग्धपूर्णैसुरैरथ । अवान चारविन्देन ता मधूरद्रिसंभवा ॥ १६
हंसकौ रत्नखचितौ पदन्युर्नूपुरे शुभे । सुमध्यमायास्संरेजे मध्यः काञ्चीगुणान्वितः ॥ १७
ईशाद्विखवरीटानां जिपृक्षुरिव पाशवान् । बाहुद्वयं विशालाक्ष्याः विविधाभरणाञ्चितम् ॥ १८
कण्ठपाशौ महेशस्य कृतौ मकरकेतुना । विविधाभरणैर्भाति तन्वङ्ग्यास्तनुकल्पला ॥ १९
गौरिवाखण्डलधनुः खण्डमण्डलमण्डिता । पद्मकोशनिभौ देव्याः वक्षोजौ हारसंभृतौ ॥ २०
तन्मध्यनीलमाणिक्यनीलाभ्राविव रेजतुः । अनेकनिष्कसंछन्नं उरो देव्या बभौ नभः ॥ २१
सेन्द्रचापं महावृन्दं वामुंचामिव कालजम् । सुपक्वबिंबताम्राभः बभौ देवीरदच्छदः ॥ २२
सन्ध्याभ्रशकलोपेत [illegible] शीतांशुमण्डलः । नासाग्रमञ्चितं देव्याः शुभमौक्तिकशालिना ॥ २३
सौवर्णेन विचित्रेण भूषणेनातिपेशलम् । कर्णयोर्वालिकासूत्रताटङ्कानां श्रिया मुखम् ॥ २४
अपुष्यत्कान्तिमतुलां अंबिकायास्तदा तराम् । चूलीबन्धश्शुभो देव्याः सुमनोदाममण्डितः ॥ २५
ललाटमलकोद्भासि मुक्तादामविभूषितम् । नेत्राभ्यां भ्रूयुगं भाति साञ्जनाभ्यां मनोहरम् ॥ २६
कामस्य सशरं चारु धनुर्गोरिव तद्वयम् । मालेदामानखाग्रं तु मणिभूषणमण्डितम् ॥ २७

भूषणस्य वपुदंप्याः भूषण नास्यभूषणम् । सर्वांस्तत्र तामालोक्य सर्वावयवसुन्दरीम् ॥ २८
ईशोऽस्यानयैवेन सृष्टिर्णीय जगत्त्रये । एनयोस्सदृशावेतौ दम्पती इति मेनिरे ॥ २९
ततस्ता गिरिराजाय भूषिता ता न्यवेदयन् । ततस्सहिमवाल्लोके गन्तु देवान्तिके मतिम् ॥ ३०
आहूय दीयते कन्या विवाहे ब्राह्म इष्यतः । उत्तरापथमार्गेण भानोस्सत्वरमादरात् ॥ ३१
कैलासं कालकण्ठस्य प्रिय हिमनगोत्तमः । तत्र भोगपुरे रम्ये रत्नप्राकारमण्डिते ॥ ३२
सहस्रभौमप्रासाद मण्टपैरुपशोभिते । राजाधिराजस्सर्वेषां राजते यत्र शङ्कर ॥ ३३
तत्र कक्ष्या समासाद्य प्रथमा प्रमथाधिपम् । शालङ्कायनयोगीन्द्रपौत्र नन्दीश्वर प्रभुम् ॥ ३४
प्रणम्य सन्निधौ तस्मै ध्वजिशिवदणाधिप । भगवन्नन्दिकेशान प्रार्थनैषा मम प्रभो ॥ ३५
प्राप्तेणैव विवाहेन ब्राह्मणधर्मेऽधुना । पुत्री देया महेशाय पुरुहूताय शम्भवे ॥ ३६
तत्प्रभोर्दर्शनाकाङ्क्षी त्वामस्मि शरण गत । ततस्सभगवान् नन्दी प्राप्यानुज्ञा महेशितुः । ३७
समापयदगाधीश जगदीशान्तिक सपात् । सभाद्रिरद्रिधनुष आसीन परमासने ॥ ३८
जगत्त्रितयसरक्षाजागरूक प्रियवरम् । सनकादिमहायोगिसवीतसन्निध प्रभुम् ॥ ३९
प्रणम्य परया भक्त्या प्रास्तौषीत् स्तुत्यमीश्वरम् ।
अद्रि — जय देव परानन्द भुवनानामधीश्वर ॥ ४०
सुरासुरेन्द्रसभाव्यपादपद्म परात्पर । आपन्नातिनिरासैकवारिवाम धूर्जटे ॥ ४१
त्वा प्रसाद्य जगत्यस्मिन् प्रातिश्चर्यात्सुरासुरा । अनर्चिताप्रियत्वात्ते देवे दुर्गतिभागिन ॥ ४२
अमङ्गला जना एते सुमङ्गल पराङ्मुखाः । अह त्वामखिलेशान प्रपन्नशरण शिवम् ॥ ४३
दातार सर्वलोकाना सर्वाभीष्टानि सन्ततम् । अर्थी त्वा प्राप्तवानद्य महान्तमनभ्ययम् ॥ ४४
याचना मे पूरयाशु त्वमर्थितादधिकप्रद । प्रणमन्त तथेशानः पुन पुनररिन्दमम् ॥ ४५
प्राह गभीरया वाचा प्रभुलक्षणयुक्तया ।
ईश्वर — उत्तिष्ठोत्तिष्ठ भद्र ते गिरीन्द्र वरदोऽस्मि ते ॥ ४६
वर वरय यत्तेऽद्य वाञ्छित ब्रूहि सत्वर ॥ ४६½

इति श्री स्कान्दे महापुराणे शङ्करसंहिताया शिवरहस्यखण्डे
सम्भवकाण्डे अष्टादशोऽध्याय ॥

---

॥ अथ एकोनविंशोऽध्याय ॥

नन्दिना कल्याणाय देवाद्यानयनम् ॥

हिमवान् —

तुभ्यमिच्छाम्यह कन्या मदीया दातुमीश्वर । प्रतिग्रहाण तामद्य त्व प्रातर्दिव्यदर्शी ॥ १
सहमाधववेधोभ्या सर्वैरपि मुनीश्वरैः । ओषधिप्रस्थमभ्येत्य पुर पुररिपो मम ॥ २
इति प्रार्थयते तस्मै प्रतिश्रुत्योमिति प्रभु । प्रसन्नेनैव मनसा प्रेषयामास भूधरम् ॥ ३
अथ तस्मिन् गतेऽद्रीन्द्रे नन्दीश पुरतस्स्थितम् । अब्रवीद्वृषपान् सर्वान् अस्मदीयान् गणाग्रणी ॥ ४
अण्डेषु वर्तमानास्तान् अनन्तानमितद्युतीन् । देवान् साध्यान् सविश्वाश्च सर्वानपि मुनीश्वरान् ॥ ५
शीघ्र ममाज्ञया नन्दिन् अद्यैवाह्वय तान् क्षणात् । इतीशाज्ञा समादाय नन्दी शङ्करवल्लभ ॥ ६
स्थित्वा मुहूर्तमेकाग्र सस्मार गणपान्मुदा । देवान्सेन्द्रान् सवरुणान् सदिक्पालान्प्रजापतीन् ॥ ७

रुद्रानेकादशादित्यान् द्वादशाष्टौ वसूनपि । विश्वानपि च वै देवान् साध्यांश्चैव तथा पितॄन् ॥ ८
नारायणं च लोकादिं अवतारांश्च तस्य वै । साक्षाच्चतुर्मुखं देवं ब्रह्माणं परमेष्ठिनम् ॥ ९
पाताळवासिनश्चापि सर्वानपि च दानवान् । अष्टावपि महानागान् काद्रवेयान्महाबलान् ॥ १०
अनन्तं वासुकिं चापि कार्कोटक महोरगम् । कंबळाश्वतरौ चापि तक्षकं फणिपुंगवम् ॥ ११
शंखपालं महापद्मं ससार गणपुङ्गवः । विरोचनं च बलिनं नमुचिं बलमेव च ॥ १२
महाजंभंच जंभंच हयग्रीवंच दानवम् । दितिजान् दनुजांश्चान्यान् पाताळतलवासिनः ॥ १३
पाताळस्थान् गणांश्चान्यान् हाटकेश्वरसम्मतान् । कूश्माण्डगणमुख्यांश्च भानुकंपं महाबलिम् ॥ १४
वीरभद्रं जगद्भद्रं भद्रकाळीमनोहरम् । भूतेशान् प्रमथेशांश्च सर्वानपि गणाधिपान् ॥ १५
महाबलं महाबाहुं मधुपिङ्गंच पिङ्गळम् । चतुर्वक्त्रंच भूतेशान् प्रमथेशांश्च कोटिशः ॥ १६
करणं बाहुकं चापि पंचाक्षं शतमन्युकम् । सुकेशं काष्ठकूटंच धूर्तं मेघभृतं तथा ॥ १७
विश्वरूपं विरूपाक्षं तालकेतुं दशाननम् । असंख्यातान् गणांश्चान्यान् ससार गणनायकः ॥ १८
आज्ञया देवदेवस्य कल्याणार्थं शिलादजः । कलामुहूर्ताः काष्ठाश्च दिनानि तिथिपक्षकान् ॥ १९
अर्धमासांश्च मासांश्च ऋतूनब्दांश्च कोटिशः । गङ्गाद्याश्च नदीस्सर्वाः समुद्रांश्च सरांसि च ॥ २०
यच्च किंचिज्जगत्यस्मिन् दृष्टं चानुमितं श्रुतम् । तत्सर्वं देवदेवस्य कल्याणार्थं शिलादजः ॥ २१
समाजुहाव मनसा सद्यएव जगत्पतिः । तदन्तरे महानादः संजातश्च समुद्भवः ॥ २२
जितुमेऽद्भुतं शंभोः देवानां कथयन्निव । समाकर्ण्य ततो नादं देवा विष्णुमुखास्तदा ॥ २३
समाजग्मुर्मुदाऽत्यर्थं द्रष्टुकामा महोत्सवम् । आरूढो गरुडं साक्षात् छन्दोरूपं महाभुजं ॥ २४
आजगाम गणैस्सार्धं श्रीवाग्भुवा हरिः । आदिमौ दंपती द्रष्टुं आदरेण जनार्दनः ॥ २५
आब्जासनो हंसवरं अधिरुह्य जगन्मयः । वाण्यातु परया साकमेपीसद्याजेश्चया ॥ २६
विग्रहवद्भिस्तथाऽर्थैश्च नयभिश्च महत्तरैः । वेदागमैर्मूर्तिमद्भिः विद्याभिस्सहितो गणैः ॥ २७
ब्रह्मा हरिश्चयोर्द्वेति सन्निधिं प्राप शूलिनः । इन्द्रोऽधिरुह्य सुदधेते तदा द्विरदं शुभम् ॥ २८
साकं पुलोमसुतया नयनोभिरलंकृतः । तथैव द्वादशादित्यैः नासत्याभ्यामलंकृतः ॥ २९
एकादशाभिरुद्रैश्च अष्टभिरभिरन्वितः । विश्वैर्देवैस्साध्यैश्च मुनिभिर्ब्रह्मवादिभिः ॥ ३०
समागच्छत्सहस्राक्षः द्रष्टुं दाम्पत्यमीश्वरं । एवमग्निर्यमो रक्षः नायको वरुणो मरुत् ॥ ३१
गुह्यकाधिपतीशानौ सर्वं जगुर्शिवान्तिकम् ॥ ३१½

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
संभवकांडे एकोनविंशोऽध्यायः ॥

---

॥ अथ विंशोऽध्यायः ॥

गणाधिपानां नामानि ॥

आत्मानश्चापि ते सर्वे अन्तरात्मान एव च । परमात्मान आजग्मुः चरस्थिरमयात्मनाम् ॥ १
असुराश्च महावीर्याः षट्पष्टिशतकोटयः । नागाश्च ये च पातालतलेषु समवस्थिताः ॥ २
कालाग्निरुद्रो भगवान् सर्वाधारोऽमितद्युतिः । अनन्तकोटिगणपैः आत्मतुल्यबलोद्यतैः ॥ ३

रुद्राण्या सह संप्राप देवदेवस्य सन्निधिम् । हाटकेशो महाबाहु अर्बुदायुतकोटिभि ॥ ४
आत्मनस्सदृशाकल्पै आवृतो गणपैर्ययौ । कूश्माण्डगणपश्श्रीमान् कोटिकोटिगणावृत ॥ ५
समाप सन्निधिं शम्भो द्रष्टुकामो महोत्सवम् । अभ्यगाद्रक्तवर्णश्च गणकोट्यर्बुदैस्सह ॥ ६
दशभिः केसराक्षश्च न्यर्बुदानाच कोटिभि । समाप सन्निधिं शम्भो महोत्सव दिदृक्षया ॥ ७
वेद्युतोऽप्यभिरसमै समुद्राणाच कोटिभि । मुक्तान्यभिश्च गणपै मुद्रोत्सवमवाप ■ ॥ ८
विशालस्स्वगणैस्सार्द्धं समस्तक्लेशवर्जितै । कोटिकोटिमहापद्मै संप्राप शिवसन्निधिम् ॥ ९
पारियात्रोऽत्र भगवान् न्यर्बुदै प्रमथैश्शतैः । प्रापशसविघ श्रीमान् प्रसन्ना तदात्मना ॥ १०
सर्वान्तकशतगणै समुद्रातकोटिभि । सर्वेशसन्निधिं प्राप सर्वक्षत्रसर्वभावित ॥ ११
विक्रान्तोऽपि विविधैः पीतताम्रैर्निमलस्तै । अनेक कोटिगणपै सविध प्राप शूलिन ॥ १२
लोकालोकाचलावासी ज्वालाकेशो महाभुज । शूललोलभुजैर्दिव्यै देवदेवान्तिक ययौ ॥ १३
समदोऽपि महाभाग समदैर्नातसंनिकै । सह चन्द्रार्धचूडस्य सदस सहसाऽऽप स ॥ १४
दुन्दुभिर्दुन्दुभिप्रेणी मिनदैर्जितसागर । असख्येरायमस्सै यै अनन्तस्याप सन्निधिम् ॥ १५
कपालीशो महाभाग कपालस्वपलङ्कृत । कपालि सविध प्राप पराधगण संवृत ॥ १६
सहस्रशधराधैरीलाशमूषणस्याप सन्निधिम् । शतकोटिपरार्द्धस्थैः गणपैर्मुक्तकिल्बिषै ॥ १७
रुद्राणा कोटिभि यहि चण्डको रुद्रसन्निभ । रुद्रस्य सन्निधिं प्राप तदा सर्वं जगत्पते ॥ १८
कुम्भक कोटिकोटीना प्रमथैरनुतैर्गणैः । सन्निधिं प्राप देवस्य शम्भोरक्रमशासिन ॥ १९
मधकाययो महाभाग प्रमथाधिपतिर्विभुः । मदनारिमनुप्राप शतकोटि गणावृत ॥ २०
सम्भावश्च गणप्रेष्ठ गणकोटि परार्द्धकै । गौरीकल्याण सेवार्थं गिरीश प्राप सत्वर ॥ २१
आवेशनिश्च भगवान् भगनेत्रहरान्तिकम् । अयुतायुतकोटीना गणैस्सप्राप सादरम् ॥ २२
अपवक्त्रो महाकेश वीरपर्वतकश्च ते । सहस्रकोटिगणपैः सविध धूर्जटेर्ययु ॥ २३
पिप्पल काकपादश्च सन्तान गणकाग्रणी । सर्वेश्वरसेविता असख्यातैर्गणोत्तमै ॥ २४
मधुपिङ्गोऽथ नीलश्च महाबल गणाग्रणी । मन्मथारिमनुप्रापु महोत्सव दिदृक्षया ॥ २५
पूर्णभद्रश्चतुर्वक्त्र भुवनानामधीश्वरी । पुरारिं पुरसैन्यैरस्सै पुरसार्धसमन्वयु ॥ २६
एते भूतगणास्सर्वे प्रमथाश्च महत्तरा । करुण प्रमथाधीश कारुण्याम्बुधिमीश्वरम् ॥ २७
शरण प्राप सद्यो आत्मनोऽनेक सैनिकै । वाहुकश्च महामाये प्रमथानीकसवृतः ॥ २८
प्राप देवाधिदेवस्य पार्श्वमम्बुजवासिन । पञ्चाक्ष पञ्चपञ्चाशन्न्यर्बुदप्रमथावृत ॥ २९
पञ्चेषुमथनस्यास्य समीप समागत । शतमन्युस्सदा मन्यु शतमन्युसमन्वित ॥ ३०
शतकोटिगणैस्सार्द्धं समीपं प्राप शूलिनः । मेघमन्याकूष्मश्च सुकेशो वृषभो बली ॥ ३१
प्रत्येक कोटिकोटीना प्रमथैरीशमाश्रयन् । शतानन्दो विश्वरूप तालकेतुस्सचित्तक ॥ ३२
लोकान्तकश्च चैत्रश्च दीप्तात्मा लकुलीश्वर । एतेऽपि प्रमथैस्सार्द्धं मनन्तैरापुरीश्वरम् ॥ ३३
दैत्यान्तको मृत्युजिच्च कालजिच्च विपादन । कलिङ्गिङ्गिजिच्चापि श्रीमान् भृङ्गिरिटि पर ॥ ३४
सूर्याचास्यदानिष्ठाया प्रमथा लोकपालका । सहस्रसख्यै प्रमथै परार्द्धैरापुरीश्वरम् ॥ ३५

इति श्रीस्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
संभवकाण्डे विंशोऽध्याय ॥

## ॥ अथ एकविंशोऽध्यायः ॥

### श्रीरुद्रसमाप्त्यनुचरकार्यवर्णनम् ॥

सूतः —

सहस्राणां सहस्राणि ये रुद्राः पृथिवीषदः । सहस्रयोजने लक्ष्यभेदिनस्सशरासनाः ॥ १
ते रुद्रास्त्रिदशश्रेष्ठाः त्रिनेत्रं संसिषेविरे । अस्मिन्महति सिन्धौ ये येऽन्तरिक्षे दिविस्थिताः ॥ २
नीलग्रीवास्त्रिणेत्रास्तेऽसंख्याताश्चापुरीश्वरम् । अधः क्षमाचराश्चान्ये सर्वे ते नीलकन्धराः ॥ ३
गिरीशायोऽस्तु कल्याणं सिषेविषय आपिरे । वृक्षेषु पिञ्जरा रुद्राः नीलकण्ठा विलोहिताः ॥ ४
भूतानां चाधिपतयः विकेशाश्च जटाधराः । सहस्रैरप्यसंख्याताः सायुधाः प्रापुरीश्वरम् ॥ ५
अन्नेषु ये विविध्यन्ति जनान् पात्रेषु भुञ्जतः । ये पथां पथि रक्षन्ति तीर्थानि प्रचरन्ति च ॥ ६
ये रुद्रा दिक्षु भूयांसः तिष्ठन्ति सततं च ते । गौरीवस्थाप्यसेवार्थे गिरिशं समुपाश्रयन् ॥ ७
अथादितिर्दितिर्विश्वा दनुः कद्रूश्च कालिका । पुलोमा सरमा चैव सिंहिका विनता तथा ॥ ८
सिद्धिर्माया क्रिया दुर्गा देवी स्वाहा स्वधा च सा । सावित्री वेदमाता च लक्ष्मी दक्षिणा द्युतिः ॥ ९
रतिर्बुद्धिर्मतिर्मेधा पुष्टिस्तुष्टिस्सरस्वती । राका कुहूस्सिनीवाली देवी चानुमतिश्च सा ॥ १०
धरणी धारणी वेला काला नारायणी च सा । एताश्चान्याश्च देवानां मातरः पत्नयश्च ताः ॥ ११
उद्वाहश्शङ्करस्येति जग्मुस्सर्वा मुदान्विताः । नदास्समुद्रगास्सर्वाः ब्रह्माण्डोदरमध्यगाः ॥ १२
सर्वास्ता ललनावेषाः भूषामणिविराजिताः । चामरासक्तहस्ताब्जाः सहंसाब्जा इवाययुः ॥ १३
उरगा गरुडा यक्षाः गन्धर्वाः किन्नरा नराः । सागरा गिरयो मेघाः मासास्संवत्सराः कलाः ॥ १४
वेदा मन्त्रास्तथा यज्ञाः स्तोमा धर्माश्च संयमाः । हुंकाराः प्रणवाश्चैव षट्काराः हिंकृतास्तथा ॥ १५
कोटिलक्षसंख्या दिव्याः तासां च परिचारिकाः । सुमङ्गलस्य तास्सर्वमङ्गलायाश्च मङ्गलम् ॥ १६
सद्योऽप्युपागमन् सर्वाः द्रष्टुकामा महोत्सवम् । ततस्ते संगतास्सर्वे शिलादकुलनन्दनम् ॥ १७
अन्तःपुराधिपं शंभोः नत्वा भक्त्या व्यजिज्ञपन् । नन्दीश भगवन् स्वामिन् ज्ञानवारांनिधे गुरो ॥ १८
इमे सर्वे वयं शंभोः संसेवार्थमिहागताः । विज्ञापय सुरेशाय दर्शयास्मांश्च संगतान् ॥ १९
इति तेषां समाकर्ण्य वचो विबुधवन्दितः । नन्दी सविधमभ्येत्य चन्द्रमौलेस्ससत्वरः ॥ २०
न्यवेदयत्समायातान् आत्मनस्सकलानिमान् । एकद्वित्रिमुखानन्यान् मुखात् गणवरांश्च तान् ॥ २१
अधिकारपदस्थांश्च विशेषानमितद्युतीन् । एकैकशस्समायातान् अजिरं त्रिपुरद्विषः ॥ २२
प्रावेदयत्स्वयात्मा शासनादेव शूलिनः । अथ देवोऽपि सर्वेशः करुणारसवारिधिः ॥ २३
दिव्य सिंहासनारूढः जगतामीश्वरेश्वरः । अनुजग्राह तान् सर्वान् उत्सवार्थमिहागतान् ॥ २४
सर्वांस्तानजिरस्यैव देशे संस्थाप्य यत्नतः । असकृत् गणाधीशाः नन्दीवेत्रप्रचालनैः ॥ २५
य आहूतस्स पश्चाच्च समागच्छतु नापरः । तिष्ठन्त्वत्र जनास्सर्वे संभाष्यैवं शिलादजः ॥ २६
प्रत्येकं दर्शयामास प्रभवे नन्दिकेश्वरः । प्रथमं तस्य वेत्रप्रचलनादुत्थितः स्वयम् ॥ २७
कालाग्निरुद्रो भगवान् सहसा लोककालनः । प्रणम्य देवदेवाय प्राञ्जलिर्दूरसंस्थितः ॥ २८
तमेव नन्दी भगवान् निर्दिशन् वेत्रपाणिना । देव कालाग्निरुद्रोऽयं तव मूर्तिर्दयानिधे ॥ २९
संहर्ता जगतामन्ते सर्वाधारोऽमराग्रणीः । संभासस्वासनाद्य समानात्मगणैस्सह ॥ ३०
सानुग्रहेण तमिमं दृष्ट्या संभाव्य शान्तया । इति नन्दीशवचनात् इन्दुमौलिरिदं हरः ॥ ३१

प्रसन्नयाऽनुग्रहाद् दृष्ट्या विश्वामरेश्वरः । सोऽपि मेने स्वमात्मानं कृतार्थमतयेशितुः ॥ ३२
कूश्माण्डमपि वीरेशं हाटकेशं गणाग्रणीः । दर्शयामास देवाय नन्दीशोऽन्यान् गणेश्वरान् ॥ ३३
अथ तस्याज्ञया विष्णु उदतिष्ठत्सहानुगः । अवतारैर्निजैस्सार्द्धं चतुर्भिस्सह मूर्त्तिभि ॥ ३४
तं चादर्शयदीशाय नन्दी तच्चरितं ब्रुवन् । एष एव तवेशान विष्णुर्गोमाङ्गसम्भवः ॥ ३५
नियुक्तो जगतामीश पालने कृपया त्वया । यदनेनार्चितं लिङ्गं चास्तित्र विमुक्तिदम् ॥ ३६
इन्द्रनीलमयं तेन सुसंप्राप्तमिदं पदम् । तवोत्सवामृतास्वादात् साफल्यं रचयन् दृशो. ॥ ३७
तमेनं करुणामूर्त्ते सत्कुरुष्व निरीक्षणैः । परमेशस्तदाकर्ण्य वचनं नन्दिनः प्रभु. ॥ ३८
अपाङ्गालोकमात्रेण कृतार्थमकरोद्विभु. । पितामहोऽथ नन्दीशकरवेत्राग्रसञ्ज्ञया ॥ ३९
सप्रजापतिको देवदेवं दृष्ट्वा कृताञ्जलि. । प्रणम्य दूरे देवेशं अतिष्ठद्विनयान्वित ॥ ४०
निर्दिश्य तं ततो नन्दी वेत्राग्रेणाह शंकरम् । भगवन् देव सर्वेश दक्षिणाङ्गभवोह्यहम् ॥ ४१
नियुक्तो भवता ब्रह्मा सृजेति जगतां त्रयम् । इदं धाम्नेन भगवन् पदं प्राप्तं त्वदाज्ञया ॥ ४२
लिंगं शैलं समभ्यर्च्य श्रद्धयाऽत्र तथाऽव्यय । त्वदंघ्रिपंकजनिष्यन्द मकरन्द मधुव्रत. ॥ ४३
अनुगृहाण तमिमं कृपार्द्रविलोकनैः । स च देवोऽपि तदनु सम्भावय दक्षिणा ॥ ४४

इतीश्वरे हरहरि धात्रिजासमाम् अनुग्रहं कुर्वति सर्वनायके ।
परानपि प्रमथपतिर्शिलादजः यथाक्रमं पशुपतये न्यवेदयत् ॥ ४५

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
सम्भवकाण्डे एकविंशोऽध्याय. ॥

---

॥ अथ द्वाविंशोऽध्यायः ॥

श्री शिवेन कल्याणमण्डपप्रवेश ॥

सूत —

ततो महेन्द्रप्रमुखान् दिक्पालानमितद्युतीन् । देवासुरमुनींश्चापि यक्षगंधर्वराक्षसान् ॥ १
अश्विनौ मरुतश्चापि यक्षगन्धान्नृपीनपि । पितॄन् सर्वांश्च वयसः पिशाचानपि गुह्यकान् ॥ २
नदीनद्समुद्रांश्च भूधरांश्च वनानि च । कला मुहूर्त्तान् काष्ठाश्च मासर्त्वयनवर्षकान् ॥ ३
क्रमेण नन्दी देवाय दर्शयामास सगणान् । देवोऽपि तांस्तान् क्रमशः समभावयदीक्षणैः ॥ ४
यथार्हमानुपूर्व्येण स्मयमानमुखाम्बुजः । उपायनानि देवाय ते ते स्वानि न्यवेदयन् ॥ ५
अथ पद्मासनो हैमपात्रेषु विनयान्वित । मध्ये निधाय देवस्य महार्हाभरणान्यसौ ॥ ६
प्रणम्य प्रार्थयामास भगवन्तं महेश्वरम् । रूपं रूपवता श्रेष्ठ तवात्यद्भुतमीश्वर ॥ ७
आकल्पस्याप्याभरणं उपमानं वपुष्मताम् । प्रसाधनविशेषश्चापि प्रसाधनमनूपमम् ॥ ८
अलंकुरु तथाप्येतैः अनुगृह्णीष्व मां प्रभो । इति तत्प्रार्थनादीशः स्मयमानमुखाम्बुजः ॥ ९
कराग्रेण स्पृशन् तानि रूपमत्यद्भुतं दधौ । कोटिकन्दर्पसंकाशं पूर्णचन्द्रनिभाननम् ॥ १०
फुल्लपद्मविशालाक्षं बिम्बाधरं मनोहरम् । कम्बुकण्ठलसल्लोलं मनोज्ञमतिपेशलम् ॥ ११
विशालवक्षो विलसच्चारुहारं चतुर्भुजम् । सर्वावयवसन्दीप्तं सर्वाभरणभूषितम् ॥ १२
आकेशमानखाग्रान्तं तत्तन्मण्डनमण्डितम् । लोकसम्मोहनं रूपं दधद्देवो दयानिधिः ॥ १३

ब्रह्माणमब्रवीदग्रे प्रणमन्तं कृताञ्जलिम् । अनेनाकल्पजातेन सर्वानपि दिवौकसः ॥ १४
आकल्पयाऽलंकुरु ब्रह्मन् महार्घं य इहागताः । निदेशेनास्य देवस्य ब्रह्मा ब्रह्मविदां वरः ॥ १५
विभज्य देवसंघेभ्यः प्रददौ भूषणान्यसौ । ततस्त्रिदशमुख्येषु भूषितेषु च भूषणैः ॥ १६
नदत्सु शंखमुख्येषु काहलीषु महत्स्वपि । भेरीमुख्यतूर्येषु निस्साणेषु बहुष्वपि ॥ १७
डिण्डिमेषु च सर्वत्र जितार्णवरवेष्वपि । तथा मधुरवाद्येषु वीणा वेणुषु सर्वशः ॥ १८
नागस्वरेषु चान्येषु विद्धेषु विविधेष्वपि । मुखानिलकृतापूरध्वनत्सु श्रोत्रमङ्गलम् ॥ १९
आरभ्य ताण्डवं दीर्घं आहिमाद्रेर्निरन्तरम् । चामराण्यप्सरस्त्रीषु कणत्कङ्कण निस्वनैः ॥ २०
वीजयमानासु सर्वत्र तालवृन्तानि सादरम् । सुगन्धिषु मनोज्ञेषु संसिक्तेषु हिमाम्बुषु ॥ २१
कस्तूरीपङ्कलिप्तेषु कर्पूरसिकतेषु च । मार्गेषु फेनिलांभोधिनिभच्छदावृतेष्वपि ॥ २२
पताका वैजयन्तीनां पङ्क्तिभिर्निचितेषु च । धूपितेषु च सर्वत्र धूपैरगरुसंभवैः ॥ २३
मुनीन्द्रेषु तथा वेदमुखरेषु द्विजातिषु । सुमङ्गलीषु योषित्सु शोभमोद्दामगीतिषु ॥ २४
जयशब्दपरेष्वेषं सूतमागधवन्दिषु । प्रमथेषु तथा वेत्रपाणिपूत्सारयत्सु च ॥ २५
रुद्रकन्यासहस्रेषु स्यन्दनेष्वचलेष्वथ । प्रनृत्यन्तिषु सर्वेषु बद्धाञ्जलिषु योगिषु ॥ २६
करं करेण संभाव्य नन्दिनश्चन्द्रशेखरः । आक्रम्य पादुके उभे सर्वरत्नोपशोभिते ॥ २७
सिंहासनाच्छनैस्तस्मात् अतिविभ्रमशोभनात् । कक्ष्यारक्षगणांस्तत्र तत्र संस्थाप्य रक्षकान् ॥ २८
द्वारदेशे ततः श्वेतं कलधौताचलप्रभम् । क्वणत्किङ्किणिसङ्घातैः बधिरीकृतदिङ्मुखम् ॥ २९
चामरपङ्क्तिभिर्दीप्तं मणिपल्ययनाञ्चितम् । ककुद्दालङ्कृतं पीनस्कन्धं रक्तायतेक्षणम् ॥ ३०
अनुगृह्याङ्घ्रिमेकेन पृष्ठं कुम्भोदरस्य वै । आरुरोहाद्रिसंकाशं महोक्षं रक्षकस्सताम् ॥ ३१
अस्तुवन् योगिनस्सिद्धाः तापसाश्च सुरेश्वराः । वैदिकानि च सूक्तानि जयशब्दांश्च मङ्गलैः ॥ ३२
अदितिश्च दितिश्चैव दनुः कद्रूररुन्धती । तुष्टिः पुष्टिश्च कीर्तिश्च स्वधा स्वाहा मतिर्धृतिः ॥ ३३
सरस्वती च लक्ष्मीश्च सर्वा वै लोकमातरः । देवानां पत्नयश्चैव मुनीनां पत्नयस्तथा ॥ ३४
जगुस्ताश्च सुस्वरं शम्भोः अपदानानि सर्वशः । गन्धर्वाः किन्नरास्सिद्धाः विद्याधर महोरगाः ॥ ३५
हाहा हूहुश्च महती तुम्बुरुर्नारदस्तथा । वैणिकीभिश्च ते सर्वे जगुः कर्माणि वीणया ॥ ३६
कुम्भोदरो गणाधीशः शम्भोर्नन्दिसमाश्रितः । छत्रं शतशलाकाढ्यं चन्द्रमण्डलसन्निभम् ॥ ३७
दधार प्रेमरसक्लिन्नहृदयोऽतिमहत्तरम् । तलविमौक्तिकस्रग्भिः ययौ सर्वेश्वरेश्वरः ॥ ३८
उत्तमाङ्गे पतद्गङ्गः इव पूर्णेन्दुमण्डलात् । द्वे खेलगामी तं देवं उवाह वृषभेश्वरः ॥ ३९
धुन्वन् मुहुः प्रोतयन्ते विषाणे धृतचामरे । आससाद क्षणेनैव कैलासादचलेश्वरम् ॥ ४०
हिमवानपि शैलेन्द्रैः बन्धुभिः पुत्रपौत्रकैः । अभ्युज्जगाम नगरात् वितानध्वजमण्डितात् ॥ ४१
समीयतुस्तदाऽन्योन्यं ओघाविव समुद्रयोः । सैन्ये देवाधिदेवस्य पर्वतस्य च तत्क्षणात् ॥ ४२
मैनाकेन च पुत्रेण क्रौञ्चेन च हिमालयः । प्रणम्य देवदेवेशं प्रावेशयदसौ पुरम् ॥ ४३
ओषधिप्रस्थमुत्तुङ्ग गोपुरप्राकाराञ्चितम् । रथनागतुरंगौघ पदातिपरिसंकुलम् ॥ ४४
भेरीमृदंगमुरज स्वनपटहविनादितम् । प्रासादं वनिताः प्रापुः ईशालोकनतत्पराः ॥ ४५
स्खलत्कायां गुहाऽर्धं अर्धमण्डितविग्रहाः । उत्सृष्टनीविवसनं सव्येनादाय पार्श्वगम् ॥ ४६
वामेन काचित् त्वरया पाणिना प्राप जालकम् । अन्या संभाव्य नयनं अञ्जनेन शलाकया ॥ ४७
अन्यद् विस्मृत्य नयनं आगवाक्षं जगाम सा । परा विस्रस्तधम्मिल्ला स्खलद्धारविभूषणा ॥ ४८

वातायनपथं पुष्पैः आतन्वोदञ्चित भुजा । अलक्तकेन सम्भाव्य पादमेकमथापरा ॥ ४९
निर्गत्य तावन्मार्गस्था धर्मचक्रे तदङ्कितम् । पुरे पुरन्ध्रयः प्रासादमालानि स्वैर्मुखाम्बुजैः ॥ ५०
अम्भोजावरणानीव चक्रुरिन्दीवरेक्षणाः । मर्त्याऽपि प्राप जगता राजमार्गे सुरैस्सह ॥ ५१
ववर्षुः पुष्पवर्षाणि लाजमध्यानि योषितः । विलोक्य देवदेवेशं मासामक्षाणि मानसैः ॥ ५२
साकं सर्वात्मना चक्षुः प्रापतन् सुतरामिव । ऊचुः परस्परं सर्वा जगदेतच्चराचरम् ॥ ५३
यस्य सङ्कल्पकलितं ध्यायन्ति मुनियोगिनः । प्रासादाज्ञसवोऽस्यैव मुक्तिं विन्दन्ति नान्यथा ॥ ५४
यस्याऽपि देवदेवेशं बालेन्दुकृतशेखरम् । चचारातो महादेवी तपो दुश्चरितं चिरम् ॥ ५५
धन्यमद्य कृतार्थां सा महतोऽपि महत्तरम् । कारणं कारणानां च देवानां च दैवतम् ॥ ५६
आलोक्य चक्षुषा तेन योगिध्येयं सता गतिम् । इति श्रोत्रसुखावाचं देवः शृण्वन् शनैश्शनैः ॥ ५७
प्राप भूभर्तुरतुलं भवनं महदुन्नतम् । अवतीर्य वृषादाशु महतो जगतां पतिः ॥ ५८
आक्रम्य पादुके नीते हरिणा रत्ननिर्मिते । आलम्ब्य ब्रह्मणो हस्तं हरेरपि हरः प्रभुः ॥ ५९
अथाप महतीं कक्ष्यां द्वारदेशे महीभृतः । सर्वासामक्षिभिरपाकं पुरन्ध्रीणां पुरामरिः ॥ ६०
ततो वेत्रकरो नन्दी अग्रगामी तदाऽऽदरात् । पठन् जयजयाशीस्तु सावधानो भवानितिदन् ॥ ६१
निम्नोन्नतप्रदेशौ स्व सावधानो विलोकय । पर्वतेन्द्रस्य [illegible] पत्नी वरारोहा गिरीशितुः ॥ ६२
प्रक्षाल्य पादौ पयसा गन्धेन च कृपानिधेः । अष्टमङ्गलयुक्ताभिः आनिनायान्तरालयम् ॥ ६३
कल्याणमण्डपं शम्भोः कारितं विश्वकर्मणा । नानामणिगणैश्चित्रैः अनेकायामविस्तरम् ॥ ६४
रत्नस्तम्भसहस्राढ्यं मत्तवारणिकावृतम् । तन्मध्ये क्षीरसमकोमलसमाकलितमुन्नतम् ॥ ६५
दिव्यं सिंहासनं चारु चतुस्स्तम्भैरलङ्कृतम् । अनेकादित्यसंकाशं महेशः प्रसरत्स्वरम् ॥ ६६
अलङ्करकार भगवान् भगनेत्रनिपातनः । कालाग्निरुद्रो रुद्रौघैः गणेन्द्रैर्हाटकेश्वरः । ६७
प्रमथाभूतसंघास्ते परिवार्यावतस्थिरे ॥ ६७½

इति श्रीस्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
सम्भवकाण्डे द्वाविंशोऽध्यायः ॥

---

॥ अथ त्रयोविंशोऽध्यायः ॥

श्री पार्वती विवाह ॥

सूत —

अथासनेषु चित्रेषु देवदेवैश्वरास्तथा । स्थितेषु परिवार्याथ शङ्करं चन्द्रशेखरम् ॥ १
विष्णुश्च भगवान् ब्रह्मा मघवानपि भास्करः । अष्टौ च वसवो रुद्रा आदित्या द्वादशाश्विनौ ॥ २
ब्रह्मर्षयो वसिष्ठाद्या नारदाद्यास्सुरर्षयः । योगिनस्सनकाद्याश्च सिद्धविद्याधरोरगाः ॥ ३
मातरस्सप्तलोकानां देवानां पतयोऽमलाः । मुनीनां पत्नयस्सर्वाः तथैवाप्सरसां गणाः । ४
अदितिश्च दितिश्चैव सर्वासां दक्षसूनवः । आमूलान्तर्महाहारैव अतिष्ठन्नासनेष्वमी ॥ ५
अथाद्रिराजो जननीं जगतां सहमेनया । पुरन्ध्रीभिश्च पौराणां अलञ्चक्रे सुमङ्गलाम् ॥ ६
सुगन्धितैलेनेशान्या चक्रुरभ्यङ्गमङ्गनाः । भद्रपीठे महादेवीं प्राङ्मुखीं धृतपङ्कजाम् ॥ ७
गौरीकल्याणवैभोगं गायन्त्यश्च मुदान्विताः । नानातीर्थैस्समानीतैः अभिषेकमकुर्वत ॥ ८
नदत्सु शङ्खशृङ्गेषु भेरीमुरजडिण्डिमे । अलङ्कृत्य ततो देवीं आनिन्युर्गिरिशान्तिकम् ॥ ९

रराज देव्या देवेशः दिव्यसिंहासने शिव । मेरोश्शिखर मारूढः रोहिण्या चन्द्रमाइव ॥ १०
(तदाऽलङ्कारसंयुक्ता नानारत्नैश्च शोभिताम् । सुगन्धिपुष्पमालाढ्या स्वर्णशृङ्खलया युताम् ॥ ११
डोला तत्र स्थिता दृष्ट्वा विष्णु प्रार्थितवान् शिवम् । भगवन् परमेशान डोलामारुह्य काञ्चनीम् ॥ १२
देव्या सह विनोदं च कृत्वाऽस्माकं प्रियं कुरु । विष्ण्वादिभि प्रार्थितैवं तथेत्युक्त्वाऽऽरुरोह स ॥ १३
हिमवानपि तां देवीं तत्र स्थाप्य च पार्श्वके । तुम्बुरुर्नारदश्चैतौ गायमानौ तदा मुदा ॥ १४
पश्चान्मङ्गलदीपैश्च पूजां चक्रुश्च लौकिकैः । मेनाऽपि सहसा पश्चात् सपत्नीभिस्समागता ॥ १५
देव्या देवस्य पादौ च प्रक्षाल्य पयसा मुदा । ईश्वरोऽपि ततः प्राप कल्याणमण्टपं च स ॥ १६
ब्राह्मणैर्वेदमन्त्रैश्च रङ्गमण्टपमाययौ ॥ ) ततो गिरिवराधीश सपुत्रगणबान्धव ॥ १७
पादौ प्रक्षाल्य विधिवत् प्रभोस्समाप्य तज्जलम् । समोक्ष्य मूर्धसु स्वेषु श्रद्धया सहमेनया ॥ १८
मधुपर्कं महेशाय कृत्वा भक्त्या विधानतः । [ईश्वरस्य च वस्त्रादीन् देव्या धारणपूर्वकम् ॥ १९
माङ्गल्याभरणादीनि देव्याः कण्ठे बबन्ध स ॥ ] भृङ्गारजलमादाय सौवर्णात्सुरसत्तदि ॥ २०
अभ्यर्च्य देवदेवेशं वस्त्राभरणपूर्वकं । समन्त्रकं ददौ देवीं धारापूर्वं शिवाय ताम् ॥ २१
[कन्यां कनकसम्पन्नां सर्वाभरणभूषिताम् । दास्यामि शम्भवे तुभ्यं सर्वमङ्गलशोभनाम् ॥ २२
प्रतिगृह्णीष्व देवेश मम सायुज्यदो भव । प्रतिजग्राह शम्भुस्तां सर्वलोकहिताय वै ॥ २३]
ततोऽसयो महानासीत् जयवाद्यादिमङ्गलैः । जग्राह पाणिं परया मुदा गौर्या महेश्वरः ॥ २४
सर्वमासीत्तदा हृष्टं जगत्स्थावरजङ्गमम् । प्रणेमुः पार्वतीं देवा परमेशं च भक्तितः ॥ २५
मुनयश्च गणाधीशा आत्मनो ज्ञानयोगिनः । ततो मही महाभारभुग्ना सा दक्षिणोन्नता ॥ २६
अतिनीचोत्तरा भूय जातमापुर्जनाहदि । अथ भीतास्सुरा प्रोचुः अथ पतनशङ्कया ॥ २७
प्रणम्य शूलिने शम्भुं मुनयश्च तपोधनाः । शम्भो जय दयासिन्धो महीपात्यपरोत्तरा ॥ २८
न पतेयुरिमे क्षिप्रं यथा देव विधीयताम् । आज्ञया तव देवेश समीकुरु महीमिमाम् ॥ २९
एवं संप्रार्थितो देवैः स्मितं कृत्वा शिवः स्वयम् । अगस्त्यमात्मनस्तुल्यं प्राहिणोद्रोहिणीशभृत् ॥ ३०
चक्रे दक्षिणाशेषा अधीशस्सुधियं मुनिम् । कल्याणवेषं तत्रैव तस्मै सन्दर्शयन्निजं ॥ ३१
सोऽप्याज्ञयाऽस्य दुःखेन सपत्नीको मुनीश्वरः । विन्ध्यमार्गेण संप्राप मलयाद्रिकपत्यकाम् ॥ ३२
शिवमायतया तुष्ये शिवस्य मुनिपुङ्गवे । मलये समतुमाते विषमाभूत्समाऽभवत् ॥ ३३
अथ विज्ञापयामास ब्रह्मा देवं कृताञ्जलिः । यद्यौ कार्या महेशान क्रिया वैवाहिकी विभो ॥ ३४
लोकश्रेष्ठेन यत्कर्मं समनुष्ठितमादरात् । अनुतिष्ठति तल्लोक श्रेष्ठस्त्वमसि यद्विभो ॥ ३५
तदाऽऽकर्ण्य वचस्तस्य स्मयमानमुखाम्बुजः । ददाऽनुज्ञामीशोऽस्मै विधये विधिपूर्वकम् ॥ ३६
हव्यवाहं स्वयमूर्तं विवाहाध्वरसम्पदे । सान्निध्यार्थे प्रजज्वाल प्रणम्य शिवयोस्तदा ॥ ३७
बर्हिभिस्सपरिस्तीर्य परिधीन्परिधाय च । आज्यं विलाप्य विधिवत् आज्यस्थाल्यान्निरूप्य च ॥ ३८
अङ्गारेषु प्रतिष्ठाप्य द्वे दर्भाग्रे निधाय च । उपर्युदीच्या प्रज्वाल्य पर्यग्निकरणं तथा ॥ ३९
उत्पूयाऽस्य सर्पिस्तत् संयोज्याघारमग्निना । अग्निं तज्जुहवाचक्रे दर्व्याऽऽसादितया विधि ॥ ४०
समिदाज्यचरुलाजान् दम्पत्यो प्रीतिवृद्धये । पाद्मीशोऽपि पाणिभ्यां भवान्याश्शानकैस्सयन् ॥ ४१
पदानि सप्त सम्भाव्य दृषदग्रे न्यवेशयत् । [एकमिषे विष्णुस्त्वान्वेतु मन्त्रेणचरेयप ॥ ४२]
परीयतुः पावकं तं दम्पती तौ मुदान्वितौ । [ब्राह्मणेभ्याशिष प्राप्य सन्तुष्टौ लोकदम्पती ॥ ४३]
एकासनगतौ पश्चात् दर्शनं ददतुः प्रभू । प्रथमं प्रमथेन्द्राणां कालाग्न्यादिदिवेशितुः ॥ ४४

हरिब्रह्ममहेन्द्राग्निप्रमुखानां योगिनाम् । मुनीन्द्रोरगसिद्धानां सर्वेषां सुरयोषिताम् ॥ ४५
वाचा संभावयामास कालाग्निं द्वारदेश्वरम् । गणेन्द्रानपि तान् सर्वान् स्मितेन मधुसूदनम् ॥ ४६
आलोकनेन ब्रह्माणं ईषदालोकनैस्सुरान् । कंपेन तापसान् मूर्ध्नः संभावनमथाचरत् ॥ ४७
अत्रान्तरे कामपत्नी वृन्दारिप्रमुखैस्सह । अप्रार्थयन्महेशानं भर्तारं मुहुरात्मनः ॥ ४८
हैमवत्या तदालोकि तिरश्चीनदृशा शिवः । हरिणा ब्रह्मणाचापि स्वसंभोगोपपत्तये ॥ ४९
कर्ताऽपि तत्र तत्सर्वं दृष्ट्वा हृष्टमनाः स्वयम् । प्रोवाच रतिमालोक्य तथैवास्तु पतिस्तव ॥ ५०
आत्मनामपि सर्वेषां अनंगोऽङ्गी तथैव सः । कामादिराख्ययाऽस्म्यद्यप्रभृत्यस्मिन् जगत्त्रये ॥ ५१
अनंगीकृत्य तं भद्रे सोऽहमंगीकरोमि च । तथैव सोऽभवत् कामः त्वां चैवाङ्गीकरिष्यति ॥ ५२
इति वादिनि देवेशे प्रयाणाभिमुखे सति । हिमवान् सहपुत्राभ्यां प्रणम्य प्रभुसन्निधौ ॥ ५३
मधुपर्कस्य शेषस्य विनियोगं व्यजिज्ञपत् । अर्थितस्तेन ते देवाः हरिब्रह्ममुखा विभो ॥ ५४
भद्रास्तुतुंगमाधाय शिरस्यञ्जलिमञ्जसा । भवेत्यतद्वयस्तेषां विभजस्वेति चाविशत् ॥ ५५
ततोऽहमहमित्येवं निर्माल्यं निर्मलादृतम् । अमराः स्वात्मशुद्ध्यर्थं स्वीकृत्यासन् सुनिर्मलाः ॥ ५६
अनुगृह्य ततोऽद्रीन्द्रं प्रभुरद्रीन्द्रकार्मुकः । ककुद्मन्तं समारुह्य कैलासं गिरिजासखः ॥ ५७
प्रतस्थे गणवैस्साकं देवैस्सह महर्षिभिः । संप्राप्येशः क्षणार्धेन तत्र भोगपुरे शुभे ॥ ५८
स्थित्वाऽश्मसमसनदशम्भुः द्वारदेशे वृषोपरि । विससर्ज सुरान् सर्वान् कालाग्निप्रमुखानपि ॥ ५९
ऋषीनपि वसिष्ठादीन् आत्मनश्च चराचरान् । भ्रूसंज्ञयैव भूतेशः वृषादुत्तीर्य च क्षणात् ॥ ६०
नन्दिहस्तमथालम्ब्य स्वं निशान्तमथाविशत् । अन्तरंगगणैस्सार्धं देव्या शीतांशुशेखरः ॥ ६१
इतीदं परमेशस्य कल्याणं गिरिराड्भुवः । नित्यं पठति यो भक्त्या शृणुयाद्वा समाहितः ॥ ६२
नारीवाथ नरोवापि योवा कोवा द्विजोत्तमाः । कल्याणाध्यायमीशस्य हैमवत्याश्च सादरम् ॥ ६३
शृणोति सम्यगभ्यर्च्य वक्तारं विबुधांवरम् । कन्यार्थी लभते कन्यां पतिकामा पतिं शुभम् ॥ ६४
विद्यार्थी लभते विद्यां जयकामो जयं लभेत् । पुत्रार्थी लभते पुत्रान् आयुष्कामो वयोऽमितम् ॥ ६५
इदं पुरा मुरारातिः श्रुत्वा श्रद्धापुरस्सरम् । लक्ष्मीमापामृतोद्भूतां साऽपितं पुरुषोत्तमम् ॥ ६६
यात्र ब्रह्मा पुरा श्रुत्वा साऽपितं चतुराननम् । पुलोमजा महानिन्द्रः महत्या देवसंपदा ॥ ६७
गौतमोऽपि तथाऽहल्यां अन्येऽपि मुनयोऽमलाः । अस्याध्यायस्य पठनात् स्वस्त्रियमथाप्नुवन् ॥ ६८
तस्मात् सर्वप्रयत्नेन कल्याणाध्यायमुत्तमम् । शृणुयुश्च पठेयुर्वा स्वस्वाभीष्टस्य सिद्धये ॥ ६९

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे त्रयोविंशोऽध्यायः ॥

---

॥ अथ चतुर्विंशोऽध्यायः ॥

ब्रह्मादिभिः श्री शिवं प्रति वायुप्रेषणम् ॥

सूतः —

ततः प्रविश्य भवनं नवरत्नोपशोभितम् । अलंचकार भगवान् आसनं हैममीश्वरः ॥ १
नवोढया हिमाद्रीन्द्र सुतया स तयोमया । तदानीं सा शिवाभिख्याख्याभिता योषितांमतम् ॥ २
व्रीडानम्राननाऽत्यर्थं नानाननगणाधिपैः । आलोक्य मुमुदे चेष्टां आदृतां मातृभिस्तथा ॥ ३

जह्नौ व्रीडां नवोढा सा कालेनैव शनैश्शनैः । एवं गते बहुतिथे काले शूलिनि खेलति ॥ ४
उद्यानेषु विचित्रेषु तत्रतत्र तया सह । जगत्स्वपि च सर्वत्र स्त्रीपुम्भावो व्यजृम्भत ॥ ५
सकामोऽपि सकामस्सन् रत्या पत्न्या जगत्त्रयम् । पञ्चानां पुष्पबाणानां वशासिन्ये प्रयत्नतः ॥ ६
अथ देवा हरिमुखाः ऋषयश्च तपोधनाः । उत्सवान्ते विसृष्टास्ते स्वं स्वं लोकं त्रिशूलिना ॥ ७
अथाक्तनुवन्तरसंभूय शूरपद्मभयार्दिता । महामेरुगुहां प्राप्य मन्त्रयामासुरञ्जसा ॥ ८
वृत्रारिरथ भर्त्तारं गिरोमायाश्च साञ्जलिः । उवाच भगवन्विष्णो पितामह जगच्चिरम् ॥ ९
शूरपद्महते शम्भुः सुब्रह्मण्ये स्वमात्मजम् । रक्षिष्येऽस्य समुत्पाद्य प्रतिज्ञामकरोदिति ॥ १०
सत्यस्य सत्यवाचोऽस्य प्रतिज्ञा विलम्बते । अस्माकं किंकरोतीशः दुरदृष्टैर्विजृम्भितम् ॥ ११
अहो किमिति हा कष्टं भाग्यवन्तश्च तेऽसुराः । शिथिलकारणा दैत्याः तमेवमनसागताः ॥ १२
एवमेव विशामीशाः चिखिदुर्मुनयश्च ते । ततो ब्रह्माऽब्रवीत् वाक्यं संप्रेक्ष्य विबुधांस्तदा ॥ १३
ईशोऽस्माभिरुपास्यो हि पुनरेव दयानिधिः । असुराश्च सुराश्चान्ये जगत्स्थावरजङ्गमम् ॥ १४
जगन्मयस्य देवस्य तूष्ण्या एव विचारणे । अथवा किं करोतीति विचार्यौ जगतांपतिः ॥ १५
अन्तःपुरे तदा देव्या हैमवत्या सुरोत्तमाः । कोवाऽद्य प्रेषणीयस्स्यात् समीपं त्रिपुरद्विषः ॥ १६
विचार्य तेन वृत्तान्तं बालचन्द्रशिखामणेः । ततः परन्तु यच्छक्यं तत्कर्तव्यं प्रयत्नतः ॥ १७
साध्वमन्यत गोविन्दो विधिवाक्यं दिवस्पतिः । देवाश्च सर्वे दिक्पालाः बहुमन्यन्त सादरम् ॥ १८
अनुमत्या सुरेन्द्राणां विष्णोश्च बलवैरिणः । परमेष्ठी समाहूय पवनं गगनोद्भवम् ॥ १९
संभाष्य वाचा बहुधा सर्वेषामेव सन्निधौ । इदमाह महाबाहुः बहुमानेन वाक्पतिः ॥ २०
ब्रह्मा — वायो वयममीसर्थं कायमात्रावशेषिताः । हृतस्वा हृतलोकास्स्मो बहुकालं महासुरैः ॥ २१
निस्तारं न पश्यामस्तेषां स्कन्दादृते किल । स्कन्दश्च शूलिनोत्पाद्यः शर्वाण्यामूर्ध्वरेतसा ॥ २२
पञ्चकृत्यपरेणैव प्रपञ्चस्यास्य हरत्सराः । चिरमीशेन वै देव्या दिव्यान्तःपुरवासिना ॥ २३
क्रियते किमिति प्रेत्य जानीहि त्वं सदागते । प्राणोऽसि प्राणिनां लोके देवस्यापि वपुर्महत् ॥ २४
अमगोहि श्रुतो वेदे मत्वा तीर्थं कुरु प्रियम् । सुराणामपि सर्वेषां त्रैलोक्यस्यास्य मारुत ॥ २५
एवमस्तु तदाज्ञया त्वरमाणोऽब्रवीद्वचः । नाहमस्मि विधे शक्तः सोढमन्तःपुरे शिवम् ॥ २६
नापि वाग्वे पुरा मारो वचःश्रुत्वाऽमृताभासाम् । रत्या देवं समासाद्य भस्मासीद्विदितं न वा ॥ २७
प्रभञ्जनवचः श्रुत्वा पुनरूचे स्वयंभुवा । ब्रह्मा — उपदेशपरं शंभुं वटमूलनिवासिनम् ॥ २८
युयोज निजया पत्न्या तद्दिनस्तद्विनाशकृत् । अष्टमूर्तेर्भवाम्मूर्तिरिशा शिवस्तुपूजिता ॥ २९
सुरकार्ये महत्यस्मिन् त्वामेव वयमाश्रिताः । प्रत्याख्यानं न कर्तव्यं विलंबमपि माकुरु ॥ ३०
गच्छ सन्तु शिवा नित्यं पन्थानः पवमान भोः । अभ्यार्थयन् सुराश्चैवं विप्रा ब्रह्मर्षयोऽमलाः ॥ ३१
संप्रार्थितो मतिं चक्रे कथञ्चित्कथमाशुगः । आमंत्र्याभिप्रतस्थे तानचलं राजतं मरुत् ॥ ३२
धौसरोऽपि ततः पूर्वो दक्षिणः पश्चिमः क्षणात् । दक्षिणोऽपि च मन्दस्सन् पुरमीशितुराश्रितः ॥ ३३
गोपुरेण पुरं प्राप्य स्वामिनो वासमासदत् । दिव्यमाणिक्यखचितं दृष्टिप्रसरतस्करम् ॥ ३४
अनेकादित्यसंकाशं अभ्रंलिहगृहाद्भुतम् । अतीतकक्ष्यो गणपैर्द्वारस्थैर्नैरलक्षितः ॥ ३५
अन्तःपुराधिपस्यापि नन्दिनो निलयगतः । वायुस्वरूपवांस्तत्र तेनाबोधि समीरणः ॥ ३६
उक्तश्च स रुषा याहि साहसी त्वं प्रभञ्जन । विशासित्यं प्रभोस्तावत् किमर्थं सदनं वद ॥ ३७
निशान्तं चन्द्रचूडस्य मह्यं नोक्त्वाश्च चोरवत् । नन्दीश्वरवचनं श्रुत्वा निवृत्तगतिरप्रतः ॥ ३८

सद्गतिः प्रणम्याथ शैलादेः प्राञ्जलिःपुरः । आगतोऽस्मि देवकार्यार्थमाविष्टोऽस्मि सुरैर्मुहुः ॥ ३९
अपराधो महानस्ति क्षम्यतां क्षम्यतां त्वया । विज्ञाप्य प्रभवे यूयं प्रवेशयत मां प्रभो ॥ ४०
नन्दी प्रोवाच तं क्रुद्धो निर्यतस्व समीरण । समयो नैव तस्यैष माविनंर्शामनोजयत् ॥ ४१
खिन्नोऽथ वायुर्देवोक्त्या किंकरोमीति चिन्तयन् । इदं विबुधमुख्येषु निवेदिष्ये कथंचन ॥ ४२
तैरेवालोचितं यद्यदनुष्ठेयं च देवपैः । इति निश्चित्य मनसा मनोवेगं समास्थितः ॥ ४३
एतसानुं अणामाशु गुहामपि सुराश्रिताम् ॥ ४३½

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे चतुर्विंशोऽध्यायः ॥

---

॥ अथ पंचविंशोऽध्यायः ॥

देवैः श्री स्कन्दोत्पत्तिप्रार्थना ॥

सूतः —

तं विलोक्य सुराः सर्वे प्रहर्षमतुलं गताः । तमपृच्छन् स्थितं पार्श्वे प्रणम्यानतचेतसम् ॥ १
एहि वायो महाभाग महादेवस्सतांगतिः । करोति किं भवेदानीं पार्वत्या परमेश्वरः ॥ २
तेषामिति वचःश्रुत्वा प्रसन्नमनसां तदा । वायुराह च तान् प्रेक्ष्य सर्वान्निर्वेदमानसः ॥ ३

वायुः —

न मया विदितस्तत्र वृत्तान्तश्शिवयोस्सुराः । क्रुद्धेन नन्दिनादिष्टो नायं योऽवसरस्सुराः ॥ ४
इति श्रुत्वा निवृत्तोऽस्मि प्रभूणामेवमेवहि । अतः परममी यूयं समाचरत यद्धितम् ॥ ५
इति वायौ वदत्येते शिवाद्यब्रह्मकास्सुराः । सनारायणकास्सर्वे मन्त्रयित्वा चिरं पुनः ॥ ६
निर्गत्य मेरुकुञ्जात्ते प्रापुः कैलासमंजसा । आसेदुस्तत्र ते शंभोः पुण्यमायतनं महत् ॥ ७
तत्र देवाधिदेवस्य द्वारदेशं समाश्रिताः । सुचिरं प्रेक्षयन्ते कालमास्तामासुरसन्निताः ॥ ८
ततस्सर्वे सुराधीशाः नन्दिनं गणपुङ्गवम् । सेवितं गणपैस्सर्वैर्विलसद्गन्धर्वकिन्नरैः ॥ ९
अनिच्छया यद्द्वारमाश्रितं समये तदा । आलोक्य मुदमापुस्ते धनं लब्ध्वेव निर्धनाः ॥ १०
सन्तानकप्रसूनैस्तं समभ्यर्च्यामृतान्धसः । प्रदक्षिणनमस्कारैर्भक्तिभावसमन्विताः ॥ ११
सन्तोष्य विविधैस्स्तोत्रैरग्रे प्राञ्जलयोऽब्रुवन् । त्वया धन्यतरो लोके शालंकायनसंभव ॥ १२
शिलादो भगवान् साक्षात्त्रैलोक्यगुरुरीरितः । सुमहत्यो भवानद्य सुराणामसितद्युते ॥ १३
विज्ञाप्य देवदेवाय संप्राप्तानस्सुदुःखितान् । समुद्धर जगन्मग्नं शोकाख्ये च महार्णवे ॥ १४
श्रुत्वेति वैबुधं वाक्यं श्रीमान्नन्दी शिवप्रियः । प्रविश्य देवनिकटं ज्योतिःपुञ्जाञ्चितं मुदा ॥ १५
उपस्थाय तदा देवौ जगतां पितरौ कृती । ज्ञात्वेङ्गितेन तच्चित्तं चित्तजन्मरिपोः पुनः ॥ १६
व्यजिज्ञपत्सुरान् प्राप्तान् सेवार्थे विनयान्वितः । आज्ञातश्चस्सुरान् पश्चात् प्रापयद्देवतेशितुः ॥ १७
तत्रा देवोऽपि देवानां साकं देव्या जगत्प्रभुः । दिव्यसिंहासनारूढो दर्शनं प्रददौ स्मयन् ॥ १८
ते देवास्तमथालोक्य प्रीतिकण्ठकितवचः । अस्तुवन् स्तुतिभिः स्तुत्यमवशेनान्तरात्मना ॥ १९

देवाः —

ओं नमः प्रणतार्तिघ्न शिवायाशुभमोचक । कल्याणदाय भवते कामदायिन्नमोस्तु ते ॥ २०

कामघ्नाय पुरघ्नाय कलिप्रमथनाय ते । सोमसूर्याग्निनेत्राय नमस्सोमार्द्धधारिणे ॥ २१
अघघ्नाय मखघ्नाय सुखप्राप्त्यैकहेतवे । शंभवे शङ्करायास्तु सर्वेशाय त्रिशूलिने ॥ २२
यमघ्नाय विषघ्नाय शत्रुघ्नाय सतांसदा । अस्माकं प्रभवे तुभ्यं लोकानां प्रभवे नमः ॥ २३
आर्तिरार्तिघ्न सर्वेषामात्मनामसुरोद्भवा । सेनान्यमाशु संपाद्य नोदानोद्य दयालुना ॥ २४

सूतः —

प्रार्थितः प्रभुरत्यर्थं द्विषड्भिर्दयानिधिः । बभूव वदनैः षड्भिः अलंकृततनुस्तदा ॥ २५
आसीनामासने साङ्कमंबिकामंबिकापतिः । व्यलोकयदमेयात्मा साकांक्षं षड्भिराननैः ॥ २६
तत्क्षणान्नयनैः षड्भिः ललाटैरूर्ध्वरेतसः । निरगात्कोटिसूर्याभं तेजः कालाग्निसन्निभम् ॥ २७
योढा तेन जगत्सर्वं व्याप्तं सर्वं चराचरम् । अमरास्तेजसा तेन दुद्रुवुस्सर्वतो दिशः ॥ २८
तत्रतत्र समुद्वीक्ष्य तत्तेजस्तद्भवं सुराः । अतिभीता इवाभीता इतिसर्वं विलिलियिरे ॥ २९
अप्राप्तशरणाः दिक्षु प्राप्तास्ते सत्वरं पुनः । अनन्यशरणा भूयः शरणं प्रापुरीश्वरम् ॥ ३०
भीतिकंपितसर्वांगाः निश्वसन्तो मुहुर्मुहुः । शरणं शरणं देव शरणज्ञो भयाव्यय ॥ ३१
सर्वेश सर्वलोकेश सर्वशक्तिसमन्वित । सर्वार्थसाधनोपाय सर्वजीवदयापर ॥ ३२
रक्षास्मांस्तेजसाऽनेन ज्वलिदद्भ्येस्मान् क्षणात् । इति तत्प्रार्थनातुष्टः सांबस्सर्वेश्वरेश्वरः ॥ ३३
दयानिधिरतो भूयः तेजः तत्सात्स्वचेतसा । तत्तेजःस्मृतिमात्रेण शिवोः प्रापान्तिकं क्षणात् ॥ ३४
सूक्ष्मीभूतं पुनर्योढा स्थितं शान्तं तदञ्जसा । ततो देवः कृपामूर्तिः अमरानवलोक्य च ॥ ३५
वह्निवायू समाहूय वचनं चेदमब्रवीत् । युवामिदं महद्वह्ने वायो योढा स्थितं पुनः ॥ ३६
आमरीमापगामाशु संप्रापयत माचिरम् । अन्ते शरवणस्यैतत् आयास्य मम शिशुकैः ॥ ३७

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे पञ्चविंशोऽध्यायः ॥

---

॥ अथ षड्विंशोऽध्यायः ॥

श्री स्कन्दावतारः ॥

द्विजाः —

सुतैतदद्भुतं लोके शंभोरमिततेजसः । ऊर्ध्वरेतस्त्वमाश्चर्यं वेधाल्लालादिकाद्भुतम् ॥ १
तदेतदैश्वरं तेजः स्कंदतामाप तत्कथम् । कथयस्व महाभाग कथां नो विस्मयावहम् ॥ २
सर्वज्ञोऽसि भवानेव अमत्यस्मिन् चराचरे । त्वया न विदितं नैव रोमहर्षण विद्यते ॥ ३
कथयास्मभ्यमखिलं सुब्रह्मण्यसमुद्भवम् । इति संप्रार्थितोर्चिभिः व्यासशिष्यो महत्तमः ॥ ४
संप्रेक्ष्य कथयामास सर्वमेव यथातथम् । सूतः — शृण्वन्तु मुनयस्सर्वे सुब्रह्मण्यसमुद्भवम् ॥ ५
व्यासेन कथितं पूर्वं अस्माकं करुणाबलात् । तदिदं संप्रवक्ष्यामि श्रेयसामेकसाधनम् ॥ ६
ईशेन तौ समादिष्टौ वह्निवायू महाबलौ । तेजसो वहने तस्य शरारण्यान्तमंजसा ॥ ७
देवं प्रणम्य तौ भक्त्या ब्रूतां भीतौ कृतांजली । आवां क्व क्व भवत्तेजः सर्वलोकाभिभावि भोः ॥ ८
शक्तिश्च कीदृशी वोढुं आवयोरंबिकापते । श्रुत्वा तयोर्वचः शूली स्मयमानमुखांबुजः ॥ ९
प्रोवाच वचनं वह्ने वायो मच्छासनाद्बलम् । अस्तु तेजस्समुद्धारे भजेदेतच्चलाघवम् ॥ १०
देवाश्च वेधसासार्धं अनुयान्तुमुरारिणा । इति युक्त्वान्तरधात् ईशो परमयाऽव्यया ॥ ११

पावकः पारमेशं तत् शीतलं तेजमाज्वलत् । समूह्य पद्विधं मूर्ध्ना किंचिद्दूरं श्रमं गतः ॥ १२
पचमानोऽपि चान्योन्यं श्रमं प्राप्य पुनः पुनः । कथं कथंचिद्गङ्गाया अन्ते शरवणे न्यधात् ॥ १३
यत्नेन महता ताभ्यां निक्षिप्तं तत्तदद्वयम् । पद्मषण्डे पद्मनिभं पद्मकान्तारसन्निभम् ॥ १४
तेन पीतप्रभाजालं तेजसा तनुतां गता । मध्ये शरतटाकस्य पद्ममध्यं निनाय सा ॥ १५
सहस्रसूर्यप्रतिमं तत्र तच्चाभवन्महः । षड्वक्त्रं द्वादशभुजं द्विपादं सुमनोहरम् ॥ १६
वपुः पुपोष जगतां मङ्गलायुष्यवर्धनम् । कुमारं सुकुमाराणां निदर्शनमभूत् क्षणात् ॥ १७
पुष्पवृष्टिरभूत्तत्र दिव्यदुन्दुभिनिस्वनैः । ननृतुश्चाप्सरस्संघाः सर्वे लास्यकलाकुलाः ॥ १८
दिशः प्रसेदुर्मरुतो ववुश्च सुरभिमारुतम् । वृन्दारकगणेन्द्राणां मुखान्यतिशोभनम् ॥ १९
एवं ज्योतिस्सुरारस्य प्रशस्यं सुमनोहरम् । कुमाररूपमुद्वीक्ष्य कृतकृत्या ववन्दिरे ॥ २०
भेजिरे स्वस्वमैश्वर्यं यथापूर्वं च ये पुनः । मोक्ष्यामहेऽसुरेन्द्रेभ्यः पुनरानीय वैभवात् ॥ २१
सेव्यतामेति तत्सेवां सादरं मधुरस्वराः । रक्षार्थं परितो दिव्यो ववुरुग्रास्सुराः ॥ २२
एवं परिवारस्तेषु विष्णुर्दैत्यनिषूदनः । षट्कृत्तिकाः समाहूय स्तन्यमेनमपाययत् ॥ २३
प्रत्यहं कृत्तिकाः पूर्वं भवताऽप्यमत्सरम् । इति विष्णुवचः श्रुत्वा कृत्तिकाः पपुश्च ताः पुनः ॥ २४
तुल्ययोगं षडत्यक्तं प्रस्नुतस्य पयः स्तनैः । आगत्य प्रीतिसंयुक्ताः स्तन्यमेनमपाययन् ॥ २५
मातृपाल्यागतास्वासु समीपं सोऽपि शाम्भवः । तासामनुग्रहार्थाय षोढामूर्तिरभूत् क्षणात् ॥ २६
ताः वीक्ष्य सुकुमारं तं कुमारं पुष्करोपरि । प्रत्येकमेकमादाय प्रहृष्टास्तत्परमनाः ॥ २७
प्रस्नुतस्यश्च तास्सर्वा जिघ्रिरे मुखमाननैः । अपायस्ते स्तनौ बाला तासामास्यावलोककाः ॥ २८
क्रमशः पाययित्वा तान् कृत्तिकाः स्तन्यमात्मनः । पर्येषु शाययित्वा तु लालयन्त्यस्तदोषिरे ॥ २९
निद्राति स्म शनैः कश्चिज्जहासान्यो मुहुर्मुहुः । अरोदीदपरोऽत्यर्थं परः क्षोमातिमर्शितः ॥ ३०
अन्यस्य करोदारात् निद्रापश्यशो मुहुः । पादाङ्गुष्ठं स्वमास्येनाकर्ष्य निदधे वदन् ॥ ३१
अञ्जलिं स्वास्यदेशेऽन्यः करयोस्सन्निवेशयत् । पुनः क्षणान्तरेऽप्यन्यः चचारस्योरसा परः ॥ ३२
जानुभ्यां चैव हस्ताभ्यां किंचित् किंचिच्चचाल ह । पद्भ्यां द्वित्राणि चाप्यन्यो जगाम च पपात च ॥ ३३
अपरस्तु किंचिद्दूरं भ्रमिभ्यामास मेदिनीम् । मातुः करावलम्बेन महीमन्यो जगाम च ॥ ३४
उत्पतन्निपतन्नन्यो बभ्राम शिवसम्भवः । पुनः क्षणान्तरेणैव परो मुहुरुपाप्लवत् ॥ ३५
अथ पादद्वयेऽत्यर्थं एकपादगतिः परः । मल्लयमेषबभ्रान्यो मस्तकेनाप्रदर्शकम् ॥ ३६
परस्परं समाश्लिष्य बाहुयुद्धपरस्परौ । परब्रह्मैवमतनोत् बालभावमुपागतम् ॥ ३७
पौढादिभक्ष्यमिवतत् निविश क्रीडयारसम् । चेष्टितानि शिशूनां ताः विचित्राणि विलोकयन् ॥ ३८
विस्मयन्त्यः परां प्रीतिं तेषु सर्वेषु चक्रिरे । विष्णुमुख्याश्च देवास्ते दृष्ट्वा हृष्टतनूरुहाः ॥ ३९
चरित्राणि विचित्राणि कृतकृत्यास्तदाऽभवन् । ईशितैकोर्थितोऽस्माभिरधिकाः पञ्चाजज्ञिरे ॥ ४०
षड्भिरेतैस्समुद्दतु शक्त्यावै लोककण्टकाः ॥ ४०½

इति विविधमभीष्टं चिन्तयित्वा महेन्द्राः मनसि शिवकुमारान् षट् च कान्ताननान् तान् ।
सुखमधिकमवापुः मोक्षसाम्राज्यलक्ष्म्याः किमिव जगति न स्यात् सौख्यमीशे प्रसन्ने ॥ ४१½

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
संभवकाण्डे षड्विंशोऽध्यायः ।

॥ अथ सप्तविंशोऽध्यायः ॥

नववीराणां उत्पत्तिः ॥

सूतः —

यदा तेजांसि देवाक्षिसमुद्भूतानि वीक्ष्य वै । अमरा दुद्रुवुर्भीताः तत्र देव्यपि पार्वती ॥ १
अङ्कमैशं परित्यज्य संभ्रान्तहृदयाऽद्रवत् । प्रस्खलत्पादकमला निशान्ताभिमुखी मुहुः ॥ २
स्खलतोः पादयोर्वेगात् मञ्जीरखचितानि वै । रत्नानि मार्गपर्यन्ते नवापि व्यगलन् क्षणात् ॥ ३
तेजस्सु सूक्ष्मतनुषु निर्मयेषु सुरेषु च । देवी विदितवृत्तान्ता देवांस्तानशपत् क्रुधा ॥ ४
यस्माद्भयात् सुरा यूयं मामकाद्गर्भसंभवम् । नसहध्वेऽस्य तद्यूयमनपत्या भविष्यथ ॥ ५
शप्त्वैवं सहसा देवान् देवी हिमगिरीन्द्रजा । पुनरङ्कमुमाभर्तुः आससाद शुचिस्मिता ॥ ६
रत्नेषु विनिकीर्णेषु मार्गस्योभयपार्श्वयोः । संक्रान्तप्रतिमा गौरी दशधा विरराज सा ॥ ७
ता दृष्ट्वा प्रतिमाश्शंभुः रत्नेभ्यः सहसाऽऽह्वयत् । समाह्वयति देवेशे सर्वा रत्नपरिष्कृताः ॥ ८
तत्तद्रत्नाभदीप्ताङ्ग्यः तत्तद्रत्नसमाह्वयाः । उपतस्थुर्महादेवं देवीव हिमशैलजाम् ॥ ९
प्रेक्षन्त्येव महादेवं प्रेमनिर्भरमानसाः । मुखकमलपत्राक्षं सुनासं चारुकुण्डलम् ॥ १०
अकलङ्कशरच्चन्द्र कान्तमन्दस्मितोज्ज्वलम् । पिबन्तीनामभूद्गर्भो जठरेषु शिवाननम् ॥ ११
तासां मरीचिभिर्भानोः कालिकानां क्षणादहो । आलोक्य देवी तासां तद् भयमारक्तलोचना ॥ १२
गर्भैश्च जठरे भूयः मन्युप्रस्फुरिताधरा । मा प्रसूध्वं सगर्भाश्च चिरं भवत कन्यकाः ॥ १३
इति देव्यास्तच्छापानां रत्नानां योषितां मुहुः । स्वेदोद्गमो महानङ्गे मुक्तामणिरिवाथमौ ॥ १४
आसामासन् गणश्रेष्ठाः नियुत लक्षणान्वयः । धृता स्वेदोद्गमादस्मात् चर्मदस्ताः महौजसः ॥ १५
भगाक्षिहन्ता भगवान् तान् कुमारानकल्पयत् । गौर्याः शापात्तु वै गर्भे निवसन्ति महौजसः ॥ १६
ते शिवं जगतामीशं उपस्थिते निपात्य वै । शुश्रूषमाणास्ताश्चापि पार्वतीमीशदासनात् ॥ १७
महाभारेण गर्भस्य दुःखितास्तास्तु निश्वसाः । तत कालेन महता परिचर्यापराश्च च ॥ १८
तासु सर्वासु यत्नेन शङ्करेच प्रसेदुषि । परिचर्याप्रसन्नायां पार्वत्यां परमेश्वरः ॥ १९
तासामनुग्रहार्थं तु तामप्रार्थयदीश्वरः । सैव प्रसन्ना शर्वाणी प्रतिशापाच्चतास्सती ॥ २०
अनुग्रहात् । पर्माणां अवतारो जनुभूतये । उद्गतामिति तास्वेव नव जाताः महौजसः ॥ २१
धीरा वीरवराः लोके मातृणां वर्णपेशलाः । रक्तवल्लीति या रक्तरत्नजा वनितोत्तमा ॥ २२
तस्यामाविरभूद्वीरः वीरबाहुः प्रतापवान् । अन्या तरलवल्लीति मुक्तामणिसमुद्भवा ॥ २३
सर्ववीरवरः श्रीमान् तत्पुत्रो वीरकेसरी । पुष्यरागसमुद्भूता पीतवल्लीति या स्मृता ॥ २४
तस्यां वीरमहेन्द्रोऽभूत् सर्ववीरवराग्रणीः । गोमेदकमणेर्जाता गोमेदतिलका स्मृता ॥ २५
तत्सुतोऽभूत् जगत्ख्यातः साक्षाद्वीरमहेश्वरः । वैडूर्यसंभवायास्तु पुत्रो वीरपुरन्दरः ॥ २६
याऽभूद्वज्रमणेर्वल्ली तत्सुतो वीरराक्षसः । श्रीमन्मरकताज्जाता वल्ली विबुधैः स्मृता ॥ २७
तत्सुतो वीरमार्ताण्डः शत्रुपक्ष प्रतापनः । प्रवाळवल्ली या देवी तस्यां वीरान्तकः सुतः ॥ २८
इन्द्रनीलमणेर्याऽभूत् नीलवल्लीतिसंज्ञया । वीरधीरस्सुतस्तस्याः ते वै नवमहौजसः ॥ २९
सर्वे ते दानवैस्तासां अभिमार्गविनिर्गता । भवं भवानीसहितं प्रणेमुः प्रणतार्तिहम् ॥ ३०

पार्श्वं समाश्रयन् पित्रोः विनयेन महौजसः ॥ २० ॥

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे सप्तविंशोऽध्यायः ॥

---

॥ अथ अष्टाविंशोऽध्यायः ॥

कुमारेण सह श्रीपार्वतीपरमेश्वराभ्यां कैलासगमनम् ॥

सूतः —

तानाह सर्वान् सर्वज्ञः सर्वेशो जगतांपतिः । भविष्यति हि हे वत्सा युष्माकं मधुरव्ययः ॥ १

पार्वतेयो महाबाहुरमरारिनिषूदनः । अनुशास्यैवमेतेषां कृत्वा नामानि शङ्करः ॥ २

उत्सुकोऽभूदुमादेव्याः पुत्रवक्त्रांबुजेक्षणे । आमाप्य भूधराधीशपुत्र्यासह महेश्वरः ॥ ३

प्रतस्थे वृषमारुह्य प्रणतार्तिहरश्शिवः । पुत्रालोकनसञ्जात कौतूहलहृतान्तरः ॥ ४

प्रास्थानिको महानादः प्रमथैस्समताड्यत । पटहा भेर्यश्शङ्खाः काहल्यः कलनिस्वनाः ॥ ५

नियंत्रुर्गणपश्रेष्ठा नानाशस्त्रास्त्रपाणयः । स्यन्दनागतुरङ्गेषु पत्तयश्च महाबलाः ॥ ६

सहस्राणि सहस्राणां रुद्रकन्या मनोरमाः । तथैवाप्सरसां संघा अनुजग्मे महेशितुः ॥ ७

सूर्याचन्द्रमसौ शंभोरार्यपाश्च पृथक् पृथक् । श्वेतच्छत्रे चमरतुः पार्श्वयोर्भक्तिभावितौ ॥ ८

हालास्यसुन्दरोऽस्यर्थमन्तरंगोऽन्तिकंगतः । कुमारनिकटस्थायी मुरारिप्रमुखास्सुराः ॥ ९

निर्वाणध्वनिसंहृष्टा भक्त्या प्रतिययुः प्रभोः । प्राप क्षणेन भगवान् देवैस्सार्धं मुदा ॥ १०

तदानीमेव पक्षेषु पित्रोरीक्षणतत्परः । षोढोपविष्टस्ताश्चैनं परिवेष्ट्य च कृत्तिकाः ॥ ११

भवोऽपि सहसा व्योम्नि भवान्यासह संस्थितः । मरुद्रूपेणैषोऽद्रेक्ष मातृभिस्सह पुत्रकम् ॥ १२

मेने निरीक्ष्य तद्वक्त्रं सफलं लोचनत्रयम् । आह स सादरं देवी आर्ये पश्य मनोरमम् ॥ १३

आत्मजं षड्भुवासीनं सरोजेष्वासनेष्वमुम् । अनेन वीरसूस्त्वं हि जगतामार्तिहारिणा ॥ १४

इति वादिनि गौरीशे वृषादुत्तीर्य सम्भ्रमात् । आलिङ्ग्य देवी तनेतानेकधा मूर्ध्निजिघ्रति ॥ १५

गाढं स्तनान्तरे कृत्वा चकारैकं षडप्यमून् । द्विपादं द्वादशभुजं षड्वक्त्रं प्रियवीक्षणम् ॥ १६

ददौ स्तन्यं स्नुतपयाः स्वर्णपात्रेण शोभनम् । बालोऽपि लीलयाद्रस्यः पपौ षड्भिः पयोमुखैः ॥ १७

विद्यामयं ज्ञानमयं पावनं मातुरात्मनः । आलोकयन् मुखं तस्याः अपाङ्गैरंबुजप्रभैः ॥ १८

पिबत्यस्मिन् पयोमातुः प्रस्नुता बिन्दवस्ततः । पतितान् सलिले पीत्वा शफरास्तान्मुनेस्सुताः ॥ १९

शापात्पराशरस्यासन् मात्स्यभावमुपागताः । पीतमात्रेण तेषां तत् पूर्वरूपत्वमागतम् ॥ २०

अथ देवी कुमारेण शिवांके वृषभोपरि । प्राप दुन्दुभिनिर्घोषैर्जयशब्दादिमङ्गलैः ॥ २१

पुष्पवृष्टिरभूत्तत्र शिवोर्मूर्ध्नि दिविच्युता । ननृतुर्मुनयस्सिद्धा दण्डहस्ता जटाधराः ॥ २२

आरोप्य वृषमीशोऽपि सकुमारां हिमाद्रिजाम् । आलोक्य कृत्तिकाः आदात् प्रीतो वाचमुमापतिः ॥ २३

युष्माभिर्वर्धितो बालः स्तन्येन पयसौ चिरम् । युष्माकं संज्ञयालोके कार्त्तिकेयो भवत्वयम् ॥ २४

अद्य प्रभृति लोकेऽस्मिन् दिने युष्मासु मानवाः । प्रीतयेऽस्य चरिष्यन्ति व्रतं चिरकृतादराः ॥ २५

तेषामिष्टानि पुत्रोऽयं सद्यो दास्यत्यसंशयम् । पुत्रार्थी लभते पुत्रान् श्रियं श्रीकाम आप्नुयात् ॥ २६

धनार्थी धनंभूरि पशुकामः पशून् बहून् । विद्यार्थी लभते विद्यां निष्कामो मोक्षमाप्नुयात् ॥ २७

कुमारसंभवाध्यायं यः शृणोति दृढव्रतः । वन्ध्यापि लभते पुत्रं कुमारसदृशं ध्रुवम् ॥ २८

सूतः — वरमिति करुणाब्धिः कृत्तिकाभ्यो वितीर्य स्वयमपि सहदेव्या पुत्रमादाय दोर्भ्याम् ।
पुनरपि भवनं स्वं प्राप भूतेन्द्रसंघैर्हरिविधिमुखयोगिवृन्दसंभाविताङ्घ्रिः ॥ २९

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे अष्टाविंशोऽध्यायः ॥

---

॥ अथ एकोनत्रिंशोऽध्यायः ॥

श्री स्कन्दस्य बाललीलाः ॥

सूतः — अथ कश्चिदेव शिवयोरविवेकमयप्रकाल मुपलालयतोः ।
शिशुना विनोदपरिशीलरसैर्हरसूनुरंगमभिमण्ड्य मुदा ॥ १
पदयोस्सहंसकयुगेन पुनर्मणिनूपुरद्वयकलध्वनकैः ।
कटिसूत्रकिङ्किणिमणिक्वणितैर्करसाश्रहारमनुजातगुणः ॥ २
बहुनिष्ककाञ्चनमणिप्रवरैरधिकण्ठमद्भुतविभूषणकैः ।
उरसि भुजान्तरमपुष्यदभः पितृमातृ पीतमिव तारकितम् ॥ ३
मुखपङ्क्तयः श्रवणमण्डनकम्रमणिकुण्डलद्युति विकासभृतः ।
धृतपल्लवापि नवविद्रुमलसत्स्थललाटरसाग्र शशिमण्डलकाः ॥ ४
सुकिरीट पद्मकमणि रश्मिलसत्कुसुमोत्तमामूर्धततयोचितकाः ।
मधुरन्धृतं सुविकासिरोमशिसानुसन्ततिसमानरुचः ॥ ५
इति सन्निवेशममितं वचसां मनसामगोचरमनन्तसुखम् ।
शिशुमायमेत्य समलंकृतिमत्सकलं चकार शिवयोस्सविधम् ॥ ६
अथ षण्मुखो जगति खेलधिया पितरौ प्रणम्य परिगम्य मुहुः ।
निरगाद्विशुद्धस्तत एव जगज्जनानां मनांसि भृशमुत्कलयति ॥ ७
प्रथमं नृप पशुपतेः पुरतो निवसन्तमस्य ककुद्मकरैः ।
गलकण्डुकाममभिविधाय तदा व्यलुठत्क्षणं प्रतिपदीव ततः ॥ ८
गणपान्विलोक्य बहुधा विहसन्प्रहसन्गणैस्सह मनोज्ञवपुः ।
निकटं समेत्य मुहुरङ्गुलिभिः स्वमुखं च वक्त्रमधिकं विदधे ॥ ९
सहसा प्रविश्य सद्मैकमतो निरगात्सनिष्कुटपथेन पुनः ।
गणपैरदृष्टगतिरन्यगृहं न यथा विवेश स त एव बहिः ॥ १०
गगनाङ्गनं सुमनसां महितं सहसा प्रविश्य तरुषण्डयुतम् ।
अधिरुह्य कञ्चिदपि भूमिरुहं फलजातमस्य सन्निधाय पुनः ॥ ११
परमेत्य सूनमपचित्य ततः परमेत्य वृक्षमपरं च ततः ।
धृतपक्वमसृणजातरतिः फलभक्षणाहितसुखप्रकरः ॥ १२
ततएव भौममपि लोकमितस्सरितो विलोड्य विमलजातरतिः ।
पयसां निधीनपि च सततानविभिद्य पादकमलेन शिशुः ॥ १३

सहसैकतामभिनिधाय मुदा मकरास्तिमीनपि मकर्दताम् ।
कुलपर्वतानपि च कुन्तकरस्ततया विमिच सह केसरिभि ॥ १४
विललास पादयुगलेन तरुसमिरेगिरि गुरुमनन्तगुणा ।
क्रमशो लतादिषु विहृत्य गणैर्भुजगालयेषु मणिभूमिषुस ॥ १५
वियदुत्पपात शशिभूपसुतो घनदन्तिदन्तुरमभारति ।
[illegible] कार्मुकयुग घनतः प्रतिगृह्य बाहुयुगलेन एती ॥ १६
उडुवृन्द पिण्डशत कोटिशतैर्निरपातयत्त्रिदशकोटिमणीन् ।
सवितुश्च सप्तविशदापघनान् हरितो हरीनपनियाहावली ॥ १७
अधिरुह्य लोकविपदार्तिहरो बहुधागतीरामयरत्नया ।
शशिनो एव पुनरपास्य च तान् बहुलासुतो विधुयलोकनुत ॥ १८
विचचार दिक्ष्वपि दृशास्वदनप्सरस्परसिद्धकीयचरस ।
सतनव्यपास्य गजमैन्द्रमत शिखिनोयमस्यनिऋते पवसाम् ।
अधिपस्य सोममकलोश्च गजान् गमयाश्चकार विविधै कमणै ॥ १९
ज्योतिश्चक्र ध्रुवकरगात वातरश्मिमण्डल छित्वा बाल प्रथितमहिमास्थानुगाना करामै ।
दिक्षयशानु स्वयमपि दधत्पारयन्व्योमगङ्गा नक्रान् यथ्वा व्यसृजदभिसभाश्वपाथ पुनस्तान् ॥ २०
पश्चादूर्ध्वं महरपि जनस्तत्तपस्सत्यलोक गत्वा गत्वा तदधि वसतीन्निम्बसाध्यामरेन्द्रान् ।
लीलालोलो नवव कल्पवेधसो भीमभूतान् लोकालोक गिरिमपि मुदा प्राप चिक्रीड बाल ॥ २१
सत्ये साक्षाच्छतधृतिमसौ चक्रपङ्क्ति करामै स्पृष्ट्वा स्पृष्ट्वातनुरसि सितान् ब्रह्मतन्त्रम् विकीर्णान् ।
प्राप्यभग्नितुरसि शिखया चान्यथा लोकमर्ता वैकुण्ठ एव मुररिपुपद प्राप सर्वाधिनाथ ॥ २२
तत्र सविधे मठकमद्भुतकलग्न तच्चयनशपमहिमस्य सुरशस्रो ।
पुरुमयमारचयति [illegible] शिखिजन्मा यत्र फणयो महरतोश्च सुमुदे च ॥ २३
एकाकी सन् कचिदपि युवा मोहयन्वामनेत्रा ग्रामाचारो बहुरपि महा वामलीलाविनोद ।
वैयाकीनामपि च भुवनान्याश्रय तत्र भूय स्वामी क्रीडामहह विदधे सूरि संमाधिताग्नि ॥ २४
अटवीमुपेत्य महतीमिह मेपसिंहमम्यो यत्र करयुगेन तदीयकण्ठम् ।
आदाय युद्धमयमाचरत्कालाली कासारमध्यमपि कारयति स पुङ्गम ॥ २५
भूयाऽर्भक पुरतो पुरुहूनय च मानेव लोकवनिता घटया गृहीत ।
तत्रापि लोलदव सोऽङ्गमलश्चकार ग्रहापि तच्छुति शिर स्थिरमेव बालाम् ॥ २६
वृद्ध कचित्पलितमौलिरतीव मन्द दण्डिश्रुतिः करतलाद्दलयपि मुष्टि ।
लोकाननुग्रहपरो विचचार बाल लेशानुमाग भव एव सता मुधन्धु ॥ २७
नरेन्द्रसुतगत कचित्समधिरुह्य सेप विभुः विचित्रमणिकिङ्किणी विनदकण्ठमिष्टार्यद ।
चिरेल हरसमय बहुविधैक धारागति सदम्बमहिमाधिक सकलदेव चूडामणि ॥ २८
मृगेन्द्रमपि कुञ्चि कर नखाग्र दन्तावलिम् सिताग्र पुरुकेसर महितबालधी पेशलम् ।
उदग्रमधिरुह्य त भ्रमयति स गत्वा गतै विक्ष्वपि च भूतले गिरिसुतात्म भूरन्धुलम् ॥ २९

विहगमपतिं क्वचित् क्वचिदपीह हर्म्यं रुरुं मृगं च हरिणं क्वचिच्छरभराजशार्दूलकौ ।
पयांसि च समुद्रयन् समधिगम्य मार्गं भ्रमन् निकाममधिकं मज्जन् मनसुधाधिचन्द्रो वशी ॥ ३०

चचार वापीषु यदृच्छयैक तटाककोटीषु महेशपुत्रः ।
नदीषु सर्वासु विहारशीलो मुदं मनस्यात्मगणस्य कुर्वन् ॥ ३१

जगौ वीणापाणिः क्वचिदपि चिरं सुस्वरमयं तरूनार्द्रीनाराच्छीरपतत्सोनेव कलयन् ।
मृगानप्यामीलन्नयनयुगलान्वीत तृणकान् घनाक्रान्तं व्योम व्यरचयदशेषानपि शमन ॥ ३२

क्वचिद्धस्ते वेणुं स ह्यपि समुपाश्राय करयोः विमृण्वन्तद्रन्ध्रं पिदधदपि वेणुगुलिमुखैः ।
मनस्सर्वेषयोत्थ मकसिजवरा लोकवनिता अनस्यात्मस्यान प्रकटमधमद्ब्रह्मपरमम् ॥ ३३

यज्ञाक्षराभ्यासपराद्विजेन्द्रपुत्रा स्वयं बालवपुस्महेभिः ।
अपीपठद्राविडमागधमप्यत् कर्नाटकाद्यमरदेवभाषे ॥ ३४

क्वचिदेनमद्युपेशषु यणिजगॉण्यसौ पृच्छत्सवड्समेहात्मा ।
वेदानधीते सकलातिशायी विधागनोजाच्युत गीतकीर्ति ॥ ३५

इति हरविपिनेन्द्र ज्योतिषोद्भूतमूर्तिरेक्षिरपि परमण्डान्दण्डकोटीषु चैयम् ।
चिरमपि ■ विहृत्य सानुगैस्तत्रमेवदिशासरमपि च सख्या श्रीगणेशस्य तिष्ठन् ॥ ३६

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
सम्भवकाण्डे एकोनत्रिंशोऽध्यायः ॥

---

॥ अथ त्रिंशोऽध्यायः ॥

श्री स्कन्दस्य इन्द्रादिभिः युद्धम् ॥

अथ तत्र स्थिते तस्मिन् हरसूनौ जगत्पतौ । रक्षसानी विहरति त्रिदशा विस्मयं गताः ॥ १
ते मेनिरे भूधराणां महतामसतीवसाम् । भीताश्च क्षुभाबुद्धिना किंभवेज्जगतीतले ॥ २
विरेकादशदेवाला रुद्राणां द्वादशा मनाम् । गणावसूना मरुता ससहाश्विनौ तथा ॥ ३
सहायाप्यतिभिस्सर्वे त्रिलोकसमुपागमन् । व्यजिज्ञिपथहृदये क्रीडा बालस्य शूलिनः ॥ ४
तदाशेऽपहृतज्ञानास्सुब्रह्मण्यस्य मायया । अज्ञात्वा तेन सम्भूय सुरारिमिदमब्रुवन् ॥ ५

देवाः —

मघवन् कस्य पुत्रोऽयं बालः कश्चिज्जगत्त्रयम् । विलोलयामास चिरं सरः कलमयन्निति ॥ ६
शिखाभिन्नाक्षतेनैव बाणेन दुरासदम् । पक्वं सागरा नीता द्वीपास्सप्त विमर्दिताः ॥ ७
विक्षिता दिग्गजा दूरं भ्रामयित्वा मुहुर्मुहुः । इत्थं विप्लुते लोके यास्थितिर्वदनोर्हरे ॥ ८
श्रुत्वेति मघवास्तस्य दृष्ट्वा विक्रममुत्तमम् । मायया तमविज्ञाय मनस्येवमचिन्तयत् ॥ ९
अयं को वा न जानीमो बालोऽत्यद्भुतविक्रमः । अनेन लीलया सर्वं जगत्प्रजति भस्मसात् ॥ १०
विद्याप्यास्य प्रतीकारं ब्रह्मणे तनुमो वयम् । आलोच्य विबुधैरेव मारुह्य करिपुङ्गवम् ॥ ११
देवैर्गच्छन् सहस्राक्षो मेरुशृङ्गे दिगीश्वरैः । शृङ्गाणि मेरोरेकैकं तुङ्गानि करलीलया ॥ १२
विक्षिपन्तं समुपाश्रय कुमारपथि शूलिनः । हन्तुकामोऽमरैः रसाक्ष वधहर्तुं प्रचक्रमे ॥ १३
सोऽपि लीलापरोऽप्येन देवैः कृष्णस्तमात्मने । प्रहर्तुमुपचक्राम प्रभुस्सर्वेश सम्भव ॥ १४

शरादेवैः सहस्राश्च प्रमुखे धनुषो मुहुः । पतितास्तत्संप्रति कुन्देन्दीवरपुष्पवृष्टयः ॥ १५
तस्योपरि कुमारस्य पादयोश्च विशेषतः । तूष्णीमास्ते कुमारोऽपि स्मयमानमुखांबुजः ॥ १६
पुनश्च वृत्रहा क्रुद्धः स्थितश्चैरावते मूर्धनि । प्राहिणोद्व्यग्रमते तस्मै परस्मै वज्रमुज्ज्वलम् ॥ १७
तद्वज्रं प्रतिवज्रेण संघट्टितमिव क्षणात् । स्खलद्वह्निकणं शीर्णं धूलिपुञ्जमिवाभवत् ॥ १८
ततोऽधिकं तु संक्रुद्धो वज्रघातेन वज्रिणे । शरं धनुषि सन्धाय मुमोचैरावतोपरि ॥ १९
तेन बाणेन निहतो मस्तके गजपुङ्गवः । पपातव्यसुरत्यन्तं वज्राहत इवाचलः ॥ २०
मरुत्वान् पुनरुत्प्लुत्य अन्यमादाय कार्मुकम् । मुमोच शरवर्षाणि वर्षाणीव बलाहकः ॥ २१
कुमारोऽपि महाबाहुरेकं सन्धाय कार्मुके । शरं तेनाशुगानामेवग्राह इवाद्भुतम् ॥ २२
चकर्ष कार्मुकं चास्य तदद्भुतमिवाभवत् । वज्री पुनर्महाद्भुतशक्तिं तस्मै शितां भृशम् ॥ २३
मुमोच सहसा तस्मिन् ज्वलन्तीं ककुभोदरा । पतिता सा कुमारेऽस्मिन् कमलस्पर्शतां दधौ ॥ २४
यावन्मुञ्चति वृत्रारिः पुनश्शरमथापरम् । तावदेकेन मकुटं शरेणेन्द्रस्य पातयत् ॥ २५
ध्वजं चैकेन शितिजलव्यालानिलसमुद्भयम् । पुनरेकेन कवचं माणिक्यनवरत्नमुज्ज्वलम् ॥ २६
निचखानोरसि शरं तेन मूर्छामवाप सः । पतितेऽत्र बलारातौ विबुधाः कोपमूर्छिताः ॥ २७
परिवार्य शिशुं शंभोः शस्त्रास्त्रवृष्टिभिः । निवार्य वृष्टिं महतीं कुमारश्शरसंभवः ॥ २८
शरैरेव तदा तीक्ष्णैस्तान्प्रत्येकं जघान ह । यमस्योपरि पञ्चाशत्त्रिंशतं वारि पाशिने ॥ २९
वायवेऽष्टौ धनेशायापि सोमायैकं पृथक् पृथक् । शरवृन्दं समुद्धीय पातयामास लीलया ॥ ३०
दिक्पालानपरानेवमनेकानेकमेकतः । क्षणेन पातयामास शरेण शरसंभवः ॥ ३१
एवमवशिष्टा विबुधा दुद्रुवुस्सर्वतो दिशम् । एतत्सर्वमशेषेण देवर्षिर्नारदस्तदा ॥ ३२
विलोक्य वीर्यं वीरस्य हृष्टरोमा मुहुर्मुहुः । बृहस्पतिं समभ्येत्य त्वरयोवाच गीष्पतिम् ॥ ३३

नारदः —

जीवार्थं जीवमृतोऽसि पुरोधास्त्रिदिवौकसाम् । ते सर्वे शिशुनैकेन मृधे विनिहतास्सुराः ॥ ३४
इदानीं पठितं शेषं तवाचार्यगुरोश्चिरात् । तदुपश्रुत्य धिषणो वाक्यं नारदभाषितम् ॥ ३५
शास्त्रा प्रशासिना देवैर्दिवाशये यदनुष्ठितम् । स्कन्दाय जगतां भर्त्रे महासेनाय वह्निजे ॥ ३६
गुहान्तराद्विनिर्गत्य गुहं शरणमाप सः । आसीनं शिखरे रम्ये स्वाधीनं जगतां प्रभुम् ॥ ३७
समेत्यासौ नमस्कृत्य प्रणम्य शिरसा मुहुः । बृहस्पतिः - ओं नमोऽनन्तमहिमापार सरितां पते ॥ ३८
स्कन्दाय दन्तिवक्त्रस्य सोदराय दयावते । षड्वक्त्रायैकवक्त्राय भवत्साक्षात्पिनाकिने ॥ ३९
द्विषड्भुजाय सौम्याय स्वार्चकेष्टप्रदायिने । उमाशङ्करयोरेक प्रेमभाजनमूर्तये ॥ ४०
अनन्तमूर्तये तुभ्यमनन्ताद्भुतहेतवे । अनन्तज्योतिषे तुभ्यमनन्ताय नमोनमः ॥ ४१
न विदुर्यद्बलं वेदा मायया यस्य सर्वकाः । गुहं तमहमीशानप्रभुं त्वां प्रणमाम्यहम् ॥ ४२
जगत्यवनमुद्दिश्य द्विधाभूतेशमाश्रये । यन्मायापहृतज्ञाना विबुधा मदुपागताः ॥ ४३
अचर्यमासाद्य वैरेण शिक्षितास्तं नमाम्यहम् । स्तुवन्तमिति संप्रेक्ष्य नमन्तं पादयोर्मुहुः ॥ ४४
अनुजमाह भगवान्कार्तिकेयो बृहस्पतिम् । उवाच वरयाभीष्टं मनसा यदभीप्सितम् ॥ ४५
आदरेण गुरोश्चैवः स्मयमानमुखांबुजः । श्रुत्वैवं वचनं शंभुसूनोराङ्गिरसो गुरुः ॥ ४६
प्रणम्याञ्जलिमाधाय वव्रे वरमनुत्तमम् । भगवन्देव सर्वज्ञ सुब्रह्मण्य दयानिधे ॥ ४७

त्वन्मायामोहिता देवास्त्वयायोद्धुं समुद्यताः । शिक्षिता भवतातेन यथादोषं सुरेश्वर ॥ ४८
छिन्ना भिन्नाश्च विद्धाश्च हताश्चैव दुद्रुवुः । भयानाचरितं सर्वं सोढव्यं भवताविभो ॥ ४९
यथापूर्वमधन्त्वेते कृपया सासवस्सुराः । प्रत्यासक्तानिसन्त्वीश तेषामङ्गानि सर्वशः ॥ ५०
कुर्वनुग्रह एषाऽस्मद्रक्षणेमतिमीश्वर । सर्वदापाहि सर्वेश प्रसन्नोभवसर्वदा ॥ ५१

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे त्रिंशोऽध्यायः ॥

---

॥ अथ एकत्रिंशोऽध्यायः ॥

श्री स्कन्दस्य विश्वरूप दर्शनम् ॥

सूतः —

इत्येवं प्रार्थितः स्कन्दः सुरलोकपुरोधसा । प्रसन्नः प्रार्थनामस्य प्रददौ परया मुदा ॥ १
ततः सर्वे समुत्तस्थुः सुप्तोत्थितसधर्मिणः । प्रणेमुश्च ततः सर्वे देवा विष्णुपुरोगमाः ॥ २
तेषां देवोऽपि दयया मायामज्ञानरूपिणीम् । व्यपोह्य करुणामूर्तिः ददौ भक्तिं स्वपादयोः ॥ ३
प्रोवाच च पुनर्देवान् वेत्थ मा शिशुमञ्जसा । पश्यताद्याशु मद्रूपं परं यत् पारमेश्वरम् ॥ ४
दिव्यं ददामि वश्चक्षुः मद्रूपालोकनक्षमम् । इत्युक्त्वाऽदर्शयत्तेभ्यो विश्वरूपं जगद्गुरुः ॥ ५
सप्तपातालपादं तत् सप्तद्वीपोर्विजंघकम् । सप्तार्णवपरीधानं दिग्बाहु व्योमनाभितत् ॥ ६
द्युशिरश्चन्द्रसूर्याग्नि नयनत्रयपेशलम् । परं जलदकेशाढ्यं ताराकुसुमगुम्फितम् ॥ ७
शिवश्चात्मा मतिर्गौरी वामपार्श्वे जनार्दनः । दक्षिणे भगवान् ब्रह्मा भारती वैदिकीचवाक् ॥ ८
लक्ष्मीर्लक्ष्मीश्च पवनः प्राणादि दश भेदभाक् । मन्युः कालाग्निरुद्रोऽग्निः आहरः समुदाहृतः ॥ ९
अनन्तादि महानागाः पादनूपुरहंसकाः । रोमाण्योषधयो भूरि सूक्ष्माण्डान्यण्डकोटयः ॥ १०
तत्कोटिसूर्यसङ्काशं कोटिशीतांशुशीतलम् । कोटिकालाग्नितेजस्कं परमं रूपमद्भुतम् ॥ ११
अदर्शयदमेयात्मा ब्रह्मण्यो हरसम्भवः । तेजसा तस्य देवानां चक्षूंष्यपिहतान्यहो ॥ १२
विनिद्रानिमिषाण्येव विषयाणामिषेदिरे । किंपुनः तत्प्रकाशेऽस्मिन् महतोऽपि महत्तरे ॥ १३
मनांसि देवसंघानां क्षणं ज्योतिषि लिल्यिरे । यद पञ्चेन्द्रियैरीशो परेऽस्मिन् परमेश्वरे ॥ १४
लब्धसंज्ञाः क्षणेनैव देवा विष्णुपुरोगमाः । चक्षूंषि प्रार्थयन् देवे द्रष्टुं तं बाह्यचक्षुषा ॥ १५
प्रणम्याञ्जलिहस्तास्ते सुब्रह्मण्यमरिन्दमम् । देवाः – देवदेव जगन्नाथ शङ्करे सकलेश्वर ॥ १६
अद्भुतं ते परं रूपं वीक्षितुं नैव शक्नुमः । देहि चक्षूंषि नो ब्रह्मन् दययेश दयानिधे ॥ १७
इति तत्प्रार्थनातुष्टः शंभुसूनुररिन्दमः । ईषन्मन्दस्मितं कृत्वा देवानां दर्शनक्षमम् ॥ १८
दिव्यं चक्षुर्ददौ शीघ्रं स्वरूपालोक नक्षमम् । नमांस चक्षुषा शक्यं द्रष्टुं रूपमिति ब्रुवन् ॥ १९
ततस्ते विबुधेन्द्राद्याः ब्रह्मविष्ण्वादयस्सुराः । तत्तेजोमण्डलस्थैते सहस्रांशमलोकयन् ॥ २०
व्याप्तस्य सकलं तस्य जानुदेशगतं क्वचित् । देवाश्चातितरां तस्मात् उद्विग्नमनसो मुहुः ॥ २१
तस्मिन् तेजसि ते देवाः विश्वरूपे जगत्त्रयम् । कोटिब्रह्मांडपिण्डानां महावपुषि रोमसु ॥ २२

ब्रह्माण्डानीव कोटीनि चैकैकस्मिन् सहस्रशः । तत्तदावरणैः सार्धं तत्रस्थैर्भुवनैः जनैः ॥ २३
भूतैर्भव्यैर्भविष्यद्भिः ब्रह्मविष्ण्वादिभिः सुरैः । जानुप्रदेशमात्रेऽस्य दृष्ट्वा विस्मयमागताः ॥ २४
भीतभीताः प्रणम्यास्मै उपजग्मुः स्तुतिं मुदा । वेदवेदान्तसंभूतैः वाग्भिर्वाचामधीश्वरम् ॥ २५
अप्रीणयन् प्रियं शंभोः आनन्दघनमद्भुतम् । देवाः – यतो जातानि विश्वानि भुवनानि यदन्तरा ॥ २६
येन जातानि जीवन्ति यत्प्रयन्ति विशन्ति च । तत् ब्रह्मपरमं साक्षात् सुब्रह्मण्यमुपास्महे ॥ २७
यन्मायामोहितात्मानः सच्चिद्रूपं परात्परम् । अज्ञात्वाऽर्थं जडं कर्तृ प्रवदन्ति नतास्तम् ॥ २८
त्रयीमयो यस्सवितुर्वरेण्यो मण्डलेस्थितः । हिरण्यश्मश्रुराकेशं आनखाग्रं हिरण्मयः ॥ २९
बिभ्रत् पुण्डरीकाक्षयुगलो जगतांपतिः । तं त्वामनन्यशरणाः प्रपन्नाः शरणं गुहम् ॥ ३०
यस्यानन्दलवाः भोक्ताः ब्रह्मादीनां मनीषिणाम् । पूर्णानन्दाब्धिमतुलं भजामहे उमासुतम् ॥ ३१
आद्यमिन्द्रं हरं विष्णुं ब्रह्माणममरान्तरम् । आहुर्यन्मायया मूढाः तमीशातनुजं नुमः ॥ ३२
मनयाऽप्यव तद्बुद्धिं इन्द्रियाण्यपरे विदुः । यत्कृपारहिताः लोके तद्ब्रह्मपरमं नुमः ॥ ३३
उक्तमेतत्समस्तं यत् शरीरं चिदचित् द्वयम् । नियामकं च सर्वेषां वयं तमुपास्महे ॥ ३४
अवस्थात्रयनिर्मुक्तं अवस्थात्रयसाक्षिणम् । प्रेरकं जीववृन्दस्य मोचकं तमुपास्महे ॥ ३५
शाक्तेति यं जनः शक्तिं पति भूतिप्रदायकम् । शक्त्यायुधं सर्वशक्तिसमृद्धं तमुपास्महे ॥ ३६
सर्वमन्यत् परित्यज्य शिवाद्विप्रः शिवङ्करात् । व्यक्तवायन्मुक्तिमाप्नोति त्वां ब्रह्म समुपास्महे ॥ ३७
चर्मवन्मनुजो व्योम वेष्टयेद्यदि बाहुना । शिव यं त्वामविज्ञाय दुःखान्तं यातितं नुमः ॥ ३८
त्वयि दृष्टे जगन्नाथ सुब्रह्मण्य परावरे । भिद्यात् हृदयग्रंथिः छिन्नाः स्युस्सर्वसंशयाः ॥ ३९
वपुषोऽस्मात् समुत्थाय परंज्योतिस्स्वरूपिणम् । प्राप्य स्वं रूपमाप्नोति तं त्वां वन्दामहे वयम् ॥ ४०
दासाधिकस्तुनाशूयात्यां संभाव्य त्वदुपासकाः । त्वदनुग्रहतश्चापुः वेद्यस्तेन परंजनाः ॥ ४१
पुनर्विशन्ति संसारे त्वद्भक्तानां न देवप । तस्मात् त्वमेव सर्वेषां संसारार्णवतारकः ॥ ४२
त्वमेव गतिरस्माकं रक्षते विग्रहे परम् । परंब्रह्म परंधाम परंज्योतिः स ईश्वरः ॥ ४३
परं रूपं पराशक्तिः परात्परमुपास्महे । स्तुत्वैवं प्रार्थयामासुः विश्वरूपस्थितं प्रभुम् ॥ ४४
भीता भवाम ते रूपं भयुग्रं द्रष्टुमक्षमाः । दिव्यांभावय सावित्रं जगतामधिनायक ॥ ४५
तदस्माकं यथापूर्वं मनुग्रहपरो भव । सौम्यं षड्वक्त्रमतुलं भुजद्वादशभूषितम् ॥ ४६
संपश्यद् सदा साक्षात् अस्माकमखिलेश्वर । गृहाण रूपमस्मेध कृतार्थाः वयमीश्वर ॥ ४७
एवं संप्रार्थितो देवैः ब्रह्माद्यैर्ब्रह्मणस्पतिः । कोटिकन्दर्पसंकाशो स्वरूपे परमास्थितः ॥ ४८
अब्रवीच्चामरेन्द्रान् तान् कार्तिकेयो महाप्रभुः । अनेन स्तोत्रवर्येण स्तुवतां भुवनत्रये ॥ ४९
यद्यदिष्टमहं दाता तेषामिति न संशयः । भूयोऽपि च वरानिष्टान् वृणीध्वमपि शंकिताः ॥ ५०
ततस्ते विबुधास्सर्वे ब्रह्मविष्णुपुरोगमाः । स्कन्दस्येति वचः श्रुत्वा प्रासादसमार्थयन् ॥ ५१
प्रणम्य बहुमानेन ब्रह्माद्याः देवपुङ्गवाः । प्रार्थयामासुरीशस्य पुत्रं मित्रं सतां प्रभुम् ॥ ५२
देवदेव महासेन वरार्हा यदि वा वयम् । वरदो यदि वा त्वं भोः प्रसन्नोवा त्वमीश्वर ॥ ५३
अस्माकमधिराजस्त्वं अभिषिक्तो मुनीश्वरैः । शाश्वतमव्ययं प्राप्य पदं जगदधीश्वर ॥ ५४
सेनानीस्त्वं भवदिन्द्रः त्वमिन्द्रोऽस्माकमव्यय । भूत्वा जहि सुरारातीन् शूरपद्मादिकान् प्रभो ॥ ५५
सुरवन्दीः स्ववीर्येण तत आनीय पूर्ववत् । भुङ्क्ष्व भोगान् यथाकामं त्रैलोक्यभयनाशन ॥ ५६
इति तत्प्रार्थनातुष्टः पार्वतीनन्दनः प्रभुः । प्रसन्नसुमुखो भूत्वा प्रोवाच विबुधोत्तमान् ॥ ५७

इन्द्र एव भवत्विन्द्रो युष्माकं त्रिदशेश्वराः । अहमेवास्य सेनानीः भूत्वा शैलोपदण्डकम् ॥ ५८
शूरपद्मासुरं शीघ्रं निहत्य सहबन्धुभिः । तद्भ्रातॄनपि पुत्रांश्च चतुर्विध चमूगणैः ॥ ५९
संहृत्य क्षणमात्रेण लोकबाधापरानहम् । वीरश्रिया सह क्षिप्रं आनयिष्ये सुरश्रियम् ॥ ६०
वदन् स्मृतः पितुः पार्श्वं प्रतस्थे रजताचलम् । अनुजग्मुश्च ते सर्वे विधातृप्रमुखास्सुराः ॥ ६१
प्राप्य कैलासमचलं तस्यैकं शिखरं श्रिताः । तत्राराधयितुं देवं सेनापत्येऽभिषिच्यताम् ॥ ६२
मतिं दधानास्सहसा विश्वकर्माणमब्रुवन् । त्वष्टः क्षिप्रमुमासूनोः अभिषेकार्थमीशितुः ॥ ६३
पुरं रचय रत्नाढ्यं रत्नप्राकारमण्डितम् । लब्धानुज्ञेन तेनाशु चक्रे पुरमनुत्तमम् ॥ ६४
अभ्रंलिहाग्रप्रासाद गोपुराट्टालमण्डितम् ॥ ६४½

इति विविधमणीनां दीपितांडं प्रभाभिः पुरमिदमभिवीक्ष्य स्कन्दगिर्याख्यशृङ्गे ।
हरिविधिमुखवैरिप्रभुविश्वामरेन्द्राः स्थपतिमभिशशंसुः विश्वकर्माणमग्र्यम् ॥ ६५½

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे एकत्रिंशोऽध्यायः ॥

॥ अथ द्वात्रिंशोऽध्यायः ॥

स्कन्द पट्टाभिषेकः ॥

अनेकयोजनायाम विस्तारमतिविशालम् । नाम्ना स्कन्दपुरं तत्र सर्वभाग्यसमृद्धिमत् ॥ १
उच्चाग्रिमहामालाभिः वीथिकाभिरलंकृतम् । अत्युन्नतपताकाभिः आलीढाण्डान्तभित्तिकम् ॥ २
तन्मध्ये निहितच्छत्रं भवनं सुमनोहरम् । निर्ममे तत्र राजार्हं सूर्यकोटिसमप्रभम् ॥ ३
मण्डपं तत्र रत्नाढ्यं मण्डितं स्तम्भकोटिभिः । अलक्ष्यलक्ष्मकरैः द्वारकुड्यप्रतिप्रदैः ॥ ४
कुड्यप्राकारनिर्भेदोपि मणिभिश्च विराजितम् । तत्र सिंहासनं रम्यं सर्वरत्नोपशोभितम् ॥ ५
सहस्रायुतकोट्यर्क समद्युतिभिरन्वितम् । तत्र संस्थाप्य देवस्य तनुजं त्रिपुरद्विषः ॥ ६
संभृताशेषसंभारा सर्वैर्मुनिगणैः सह । सब्रह्मकास्ससाध्याश्च सनारायणकास्सुराः ॥ ७
ब्रह्माण्डोदर मध्यस्थ तीर्थतोयैर्जगद्गुरुम् । मुदयोऽभिषिषेचुस्ते वसिष्ठप्रमुखा द्विजाः ॥ ८
ब्रह्मविष्ण्वादि सेनानां सेनापत्ये जगद्गुरुम् । वैदिकैर्विविधैर्मन्त्रैर्वेद वेदान्तपारगाः ॥ ९
देवदुन्दुभयो नेदुर्निपेतुः पुष्पवृष्टयः । [illegible] ॥ १०
शङ्खं भेर्यो मृदङ्गाश्च पिटकाढक्किकामुखाः । समुद्रकल्पसन्नादा निनेदुः श्रुतिहारिणः ॥ ११
तथा मधुरवाद्यानि वीणावेणुकलस्वनैः । किंनरा गरुडाः सिद्धा विद्याधरगणा जगुः ॥ १२
साप्सरा अमितानन्दा स्तुताः किंपुरुषोत्तमाः । हाहाहूहूश्च गन्धर्वाः चित्रसेनमुखास्तथा ॥ १३
अभिषिच्य जगद्बन्धुं सेनापत्ये हरात्मजम् । वस्त्रमाचमनं चैव गन्धयज्ञोपवीतकम् ॥ १४
धूपं दीपं च नैवेद्य चक्रुस्सर्वोपचारकैः । देवा विष्णुमुखास्सेना [illegible] जगतांपतिः ॥ १५
देवसेनापतिः स्वामी महासेनो जगद्गुरुः । एवं दद्युरित्येवं नानोपायनपाणयः ॥ १६
दृष्ट्वा च दर्शनं तेषां देवानां हरसंभवः । विसृज्य सहसा सर्वान् विजहारातुलप्रभ ॥ १७
तथास्मिन्नन्तरे कश्चिन्नारदो नाम वै द्विजः । महात्मा ऋषिमुख्योऽसौ यज्ञकर्मोन्मवद्य त ॥ १८
तस्यैवं यजतस्तस्य यज्ञे वै दक्षिणे । आलभ्यस्य पशोस्तस्य बन्धमुक्तविजिपण्डिते ॥ १९

विशसस्याशु संभूतदञ्जगस्सर्वाङ्गपेशलः । अत्युदात प्रभाशृङ्ग मण्डलो रक्तलोचनः ॥ २०

दीर्घश्मश्रुलसद्वास्य पूर्वापरविराजितः । कर्णस्तनयुगभ्रान्ति निरसारित घनावलिः ॥ २१

दीर्घजङ्घ चतुष्पाद्‌ः खुराग्रनिहतावनिः । हृष्टपुष्टतनुः पुच्छसमुल्लिखिततारकः ॥ २२

लंघितस्थूलवपुषो मद्गन्धकण्डूःपद्रुः । लसन्मणिगणाकीर्ण क्वणन्नूपुरहंसकः ॥ २३

क्षुद्रघण्टालसत्कण्ठ घण्टारवमनोहरः । शौर्ये अथेच विजितगरुडानिलविक्रमः ॥ २४

बभ्राम भृशादर्पाद्यो जगद्ग्रसितमल्लकः । दुद्रुवुर्दिग्गजास्तस्य मद्गन्धानिलाहताः ॥ २५

पलायतोऽतिवेगेन प्रत्येत्याशु मनोजवः । जघान मूर्ध्नि सिंहस्य मूर्धातुल्येनचाद्यामैः ॥ २६

तेनाभ्रमुपतिर्भ्रान्तलोचनो भ्रममाणसः । पुण्डरीकोऽपि नाम्नाऽन्यो वनं प्राप भयाहतः ॥ २७

वामनो वामनोऽतीव बभूव भयवेपितः । कुमुदोऽपि कुमुद्वत्ये गतो नेत्रमथाञ्जनः ॥ २८

पुष्पदन्तस्य शान्तिस्तत् पुरतः स्थितिहेतुकी । सर्वां भूमिं गतो येन सार्वभौमस्तदादितः ॥ २९

प्रसाद्य प्रतिवस्तेभ्य सुप्रतीकोऽपि दुद्रुवे । इत्थं छागेन चैकेन लोकसद्दुर्गजाविशाम् ॥ ३०

निर्जित्याशागजानेको रसायास्तलमाप सः । बलेस्तत्र गृहेनागा ये स्थिताधिपनायकाः ॥ ३१

विलोकयामास जयी बलं तेषां मदोद्धतः । उपर्युपितलान्येषं कल्पयामास भोगिनः ॥ ३२

सप्तापि च तलानेको मेषो निर्जित्यलीलया । आलोकालोकपर्यन्तं मनुष्यमृगपक्षिणः ॥ ३३

सागरान्तर्जलचरैर्युयोधमहतौजसा । मेघपङ्क्तिमसौ व्योम्नि प्रभञ्जन इवापरः ॥ ३४

बभञ्ज तरसा सर्वान् क्षणार्द्धार्धेन गर्वितः । मनुदुद्राव सवितुर्ज्योतिषां शशिनोरथान् ॥ ३५

नाकिनो नाकनिलया नधावतमहालसः । विश्वनाथ महादेवान् वने साध्यांस्तपस्यत ॥ ३६

योगिनो सनकप्रेष्ठान् सत्ये साक्षाच्चतुर्मुखम् । सगणं सर्वकर्त्तारमवीपयग्रं बली ॥ ३७

वैकुण्ठलोकमासाद्य तीर्त्वा च विरजां नदीम् । वैष्णवानपि तत्रत्यान् बाधमाने मखोद्भवे ॥ ३८

नारदेनामरानसेन्द्रा यजमानेन सर्षिजाः । मखवाटे परित्यज्य विपरीतफलप्रदम् ॥ ३९

कालकूटा द्विषत्रस्ता नीलकण्ठ सदाशिवम् । कैलासगिरिमापुस्ते शीतलाङ्गं शिवप्रियम् ॥ ४०

तत्र देवगृहद्वारे क्रीडापरवशाशयः । वीरबाहु प्रभृतिभिर्वीरो रक्षोऽभिभूर्गुहः ॥ ४१

देवैरिन्द्रादिभिर्देवसेनानी रक्षितेश्वरः । ते तमेत्य जगन्नाथं सर्वार्तिहरमव्ययम् ॥ ४२

ध्वजिशिपम्महासेनं हरसूनुं प्रणम्यते । देवाः — देवदेव महासेन महादेवाङ्गसंभव ॥ ४३

प्रसीदास्मत्प्रभो शंभो विश्वतिश्शृधरामियम् । अयं मुनिवरोऽस्तार्थे परमेशांघ्रिवल्लभः ॥ ४४

ईजे यज्ञेन यज्ञेशं सोमं सोमार्धभूषणम् । अध्वरे नारदोऽयं नारदेन समो महान् ॥ ४५

तस्यास्य यज्ञे वितते छागालंभेसविभ्रमो । छागो महान् समुत्पन्नो दैवयोगादरिन्दम ॥ ४६

जगत्त्रयं तेन देव दुर्वृत्तेनाकुलीकृतम् । कालकूटादतितरां क्रूरेण महताधुना ॥ ४७

निगृह्य रक्षसि न चेत् जगद्ध्वंसं भविष्यति । त्वत्तोऽन्यो नैवशक्तोऽस्ति देवो वा दानवोऽपि वा ॥ ४८

तदाशु रक्षरक्षास्मान् जगच्च सचराचरम् । संप्रार्थितोऽयं त्रिदशैर्निग्रहेऽजस्य देवपः ॥ ४९

करं करेण सन्ताड्य वीरबाहोर्विहस्य सः । समादिदेश भगवान् तमस्यानयने त्वरन् ॥ ५०

आज्ञया तस्य सहसा वीरबाहुररिन्दमः । मेषस्यान्वेषणोद्यतः विचिन्त्य भुवनत्रयम् ॥ ५१

आरसातलमारभ्य ब्रह्माण्डावधिसत्वरम् । तदाजो विष्णुभवने विप्रकुर्वन्विलोकितः ॥ ५२

कोलाहलेन तत्रेव जनस्य महता तदा । वीरबाहुरमेयात्मा गृहीत्वैवं विषाणयोः ॥ ५३

निनाय त्वरया देव निकट प्रकट बली । मेष पूगसहस्राभ मनोनिलमहाजवम् ॥ ५४
दृष्ट्वा हृष्टमनास्स्कन्दः तमध्यारुरोह स । पार्ष्णिघातै कशाघातैस्तस्य दर्पमपाकरोत् ॥ ५५
यत्नेन स्ववश नीत्वा तमश्ववद्रिन्दम । धारागतीरसु स्वामी चालयामास वीर्यवान् ॥ ५६
भ्रामयामास सहसा वात्यावायुमनोरमम् । भुवनान्यपि सर्वाणि त्वराभाधिकसंभ्रम ॥ ५७
वह्निलोकगुरु मेषो महान्त विगतस्मय । श्रान्त श्रमजलाकीर्णो विवृतास्योऽतिफेनिल ॥ ५८
हृतदर्परयोऽश्वयँ प्रकम्पिततनुस्तपम् । कशयाऽभिहतोत्यर्थमपि निर्बलता गत ॥ ५९
अथेदशस्समेषोऽपि लोकानामपि बाधक । प्रभुणानुगृहीतोऽसौ दयैव दयालुना ॥ ६०
छागोपि तेन तरसा भूत्वाऽस्तौषीदुमासुतम् । प्रणाममपि देवाय प्रसन्नमनसाकरोत् ॥ ६१
सेनाध्यक्षितरा प्रीतो वाहनं तमकल्पयत् । छागस्यास्य जगत्कर्ता दुष्प्रापमहतात्मनाम् ॥ ६२
चकारानुग्रह ह्येष भक्तस्यान्यस्य किंपुन । अग्निमूर्तिश्च वन्द्येपवाहनोऽभूत्तदावि स ॥ ६३
नारदोऽपि तदोत्सव यज्ञो देवैर्महर्षिभि । देवसेनापतिं मूर्ध्ना प्रणिपत्योपतस्थिवान् ॥ ६४
वीक्ष्य त छागवाहोथ देवैस्सह मुनीश्वरै । यज्ञान्तरायदुःखार्तमिदं वचनमब्रवीत् ॥ ६५

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
संभवकाण्डे द्वात्रिंशोऽध्याय ॥

---

॥ अथ त्रयस्त्रिंशोऽध्याय ॥

ब्रह्म कारागृह प्रवेश ॥

सूत — इति वैवाहसभूतो देवसेनापति प्रभु । प्रणत प्राञ्जलिं पार्श्वे नारद मुनिमब्रवीत् ॥ १
महर्षे तव यज्ञेन ममाभूद्वाहन महत् । तनान्तरायो मैवास्तु पूर्तिमेतु पुनर्मख ॥ २
गच्छ देवैर्यथापूर्वं ऋत्विग्भिर्यज्ञमाश्रुतम् । दक्षिणाभिर्यथोक्ताभि स्समाप्त्यावभृथाप्लुत ॥ ३
मम वाहनदानेन शतयज्ञफल लभेत् । ये लोके मनुजास्सन्ति यत्किंचिदपि भक्तित ॥ ४
प्रयच्छन्ति फलं तेषा सर्वयज्ञगपोऽधिकम् । इत्यादिश्य विसृष्टास्ते नारदाद्यास्सुरर्षय ॥ ५
यथोक्त प्रभुणा यज्ञस्सुसमाप्य वै मुनि । सोऽपि तत्रैव कैलासे विजहार यथारति ॥ ६
एतस्मिन्नन्तरे ब्रह्मा सहसाध्यैर्मरुद्गणै । सत्यलोकादुमाकान्त समाराद्धुमुपागत ॥ ७
कैलासशिखरे रम्ये शङ्करस्य शिवालये । मोदन्ते देवतास्तत्र मुक्तिभाजस्तदाश्रयात् ॥ ८
स तत्र विनयेनैव प्रविश्य विबुधैस्सह । अतीत्य विविधा वीथीरत्युन्नत पताकिका ॥ ९
आससाद महच्चित्रमालय परमेशितु । ददर्श द्वारि जगता विहरन्त गुरु गुहम् ॥ १०
शिवयोस्सखिभि पुनर्मेयमजर शिशुम् । तदा तस्य विनोदाय सुब्रह्मण्यो विधेर्मतिम् ॥ ११
जहार तेन [illegible] ब्रह्मा नैवाज्ञानात् परप्रभुम् । प्रविवेश शिशु मत्वा शिवावसथमद्भुतम् ॥ १२
चिर [illegible] महादेव समुपास्य ससादरम् । साध्यैस्साक विसृष्टोऽसौ सत्यलोकाय निर्गत ॥ १३
तदानीमपि दक्षस्य कुमारो मारसुन्दर । तत्राखेलत् बहिर्द्वारि सवयस्यैर्हरात्मज ॥ १४
तस्यैव दीव्यतोऽभ्याशे गच्छन्वाग्भिर्ससंभव । अकृतानतिराहूय पृष्ट कस्त्वमिति क्रुधा ॥ १५

ऊचे पश्चात्प्रणम्यैनं प्राञ्जलिर्विनयान्वितः । ब्रह्माहमिह संप्राप्तस्त्वत्सकाशं दयानिधे ॥ १६
सेवार्थं शिवयोरद्य सत्यलोकाज्जगद्गुरो । साध्यैस्साकं सुरैरेभिः कृतेशोपास्तिरस्मिते ॥ १७
कृपाया पात्रभूतोऽथ समाहूतो यदृच्छया । कृतार्थोऽहं गमिष्यामि सत्यलोकं विमुञ्चमाम् ॥ १८
गच्छन्तमितिधातारं नमन्तमपि पादयोः । विनोदायाभणत्स्वामी विहस्य सस्मितं क्षणम् ॥ १९
ब्रह्मन् तव कृतिं काया कासु विद्यासु पाटवम् । जिज्ञासुरहमद्यात्वां पृच्छामि न परीक्षक ॥ २०
मा कृथा कोपमधुना वदब्रह्मन् त्वमञ्जसा । तदुपश्रुत्य वचनं गभीरमतिपेशलम् ॥ २१
भीतः प्रीतमना प्राहादुत्तरं चतुराननः । देवासुरमनुष्याणां स्रष्टास्मि जगतां प्रभो ॥ २२
नान्योऽस्ति मत्समो लोके चराचरकृते पटुः । भवान्यर्वासु विद्यासु पटुरस्म्यहमेव भो ॥ २३
वेद्मि धात्वर्थभूतानां विद्यानामहमाश्रयः । श्रुत्वैव विधीं भूप प्रत्याह तेऽभिभूरसुम् ॥ २४
मुग्धोपलालयत्तस्य गिरा वचनमादरात् । स्कन्द –अहो पटुरहो वेत्ता महास्त्य महतोऽधुना ॥ २५
तासु विद्यासु चाद्यायास्तदा यदक्रियत्पदम् । सन्तोषोहाऽस्मदादीनां शिशुना बुद्धभाषणे ॥ २६
तदाद्यावाक्यसन्निधे विधे सर्वं शृणोम्यहम् । सन्निधिर्मे सखायोऽस्य शृणुध्व गदतो गिरं ॥ २७
रूपमेवास्य सर्वेषां महिमानं वदत्यलम् । श्रुत्वाचष्ट ततो ब्रह्मा श्रुतिमाद्यामृगात्मिकाम् ॥ २८
स्वरमादौ प्रपाठैय विन्दुनादैक्ययोद्भवाम् । तावन्मात्रेण सेनानीस्सस्मितं कम्पमानमन् ॥ २९
हस्तेन तिष्ठ तिष्ठेति भूयस्तमभाषत । गुह –अर्थोऽस्य वर्ण्यतामाशु समञ्जसमिह त्वया ॥ ३०
यथासाकं मनोगच्छेत् सदाय नैव संप्रति । विधि –प्रकृतमाद्यमेवार्थो विधिरस्येति विभुवन् ॥ ३१
मुष्टिना चाटघट्टेन मुखरीकृत दिङ्मुखः । कारागृहं स्कन्दगिरौ नीतोऽथ वीत्याहुतः ॥ ३२
जगत्सृष्टं च वेधेन स्कन्देन सचराचरम् । ततो दीर्घेण कालेन साध्यायं मुनियोगिन ॥ ३३
तपसा प्राप्य देवेशं शङ्करं चन्द्रशेखरम् । प्रार्थयन्ति स्म विबुधा ब्रह्मणो मोक्षमादरात् ॥ ३४
देवो विदितवृत्तान्तो विबुधान्प्रति शङ्करः । प्रेषयामास नन्दीशं सुब्रह्मण्यान्तिकं प्रभुः ॥ ३५
गच्छ नन्दीश पुत्रस्य सविधं मम शासनम् । मद्गिरा देवसेनान्यं प्रीणयित्वा महाशया ॥ ३६
विमोचय विधातारं सृष्टिमत्पूर्वशान्तये । स्वामिना यथपाकृत तथैवेति शिलादज ॥ ३७
जगाम त्वरया स्कन्दगिरिं नन्दी तदाज्ञया । तत्र स्कन्दं समाराध्य सन्तोष्य विविधैः स्तवैः ॥ ३८
प्रणम्याञ्जलिहस्तोऽग्रे ब्रह्मास्वामिन् गिरा विभुः । विमोच्यो भवता लोकसृष्टिर्भूयाद्यथापुरा ॥ ३९
विज्ञाप्येति स्थिते तस्मिन् नन्दिकेशे कृताञ्जलौ । तत्र क्रुद्धो महासेनो भर्त्सयन्नन्दिनं मुहुः ॥ ४०
आगतोऽसि यथा येन तेन गच्छ नचेच्चिरम् । ब्रह्मणासह वासोऽस्तु तव कारागृहेऽथवा ॥ ४१
श्रुत्वत्युग्रतरं स्कन्दं प्रणिपत्य शिलादजः । जगाम त्वरया देवं पुरारिं पुरुषेषु ॥ ४२
शशंस सान्निधौ तत्र वृत्तान्तं स्वामिनोगणः । सस्मितं सशिरः कम्पमीशो विस्मितमानसः ॥ ४३

इति श्रीस्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
सम्भवकाण्डे त्रयस्त्रिंशोऽध्यायः ॥

---

यतीनां शुद्धसत्त्वानां ब्रह्मप्राप्त्यैकसाधनम् । ऊचिवानिति तच्छ्रुत्वा प्रसन्नहृदयो भृशम् ॥ ३१
पुत्र पुत्र मनोऽर्थो वर्णितो यन्महांस्त्वया । अधिकारमलग्रस्तः कथं वेत्ति चतुर्मुखः ॥ ३२
योगिनोऽपि न जानन्ति ध्याननिर्धूतकल्मषाः । मद्भक्ता एव जानन्ति ममैवानुग्रहात् सुत ॥ ३३
ममात्मासि यतो नूनं वेत्सि पुत्रार्थमद्भुतम् । अत्राधिकारिणोऽगस्त्यादृते सन्ति न योगिषु ॥ ३४
तस्मै कथय सम्यक्त्वं अमुमर्थं महाशया । एवं परंपराप्राप्ता विद्योच्छिन्ना न वै भवेत् ॥ ३५
सोऽन्तेवासी तथात्यर्थं शासितं पुत्र पुत्रवत् । अनुज्ञाप्यात्मजं देवः संप्राप भुवनं पुनः ॥ ३६
तत्र देवीं समाहूय निशान्ते जगतांपतिः । आश्लिष्योपचरन्तीं तां अङ्के संस्थाप्य शैलजाम् ॥ ३७
कथयामास वृत्तान्तं सुब्रह्मण्यस्य वेधसः ॥ ३७}

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे चतुस्त्रिंशोऽध्यायः ॥

---

॥ अथ पंचत्रिंशोऽध्यायः ॥

श्री अम्बया श्री शिवं प्रति श्री स्कन्दमहिमवर्णन प्रार्थनम् ॥

श्रुत्वा देवी कुमारस्य मुखाद्दीक्षास्य वैभवम् । अंगैः कदंबकल्पैः स्वैः आह्लादालोकनायकम् ॥ १
आश्चर्यं ते प्रभो सूनोरतिलौकिकमद्भुतम् । शैशवे प्राप्तब्रह्मलोकान् लीलयैव तवात्मजः ॥ २
अस्य कीदृक्प्रभो रूपं किं वीर्यं कतमोऽक्षयम् । विभूतिश्चास्य का ब्रूहि पृच्छन्त्यै मममीश्वर ॥ ३
इति संचोदितश्शंभुः स्मरमानमर्दनः । हृष्टः प्रोवाच वचनं देवीं देववरोत्तमः ॥ ४

ईश्वरः —

हन्त ते कथयिष्यामि रहस्यं शृणु सुन्दरि । शिवोऽहं निष्कलः पूर्णश्शक्तिस्त्वमनपायिनी ॥ ५
प्रकृतिप्रत्ययाकारावावां शब्दार्थकोमलौ । त्वं शब्दोऽर्थोऽस्म्यहं भद्रे जगाद्यं पतिरस्म्यहम् ॥ ६
पञ्चकृत्यपरश्चाहं पञ्चवक्त्रस्सदाशिवः । एकवक्त्रासि बहुधा भिन्नापि परमेश्वरी ॥ ७
त्वन्मयो मन्मयो यस्मात् षड्वक्त्रः परिकीर्तितः । पञ्चकृत्यपरोऽप्येष प्रपञ्चस्यास्य लीलया ॥ ८
षट्कृत्तिका मुग्धरूपाः ददुः स्तन्यं यदस्मै । पपौ च तासां तेनायं कार्तिकेयस्तवात्मजः ॥ ९
पार्वती त्वं गिरेः पुत्री पुत्रोऽयं ते स्वदाख्यया । पार्वतीनन्दनो लोके प्रोच्यते वेदवादिभिः ॥ १०
आकाशवत् यतोऽस्कन्दद्विक्रमेण जगत्त्रयम् । तेन स्कन्दोऽप्ययमाख्यातस्सुतस्ते गिरिसंभवे ॥ ११
मञ्चयामि यद्भक्तानहमग्निरितीरितः । अग्नेर्मंदाविरभवद्गिभूरात्मजस्तव ॥ १२
मदूर्ध्वरेतसो यस्माल्ललाटाद्वह्निनिःसृतः । अथवाऽभूदयं यस्मादग्निभूर्भुवनेश्वरी ॥ १३
अथवाऽग्निर्यतो बाढं वायुनामभियोगतः । अग्निभूरिति पुत्रस्ते सुभ्रूस्सूरिभिरीरितः ॥ १४
गुहेति दहराकाशो वेदान्तेषु हि पठ्यते । तन्निष्ठोऽयं गुहः प्रोक्तः सर्वैर्हृत्कमलासनः ॥ १५
यतोपहतपाप्मा हि विरजामृत्युवर्जितः । विशोको विचिकित्सश्च विपिपासुः कुमारकः ॥ १६
सत्यकामस्तथा सत्यसंकल्पोऽयं महेश्वरी । ऋतं च सत्यं पुरुषो विश्वो विश्वाधिकश्च सः ॥ १७
शराणां यद्वने जातस्सोऽयं शरवणोद्भवः । वनं जलं शरास्तस्य तदाक्यस्य तदन्तरे ॥ १८
पद्मे पद्माभवद्ब्रह्मस्वयंभूवाक्यमेच्छया । तेनायं जगतां नाथः पुनश्शरवणोद्भवः ॥ १९

ब्राह्मणानामहं देवस्सुतरां मत्सुतः प्रिये । सुब्रह्मण्यस्समाख्यातः सुरासुरनमस्कृतः ॥ २०
आमनन्त्यात्मना यस्मान्महासेनात्मसंहतिः । सासेना यदधीनोऽयं महासेनस्सुतस्तव ॥ २१
गङ्गायामुदभूद्बालस्तेन गाङ्गेय ईरितः । देवा विष्णुमुखा लोके यस्यसेनाः प्रकीर्तिताः ॥ २२
दुःखान्तमनयत्तासां सेनानीः परिकीर्तितः । अनन्तानि च नामानि सन्ति पुत्रस्य तेऽनघे ॥ २३
कीर्तितानि मया शश्वन्मुक्तिदान्यखिलात्मनाम् । एकमप्येन केनापि नामस्कन्दस्य कीर्त्यते ॥ २४
तस्य सिध्यति लोकेऽस्मिन् पुरुषार्थ चतुष्टयम् । तन्नस्पृशन्ति पापानि ब्रह्महत्यादिकान्यपि ॥ २५
रूपमस्य सुतस्यार्ये वर्ण्यमानं मया शृणु । सच्चिदानन्दरूपस्य निष्कलस्य गिरीन्द्रजे ॥ २६
महश्च महसामीशं परंज्योतिरनूपमम् । तद्भासा भाति सूर्योऽपि नचन्द्रो नैव तारकाः ॥ २७
नेमाश्च विद्युतः क्वास्मिन् कुतोऽग्निस्तस्यतेजसि । भाति सर्वं प्रसादेन तस्य मुक्तिर्नचान्यथा ॥ २८
ओतं प्रोतंच निखिलं सूत्रे मणिगणाइव । पुत्रेण ते पुत्रेण पूर्णचन्द्र निभानने ॥ २९
स्वाभाविकमिदं रूपं रूपमन्यत्परात्परम् । मन्यत्तद्भुवनाकारं मूर्धाद्यौर्नाभिरंबरम् ॥ ३०
सप्तपातालपादंतत्कुक्षीयप्रिस्तशीर्षिधः । दिशोऽस्य बाहवः प्रोक्ता रोमाण्योषधयश्शुभे ॥ ३१
इन्द्रियाण्यस्य भूतानि महान्ति विषयाश्चते । शब्दादयस्समाख्यातास्तस्यांतुग्राहकश्चये ॥ ३२
षड्वक्त्रं द्वादशभुजमष्टादशविलोचनम् । अनुग्रहाय लोकानां रूपमङ्गीकृतं शुभम् ॥ ३३
परेण महसा तेन सुस्मिते शुभलोचने । इदं रूपं परं तस्य ये ध्यायन्ति वरानने ॥ ३४
ते धन्यास्ते जगद्वन्द्यास्तैः पूता वसुधातराम् । अस्यांघ्रियुग्मयोर्भक्ता ये मर्त्या धरणीतले ॥ ३५
त्रिदशैरपि ,ते वन्द्या महिमवास्त्वत्रिपाश्च ते । महिमानमुमे वक्ष्ये कुमारस्य महात्मनः ॥ ३६
आज्ञया वायुरायाति दधाति भुवनान्यपि । आवहादिभिरावाय ज्योतिश्चक्रादिकं शुभे ॥ ३७
प्राणादिभिश्च भेदैः स्वैः प्राणिनश्च तदाज्ञया । भीषास्मादेवसूर्योऽपि प्रकाशयति पार्वति ॥ ३८
लोकचक्षुर्लोकमिमं सर्वलोकैरलंघ्यया । हव्यं वहति देवानां कव्यं कव्याशिनामपि ॥ ३९
पाकञ्च कुरुते वह्निर्देवि त्वत्सूनुशासनात् । वैश्वानरोऽग्निर्भूतानां जाठरं समुपाश्रितः ॥ ४०
प्राणापानसमायुक्तः पचत्यन्नं चतुर्विधम् । मृत्युश्च शासनादस्य पापिनां व्याधिपीडनैः ॥ ४१
जीवतां यातनाभिश्च मृतानामपि धावति । चतुर्मुखोऽपि भूतानि सृजत्यस्यैव शासनात् ॥ ४२
नवभिश्च तथान्यैश्च प्रजापतिभिरादरात् । नारायणो महायोगी नरभूतजलाशयः ॥ ४३
करोति रक्षां जगतष्षण्मुखस्यैव शासनात् । मत्स्यकूर्मवराहादि भृगुशापनियन्त्रितः ॥ ४४
भवतामनुप्राप्य धर्मसंस्थापनोद्यतः । संहरत्यसतोस्यैव शासनादसुरानपि ॥ ४५
कालाग्निरुद्रो भगवान् संहरत्येव शासनात् । सर्वं जगदिदं काले सुब्रह्मण्यस्य वेधसः ॥ ४६
कालस्सृजति भूतानि कालस्संहरति प्रजाः । सर्वे कालस्य वशगाः सकालोऽस्य वशे स्थितः ॥ ४७
अवकाशमशेषाणां भूतानां संप्रयच्छति । आकाशस्तवपुत्रस्य शासनेन गरीयसा ॥ ४८
सञ्जीवयन्त्यशेषाणि भूतान्यापस्तदाज्ञया । अविलंघ्याहि सर्वेषामाज्ञा तस्य गरीयसी ॥ ४९

आज्ञावशास्तस्य धरास्थितेयं धराधरावारिधरास्समुद्राः ।
ज्योतिर्गणा विष्णुमुखाश्च देवास्सर्वं जगत्स्थावरजङ्गमंच ॥ ५०

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे पंचत्रिंशोऽध्यायः ॥

॥ अथ षट्त्रिंशोऽध्यायः ॥

श्री स्कन्दविभूति वर्णनम् ॥

देवी —

विभूतिं तव पुत्रस्य श्रुत्वेह मुनिपावन । विज्ञातायां विभो यस्यां मुक्तिं विन्दन्ति मानवाः

ईश्वर —

शृणु ते कथयिष्यामि विभूतिं शक्तिजन्मनः । सर्वलोकोपकाराय निबोध वरवर्णिनि ।
सर्वदेवात्मकस्स्कन्दः सर्वलोकात्मकस्तथा । सर्वभूतात्मकश्चाय साक्षाद्ब्रह्मसनातनम् ।
यद्यद्विभूतिमत्सत्वं श्रीमदूर्जितमद्रिजे । तत्तद्विद्धि सुतस्यार्ये भूतिलेशविजृंभितम् ।
आत्मैव पुत्रतामेति दीपाद्दीपान्तरं यथा । दीपान्तरस्य माहात्म्यात् दीपो भवति यन्महान् ।
एवमेव महानेव मत्तो भवति पुत्रकः । विभूतिलेशास्तस्यार्ये तत्र तत्र विजृंभिताः ।
अनन्तानाञ्च रुद्राणां अयं कालाग्निरद्रिजे । सदा विष्णुश्च विष्णूनां शङ्खचक्रासिधारिणाम् ।
वासुदेवश्च मूर्तीनां चतसृणामयं शिवे । अवतारेषु तस्यैव रामश्शास्त्रभृतां वरः ।
वृष्णीनां वासुदेवोऽयं पाण्डवानां धनञ्जयः । प्रजापतीनां सर्वेषां ब्रह्माऽयं ब्रह्मणस्पतिः ॥
मनूनामपि सर्वेषां मनुस्स्वायम्भुवोह्ययम् । इन्द्रोऽयं सर्वदेवानामग्निस्तेजस्विनामयम् ।
पितॄणाञ्च यमश्चायं रक्षसां निर्ऋतिः प्रिये । यादसां वरुणश्चायं बलिनां वायुरेव च ॥
गन्धर्वाणां चित्ररथो निधीनां धनदो ह्ययम् । ईशानोऽयं दिगीशानां भोगदोऽयं प्रकीर्तितः ॥
ऐरावतो गजेन्द्राणां स्रोतसामेव जाह्नवी । रुद्राणां शङ्करः स्कन्दो वसूनामपि पावकः ॥
आदित्यानामयं विष्णुर्भिषजामयमश्विनौ । प्रह्लादश्चैव दैत्यानां सर्पाणामपि वासुकिः ॥
मृगाणाञ्च मृगेन्द्रोऽसौ गरुडः पततामपि । ब्रह्मर्षीणां वसिष्ठोऽयं देवर्षीणाञ्च नारदः ॥
अश्वत्थस्सर्ववृक्षाणां हिरण्यमपि भूषणं । यत्र यत्र जगत्यस्मिन् देवतिर्यङ्नरादिषु ॥
वीर्यं श्रीरधिका कान्तिर्विद्याज्ञानादिकं प्रिये । तत्सर्वमस्य कल्याणि विभूतिरिति निश्चितम् ।
सङ्क्षिप्योक्ता विभूतिस्ते पुत्रस्य भुवनेश्वरि । नशक्य विस्तराद्वक्तुं वर्षकोटिशतैरपि ॥
इयमार्ये विभूतिस्ते पुत्रस्य परिकीर्तिता । प्रसङ्गात्कथितं पूर्वं त्वया तदपि विस्मृतम् ॥ १
अथवा लोकरक्षार्थं पुनः पृच्छसि पार्वति । सूत — इतीदं प्रथमात्मा कुमारस्याद्य वैभवम् ॥ १
कथयामास पार्वत्यै लोकानुग्रहकाम्यया । समालिङ्ग्य पुनर्देवीमन्त पुरमुपाविशत् ॥ १
इतीशकथितं लोके प्रसिद्धिमगमत्तराम् । तत्र तत्र सुरेन्द्राणां भुवनेषु विशेषतः ॥ १
वैकुण्ठे विष्णुभवने वैष्णवीभिरुदीरितम् । कामिनीभिस्सदाकालं विपञ्चीभिर्विचित्रितम् ॥ १
तदन्तरं उपेन्द्रस्य कन्ये द्वे नयनोद्भवे । नाम्नैकाऽमृतवल्ल्याख्या परा सौन्दर्यवल्लिका ॥ २
वर्ण्यमानं शुश्रुवतुर्महिमानं सुलोचने । स्कन्दस्य तत्र तत्रैते सौकुमार्यञ्च नित्यशः ॥ २
चकमाते उभे कन्ये पतीत्वं तस्य दुर्लभम् । ईषतुश्च तप कर्तुं तत्प्रीत्यै श्रद्धयासह ॥ २
ते शुभे सुकुमाराङ्गे रूपेणाप्रतिमे भुवि । मेनातेस्वानुरूपत जगत्यस्मिञ्चराचरे ॥ २
धुरा श्रुत्वास्य चरितं वैभिकीभिर्महीयसः । सरातेन्नालमेताते प्रधाल्वशयने सुखम् ॥ २
श्रवणे तच्चरित्रस्य कौतुकाक्रान्तमानसे । विनिद्रनयने नित्यमतिदीर्घासु रात्रिषु ॥ २
शरकान्तारमभ्येत्य तपःकर्तुमुद्यतम् । नियताहारनिरते मुनिव्रतपरायणे ॥ ३
अपास्य काञ्चीं रत्नाढ्यां मौञ्जीमाबध्य मेखलाम् । आच्छाद्य चीरवीं श्रेष्ठां त्वचमानीय कोमलाम् ॥ ३

बिभ्राणे वल्कले रम्ये विसृष्टक्षौमवाससी । भूतिभूषितसर्वाङ्गे रुद्राक्षाभरणांचिते ॥ ३२
षडक्षरमहाजप्यपरे तद्ध्यानमानसे । एवं चिरगते काले तयोरग्रे सनातनः ॥ ३३
प्रादुरासीन्महासेनश्चारुहासमुखांबुजः । तं दृष्ट्वाद्भुतवत्सेनमारात्सुन्दरवत्स्यपि ॥ ३४
रोमांचितप्रतीकेते प्रेमविस्फारितेक्षणे । प्रणम्यांजलिमाधाय तस्थतुः पार्श्वयोर्द्वयोः ॥ ३५
स्वप्नेऽप्यदृष्टपूर्वं तं अभ्यवेत्येशपुत्रकम् । महसैवातिमहता सर्वलोकातिशायिना ॥ ३६
आलोक्यते जगत्स्वामी स्मितपूर्वमभाषत । युवां भद्रेऽद्य शृणुतं यदिदं हृदि संस्थितम् ॥ ३७
करिष्ये युवयोर्वाक्यं दीक्षितं करवाणि किम् । तदुपश्रुत्य संप्रीतहृदये यद्बतुर्वरम् ॥ ३८
भगवन्ध जगन्नाथ शिवयोर्हृदयंगम । गृहीष्व पाणी नौ स्वामिन् प्रसन्नो यदि विभव ॥ ३९
भार्यां चिराय पत्नीत्वमभिकांक्षावहे विभो । सूतः — इतितत्प्रार्थनातुष्टः पुनरेव बभाषत ॥ ४०
अथ कालेन युवयोः पूरयिष्येऽभिकांक्षितम् । एकाऽमृतलते तिष्ठ जिष्णुयाश्यारो महाश्रया ॥ ४१
देवलोकेऽपराभूमौ त्वं सुन्दरलते प्रिये । भूमौ शिवमुनी तिष्ठ समये विवहे त्वहम् ॥ ४२
व्याहृत्यैवं विशाखाख्यो स्तुत्वा पित्रोः पदं प्रभुः । अलंचकार सविधं पित्रोः कैलासपर्वते ॥ ४३
प्रणम्य पादयोः पित्रोर्हस्तप्रणम्यो मुनीश्वराः । बद्धांजलि पुटोऽभितिष्ठवीक्षमाणो मुखं तयोः ॥ ४४
तौ तदा संपरिष्वज्य जिघ्राते मुखपङ्कजम् । प्रत्येकं तं समाघ्राय नद्युतिमधिजग्मतुः ॥ ४५
स्वं स्वमंके समारोप्य लालयामासतुश्चिरम् । स्थापयामासतुर्मध्ये तमीशौ जगतां मुदा ॥ ४६
तदा तयोश्च तस्यापि दर्शनेन गणेश्वराः । मेनिरे मोक्षसांप्राप्य सुखमात्मनश्वरम् ॥ ४७
इदानीमपि यो सोमं सस्कन्दं जगदीश्वरम् । ते धन्या धरणीभागे ते धन्या त्रिदुधैरपि ॥ ४८
एवमेव शिवे सांबे ससुते तिष्ठतीश्वरे । कैलासमचलं प्रापुर्विबुधानिस्स्थितिगताः ॥ ४९
विधातसमया विप्रा भाव्योद्धुरतंत्रिताः । ते प्राप्य भवनद्वारमप्राप्यमकलासमनि ॥ ५०
ईशितुः सर्वलोकस्य देवा विष्णुपुरोगमाः । तत्र द्वारि समालोक्य नन्दीशं नगणं सुराः ॥ ५१
सनारायणकाःसेन्द्राः प्रजापतिपुरोगमाः । समभ्यर्च्याग्रिमस्फारादात्दरास्सुमनोहरैः ॥ ५२
मस्तकन्यस्त हस्ताब्ज मुकुळालक्षिताक्षरम् । स्तुत्वा संस्तुत्य बहुधा नम्रदेहा व्यजिज्ञिपन् ॥ ५३

देवाः —

नन्दीश्वर जगत्स्वामिन् सर्वेशाशासदागमम् । विज्ञाप्यार्तिं त्वमस्माकं प्रशमय्य शमंकुरु ॥ ५४
विज्ञापितस्सुरैरेवं शिलादमुनिसंभवः । ज्ञातकालरसदा नन्दी शिवयोश्चिशहस्तयोः ॥ ५५
प्रोवाच विबुधानेवं त्रिलोकयान्तःपुराधिपः । युष्माकमीशसेवार्थं नैवावसरस्सुराः ॥ ५६
इदानीं तिष्ठतात्रैव समयेस्त्वीशदर्शनम् । ऊचुरेवं गिरा सूनोर्दिशिलादस्य शिलोच्चये ॥ ५७
कैलासेऽथ गते काले पुनरप्रार्थयन्सुराः । दर्शनं देवदेवस्य दयासिंधोरुमापतेः ॥ ५८
शालङ्कायनपौत्रं तं समभ्यर्च्योपतस्थिरे । अन्तःपुरं प्रविश्याथ नन्दी पुनरुमापतेः ॥ ५९
प्रणम्य पादौ देवस्य व्यजिज्ञिपदिदं वशी । आदित्या देव सर्वेशा दृष्टप्रभहतौजसः ॥ ६०
आगत्य द्वारि तिष्ठन्ति चिरकालमतन्द्रिताः । कांक्षन्ते देवदेवस्य दर्शनं हरिणासुराः ॥ ६१
कुर्वनुग्रहमेतेषु कुमारानुचरेषु ते । इति विज्ञापितः स्वामी जगतामखिलात्मनाम् ॥ ६२
सोमस्ससूनुर्भगवान् ददावनुमतिं तदा । प्रवेशने सुरेन्द्राणां मुनीन्द्राणां च योगिनाम् । ६३
लब्धानुज्ञोऽथ नन्दीशः सर्वानेव सुरोत्तमान् । अजिरं देवदेवस्य निन्ये धन्यतरो वशी ॥ ६४
यत्नेन महता देवाः नचिराल्लब्ध सन्निधिम् । ते प्रणम्य महादेवं सांबं ससुतमव्ययम् ॥ ६५

सर्वेशं सर्वकर्तारं सर्वलोक महेश्वरम् । गीर्भिरर्घ्याभिरर्घ्याभिस्सुमुख तमुपानयन् ॥ ६६

नन्दी दन्तावल त्वग्वसनपरिकरं मन्दमन्दं समेत्य
स्वामिन् सर्वज्ञ शम्भो त्रिपुरहर विभो देवदेव त्रिशूलिन् ।
देवास्सेन्द्रास्ससाध्यास्सकलमुनिगणा विष्णु पद्मासनाद्या
स्त्वत्पादाम्भोजयुग्मप्रणतिमधिगतास्तेऽद्य धन्याः कृतार्थाः ॥ ६७

इति श्रीस्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
सम्भवकाण्डे षट्त्रिंशोऽध्यायः ॥

---

॥ अथ सप्तत्रिंशोऽध्यायः ॥

श्री स्कन्देन तारकपुरी गमनम् ॥

अथ देवा महादेवमम्बिकापतिमव्ययम् । कृताञ्जलिपुटास्सर्वे मुनयश्च व्यजिज्ञपन् ॥ १

देवाः —

भगवन् देव सर्वेश भगनेत्रनिपातन । चिरं विप्रकृतास्स्माम् असुरैस्सुरार्दन ॥ २
शूरपद्मादिभिस्सर्वैस्तान् रक्ष रक्ष कृपाबलात् । कुमारेण तवानेन घातयैनान् सुरप्रियः ॥ ३
विज्ञाप्यैव विभोस्तस्तु सन्निधौ विबुधा मुदा । ततो देव प्रसन्नात्मा सर्वदाव विधीकसाम् ॥ ४
परित्राणाय जगतामालोच्य शिवया मुहुः । सुब्रह्मण्य जगादेदं चालिङ्ग्याघ्राय मूर्धनि ॥ ५
संहराय सुरारातीन् सुब्रह्मण्य मदाज्ञया । शूरपद्म दुरात्मानं सिंहवक्त्रं च तारकम् ॥ ६
सपुत्रमित्रस्वजनन्धिवातिभिस्सर्वैदानवैः । सर्वत्र तेऽस्तु विजयः क्वचिद्वा न पराभवः ॥ ७
आदिश्यानुसुमाकान्त कुमारायैवमात्मनः । रौद्रायैकादशात्मीयान्यस्त्राण्यदर्शयत् ॥ ८
शक्तिं च मनसा चैका सर्वशत्रुनिबर्हणीम् । ददौ द्वादश देवेशो द्वादशास्त्रिस्त्वयर्थत ॥ ९
तोमरं चक्रखड्गाख्य कुलिशेष्वसुदा क्रमात् । घण्टाकमलकोदण्डास्तथा प्रासपरश्वधाः ॥ १०
रौद्राण्यस्त्राणि शम्भवेका द्वादशाप्यायुधानिधै । ददौ देव प्रसन्नात्मा सहस्रादित्यसन्निभम् ॥ ११
नागाङ्क सर्वशस्त्राढ्य भयुताश्वसुसंयुतम् । अभेद्य कवचं हैमं नानारत्नविभूषितम् ॥ १२
अक्षय्यसायकापूर्णाविषुधी जगदीश्वर । तथारिं महास्त्रं सर्वशत्रुनिबर्हणम् ॥ १३
दत्त्वैवमस्रसम्पन्नमालिलिङ्गाङ्कसम्भवम् । आघ्रायाघ्राय तनयमोज मुहुर्मुहुरलङ्कृता ॥ १४
विससर्ज पुत्रार्थाय विश्वाधीनोऽपराजिणी । सापि साक्षाज्जगन्माता सर्वलोकमहेश्वरी ॥ १५
समालिङ्ग्यात्मनः पुत्रं सर्वाङ्गैरभिसङ्गृनम् । आघ्राय मूर्ध्न्याशीभिरभिसमाप्यहर्षिणी ॥ १६
जहि पुत्र सुरारातीनिति सा विससर्ज ह । सोऽपि सेनापति स्वामी सुरकार्यकृतोद्यम ॥ १७
कृतप्रदक्षिणस्तोत्र श्रद्धया जगतीपति । पितरावभिवाद्याथ प्राञ्जलिर्निर्ययौ ततः ॥ ।
त्रिपुतं गणनायानां वीरबाहुमुखानपि । पार्श्वयोर्द्विसाहस्र भूतवाहात्समन्विताम् ॥ १
सेनापतीनां वीराणामपेक्षया शिव । संयोज्य सुरसेनायै सुप्रसन्नेन चेतसा ॥ :
विबुधानिदमादेशो विष्णुब्रह्मादिकांस्तु । असौ जेष्यति युद्धार्थं महाबलपराक्रमः ॥ :
यामभ सुरा अद्य पश्यत महावादिभिः । मुनिभिर्योगिभिस्सिद्धैः सार्धं गच्छत निर्भयाः ॥ २
आदिश्यास्तद्विमावश सह गौर्याप्रहर्षिणी । ततो विष्णुमुखा देवाः षण्मुखं प्रणयमुखा ॥ २

प्रसाद्यानेकधा स्तोत्रैः प्रणम्यानुचयुस्सुखम् । ततो विष्णुर्मयात्मा वायुमाहूय माधवः ॥ २४
मनोजवस्य देवस्य शतांगस्य महीयसः । नियुतानांच धुर्याणां धृतं चक्रे सुरारिहा ॥ २५
देवदुन्दुभयो नेदुर्दिवि संकुलनिस्वनाः । ववृषुः पुष्पवर्षाणि समञ्जुलांजजालकम् ॥ २६
ननृतुर्मुनयस्सर्वे दण्डहस्ता जटाधराः । जगुः किंनरगन्धर्वास्तथा किंपुरुषांगनाः ॥ २७
ब्रह्मर्षयो वसिष्ठाद्याः नारदाद्यास्सुरर्षयः । अपठन् स्वस्तिमन्त्रांस्ते कौमारान् विजयप्रदान् ॥ २८
मातरस्सर्वलोकानां मुनीनां पत्नयस्तथा । कन्याश्च मुख्यनागानां जगुः कल्याणचेतसः ॥ २९
प्रजाश्च भगवान्विष्णुस्त्वष्टा च सुरतक्षकः । वीराणां वीरसैन्यानां वीरबाहुमुखात्मनाम् ॥ ३०
रथाश्वनानाविधानाधुर्यांननेकशः । आयुधानिच दिव्यानि वर्माणिच वितेनिरे ॥ ३१
सिंहधुर्यरथाः केचिद्गजधुर्यरथाः परे । व्याघ्रयुक्तरथाः केचिद्व्याळियुक्तरथाः परे ॥ ३२
भूतवाहरथास्तद्वद्वेतालगणसंयुताः । सर्पधुर्यरथाश्चान्ये सदश्वविधृताः परे ॥ ३३
निर्मिता पद्मकल्पाश्च सुरथास्तु धृतायुधाः । ततस्सर्वे सुसन्नद्धा नादयन्तो दिशो दश ॥ ३४
प्राचीं पूर्वं विनिष्क्रम्य दक्षिणाभिमुखाः पुनः । चेलुस्सर्वां दिशस्तेन समुत्थैः पांसुभिर्गणाः ॥ ३५
सुरयन्तो रथोद्धूतैर्गजवाजिपयोद्धतैः । सैन्यघोषेण महता निर्जितांभोधिनिस्वनाः ॥ ३६
प्रापुः कुलाचलं शीघ्रं गन्धमादनभूधरम् । अग्रे स्कन्दस्य वै जग्मुः प्रतापास्तदनन्तरम् ॥ ३७
सैन्यदुन्दुभिनिस्वानपातितमिकालकगोमुखैः । काहलीशङ्खमुख्यानां विजितांबुधिनिस्वनाः ॥ ३८
रथनागाश्वपादाताश्चक्रपाद क्षुराद्रिभिः । समुद्धतं रजोवृन्दमकरोत्सूर्यमण्डलम् ॥ ३९
पदातयोऽश्वाश्च रथिनो गजाश्च मदांभसः । रथिनो महिताश्च रत्नमणिकाञ्चनभूषणाः ॥ ४०
सैन्यानामुग्रवीर्याणामष्टोत्तरशतं ततः । नियुतंच गणेन्द्राणां शूराणां बलशालिनाम् ॥ ४१
आवृत्य देवसेनाग्र्यं सुब्रह्मण्यं जगत्पतिम् । वीरबाहुमुखा वीरा अनुजग्मुर्महारथाः ॥ ४२
पश्चाद्विष्णुमुखा देवास्ततो मुनिगणाश्च ते । देवानांच मुनीन्द्राणां पत्नयश्च ततःपरम् ॥ ४३
क्षणेन प्रापुरद्रीन्द्रं हेमकूटंच संयुताः । समालोक्य गिरिं क्रौञ्चं देवास्सम्भ्रमकातराः ॥ ४४
समाधयेन्द्रदिक्पाला भीतिकम्पितमानसाः । तत्र मायापुरीं तां च तारकासुरपालिताम् ॥ ४५
परिवव्रुर्भयोद्विग्नास्सुब्रह्मण्यं जगत्पतिम् । ततो मुनिवरः श्रीमान् वैदिको यज्वनां विभोः ॥ ४६
व्यजिज्ञपत् प्रणम्याग्रे प्रांजलिः प्रभवेऽन्तिके ॥ ४६ ॥

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे सप्तत्रिंशोऽध्यायः ॥

---

॥ अथ अष्टत्रिंशोऽध्यायः ॥

श्री स्कन्देन युद्धाय वीरबाहु प्रेषणम् ॥

नारदः —

पार्वतीनन्दन स्वामिन् प्रणतार्तिप्रभञ्जन । स्कन्द सेनापतेऽस्माकं सुराणां प्रीतिवर्धन ॥ १
अयं क्रौञ्चो महारौद्रः पूर्वमासीन्महासुरः । अगस्त्यस्य मुनेश्शापादद्रिभावमुपागतः ॥ २
तमेवमतिमात्रांगं सर्वलोकभयंकरम् । हन शत्रुं दुरात्मानं देवानां देवनायक ॥ ३
अतिदेऽस्य पुरी सा रक्ष्यतेऽतिभयङ्करी । अनुजोऽस्यां महारौद्रस्तारकाख्यस्य दुर्मतेः ॥ ४

तारको वसति स्वामिन् गजवक्त्रो महासुरः । अनेकरथहस्त्यश्वपदातिपृतनापतिः ॥ ५
कण्टकोऽयं महाधीरः करुणालेशवर्जितः । सुराणां भूसुराणाञ्च द्रोहशीलो दिवानिशम् ॥ ६
इष्टापूर्तापहर्तारं दुष्टं क्रुद्धं दुरात्मभिः । सैन्यैश्च महासेन संहरैनं दुरासदम् ॥ ७
प्रार्थितः प्रभुरेवं तैः नारदेनच देवपः । तारकासुरसंहारे मतिं चक्रे कृपालयः ॥ ८
आहूयोच्च महावीरं वीरबाहुमरिन्दमम् । विभज्यार्धंच वाहिन्या वीरबाहुपदानुगम् ॥ ९
चतुःपञ्चाशता मुख्यैस्ससदिदेश हरात्मजः । अष्टोत्तरच नियुतं गणनाथान् महाजवान् ॥ १०
वीरबाहुं महाबाहुं सन्दिदेश हरात्मजः । मायापुरीं महासैन्यैर्वीरबाहो महत्तर ॥ ११
क्रौञ्चेन सह दुष्टेन रुणद्धि गिरिणा रवम् । तारकञ्च दुरात्मानं शूरपद्मानुजं रिपुम् ॥ १२
ससैन्यं युधि सामात्यं निगृहाण दुरासदम् । मत्तोऽकममराश्सेना देवा विष्णुमुखा यत ॥ १३
कुतोऽपि भीतिरेतेषां स्थितेष्वस्मासु सन्निका । सेहेऽपराधमसभ्य येन केनाप्यनुष्ठितम् ॥ १४
तत्रास्माकं नकोऽप्यस्ति भारः परपुरञ्जय । नसंदेहोऽप्यभुजङ्गमाजा यै दुःखकारिणः ॥ १५
देवाया वालया लोके शास्यास्ते सतत मया । वीरबाहो महाबाहो शीघ्रमग्रे समाह्वय ॥ १६
ससैन्यपरिवारस्य रुणद्धि पुरमद्रिणा । आवृत्त्य कलहं दैत्यरक्षैतैर्यन्नारयन् ॥ १७
महवानुपदं सैन्यैरायास्यामि त्वरान्वितः । इति पूर्वं महाबाहुः वीरबाहुं सुरारिहा ॥ १८
विसृज्य गानकैरमे अगामामरनायक । तदाभीमेव देवाना हृदयाक्रिगंत भयम् ॥ १९
दुर्वी महानभूत्तेषां अग्राह हृदयतराम् । अथासुराणामुत्पाता महाघोरा पुरे पुरे ॥ २०
सपद्भूस्तदा शम्बरमुमाद्याविक्षमाः । ववर्षुरुधिरं मेघा यथा कर्मनिश्चया ॥ २१
शिखराण्यसुरेन्द्राणां प्रासादेभ्यो निपतिरे । अनन्ताहिफणा रणे ह्यविव ननर्दभू ॥ २२
नकस्मादुत्थितो लोके येनकेनाप्यलक्षितः । ग्रामपल्ली पुराण्यग्निर्ददाह मरुता सह ॥ २३
विशाश्च सर्वास्तेनाशु नानामापुर्महाग्निना । ववृषु पांसुवर्षाणि वायुयुक्ता बलाहका ॥ २४
अमेघस्तनितं घोरमगंलमजृम्भत । पेतुरुल्का महादीप्ताश्शासिन्यसुमंडलम् ॥ २५
तारानक्षत्ररूपाणि निपतन्तिस्म सर्वशः । आविर्बभूव सुमहान् धूमकेतुर्नभस्थले ॥ २६
आपस्युस्तुभिरे सर्वास्समुद्रा भृशफेनिला । क्रोशन्तिस्म शिवा रौद्रमशिवा रविसम्मुखम् ॥ २७
निपतन्तिस्म दैत्याना दुष्कलासद्दिशास्तपि । गृहे गृहेऽसुरेन्द्राणां कूर्मास्सञ्जज्ञिरे तदा ॥ २८
ददृशुरात्मनो विषमशिरस्कं च दर्पणे । आपसाद्यमुख्याश्च तेषां पशुर्घोमुखा ॥ २९
मुमुचुश्चाश्रुवर्षाणि तेषामश्वाश्च सर्वदा । रथेषु दैत्यराजानां गृधाः कङ्काश्च शिश्यिरे ॥ ३०
तस्युस्तपामकस्माच्च गजास्तूर्णमधोमुखा । शाखिनानपि ■ वृक्षान् कलयामासुरक्षिप्याः ॥ ३१
ददृशुश्चापमैन्द्रं ते अलेपु दितिसम्भवा । तत क्षणेन क्रकुभश्व्यस्स्क-न्दस्य सञ्चरन् ॥ ३२
मायापुरीं महासाला तारकासुरपालिताम् । महता सिंहनादेन बधरीकृतदिङ्मुखा ॥ ३३
मातृनामाङ्किता तस्य रक्षन्ती ■ चमामुचम् । इति दष्ट्वमहोत्पातदत्तुःपद्मासुरानुजः ॥ ३४
तारकोऽपि श्रुताशेषवृत्तान्तो विधिचोदितः । सैन्येन महता तत्र निर्जगाम युयुत्सया ॥ ३५
रथमारुह्य भक्ताश्च सर्वाश्च भरसम्भृतम् । सन्नद्धैर्युद्धदाक्षैस्सन्दैर्गर्गमयाजिभिः ॥ ३६
तदानीं तत्र सर्वत्र पुरे सन्नाह्यघोषकाः । श्रूयते ध्वनयस्तेषां निस्साम्राना निरन्तरम् ॥ ३७
निर्गत निर्गत राजा युद्धायामरपुङ्गवे । अनूमे महती वार्ता दूतायां गन्तुमिच्छताम् ॥ ३८
पुराग्निरीयुस्सर्वेश्च द्वारेभ्य पृतनास्तदा । निपतन्तिस्म सेनायां पताका ■ पायके ॥ ३९

तयोः समभवद्युद्धं वृत्रवासवयोरिव । प्रवृत्तेऽस्मिन् महायुद्धे रजोन्धतुमुले तदा ॥ २५
तयोस्समभवद्युद्धं सरशांबरयोरिव । शरैराच्छादयामास तं रुषा वीरकेसरी ॥ २६
तिष्ठतिष्ठेति निर्भर्त्स्य धून्वन्धनुरनुक्षणम् । ज्यानिनादेन महता बधिरीकृत दिङ्मुखः ॥ २७
तारकोऽपि महावीरो लघुहस्तः प्रतापवान् । शरवृष्टिं निरस्याशु वीरकेसरिमेघजाम् ॥ २८
मुमोच सपुनर्बाणान् स्वर्णपुङ्खान् शिलाशितान् । स्वनामचिह्नितान्दीप्तान् आशीविषनिभाननान् ॥ २९
सिंहनादं चकाराशु पुनःपुनरनेकधा । ततस्तच्चापमध्यस्सर्वानाशुगान्वीरकेसरी ॥ ३०
छित्वार्धमार्गे सहसा कणशो वीरकेसरी । क्रोधेन महता भूयो विहस्यारक्तलोचनः ॥ ३१
जहार वृत्रभिर्बाणैः किरीटं तारकस्य सः । करं करेण सन्ताड्य जहासच पुनःपुनः ॥ ३२
तस्मिन् पपात वै वृष्टिर्दिविदेवकरच्युता । झङ्कारैष्षट्पदालीनां मुखरीकृतदिङ्मुखा ॥ ३३
तारकः क्रोधताम्राक्षो गदया बलगर्वितः । जघानोरसि वेगेन वीरकेसरिणो रुषा ॥ ३४
ततः किलकिलाशब्दमूर्ध्वबाहुश्चकार सः । सतु तेन प्रहारेण मुमोह भृशताडितः ॥ ३५
तं दृष्ट्वा विक्रमं तस्य तारकस्य दुरात्मनः । वीरबाहुरमेयात्मा वीरयुग्मावृतो रथी ॥ ३६
तारकं प्रतिजग्राह सर्वासुरविमर्दनः । भर्त्सयन् बहुधा वाचा दानवान् रणमूर्धनि । ३७
तिष्ठतिष्ठ महादुष्ट दुरात्मन् कुत्र गच्छसि । मम दृष्टिपथं प्राप्य चिरं जीवितवानसि । ३८
मामुपेत्याधुना युद्धे जीवन् कुत्र गमिष्यसि । यद्यस्त्वमेवं संग्रामे भुवि वीरो महासुरः ॥ ३९
प्रत्युज्जगाम सहसा महेन्द्रमिव भूधरः । तयोस्समभवद्युद्धं मधुमाधवयोरिव ॥ ४०
यक्षगन्धर्वसिद्धेन्द्रैर्व्योम्नियुद्धं दिदृक्षुभिः । दिशः संछादितास्सर्वा विदिशश्चाप्सरोगणैः ॥ ४१
तारकोऽपि रथारूढो धनुरादाय वीर्यवान् । ज्यामारोप्य धनुष्कोट्यां ध्वनिना पूरयञ्जगत् ॥ ४२
ववर्ष शरवर्षेण वीरबाहुं रणाङ्गणे । बुधशुक्रसमीपेतु प्रावृषीव घनोदयः ॥ ४३
शरैराच्छादयामास वर्षैरिव महागिरिम् । ततश्शरचिते व्योम्नि तमसा च समावृते ॥ ४४
वीरबाहुरमेयात्मा विहस्य सहसा वशी । धनुरादाय सुमहच्छैलं धनुर्विदीश्वरः ॥ ४५
विस्फार्य करजाग्रेण विमृश्यज्यां महामनाः । चिच्छेद सहसा सर्वं चतुर्दशभिराशुगैः ॥ ४६
महता लाघवेनैव तदद्भुतमिवाभवत् । शरवृष्टौ निरस्तायां दुर्दिनेव तदुत्थिते ॥ ४७
प्रसन्नमभवत्सर्वं मनोभिस्सहनाकिनाम् । दृष्ट्वा तदद्भुतं कर्म वीरबाहोस्तु तारकः ॥ ४८
क्रोधेन महताविष्टश्छिन्नदलमविमीक्षणम् । अर्चितं कुसुमैर्नित्यं घण्टाचामरमण्डितम् ॥ ४९
आदाय भ्रामयामास करेणैकेन लीलया । करस्थेन त्रिशूलेन ज्वलता दानवाधिपः ॥ ५०
कालाग्निरिव संरेजे ज्वालामालासमाकुलः । मुमोच तं महासत्त्वो लीलया वीरबाहवे ॥ ५१
अनिवार्यं महारौद्रं वीरबाहोस्तदोरसि । पपात शितधारं तत् समूर्च्छत्तेन सक्षणम् ॥ ५२
दृष्ट्वा तत् सप्तवीरेन्द्राः परिवव्रुर्महासुरम् । तारकं वीरमत्युग्रं रथैर्नानाविधायुधैः ॥ ५३
तेषामायुधवर्षाणि समानां गजविक्रमः । शुण्डाघूर्णेन दण्डेन वारयामास वीर्यवान् ॥ ५४
गदया पुनरायस्तः तान् जघान रणेऽसुरः । पराजितेषु तेष्वेषु पलायनपरेषु च ॥ ५५
विधूय मूर्छां तत्कालं वीरबाहुररिन्दमः । ववर्ष शरवर्षेण तारकं क्रोधमूर्छितः ॥ ५६
सोऽपितं धनुरास्फाल्य कृतज्याघातभीषणः । पविचिच्छेद बाणौघैः लाघवं संप्रदर्शयन् ॥ ५७
शरैराच्छादयामास वीरबाहुं रणाङ्गणे । सोऽपि तानपि चिच्छेद पथ्यघे प्राज्यविक्रमः ॥ ५८
संभर्त्स्य वाग्भिर्धीरासिस्सिंहवत् द्विरदाननम् । तिष्ठतिष्ठ पुरो न त्वं मम जीवन् गमिष्यसि ॥ ५९

वदत्येवं वीरबाहौ महत्याह यथा ऽस सः । अज्ञात्वा वीरबाहो त्वं मत्सकं कथसे बलम् ॥ ६०
अनेकादित्यसंकाशं विष्णुचक्रमरिन्दमम् । संयुगे युध्यता तेन प्रहतं मुक्तं मया पुरा ॥ ६१
वृत्रारिकुलिशं शक्तिं वह्नेर्दण्डं यमस्य च । खड्गं च निर्ऋतेर्भस्तं विद्धि पाशं प्रचेतसः ॥ ६२
ध्वजं वायोः कुबेरस्य गदां शूलं त्रिशूलिनः । ब्रह्मास्त्रमपि मद्बाहुवीर्येणाशु निवारितम् ॥ ६३
पलायिताश्च ते युद्धे बहुवारं मया जिताः । इदानीं भूतसेनास्ते पश्यतोऽद्यैव सोदराः ॥ ६४
त्वामपि क्षणमात्रेण विजयिष्येऽद्य संयुगे । तथापि मायं पश्चाद्य जयिष्यामि बलैस्समम् ॥ ६५

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे एकोनचत्वारिंशोऽध्यायः ॥

---

॥ अथ चत्वारिंशोऽध्यायः ॥

तारकेण मायया युद्धम् ॥

अथ गर्जन्तमेवं तं तारकं मदविह्वलम् । क्षुब्धाम्बुमत्तदिग्चक्रकालमर्कं दुरासदम् ॥ १
वीरबाहुरमेयात्मा स्वनामपरिचिह्नितैः । नाराचैः स्वर्णपुङ्खाढ्यैः ज्वलत्पावकसन्निभैः ॥ २
अभ्याहतैर्जगत्यस्मिन् छादयामास तं तदा । तारकोऽपि शरश्लाघी सहस्रैरपि संयुगे ॥ ३
अमात्यान् पथि चिच्छेद नाराचैर्नामचिह्नितैः । लघुहस्तो वीरबाहुः पुनर्बाणान् शिलाशितान् ॥ ४
मुमोच तारकश्चापि तान् शितेन न्यवारयत् । शरैरग्नि रणे धन्वी तदद्भुतमिवाभवत् ॥ ५
पुनर्दशसहस्रेण ववर्ष युधि दानवः । तादृशैरेव तत्संख्यैः संदधे सोऽपि न्यवारयत् ॥ ६
तद्दृष्ट्वा तारकः क्रोधात् वीरबाहुसलाघवम् । पुनर्ददीपे सहसा युगान्ताग्निरिवापरः ॥ ७
आग्नेयमस्त्रं धनुषि सन्दधे तारको बली । तस्मिन् सन्दधति क्रुद्धे वाणमाग्नेयमद्भुतम् ॥ ८
ज्वालामालासहस्रेण लोकमावृत्य पावकः । दिदीपेऽब्दकटाहान्तं ज्वया चटचटाध्वनिम् ॥ ९
दग्धाऽग्निना जगत्यासं देवा दिवि चकंपिरे । वीरबाहुः स्वयमाशु मन्युनाथ परिप्लुतः ॥ १०
आग्नेयेनैव सहसा प्रत्यस्त्रेण न्यवारयत् । तदेतदद्भुतं लोके क्षुब्धमुग्रेण शाम्यति ॥ ११
करीन्द्रवदनः क्रुद्धो वारुणं सन्दधे पुनः । प्रावृषीव अगत्कृत्स्नमम्बुधाराप्लुतं क्षणात् ॥ १२
चञ्चलासन् यथाब्धास्मिन् स्तिमितैस्तुलादितम् । पुरोवातप्रणुन्नानां मभ्राणां संभ्रमोऽभवत् ॥ १३
प्राध्येतसमिदं वीरबाहुरालोक्य मन्युमान् । मन्युना संपरीताङ्गो वायव्येन न्यवारयत् ॥ १४
तेन तुर्णं क्षणार्धेन मेघवृन्दं महत्तरम् । अवग्रहसमाक्रान्तमिवशीर्णमभूत् क्षणात् ॥ १५
प्रसेदुश्च दिशस्सर्वाः प्रसन्नमभवन्नभः । सिद्धगन्धर्वयक्षाणां वृन्दाद्दिव्यदिवामला ॥ १६
वीरबाहोः पपातानु पुष्पवृष्टिस्तथोपरि । तारकोऽपि पुनस्तीव्रं सौरमस्त्रं समाददे ॥ १७
सहस्रांशुसहस्राणि तथोदीयुस्समन्ततः । युगपद्युगपर्यन्ते यथा लोकदिधक्षवः ॥ १८
वीरबाहुस्तदुद्वीक्ष्य वारुणास्त्रं समाददे । आविरासंस्ततो मेघास्तानाच्छाद्य दिवाकरान् ॥ १९
सोमास्त्रं तारकोऽमुञ्चत् तेनैतत्सोऽप्यवारयत् । ऐन्द्रमैन्द्रेण संहृत्य याम्यं याम्येन च क्षणात् ॥ २०
नैर्ऋतं नैर्ऋतेनैव वीरबाहुरवारयत् । ब्रह्मास्त्रं संदधे दैत्यः क्वचिदप्यनिवारितम् ॥ २१
उत्पपात नभस्येतदिदं सर्वदिशाखिलम् । वीरबाहुश्च तत्क्षिप्रं तेनैव प्रत्यवारयत् ॥ २२
पुनः क्रुद्धतरो दैत्यः प्राहिणोद्वीरबाहवे । नारायणास्त्रमत्युग्रः सर्वशत्रुनिबर्हणम् ॥ २३

तेनैतद्वीरबाहुश्च न्यवारयदयत्नतः । दृष्ट्वा विक्रमं तस्य वीरबाहोरसुरेतरः ॥ २४

मायी मायाबलेनैव महता मन्युना पुनः । रजोऽन्धकारे महति दृष्टिमार्गं निरुंधति ॥ २५

रूपाणि बहुधा कृत्वा युयोध रणमूर्धनि । प्रत्येकं बहुधा दिव्यान्यस्त्राण्यपि च सन्दधे ॥ २६

तैरस्त्रैरावृतो वीरबाहुरायोधनक्षितौ । सन्दधे वीरभद्रास्त्रं सर्वशत्रुनिबर्हणम् ॥ २७

मायामयानि तान्याशु विनेशुस्तस्य दर्शनात् । अन्तर्हित इव पुनर्मायी तारकसंततासुरः ॥ २८

युध्यन्निव रणाच्छीघ्रं पलायान्मायया क्षणात् । मोहयित्वा वीरबाहुमाशु तद्बिलमाविशत् ॥ २९

पलायनपरं हन्तुं नयुक्तमिति मानसे । प्रयुक्तं वीरभद्रास्त्रं पुनःप्रतिजग्राह च ॥ ३०

विवेशानुपदं तस्य वीरबाहुर्बिलं गिरेः । घोरं क्रौञ्चस्य दुष्प्रेक्ष्यं महापातालसन्निभम् ॥ ३१

मायावी सगिरिर्वाचा तारकस्यासुरेशितुः । मायाभिर्मोहयामास वह्निभिरसुराधमः ॥ ३२

अन्धकारो महानासीत् अत्यन्तम इवान्धयन् । प्रथमं पुनरामान्ति मार्गाश्च बहुधा गिरेः ॥ ३३

पिहितास्तत्र तैस्तैस्ते बहुरूपा भयानकाः । तेषु सर्वेषु वीरोऽपि गत्वा गत्वा न्यवर्तत ॥ ३४

नदृष्ट्वा तारकं दैत्यं हिजास्तस्यैवमायया । चिन्तामवाप महतीं वीरबाहुश्चिरं हृदि ॥ ३५

तादृशस्यापि वीरस्य यद्येवं मनसि व्यथा । क्रियेरन्नितरे लोके क्षणमात्रेणहि ध्रुवम् ॥ ३६

अहमन्योऽस्तु मोहोऽस्तु समोवा विभ्रमोऽस्तु किम् । नमे हस्तविमावन्यौ धनुरन्यत्तु मे शराः ॥ ३७

कुत्रवा यामयते गन्तुं क्वेह मार्गे समन्ततः । चिन्तयामास तस्यैवं मोहमाप मनोभृशम् ॥ ३८

तस्यानुपदमन्येऽष्टौ वीरकण्ठीरवादयः । भूतानि नियुतंचापि विविशुर्बलगर्विताः ॥ ३९

धनुर्भिस्सह पक्षावलम्बनाभ्याविचारतः । बिलाविषे वीरबाहौ स्वकप्राणसुराशयाः ॥ ४०

प्रविष्टमात्रास्ते सर्वे मोहमापुररिन्दमाः । तेषामपि पुनर्मार्गं पिदधे दानवाधमः ॥ ४१

सतांश्च मोहितान्वीक्ष्य मेने विजयमप्रभनः । इति क्रौञ्चबिले तेषु वीरेषु पिहितेषु सः ॥ ४२

बहिर्निर्गत्य दुष्टात्मा रथेन महताऽसुरः । गणवृन्दं महद्घोरं चासुराद्भुतं बली ॥ ४३

जिघांसुरति संक्रुद्धो बभूव दनुजाधमः । सज्यं धनुरथादाय तूणीसाक्षय्यसायकौ ॥ ४४

ययौ रथमारुह्य गणसेनाविमर्दयन् । गणाश्च सेनास्सेनान्यो वीरबाहु वशानुगाः ॥ ४५

युयुधुश्चापि शस्त्रेण नानाप्रहरणास्तदाम् । अनायका अपिचिरं तदद्भुतमिवाभवत् ॥ ४६

शिलाभिर्वृक्षखण्डैश्च पर्वतैश्च महत्तरैः । प्रसह्य धैर्यमास्थाय शतशोऽथ सहस्रशः ॥ ४७

एकोनैकाभिरहितः तारको रणकोविदः । क्रोधेन महता युक्तदशरथायणपर्वतान् ॥ ४८

महत्या सेनया मुक्तान् चिच्छेद कणशो रणे ॥ ४९ ॥

प्रमन्यतां सुरपृतनेशचाह्विनीं महामनास्सकल सुरेतराधिपः ।
सरोवरं सरसिजषण्डमण्डितं गजाधिपो मदकलितो यथा तथा ॥ ५० ॥

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे चत्वारिंशोऽध्यायः ॥

---

॥ अथ एकचत्वारिंशोऽध्याय ॥
श्री स्कन्दतारक संवाद ॥

अथ भग्ना महासेना वीरबाहोरनायका । अरक्ष्यमाणा हाहेति क्रन्दमाना भृशातुरा ॥ १
एकस्य पद्वीमन्यो नयाय भयार्पीडित । प्रत्येक निशितैर्बाणैर्दैत्यानेन मर्दिता ॥ २
दिशश्च विदिशश्चापि प्राणत्राणपरायणा । ब्रह्माश्चविष्णुप्रमुखा भीतभीताश्चकम्पिरे ॥ ३
दृष्ट्वैतत्क्रन्दन तत्र देवानाञ्च अथ मुनि । नारदस्सहसाऽभ्येत्य देवसेनापति प्रभुम् ॥ ४
वृत्तान्तमेवमाचख्यौ सुब्रह्मण्याय सूरये । प्रणम्य परया भक्त्या प्राञ्जलिर्भीतमानस ॥ ५
भगवन्नद्य सर्वे वीरबाहुमुखागणा । निले प्रविश्य मौनस्य मधुनर्निर्गता विभो ॥ ६
जीवन्ति वा गवेषीता आनीमोऽसुरमायया । सेनाश्च निविशुस्तस्य दिक्षुसर्वासु सर्वदा ॥ ७
देवाना दानवाङ्गीतिर्हृदये द्विगुणीकृता । भाति नरसर्वदा देव भयान्महतमहत्तरात् ॥ ८
नारदोक्तमथाकर्ण्य देवदेवागमस्तव । उवाच क्रोधताम्राक्षो निर्दहन्निवतत्क्षणम् ॥ ९
महर्षिपे सकले हत्वा असुराणा दुरात्मनाम् । अधुना विबुधा भीति विमुञ्चन्तु सुरोत्तमाम् ॥ १०
मामाश्रितानां लोकेऽस्मिन् कुतो भीति क्व क्षति । भक्तानाञ्च जगत्यस्मिन् कारय सर्वथा मद ॥ ११
मद्भक्त यदि यो मोहात् समाहति नराधम । न सहेऽहं दुरात्मानं सेहे मत्पदाश्रितम् ॥ १२
पश्यो मम जगत्यस्मिन् यदि शङ्काभिरर्दितः । मद्भक्तपोषणाय पुष्णामि पृथिवी तले । १३
वीरबाहुमुखान्यापि क्रौञ्चमायाविमोहितान् । क्षिप्रमेवोद्धरिष्यामि क्रौञ्च मित्यासुराधमम् ॥ १४
तारक संहरिष्यामि रणे दानवमञ्जसा । स एवासुरसैन्यानां सैन्यमिन्द्रा दुरात्मनाम् ॥ १५
भ्रातरो सिंहमुखस्यापि शूरपद्मस्य चोभयो । अजस्त्रानामशेषाणां आशु समाप्स्यति ॥ १६
आख्यस्याम् चोदयास्य समीरण समीरणे । सारथ्यस्य सामर्थ्यं सर्वस्सन्दायायुधा ॥ १७
इति संचोदितो वायुस्सुब्रह्मण्येन सादरम् । युग्यानां वहृयामास्यानामसुतदश ॥ १८
भेरीदुन्दुभयोदिव्यास्सहस्रशः सर्वदा । निस्साणमुख्याणाञ्च डिण्डिमानां सहस्रशः ॥ १९
देवाश्च ऋषिभिस्साकं जयशब्दादिमङ्गलम् । अवदन् वन्दिनस्सर्वे वैतालिकगणा जगुः ॥ २०
अपदानानि दयस्य षण्मुखस्यामितौजस । क्ष्वेलिता गर्जिता चैव वल्गितानुयकानाम् ॥ २१
पदातीनां रथादिसु वहुधाश्च अजृम्भिरे । अश्वानां हेषितान्येव गजानां बृंहितानि च ॥ २२
कूजितानि रथानां च निस्सीमान्निःस्वनम् । सेनापतेस्तदासेना दैत्यसेना समावृणोत् ॥ २३
साथ सा प्रतिजग्राह सागरं सागरो यथा । ततो युद्धमभूत्तत्र तुमुलं रोमहर्षणम् ॥ २४
वीरान्दानवदेव प्रतिवीरैरजस्रमूत् । प्रतीच्छ प्रहरस्वाथ तिष्ठतिष्ठ क्व गच्छसि ॥ २५
संरम्भाच्च वराणां तदा शुश्रुविरे गिरा । जिगाय सेना दैत्यस्य सेना शम्भुतनूभुव ॥ २६
तां पुनर्दैत्यसेना सा तथाभूयस्तपावसा । पूर्वपश्चात्मरुद्भ्रां वार्धीरिव महोर्मय ॥ २७
तदन्तरे समालोक्य तारकः पार्श्ववर्तिनम् । उवाच दूतं कुशलं सगर्दीत्या वरेतसः ॥ २८
[illegible] कमपदाश्च कामवाह्निरिवापर । मध्ये सेनासमुद्रस्य रथो नौरिव संस्थित ॥ २९
भाति नानामणिमयो विचित्रध्वजमण्डित । तस्मिन् कोऽयं संकाशो भाभासितदिगन्तर ॥ ३०
दुर्धर्षश्च समरे साक्षात् कालाग्निरिव कराग । कोऽयं सूरा सुरानीक वन्दितोऽमलविग्रह ॥ ३१

गूढचापं वदन्प्रेक्ष्य तारकं दानवप्रभुम् । प्रणम्याग्रे पिधायास्यं दूतो वाग्मी व्यजिज्ञपत् ॥ ३२
विज्ञप्तिं शृणु मे विद्वन् नप्रमत्तो मदीरिताम् । योऽयं शिवसुतः स्कन्दो लोकनेता दुरासदः ॥ ३३
सर्वेषामेव देवानां सोऽयं रक्षापरः प्रभुः । समग्रबलवीर्योऽसौ शारण्यश्शरणैषिणाम् ॥ ३४
शंभोस्साक्षात् जगद्भर्तुः सर्वेक्षादधिको बले । सत्ये धैर्ये च सामर्थ्ये शरासनविकर्षणे ॥ ३५
सौभाग्यमस्य कन्दर्पं दर्पविद्रावणौषधम् । कामान्तक पुरच्छेद दक्षाध्वरहरोहरः ॥ ३६
सोऽयं सोमावतंसोऽस्य संयुगे स्थातुमक्षमः । अन्ये के धन्विनो लोके मन्ये धन्यतरविशारदः ॥ ३७
यः पुत्रमीदृशं लोके लेभे देवाभिरक्षकम् । दीपाच्छिखावद्यद्दीप इवाभूदेषदैशिकः ॥ ३८
प्रोक्तं दूतमुखादेवं वाक्यं श्रुत्वाथ तारकः । प्रोवाच सारथिं प्रेक्ष्य वाचा गंभीरनादया ॥ ३९
सारथे धूर्जटेशस्य लोकनाथस्य शूलिनः । रथे कोऽप्यर्कसङ्काशस्सोऽयमेष विराजते ॥ ४०
तमेनं प्रति यत्किंचित् अस्ति वक्तव्यमद्य मे । तदग्रस्थिरथस्यास्य रथं प्रतिरथं मम ॥ ४१
प्रापयाशु ममादेशादविलंबं महामते । इति सञ्चोदितस्तस्य सारथिर्विनयान्वितः ॥ ४२
रथाश्वान् चोदयामास मनोमारुतरंहसः । प्रापयामासच क्षिप्रं सुब्रह्मण्यान्तिकं रथी ॥ ४३
निरूप्य तं रथे शंभु कुमारं मारकोमलम् । दृष्ट्वाश्चर्यमज्ञानात्तारकः क्षणमोहितः ॥ ४४
कोटिसूर्यप्रतीकाशं कोटिशीतांशुशीतलम् । प्रसन्नषण्मुखांभोजमष्टादश विलोचनम् ॥ ४५
द्वादशायुधसंपन्नं भुजद्वादशमण्डितम् । ततः प्रोवाच संवीक्ष्य सुब्रह्मण्यं सुरेतरः ॥ ४६
भोभोबालादधाम् शंभोर्भुवनानामधीश्वरः । ईदृशो यस्य पुत्रस्त्वं लोकनेता जगत्पतिः ॥ ४७
तदा त्वामधुना वाक्यं मदीयमिदमादरात् । क्षणमाकर्णय हे स्वामिन् पश्चात्कुरु यथामति ॥ ४८
सुरासुराणामन्योन्यं जन्मारभ्याधिकासुत । सिद्धं वैरमपाकर्तुं नशक्यमपि केनचित् ॥ ४९
वयं द्विनाम द्विषतस्तेष्वस्मान् बलशालिना । तत्सर्वं चन्द्रचूडस्य प्रसादेन नचान्यथा ॥ ५०
यथा शिवस्तथा त्वं च तस्यात्मासि यतःश्रुतः । पूज्योऽसि यद् कस्मात् त्वमस्मान्योद्धुमागतः ॥ ५१
देवा विष्णुमुखा ह्यसुरस्मान् हन्मो वयं च तान् । त्वं हि साक्षात् परंब्रह्म शिवोद्भव शिवोऽसि नः ॥ ५२
श्रुत्वैतज्ज्ञापितं तस्य दानवस्य विहस्य सः । प्रोवाच देवसेनानीस्तारकं प्रतिनिर्भयः ॥ ५३

स्कन्दः —

त्वमद्य कोपदासभ्यं दानवेषु रथे स्थितः । किमर्थं भेत्सि मामेत्य किंनाम किमिहागतः ॥ ५४
तारकस्तदुपश्रुत्य प्रत्युवाच हरात्मजम् । नाम्नास्मि तारको लोके तारकश्चासुरानुजः ॥ ५५
युष्माभिश्च नचास्माकं कलहो न कदाचन । स्कन्दः-ईशोऽस्य जगतः कर्ता सुरासुरगुरुस्स्मृतः ॥ ५६
ईष्टे शक्तिभिरत्यर्थमीशानीभिरिदं जगत् । तन्नचेदीशिता कुर्याज्जगतः कथमीशिता ॥ ५७
एषामिदंधियलोकानामसंभेदाय शङ्करः । सेतुरुक्तस्ततस्सेतुर्मर्यादायाः प्रवर्तकः ॥ ५८
स्वादौ धर्मं द्विधा तेन विभक्तं विश्वमूर्तिना । विध्यात्मनेति कर्तव्यं एकमन्यन्निषेधतः ॥ ५९
न कर्तव्यमितीदाशः नैव लंघ्या सुरासुरैः । निषेधवर्ती दुष्टात्मा शिक्ष्योऽन्यस्समुदीरितः ॥ ६०
आज्ञालंघनदृष्टो निग्रहार्हपरमीशितुः । अनुग्रहस्य तच्छिष्टशिष्टदुष्टौ यतस्तुतौ ॥ ६१
यूयं च बहुधा लोके दुष्टस्वनिरतास्सदा । प्राणिपीडापरा नित्यमिष्टापूर्तविनिन्दकाः ॥ ६२
विश्वं च बहुधाजातं जायमानं जनिष्यति । सर्वो रुद्रो जगत्कर्ता विश्वाधिप इतिश्रुतिः ॥ ६३
जगच्च तच्छरीरं तच्छरीरी तेन शंकरः । तस्मादत्र जगत्यस्मिन् यस्य कस्यापि देहिनः ॥ ६४
अनिष्टमाचरन् लोके शिवानिष्टकरः स्मृतः । देवाश्च विष्णुप्रमुखास्तदाज्ञापरवर्तिनः ॥ ६५

तेषां जगत्त्रयस्यापि रक्षणार्थं जगत्पतिः । त्वद्युद्धक निग्रहार्थं नो मामसृजत्कृदिशावः ॥ ६६
वाहिन्याच महत्याथ बहुधा चतुरंगया । तस्य योद्धुं युष्माभिरहमत्रागतः स्वयम् ॥ ६७
मामयंस्याविशत्युं मां त्वं सद्यो युध्यस्व तारक । प्रेषयेमंच वृत्तान्तं त्वयैष्योऽद्य मा ज्वलः ॥ ६८
भूयः प्राकारदुर्गाणि संरक्षस्व बलेरितः । नमे दृष्टिपथं प्राप्य जीवन्भूयो गमिष्यसि ॥ ६९
युष्मद्विमर्दिता देवा विष्णुब्रह्मनृपादयः । चुकुशुर्देववेषस्य सन्निधौ बहुधाभयात् ॥ ७०
तस्य संहरिष्यामि दुष्टं युष्मत्कुलं क्षणात् ॥ ७०½

इति श्री स्कन्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे एकचत्वारिंशोऽध्यायः ॥

---

॥ अथ द्विचत्वारिंशोऽध्यायः ॥

श्री स्कन्देन तारकवध प्रतिज्ञा ॥

श्रुत्वैतत् तारको वाक्यं सुब्रह्मण्यस्य रुषा । स्फुरद्दशनदोष्ठश्रीर्भृकुटी कुटिलेक्षणः ॥ १
पुनः प्रोवाच वचनं विनिश्वस्य मुहुर्मुहुः । तारकः - भवाञ्छिशुर्न जानाति कथं योद्धुमिहागतः ॥ २
वयं हि बलिमद्गुणाढ्यसमरेष्वनिवर्तिनः । असुरास्सर्व एवैते स्वभावात्क्रूरचेतसः ॥ ३
ईशादीनपि हि नरसाधु निषेधो विधिरासुराः । स्वधर्मो विगुणः श्रेयान् परधर्मात्स्वनुष्ठितात् ॥ ४
यावन्तो ते सुराग्निस्यमत्क्रीडासहस्रशः । सर्वेषामपि देवानां निगृह्य बलमुत्तमम् ॥ ५
इन्द्रोऽपि निर्जितस्सर्वे यत्र निर्धूतसाध्वसैः । काङ्क्षावालाश्च ते सर्वे निराशाश्च कृता मया ॥ ६
मयापि निर्जितस्तूर्णं ग्रासमर्धं भक्षितम् । तास्सर्वे तिष्ठतु प्राप्ते विष्णुना यत्सुदर्शनम् ॥ ७
हरादयश्चैतत्प्रीतात् सहस्रार्कसमप्रभम् । मिहिरं तिमिरस्यारेरिवप्रत्ययिकमम् ॥ ८
संग्रामभूमिसदसा काञ्चिशीकेन विष्णुना । मामुद्दिश्य विमुक्तं तन्मद्वक्षः परिघट्टितम् ॥ ९
पतितं कुण्ठितारं तन्मया भूयो धृतं बलात् । कण्ठे निष्कमिव प्रांशुकमलापतिरक्षकम् ॥ १०
ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः । पुष्पदन्तस्सार्वभौमस्सुप्रतीकश्च दिग्गजाः ॥ ११
मच्छुण्डादतिसंभिन्न मस्तका दिक्षुदुद्रुवुः । इदानीं कुरुते वीरयाद्दुम्ये अनुभाष्यते ॥ १२
निवृत्तं निगृहीतास्ते गणाः क्रौञ्चविलान्तरे । सहकवाहिनीसेना समरे मद्गदार्दिता ॥ १३
मुकुन्देशा महावीरा नमयोधमहारथा । नानादिक्षु विशीर्णास्ता पुनरावर्तिदुर्लभा ॥ १४
सर्वमेतत्समालोक्य स्वयमत्रापि सांप्रतम् । आयोद्धुकामाद्दहोत सर्वेस्तमामक्रमंषि ॥ १५
युष्मास्वस्माकमाग्नेय कर्तिमपि विद्यते । यासो मदमजानाति यावा लोके महीयसी ॥ १६
तच्छ्रुत्वा सविधं पित्रोर्भूत्वस्सुखमवाप्नुहि । श्रुत्वेति वचनं तस्य तारकस्य हरात्मजः ॥ १७
विहस्योवाच सावज्ञं तं कोपस्फुरिताधरः । वृथा तारक दुष्टात्मन् कत्थसे चिरमीदृशम् ॥ १८
सर्वं तिष्ठतु ते वीर्यकथनं स्वयमात्थ यत् । विष्णुचक्रमुरस्येव निष्कत्वमितिसन्धन् ॥ १९
अहं तिष्ठामि गच्छामि योत्स्यामि यथारुचि । तव संस्मृत्य संस्मृत्य वीरसादितमद्य ॥ २०
भासि स्वरतोऽस्यर्थे शृणु सूनार्थमक्षमन् । विष्णुचक्रमपीतीह बहुमानपुरस्सरम् ॥ २१
अपि दाम्भसया प्रोक्तः कविना वीर्यशालिना । तस्यैतच्छृणु वाक्यस्य विमर्शं तद्गुरुमदम ॥ २२
वीरभद्रे पुरामुक्तं दक्षाध्वरयापार्थं । विष्णुना जिष्णुना चक्रमत्याहतमपि क्वचित् ॥ २३

तच्छिरोमुण्डमालायामेवैनैवतु भक्षितम् । भूतेनैकेन वपुरा गणमुख्येन खादितम् ॥ २४
शूलमुद्दिश्य देवानां सदोमध्ये मुरारिणा । विमुक्तं कुण्ठितास्यं तद्दक्षस्येश निरीक्षणात् ॥ २५
दधीचस्य मुनेः पूर्वमहास्थिपरिघट्टितम् । सत्रासमभयश्चक्रं त्वयैतद् बहुमन्यते ॥ २६
एतावत् भवतो वीर्यं यन्मदग्रे त्वयेरितम् । एवं विकत्थमानं त्वामद्य युद्धे क्षणान्तरे ॥ २७
छिनद्मि शक्त्या कृपणाद्यापे पादाब्जयोर्मम ॥ २७½

इति श्रीस्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
संभवखण्डे द्विचत्वारिंशोऽध्यायः ॥

---

॥ अथ त्रिचत्वारिंशोऽध्यायः ॥

ब्रह्मादिभिः स्कन्दप्रणामः ॥

उक्तमात्रे कुमारेण तारकः क्रोधमूर्च्छितः । धनुरादाय सुमहत् सज्यं कृत्वातिनिष्ठुरम् ॥ १
ज्यानिनादेन महता पूरयन् सदिशो दश । ववर्ष बहुधा बाणान् स्वामी शुक्लवाम्बुदः ॥ २
छादिताश्च दिशस्सर्वा मण्डलं सवितुः क्षणात् । निपेतुरुल्कास्सर्वत्र ज्योतींषीव नभःस्थलात् ॥ ३
चुक्षुभुस्सागरास्सर्वे चकम्पेव वसुन्धरा । स्कन्दोऽपि धनुरादाय ज्याघोषमुखरं महत् ॥ ४
तद्बाणवर्षं घोरं च वारयामास सायकैः । सहस्राणां सहस्राणि नाराचाशीविषोपमान् ॥ ५
मुमोच तारकः क्रुद्धः पुनरेव हरात्मजे । सर्वांश्च सहसा वीरो वारयामास तत् क्षणात् ॥ ६
सहस्राणां सहस्रैश्च सायकैर्नतपर्वभिः । पुनश्च दशभिर्बाणैः स्वनामपरिचिह्नितैः ॥ ७
जघान तारकः स्कन्दं क्षिप्रहस्तः स्मयन्निव । अधारयत्ततस्सोऽपि क्रीडन्निव रणाङ्गणे ॥ ८
ततस्तु तारकः क्रुद्धस्सारथिं प्राह वीर्यवान् । सूताद्य हरपुत्रेण संयुगे योद्धुमिच्छता ॥ ९
करोमि समरक्रीडां चोदयाश्वान् ममाधुना । सव्यापसव्यमार्गेण सामर्थ्यं मे प्रदर्शय ॥ १०
तथेति सारथिस्तस्य चोदयामास सैन्धवान् । सव्यापसव्यमश्वांश्च यथाभूरतिवेगतः ॥ ११
स्कन्दोऽपि सारथिं वायुमाह समितिञ्जयः । वायो रथं ममापीत्थं मण्डलं भ्रामय क्षणम् ॥ १२
इतीशपुत्रवचसा वायुस्सारथिरात्मवान् । चोदयामास वाहांस्तान् लक्षायाशु मनोजवः ॥ १३
अपसव्ये सुरस्थे सव्यं सव्येऽप्यसव्यकम् । अन्योन्यं भ्रमतोरेवं रथयोस्स्वामिदैत्ययोः ॥ १४
सिद्धचारणगन्धर्वयक्षैर्युद्धदिदृक्षुभिः । व्योम संछादितं क्षिप्रं पुष्पहस्तैरनेकशः ॥ १५
एवं पुनस्ततोऽन्योन्यं स्वामिनौ सुरवैरिणाम् । चापमादाय सहसा ज्याशब्दं घनघर्षरम् ॥ १६
सततं सततं विप्राः क्षिप्रहस्तौ जयार्थिनौ । तारकः क्रोधताम्राक्षः शरैर्द्यामभयप्रदम् ॥ १७
छादयामास सहसा द्यां च भूमिं च सर्वशः । तत्सर्वमपि देवस्य कुमारोऽपि कुशाग्रधीः ॥ १८
वारयामास वेगेन क्षिप्रहस्तः प्रतापवान् । पुनरेकेषुणा स्वामी तारकस्य शरासनम् ॥ १९
ददौ दाताऽर्थिनां भूरि तथा प्रत्यर्थिनामपि । सपुनश्चापमुत्सृज्य अग्रमन्यत् दृढं धनुः ॥ २०
आदाय तरसा भूरि सहस्राणि शरान् बहून् । निरस्य शरजन्मापि क्षिप्रमेवाशुगैः पुनः ॥ २१
सपुनश्शतसाहस्रैश्छित्वा तद्धनुरद्भुतम् । तुतोद तारकं चापि मर्माणि प्रथितैश्शरैः ॥ २२
द्वयेनैवेषुणा शुण्डां विषाणं च स्वलाघवात् । चकर्त बहुधा बालो बालकेसरिविक्रमः ॥ २३
तेन क्रुद्धतरो दैत्यश्शरैराशीविषोपमैः । रथात् ध्वजं द्विधाचक्रे तदद्भुतमिवाभवत् ॥ २४

सोऽपि शंभुकुमारोऽपि शरैराशीविषोपमैः । धनुश्छित्त्वा सहस्रेण सारथिं चाप्यमारयत् ॥ २५
तारकस्सोऽथ बलवान् स्वयमेवाश्वचोदकः । चापमन्यत्समादाय पट्टकाञ्चनसंयुतम् ॥ २६
सायकानां सहस्रेण सारथिं षण्मुखस्य च । तुतोद पचमानं च तेन क्रुद्धो हरात्मजः ॥ २७
तारकं क्षिप्रहस्तस्सन् शतधा बाणानवाकिरत् । जघान च ललाटेऽस्य नाराचानां सहस्रकम् ॥ २८
अमूर्च्छत्तारकस्तेन ललाटेऽभिहतो भृशम् । तं दृष्ट्वा सारथिस्तस्य रथं युद्धादपावहत् ॥ २९
क्षिप्रमेव ततस्तस्य येये वीरा महारथाः । रुरुधुश्च बलैरन्यैः गजैरश्वैस्सहस्रशः ॥ ३०
मुमुचुश्च शरान् भल्लान् विपाठांश्च क्षुरप्रकान् । नानाशस्त्राणि वृक्षांश्च शैलानपि महोच्छ्रयान् ॥ ३१
कुमारो देवदेवस्य सुकुमारोऽपि लीलया । निवार्य शस्त्रवर्षाणि दानवांमोहजाल्ययम् ॥ ३२
चकार सर्वानपि तान् कीनाशग्रहिणोऽतिथीन् । त्यक्तमूर्च्छो महामोहो दानवस्तावदुत्थितः ॥ ३३
उपालभ्यात्मनस्सूतं शिपहस्य क्रोधविह्वलः । हतसेनोऽपि सेनान्यमभ्यधावत्सहसा बली ॥ ३४
अभिद्रुत्यात्मसेनायाः विनाशेन च संयुगे । मुमोच क्रोधताम्राक्षो ब्रह्मास्त्रं हरसूनवे ॥ ३५
अभ्याहतं क्वचिद्वापि प्रलयानलसन्निभम् । शरासनात्समुद्धृत्य तारकस्य महच्च तत् ॥ ३६
पदे पदे चकाराशु प्रणामं हरसूनवे । निकटं प्राप्य तद्ब्राह्मं तुष्टाव च जगद्गुरुम् ॥ ३७
आग्नेयं वायवैन्द्राख्यं वारुणं सौरमासुरम् । गान्धर्वं याक्षमत्युग्रं संमोहनमरिन्दमम् ॥ ३८
तानि सर्वाणि देवस्य समीपं प्राप्य संयुगे । कृतांजलिपुटानीशं तुष्टुवुर्विश्वपूजितम् ॥ ३९
स पुनस्संयुगे तानि विविधान्यभिधाय च । मनसाऽव्ययं समरे दिव्यं पाशुपतं महत् ॥ ४०
सन्दधे धनुषि क्षिप्रं सर्वसंहरणक्षमम् । तदपीशकुमारोऽपि रौद्रमप्याहृतं क्वचित् ॥ ४१
ज्वालामालावृताण्डान्तर्भुवनं भुवनेश्वरः । दधौ हस्तेन चैकेन लीलयैव रणाजिरे ॥ ४२
अस्त्रेषु विफलीभूतेष्वाजमुख्येषु दानवः । क्रोधेन महताविष्टो जगाद रथसारथिम् ॥ ४३
सारथे कार्तिकं शत्रुं सेनानीकैकसत्वरः । आवृत्याप्यभिभूत्यर्थं दुर्जयस्य रणाजिरे ॥ ४४
समापतस्व सहसा भ्रामय स्यन्दनं मुहुः । पुनश्च पुरुहूतादि सर्वेशान्त्यर्थमग्रगे ॥ ४५
आदेशात्तस्य दैत्यस्य मायासूनोर्महारथम् । सारथ्यधर्मवित्क्षिप्रं चोदयामास वाजिनः ॥ ४६
क्षणार्धेन वै क्षिप्रं बभ्राम भ्रमसंभ्रमम् । भ्रममेवासुरस्सोऽपि स्वर्णपुङ्खान्मनोरमान् ॥ ४७
पत्रिणस्तान् शितफलान् सुवर्णशतपर्वणः । ववर्ष कोटिशः क्षिप्रं शरानाशीविषोपमान् ॥ ४८
किमादत्ते ति तूणीरात् सन्दधाति धनुष्ययम् । किंवा विसृजति क्षिप्रमिति केनाप्यलक्षितः ॥ ४९
शृण्वन् देवैर्दत्तं चापं प्रलयमेघवत् । आच्छादयच्छरवर्षेण दिशोऽपि व्योममण्डलम् ॥ ५०
कुमारस्यापि पवनस्यन्दनस्याग्रमनोजवान् । शतसाहस्रमश्वांस्तान् चोदयामास मण्डलम् ॥ ५१
मन्दोदितोऽपि तत्पूर्वमायोगं ददहे यथा ॥ ५२

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे त्रिचत्वारिंशोऽध्यायः ॥

---

॥ अथ चतुश्चत्वारिंशोऽध्यायः ॥

॥ शक्तिप्रमोचनं तारकस्य वधः ॥

सूतः —

अथादाय कुमारोऽपि महामेरुनिभं धनुः । सम्पूर्णमाप सप्ताह्न ज्यानिनादेन पूरयन् ॥ १

ककुभोऽष्टौ बधिरयन् सत्यपातालकानपि । वृष्टिं निवारयामास तारकायुद्धसम्भवाम् ॥ २
स्थितोरथवरे विप्र भ्रमयतितरां शसी । अभूदनवकाशोऽसिन्नाकाशे युद्धसंभ्रमे ॥ ३
यक्षचारणगन्धर्वाः सिद्धैर्युद्धदिदृक्षुभिः । ततो युद्धमभूद्धोरं तुमुलं रोमहर्षणम् ॥ ४
अनूपममनिर्देश्यं स्कन्दतारकयोरपि । स्कन्दतारकयोर्युद्धं स्कन्दतारकयोरिव ॥ ५
जयोनैकतरस्यासीदपिवाऽऽसीत्पराजयः । यदा विजयते स्कन्दस्तदा देवास्तशासिरे ॥ ६
ववर्षुः पुष्पवर्षेन्च सिद्धगन्धर्वकिन्नराः । यदा विजयतेऽन्योपि दानवास्तं शशासिरे ॥ ७
शाक्तोऽपि सर्वसंहारे क्षिप्रमेव हरात्मज । बालो लीलाविनोदाय प्रतिहन्त्यथ दानवम् ॥ ८
युयोधास्तहरालोके कुर्वन्च खेलनास्पदम् । या चक्रं पुराशुण्डा दानवस्य हरात्मज ॥ ९
साच तानि विषाणानि वराङ्गयोऽपि जज्ञिरे । तत कुद्धतरस्स्वामी पुनश्शुण्डा विषाणके ॥ १०
चकर्त सहसाभूयो भूयस्तान्याशुजज्ञिरे । छन्नेषु शुण्डादन्तेषु सेनान्या बहुधायुधि ॥ ११
मायावी मायया जेतुं मतिचक्रे महासुर । क्षणादन्तर्हितो दैत्यस्तस्य पश्यतोविभो ॥ १२
क्रौञ्चस्य च गिरेरन्तर्दुरात्मा लोककण्टक । क्रौञ्चेन सह सञ्चक्र मायां मायाविशारदः ॥ १३
कार्ष्णायसं राजतञ्च हैरण्यं त्रिपुरं गिरि । विद्युन्माली तारकाक्ष कमलाक्षो बभूवतुः ॥ १४
ईशस्तु पुराणि भूत्वा भूत्यमास्थित । ददाह स्मितमात्रेण तदद्भुतमिवाभवत् ॥ १५
पुनर्मेघोऽभवत्क्रौञ्च सोऽश्मवर्षमवाकिरत् । महावायुरसौ भूत्वा बभञ्ज जगदीश्वर ॥ १६
समुद्रवपुषा शैल परिणाम जगामह । बडवाग्निरिवाभाति दिदीपे त्रिदिवौकसाम् ॥ १७
आबभाम तमीशोऽपि शुष्कोडुकलीलया । चकपालविरिजेक्षे क्षिप्र क्रौञ्चो महागिरि ॥ १८
तारको लोक अभवदन्धकार इवापर । विनाश्य लोकालोक तमन्धकारमुमासुतः ॥ १९
कोटिभास्करसङ्काशो दिदीपे लीलयासदा । हिमवान्निषधो विन्ध्यो माल्यवान्पारियात्रकः ॥ २०
गन्धमादनशैलोऽन्यो हेमकूटो महागिरि । सम्बभूव क्रौञ्चो मायया दानवाधमः ॥ २१
ऐरावत पुण्डरीको वामन कुमुदोऽञ्जन । पुष्पदन्तस्सार्वभौम सुप्रतीको बभूव स ॥ २२
तारको मोहयन् स्कन्द चकार कदनं महत् । क्षिप्र स्कन्दकुमारोऽपि वज्रमादाय वीर्यवान् ॥ २३
चिच्छेद भूधरान्सर्व करिणोऽष्टौच संयुगे । द्रावयामास वेगेन तदद्भुतमिवाभवत् ॥ २४
आग्नेयमारुतमत्युग्रमादधाते धनुष्यतौ । रूपमर्द्धमथार्धेन स्कन्दोऽप्यशमयद्रथा ॥ २५
कालाग्निकोटिसदृशा क्रौञ्चोऽस्त्रवद्दैश्वरीम् । गळधार्कसहस्राभ तारकोऽपि रणाजिरे ॥ २६
तेजोभिस्तस्योभ्यांसा दिशोदशा जगत्त्रयम् । अकम्पे पृथिवी सर्वा सागरा कम्पिताश्शुराम् ॥ २७
त्रिस्त्रुर्दिग्विपवस्सर्वे मुनयस्सिद्धचारणा । भूतानां पततश्चैव कान्दिशीका प्रदुद्रुवु ॥ २८
ततश्शरवणोद्भव सर्वशत्रुनिवर्हणीम् । शक्तिं मूर्तामिवात्मीया सर्वयत्नेन संयुगे ॥ २९
मुमोचाशु विनाशाय तारकस्य च मायिन । क्रौञ्चस्यच गिरेरीशकुमार कृत्तिनावर ॥ ३०
सा व्याप्य गगनं शक्तिस्सर्वा समदिशा क्षणात् । जाज्वल्यमाना प्रभया भासयन्ती दशाशह ॥ [illegible]
रसनेव युगान्ताग्नेर्लेलिहाना जगत्त्रयम् । विकिरती स्फुलिङ्गानि घण्टा चामरमण्डिता ॥ ३२
कालाम्बुघनसंघात शतकोटिसमस्वना । पश्यता सर्वदेवाना मारायन्ती भयं [illegible] ॥ ३३
भित्वा दैत्यशिलाभेरं क्रौञ्चञ्च विनिपात्य तं । ता मायामपि संहृत्य सहसा विश्वमोहिनीम् ॥ ३४
युगपत्तस्य सेना ता हतशिष्टामपि क्षणात् । मोहितान्वीरबाह्वादीन् क्रौञ्चान्तर्मायया कृती ॥ ३५

वह्निर्निनाद सहसा कार्तिकेयः सुरारिहा । हतनिद्रास्समुत्तस्थुरिवैते प्रकृतिं गताः ॥ ३६
समुत्तस्थुः क्षणात्तेऽपि प्रत्यासन्नांगसंचयः । य इमं पठते नित्यं शृणुते वा नरोत्तमः ॥ ३७
तारकक्रौञ्चसंहारमध्यायं सुशोभनम् । तं दृष्ट्वा शत्रवस्तस्य पलायंते भयंगताः ॥ ३८
श्रुत्वैनं माधवो दैत्यं हिरण्यं बलशालिनम् । हिरण्याक्षं महाक्रूरं सोमकंचाजयद्रणे ॥ ३९
बलभद्रोऽजयच्छक्तिमिदाक्रणमंडले । इन्द्रोऽपि दैत्यान् पापिष्ठान् बहूनायोधमध्यगान् ॥ ४०

इति षण्मुखवाक्या तारकं दैत्यमुग्रं गिरिमपि बहुमायं क्रौञ्चमन्यांश्च दैत्यान् ।
रणभुवि बहुलीलस्संजघान कार्तिकेयः सुरमुनिनरभूत्यै पश्यतामेव तेषाम् ॥ ४१

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे चतुश्चत्वारिंशोऽध्यायः ॥

---

॥ अथ पंचचत्वारिंशोऽध्यायः ॥

॥ देवगिरिवासस्वीकारः ॥

यदा यक्षसुरारातेः प्रविश्य क्रमनिर्गता । मयासक्थिरा असे तदा शब्दो जितांबुधिः ॥ १
विदिता न च केनापि तारकान्तर्गता यदा । तदैव विदितास्सर्वैः यदाऽसौ दानवाधमः ॥ २
ऊर्ध्वोत्प्लुत्य विपति बहुधाऽसुरनायकः । पतितावि... तदद्भुतमिवाभवत् ॥ ३
तारकं निहतं दृष्ट्वा शक्त्या देवा महर्षयः । मुदा परमया देवं ते पुष्पैस्समवाकिरन् ॥ ४
ननृतुर्मुनयस्सर्वे जगुः जय जयेति च । वीरबाहुश्च तेऽन्ये च नियुतं च गणाधिपाः ॥ ५
चतुःपञ्चाशदपि ते सेनापतय एव च । कृताञ्जलिपुटा भूत्वा निकटं प्रापुरीशितुः ॥ ६
अग्रेऽस्य तस्थुरमितः प्रमथेन्द्रियमानसाः । तांश्च प्रोवाच सुप्रीतः सर्वानालोक्य शांकरिः ॥ ७
यूयं याता महावीरा व्यसनं दनुजाधमैः । दैवादद्य विनिर्मुक्ताः कृच्छ्रादस्मान्महत्तरात् ॥ ८
स्वस्था भवत ते यूयं कृपया मम विश्वपाः । ते प्रत्यूचुः स्थितेऽस्माकं त्वयि साक्षाज्जगत्पतौ ॥ ९
काक्षतिः कान्यथा स्वामिन् कारुण्यानिर्दयानिधे । त्वत्पादकमलेप्सूनां किंवा दुष्करमीश्वर ॥ १०
अभिनन्द्येति वदतः सर्वानपि दयानिधिः । आहूय वीरबाहुं तमसुरारि निषूदनः ॥ ११
दिव्यं पाशुपतं मुक्तं तारकेण दुरात्मना । गृहीतमात्महस्तेन सुब्रह्मण्यो हरात्मजः ॥ १२
प्रासादस्याहतं लोके तस्मै तद्वीरबाहवे । पुष्पवृष्टिरभूत्तत्र कल्पवृक्षसमुद्भवा ॥ १३
देवदुन्दुभयो नेदुः दिवि संकुलनिस्स्वनाः । ननृतुर्मुनयस्सिद्धाः जगुः किन्नरयोषितः ॥ १४
मेनिरे विबुधास्सेन्द्राः शूरपद्मासुरं हतम् । तं च सिंहमुखं युद्धे कुमारेणैव लीलया ॥ १५
तेषामपि च सन्तोषं समालोक्य जगत्पतिः । युद्धभूमिं परित्यज्य हिमवन्तं गिरिं ययौ ॥ १६
तैस्साकममरैस्सर्वैः गणपैरपि सेनया । तत्र स्थित्वौषधिप्रस्थे तं च मातामहं गिरिम् ॥ १७
संभाव्य सहसा भूयस्तमामन्त्र्य नगाधिपम् । प्राप देवगिरिं देवसेनानीररिमर्दनः ॥ १८
तस्मिन्नवसरे प्राप्तुरसंप्राप्त तदाज्ञया । अनुग्रहमसौ कर्तुमिच्छन् देवगिरिं प्रभुः ॥ १९
सेनां निवेशयामास चतुरंगसमाकुलाम् । महारथो रथात्तस्मादवतीर्य हरात्मजः ॥ २०
उवास रजनीं तत्र कृतसायाह्निकः कृती । कृतातिथ्यस्स गिरिणा मुदा परमया युतः ॥ २१
देवाश्च तत्र देवेशं शाङ्करिं सर्वसिद्धिदम् । ददृशुरनुप्राप्य प्रणिपत्य स्तुत विभुम् ॥ २१

देवाः —

भगवन्नत्र देवेश स्कन्द सेनापते प्रभो । स्थातव्यमत्र देवेन त्वया रात्रिरियं प्रभो ॥ २३
वयमिच्छाम देवेश त्वदर्चाविधिजं प्रियम् । अनुजानीहि भगवन् अनन्तमहिमालय ॥ २४
ततः प्रसन्नो भगवान् तेषां दिविषदां तदा । ददावनुज्ञां स्वार्चायां भक्तवश्यो हरात्मजः ॥ २५
ततस्ते ब्रह्मविष्ण्वाद्या देवास्सर्वे जगत्प्रभोः । आहूय विश्वकर्माणं अतिशिल्प मनोरमम् ॥ २६
पुरं परमशोभाढ्यं पुरुहूतध्वजाकुलम् । अत्र देवगिरावेव विधेहि शिवसूनवे ॥ २७
आवासयोग्यमत्यर्थं अद्रिकूट निभालयम् । गणानां गणमुख्यानामावासक्षममद्भुतम् ॥ २८
राजाधिराजसूनोश्च राजवेश्म महोच्छ्रितम् । विचित्रचित्रशोभाढ्यं विविधालयसंकुलम् ॥ २९
विश्वकर्मन्विधेह्याशु क्षिप्रमस्मत्समाज्ञया । इति शिल्पी सुरेन्द्राणां लब्धानुज्ञः क्षणार्धतः ॥ ३०
निर्ममे पुरमेतस्य कुमारस्य प्रियं कृती । विचित्रहेमप्राकार मणिगोपुरमण्डितम् ॥ ३१
सहस्रभौमप्रासादं सर्वरत्नैरलंकृतम् । वीथीशतसहस्राढ्यं वितानकुसुमोज्ज्वलम् ॥ ३२
वापीकूपतटाकाद्यैः मणिसोपानमण्डितैः । मण्डितं पुण्डरीकाभं चंद्रभानुसहस्रभम् ॥ ३३
प्रावेशयन्महासेनं देवा देवेशसंभवम् । सर्वानपिच तान्वीरान् वीरबाहुमुखानपि ॥ ३४
देवदुन्दुभिसन्नाद शङ्खशृंगारवाकुलम् । गृहान् प्रविविशुस्सर्वे यथार्हं गणपुङ्गवाः ॥ ३५
मरीचिः काश्यपोऽत्रिश्च वसिष्ठो वदतांवरः । विश्वैर्वेदागमार्थज्ञैः पूर्णकुम्भकरैः परैः ॥ ३६
कृत स्वस्त्ययनास्सर्वे संगीतकविभास्वरम् । हरात्मजं सह ब्रह्मविष्ण्वाद्यैस्त्रिदशोत्तमैः ॥ ३७
तदर्हं रत्नभवनं प्रावेशयन्नरिंदमम् । आकम्प्य पादुके चित्रे वीरबाहुकराहृते ॥ ३८
प्रविवेश गृहं स्वामी प्रसन्नेनान्तरात्मना । अलंचकार रत्नाढ्यं सिंहासनमनुत्तमम् ॥ ३९
तत्र देवाधिदेवस्य कुमारो जगतां पतिः । तस्मिन् सिंहासने चारु समासेदुषि विश्वपे ॥ ४०
सर्वे ते जगतां कर्त्रे सर्वेशतनये सुराः । संतोष्य विविधैः स्तोत्रैः विधृताञ्जलिमस्तकाः ॥ ४१
अर्चयामासुरेतानि अर्घ्याद्यैरुपचारकैः । वीरबाहुमुखान्वीरान् तस्यावरणदेवताः ॥ ४२
आमध्यार्घ्यं यथान्यायं सप्ताशोक विधानतः । मन्यमानाः स्वमात्मानं कृतार्थं विबुधोत्तमाः ॥ ४३
ऊषुस्सन्तोषमतुलं संप्राप्य सविधे विभोः । कुमारोऽपि जगद्वन्द्यः शिवयोश्चित्रकृत्ययोः ॥ ४४
आवासमात्मनश्चक्रे सदा गिरिवरं गुहम् । तदादि जगतामादिः कैलासमिव शङ्करः ॥ ४५

शिवयोरतिचित्र कृत्ययोः तनुभूरातिनिवारकस्सताम् ।
गिरिमावसथं चकार तं गणपैर्देवगणैश्च सादरम् ॥ ४६

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे पञ्चचत्वारिंशोऽध्यायः ॥

---

॥ अथ षट्चत्वारिंशोऽध्यायः ॥

तारकपत्नीनां अनुमरणम् ।

तारके निहते क्रूरे सबले बलिना युधि । कुमारेणामरेड्येन कुलिशायुधशालिना ॥
ततस्तस्य प्रिया नारी साक्षादिव रतिस्स्वयम् । तन्महिष्यस्तथैवान्याः युद्धभूमिमुपेत्यताम् ॥
रुरुदुर्भृशदुःखार्ता कुर्यं इव सुस्वरम् । हा नाथ नाथ दैत्येन्द्र त्रैलोक्यामितविक्रम ॥

विहाय क्वाद्य नवसर्वाः किमुकारणमद्य हो । वयमद्येव तरसा वह्निमार्गमरिन्दम ॥ ४
समभ्येत्य तवास्माकं भवामः परिचारिकाः । अद्य देवा निरातङ्काः शूरपद्मो हतोऽद्यवै ॥ ५
अद्य सिंहमुखश्चापि सानुबन्धो हतो ध्रुवम् । यस्योरसि हरेश्चक्रं प्रत्यहन्यत निष्ठुरे ॥ ६
कथं बालस्य साशक्तिः तद्भित्वाऽसूनभक्षयत् । अस्त्रं ब्रह्मशिरो यस्मिन् कुण्ठितामिहठादभूत् ॥ ७
वज्रिवज्रमभूत्कुण्ठं तद्वक्षः शिशुना कथम् । इति नार्यो बहुविधं विलप्य करुणस्वनम् ॥ ८
स्वांके तदङ्गमारोप्य परिष्वार्य समाकुलाः । हृदयं शोकसंतप्तं अश्रुवर्षैरवाकिरन् ॥ ९
विलपन्तीषु तास्वेवं तत्पतीष्वासुरात् पुरात् । महत्या सेनया साकमसुरेन्द्रो सुतोऽस्यवै ॥ १०
नाम्नाऽसुरेन्द्रसंप्राप्य गजवाजिरथैरथी । सिंहास्यनगराद्दैवात् सिंहविक्रान्तविक्रमः ॥ ११
यदृच्छयाऽऽगतस्तूर्णं पितरं द्रष्टुमुत्सुकः । वार्तां निशम्य स पितुर्मध्ये मार्गं हताशयः ॥ १२
तरसा पुरमभ्येत्य छिन्नमूल इव द्रुमः । पपात विह्वलन् द्वारि परिदेवनधर्मकैः ॥ १३
एकवासा निरानन्दो मुक्तकेशोऽवनौ लुठन् । [illegible] तात हाऽसुराधीश क्वासौ लोकतापक ॥ १४
महोन्नतेदृशां लोके नाश्चर्ये विद्यते परम् । यद्वक्षो विष्णुचक्रेण भूषितं कुलिशेन च ॥ १५
पततस्तनयस्यैव शक्त्या भग्नं किमीदृशम् । युद्धभूमिं शनैरेत्य योऽविश्वाल समाकुलाम् ॥ १६
निहतं पितरं दृष्ट्वा तारकं पतितं भुवि । विललाप भूरि तासां मातॄणां अनयञ्शुचम् ॥ १७
अथाग्निस्तर्पयेद्देवानां सम्यक् शान्तिमुपागतः । अथेन्द्रस्य शची भार्या स्वर्गिणामप्सरोगणाः ॥ १८
सुखिनोऽथ सुरास्सेन्द्राः स्वर्गस्तेषां भवेत् पुरम् । अथ सिंहमुखश्चापि शूरपद्मश्च दानवाः ॥ १९
निहतासौ हतप्रायो भग्नो धातुक दक्षिणः । विलप्य बहुधा दीनः प्रसमीक्ष्य दिशो [illegible] ॥ २०
हस्तेन हस्तं संपीड्य दष्टदन्तोष्ठभीषणः । क्रोधरक्तेक्षणश्चाभ्यद्विहस्य च पुनः पुनः ॥ २१
भवत्विति वदन् भूयो भूयो वक्षोल्लसत्करः । चितामारोप्य पितरं गन्धचन्दनसंभृताम् ॥ २२
मातश्च तत्र संहृत्य गौर्याद्याः पतिदेवताः । और्ध्वदैहिकमस्यासां समाप्य विधिपूर्वकम् ॥ २३
निर्गत्य सहसा सार्कं सेनया चतुरङ्गया । भूयो वीरमहेन्द्राख्यं पुरमापाशु खिन्नधीः ॥ २४
पितुर्ज्येष्ठस्य तत्राशु शूरपद्मस्य पादयोः । पतित्वा भृशदुःखार्तो रुरोद बहुधा कपन् ॥ [illegible]
रुदन्तं दीनवदनं लुठन्तमवनीतले । तं समुत्थाप्य बाहुभ्यां शूरपद्मस्सुरेतरः ॥ २६
उरसा संपरिष्वज्य माभैर्माभैरिति ब्रुवन् । किमिदं किमिदं चेति पुनः पुनररिन्दमः ॥ २७
परिमृज्य तदाश्रूणि पृष्टवान् शोककारणम् । कथयामास तत्सर्वं तारकस्य सुतो रुदन् ॥ २८
ततस्स तस्य वचनं असुरेन्द्रस्य दानवः । शूरपद्मोऽग्नेस्तुल्य भ्रातुर्वधमनाकुलम् ॥ २९
नैवाद्रियत संस्मृत्य तारकस्य पराक्रमम् । असद्दिव्यभूतानां अण्डानां येऽधिपास्सुराः ॥ ३०
नस्ते संपति मद्भ्रातुस्त्वे स्थातुमलं भुवि । हतस्संपति मद्भ्राता सकथं हरसूनुना ॥ ३१
धोतव्यमस्ति पुत्रत्वं भ्रान्तोऽसि किमु बालक । स्वप्ने दृष्टोऽसि किंबाल माभैर्माभैर्ममात्मज ॥ ३२

असुरेन्द्रः — भ्रान्तिर्नमे पितः स्वप्नो नानुवृत्तः श्रुतोऽपि च ।
संस्कृत्य पितरं साक्षान्मातृभिर्निहतं युधि ॥ ३३

कृतौर्ध्वदैहिको भ्रातुस्तदं प्राप्तस्त्वदन्तिकम् । हरसूनुभयात्तत्र क्षणार्धमपि न स्थितः ॥ ३४
भस्मितं यं नमस्येदस्त्वया कार्यः प्रमोऽधुना । शपेऽहं तव पादाब्जे सर्वथा दानवोत्तम ॥ ३५
तावन्मात्रमिदं नैव मयेदमिनिपूदन । मत्साक्षागतं विद्धि सर्वं तेन महौजसा ॥ ३६

वचनमिदममुष्य श्रोत्रशंकु स्वसुतोरमुरपतिरथैत्य स्वान्तरे शूरपद्मः ।
भयहृतपुरुधैर्यः स्वासन सिंहपादात् हरिविभुवि पतित्वा हाररोदेति हेति ॥ ३७

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकांडे षट्चत्वारिंशोऽध्यायः ॥

---

॥ अथ सप्तचत्वारिंशोऽध्यायः ॥

राजनीतिः ॥

अथानुजोऽस्य सिंहास्यस्छिन्नमूल [illegible] द्रुमः । केशानिचकीर्य बहुधा धूलिधूसर विग्रहः ॥ १
कराभ्यां तं समुत्थाप्य समाश्लिष्योरसा शुचा । बहुधा विलपन् दीनो हाहतास्मो विधे त्वया ॥ २
हरोदेति मुहुर्दीनो हाहेति मुखरो मुहुः । मन्त्रिणश्च ततस्सर्वे सैनान्यः पतयश्च ते ॥ ३
पुरोधसश्च विद्वांसश्चित्रितुल्येऽपि सर्वशः । शिरः प्रहत्य दुःखेन शूरपद्मोऽरुदनी भृशम् ॥ ४
मुमूर्च्छ बहुधा दीना विलप्य चिरमाश्रयम् । ततस्सर्वे समुत्थाप्य चिरमाश्वास्य मन्त्रिणः ॥ ५
पुनरुज्जीवयामासुश्चन्दनैरुपचारकैः । शूरपद्मो महापद्मो गतमूर्च्छो क्रुधान्वितः ॥ ६
दृष्ट दन्ताधरोष्ठश्वसन् दिशस्सर्वा विलोकयन् । संघट्य दन्तैर्दन्तान् श्वाम् करचास्फोटयत्क्षणम् ॥ ७
निर्दहन्निव नेत्राभ्यां जगत्सर्वं चराचरम् । विहस्य दृष्टदन्तोष्ठो महाशनिसमस्वनः ॥ ८
चभाण [illegible] हुंकृत्य कंपयन्निव मेदिनीम् । हापेन मम पद्मदग्धे शृण्वन्तु वचनं मम ॥ ९
मत्संहरेयं तं युद्धे यदि स्कन्दं सयान्वयम् । अवश्यं तेन युद्धाग्रे हतस्स्यमप्यसून् क्षणात् ॥ १०
सन्नद्धा महती सेना युद्धाय चतुरंगिणी । निर्गच्छतु पुराद्य नायकैर्दैत्यविभिः ॥ ११
वादित्राणिच सर्वाणि घोषयन्त्वाज्ञया मम । मेर्यंश्चानाडयन्त्वत्र निस्वानैर्डिण्डिमैस्सह ॥ १२
आदिश्यैवं पुनः क्रोधाद्भिस्स्फिताक्षमण्डलः । आहूय सर्वांश्चप्रणिधीन् अथाहीद्रोपभीषणः ॥ १३
समाह्वयन्तु युद्धाय तं सूनुं त्रिपुरद्विषः । मयैव तरसाभ्येत्य त्वरया मीति ममाज्ञया ॥ १४
बालं ममानुजं मुग्धं वञ्चयित्वा रणाङ्गणे । अवधीत्समरैस्सार्धं शांकिरेयोऽधमे रिपुः ॥ १५
कथं निद्रासि भुहरेयं मयि जीवति सानुजे । वदन्तु निबुधावय भवतो वचनं मम ॥ १६
अथ प्रभुत्वं युष्मदुदरे धर्षयामिव । उक्त्वैवं मन्मुखाद्रूपं यात भूयो ममान्तिकम् ॥ [illegible]
दूतानिति समादिश्य पुनरप्यतिकोपनः । समादिदेश सहसा सूतं साधम्यवेदिनम् ॥ १८
सहस्रखरसंयुक्तं सारथे रथमानय । काञ्चनं सर्वरत्नाढ्यं सर्वायुधसमन्वितम् ॥ १९
अभेद्यं कवचं लौहं चारवाणं च दारुकम् । शार्ङ्गाणिच धनूष्यन्यान्यायुधानि महान्तिच ॥ २०
अक्षय्याविषुधी दिव्ये शरपूर्णे समानय । संप्रेरयत्यधिरूतस्तस्मिन्नसुरनायके ॥ २१
अमोघाख्यस्तदा मन्त्री मंत्रज्ञो मतिमान्वशी । राजानं प्रेक्ष्य सदसि नीतिशास्त्रविशारदः ॥ २२
प्रोवाच स्वच्छभीर्दैव राजनीतिर्महत्तरा । दुर्विज्ञेया अनैः कामं पामरैरमरैरपि ॥ २३
शक्तित्रययुताराज्ञाचार्यो सर्वसुखावहा । तस्माद्दानाकिरेकाम्या मन्त्रशक्तिर्महत्तरा ॥ २४
प्रभुशक्तिरनन्तान्या त्वयि सर्वत्र सर्वदा । जानासिच गुणान् षड्वं सन्धि विग्रहमेवच ॥ २५
यानमासनमन्यच्च द्वैधीभावं समाश्रयम् । अङ्गानि सप्त भोदेव स्वाम्यमात्यबलादिकम् ॥ २६
तस्मात्तवाद्य वक्तव्यं नास्त्यन्यत्सारयाम्यहम् । इदानीं शृणु यानार्हो नायं रुद्राक्षसंभवः ॥ २७

बालोऽनभिज्ञो बलवान् शक्तिपाणिररिन्दमः । नैवमस्ति न चास्माकं शङ्करे लोकशंकरे ॥ २८
स एव शंकरस्साक्षात् स्कन्दस्तस्यात्मजो यतः । यदृच्छयाऽऽगतेनैव तेन युद्धं तवानुजः ॥ २९
अनभिज्ञप्रकाराशु निधनंप्राप संयुगे । अथवा नाकिभिः शंभुरस्मद्वैरिभिरर्थितः ॥ ३०
बालकं प्रेषयामास सतूणास्योस्त्रदादिभिः । अतःपरं बलेनाल वैरं कार्यं त्वयाऽधुना ॥ ३१
इत्यमोघं वचः श्रुत्वा राजाऽमोघस्य धीमतः । रामं जयाम शनकै राज्ञोच्चैर्वं स्वमात्मनि ॥ ३२
भूयोऽप्यासनमारुह्य तूष्णींभावमुपागतः । तस्थिवानासने रम्ये महस्यसुरनायकः ॥ ३३
शूरपद्मो बकं काकं मयूरं श्येनमेव च । चक्रवाकं शुकश्चान्यानेतदादीन्विचक्षणः ॥ ३४
समादिदेश संभाव्य वस्त्राभरण भोजनैः । कथयामास तेषां च कर्णे रहसि पार्थिवः ॥ ३५
यूयं गत्वा महात्मानस्सुब्रह्मण्यान्तिकं क्षणात् । स्वनामसदृशै रूपैस्सर्वैर्वै कामरूपिणः ॥ ३६
ज्ञात्वाऽस्य किंरूपं किंवीर्यः कीदृशी मतिः । उद्योगोऽस्य पुनः कुत्र कदा जिगमिषाऽस्य वै ॥ ३७
कियत्या सेनया साकं सर्वदा पर्युपास्यते । केचिदस्तेन किंरूपाः केवा तत्र महाबलाः ॥ ३८
दिव्यैरस्त्रैरुपेताः के मंत्रालोचनतत्पराः । केऽस्यन्तरङ्गाः प्रभवः केषां वाच शृणोति सः ॥ ३९
गुणशक्तिविवर्गीन पराक्रमेषु कौशलम् । प्रस्थानञ्च किमुद्दिश्य तत्सेनानामसागरे ॥ ४०
विचार्य सुचिरं सम्यक् पुनरायात सत्तमाः ॥ ४०½

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे सप्तचत्वारिंशोऽध्यायः ॥

---

॥ अथ अष्टचत्वारिंशोऽध्यायः ॥

श्री हरन्वेत श्री केदार श्री काशी श्रीशैल श्रीविरूपाक्ष श्रीकाळहस्ति श्रीवेङ्कटाचल
श्रीकाञ्ची श्रीतिरुवेण्णैनल्लूर् श्री अरुणाचल श्री वृद्धाचल श्री चिदम्बर
श्री मायूर श्री कावेरीसंगमस्थल श्री चेन्नूर इत्यादि
पुण्यस्थलयात्रा तत्तन्मूर्तिदर्शनं च ॥

प्रासादानाविश्य भूयोऽपि सर्वैर्मन्त्रिभिरात्मवान् । उवास वासवार्तितनुजं चिन्तयन् हसन् ॥ १
ततो रात्र्यां व्यतीतायां तस्यां देवगिरौ सुधीः । देवैस्सह हरिब्रह्ममुखैर्मुनि योगिभिः ।
महत्या सेनया साकं सूर्ये समुदयत्यसौ ॥ २
त्यक्त्वा देवगिरिं कृच्छ्रात् प्रियमावासमात्मनः । व्योमगतिपथं प्राप्य व्योमविमनोऽभय ॥ ३
अगस्त्य चरिताम्रकामाशापालिररिन्दमः । प्राप्य देवगिरेस्तस्मात् स्थानानि परमेशितुः ॥ ४
अनुमहाय लोकानां कल्पितानि हरेणवै । भक्तपूर्णेन मनसा स्कन्दोऽसौ लोचनातिथिम् ॥ ५
प्रथमं तत्र केदारं केदारं शिवयोश्शुभम् । पीत्वा यत्रोदकं जन्तुर्मोक्षमाप्ननादरम् ॥ ६
न मातुः स्तन्यपानानां अभिज्ञो भवति ध्रुवम् । तत्र केदारनाथाख्यं लिङ्गमूर्तिं सदाशिवम् ॥ ७
पितरं जगतां साक्षात् आत्मनश्च जगद्गुरुम् । पूजयित्वाथ मनसा साकं मात्रा जगत्प्रभुम् ॥ ८
संप्राप काशीमीशस्य प्रकाशात्तेन कामिनीम् । श्रीपर्वतं च देवस्य विरूपाक्षमनुत्तमम् ॥ ९
श्रीमद्दक्षिणकैलास सुवर्णमुखरी तटे । नित्यं स्वायासमहितं वेङ्कटाचलमद्भुतम् ॥ १०

॥ अथ पञ्चाशोऽध्यायः ॥

॥ श्री स्कन्दस्य शोन्तीपुर गमनम् ॥

ततस्ते मत्स्यरूपास्ते सर्वे मुनिकुमारकाः । तटाके शरवणान्तश्चेरुरशफरलीलया ॥ १
इन्द्रः — एवं चिरगते काले कुमारत्वं यदा शम्भुः । शम्भोर्देहान्निर्गतस्साक्षाच्छरवण्यां त्वं जगद्गुरुः ॥ २
तदा गौरीजगन्माता वात्सल्यात् त्वां जगद्गुरो । अपाययत् स्तन्यमीशा साक्षादमृतमुत्तमम् ॥ ३
पिबति त्वयि देवेश किञ्चिन्निर्गलिताशये । अवस्कन्नं दयावत्यास्स्तन्यं तत् मत्स्यरूपिणः ॥ ४
पपुस्ते तेन सहसा भूयः स्वं रूपमाप्नुवन् । संप्राप्य रूपमात्मीयं सर्वे ते मुनिपुङ्गवाः ॥ ५
तत्रासीनं महादेवं त्वामेवेन्द्यस्य चांबया । तं प्रणम्य मुनिश्रेष्ठाः स्तवैरप्रीणयञ्छिवम् ॥ ६
अविमुक्तात्मसविधामशेषजननीमुमाम् । ज्ञानालोक्य सहस्रार्क शतकोटि समद्युतिः ॥ ७
शशास शास्ता सर्वेषामविलंघित शासनः । पराशर मुनेः पुत्रास्त्यक्तशापा ममाज्ञया ॥ ८
तपश्चरध्वमासाद्य परपर्वत शेखरम् । वर्तध्वं तत्र ते यूयं यावदागमनं सुतेः ॥ ९
सुब्रह्मण्यस्य देवस्य पादपद्मस्य सादरम् । तदा तमेत्य शरणं श्रेयः परमवाप्स्यथ ॥ १०
इतीशाज्ञां गतास्सर्वे मुनयस्संशितव्रताः । त्वां समासाद्य देवेश कृतकृत्या नसंशयः ॥ ११
इतीन्द्रस्य स्तुती कुर्वन् वचनं रुद्रनन्दनः । अनुजग्राह शक्रादीनमराणामधीश्वरः ॥ १२
साधु साध्विति संभाष्य सर्वानेव मुनीश्वरान् । सहैवागमनं तेषां अनुमेने महात्मना ॥ १३
सर्वैस्सह विनिर्गत्य तारकारिररिन्दमः । श्रीमच्छोन्तिपुरं प्राप प्रताप विधुतासुरः ॥ १४
तत्रापि निर्मितं तस्य भवनं विश्वकर्मणा । विचित्रं महदत्युच्च रत्नगोपुरमण्डितम् ॥ १५
तत्प्रविश्य पुरं शोन्तिमध्यवर्ति गृहं महत् । रुद्रपुत्रस्तदा भेजे रत्नसिंहासनं महत् ॥ १६
असौ सिंहासने तत्र साक्षादिव महेश्वरः । हाहाहूहूस्तुंबुरुश्च विश्वावसुरपि प्रभुम् ॥ १७
गन्धर्वाः किन्नराद्याश्च वैणिका जगुरादरात् । आजन्मकर्मयुक्तान्तमतिदिव्यविक्रमानुपम् ॥ १८
ववर्षुः पुष्पवर्षाणि महाविष्णुबलार्दनाः । असेविषुश्च मरुतश्चामरैस्सततशाङ्करिम् ॥ १९
अग्निश्च वरुणश्चोभौ छत्रं दधतुरद्भुतम् । व्यजनानि विचित्राणि समादाय सिषेविरे ॥ २०
अन्ये दिगीश्वरास्तत्र वीरबाहुररिन्दमः । खड्गं कनकरत्नाढ्यं विचित्रमणिसत्सरुम् ॥ २१
बाहुभ्यां संपरिष्वज्य पट्टकोशमसेवत । अन्येऽपि गणमुख्यानां नियुतं पृतनाधिपाः ॥ २२
यथोत्तरममी सर्वे यथायोग्यं सिषेविरे । षड्वक्त्रं द्वादशभुजं त्रिषण्णयन पंकजम् ॥ २३
स्मेरवक्त्रमुदाराङ्गं विचित्र मकुटोज्वलम् । विराजमानं महालये दिव्ये सिंहासनोत्तमे ॥ २४
मुनयस्तं समालोक्य वाञ्छितफलमापिरे । प्रहृष्टो देवदेवेशस्तत्र शरवणोद्भवः ॥ २५
समालोक्याह विबुधान् हरिब्रह्ममुखान् स्मयन् । श्रीस्कन्दः - असुरास्ते कियन्तस्ते किंरूपाः कस्यते सुताः
तेषां मुख्यतमः कोऽत्र ब्रूत सर्वे यथातथम् । श्रुत्वेति वचनं तस्य कुमारस्य, सुरोत्तमाः ॥ २७
परस्परं समालोक्य हरिणा ब्रह्मणा सह । बृहस्पतिं सवस्यूचुः कथयेति गिरांपतिम् ॥ २८
कुमारायास्मदीशाय पृच्छते शरजन्मने । वदत्स्वेवं सुरेन्द्रेषु नमस्कृत्य कृताञ्जलिः ॥ २९
वृत्तान्तमखिलं तेषां विनयेन बृहस्पतिः । असुराणां 'सुरेन्द्रारिहराय गुरवे नमः ॥ ३०
गुहायाकथयत्सर्वं दुद्रुहस्याय योगिनाम् । सूतः – अयंतु संभवाख्योहि कांडो वेदार्थसंमितः ॥ ३१
कथितः श्रेयसामेष निदानं विदुषां सताम् ॥ ३१६

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे संभवकाण्डे पञ्चाशोऽध्यायः ॥

संभवकाण्डः समाप्तः ॥

श्रीरामजयम् ॥

श्री महागुरुभ्यो नमः ॥ श्री विघ्नेश्वराय नमः ॥ अविघ्नमस्तु ॥

श्री शरवणोद्भवाय नमः ॥

# श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे

## ॥ आसुरकाण्ड प्रारम्भः ॥

॥ आसुरकाण्ड प्रारम्भ मङ्गल श्लोकाः ॥

ओं शिवं शिवप्रियन्देवं देवानामादिदैवतम् । भजेहं विघ्नराजन्तं विघ्नहन्तारमव्ययम् ॥
कविं कवीनामीशानं गणानां गणनायकम् । एकतुण्डम्महाकायं विघ्नेशान्तनमाम्यहम् ॥
कार्तिकेयम्महासेनं कुमारं पुष्करोद्भवम् । नमामि केकिकण्ठस्थं किङ्किणीनादमेदुरम् ॥

॥ अथ प्रथमोऽध्यायः ॥

शूरपद्मादीनां उत्पत्तिः ॥

ऋषयः —

भगवन् सूत सर्वज्ञ पुराणार्थविशारद । शूरस्य सिंहवक्त्रस्य तारकस्य महौजसः ॥ १
अन्येषामपि दैत्यानां उत्पत्तिञ्च तथाक्रियाम् । विस्तरेण यथातथ्यं शुश्रूषा भूयसी च नः ॥ २

सूतः —

शृणुध्वमृषयस्सर्वे कुमारायामितौजसे । उक्तं गीष्पतिना पूर्वं तद्वो वक्ष्याम्यनुक्रमात् ॥ ३
अस्ति दैत्यगुरुः कश्चित् काश्यपाख्यस्तपोधनः । ब्रह्मसूनुर्जितक्रोधः सत्यवाग्धर्मतत्परः ॥ ४
स तु दैत्यान् बहून् पश्च पंचिकोटि मितान् सह । दित्यां हि जनयामास महावीर्यं पराक्रमान् ॥ ५
तेषामधिपतिश्श्रीमानसुरेन्द्रो महाबलः । स तु मङ्गलकेशिन्या युक्तः पुत्रीमजीजनत् ॥ ६
सुरसाख्यामसादृश्यां सर्वाङ्गेषु सुन्दरीम् । सा तु दैत्यगुरुं शुक्रं पर्युपासत्तदन्तिके ॥ ७
शुक्रस्तु भगवांस्तस्यै विद्यानानाविधास्तदा । उपदिश्य तथा नाम मायेति च चकार ह ॥ ८
देवतानां समृद्धिञ्च दैत्यानां संक्षयन्तथा । दृष्ट्वा तु मनसा स्मृत्वा शैलादेर्मलणोऽध्वरे ॥ ९
बाल सरवनतमभं देवतानां सद्योन्नताः । विचार्याभासि कार्यञ्च तामाह वचनं पुनः ॥ १०
मायेय देवर्षिभिः मर्दिताश्च महासुराः । त्वत्पिताचासुरेन्द्रोय नितरां खिन्नमानसः ॥ ११
त्वयेदानीं प्रतिष्ठाप्य रक्षणीयाश्च दानवाः । तस्मात्त्वं काश्यपं गत्वा पुत्रानुत्पाद्य नाम च ॥ १२
कृत्वा तेषां समृद्ध्यर्थं यागञ्चैव व्रतन्तथा । उपदिश्य सुराणाञ्च क्षयार्थं त्वन्तपश्चर ॥ १३
तथेत्युक्त्वा च सा भूयः पितरञ्च व्यजिज्ञपत् । निर्ययौ च तदुत्तरेण साक्षान्मायास्वरेव सा ॥ १४
यैर्यैस्संप्रेक्षिताचासौ तांस्तान् मोहपरायणान् । परिकृत्वा तदानीं सा काश्यपो यत्र तिष्ठति ॥ १५
तत्र गत्वा महोद्यानमण्टपाञ्चित्रमण्डितान् । वापीकूपांस्तथावृक्षानारामान् पुष्पशालिनः ॥ १६
क्रीडा पर्वत संघञ्च मायया निर्ममे क्षणात् । एतत्सर्वं तदा दृष्ट्वा ऋषिः काश्यपनामकः ॥ १७
किमिदं चित्रमाश्चर्यं मण्टपादि कृतं तथा । ब्रह्मणा विष्णुना वाथ देवेनान्येन वा पुनः ॥ १८

स्वामिपुष्करणीतीरे विष्ण्वादिविबुधार्चितम् । श्रीमद्वाटाद्रीदेवं ऊर्ध्वताण्डव पण्डितम् ॥ ११
समाराध्यैव मनसा प्राप काञ्चीं मनेप्सितः । यत्र देवः स्वयं साक्षात् विष्णुमङ्गलपेशलम् ॥ १२
करोति सततं रक्षां तापस्वं सकलात्मनाम् । तत्र देवीं समाराध्य पराकाशविलासिकाम् ॥ १३
वेदैकाम्रतरोर्मूले विश्वापीशमजं ध्रुवम् । समाराध्य स्वयं साक्षात् सर्वलोकेश्वरेश्वरम् ॥ १४
कुमारगोष्ठप्रवर तत्राप्यावासमात्मनः । तत्र स्थानानि सर्वाणि शम्भोरमिततेजसः ॥ १५
भक्त्याऽऽराध्य च लिङ्गानि प्रसन्नेनान्तरात्मना । अरुणाचलमासाद्य तत्राप्येवमुपाचरत् ॥ १६
ततो जगाम सहसा पेण्णालङ्कुमात्मवान् । वृद्धाचलं समासाद्य शिवपरमलोकयत् ॥ १७
अन्यानि च शिवस्थानान्यवलोक्य नमस्स्वयतः । तत्र मायूरकं रम्यं गत्वा छायापाद्य संगमे ॥ १८
उत्तरेणाथ कावेर्या मध्याख्यामाय चापगाम् । तत्र चास्तमितस्सूर्यः तिमिरैरावृता दिशः ॥ १९
नमस्ताराभिरभितस्स्फुरिताभिस्समावृतम् । ऐन्द्रीमलंचकाराशु चकुभं कुमुदप्रियः ॥ २०
तमांसि च निरस्यात्मकिरणैः रजनीकरः । मणिमयास्तटेऽत्रैव वेश्मैस्सह शिखिध्वजः ॥ २१
इत्येवमस्तु तां रात्रिं रात्रिं चरविनाशनः । त्वष्टाथापि पुरीं रम्यां निर्ममेऽस्यार्थया शुभाम् ॥ २२
कुमारपुरमित्येव विश्रुतं भुवनत्रये । तन्मध्ये राजभवनं नवरत्नविचित्रितम् ॥ २३
तदध्युवास रजनीं भवने भवनन्दनः । सर्वानपि सुराध्यक्षाननुमेने गृहान् प्रति ॥ २४
तेऽपि जग्मुर्यथा स्वं स्वं शिविरं तदनुज्ञया । इन्द्रेतु शिविरं प्राप्य शयनं समुपेयुषि ॥ २५
तदा कापापुरोपान्त देवता रजनीमुखे । निक्षिप्त माण्डमिन्द्रेण भूषणानां पुराकिल ॥ २६
समर्पितवती भूयः सन्निधौ रहसि स्वयम् । मघवानपि तद्दृष्ट्वा भाण्डमाभरणस्य तत् ॥ २७
उद्घाट्य तत्र प्रथमं शच्या आलोक्य भूषणम् । सस्मार तां सहस्राक्षो विरहेणाकुलेन्द्रियः ॥ २८
स्मरन्त्येव हि सर्वेऽपि दर्शनात् सहकारिणः । कामस्तु लब्धावसरस्ततक्षेन्द्रं शरैश्शितैः ॥ २९
कौसुमैरपि कन्दर्पो विदर्पमकरोद्धरिम् ॥ ३०
सुरपतिरतिखिन्नो भूषणानीह कामी परिजनवनितानां हस्त आदाय भूयः ।
निजजनपरिवारानीत पुष्पाभिक्लृप्ते क्षणमपि निशिकल्प तद्वियोगाज्जिनाय ॥ ३१

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे अष्टचत्वारिंशोऽध्यायः ॥

---

॥ अथ एकोनपञ्चाशोऽध्यायः ॥

॥ स्कन्द पराचल गमनम्, पराशर पुत्राणाम् शापात् मोक्षणं च ॥

उद्यानेषु तटाकेषु न लेभे सञ्चरन्नपि । चिरं शर्म हरिर्निद्रां इन्द्राण्या विरहाग्निधि ॥ १
पल्लवास्तरणेष्वेव सर्वां तां रजनीं हरिः । विनाय युगसाहस्रकल्पां मत्वा तदा निशाम् ॥ २
कथं कथं चिन्मघवान् प्रभाते पुनरेव सः । संस्ताभ्य आत्मनात्मानं मनसैव महामनाः ॥ ३
विक्रियामपि देहेऽखिलमदनायुधसंभवाम् । आच्छाद्य चन्दनैरेव सकर्पूरैः सकुङ्कुमैः ॥ ४
अथ देवैस्सहस्राक्षः पुनस्स्कन्दाङ्घ्रिपङ्कजम् । सेवारसमना हृष्टस्सोऽयाप परया मुदा ॥ ५
कुमारोऽपि ततः कल्ये कृतपूर्वाह्णिकक्रियः । मातापित्रोः पदद्वन्द्वं समाराधन तत्परः ॥ ६
स्वयमानर्च पितरं लिङ्गमूर्तिं सदाशिवम् । भक्तिपूर्णेन मनसा देवीं च समुपाचरत् ॥ ७

तत्र विष्णुमुखा देवास्सेन्द्रास्सब्रह्मकास्तदा । साध्याश्च विश्वेऽपि तैस्सिद्धविद्याधरोरगैः ॥ ८
परिचक्रुरिहाचार्याः पुंस्सवनं तत्पराः । भक्त्या परमया तत्र श्रद्धया विधिपूर्वकम् ॥ ९
महाविभवविस्तारैः कृतपान्नप्रसाशने । कुमारेऽर्च्यति तस्मिन् स्वं पितामाप्यासहोमया ॥ १०
प्रससाद गणेन्द्रैस्स्वैरधिष्ठाय महावृषम् । अनुजग्राह सेनान्यमशेषेण स्वेन शङ्करः ॥ ११
अन्यैरपि महास्त्रैस्स्वैः रौद्रैः पाशुपतादिभिः । अन्तर्हितोऽथ भगवानंबया सह शंकरः ॥ १२
ततः प्रणम्य देवाय संप्रार्थ्य सुर सैन्यपः । रथमारुह्य सहसा देवैस्सह जगत्पतिः ॥ [illegible]
निर्जगाम पुरात्तस्मात् ब्रह्मणा विष्णुना विभुः । प्रस्थानसमये चापि पुनरन्यानि शूलिनः ॥ १४
स्थानानि सुमनोज्ञानि चक्षुषाऽवलोकयन्पितुः । गच्छंस्तदन्तरा चापि मरुभूमिमवाप सः ॥ १५
सातीव परुषा सर्वैरगम्या दावसन्निभा । तस्यां रवेरपि करास्सूर्यकान्त शिलोपरि ॥ १६
ज्वालाकणान्विमुञ्चन्ती विमुंचन्ति ततोऽधिकम् । शीतांशोरपि रश्मयो हिमवत्स्वापि रश्मयः ॥ १७
तां नैव शीतलां कर्तुं समर्थाः कालपापुरुः । तत्र ये मृद्धारुढारस्तु हिमभूनपश्च ते ॥ १८
प्राबृष्यपि शुचेरार्ति भजन्ति यत किं पुनः । फणामणीनां दवपस्तपोपामतलीकराम् ॥ १९
स्फुटितायां सदा मह्यां दह्यंते यत्र सन्ततम् । पशवः परिक्षिप्तस्तत्र येषामस्ति यदृच्छया ॥ २०
अन्यतो यान्ति ते सर्वे क्षणस्तुष्टांग सत्पथः । सापि भूस्समये तस्मिन् अनुग्रहाद्धि शांकरी ॥ २१
सुपद्मा सर्वकान्तानां जाता आंगलसन्निभा । मरुभूमिमतीत्यैनां महादेवांग संभवः ॥ २२
संप्राप तरसा देवः पारुपर्वतमद्रिपम् । तत्राथ पर्वते रम्ये सुनयप्यपमहौजसः ॥ २३
ततोऽनन्तश्च नन्दीच चतुर्मुख सभाद्वयः । चक्रपाणिश्च माळीच पर्वते तपसा पराः ॥ २४
रुद्रांग संभवं साक्षात् जगन्मुद्राघणोपतम् । प्रणेमुः प्रश्नो दूरे बहुमानेन सादरम् ॥ २५
अमान्तरेऽसौ देवाय प्रणिपत्य कृताञ्जलिः । तेषामिन्द्रस्तदेवाय कथयामास पौर्विकम् ॥ २६
वृत्तान्तं सर्वमात्मस्य कुमारायामराधिपः । इन्द्रः — एते व्यासप्रमाः पूर्वं पराशर मुनेस्सुताः ॥ २७
क्रुद्धिर्धदात्स्यपणे मत्स्यान् सरसि चालिशाः । गृहीत्वाऽस्येषु सहसा रज्जुमोतानुपाहरन् ॥ २८
दृष्ट्वैवं खेलतः पुत्रान् पिता रोषवशंगतः । शशाप मत्स्या मरत यूयं पुत्रा वृथायमाः ॥ २९
येन खेलत हा मोहात् अत्र मत्स्यविहिंसकाः । इति शप्ताः तदायाः पित्रा साक्षात् तपस्विना ॥ ३०
प्रणतश्च ते भयाविष्टाः पितरं मुनिपुङ्गवम् । धृताञ्जलिकरा मूर्ध्नि पप्रच्छुः शापमोक्षणम् ॥ ३१
तान् प्रत्युवाच स मुनिः पुत्रान् शापभयाकुलान् । यदा पर्वतराजेन्द्रे पुत्रीस्तन्यं ममात्मजाः ॥ ३२
युष्माभिः पीयते संधस्तशापात् विमुंचत ॥ ३३

इति मुनिप्रवरेऽत्र पराशरे समनुगृह्य गते मुनिपुङ्गवाः ।
सपदि निमतनुं समुपोढाने निमिषदृष्टि वपुष्य तदागमन् ॥ ३४

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे एकोनपंचाशोऽध्यायः ॥

इति चिन्तापरे तस्मिन् ऋषौ सर्वत्र पश्यति । ददृशे पर्वताग्रे सा रमणीयाङ्गयष्टिका ॥ १९
माया मन्मथ सर्वस्व निधिभूता तदाक्षणात् । उपसृत्य समीपं तामपश्यत् ऋषिसत्तमः ॥ २०
उवाच वचनं स्निग्धं चाटुयुक्तं रसार्थवत् । का त्वमेकाकिनी नारी किन्नाम कस्य वासिधा ॥ २१
कोद्देशः कागतावात्र वद सर्वाङ्गसुन्दरि । माया — अहमेकाकिनी नारी तिष्ठाम्यत्र च पर्वते ॥ २२
तपस्विनामिदं युक्तं किन्त्वया वचनं मम । मेरोस्समीपं मुक्त्वाऽहं गङ्गां स्नातुमिहागता ॥ २३
तिष्ठ त्वमत्र गच्छामि यन्मे मनसि वर्तते ।
काश्यपः — आनीयते त्वत्र गङ्गा स्थानानि च महान्त्यपि ॥ २४
तीर्थानि च तथा देव्यामद्भुतस्थानमद्भुतम् । ददामि पुत्रान् दिव्यस्त्री सहस्रपरिचारिकाः ॥ २५
अङ्गीकुरु च मामत्र रहस्स्थाने मनोहरे । इत्युक्ता सागतिचिन्ताढ्या साधमानमुखाम्बुजा ॥ २६
अन्तर्हिता तदा क्षिप्रमचिरांशुलतेव सा । तस्यामन्तर्हितायां तु काश्यपस्तपतां वरः ॥ २७
पपात भूमावचिरान्मोहासक्तमना भृशम् । विललाप सुदुःखार्तो यथा कामहतो जनः ॥ २८
तादृशं तमृषिं दृष्ट्वा तत्रैवाविरभूत्क्षणात् । आविर्भूतां तु तां दृष्ट्वा मोहेनापगतो ह्ययम् ॥ २९
ननर्त बहुधा चैव स्मयमानमुखाम्बुजः । अकिञ्चनो यथा द्रव्यं लब्ध्वात्यन्तं सुखी भवेत् ॥ ३०
प्रणनाम च मायायाः पादयोः प्रणयान्वितः । सा तु तं वचनं प्राह प्रेक्ष्य कामातुरं तदा ॥ ३१
काश्यपाद्य मया प्राप्तं यादृशं रूपमद्भुतम् । ग्रहीतुं तादृशं रूपं समर्थश्चेद्रमाम्यहम् ॥ ३२
इत्युक्तस्तादृशीं रम्यां काश्यपो योगिनां वरः । गृहीत्वा कामरूपं तां रमयामास मण्टपे ॥ ३३
कस्मिंश्चिद्विजने रम्ये भूयो भूयस्समादृतः । जातस्तदानीं शूराख्यो दैत्यानामग्रणीर्महान् ॥ ३४
यामिन्याः प्रथमे यामे दैतेयानाञ्च वाहिनी । त्रिंशत्सहस्रं तु तदा तयोः स्वेदजलेन सा ॥ ३५
पुनश्च मण्टपे तस्मिन् सैंहं रूपञ्च तावुभौ । रमयामासतुः कृत्वा सिंहवक्त्रस्तदाभवत् ॥ ३६
सहस्रवक्त्रमितयो द्विसहस्र करस्तथा । बभूव वाहिनी चान्या चत्वारिंशन्मिता तदा ॥ ३७
सहस्राणां महाघोरा तदङ्गस्वेदबिन्दुषु । सिंहवक्त्रा तथान्यस्मिन् मण्टपे विक्रमपण्डिते ॥ ३८
तृतीये प्रहरे गत्वा गजरूपेण तावुभौ । बभूवश्चतुर्भूयस्तदा गजमुखोऽत्र वै ॥ ३९
तारको नाम दैत्येन्द्रस्समजायत पैशाचः । चत्वारिंशत्सहस्राभ्यां वाहिनी गजरूपिणी ॥ ४०
बभूव मण्टपेऽन्यस्मिन् चतुर्थे प्रहरे च तौ । अजरूपं गृहीत्वा तु क्रीडयामासतुः पुनः ॥ ४१
तदानीमजवक्त्राख्या बभूवासुरकन्यका । त्रिंशत्सहस्र गणिता वाहिन्यप्यजरूपिणी ॥ ४२
स्वेदबिन्दूद् शुभाननमाप भीमाच साभवे । मण्टपे मण्टपे भूयः प्रभाते रमतुस्तदा ॥ ४३
सुरतं रूपमास्थाय तरक्षोऽश्व तथाऽत्र तौ । व्याघ्राश्व मृगयो ऋक्ष वराहाणान्तथैव च ॥ ४४
लुलाय वृकखड्गानां शरभोष्ट्र वनौकसाम् । गोमायोश्चैवमादीनां मृगाणां रूपमास्थितौ ॥ ४५
तदा षष्टिसहस्राणां वाहिनी समजायत । तत्तद्रूपेण तान्प्रेक्ष्य द्विलक्षगणितांस्तदा ॥ ४६
असुरान् शूरसिंहास्य तारकानपि कन्यका । विस्मयोत्फुल्ल हृदयो रूपञ्च प्राहतुः क्षणात् ॥ ४७
तदा तु पितरौ मत्वा शूरपद्मा महासुरः । किं कृत्यं पितरस्माकं ब्रूहि सर्वं यथा तथा ॥ ४८
मातुश्च सम्मतं किं वाचैव मुक्त्वाऽत्र संस्थितः । काश्यपः — शृण्वन्तु पुत्रास्सर्वेऽपि यन्मे मनसि वर्तते ॥
तपश्च सदा कार्यं युष्माभिर्विजितेन्द्रियैः । तपसा देवताः पूर्वं देवतात्वं प्रपेदिरे ॥ ५०
ऋषयश्च तथा केचिज्जीवन्मुक्तिं गताः किल । त्रिपदार्थस्य विज्ञानं संपाद्य सर्वदाऽनघाः ॥ ५१
विज्ञानेन शिवप्राप्तिः लभ्या च सुखरूपिणी । धर्मोऽपि सर्वदा कार्यः पापविच्छित्तये तथा ॥ ५२

धर्मेण केचिदप्यत्र स्वर्लोकं लेभिरे पुरा । कृपा च सर्वभूतेषु नित्यं कार्या विचक्षणैः ॥ ५३
एवमुक्तगुणोपेतैः युष्माभिर्वीतकिल्बिषैः । शम्भोरनुग्रहाच्चापि प्राप्यते नात्र संशयः ॥ ५४
इहचामुत्र चाप्नोति सिद्धिं शम्भोरनुग्रहात् ॥ ५५

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
आसुरकाण्डे प्रथमोऽध्यायः ॥

---

॥ अथ द्वितीयोऽध्यायः ॥

शूरपद्मादीनां तपश्चरणम् ॥

काश्यपः —

तपसा ब्रह्मविष्ण्विन्द्र प्रमुखाश्च सुरोत्तमाः । शिवस्यानुग्रहं प्राप्य स्वं स्वं स्थानं प्रपेदिरे ॥ १
ऋषयश्च पुरा केचित् तपः कृत्वा सुदुश्चरम् । शम्भोरनुग्रहं प्राप्य सामीप्यं च ध्रुवं गताः ॥ २
तस्मात्सर्वप्रयत्नेन युष्माभिस्तपसा शिवम् । तोषयित्वात्र लब्धव्या भुक्तिर्मुक्तिपरैव च ॥ ३
अस्ति चात्र कथा पुण्या युष्माकं तां ब्रवीम्यहम् । पूर्वं तपः प्रभावेन कुत्सः कन्यां मृतामपि ॥ ४
पुनस्सञ्जीवयामास सद्यः सुप्तामिव क्षणात् । तथान्यश्च गजस्यापि देवत्वं दत्तवान् खलु ॥ ५
तथा तपोमहिम्नैव मृकण्डुश्चाप्यजीजनत् । मृकण्डुश्च तथा पुत्रं ब्रह्मविष्ण्विन्द्र पूजितम् ॥ ६
मार्कण्डेयं तु तपसा लब्धवान् परया मुदा । मार्कण्डेयस्तु तपसा प्रसाद्य परमेश्वरम् ॥ ७
मृत्युमप्यजयन्नित्यं पदमप्याप्तवान् खलु । इत्युक्त्वा मुनिवर्योऽयं तूष्णींभावं जगाम हि ॥ ८
ततः प्रोवाच वचनं मायापुत्रानवेक्ष्य च । यदाह वचनं युष्मत्पिता तत्तपतां वरः ॥ ९
महतां योगिनामेव युष्माकं तद्ब्रवीम्यहम् । ऐश्वर्यं शौर्यमायुश्च तथा कीर्तिः प्रथीयसी ॥ १०
प्रभुत्वमार्जनीयं वै युष्माभिः पौरुषार्थिभिः । यद्भोग्यमितिविख्यातमुद्भावे क्षितेर्महत् ॥ ११
तत्र गत्वा वीरयागन्तु कुरुतेश्वर तुष्टये । अपेक्षितानि द्रव्याणि तानि सर्वं ददाम्यहम् ॥ १२
तत्र प्रसन्ने गौरीशे लभ्यतां यन्मयोदितम् । इत्युक्त्वा वचनं पुत्रान् माया तेषां पुनश्च सा ॥ १३
संक्षेपेण तथा मन्त्रान् उपदिश्य व्यसर्जयत् । पुनश्चापि ऋषिं प्रेक्ष्य प्रोवाच वचनं तदा ॥ १४
मायेति नाम मम वै त्वां गता पुत्रकांक्षया । उत्पादितास्त्वया सम्यक् इमे पुत्रा महौजसः ॥ १५
गच्छाम्यहं तपस्तप्तुं इत्युक्त्वा सा यथेक्षणात् । तस्यां गतायां तु ऋषिः काश्यपस्तद्दर्शनात् ॥ १६
विललाप सुदुःखार्तो भृशं मूढजना इव । तं तादृशमथालोक्य ब्रह्मा स्वयमिहागतः ॥ १७

ब्रह्मा —

किंवृथा काश्यपाद्य त्वं रोदिषीह यथाज्ञवत् । मास्तु ते रोदनं पुत्र सुखीभव महाशय ॥ १८
तपश्चर्यं हि तपस्वीश सहोप महाभाग ये । महेश्वरं समुद्दिश्य सर्वार्थोपदं परम् ॥ १९
इत्युक्त्वान्तर्हितो ब्रह्मा यथागतमनु क्षणात् । काश्यपस्तु तपः कर्तुं स्वाश्रमं प्रययौ तदा ॥ २०
[illegible] मायाकृतानीव मण्डपादीनि च क्षणात् । अदर्शनं गतान्येव तदानीं तान्यहो द्विजाः ॥ २१
अथ शूरो महासेनः प्रीतये परमेशितुः । भ्रातृभ्यां सहितः कर्तुं महस्ये चाध्वरं तदा ॥ २२
तदा दैत्यगुरुर्दैवात् मध्येमार्गं जगाम वै । तान्वीक्ष्य नितरां धीमान् प्रीतिं संप्राप्तवानहो ॥ २३
जजाप यदर्थमेव तेषां सांमुख्य कारणम् । शूरस्य निकटे गत्वा युष्माकं शुभदस्त्वहम् ॥ २४

इत्युक्तवानथाप्यार्यं पादयोरभिवन्दनम् । चकारासुरवर्योऽत्र विनयेनानतः स्थितः ॥ २५
शुक्रोऽपि दैत्यवर्याय नियमग्र्यं तदा स्वयम् । यागविघ्नविनाशार्थं उपदिश्य क्षणाद्गतः ॥ २६
शूरस्ससैन्य सहजो वटद्वीपं द्रुतं ययौ । यागशालांच तत्रासौ निर्ममे दशयोजनैः ॥ २७
सहस्राणां तदा क्षिप्रं प्राकारित महीधराम् । परितश्च तदा सेनां नानायुध विभीषणाम् ॥ २८
स्थापयित्वाऽथ मध्येऽयं योजनानां सहस्रतः । आयामायामयुक्तंतु कुण्डं चाग्निश्चकार वै ॥ २९
परितश्च तथा तस्य कुण्डान्यष्टोत्तरं शतम् । तान्यावृत्तच कुंडानां सहस्राणि तथापि वै ॥ ३०
कृत्वा प्रधान कुण्डेऽथ होतुं तत्र जगाम वै । तस्मिन् प्रधानकुण्डेऽयं महीं प्रोक्ष्यातिभीषणः ॥ ३१
उच्चाटयामास तदा पातालान्तं सयोजनात् । ततस्तु माया यागार्थं द्रव्याण्यपि ददाविमम् ॥ ३२
अर्कैधैव तथाऽर्कं अपामार्गं पलाशकम् । बिल्वं प्लक्षं तिन्त्रिणीच भूतावासं तथैव च ॥ ३३
एवमाद्यांच समिधं विपदूस समुद्भयाम् । क्षीराज्यदधितैलानि मधूनिच बहून्यपि ॥ ३४
माढकंच तथा मुद्गं माषंचापि तिलं तथा । कुलुत्थं सर्षपंचैव तण्डुलान् व्रीहिभिस्सह ॥ ३५
गोच्छागमहिषादीनां सहस्राणां शतं पुनः । रुधिराणिच मांसानि शतशोऽथ सहस्रशः ॥ ३६
कर्पूरं चन्दनं चैव सह कस्तूरिकारसैः । पुष्पाणि च विचित्राणि सुगन्धीनि बहून्यपि ॥ ३७
दर्भान् शुद्धं प्रस्तरंच स्रुचिंतिल तथारणिम् । एवमादीनि भूयांसि यज्ञोपकरणानिच ॥ ३८
त्रिमियौजनमात्रैस्तु सहस्राणां ततार सा । ततस्तु शूरपद्मोऽसौ दुर्गां भैरवमेवच ॥ ३९
भद्रकाळीं तथा भूतं प्रेतं चापि पिशाचकम् । डाकिनीं गन्धर्वंच च चामुण्डीं दिश्यपूजयत् ॥ ४०
निर्मथ्याधारणिचासौ वह्निं प्रज्वलयन् घृतैः । कुंडमध्ये । प्रतिष्ठाप्य यज्ञस्तंभमथाष्टकैः ॥ ४१
तिलैर्मापैस्तथा मासैराज्यैस्तैलैर्जुहावसः । सहस्राणां यथा तदा वर्षाणां नियमन्वतः ॥ ४२
तथान्येषुच कुण्डेषु सिंहाद्यस्तारकोऽपि च । क्रमेणाष्टोत्तराधाते चाष्टोत्तर सहस्रके ॥ ४३
तदा जुहुवतुस्तौ द्वौ महावीरपराक्रमौ । न तथापि महादेवः प्रादुर्भावं जगाम वै ॥ ४४
ततश्शूरस्तु संक्रुद्धो गगनेच समुत्थितः । स्थित्वा वर्षसहस्रंतु छित्वांगं स्वहस्ततः ॥ ४५
जुहाव रुधिरैर्मांसैर्मनसापि शिवं स्मरन् । एवं कृतेऽपि भगवान् यागे न प्रससाद वै ॥ ४६
पुनस्तु शूरपद्मोऽसौ ह्यत्युच्चोर्ध्वं द्रुतं तदा । यज्ञस्तम्भोपरि पतन्मध्ये तन्मूलमागतः ॥ ४७
कुण्डमध्ये तदा प्राणान् मुमोचासुरनायकः । ततस्तु हाहाकारश्च दैत्यानां महानभूत् ॥ ४८
देवानांतु तदात्यर्थं सन्तोषस्समभवत । अथ सिंहमुखश्चापि छित्वा मूर्ध्नोऽजस्रं सकान् ॥ ४९
पुनर्भूयस्तथोत्पन्नान् संजुहाव सः । तारकोऽप्येवमन्येऽपि दैत्याः पेतुर्वह्नौ स्वसः ॥ ५०
तथापि ■ महादेवो यदा नाभ्यागतां गतः । तत्रैव सिंहवक्त्रोऽपि प्राणान् हातुमियेष सः ॥ ५१
ब्रह्माण्डभित्तिपर्यन्तं वह्निज्वाला प्रवीयसी । ऊर्ध्वंचैवमधश्चापि नागलोकं ददाह वै ॥ ५२
तदानीमीश्वरस्तत्र स्वचिह्नेन चागतः । दण्डं करेण गृह्यायं विष्णुपृष्ठास्थितः तदा ॥ ५३
इतस्ततस्खलत्पाद युगळो वेदपाठकः । सिंहासुरस्य निकटं गत्वा वचनमब्रवीत् ॥ ५४

वृद्धः —

केयूय कस्यचा पुत्रः किंवा युष्माभिरत्र वै । क्रियते मे यदाचैव यथावदनुपूर्वशः ॥ ५५

सिंहः —

शृणु तत् महाविद्वेष्ट युष्मत्संदर्शनाद्धो । अस्माकं प्रीतिरत्यर्थं यथात्र परमेष्ठिनः ॥ ५६
वयं दैत्याः काश्यपस्य पुत्रा वै वीर्यागताः । प्रसाद परमेशानं राज्यप्राप्त्यर्थमागताः ॥ ५७

मत्प्रसादान्महेशस्य मद्भ्राता निधनं गतः । कुण्डमध्ये महावीरो वज्रस्तंभे पतन् किल ॥ ५८
तदिदानीमहंचापि देहत्यागे प्रवृत्तधीः । वृद्धः – मामार्षीर्वीरयुष्माकं यदभीष्टं भविष्यति ॥ ५९

इत्युक्त्वा चालयामास वृद्धो गङ्गां वियद्गताम्
अथ सा पृथुभिर्महीधरानमितैरूर्मिकरैः क्षणात् तदा ।
भृशताडित कन्दुकश्रियं विदधानेव समापतत्त्रये ॥ ६०
आकाशगङ्गापयसा शशाम सर्वेषु कुण्डेषु समिद्धतोऽग्निः ।
सिक्तास्तया शूरमुखाश्च दैत्याः सर्वेऽपि ते वृद्धिमवापुरत्र ॥ ६१

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
आसुरकाण्डे द्वितीयोऽध्यायः ॥

---

॥ अथ तृतीयोऽध्यायः ॥

श्रीशिवेन शूरपद्मादीनां वरप्रदानम् ॥

अथाविरासीद्भगवानंबया सहितः प्रभुः । ललत्पंकजकेयूरमुक्ताहारविभूषितः ॥ १
कपर्दोपस्थचन्द्राभसमलंकृतमस्तकः । स्फुरज्जटातटोत्सर्पितटिनीपरिमण्डितः ॥ २
मन्दहासप्रहिमांशुस्फुरत्पङ्क्तिविराजितः । त्रिपुण्ड्रायितविभूतिलसल्ललाटादिस्थलोज्ज्वलः ॥ ३
भूतिभूषितसर्वाङ्गो रुद्राक्षस्रग्भिरावृतः । आरुह्य शाक्वरं दिव्यं मालालंकारशोभितम् ॥ ४
विलसन्नूपुरनिभैः स्वच्छैः चामरैरभिशोभितम् । क्वणत्किंकिणिकानाद बधिरीकृतदिङ्मुखम् ॥ ५
भोगिभोगपरिष्कृतहारवारविराजितम् । कण्ठालंबिलसद्घण्टा ध्वनिध्वनितदिङ्मुखम् ॥ ६
महता ककुदा युक्तं महत्कंधरबंधुरम् । पादाग्रमेवैर्धर्ममिव ताडितेषु तदा भुवाम् ॥ ७
गणैर्नानाविधैरन्यैः ब्रह्मविष्ण्वादिभिस्सुरैः । आवृतस्समवेतो दिव्यस्त्रीशतैः परिवारितः ॥ ८
तादृशं तं महादेवं प्रेक्ष्य संफुल्ललोचनः । शूरपद्मो महाभ्रातृसेनाभिः प्रणनाम तम् ॥ ९
अस्तावीत् स्तोत्रवर्यैस्तु स्तुत्यं वेदान्तगुम्फितैः । अथ तं परमेशानः प्रोवाच वचनं तदा ॥ १०
स्मयमान मुखांभोज मकरन्दरसास्पदम् । प्रीतोऽस्मि नितरां युष्मत्तपसाऽसुरपुङ्गवाः ॥ ११
यद्यन्मनसि वोऽभीष्टं वर्तते भूतमेश्वराः । ददामि तत्तत्सपदि ध्रुवमित्याह शंकरः ॥ १२

शूरः —

यदि प्रसन्नो भगवन् त्वद्भक्त्याऽनुष्ठितं मया । अष्टोत्तरसहस्राणां अण्डानां सार्वभौमताम् ॥ १३
शाश्वत्यं तथास्माकं अविनश्वरतामपि । विष्ण्वादि दैवतास्सर्वे यथा मत्सन्निधानतः ॥ १४
पलायिष्यन्ति सुतरां एव तादृशमायुधम् । तेषु सर्वेषु गमनागमनञ्च प्रयच्छ नः ॥ १५
ततस्तु शूरपद्मं तं प्रेक्ष्य सर्वेश्वरो वचः । प्रोवाच कृपया युक्तो यदुक्तं तत्तथास्त्विति ॥ १६
अष्टोत्तरसहस्राणां अण्डानां सार्वभौमताम् । अथाधिपत्यं तेष्वेव सुरेभ्यस्तु तथानघ ॥ १७
तथा विमानमैन्द्रं ते नानारत्नोपशोभितम् । सिंहवाहनमन्यच्च तथा पाशुपतास्त्रकम् ॥ १८
वज्रादीनि चास्त्राणि तत्तद्देवाङ्कितानि वै । वज्रदेहं तथा चाग्निकुण्डोद्भूताऽसुरान् बहून् ॥ १९
दशकोटिसहस्रेण वाहिनीनां मितं तदा । चतुर्दशबलंचात्र तवनागास्तु भूरिशः ॥ २०
तवानुजानामन्येषां आयुधानि बहून्यपि । अष्टाधिक शतंचापि युगानामस्तु भूपता ॥ २१

अपि वा समरं प्राप्य विना मच्छक्तिमव्ययाम् । अन्यैस्सुरगणैर्नाशो नास्तु यो मरणं ध्रुवम् ॥ २२
इत्युक्त्वाऽन्तर्दधे देवः सांबस्सर्वेश्वरेश्वरः । ततस्तु शूरपद्मादि दैतेयास्तुष्टिमापिरे ॥ २३
साट्टहासास्तथान्येऽपि ननृतुः स्वगणान्वयाः । इतस्ततः तथा केचित् धावन्तः किलिकिञ्चितैः ॥ २४
शूरपद्मः पुनः प्रेक्ष्य दैतेयानब्रवीद्वचः । इयन्तं कालमन्वीक्ष्य युष्माभिः स्थितमव्ययैः ॥ २५
इत्यादि भूरिशस्तेषां उपचारं तदा जगौ । तेऽपि भूपस्तदा वाचं ऊचिरे विनयान्विताः ॥ २६
चतुरङ्गबलानांतु दत्तानां शंभुना तदा । सेनापतीन् विभज्याशु स्वामिनः एतवान् खलु ॥ २७
जगाम काश्यपं तातं सहभ्रातृबलैस्तदा । नमस्कृत्याशु पदयोः प्राह्वस्स प्रश्रयान्वितः ॥ २८
ततस्सर्वेश्वरश्शंभुः सुप्रीतः मनुना मम । ब्रह्माण्डानामाधिपत्यं दत्तवान् वरदा मुदा ॥ २९
इतःपरं मतिः कार्या यद् मेऽद्य दयायुतः । काश्यपस्तु विचिन्त्याथ देवानां विपदं तदा ॥ ३०
प्रोवाच वचनं युष्मद्गुरोस्सविधमेत्य च । श्रुणुतां मतिरित्येयं तपोविघ्नाविध सुतम् ॥ ३१
अथ सर्वेऽपि दैत्येन्द्राः संभूय प्रययुस्तदा । भार्गवं सहिते युक्तं सर्वशास्त्रार्थकोविदम् ॥ ३२
नत्वा बद्धाञ्जलिकराः वृत्तान्तंच न्यविज्ञपन् । बुद्धिंच नोवदाचार्य कार्याकार्यस्वरूपिणीम् ॥ ३३
इत्युक्त्वा विनयानम्राः तस्थुस्ते परितस्तदा । गुरुस्तु शूरपद्मानं एवमेवागमानयत् ॥ ३४
उवाच वाचा वाचालो ह्याशयानुविधायिनीम् । शिवस्तु मायामाश्रित्य ससर्ज विपदादिकम् ॥ ३५
तथा स्वांशं विभज्याथ जीवत्वेनावतिष्ठते । शरीरेन्द्रिय संयुक्तो लीलामात्र प्रयोजनः ॥ ३६
भग्ने घटे घटाकाशो महाकाशे प्रलीयते । तद्वद्देहविनाशेन जीवस्तु शिवतां गतः ॥ ३७
तस्मात् पुण्यानि पापानि मिथ्यारूपाणि तत्त्वतः । मोक्षोऽप्येव ततस्त्वंतु स्वात्मानं ब्रह्मरूपिणम् ॥ ३८
मत्वा शोकं विमुच्याथ ब्रह्मविष्ण्वादि देवताः । परित्यज्य हृदि ध्यायन् शंभुमाकाशमव्ययम् ॥ ३९
इन्द्रादि देवतानांच मन्मुखाद्वचनमहत् । तेषां पदं प्रयच्छ त्वं असुराणां महौजसाम् ॥ ४०
मारणं च तथा कार्यं दत्त्वापि च यज्वनाम् । वीर्यं प्रदेयं चैवमादीनिव तथागुरु ॥ ४१
अन्यथा त्वां नयत्येव कोऽपि मत्यंबकरोऽपि वा । सर्वेषु च तथाण्डेषु त्वदीयेषु प्रजाविशाम् ॥ ४२
विचार्यैव विचार्यैव वृत्तान्तं सावधानतः । ब्रह्माण्डमध्ये त्वं सहभ्रातृगणैस्तथा । ४३
अण्डस्थ तथायाम विस्तारैश्च महीधरान् । समुद्रान् द्वीपजालैश्च लोकान् नामाविधान् तथा ॥ ४४
देवांश्चैव तथा लोकपालकान् दिग्गजान् मनून् । प्राणिनश्च तथा चैवमादींश्च स्वतश्चाऽवदत् । ४५
एवमण्डेषु सर्वेषु वसन्तु युक्ताः यथाश्च ये । एकत्र्यैव पुनस्तेषां उक्त्वा तान् विससर्ज वै ॥ ४६
ततस्तु शूरपद्मोऽसौ प्रतस्थे तं प्रणम्य वै । आरुह्येन्द्रविमानं तत् सूर्यकोटि समप्रभम् ॥ ४७
तुरगकोटिसंयुक्तं नानारत्नविचित्रितम् । वितानसहितं चारुच्छत्रध्वजपरिष्कृतम् ॥ ४८
सिंहासनस्तथा वालिसहस्राणां सहस्रकैः । तुरगमानांच तथा भूतानां महतामपि ॥ ४९
युयुक्त रथमारुह्य प्रतस्थे सहस्रावली ॥ ५०

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
आसुरकाण्डे तृतीयोऽध्यायः ॥

॥ अथ चतुर्थोऽध्यायः ॥

॥ तारकात् कुबेरादीनां पराजयः ॥

तारकोऽपि तथारुह्य स्यन्दनं सुमनोहरम् । संयुज्य तुरगाणांतु सहस्रैर्दशभिः क्षणात् ॥ १
तथान्ये रथिनश्चापि नानायुध परिष्कृताः । गजाश्ववाहाश्च परे सुकुमारांगयष्टयः ॥ २
सेनाच महती तद्वत् खरोष्ट्राश्च प्रतस्थिरे । काहळी भेरि पटहास्तुतरां नादितास्तदा ॥ ३
वाद्यघोषाः परितो मड्डुडिंडिमझर्झराः । जिनांबुधिमहारावास्ताडिता भृशमन्वै ॥ ४
खड्गहस्तास्तथा केचित् दण्डभीमकराः परे । खट्वांगपाणयः केचित् मुसलोद्धतपाणयः ॥ ५
छुरिणां कोटयोऽनेकाः ध्वजिनां बहुकोटयः । हसन्तश्च धावन्तः प्रासमादाय चापरे ॥ ६
साट्टहासास्तथान्येऽन्ये ताड्यमानकराः परे । एवं प्रचलतां विष्वक् सैन्यानां दैत्यभूपतेः ॥ ७
इयत्तया परिच्छेत्तुं अशक्यानां महौजसाम् । असंख्य चतुरंगाणां चक्रपादखुरोत्थिताः ॥ ८
पांसवश्च तदा सूर्यमार्गं पर्यन्तमुत्थिताः । चतुरंगबलेनैवं तदा योजनकोटिभिः ॥ ९
संबाधं प्रापिता भूमिस्तिद्भूमिः परितो भृशम् । एवं गत्वा सहभ्राता यक्षेश्वरो महासुरः ॥ १०
अळकां तुंगसालेन आवृणोत्तु रुरोध सः । तदाकर्ण्य कुबेरस्तु दूतवक्त्रेण धीधनः ॥ ११
विचार्य सुतरां शक्तो दैत्येशानां परं तदा । आशिषश्च प्रयुञ्जानस्सांजलिः प्रश्रयान्वितः ॥ १२
धनानि दिव्यवस्त्राणि भूषणानि बहूनिच । दत्वा प्रोवाच वचनं शूरपद्मं समीक्ष्य वै ॥ १३
त्वदीयोऽहं यक्षराजः रक्ष मां दययाऽधुना । विसृष्टस्तेन शूरेण कुबेरः स्वपुरं गतः ॥ १४
लुण्ठितंच पुरं तस्य तत्पूर्वमसुरैर्भृशम् । कुबेरस्तु तदाश्चर्यं दुःखं प्राप सुदारुणम् ॥ १५
जेतुकामस्सुरेशानं प्रतस्थेऽसुरनायकः । मध्येमार्गं निशम्यास्य चिह्नमैश्वरमुज्ज्वलम् ॥ १६
त्रिणेत्राद्रि विमुच्यैतं दूरपथा क्षणादहो । ऐन्द्रीं दिशं तथा जेतु इन्द्रं शूरो जगाम वै ॥ १७
अरौत्सीत् तस्य नगरं अमरेशस्य चाद्भुतम् । वृक्षांश्चिच्छेद बहुशो नन्दनादिषु संस्थितान् ॥ १८
तदानीं मघवांस्तूर्णं पलायत वियत्स्थले । लुण्ठयामास तस्याशु धनं सैनिकैस्तदा ॥ १९
सुरांगनाश्च शतशो बन्दीतां प्रापिता द्विजाः । इन्द्रस्य सदनं तूर्णं आवृत्यान्तःपुरस्थितम् ॥ २०
धनं बहु तदा प्राप भूमिं खात्वा सुविस्तरम् । एवं प्रतिगृहं गत्वा अग्न्याद्यस्य पुरं क्षणात् ॥ २१
सुरास्तदानीं भूयांसः परं प्राप्ताश्च दुर्बलाः । अपलाय्य प्रमादाये तदा गगनमास्थिताः ॥ २२
शूराश्च धावनेऽशक्ताः जिताश्चासन् क्षणादहो । लुण्ठितानि तदा तेषां उपरिस्थाप्य निष्ठुरः ॥ २३
अम्बुपतेः पुरं शीघ्रं निर्ययौ दनुजाधिपः । महाबलैर्महाशूरैः धावद्भिः पुरतो भृशम् ॥ २४
अमरसेना तदा वह्नी प्रतस्थे योद्धुमाशु तान् । परस्परं तयोस्सेना युयुधे शस्त्रजालकैः ॥ २५
तारकस्य बलानां सा पुरतः स्थातुमक्षमा । पराभवं गता तूर्णं अमरेश्वरमागता ॥ २६
तदाग्निर्निर्ययौ तूर्णं क्रोधमूर्छित विग्रहः । कालाग्निरिव निर्दग्धुं ज्वालामालावृतो जगत् ॥ २७
शस्त्राणिच बहून्याशु मुमोचासुरसंहतौ । ततस्तु तारको धीमान् नानास्त्रकृत शिक्षकः ॥ २८
धनुरादाय सव्येन युयुजे पाणिनाज्यया । आस्फालयत्तदा ज्यांच प्रळयाम्बुद निस्वनम् ॥ २९
आलीढमार्गमाश्रित्य धनुर्दण्डपराक्रमेण सः । ध्यायंस्तदा पशुपतिं भर्गं पाशुपतं महत् ॥ ३०
संधयामास धनुषा साक्षाद्रुद्र इवापरः । ततस्संभ्रममना जातवेदा भयंगतः ॥ ३१

इदमस्त्रं यमुपते क्षणाल्लोकान् दहत्यहो । एतस्य सदृशं किंवा स्यात् कालाग्नेर्मशकाद्य ॥ ३२
केवा वयं हराख्ने तु दाहकोऽस्मीति चिन्तयन् । शरणं तं प्रपेदेऽथ तारकं प्राणदायकम् ॥ ३३
इति निश्चित्य मनसा विमुक्तायुध सन्ततिः । तारकाभ्याशमभ्येत्य रक्ष रक्षेति च ब्रुवन् ॥ ३४
बद्धांजलिपुटो भक्त्या त्वदीयोऽहं विमुञ्च माम् । इत्युक्त्वा स्थितस्तत्र भयकंपितविग्रहः ॥ ३५
ततस्तु तारकः प्रीतिमभ्येत्याशु कृपालुकः । समाश्वासयामास वचसा शीतळेन तम् ॥ ३६
यथापूर्वं पुरं गत्वा पालयाथ प्रजाध्रुवम् । मदाज्ञया पुरेतिष्ठ स्वकीये त्यक्तभीर्भृशम् ॥ ३७
इत्याहस ततो वह्निरहमानेन विचोदितम् । मया क्षमस्व तत्सर्वं इत्युक्त्वा स्वां पुरीं गतः ॥ ३८
तत्पूर्वमेव तस्यापि लुण्ठितं पुटभेदनम् । असुरैर्बहुघोरुक्तै रंजसा चाश्ववाहकैः ॥ ३९
ततस्सूरस्तु शूराणां फलिंगं नाम सारथिम् । याम्यां दिशं प्रापयेति रथमाह विचक्षणः ॥ ४०
चोदितास्तुरगास्तेन रथमानीय तत्क्षणात् । फलिंगेन तदाभ्याशे धर्मराजपुरं गतः ॥ ४१
चतुरक्ष पलंघापि पचालाग्धिरियापरः । यमस्यच पुरं शीघ्र मावृतं दनुजैर्भृशम् ॥ ४२
श्रुत्वा यमस्तदा रुद्धां पुरीं दूतमुखेन सः । कुबेरस्यापि चाक्रान्तं पुरमेतेन सर्वतः ॥ ४३
इन्द्रस्य नगरं दग्धं तथाग्नेर्लुण्ठितं भृशम् । इति चिन्तापरवशो अयेनास्यागतोऽन्तिकम् ॥ ४४
द्रव्यं बहु तथा वस्त्रं विचित्रं हारमेवच । तण्डुलांच तथा सूक्ष्मान् स्थितान् पर्वतमानतः ॥ ४५
मुद्गांस्तथा कुलुत्थांश्च तुवरान्माषकानपि । एवमादीनि भूयांसि दत्वा लोकानि तस्यवै ॥ ४६
त्वदाज्ञया त्वदीयोऽहं संयमिन्यां वसाम्यतः । असुराश्च महावीरा नगरं नाशयन्ति ते ॥ ४७
निवर्त्य तानाशु मां त्वं रक्षेत्याह यमः स्वयम् । निवर्त्य तान् तारकोऽथ्यं दूतवक्त्रेण लुण्ठकान् ॥ ४८
धर्मं चाश्वास्य बहुधा संभाव्याशु पुरं प्रति ॥ ४९
प्रेरयित्वा तदा तूर्णं निर्ऋतेः ककुभं ययौ । गत्वा तस्यापिच पुरं बद्धोपायसुरनायकः ॥ ५०

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
आसुरकाण्डे चतुर्थोऽध्यायः ॥

---

## ॥ अथ पंचमोऽध्यायः ॥

### श्री विष्णुतारकयोर्युद्धम् ॥

ततस्तु निर्ऋतिश्शीघ्रं निर्ययौ नगरात् बहिः । अभ्येत्य तारकं शत्रुदारकं साञ्जलिस्तथा ॥ १
त्वद्बन्धुरद्यप्रभृति निवसामि त्वदाज्ञया । पालनीयं त्वयैवेदं ऐश्वर्यं बन्धुपुङ्गवे ॥ २
इत्युक्तवन्तं निर्ऋतिं बहुमानतया पुरम् । तारकः प्रेरयित्वाशु प्रतस्थे वारुणीं दिशम् ॥ ३
प्रस्थानमस्य श्रुत्वाथ वरुणः प्राप वारिधिम् । त्वरयाच तदाभ्येत्य पुरीं सेना प्रधीयसीम् ॥ ४
इतस्ततश्च जग्राह पुरस्थानां तदा बहु । वस्त्रमाभरणं चान्यत् धावतां भृशमेवच ॥ ५
अलुण्ठयंश्च नगरं नानारत्नसुशोभितम् । तथा वायोः पुरं चापि क्षणात् प्राप ससैनिकैः ॥ ६
वायुस्तु तरसा लोकं तामिस्रं गतवान् द्विजाः । अलुण्ठत्तस्य नगरं तारकस्सर्वतोज्वलम् ॥ ७
एवं जित्वाथ पाताळे दिक्पालान् सुरोत्तमाः । नागानां जयमुद्दिश्य सह सैन्यैरशिश्रयत् ॥ ८
सर्पाधिपतयस्तत्र युद्धे प्रापुः पराभवम् । ददुश्चास्य विचित्राणि रत्नानि सुबहूनि वै ॥ ९
पीत्वाऽमृतं च सकलं असुरैस्तत्र संभवैः । पूजितः परया प्रीत्या दृष्ट्वा तत्सर्वमद्भुतम् ॥ १०

बिलद्वाराणि रम्याणि तथैकामवसत्तिथिम् । शूर्पणखा ततस्तूर्णं पुन प्राप महीतलम् ॥ ११
सैन्यैर्नानाविधैस्सार्धं सहजैश्च बलोत्कटै । गत्वा द्वीपानि रम्याणि नानारूपाणि सर्वत ॥ १२
आश्चर्याणिच सम्प्रेक्ष्य तत्रत्यानि बहून्यपि । क्षीराब्धिं प्राप तरसा यत्रशेते हरिस्स्वयम् ॥ १३
तत्र प्रविष्टस्सेनास्तारकाद्या मत्तगजादय । लोळयामासुरमित पीत्वा पीत्वाच भूरिश ॥ १४
श्रीभूमीच निशम्याशु विष्णु पत्न्यौ तदारवम् । त्रस्ते विष्णोस्समीप ते गत्वाऽबोधयता हरिम् ॥ १५
शेषे किमद्य शेषे त्वमकाले चागत भयम् । मुञ्च निद्रा विभो शीघ्र पालयास्मा भयगते ॥ १६
ततस्तु मुक्तनिद्रोऽसौ यावत्कालेन चोत्थित । तावदेवासुरास्सर्वे आगतास्तत्समीपत ॥ १७
हरिरादाय गरुडमाप शुम्भदानितकम् । कौमोदकीं नन्दकञ्च पाञ्चजन्य सुदर्शनम् ॥ १८
शार्ङ्गञ्च धनुरादाय वज्रकल्पमसकञ्चुक । शार्ङ्गंच तथा खड्ग पृष्ठभागे विचक्षण ॥ १९
सव्येन पाणिना चापमानमय्य गुणेन सम् । दक्षिणेन तदा तूर्णं योजयामास वेगत ॥ २०
तारकस्य ■ सेनाया ववर्षास्त्राणि भूरिश । सेना ममार बहीशा तदा तद्बाण पातनात् ॥ २१
पलायिताश्च तमान्ये तारसदित विग्रहा । देवेया भृशाकुलास्तास्तारक शरण गता ॥ २२
ततस्तु तारकश्शीघ्र प्रतस्थेच जनार्दनम् । योद्धुमादाय शस्त्राणि बहूनि सुमहान्त्यपि ॥ २३
गुणेन चाप सयोज्य व्योमात हतवान् द्विजा । ववर्ष शरवृष्टिञ्च विष्णोरुपरि भूरिश ॥ २४
तार्क्ष्यस्यापि शरीरेऽस्य रक्तस्रावो यथा भवेत । असुरास्तैर्महाक्रुद्धो निशितानि शराणि स ॥ २५
मुमोच तस्य गात्रेषु तारकस्य तदा भृशम् । पुनश्चान्यानि शस्त्राणि मुक्तयाच्छिन्नधा ■ तदा ॥ २६
खण्डश खण्डशो भूमौ पातयामास सारथिम । चापञ्च शतधा कृत्वा मुमोच पुनरस्य वै ॥ २७
आयस तारकस्तूर्णमन्यास्यदनमुज्ज्वलम् । चापमादाथ सपुनश्चाट्टहास परो भृशम् ॥ २८
ववर्ष बहुधाचास्य शरीरे धर्ममेघवत् । शस्त्राणि निशिताभ्याशु ■ ससार लीलया ॥ २९
शरीर चास्य विष्णोस्तद्वज्रजालपरिप्लुतम् । अभवत्तरसा मुक्तकञ्चुक सन्निपातमात् ॥ ३०
तत क्रोधेन महता ज्वलन्निव हरिस्तदा । नाराचैर्विध्यथे चास्य शरीर मर्ममेदिभि ॥ ३१
शूलैर्नानाविधैरश्वै पातयामासवै रथम् । चिच्छेदच पुनश्चाप तारकस्य सहस्रधा ॥ ३२
तारकस्तरसाऽऽरुह्य रथमन्यमनुत्तमम् । आदाय धनुरन्यच्च दृढ क्रोध विजृम्भित ॥ ३३
असुरास्त्रजाल स स्वयमेव तदा हरौ । ततस्ससम्भ्रम विष्णुर्मायावी बहुरूपभाक् ॥ ३४
तत्र तत्र स्थितश्शीघ्र मयूरेशारकोपरि । शतकोटि सहस्राणि शस्त्राण्यादाय शत्रुजित् ॥ ३५
तारकोऽपि तदा तूर्णं मायामेव समुद्धरन् । प्रभिन्न शतशो विष्णु जघानाक्षैरमत्यर्क ॥ ३६
एव द्वादश वर्षाणि युयुधाते परस्परम् । युद्धमल्लौ तदा विष्णुतारकौ भृशमुत्थितौ ॥ ३७
कौमोदकीं करेणाशु वैरमासीत्तदाऽसुरे । सम्भ्राम्य तत्क्षणेनैव विचिक्षेप विनीदनाम् ॥ ३८
गदया ताडयामास गदा विष्णोस्तदा भृशम् । तारकस्तरसा हन्तु ■ कृतान्त महाक्रुधा ॥ ३९
ताड्यमाना तदा तेन न्यपतद् खिताहव । पृथिव्या नन्दकोऽप्येव व्यर्थतामगमत्किल ॥ ४०
तारकस्तु तदा तूर्णं विष्णोरभ्याशमागत । भ्रामयित्वा गदा स्थूला वक्षोऽमुक्त क्रुधा द्विजा ॥ ४१
आगत स महावीर अभ्याश भवेत माधव । ध्वनयञ्च तदा शाल मण्डलानुद्भिलनम् ॥ ४२
सुदर्शन महाघोर सर्वशत्रु निहन्तनम् ॥ ४३

इदमत्र पशुपते। क्षणाल्लोकान् वहस्यहो। एतस्य लक्ष्यं किंवा स्यात् कालाग्नेरीशकादिव ॥ ३२
केवा वयं हरालं तु हाहतोऽस्मीति चिन्तयन्। शरणं तं प्रपद्येऽद्य तारकं प्राणदायकम् ॥ ३३
इति निश्चित्य मनसा विमुक्तायुधसन्ततिः। तारकाभ्याशमभ्येत्य रक्ष रक्षेति च ब्रुवन् ॥ ३४
बद्धांजलिपुटो गत्वा त्वदीयोऽहं विमुञ्च माम्। इत्थमुक्त्वा स्थितस्तत्र भयकंपितविग्रहः ॥ ३५
ततस्तु तारकः प्रीतिमभ्येत्यासुरपालकः। अग्निमाश्वासयामास वचसा शीतलेन तम् ॥ ३६
यथापूर्वं पुरं गत्वा पालयाथ मदाज्ञया। मदाज्ञया पुरे तिष्ठ स्वकीये स्वकभोगभृत् ॥ ३७
इत्यग्रस्तस्तरे वह्निरज्ञानेन विचेष्टितम्। मया क्षमस्व तत्सर्वं इत्युक्त्वा स्वां पुरीं गतः ॥ ३८
तत्पूर्वमेव तस्यापि लुण्ठितं पुरमेतनम्। असुरैर्दुष्टघोरैश्च रंहसा घाव्यवाहकैः ॥ ३९
ततस्सूरस्तु शूराणां फलिंगं नाम सारथिम्। याम्यां दिशं प्रापयेति रथमाह विचक्षणः ॥ ४०
चोदितास्तुरगास्तेन रथमानीय तत्क्षणात्। फलिंगेन तदाभ्याशं धर्मराजपुरं गताः ॥ ४१
चतुरङ्गबलेनापि कालाग्निधरिवापरः। यमस्य च पुरं शीघ्रं अद्भुतं वसुभिर्वृतम् ॥ ४२
श्रुत्वा यमस्तदा ह्यां पुरीं कुतमुखेन सः। कुबेरस्यापि चाक्रान्तं पुरमेतेन सर्वतः ॥ ४३
इन्द्रस्य नगरं दग्धं तथाग्नेर्लुण्ठितं भृशम्। इति चिन्तापरवशो जवेनाभ्यागतोऽन्तिकम् ॥ ४४
द्रव्यं बहु तथा वस्त्रं विचित्रं हारमेव च। तण्डुलांश्च तथा सूक्ष्मान् स्थितान् पर्वतमानतः ॥ ४५
मुक्तांस्तथा कुलुम्भांश्च तुवरान्माषकानपि। पयआदीनि भूयांसि दत्वा क्षेत्राणि तस्य वै ॥ ४६
त्वदाज्ञया त्वदीयोऽहं संयमिन्यां वसाम्यतः। अनुगाश्च महावीरा नगरं नाशयन्ति ते ॥ ४७
निवर्त्य तानाशु मां त्वं रक्षेत्याह यमः स्वयम्। निवर्त्य तान् तारकोऽयं दूतपक्षेण लुण्ठकान् ॥ ४८
धर्मं चाश्वास्य बहुधा संप्राप्याशु पुरं प्रति ॥ ४९
प्रेरयित्वा तदा तूर्णं निर्ऋतेः ककुभं बहिः। गत्वा तस्यापि च पुरं ददौ चासुरनायकः ॥ ५०

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
आसुरकाण्डे चतुर्थोऽध्यायः ॥

---

॥ अथ पंचमोऽध्यायः ॥

श्री विष्णुतारकयोर्युद्धम् ॥

ततस्तु निर्ऋतिश्शीघ्रं निर्ययौ नगरात् बहिः। अभ्येत्य तारकं दानवारकं साञ्जलिस्तदा ॥ १
त्वद्दत्तस्तु गृहमत्रैव निवसामि त्वदाज्ञया। पालनीयं त्वयैवेदं ऐश्वर्यं बन्धुपूर्वके ॥ २
इत्युक्तवन्तं निर्ऋतिं बहुमानतया पुरम्। तारकः प्रेरयित्वाशु प्रतस्थे वारुणीं दिशम् ॥ ३
प्रस्थानमस्य श्रुत्वाथ वरुणः प्राप वारिधिम्। त्वरयाच्च तदाभ्येत्य पुरीं सेना प्रथीयसीम् ॥ ४
इतस्ततश्च जग्राह पुरस्थानां तदा बहु। धनधान्यमनेकं चान्यत् धावतां मृगमेव च ॥ ५
अलुण्ठयंश्च नगरं नानारत्नसुशोभितम्। तथा वायोः पुरं चापि क्षणात् प्राप ससैनिकैः ॥ ६
वायुस्तु तरसा लोकं तामिस्रं गतवान् द्विजाः। अलुण्ठत्तस्य नगरं तारकस्सर्वतोऽवलम् ॥ ७
एवं जित्वाथ पातालं दिशश्चाष्ट सुरोत्तमाः। नागानां जयमुद्दिश्य सह सैन्यैरशिश्रयत् ॥ ८
सर्पाधिपतयस्तत्र युद्धे प्राप्ताः पराभवम्। ददुश्चास्य विचित्राणि रत्नानि सुबहूनि वै ॥ ९
पीत्वाऽमृतं च तद्रसं असुरैस्तत्र संभवैः। पूजितः परया प्रीत्या दृष्ट्वा तत्रत्यमद्भुतम् ॥ १०

बिलद्वाराणि रम्याणि तथैकामवसत्तिथिम् । शूरपद्मा ततस्तूर्णं पुनः प्राप महीतलम् ॥ ११
सैन्यैर्नानाविधैस्सार्धं सहजैश्च बलोत्कटैः । गत्वा द्वीपानि रम्याणि नानारूपाणि सर्वतः ॥ १२
आश्चर्याणिच संप्रेक्ष्य तत्रत्यानि बहून्यपि । क्षीराब्धिं प्राप तरसा यत्रशेते हरिस्स्वयम् ॥ १३
तत्र प्रविष्टास्सेनास्तास्सर्वा मत्तगजा इव । लोळयामासुरभितः पीत्वा पीत्वाथ भूरिशः ॥ १४
श्रीभूमीच निशम्याशु विष्णु पत्न्यौ तदारवम् । त्रस्ते विष्णोस्समीपं ते गत्वाऽबोधयतां हरिम् ॥ १५
शेषे किमद्य शेषे त्वमकांडे चागतं भयम् । मुंच निद्रां विभो शीघ्रं पालयावां भयंगते ॥ १६
ततस्तु मुक्तनिद्रोऽसौ यावत्कालेन चोत्थितः । तावदेवासुरास्सर्वे चागतास्तत्समीपतः ॥ १७
हरिराशु गरुडमाप शुभलान्वितम् । कौमोदकीं नन्दकंच पाञ्चजन्यं सुदर्शनम् ॥ १८
शार्ङ्गंच धनुरादाय बद्धकच्छस्सकंचुकः । शराधिंच तथा बध्वा पृष्ठभागे विचक्षणः ॥ १९
सव्येन पाणिना चापमानमय्य गुणेन तत् । दक्षिणेन तदा तूर्णं योजयामास वेगतः ॥ २०
तारकस्य च सेनायां ववर्षास्त्राणि भूरिशः । सेना ममार बह्वीसा तदा तद्बाण पातनात् ॥ २१
पलायितास्त्र तत्रान्ये शरखंडित विग्रहाः । दैतेया भृशदुःखार्तास्तारकं शरणं गताः ॥ २२
ततस्तु तारकश्शीघ्रं प्रतस्थेऽथ जनार्दनम् । योद्धुमादाय शस्त्राणि बहूनि सुमहान्त्यपि ॥ २३
गुणेन चापं संयोज्य ज्याघातं कृतवान् द्विजाः । ववर्ष शरवृष्टिंच विष्णोरुपरि भूरिशः ॥ २४
तार्क्ष्यस्यापि शरीरेऽस्य एकघातो यथा भवेत् । अनुत्तरैर्महाशूरो निशितानि शराणि सः ॥ २५
मुमोच तस्य गात्रेषु तारकस्य तदाहवम् । पुनश्चान्यानि शस्त्राणि मुक्तयाचिच्छिदे रणे तदा ॥ २६
खण्डशः खण्डशो भूमौ पातयामास सारथिम् । चापंच शतशः कृत्वा मुमोच पुनरस्य वै ॥ २७
आरुह्य तारकस्तूर्णमन्यस्यंदनमुज्ज्वलम् । चापमादाय सपुनश्चाट्टहास परो भृशम् ॥ २८
ववर्ष बहुधाचास्य शरीरे घर्ममेघवत् । शस्त्राणि निशितान्याशु तत्र तस्तार लीलया ॥ २९
शरीरं चास्य विष्णोस्तद्रक्तजालपरिप्लुतम् । अभवत्तरसा मुक्तकञ्चुकं शस्त्रपातनात् ॥ ३०
ततः कोपेन महता ज्वलन्निव हरिस्तदा । नाराचैर्बिभिदे चास्य शरीरं मर्मभेदिभिः ॥ ३१
शूलैर्नानाविधैस्तैः पातयामास वै रथम् । चिच्छेदाथ पुनश्चापं तारकस्य सहस्रधा ॥ ३२
तारकस्तरसाऽऽरुह्य रथमन्यमनुत्तमम् । आदाय धनुरन्यच्च दृढं क्रोध विजृम्भितः ॥ ३३
अमुञ्चद्बाणजालं सः स्वयमेव तदा हरौ । ततस्ससंभ्रमं विष्णुर्मायावी बहुरूपभाक् ॥ ३४
तत्र तत्र स्थितश्शीघ्रं अवर्षत्तारकोपरि । शतकोटि सहस्राणि शस्त्राण्यादाय शस्त्रवित् ॥ ३५
तारकोऽपि तदा तूर्णं मातुर्मन्त्रं समुच्चरन् । प्रभिद्य शतशो विष्णुं जघानालीरसंख्यकैः ॥ ३६
एवं द्वादश वर्षास्तौ युयुधाते परस्परम् । युद्धमल्लौ तदा विष्णुतारकौ भृशमुत्थितौ ॥ ३७
कौमोदकीं करेणाशु कैटभारिस्तदाऽसुरे । संभ्राम्य तत्क्षणेनैव विचिक्षेप विभीषणाम् ॥ ३८
गदया ताडयामास गदां विष्णोस्तदा भृशम् । तारकस्तरसा हन्तुं स्वं कृतान्तां महाक्रुधा ॥ ३९
ताड्यमाना तदा तेन न्यपतद्दुःखितादिव । पृथिव्यां नन्दकोऽप्येवं व्यर्थतामगमत्किल ॥ ४०
तारकस्तु तदा तूर्णं विष्णोरभ्याशमागतः । भ्रामयित्वा गदां स्थूलां घघोषुकः क्रुधा द्विजाः ॥ ४१
आगतं तं महावीरं अभ्याशं प्रेक्ष्य माधवः । ध्मापयंश्च तदा शंखं प्रळयांबुदनिस्वनम् ॥ ४२
सुदर्शनं महाघोरं सर्वेशात्तु निरन्तरम् ॥ ४३

मुमोच वज्रनिष्ठुरं तदास्य वक्षसि द्रुतम् । पतत्तदाप निष्फलतां विचित्र मत्र भो द्विजाः ॥ ४३

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
आसुरकाण्डे पञ्चमोऽध्यायः ॥

---

॥ अथ षष्ठोऽध्यायः ॥

शूरस्य परमेश्वरदर्शनम् ॥

ततस्तु तार्क्ष्यं विष्णुस्तरसा शक्रदारकम् । अभ्येत्याहस्य वचनं त्यक्तवज्रायुधः स्वयम् ॥ १
महोत्पलमहोर्धैर्यं अहो सर्वास्त्रशिक्षता । नान्यत्रैतादृशी किंनिम्मुक्त्वा रुद्रं त्रियंबकम् ॥ २
त्वन्मातैवासुरश्रेष्ठ सत्यं पुत्रवती त्वया । बहुना किं ममागस्त्वं क्षमस्व परया मुदा ॥ ३
ततस्तु प्रीतमनसा विष्णुं दैतेयपुङ्गवः । संभाव्य बहुधा चैनं तारकस्तं निवर्त्य च ॥ ४
शूरस्य निकटं यातः साञ्जलिः प्रश्रयेणवै । परिरेभे तदा शूरः प्रेम्णा चाघ्राय मस्तकम् ॥ ५
ततस्सर्वेऽपि संभूय चक्रवाळगिरिं ययुः । दृष्ट्वा तदद्भुतं दैत्याः स्वर्गलोकं प्रतस्थिरे ॥ ६
महेन्द्रस्तु तदाकर्ण्य भीतभीतस्तदा भृशम् । शच्या सह ययौ व्योम्नि पिक रूपेण शीघ्रतः ॥ ७
तस्य निर्गममार्गेण दैतेया दिवमागताः । आक्रम्य सर्वतस्तांस्ते बध्वा देवान् विनिर्गतान् ॥ ८
कुण्ठधिरथा तदाश्चर्यं महर्लोकं गताः खलु । तत्र स्थितैश्च ऋषिभिः प्रशस्य पूजितस्तथा ॥ ९
जनोलोकं तपोलोकं प्रेक्ष्य शूरस्तु सेनया । सत्यलोकं गतस्तूर्णं विधात्रा समलंकृतम् ॥ १०
जगामाथ विधिस्तत्रार्घ्यं नवभिर्ब्रह्मभिः क्षणात् । अभ्येत्य शूरं प्रोवाच वाचा शीतलया भृशम् ॥ ११
पितामहोऽहं युष्माकं नियतस्त्वत्र सर्वदा । त्वदैश्वर्यमिदं सर्वं ममैवासुरनायक ॥ १२
युष्मदागमनं चास्मात्पुरेऽपीति मतिर्मम । तवानुजानां भूयांसि संधित्मान्यायुधानि वै ॥ १३
महान्तं स्यन्दनं रम्यं इत्युक्त्वाऽदात्तदा विधिः । ततस्तु वेधसं शूरस्संभाव्य सुतरां द्रुतम् ॥ १४
विष्णुलोकं जगामाथ सहसैन्यैस्सहस्रशः । श्रुत्वा तदागमं विष्णुर्भूर्णुत्तं सहसागमत् ॥ १५
कृपया तव दैत्येन्द्र लोकेऽस्मिन्निवसेमम । द्रष्टव्यश्च त्वया लोकस्सम्यक् त्वत्सैनिकैर्मम ॥ १६
इत्युक्तवांस्तु तदा दैत्यैरगमत्पत्तने हरिः । तत्र तत्र विचित्राणि तेषां संदर्शयन्मुहुः ॥ १७
पुनश्चासुरवर्यस्य दत्वा द्रव्याणि भूरिशः । उपचारं तदाश्चर्यं अकरोन्मधुसूदनः ॥ १८
ततस्सुप्रीतमनसः शूरपद्मा हरिं तदा । प्रीणयित्वाशिरःक्षेप वचसा निर्ययौ क्षणात् ॥ १९
शिवलोकं तदारम्यं शुभ्रं रुद्रैस्सहस्रशः । गणनाथैस्तथा देवैर्मुनिभिश्च महात्मभिः ॥ २०
प्राकार गोपुराट्टाल वलभीभिस्समं ततः । सहस्रस्तंभयुक्तैश्च मण्टपैर्मण्डितं तथा ॥ २१
रुद्रकन्या सहस्रैश्च नानारत्न विभूषितैः । वीणा वेणु मृदङ्गाद्यैर्भेरी काहलडिंडिमैः ॥ २२
नाट्यवादिभिः कुशलैर्गायकैः किंनरैस्तथा । वेदघोषैस्तथाश्चान्यैस्सर्वदा परिशोभितम् ॥ २३
दृष्ट्वा शूरस्तु तरसा दूरतस्साञ्जलिस्तदा । सेनां निवर्त्य सिंहास्यतारकाभ्यां समन्वितः ॥ २४
मन्दं मन्दं तदाऽभ्येत्य मनसा संस्मरन् शिवम् । महादेवालयं तत्र महाद्रिमिव विस्तरम् ॥ २५
नानारत्नैर्विचित्रैश्च चित्रितं सुमनोहरम् । प्राकारैः परितो रम्यैस्सुरम्यं द्रुतकाञ्चनैः ॥ २६
अश्वत्थपत्रैश्च तथा स्वर्णतोरण निर्मितैः । विलसद्रूपभेश्चापि नानादिक्षु व्यवस्थितैः ॥ २७
इतस्ततश्च सौवर्णैर्मण्टपाद्यैरनेकशः । सोपानैश्च तथा कान्तं प्रवालेन्द्रोपलैः क्रमात् ॥ २८

वीक्ष्य चक्षुष्मतामाद्य साक्षादक्ष्णां तदाऽसुरः । कृत्वा दण्ड नमस्कारान् भ्रातृभ्यां सह भीमतः ॥ २९
धृतत्रिपुंड्ररुद्राक्ष मालाभिः परिशोभितम् । नन्दीश्वरं तदा दूरात् प्रथमद्वारमाश्रितम् ॥ ३०
भूतिभूषितसर्वांगं रुद्राक्षपरिमण्डितम् । कर्णकुण्डलकाभ्यां च शोभमानमुखांबुजम् ॥ ३१
धृतवेत्रकरं देवं द्वारपालधुरंधरम् । अनेककोटिगणपैरावृतं पार्श्वयुग्मतः ॥ ३२
महाभीमैर्महाक्रूरैर्महासंहारकारिभिः । मत्तोन्मत्तैर्महावीरैर्महाबलपराक्रमैः ॥ ३३
ब्रह्मांडपण्डं संहर्तुं भूतलेपैरिव स्थितैः । समुद्रांश्चुलुकोदेन पिबद्भिरिव हुंकृतैः ॥ ३४
सुरूपैश्च विरूपैश्च कुरूपैरपरूपकैः । द्विपादैश्च त्रिपादैश्च चतुष्पादैरपादकैः ॥ ३५
एकपादैस्तथा चान्यैरेकहस्तैर्द्विहस्तकैः । त्रिकरैश्च चतुर्हस्तैर्हंसवक्त्रैर्गजाननैः ॥ ३६
व्याघ्रवक्त्रैस्तथा चान्यैस्तरक्षुमुखभीषणैः । मृगाननैः खराद्यैश्च गोवक्त्रैर्महिषाननैः ॥ ३७
गोमायुवृषभकैश्चापि ऋक्षास्यैरश्ववक्त्रकैः । एकवक्त्रैर्द्विवक्त्रैश्च त्रिवक्त्रैर्बहुवक्त्रकैः ॥ ३८
दृष्ट्वा संफुल्लमनसा प्रणनाम तदा भृशम् । ततस्तु नन्दी प्रोवाच शूरपद्मानमीक्ष्य तम् ॥ ३९
महता क्रतुना पूर्वं शंभोः पूजा कृता खलु । त्वया प्राप्तमभीष्टं च किमर्थं चागमस्त्वह ॥ ४०

शूरः —

देवदेवं जगन्नाथं महादेवं विशेषतः । नमस्कर्तुं ममैतस्मात् किंकार्यं वदमे प्रभो ॥ ४१
तस्मादवसरं प्रेक्ष्य सेवार्थं मानयाधुना । नन्दी ततः प्रविश्याश्वः पुरं ईशं व्यजिज्ञिपत् ॥ ४२
अनुज्ञातस्तदा तेन शंभुनाऽऽगतोऽग्रतः । ततस्तु शूरपद्मासौ नन्दिनाऽन्तर्विवेशह ॥ ४३
तत्र तत्र स्थितान् द्वारे गणपान् संप्रणम्य च । कृतांजलिपुटो ध्यायन् भक्त्या चांतःपुरं गतः ॥ ४४
ददर्श देवमीशानं महादेवं त्रियंबकम् । सत्यज्ञानानंतमयं साक्षात् कैवल्यदायकम् ॥ ४५
ऋतं सत्यं परं ब्रह्म पुरुषं नीललोहितम् । ऊर्ध्वउत्तल रेतस्कं अप्रमेयं परात्परम् ॥ ४६
अष्टाविंशतिभिश्च कामिकाद्यैरभिष्टुतम् । वेदैश्चतुर्भिश्च सदा स्तूयमानपदांबुजम् ॥ ४७
रुद्रकन्यासहस्रैश्च नाट्यवीरसुन्दरैस्तथा । मृणालसूत्रविलसच्चामरासक्तपाणिभिः ॥ ४८
विज्ञम्भक्षीरनिनदैर्नृत्यद्भिश्च समंततः । मुक्तैस्सरूपैश्च तथा विघ्नेशैः कालकन्धरैः ॥ ४९
कुम्भेन च निकुंभेन गणपैश्च महात्मभिः । सन्मुखैश्च ऋषिभिः सेवितं परमेश्वरम् ॥ ५०
प्रणनाम तदा प्रीत्या भक्त्या शूरस्सहानुजः । नमस्तेऽस्तु महादेव सृष्टिस्थित्यंतकारिणे ॥ ५१
भक्तवत्सल विश्वेश विश्वरूपाय शंभवे । शिवाय भीमरूपाय शान्तरूपाय शङ्कर ॥ ५२
सांबायते ससोमाय सपुत्राय नमोनमः । गङ्गाधराय भर्गाय साक्षात्कैवल्यरूपिणे ॥ ५३
शुद्धस्फटिकसंकाशमूर्तये ब्रह्मणे नमः । इति स्तुत्वा स्थितास्तत्र प्रश्रयेण तदाऽसुराः ॥ ५४
ततस्तु देवदेवेशश्शैलाद्रिं प्राह शंकरः । भद्रकश्शूरपद्मासौ ब्रह्माण्डानि निजानिमः ॥ ५५
मदाज्ञया गतस्तेषु पालकान् परिकल्प्य च । निवृत्तोऽस्मिन्नण्डमध्ये वसत्वत्र सहानुजैः ॥ ५६
इत्यादिष्टो भगवता नन्दी प्रोवाच तं द्विजाः । शूर गच्छ स्वदीयानि ब्रह्माण्डानिच पालकान् ॥ ५७
परिकल्प्य यदाण्डेऽस्मिन् ईश्वरयाज्ञाच शांभवी । शूरस्तु तरसा देवं शंकरं लोकशंकरम् ॥ ५८
प्रणम्य पुनरस्ताकं भ्रातृभ्यां निर्ययौ सभात् । नंदीश्वरं नमस्कृत्य प्रथमद्वारमाश्रितम् ॥ ५९
अनुज्ञातस्तु तेनाशु सेनामाप निजां तदा ॥ ६०

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
आसुरकाण्डे षष्ठोऽध्यायः ॥

## ॥ अथ सप्तमोऽध्यायः ॥

### शूरपद्म नगरनिर्माणम् ॥

सेनया सहितश्शूरः प्रतस्थेऽण्डान्यवेक्षितुम् । ब्रह्माण्डभित्तिं तरसा प्राप रुद्रैश्च पालिताम् ॥ १
ततस्तु रुद्रास्तं दृष्ट्वा सेनया चागतं तदा । शिवाज्ञयाच्च तस्याशु मुमुचुः पदवीं निजाम् ॥ २
बहिश्चाण्डस्य ते यातास्तत्रेऽपि किलिकिंचिलैः । तेषु तेषु तदा तूर्णं अण्डेष्वेते महौजसः ॥ ३
गत्वाचैवं विजित्यारीन् पालकान् स्थाप्य तत्र च । भुक्त्वाच विविधान् भोगान् निर्ययुस्सहसाऽसुराः ॥ ४
एतदण्डं तदा सर्वं क्षणादेवागताः किल । विज्ञाय चागमं तेषां रुद्रास्तंडाधिपास्तदा ॥ ५
ब्रह्माण्डभित्तिं शिरसैव यथामार्गं ददुर्द्विजाः । ततस्तु शूरपद्मासौ अञ्जसा दिवमागतः ॥ ६
वक्षीर्णाभाधिपैरमेधांयद्भिश्च परस्परम् । अथासुरेन्द्रस्तरसा शुक्रेणैवं सहाप सः ॥ ७
मातामहः क्षीणबलो देवैः पूर्वं रणाङ्गणे । शुक्रेणच स्वबन्धुत्वमसौ प्रोवाच पण्डितः ॥ ८
ततश्शूरस्तु दैत्यानां गुरुं दैत्येन्द्रमेवच । नत्वा संपूज्य बहुधा प्रीत्याच परया तदा ॥ ९
दिग्जयंच तथाण्डेषु गमनं चाप्रवीत्तयोः । ताभ्यांतु सहितस्तूर्णं आत्तमिश्च परीक्ष्य सः ॥ १०
जगाम भूतलं शूरपद्मासौ भूरामुज्वलः । तच्छ्रुत्वातु ततो देवा विष्णुलोकं भक्तयता ॥ ११
भाजामुत्तासा ह्यत्रा भूत्वामेतद्भयान्विताः । दृष्टाच विष्णुं प्रोचुस्ते जनार्दनमरिन्दमम् ॥ १२
रक्षणीयास्त्वया देवा दैत्येभ्यो भीतमानसाः । इत्युक्त्वा प्रथया नम्रान् देवान् प्रोवाच माधवः ॥ १३
अहो देवा वृथा किं वा पश्यन्ते मूढबुद्धयः । दक्षाध्वरे महादेवं राजानं चाध्वरस्य ते ॥ १४
हित्वा पूर्वं मया सार्धं हविर्भाजः स्थिताः खलु । तदानीमेव तस्यासं फलमस्मान्मिलेच ॥ १५
भोक्तव्यं पुनरप्यत्र तत्पापस्य फलं ध्रुवम् । तस्माद्दैत्यवरश्शूरः प्रीणनीयो यथातथा ॥ १६
इत्युक्त्वा प्रययौ सार्धं अथखिन्नान्द्रिजकसा । कोटिदेवैस्तदा शूरं साक्षान्नारायणः स्वयम् ॥ १७
शूरपद्मानमभ्येत्य विष्णुर्भूम्युखेनोऽब्रवीत् । कुमार्के तेऽसुरश्रेष्ठ आत्मसिरसह सैनिकैः ॥ १८
रक्षितामितसंघाय तत्पूर्णा भीषणायच । एतावत्कालपर्यन्ते दययाते स्थितोऽस्म्यहम् ॥ १९
ततस्तु शूरपद्मासौ प्रीणयित्वा हरिंतदा । देवानां मध्यतो रुद्रान् बहून् दृष्ट्वामितौजसः ॥ २०
एते केवाबद्रूपा मूढि मे माधवाधुना । त्रिनेत्रा नीलकण्ठाश्च किमर्थं देवमध्यगाः ॥ २१
इति तस्य वचः श्रुत्वा प्राह तं पुरुषोत्तमः । विष्णुः – पुरा ब्रह्मा रजोयुक्तो वृथाहंकारगर्वितः ॥ २२
अहमेव जगत्कर्ता संहर्ता पालकस्तथा । विस्मृत्य शिवलीलांसः महामायाविमोहितः ॥ २३
ततस्तु सृष्टिसामर्थ्यं गतमस्य शिवाज्ञया । अहो मूढेन मनसा मया किंवा विचेष्टितम् ॥ २४
शिवस्य माया दुर्लंध्या सर्वसंमोहकारिणी । यस्माच्छिवं महादेवं मम कर्तारमव्ययम् ॥ २५
अविज्ञायाखिलोकानां सृष्ट्यादिकरणोद्यमम् । अहंकृतं मयात्यर्थं प्राप्तमेतत्फलं ध्रुवम् ॥ २६
इति चिन्तापरवशो भ्रूमध्ये सांत्रमीश्वरम् । त्रिनेत्रं नीलकण्ठंच प्रफुल्लाननपङ्कजम् ॥ २७
कुन्दमंदस्मितमुखं मुक्तादामविराजितम् । कोटिसूर्यप्रतीकाशं शुभ्रपीठासने स्थितम् ॥ २८
ध्यायन्नास्ते भृशं शंभुं सच्चिदानन्दविग्रहम् । ततस्तु प्रीतमनसा रुद्रानेकादशेश्वरः ॥ २९
न्ययोजयत्तदा रुद्रा भ्रूमध्ये ब्रह्मणः क्षणात् । प्रादुर्बभूवुस्तान् ब्रह्मा प्रणम्योवाच भक्तितः ॥ ३०
केयूयमागतास्त्वत्र किमर्थमिति विश्वसृक् । विनियुक्ता वयं रुद्रास्सृष्ट्यर्थं तेऽधुनाविधे ॥ ३१
शंभुना देवदेवेन प्रशास्तसात्त्वान्तिकम् । ततस्तु रुद्रान् प्रोवाच ब्रह्मा रुद्रपरायणः ॥ ३२

युष्माभिरेव कार्या सा सृष्टिस्सर्वेश्वराज्ञया । तच्छ्रुत्वा तु ततो रुद्रा ब्रह्मणो वचनं तदा ॥ ३३
अकुर्वन्रुद्रसृष्टिं ते प्रत्येकं कोटिसंख्यया । रुद्रान् बहून् तदा दृष्ट्वा रुद्धान् रुद्रैर्महात्मभिः ॥ ३४
आवृतं तु जगज्जालं रुद्रैराह प्रजापतिः । अलमेषां महात्मानो रुद्राणां सृष्टिरीदृशी ॥ ३५
इतः परं मयैवेयं क्रियते युष्मदाज्ञया । इत्युक्त्वा सहितैर्ब्रह्मा रुद्रैकादशकैस्तथा ॥ ३६
तदुद्भूतैश्च रुद्राणां एकादशककोटिभिः । रुद्रलोकं जगामाशु नानाविभव विस्तरम् ॥ ३७
तत्र गत्वा महादेवं नन्दिद्वारा व्यजिज्ञपत् । नन्दिना तु समाहूतो विवेशान्तःपुरं विधिः ॥ ३८
तत्र दृष्ट्वा महादेवं लोकानुग्रह कारिणम् । प्रणम्य दण्डवद्भूमौ स्तुत्वा च बहुभिः स्तवैः ॥ ३९
स्थितस्तु देवदेवेन पृष्टस्तत्र शिवेन सः । किमर्थमागतोऽसीति प्राह वाचं मयान्वितः ॥ ४०
स्वाज्ञामशेषे रुद्राणां तत्सृष्टिं च विधाज्ञया । रुद्रसृष्टिं च बह्वीं [illegible] तथा नीतिमयमादिकाम् ॥ ४१
ततस्तु तं महेशानः मेरुपुत्रांशुमालिना । अद्य प्रभृति सृष्टिं त्वं कुरु मद्गन्मदाज्ञया ॥ ४२
भवलेपं विमुच्यत्वैव यथापूर्वं च देहिनाम् । रुद्रानेकादश तदा भुवनं समचोदयत् ॥ ४३
सुरेष्वेकादश तथा कोटी रुद्रानकल्पयत् । तैस्सार्धं देवताः कोटित्रयस्त्रिंशदन्विताः खलु ॥ ४४
प्रसादं देवभीतानं नमस्कृत्वा स्थितिंगतः । तदिमे सूत सूतानां रुद्राः प्रोक्ता मयाऽधुना ॥ ४५
तच्छ्रुत्वा शूरपद्मासौ रुद्राणां सृष्टिमद्भुताम् । प्रीतिमवापातुलं प्राह तैमिषैर्मण्येन सः ॥ ४६
ततस्तु शूरपद्माख्यं पुरं शुक्रेण चोदितः । लवणाब्धौ तदा रम्यां त्वष्टाऽकारयदद्भुताम् ॥ ४७
यस्येऽशीति सहस्रैश्च योजनानां विशालतः । शतयोजनविस्तारविनियुक्तामनेकधाः ॥ ४८
प्राकार परिखाभ्यां च मेखलाभ्यामिवावृताम् । चतुर्द्वार्स्थ महोच्छ्राय गोपुरा मंडलान्ताः ॥ ४९
मण्डपश्च तथास्थूपाश्चाऽथो ध्वजतीमिव । वापीकूपतटाकैश्च कासारैः परितो वृताम् ॥ ५०
चतुर्दिक्षु स्थितोद्यान षण्डकानन मण्डिताम् । नारिकेराम्रपनसपाटलैर्मधुकैस्तथा ॥ ५१
अशोकपूगहिंतालतालमातुलुंगकैः । जंबूगुरुवनमेषैर्मिश्रकमलीपारिजातकैः ॥ ५२
कुद्दालवटमन्दारबकुलाश्वत्थनिम्बकैः । औदुम्बरबीजपूराक्षलोध्रराजादनैस्तथा ॥ ५३
शिरीष श्रीफलांकोल कुलका गुरु चन्दनैः । तिन्त्रिणीवरण द्रुमा ककुभा युग्म पत्रकैः ॥ ५४
तमाल तिलकाद्यैश्च शतशः परितो वृताम् । वलभ्यट्टाल हर्म्यैश्च सोपानावलि राजितैः ॥ ५५
अलिन्द देहली श्रीम जालकैश्च मनोहरैः । शृङ्गैर्मणिमयाञ्चितैश्शतशोऽथ सहस्रशः ॥ ५६

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
आसुरकाण्डे सप्तमोऽध्यायः ॥

---

॥ अथ अष्टमोऽध्यायः ॥

इल्वल वातापि जन्म कथनम् ॥

सूतः —

मध्येचास्य गृहं तस्य शतयोजन संख्यया । सहस्राणां तदा रम्य प्राकार परिखावृतम् ॥ १
चतुर्षु द्वारदेशेषु महागोपुर भूषितम् । अनेकाट्टाल संयुक्त प्रासाद सुमनोहरम् ॥ २
वेदिका शतसंघैश्च स्फाटिकोपल निर्मितैः । निश्रेणिकायुतैर्दिव्यैः नाना दिक्षु व्यवस्थितैः ॥ ३

भित्तौ नानाविधैश्चित्रैः चित्रितं सर्वतो भृशम् । क्रीडा पर्वत संघैश्च वापी जालैस्समंततः ॥ ४
कूपैरनेकशस्तद्वत् पृथुवापीभिरावृतम् । आरामवृन्दैश्च तथा सर्वर्तुकुसुमोज्ज्वलैः ॥ ५
प्रमदावनषण्डेन मण्डितं परितस्तथा । यागशालासहस्रेण राजितं सर्वदिक्ष्वपि ॥ ६
भोगशालाभिरभितो यानशालाभिरावृतम् । पाकशालाशतेनापि विशालेन समंततः ॥ ७
भूषणानां च शालाभिर्युद्धशाला शतैस्तथा । मल्लशालाभिरभितो नृत्तशालाभिरावृतम् ॥ ८
विद्याभोजनशालाभिर्गजाश्वानां तथैव च । आस्थानमण्डपानां च राजिभिः परिशोभितम् ॥ ९
देवासुर भटानां च मन्त्रिणां मंटपैस्तथा । एकान्तमण्डपैश्चापि नानारत्न विचित्रितैः ॥ १०
मुक्ताविरचितैरन्यैर्मण्डपैस्सुमनोहरैः । प्रवालमण्डपैश्चापि चारुतेजोस्वर्णैस्तथा ॥ ११
वैडूर्यरत्नखचितैर्बहुभिर्मण्डपैरपि । पुष्परागैस्सुभैश्चापि रचितैश्चाप्रमुज्ज्वलैः ॥ १२
पद्मरागैरनेकैश्च तेजोराशि विजृंभितैः । तथा मरतकैश्चारुकान्तिजालपरिष्कृतः ॥ १३
इन्द्रनीलैश्च भूयोऽपि त्रासदोषविवर्जितैः । चन्द्रोपलैरनर्घैश्च कृतैरायैर्मनोहरैः ॥ १४
शुद्धस्फटिकसंघैश्च गोमेदकशिलाचितैः । हरिचन्दनवृक्षौघैस्सुगन्धैरपि चित्रितैः ॥ १५
प्रथमाविभित्त्यैश्च मण्टपैश्चाकमण्डितैः । कृतस्ततश्च परितः कृतैस्सर्वत्र शोभितम् ॥ १६
अनेककोटिमाणिक्यखचितं तत्र तत्र च । पताकाभिर्गताकाशपदवीभिस्तथा भृशम् ॥ १७
स्वर्णध्वजाकलोकस्य हर्षदैश्च समन्ततः । मुक्तामाणिक्यखचितकवाटैश्च सहस्रशः ॥ १८
नानाद्वार शिलास्थांतु तस्कराख्यां जनाश्रयम् । कारयित्वाऽथ त्वष्टेण पुरोनाम चकार सः ॥ १९
वीरमाहेन्द्र नाम्रेन प्रथितं भुवनत्रये । पुरापि तस्याः परितः चित्रापथ्यौ तदासुरः ॥ २०
हेमाख्यं च पुरातस्य देयाभिधमतः पुरम् । लंकापुरं तथान्यच्च श्रीलाख्यं श्वेतमहितम् ॥ २१
असुराणां पुरं तद्वदानाख्यंच महापुरम् । वज्राभिधं पुरं तद्वत्कारयामास पण्डितः ॥ २२
एवमुत्तरदिग्भागे समुद्रस्य तदासुरः । आसुराख्यां पुरीं रम्यां सर्वरत्न विचित्रिताम् ॥ २३
तथा दक्षिणतो मेरोर्द्वीपे जंबूभिधे पुरम् । हेमकूटाद्रि निकटे मायाख्यं सुमहद्भृशम् ॥ २४
द्वीपे द्वीपेच नगरं सप्तद्वीपे च सर्वतः । कारयामास बहुशः शूरपद्मा महासुरः ॥ २५
ततस्तु वीरमाहेन्द्र पुरं प्राप तदाशु सः । दृष्ट्वा तत्र विचित्राणि क्रमेण गृहमाविशत् ॥ २६
तत्र मायासुरश्रेष्ठस्सह विष्ण्वादि दैवतैः । आरुभिश्च तदा तूर्णं सिंहासनमधिष्ठितः ॥ २७
ब्रह्मातु तस्य मकुटं शिवमादाय दत्तवान् । पट्टाभिषेकं च तदा चकार मतिमान्सुरैः ॥ २८
ततस्तु सर्वदेवेन्द्राः सन्तोषं प्रापुरञ्जसा । विष्णुमालोक्य शूरोऽथ प्राह सन्तोषतस्तदा ॥ २९
यदाहूतो मया विष्णो तदागच्छाधुना मत्र । दिक्पालश्च तदेशानमेकादशक कोटिकान् ॥ ३०
रुद्रानेवं विमुच्यैवं सिंहास्य तारकं तदा । निवेशयित्वा देवानां प्रत्येकं कार्यमाह सः ॥ ३१
ताम्बूलकरकपात्रंतु पुरुहूताय दत्तवान् । अशेषमस्यापि तथा पानीयत्वं समादिशत् ॥ ३२
भृङ्गारपात्रं निर्ऋतेर्व्यंजनं वरुणस्यतु । वायोश्चामरकञ्चैव धनदस्य तथासुरः ॥ ३३
पूगभक्षां तथा चन्द्रसूर्ययोश्छत्रमेवच । असुरेन्द्रस्य खड्गंच दत्वातु सुमनोहरम् ॥ ३४
सिद्धविद्याधरगणैः किन्नरैर्गरुडैस्तथा । गीयमानश्च परितो नानागान विशारदैः ॥ ३५
रम्भोर्वशीमेनकाभिर्नृत्यन्तीभिर्निषेवितः । एवं सिंहासनारूढो देवांश्च परितः स्थितान् ॥ ३६
प्रेक्ष्य शूरो मरुत्वन्तं तदा प्राह सुरेश्वरम् । देवैस्सह मदीयैस्त्वं पुरुषैश्चोदितः हविम् ॥ ३७
[illegible] नित्यं मयापेष विमुच्याहंकृतिं वृथा । अग्निमाह तदा शूरो दैत्यैः स्पृष्टोऽपि पाचक । ३८

मा दहेति तथा तेषां पाकं कृत्वा पुरे वस । यम त्वं शान्तरूपेण प्रेष्यस्सर्वैर्दितेस्सुतैः ॥ ३९
निवसात्र तथा तेषां निधनञ्चाप्यकारयन् । वरुणेन त्वया शीतगन्धोदेनैव सेचनम् ॥ ४०
सदा कार्यं मदीयेऽस्मिन् पत्तने सावधानतः । मन्दं मन्दं त्वया वायो वातव्यं गन्धशीतलैः ॥ ४१
कुसुमांशु बिन्दुभिर्नित्यं मुग्धनारी कुचे क्षिपन् । तथा संमार्जनं चापि कृत्वा भीतेन सर्वतः ॥ ४२
कुबेर त्वं [illegible] द्रव्यं भटानां यदपेक्षितम् । शङ्ख पद्मनिधी हित्वा सर्वदा सावधानतः ॥ ४३
गोपुरद्वारदेशे त्वं स्थित्वा सूर्यातपं कुरु । अघर्मघर्मपृषता भूषयन्नङ्गना मम ॥ ४४
शीतांशुना त्वया पूर्णकलायुक्तेन सर्वदा । मनस्विनी मनोभिस्त्वा कार्या मे नर्मदूतता ॥ ४५
पक्षत्या दिनशुद्धिश्च त्वया ब्रह्मन् विशेषतः । स ह पुत्रैश्च दशभिः प्रजापतिभिरन्वये ॥ ४६
एवं नानाविधानां स देवानां चतुरस्तदा । मोक्त्वा कार्यविशेषाणि स्वयं सिंहासने स्थितः ॥
शुक्रेण गुरुणा चापि प्रोक्षितस्सन् कुशोदकैः । ४७

प्रतिदिनमिति देवैरिन्द्रपूर्वैरशेषैर्ध्यं दितितनुज समूहैस्तूरपदाम्भसपतः ।
कृतनिजहृपिसंघरसम्भूतं सार्वभौमस्समधिगतपदुश्रीर्भ्रांतिभिर्भूसुरेन्द्राः ॥ ४८

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
आसुरकाण्डे अष्टमोऽध्यायः ॥

---

॥ अथ नवमोऽध्यायः ॥

इस्थलयाताणि अन्याकथनम् ॥

ततस्तु शूरपद्मोऽयं त्वष्टुः कन्यां मनोरमाम् । उदुवाह विशेषेण पद्मकोमलकां ततः ॥ १
सुतास्तस्तनयास्तस्या बभूवुरसुरलोकदाः । भानुकोपाभिधः कश्चित्तथा चाग्निमुखोऽसुरः ॥ २
हिरण्यनामाथ परो वज्रबाहुस्तथेतरः । दैत्यकन्या तथा चान्यदीरसुराणांच कन्यकाः ॥ ३
राक्षसीश्च तथा भूयो गन्धर्वाणांच कन्यकाः । सिद्धविद्याधराणांच नागानामपि कन्यकाः ॥ ४
[ किंपूरुषाणां पततां किन्नराणांच कन्यकाः ]
उद्वाह्य तदा पुत्रान् स्वासु वीर्यबलान्वितान् । त्रिसाहस्रमितान् शीघ्रं सभीजनयदो द्विजाः ॥ ५
सिंहाननं तारकंच कोटिहय पशेस्सह । प्रत्येकमाशु तौ वीरौ आसुराख्ये पुरेऽकमात् ॥ ६
मायापुरेऽथ महति प्रेषयामास वीर्यवान् । तत्र गत्वातु सिंहास्यो यामस्यां कन्यां विभूतिकाम् ॥ ७
उद्वाह्य पुत्रं तस्यां सः महादुम्रमजीजनत् । एवं कन्या विवाहार्थे शतपुत्रानजीजनत् ॥ ८
तारकोऽपि तथा कन्यां निर्ऋतेस्सौविधां तदा । असुरेन्द्राभिधं पुत्रं धर्मासिद्धादयं श्रुतम् ॥ ९
उवाच स्वपुरे रम्ये रममाणोऽप्यसपत्नः । पुत्रस्तु शूरपद्मार्ये प्रतिद्वीपं तदासुरान् ॥ १०
त्रिकोटिगणितांश्चैव वाहिनीः प्रैषयन्निज । पाताळ भूमि नाकेषु वाहिन्यागमितांस्तदा ॥ ११
षट्कोट्या बहुधा भिन्नानसुरान् विन्यवेशयत् । वीरमाहेन्द्रपुर्यांस्तु परितोऽस्वपुरेऽप्यथ ॥ १२
गजाननं सुरक्तास्यं वाजिवक्त्रं तथेतरम् । महूकवक्त्रमपरं व्याघ्रवक्त्रं महाबलम् ॥ १३
वराहमुखमन्यश्च सिंहवक्त्रं तथेतरम् । नववाप्यभिमानस्थं महावीरान् महौजसः ॥ १४
अक्षौहिणीवाहिनीभिस्तान् सहस्राणां न्ययोजयत् । स्वपुरेऽपि तथा द्वारे वाहिनीनाश्च लक्षकम् ॥ १५
बलं तथा गोपुरेषु प्राकारेष्वेवमादिषु । स्थापयामास दुर्गोऽयं बहुवीर्यपराक्रमान् ॥ १६

दुर्मुखं धर्मकोपंच दुर्मुखं शङ्खपालकम् । वज्रपालंच मर्मज्ञं महिपाख्यञ्च मन्त्रिणम् ॥ १७
कृत्वा शूरस्तु तैस्सार्धं राज्यभारं तथावहत् । देवा देवेन्द्रमुख्याश्च ऋषयश्च तपोधनाः ॥ १८
शूरं सिंहासनं चक्रुश्चारकञ्च दिनेदिने । तत्पुत्रान्मंत्रिणश्चापि दृष्ट्वा तैश्चोदिताः क्रियाः ॥ १९
कृत्वा तस्थुर्महाभीता गरुडं पन्नगा इव । कदाचिदमरानिन्द्रपूर्वान् प्रेक्ष्यासुरोत्तमः ॥ २०
आनेतव्याश्च बहवो मीना युष्माभिरञ्जसा । इत्यजरीचदा देवाः शूरं दुःखित मानसाः ॥ २१
ओमित्युपगम्याथ सर्वेऽपि संभूयाब्धिं गताः खलु । दक्षाध्वरकृतं दोषं स्मृत्वा स्मृत्वा भयहताः ॥ २२
वरुणे प्राह देवेन्द्रस्तथा मीनास्समुद्धृताः । नेतव्या भूरिशस्तूर्णमित्येवंच भयान्विताः ॥ २३
ततस्तु वरुणश्शीघ्रं नळमीनान्बहूनपि । तिमिङ्गलानपि तदा तिमिङ्गिल गिलांस्तिमीन् ॥ २४
मकरादींश्च सहसा वारिधेरानयत्तटे । सूर्यस्तु शोषयामास यमः प्राणानपाहरत् ॥ २५
नागपाशेन बध्वा तान् शूरवेश्मापुरञ्जसा । स्मित्वाऽसुरस्तदा प्रेक्ष्य शूरो वाचमुवाच ह ॥ २६
एवं प्रतिदिनं देवा नेतव्यं मीनजालकम् । इति श्रुत्वा पुरा तस्थुर्वारे वारे भयान्विताः ॥
ऋषयः — अजामुखीतिया प्रोक्ता पूर्वं सुतमहामते ॥ २७
तस्याश्चरित्रं किंवास्यात् सूत सर्वं यथातथम् । सूतः - शृण्वन्तु तस्याश्चरितं वदतो मे द्विजोत्तमाः ॥
महाक्रूरा महापापा महाकामवती गता । पञ्चरनायतहृदया सर्वेषां सर्वदाच सा ॥ २९
चतुर्दशसु लोकेषु सञ्चरन्ती निजेच्छया । तत्र तत्र स्थितान्दिव्यानूर्ध्वानन्यान् सुरानपि ॥ ३०
मत्तुरांश्चैव रक्षांसि सुन्दराकारानपि । यूनश्च वार्धिकानेवं यंवा कंवा परिस्थितम् ॥ ३१
सहस्रपुरुषानेवं धर्षयत्येकवासरे । तथा मार्गस्थिता रथ्या बाला प्रौढाश्च कन्यकाः ॥ ३२
बलात्कारेण बध्वा ता आत्मरूपः स ददाति सा । यागानां तपसां चापि विघ्नं कृत्वैव तिष्ठति ॥ ३३
एवं स्थिता महाघोरं कर्म कृत्वा कदाचन । आसाद्य ऋषिवर्यं वा दूर्वाससमथाब्रवीत् ॥ ३४
पुत्रार्थं त्वामिहापन्ना दूर्वासस्तपतां वर । कर्तव्यश्च मया सार्कं संभोगस्सुतरामिति ॥ ३५
दूर्वासा वचनं तस्याश्श्रुत्वात्यन्तं भयं गतः । गच्छ त्वं बालिशे सोऽहं अशक्तः खलु तापसः ॥ ३६
इति ब्रुवन्तं तं भूयो बलात्कारेण सा शुभाम् । अधरं परिगृह्याशु चुचुंबोष्ठेन तस्यच ॥ ३७
उत्तानयित्वा सास्वयं रमयामास तं बलात् । तयोस्सुरतवेगेन जातौ पुत्रावरिन्दमौ ॥ ३८
इल्वलावदश्च वातापिः पितृ माता स्वरूपिणौ । दूर्वाससं कशाविष्टौ पितरं प्रेक्ष्य दुर्जनौ ॥ ३९
तपोबलमिदं सर्वमावयोर्दीयतां तव । इत्युक्तस्तदा क्रुद्धो दुर्वासास्तावपेक्ष्य [illegible] ॥ ४०
भ्रान्तौ कथं दुरात्मानौ दातव्यं तपसः फलम् । एवमुक्त्वानवेक्ष्यन्तौ दूर्वासास्तपसि स्थितः ॥ ४१
ततस्तु तावुर्पि हन्तुं प्रवृत्तौ पापिनौ तदा । तौ दृष्ट्वा मुनिशार्दूलस्तावद्वीरौ क्रोधविह्वलः ॥ ४२
दुरात्मानौ युवामेवं कृत्वा ऋषिषु दुष्क्रियाम् । वातं निधनमित्येवं शशाप ऋषिसत्तमः ॥ ४३
अथेल्वलवातापी उद्दिश्य विधिमध्वरम् । नियमेन समायुक्त चिरकालं द्विजोत्तमाः ॥ ४४
स्रष्टुः प्रसादलाभाय ऊषतुः वातापिरिल्वलः । शतवादशतश्चैव जुहावाग्नौ तदासुरः ॥ ४५
ततस्तु तरसा ब्रह्मा प्रादुरासीत् क्षणाद्दृदो । प्रसन्नोऽस्मि तवाद्याहं वरं यद्ब्रूहि तेऽनघ ॥ ४६
ददामि तददाचैव सत्यमुक्तं मयाऽधुना । इल्वलः—वातापिमजरूपेण स्थितं दत्वा मृतं पुनः ॥ ४७
आह्वयामि यदाहं तं तदायातु स्वरूपभाक् । तथेत्युक्त्वा पुनर्ब्रह्मा जगाम स्वपदं तदा ॥ ४८
ततस्तौ महावीरौ शरणपानमेत्य च । प्रणम्य परया प्रीत्या निजसुताल्समूचतुः ॥ ४९

चिरकालमुषित्वात्र कुरुकं देशमापतुः । तत्र गत्वा वने रम्ये पर्णशालां मनोरमाम् ॥ ४०
कृत्वान्यवसतां तत्र भुक्त्वाचैव यथेप्सितः । मार्गपर्यन्तमुत्थौ तौ पथिकान् ब्राह्मणानृषीन् ॥ ४१
दृष्ट्वातु ऋषिरूपेण स्वयं गत्वा प्रणम्य तान् । अर्घ्यपाद्योदकञ्चापि दत्वाचासनमुत्तमम् ॥ ४२
निवेशयित्वा तथैतैश्चोदितस्सन् स्थितः स्थले । अस्मद्भाग्यवशाद्यूयं आगता ब्राह्मणोत्तमाः ॥ ४३
पितृ पूजा ममैतस्मिन् दिवसे कृत्वा भवेत् । इति चिन्तापरवशो निवसेऽद्य तपोधनाः ॥ ४४

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
आसुरकाण्डे नवमोऽध्यायः ॥

---

॥ अथ दशमोऽध्यायः ॥

इन्द्रस्य इन्द्राण्यासाकं श्रीकाशीनगरे निलीय मयस्थानम् ॥

इदानीं भूतलं श्रीमद्युष्माभिः समलंकृतम् । तस्मादन्यतमो लोके सोऽहं पुण्यप्रभावतः ॥ १
अङ्गीकारश्च कर्तव्यो युष्माभिर्भोजनाय वै । निमन्त्रयित्वा तानेवमित्थलः पापकर्मकृत् ॥ २
आहूय मेषरूपेण चरन्तं वातापिं स्वयम् । वातापिंच तदा हत्वा पक्त्वा पश्चात् तथा द्विजान् ३
आहूय भूरिशस्तेषामाकण्ठं भोजनं क्षणात् । दत्वातु पुनरभ्यैत्य पर्णशाला बहिः स्थलम् ॥ ४
आगच्छागच्छ वातापेत्येवमुच्चैर्वदत्यसौ । ततस्ससंभ्रमं तूर्णं वातापिर्ब्राह्मणोदरम् ॥ ५
भित्वादाय तदा सद्य आतृप्याति क्षणात् द्विजाः । एवं दिने दिने सोऽयं दुरात्मा ब्रह्मघातकः ॥ ६
स्थितस्तत्र यथाचेच्छा कर्मकृत्वा सुदुष्करम् । इत्युक्तमजयकथास्तस्य चरित्रं ब्राह्मणोत्तमाः ॥ ७
अथ शूरस्य चरितं उच्यते पुनरेवच । इन्द्रलोकस्थे शूरः स्थित्वाण्डेषु दिने दिने ॥ ८
गत्वा पातालनेकस्मिन्नामध्याह्न दिने स्थितः । पुनश्च पश्चाद्यापाति धीरमाहेन्द्र पत्तनम् ॥ ९
तथा परस्मिन् दिवसे चामध्याह्नं भुविस्थितः । पुनर्गत्वा पुरं शशाङ्कस्यलोकं तथैव च ॥ १०
इन्दुमण्डलमप्याशु सौम्यमण्डलमेव च । शुक्रस्य मण्डलं तद्वत् सूर्यस्यापि च मण्डलम् ॥ ११
अङ्गारकस्यापि तथा गुरोरपि च मण्डलम् । सौरेश्च मण्डलं गत्वा ब्रह्मलोकं तथैवच ॥ १२
विष्णुलोकंच गत्वातु दृष्ट्वा तत्रस्य मद्भुतम् । मध्याह्नकाल पर्यन्तं तत्रतत्र दिने दिने ॥ १३
स्थित्वा स्थित्वा पुनर्याति रात्रिं रात्रिं तथापच । ततः कदाचिच्छूरोऽसौ शचीं रन्तुमना भृशम् ॥ १४
कामबाणैस्सन्ततः स्वातधिपमथादिशत् । इन्द्रं बध्वा तथेन्द्राणीं आनयाशु पुरे मम ॥ १५
आहूर्यदा तदा भार्यां भयकोपैः प्रतस्थिरे । तदागमनमाकर्ण्य शच्या साधं पुरन्दरः ॥ १६
पलायत पुराद्धीमान् भीतभीतमना भृशम् । ततस्तु सावधित्वामिदैवलोक आगाम सः ॥ १७
तत्र गत्वा सुरेन्द्रस्य निर्गमं दिवसी मूंदाम् । तादितैश्च समगृच्छन् मायशूरंच मायाविः ॥ १८
वृत्तान्तं तन्मुखेनायं श्रुत्वा शूरो महाबलः । ततस्तु सर्वलोकेषु चारानाशु न्यपोऽप्रयत् ॥ १९
तदानीमपि देवास्ते सुवन्द्र आगता द्विजाः । इन्द्रस्य विरहादेव देवलोके गतश्रियः ॥ २०
जयन्तं विष्णुलोकस्थं इन्द्रपुत्रं व्यजिज्ञिपन् । ऋषयः - किमर्थं सुतमुत्सृज्याथं जयन्तस्तु त्रिविष्टपम् ॥
विष्णुलोके स्थितस्तत्र वद नस्तपनायत । सूतः - द्विजाश्शृणुत सर्वेऽपि यूयं सावधानतः ॥ २२
पुरा शूरभयात्तस्माच्छुनासीरैव सर्वतः । उपेन्द्र इन्द्रावजो विष्णुलोकं जगाम सः ॥ २३
जयन्तस्तु तदा बालो पालितुं सहजं पितुः । विष्णुलोकं मयान्मुक्तं तत आरभ्य तिष्ठति ॥ २४

तमाहूय तदा देवास्तेन स्वर्गं प्रपेदिरे । जयन्तस्तु पितृशोकात् भृशकर्शितविग्रहः ॥ २५
देवलोके स्थितश्चैवं कर्पिं कृत्वा तदासुरीम् । ततः कालवशेनैव नारदस्तमपश्यत ॥ २६
स दृष्ट्वा ऋषिशार्दूलं प्रणम्योवाच भक्तितः । धन्योऽस्मि नितरां युष्मत्पादसेवा वशादपे ॥ २७
विनातु पितरौ शोको बाधते मां सुदारुणः । इत्युक्त्वा विनयानम्रं नारदो वाक्यमब्रवीत् ॥ २८
शोकं त्यज जयन्ताद्य युष्मदिष्टं भविष्यति । पित्रोश्च संगमो भावि कतिचित्कालमात्रतः ॥ २९
येन यत्र कृतं कर्म यथावत्सुरसत्तम । तेन तत्रैव तत्तावद्भोक्तव्यमिति निश्चयम् ॥ ३०
त्वत्पितातु शुनासीरो सार्धं देव्या भुवंगतः । असुराणां विनाशार्थं तपस्येव शिवं प्रति ॥ ३१
तस्मादिदानीं त्वं कृत्वा कार्यमिन्द्रद्विषोऽनिशम् । तिष्ठ सार्धं सुरैस्सर्वैरप्रमादेन बुद्धिमान् ॥ ३२
इत्युक्त्वा नारदस्तूर्णं आकाशे गतवान् द्विजाः । शुनासीरस्तु भूलोके चिदंबर समीपतः ॥ ३३
श्रीकापाल्यपुरे रम्ये महादेवं सदा भृशम् । पूजयित्वा स्थितस्तत्र ज्ञात्वा नाशम् सदीपकान् ॥ ३४
आरामवृक्षमध्येषु शच्या सार्धं पुरन्दरः । वैणवं रूपमाप्यायं अतिप्रच्छन्न वेषभाक् ॥ ३५
जपमद्यपराद्वृष्टिस्तदानीं नाभवत्किल । म्लानमापुस्तदा वृक्षास्तथस्या वृष्ट्यभावतः ॥ ३६
अहो दुष्कर्ममहिमा ब्रह्मणापि न लंघ्यते । मदागमनमात्रेण वृक्षास्संशोषिता यतः ॥ ३७
एवं चिन्तापरवशो भवत्यति भृशं तदा । शोकहारिण्यभूद्वाणी कल्याणी त्वशरीरिणी ॥ ३८
मघवन्मुञ्च शोकं त्वं पुण्यत्यज सविह्वरा । कालेन कियता चैव वृक्षास्सर्वेऽपि पूर्ववत् ॥ ३९
पुष्पिमेष्यन्ति ते सम्यङ्मुकुलीर्णपलाशकाः । श्रुत्वाऽशरीरिणीं वाणीं हृष्टोऽयं वृत्रहा तदा ॥ ४०
भृशं सन्तुष्टिमापायं मुक्तशोकस्तदा द्विजाः । एतस्मिन्समये शीघ्रं नारदो विन्ध्यमागतः ॥ ४१
आगतं तमृषिश्रेष्ठं प्रणम्याशु तदा गिरिः । अर्घ्यपाद्यादिकं दत्त्वा विष्टरे संन्यवेश्य तम् ॥ ४२
धन्योऽस्मि नितरां युष्मद्दर्शनात्मुनिसत्तम । एवमुक्त्वा स्थितं विन्ध्यं नारदो वाक्यमब्रवीत् ॥ ४३
कुशलं ते गिरीन्द्राय सहिताय महात्मभिः । इदानीं मेरुपर्वतात्सागतोऽस्मि तवान्तिकम् ॥ ४४
श्रुत्वा तेनोदितां वार्तां ममाप्याश्चर्यमाययौ । कथं वच्मि तवात्मैवमप्रियां विन्ध्यसन्निधौ ॥ ४५
तथापि ते गुरुश्रद्धा वर्तते मयि सततः । श्रोदयायेव सात्वमतं वक्ष्याम्यमिति पर्वत ॥ ४६
चन्द्रसूर्यौ प्रतिदिनं सह नक्षत्र राशिभिः । प्रदक्षिणं सदा कृत्वा गच्छतो मां भयान्वितौ ॥ ४७
पुरंदरपितुर्दर्शोर्ध्वगुर्भावं गतोऽस्म्यहम् । सर्वेऽपि देवा मय्येव वसन्ति श्रद्धया सह ॥ ४८
तस्मान्मत्सदृशो लोके महत्वेन महीधरः । विन्ध्यः प्रोवाच वचनं स्फुरदोष्ठेन कोपतः ॥ ४९
शिवेनानमितः पूर्वं चापार्थेनैव नारद । श्लाघ्यत्वेन सुमेरुर्मूढोऽहंकारगर्वितः ॥ ५०
गाढं देवास्तथैवापि वासयन्ति भृशं दिनम् । मायामात्र मात्रेण गुरुत्वे दारमस्य सः ॥ ५१
नारसिंहं तदा हन्तुं मग्नानानि स्थितिं किल । तथा तत्पादघातेन सुतरां ताडितो गिरिः ॥ ५२
खद्योत इव सर्वत्र बभ्राम किल मन्दधीः । एवं विन्ध्यस्य वचनं निशम्याशीः प्रभुश्च सः ॥ ५३
नारदः प्रययौ तूर्णं वियन्मार्गे तदा द्विजाः । विन्ध्यस्तु नितरां क्रुद्धो ववृधेऽत्यायधिरसौ ॥ ५४
सूर्येन्दो भ्रमणाभावाद्दुष्टमार्गवशात्तदा । एकत्र तिमिराक्रान्तमन्यत्र मिहिरावृतम् ॥ [illegible]
कालसंख्या विहीनत्वाच्छमिनभ्यस्तमक्रियम् । जगत्सर्वमिदं ज्ञातं तदा देवा विचिन्त्य च ॥ ५६
निश्चित्य विन्ध्यचरितं अगम्यं प्रापुरञ्जसा । मेरोर्गुहान्तरे तत्र दृष्ट्वा तमृषिसत्तमम् ॥ ५७
अगस्त्य तपसां पुञ्ज सुदृष्टिहृत्सागर । त्वया सुरक्षितं पूर्वं जगदेतदनेकधा ॥ ५८
विन्ध्यावलेपादद्यापि विनतार्कं अराजनित् । सार्धं मेरुणा ततो निर्विर्यत्रादि संगरम् ॥ ५९

यागायभायादस्माक निवरा सुदृत खलु । तस्माद्विन्ध्यावलेप त्व व्यपोह्य परिपालय ॥
अगस्त्यान्निघशेषेणेत्येवमूचुस्सुरास्तदा ॥ ६०

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
आसुरकाण्डे दशमोऽध्याय ॥

---

॥ अथ एकादशोऽध्याय ॥

अगस्त्येन इल्वल वातापि मारणम् ॥

तथेति दैवतानेव प्रेरयित्वा स्वयं मुनि । हृदयाम्भोजमध्यस्थ महादेवमचिन्तयत् ॥ १
प्रसन्नेव महादेवे प्राह वाचस्पतीश्वर । भगवन् देव सर्वज्ञ भक्तवत्सल शङ्कर ॥ २
भगवत्कृपाप्रसादाद्य बल भवतु मे प्रभो । विन्ध्यदर्पापहाराय लोकसंरक्षणाय च । ३
तीर्थंच मे प्रयच्छाशु गच्छतो दक्षिणा दिशाम् । इत्युक्तो भक्तितो नम्र अगस्त्य परमेश्वर ॥ ४
भूयाद्दूरलं तथास्थं कावेरीच सरिद्वरा । गेतव्या ऋषिशार्दूल कुण्डिकायां निधायसा ॥ ५
इति ब्रुवन्तमीशान कावेरी प्राह शंकरम् । कथं गच्छाम्यहं तेन पुरुषेण शिवाधुना ॥ ६
विमोक्ष्यति ऋषिस्त्वाशु त्वमेव परे प्रज । इत्युक्त्वा योजयित्वैना अगस्त्येन महेश्वर ॥ ७
अन्तर्धिमाप तरसा भक्तानामभयप्रद । सत प्रतस्थे तपतावरो विन्ध्याचल प्रति ॥ ८
मायापुरस्य निकटे ऋषिमार्गवशात्तदा । क्रौञ्चासुर महाक्रूर महासम्मोहकारिणम् ॥ ९
स्वल्यासकारिण साक्षात्पाताल पृथिवीं दिवम् । पर्वतच जलदेन जल पर्वतरूपत ॥ १०
अपरेण मेदिनीं तद्वत्पृथिवीं तेन शायलम् । नानारूपधर पाप कपटात् पृथिवीधरम् ॥ ११
मार्गमध्ये स्थित क्रूर मूर्खमायाविलक्षण । तस्योपरि तदा तूर्णं मार्गभ्रान्त्या अगामस ॥ १२
तत्र मार्गमदृष्ट्वैव क्षण तिष्ठति मोहित । पुनस्तु सूक्ष्मरूपया कश्चिन्मार्गं क्षणाद्दृशौ ॥ १३
दृष्ट्वा तेनापि गच्छन् ■ पुनस्तिष्ठति मोहित । इतस्ततस्तत्र पश्यन् अदृष्ट्वा पदवीं पुन ॥ १४
धावत्येव तदा तूर्णं स्खलत्पादक्रमो भृशम् । दृष्ट्वातु मार्गमन्यच्च वीक्ष्य याति पुनश्च स ॥ १५
तत्रापि मोहितस्तिष्ठन् विचार्यैव प्रजल्पसो । एवं बहुविधं चाथ गत्वा गत्वा निवृत्य च ॥ १६
मार्गं कश्चित्तदा दृष्ट्वा वनमध्ये गत किल । तत्रास्य त तदाभूमि स्थूणाकारोऽभवद्द्विजा ॥ १७
मेघानामपि निर्घोष पर्वतान्त इव भीषण । प्रतिक्षण तदा विद्युत्परिस्फुरणमुज्ज्वलम् ॥ १८
गाढान्ध तमसेनापि वृतमेतद्वन तदा । भीषण भीषणस्यापि मोहक मोहकस्य च ॥ १९
मृत्योर्मृत्युमद तद्वत्सर्वव्यामोहकारकम् । ससम्भ्रम तदागस्त्य किमेतदिति चिन्तयन् ॥ २०
ज्ञात्वा ज्ञानदृशा सद्यो माया क्रौञ्चासुरस्य स । सन्ताड्यैन तदा हस्तस्थितदण्डेन निर्भय ॥ २१
यस्मात् पर्वतरूपेण दुरात्मन् कपटेन माम् । अभ्रामयस्ततस्तूर्णं अद्रिर्भव वै यज्ञाधुना ॥ २२
षण्मुखस्यापि शक्त्या ■ भूयाच्छिन्नतनुर्भृशम् । जलमादाय हस्तेन क्रौञ्चमेव तदा ऋषि ॥ २३
शपित्वा त यथामार्गं प्राप्य काशीं अगाम स । तत्र गत्वा महादेव विश्वनाथ जगद्गुरुम् ॥ २४
तारकब्रह्ममन्त्रस्य दातार देहिना श्रुतौ । पूजयित्वा पुनश्चाथ निर्गतो विन्ध्यमाप स ॥ २५
विन्ध्य पर्वतराजेन्द्र ऋषिध्यासक्त मानस । प्रवर्तकस्त्व भूताना दययाच निवर्तय ॥ २६
दक्षिणस्या दिशि मम गन्तव्य किञ्चिदस्तिहि । त्वत्तो भूतिमतश्शीघ्र मुञ्च मार्गं ममाधुना ॥ २७

सांत्वेन वचसाचैव प्रार्थयामास तं द्विजाः । अब्रवीत्तपतां श्रेष्ठं विन्ध्याद्रिः प्रेक्ष्य तं वचः ॥ २८
कोऽवात्र मार्गो गन्तव्यं यथामार्गं त्वया ऋषे । भवान् किञ्चित्सुजानातीत्येवं गंभीरवागसौ ॥ २९
अगस्त्यस्तु ततश्शीघ्रं उन्नमय्य करं तदा । विन्ध्यस्योपरि विन्ध्यस्य पीडयामास तं भृशम् ॥ ३०
तत्करापीडनवशात्पपात गिरिराडयम् । क्षोण्यामथ भयाविष्टो विन्ध्याद्रिः प्राह तं द्रुतम् ॥ ३१
अगस्त्य तपसां वर्य रक्ष रक्ष शिवप्रिय । क्षमस्व मन्तुमद्यत्वं अज्ञानेन विचेष्टितम् ॥ ३२
उन्नतिश्च यथापूर्वं कदा मह्यं भवेदियम् । इत्युक्त्वा विनयानम्रं विन्ध्याद्रिं तमृषीश्वरः ॥ ३३
यदा पुनर्ममायाद्रे भविष्याम्यागमस्तदा । त्वत्कमीभूम्रशमीन्नत्यं भवेत्युक्त्वाशु निर्ययौ ॥ ३४
यत्रेल्वलश्च वातापिश्चैतौ पापकर्मिणौ । देशे तत्रागतोऽगस्त्यः क्षणादेव ऋषीश्वरः ॥ ३५
तं दृष्ट्वा तपतां श्रेष्ठं इल्वलः प्राह पूर्ववत् । भोजनाय तदा तस्य प्राप्यानुमतिमाशु [illegible] ॥ ३६
वातापिश्च यथापूर्वं कृत्वा भोजनमुत्तमम् । आज्यक्षीरफलापूपैर्दधिभिश्च यथेप्सितम् ॥ ३७
शुद्धान्नैः पायसान्नैश्च स्वादुयुक्तैस्सुपेशलैः । आकारणञ्च कृतवान् वातापीतील्वलस्तथा ॥ ३८
ततस्तु पाककालेन कुक्षौ भ्रमणमाभवत् । स्वात्मैवत्वायवैवायं अगस्त्योऽद्भुतविक्रमम् ॥ ३९
करेण कुक्षिं स्पृष्ट्वाथ जजाप मनुमुत्तमम् । मंत्रप्रभावात्तस्यायं अजीर्यत्कुक्षिबाधकः ॥ ४०
वातापिंच तदा मत्वा भस्मीभूतं मृतं द्विजाः । हन्तुकाममना तूर्णं सिंहवत्सोऽगस्त्यमागतः ॥ ४१
समालोक्य तदागस्त्यः कुशेनैनममारयत् । मुक्त्वाथ देशं कुटकं कोङ्कदेशं ततापः सः ॥ ४२
अगस्त्यस्तु तदा ब्रह्महत्याभ्यां बाधितो भृशम् । तत्रापूजयदीशानं लिङ्गरूपं सदाशिवम् ॥ ४३
एतस्मिन् समये विप्राः प्रापेन्द्रं नारदः क्षणात् । प्राप्तं पुलोमजामात्यसमन्वितैर्भृशं तदा ॥ ४४
पूजयित्वा गिरं दीनां दीनो गोत्रभिदाह हि । कदा त्या मोचनं ब्रह्मन् भवेन्मम भयादितः ॥ [illegible]
स्वस्थानेच कदा प्राप्य निवत्स्यामि सुरैस्सह । शूरस्य सारसंसाराद्विमोचितं यदाप्यहम् ॥ ४६
उद्यानवृक्षवाटीषु तदानीमेव ते द्रुमाः । प्रापुर्म्लानिं भृशं ब्रह्मन् वृष्ट्यभावाद्दिनेरसाः ॥ ४७
तदाप्रभृति वृक्षाणां म्लानता बाधते मनः । तस्मात्कदा भवेद्वृष्टिर्वृक्षाणां पोषणाय च ॥ ४८
इत्युक्तवन्तं देवेन्द्रं नारदो वाक्यमब्रवीत् । त्यज दुःखं सुनासीर स्वर्गप्राप्तिः पुनर्भवेत् ॥ ४९
कालेन कियताचैव भविष्यति सुरोत्तम । आनीतात्र सरिच्छ्रेष्ठा कावेरी कुम्भजन्मना ॥ ५०
मध्यतस्सर्वतीर्थानां कैलासे तलवासिनाम् । नेतव्या वृक्षपुष्ट्यर्थं इदानीमत्र [illegible] नदी ॥ ५१
तिष्ठत्यद्भुततस्सोऽपि देशे कोङ्काभिधेऽधुना । तस्मात् गणपतिं शीघ्रं पूजयाद्य पुरन्दर ॥ ५२
प्रसन्नस्तु कावेरीं आनयिष्यति शीघ्रतः । इत्युक्त्वा नारदस्तूर्णं आकाशे गतवांस्तदा ॥ ५३

तदनु ऋषिवचो निशम्य तूर्णं स्वपदमुनीषमशेष दुःखदग्धः ।
एतमतिरमरेश्वरस्तदानीं गजमुखसंयजने बभूव विप्राः ॥ ५४
चकार पूजामथ तस्य पावनीं विशेषनिर्दोपितदुष्कृतावलिम् ।
हरिस्तदाऽपूप पयो घृतोदनैस्समोदकैर्गणमुखपूर्वजस्य सः ॥ ५५
ददेत्त्वरा गोचरतामवाप विलोचनानां विशदप्रकाशः ।
विनायको भक्तजनार्तिहारी विधृतभक्ताघ समूह एषः ॥ ५६

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
माहुरकांडे एकादशोऽध्यायः ॥

---

॥ अथ द्वादशोऽध्यायः ॥

इन्द्रेण श्री विघ्नेश्वरप्रसादात् कावेर्यानयनम् ॥

आविर्भूतस्तु भगवान् विघ्नराजो हरिं तदा । प्रसन्नोऽस्मि तवाद्येन्द्र वृणु सर्वं त्वदीप्सितम् ॥ १
इत्युक्तवन्तं विघ्नेशं अब्रवीद् वचनं हरिः । तव प्रसादात् विघ्नेश वृक्षाणां पोषणाय हि ॥ २
भवन्तु भूयस्त्वंभांसीत्येतेषां भक्तवत्सल । इन्द्रस्य वचनं श्रुत्वा विघ्नेशः प्रत्युवाच तम् ॥ ३
अण्डस्यापि जलान्यासु तद्बहिर्बाह्यस्थितान्यपि । आकाशगङ्गा चान्यावा पातालतटिनी तथा ॥ ४
पद्मादीनि लोकेऽस्मिन् वर्तन्ते येषु केषुचा । आनेतव्यं जलं किंवा वदेत्याह विनायकः ॥ ५
इन्द्रस्तद्वचनं श्रुत्वा गंभीरं विशदाक्षरम् । विघ्नाधीश दयासिंधो कुम्भभूस्तपतां वरः ॥ ६
कावेरीं सरितां पुण्यां गृहीत्वा वर्ततेऽधुना । त्वरितेवाधुना गत्वा नेतव्या सा त्वया प्रभो ॥ ७
इत्युक्त्वा प्रश्रया नम्र तथेत्युक्त्वा जगाम सः । काकवेषं गृहीत्वाशु कपोलैकदमद्भुतम् ॥ ८
अगस्त्यस्य तदा गत्वा स्थितोऽयं कुण्डिकोपरि । कुण्डिकास्यमृषिश्रेष्ठः काकं दृष्ट्वा त्वरायुतः ॥ ९
करेणोच्चाटयामास तदानीं द्विजसत्तमाः । काकस्तु शीघ्रमुड्डीय पादाभ्यां तन्निपात्य च ॥ १०
प्रययौ शीघ्रमेवाथ कश्चिद्दूरं भयादिव । पतितां कुण्डिकां दृष्ट्वा हा शिवेति तदा वदन् ॥ ११
ऋषिरभ्येत्य काकोऽयं किमर्थमधुना गतः । इतः पुनः पुरस्ताच्च तिष्ठत्येषोऽसद्वत् द्विजाः ॥ १२
येनकेनाप्युपायेन हन्तव्योऽयं मया बलात् । इत्युक्त्वाभ्याद्रवत्स तदाऽगस्त्यः सुधाभुजम् ॥ १३
तम काकमनुप्राप्य किमेतदिति विस्मितः । इतस्ततस्तदापश्यत् उन्नमय्यमुखं मुनिः ॥ १४
दृष्ट्वा माणवकं कञ्चित् धृतयज्ञोपवीतिनम् । अयमेवेति निश्चित्य काकभ्रान्तिरभून्मम ॥ १५
प्रहर्तव्योऽयमधुना मुष्टिनेन पटुभ्रंशम् । इत्यभाषत्तदाभ्याशं अगस्त्यस्सत्वयागमम् ॥ १६
ततस्ससंभ्रमं वर्णी भयादिव द्रुतम् । किञ्चिद्दूरं तदा गत्वा स्थितस्तत्र पुनश्च सः ॥ १७
गत्वा तत्रापि तरसा बाधकालेऽनघे ऋषिः । उच्चिक्षेप करं कोपात् कुट्टितुं वर्णिनं तदा ॥ १८
तावदेव पुनश्चायं परमात्मा इव क्षणात् । प्रतारयित्वा शार्दूलमृषीणां पुरतो ययौ ॥ १९
अनेकवारमेव [illegible] अप्रतारयदुज्वलः । ततः स्ववेषं विघ्नेशो दर्शयामास तस्य सः ॥ २०
गणैर्नानाविधैरेव सेवितः परितस्तदा । स दृष्ट्वा ऋषिवर्योऽथ गजवक्त्रं महोदरम् ॥ २१
शूर्पकर्णं प्रलंबोष्ठ सकण्ठं कामरूपिणम् । गणानां त्वा गणपतिं कवीनांच कविं परम् ॥ २२
ब्रह्मणां ज्येष्ठराजञ्च प्रणमामि शिवं सदा । सर्वविघ्नप्रशमनं सर्वपापनिवारकम् ॥ २३
स्कन्दस्य पूर्वजं तद्वत् प्रणमामि विनायकम् । एवं स्तुत्वा गणेशानं प्रणनाम पुनः पुनः ॥ २४
अगस्त्य तपतां वर्य विन्ध्यगर्वं निवारक । प्रसन्नोऽस्मि तवात्यर्थमधुना वांछितं वद ॥ २५
इत्युक्तवन्तं विघ्नेशमगस्त्यो वाचमब्रवीत् । क्षन्तव्यस्त्वपराधोऽयं मम भक्तदयानिधे ॥ २६
[illegible] पादांबुजे भक्तिर्भूयादव्यभिचारिणी । कावेरीच सन्निधीता वलये परमेशितुः ॥ २७
यस्मात्कुण्डिकायास्सा गजवक्त्रगता खलु । पूजार्थं परमेशस्य भवितव्यं जलेन नः ॥ २८
यस्मात्भवन्तं पाणिभ्यां अहं कुट्टितुमागतः । ममैव कुट्टनं भूयादिति मूर्ध्नि स्वके तदा ॥ २९
स्वमुष्टिकराभ्यांतु हतवांस्तदहो द्विजाः । एवमुक्त्वा स्थितं भक्तमगस्त्यं इत्यवेदिनम् ॥ ३०
प्राह गंभीरया वाचा सांत्वयन् वचनं तदा । इन्द्रेण प्रार्थितोऽस्यार्थं अगस्त्य ऋषिसत्तम ॥ ३१
वृक्षसंशोषणवशात् जलार्थमहमागतः । कमण्डलुश्च तेनैव पातितः कारणेन हि ॥ ३२

त्वया कृतमिदं सर्वं ममात्यन्तं प्रियं खलु । पूजार्थं च पुरस्यास्येदं भवतु वै जलम् ॥ ३३
इति शुण्डामुखेनार्यं गृहीत्वाम्भःकणं तदा । कावेर्यामथ विघ्नेशः कुण्डिकायामवाकिरत् ॥ ३४
तत्क्षणेनैव सात्यर्थं पूर्णा सर्वत्रावहत् । एवं बहुवरं दत्त्वा ययावन्तर्धिमाशु सः ॥ ३५
अगस्त्यस्तु ततश्शीघ्रं कुद्दालाख्यपुरं ययौ । तत्रत्या वैष्णवास्सर्वे दृष्ट्वैनमृषिसत्तमम् ॥ ३६
भूतिभूषितसर्वाङ्गं रुद्राक्षपरिभूषितम् । शैवेनानेन विप्र नागन्तव्यं पुरं हि न ॥ ३७
इत्यूचिरे तदानीं ते तथेत्युक्त्वा पुराद्बहिः । गत्वागस्त्यस्तु शीघ्रेण रूपं भागवतं ऋषिः ॥ ३८
गृहीत्वा मायया भूयो नगरं तद्विवेश सः । दृष्ट्वा भागवतं सर्वे वीथीस्था वैष्णवास्तदा ॥ ३९
प्रणम्य बहुमानेन प्रापयामासुरालयम् । विष्णोरथ चकाराय भावना भावयाश्च ते ॥ ४०
ततस्तु वैष्णवान् प्रेक्ष्य कार्या पूजाद्य वैष्णवी । मयेत्युक्त्वा तदागस्त्यो बहिस्तानप्यचोदयत् ॥ ४१
विष्णुं स्पृष्ट्वा करेणाथ शिवभावनयाशुभाम् । अमर्दयत्तदा शीघ्रमभूद्विष्णुश्शिवाकृतिः ॥ ४२
अगस्त्यस्तु तदा शंभुं पूजयामास भक्तितः । लिङ्गाकारं विधानेन प्रेक्षितो वैष्णवैरपि ॥ ४३
अथ सर्वेऽपि संभूय भर्त्तुं शीघ्रमागताः । चुकोप दृष्ट्वा तानेष कुम्भभूरपि वैष्णवान् ॥ ४४
कोपाग्निना तदा तप्तास्तस्य ते मुमुचुर्भृशम् । आरोप्य शैवान् तत्राथ अगस्त्यस्सहागतान् ॥ ४५
दधीचकण्वशैलादि भृगूणां गौतमस्य च । गुरुर्दुर्वाससोऽपि स्मृत्वा शापं तदा ऋषिः ॥ ४६
विपरीतकार्ययुक्तोऽभूत् सतान् प्रति भृशं द्विजाः । विप्राश्शृणुत कावेरी यथा याता कमण्डलौ ॥ ४७
श्रीकालाख्यपुरस्यैव पूर्वघाटीषु वाहिनी । तदानीमेव ते भूत्वा गतशीर्षपलाशकाः ॥ ४८
प्रादुर्भूताङ्कुरास्सर्वे नानापुष्पोपशोभिताः । तादृशास्त्वन्यलतादिद्रुमा विगतदुर्मनाः ॥ ४९
प्रीतियुक्तस्त्वगस्त्यर्षिः स्ववेषं परिगृह्य सः । पूजयामास विघ्नेशं गजाननमरिन्दमम् ॥ ५०
पत्राणि च विचित्राणि सुगन्धिकुसुमान्यपि । दत्वा दत्वाथ बहुशः शंभुं तं समतोषयत् ॥ ५१
तदन्तरे विबुधा द्रष्टुं देवेन्द्रमागताः । प्रणम्य देवास्सर्वे ते देवेन्द्रं वाचमूचिरे ॥ ५२
एकाकिना त्वया शक्र शत्रुत्रस्तीयते कथम् । मुक्त्वा देवान् त्वदीयांश्च उत्तमा एकवासिना ॥ ५३
यथापूर्वममी देवा देवेन्द्राद्य कृपावशात् । पाकभीता दिविस्थित्या शतासुरविचोदना ॥ ५४
एवमुक्त्वा स्थितान् देवान् दीनानत्यर्थमाह सः । शृणुध्वममरास्सर्वे किं कर्तव्यं मयाऽधुना ॥ ५५
आनीता बहवो मीनाश्शूरस्य वचनात्पुरा । मधुमांसादिकं तद्ग्रहितं यत्किञ्चित् ॥ ५६
एवं कृतेऽपि शूरोऽयं इन्द्राणीं धर्षितुं बलात् । कारागृहे पातयितुमियेष किल मां तथा ॥ ५७
मानभङ्गभयाद्भीतो वर्तेऽहमधुनाऽत्र हि । स्थित्वाप्यत्र महादेवमतुलाप्य क्षपाश्च ॥ ५८
पूजयामि भवन्तोऽपि यतोऽत्र च समागताः । ततः कैलासशिखरं गमिष्यामोऽधुना वयम् ॥ ५९
तत्र गत्वा महादेवं विज्ञाप्यैतद्यथाक्रमम् । यदुक्तं देवदेवेन तत्कृत्वा वचनं वयम् ॥ ६०
तथैव सर्वं स्थास्याम इत्युक्त्वा तानथं हरिः । स्थापयित्वा शचीमपि निवेदयितुमाशु सः ॥ ६१
शक्त्वैतद्विहिते नैव शुशोचोद्विग्नमानसा । शोकं त्यज प्रिये देवाः सर्वेऽप्यत्र समागताः ॥ ६२
गत्वा तैस्साकमम्बेशं विज्ञाप्य च महेश्वरम् । कैलासवासिनं भूय आगमिष्यामि तेऽन्तिकम् ॥ ६३
पालकस्तत्र शास्ता च भवतीति तदाब्रवीत् ।
इन्द्राणी — कोऽयं शास्ता वद स्वामिन् यो मां पालयतीश्वर ॥ ६४

पालकत्वंच सर्वेषां एतस्य कथमागतम् ॥ ६५

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
आसुरकाण्डे द्वादशोऽध्यायः ॥

---

## ॥ अथ त्रयोदशोऽध्यायः ॥

श्री महाशास्तोत्पत्तिं, महाकालेन अजामुख्याः हस्तच्छेदनं च ॥

इन्द्रः —

पुरा देवासुरास्सर्वे ममन्थुः किल वारिधिम् । पीयूषं यत्तदा जातं तेभ्यो दातुमिदं हरिः ॥ १
मोहिनीवेषमास्थाय मारयित्वाऽसुरांस्ततः । विभज्य देवांस्तरसा भोजयामास वै पयः ॥ २
तदानीमाविरासीद्धि तां द्रष्टुं च महेश्वरः । दृष्ट्वा तां मोहिनीं रम्यां लोलापाङ्ग समीक्षणाम् ॥ ३
स्फुरत्सौदामिनीरम्यां स्थिरतया प्रतियोगिनीम् । चारुहासमनोहारि कुचाभ्यां नतमध्यमाम् ॥ ४
सुरतञ्च तदा कर्तुमियेष परमेश्वरः । उवाच वचनं चापि संभोगोऽत्र मया सह ॥ ५
कर्तव्य इतिमेऽत्यर्थं रागः खलु वराङ्गने । इत्युक्तवन्तमीशानं धर्षणोत्कं तदा तु सा ॥ ६
कथमीश मया सार्कं संभोगः क्रियतां त्वया । नारायणोऽहमधुना मोहिनीरूपमास्थितः ॥ ७
इत्युक्त्वा मोळया मग्नां पुनः प्रोवाच शंकरः । त्वमेवतत्तृणां मध्ये शक्तीनां पुरुषाख्यया ॥ ८
शक्तिस्तथापुरा त्वांतु भुक्त्वाऽजं चाप्यजीजनम् । दारुकावनवने तद्वन्मोहिनी रूपमास्थितः ॥ ९
त्वमेव मां तदा द्रष्टुं इयेषिथ किल प्रिये । रमिष्ये त्वामहं रम्ये तत्राधेत्यवदं किल ॥ १०
तस्मादत्रापि संस्तु त्वमर्हसि पुनः पुनः । एवमुक्तेऽपि विमुखो जवेनैव तदा हरिः ॥ ११
गृहीत्वोद्यानपिधाशु देवेश सुमनोहरम् । तालवृक्षस्य निकटे जंबूद्वीपस्थितस्य सः ॥ १२
तस्योपस्थुत्ताद्वेगमक्षमा सोढुमाशु सा । उद्वारयामास तदा भुवं खिन्नशरीरिणी ॥ १३
तज्जलं च शचीन्द्राणि गण्डकाख्याऽभवन्नदी । जायन्ते तत्र कीटाश्च वज्रदन्ताभिधास्तथा ॥ १४
ते सर्वे मृत्तिकास्सूक्ष्मास्तत्यावर्तनांसुखा । कुलायमाकल्प्याशु मुनयोनिवसन्तिहि ॥ १५
यदा सरित्प्रपतिता भविष्यंति तदावने । नदीप्रवाहे नीडानि गच्छन्त्येतानि भूरिशः ॥ १६
तमस्या मनुजाः केचित् जालं कृत्वाप्सु तानिहे । कुलायमध्यस्वर्णं च गृहीत्वा विक्रयन्तिहि ॥ १७
सालग्रामाणि तान्येव कुलायानि प्रियेऽधुना । विष्णुद्वारमिमातत्वाद्वैष्णवी प्रथिताशिला ॥ १८
तस्मादद्यापि लोकेऽस्मिन् शिवलिङ्गस्य सूपधः । शंसन्ति शक्तिपीठार्थं विशेषाद्गण्डकीं शिलाम् ॥ १९
एवं तयोस्सुजातत्वाच्छास्तापिच तदाऽभवत् । हरेर्हरस्यापि तथा पुत्रत्वमिति भावितम् ॥ २०
गत्वाऽयं तु महादेवं किंस्त्वं मम भोः पितः । एवमुक्त्वाननस्य भुवमेभ्यागतो ददौ ॥ २१
सतु शास्ताकुमारोऽयं शंभोस्त्वामभिरक्षतु । इत्युक्त्वाथ तदेन्द्रोऽयं ससार जगतां प्रभुम् ॥ २२
शास्तारमेकचित्तेन शच्याः पुरत एव सः । तदानीमाविरासीद्धि शास्ता किं करवाण्यहम् ॥ २३
इति सुवर्णाणींयेन क्रूरेण परितो भृतः । शास्ता त्वयात्र संरक्ष्या शचीमे प्राणवल्लभा ॥ २४
गन्तव्योयं मया शंभोः कैलासाख्यो महीधरः । मदागमनपर्यन्तमित्युक्त्वा तां तदन्तिके ॥ २५
निवेशयित्वानुमतस्तथा तेनापि वृत्रहा । प्रतस्थे देवसैस्सार्थं कैलासं प्रतिशीघ्रतः ॥ २६
इन्द्राणीमपि शास्तायं रक्षितुं गणनायकम् । परिकल्प्य महाकालं स्वावासं च तदा ययौ ॥ २७

इन्द्रोऽपि देवतैस्सार्कं प्रस्थितो द्रुतमाप सः । कैलासमखिलाघौघतमस्काण्डरविप्रभम् ॥ २८
गत्वा तत्र च शैलादिं दृष्ट्वा तं सहसा सुरैः । प्रणम्य दूरतस्तिष्ठन् आहूतोऽभ्याशमागतः ॥ २९
किमर्थमधुनाचेन्द्र यदाऽऽगमनं तव । इति पृष्टस्तदा तेन व्याचष्ट भयकंपितः ॥ ३०
सेवार्थं परमेशस्य शैलादेऽभ्यागतोऽस्म्यहम् । सह सर्वैस्सुरैस्सार्धं दया कार्या मयि प्रभो ॥ ३१
इत्युक्त्वाऽऽह नतं नन्दी गणानामग्रणीर्हरिम् । पुरन्दराधुना गच्छ सेवार्थं परमेशितुः ॥ ३२
नचलेऽवसरोऽस्त्यत्र सनकादेर्महेश्वरः । ज्ञानोपदेशं कुर्वाणं आस्ते सर्वेश्वरस्स्वयम् ॥ ३३
शैलादेर्वचनं श्रुत्वा सहसैव सुरैस्तदा । प्रणम्य नन्दिनं भूयः प्रापाग्र्यं शिखरंच सः ॥ ३४
तत्र गत्वा महादेवं ध्यात्वा तैरवसत्सह । एतस्मिन्नंतरे विप्राः क्रूरा पापरता च या ॥ ३५
परिभ्रमन्ती चाण्डस्य विवरं क्षणमात्रतः । घर्षणी मार्गमध्यस्थान् पुरुषान् सुबहूनपि ॥ ३६
प्रापयन्ती परस्त्रीणां शून्यत्वानुदिनं तथा । स्वभावसुन्दरीणां च छिलहर्षं बलात् भृशम् ॥ ३७
श्रीकायाख्य पुरोद्यान वृक्षवाटीषु भीषणा । अजवक्त्रा गता सख्या मुहुर्मुहुर्या स्वैरिणीह ॥ ३८
दृष्ट्वा शचीं रम्यां इन्द्रस्य प्राणनायिकाम् । कुतूहलेन युक्ता सा प्रोवाच वचनं तदा ॥ ३९
तिष्ठत्र किमर्थं त्वं त्वदर्थं चागतं मया । मद्भ्राता सार्वभौमोऽयं शास्ति विश्वमशेषतः ॥ ४०
त्वद्युक्तताऽस्य महती वर्तते चाधुना शचि । त्वमागता चेत्तस्यान्तःपुरं शीघ्रं तदासुरः ॥ ४१
त्वामेव नायिकां कृत्वा त्वया सार्कं रमिष्यते । इन्द्रादि देवास्सर्वेऽपि भृत्यकास्तस्य दुर्बलाः ॥ ४२
तस्मात् त्वमद्य निर्गच्छ मुक्त्वैतत्स्थलमाशु हि । नो चेदहं बलात्काराद्वानयिष्यामि मानिनि ॥ ४३
इत्युक्त्वाभ्यासगां प्रेक्ष्य शची प्राह तदासुरीम् । समुन्नताः पुरा देवाः संपदा सुंदरा तदा ॥ ४४
असुरा दुर्बला जाता यथा कर्मानुसारतः । दरिद्रो वा समृद्धो वा पतिर्मयास्स एव हि ॥ ४५
उल्लंघितुमशक्या हि नीतिर्व्यभिचारिणी । बलात्कारेण नीत्वाऽहं गच्छाम्युक्तमिति त्वया ॥ ४६
मद्रक्षकमविज्ञाय गणानां परमीश्वरम् । गच्छ गच्छाधुना मूर्खे किं जानासि दुरात्मनि ॥ ४७
इत्युक्ता तामसी कोपात् वचस्यनेन विमोचकम् । तथेत्युक्त्वाऽऽसुरी शीघ्रं विचकर्ष किलद्विजाः ॥ ४८
ततस्सुक्रोधा सात्यर्थं धूयमानकरा शची । हाहेति च भयाविष्टा वेपमानाङ्गयष्टिका ॥ ४९
उत्क्रोशनं तदा श्रुत्वा किमेतदिति विस्मितः । दृष्ट्वोत्थितो महाकाळो वृक्षमूलात् शचीमिमाम् ॥ ५०
धावयामास शीघ्रेण तदा क्रुद्धोऽसुरीं प्रति । मुञ्च मूढेऽधुनेन्द्राणीं छित्वा हस्तं त्वदीयकम् ॥ ५१
पातयिष्यामि खड्गेनेत्युक्तवान् गणनायकः । प्राहैनमजवक्त्रा सा को भवानिति कोपतः ॥ ५२
यस्तु लोकं प्रशास्त्येते तं सर्वेतो यस्य गजोदरः । यच्छाक्त्यां पुत्रपौत्रायी ज्ञातचन्द्रशिखामणेः ॥ ५३
भृत्यस्तस्याहमधुना किं त्वया मुञ्च मानिनीम् । एवमुक्ता तदा पापा शूलमादाय वेगतः ॥ ५४
चिक्षेप तं महाकाळो वेगेन खड्गधाराऽच्छिनत् । पुनश्च शूलमन्यत्सा दुर्मुखीहस्तसंस्थितम् ॥ ५५
आदाय शीघ्रमिन्द्राणीं प्रापयित्वा च तत्करम् । अचिक्षिपत्तदा घोरं घोरायात्यलादियम् ॥ ५६
तेनैतच्छतधा कृत्वा पातितं पूर्ववद्भुवि । ततस्तु पर्वतं शीघ्रं कञ्चिदादाय सा भृशम् ॥ ५७
जघानैनं तदा भूयो महाकाळस्तमच्छिनत् । खड्गोऽप्यस्य तदा भग्नः पर्वताघातवेगतः ॥ ५८
भग्नं दृष्ट्वा तु सा खड्गं किं त्वयेति निरायुध । ब्रुवन्ती तां शचीं भूयो विचकर्ष किलद्विजाः ॥ ५९
अथ कोपवशाद्देनामेत्य वीरोऽसुरीं तदा । महाकाळो महाकायो गृहीत्वास्याः करं तदा ॥ ६०
पट्टियन्य लसत्सूक्ष्म करवाळेन भीषणः । चिच्छेद च करं तस्याः कठिनं निशितेन सः ॥ ६१

दुर्मुख्याश्च करं छित्वा पातयामास भूतले । इन्द्राणीं मोचयित्वाशु पृष्ठभागे स्थितः पुनः ॥ ६२

विललाप विकीर्णकेशपाशा वसुधालिंगन जातपांसुजाला ।
अथ वीक्ष्य करं द्विधाकृतं सा नितरां खिन्नमनास्तदा द्विजेन्द्राः ॥ ६३
जलधिं चुलकीकरोम्यहं रविचन्द्रावधुनाऽथतारकाः ।
वियति द्रुतमेवमेदिनीं भ्रितमुव्योम तथा जलादिकम् ॥ ६४

इत्युक्त्वा विलपन्तीं तां भूयोभूयो रसातलम् । करेणास्फाल्य वीक्ष्यान्यं छिन्नं गाहाय दुर्मुखी ॥ ६५

इति श्री स्कन्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
भास्करकाण्डे त्रयोदशोऽध्यायः ॥

---

॥ अथ चतुर्दशोऽध्यायः ॥

भ्रजामुख्या श्राद्धे स्वदुःखनिवेदनम् ॥

किमर्थं रोदिषि सखि स्वत्र दुःखं त्वमीदृशम् । दक्षाध्वरे पुरा नार्यश्छिन्न नासाग्रतस्तनाः ॥ १
छिन्नश्चोत्र करा जाता वीरभद्रेण नाकिनाम् । मम चेदं भवेदित्थं दुःखं माकुरु मत्सखि ॥ २
क्रियतेचेत् समुद्रादि चुलुकीकरणादिना । श्रूयतेव सदा हासिर्यस्मात्स्थं तदीयकम् ॥ ३
आश्वासितेत्थं दुर्मुखया त्यक्त्वा रोदनमातुरा । महाकालमभिप्रेत्य त्वत्प्रभुं पाकशासनम् ॥ ४
त्वांचापि शृङ्खलाबद्धं नकरिष्यामि यद्यहम् । यद्योक्तौ तदामेतौ नभविष्यत इत्यमुम ॥ ५
उक्त्वा प्रतस्थे सहसा दुर्मुख्या सह सासुरी । एतत्सर्वं तदा विप्रा नारदः पाकशासनम् ॥ ६
निवेदयामास ततो गत्वा कैलासपर्वतम् । श्रुत्वैतच्च शुनासीरः प्राप्य दुःखं महत्तरम् ॥ ७
विज्ञाप्य नन्दिनं शीघ्राद्वायवी सपुलोमजाम् । तया बोधित वृत्तान्तः स्वकं कर्म तदा स्मरन् ॥ ८
महाकालं प्रणम्याशु शुश्रूषां तं विससर्जह । प्रतस्थे समहामेरुं शच्या साकं पुरन्दरः ॥ ९
तस्या तपः स्थितोऽप्यायं मासमेव गुहान्तरः । प्रस्थिता साऽजयश्चोतु वीरमाहेन्द्र पत्तनम् ॥ १०
शूरेणाधिष्ठितं प्राप विलपन्ती पदेपदे । प्रेक्षितासुरनारीभिर्वीथीस्थाभिर्मुखासह ॥ ११
यावद्द्वाल जनाकीर्णा कुलाकुलित पार्श्वगा । मेष कुक्कुट मल्लानां गजानां वाजिनां तथा ॥ १२
नियार्थं युद्धशिक्षाच यत्रयत्र तत्रासुराः । केनेदं कृतमेतस्याः किमेतदिति विस्मिताः ॥ १३
दुरोदररताः केचिद्द्र्व्यारोहण तत्पराः । एवमाद्याश्च भूयांसः स्वकं कर्मविमुच्यते ॥ १४
रुद्रेण कृतमेतद्वा वीरभद्रेण वायवा । भैरवेणाथ शास्त्राया दुर्गाया प्रेष्यचिन्तयन् ॥ १५
परस्परं कृतं यस्मात् इत्यनेकप्रकारतः । केचिच्चिन्तामथापुस्तां वीक्ष्य छिन्नकरां तदा ॥ १६
मातरं पितरं ज्येष्ठान् पुत्रान् जामातरस्तथा । स्मृत्वा स्मृत्वाऽऽप शूरस्य तरसास्थानमण्डपम् ॥ १७
सहस्रयोजनायामं सहस्रस्तंभकोटिकम् । ब्राण्डेषु यानि चित्राणि रत्नानि सुबहून्यपि ॥ १८
तैरेव निर्मितं चोर्ध्वं मधस्तिर्यक् तथैव हि । चित्रदर्पणवर्गैश्च चामरैः परिमण्डितम् ॥ १९
तत्र सिंहासनारूढं नानासामंत भूमिपैः । आवृतिश्च महाभीमैर्भ्रितपार्श्वस्थलद्वयैः ॥ २०
पुत्रैः पौत्रैर्महावीरैरस्थानाधिपतिभिरेव च । मन्त्रिभिश्चैव दूतैर्घैश्चामरासक्तपाणिभिः ॥ २१
तालवृन्तपरैरन्यैः कालाञ्जासक्त पाणिभिः । वादीपंक्तिपरैश्चापि छत्रध्वजकरैस्तथा ॥ २२
ऊर्वशी मेनका रंभा प्रमुखाभिस्तथा भृशम् । नृत्यद्भिरमितश्चैव सेवितं भीमरूपिणम् ॥ २३

नीराजनकरामिश्च दिव्यस्त्रीभिरनेकश । विधात्रा तत्सुतैश्चापि वदद्भिर्दिनपाशिकान् ॥ २४
मान्त्रिकैश्चैव दैवज्ञैश्च कविभिरेवच । सामुद्रिक परिज्ञातगणैर्बाहटवेदिभि ॥ २५
एवमादिभिरन्यैश्च नानाशास्त्र विशारदै । आवृत भूषणैश्चापि नानारत्न विचित्रितै ॥ २६
हारकङ्कण केयूर किरीटैरङ्गुलीयकै । तप्तकाञ्चनचित्रेण कटीसूत्रेण वेष्टितम् ॥ २७
नानाभरणसंयुक्त दिव्याम्बरधर वरम् । गायद्भि किन्नरवरैस्सिद्धविद्याधरादिभि ॥ २८
वन्दिभिर्मागधैश्चापि पठद्भिर्विविधान् गुणान् । स्तूयमान सुखासीन साक्षाद्दुन्दुभिवापरम् ॥ २९
दृष्ट्वा सा पुरुषव्याघ्र पपात भुविविह्वला । क्व गत ते बल शूर जितस्त्वायोधने हरि ॥ ३०
त्वत्प्रताप प्रभा दृष्ट्वा उलूक इव भास्वत । मत्पतिस्तु सुनासीरो गुहमाश्रु विवेशहि ॥ ३१
तदद्य येन कृत आत्मनैवेतत्क्रूर कर्मणा । द्विसहस्रभुजोपेतस्सहस्री काप्यरैरपि ॥ ३२
सेन्द्रमैरावत व्योम्नि गृहीत्वोच्छिप्य किल । तादृश ते बलं कुत्र गत सिंहमुखाधुना ॥ ३३
मधुद्विषा पुरा युद्धे क्षिप्त चक्र सुदर्शनम् । येन वक्ष प्रदेशेन धृत निष्कविशेषवत् ॥ ३४
तारकेण तथा येन शौर्यवे हित (जित) भानुना । बद्धो भ्रश्यविशेषोक्तो भानुकोपेन लीलया । ३५
कश्चिवक्त्र हिरण्याक्षया तथार्थे वज्रबाहुना । त्रिविंशशिरोभिश्च क्रमेणैव पलोत्करै ॥ ३६
इदानीमद्य ममावस्था युष्माभि कथमीदृशी । पूर्ववत्स मत्सुतौ वीरौ सुनासीरेण मारितौ ॥ ३७
अविज्ञाय स्थित तत्र युष्माभिर्बलवत्तरै । ॥ तात मातहा पुत्रौ कमतौ बलवत्तरौ । ३८
एवमादि वच शोकया लुठन्तीं पतित क्षितौ । भद्य शूरस्तु शूराणा स्फुरद्दन्त वाससा ॥ ३९
प्रमन्कोपाग्निमत्यर्थं मत्प्रदीप्तस्व द्विजा । केनचेद कृत पत्नि ब्रूहि सुव्यक्तमाशु रोदनम् ॥ ४०
संहरिष्यामि त तत्र सपुत्र सहबान्धवम् । इति प्रवृत्त व शूर वीक्ष्योवाच सुदु खिता ॥ ४१
भीकावानगरश्चाह सुरारामे पुलोमजाम् । मदोक्त वीक्ष्य सविध धारस्यागच्छ सुन्दरि ॥ ४२
इत्युक्तमात्रेण तदा पालकोत्थास्तु शीघ्रत । खड्गमादाय हस्तेन हतवानीदृश मम ॥ ४३
इति तस्या वच श्रुत्वा रोदनेन युत भृशम् । महाकोपेन शुकरस्तव शूरोऽवदि नयप्रदान् ॥ ४४
पवृत्तंश्च तथाचाय देवास्तत्र स्थितानपि । आहूय शक्रमुख्यास्तान् बध्वा बाहव निष्ठुराम् ॥ ४५
उषत्वा कारागृहे सर्वान् अपालयदहो द्विजा । भूरक्षकासुराणाव स्थिरच्छेदहि शिरांसिस ॥ ४६
भक्षणाच्च कर तस्या छाययामास शीघ्रत । मर्कोदयो प्रहारसर्वे लोकसंरक्षणायहि ॥ ४७
परिमोच्यास्तु तान् शूरो मुक्ते युक्त्या तदा विधि । भ्रमोचयत शीघ्रेण विप्रमुक्त्वास्य सूरिश ॥ ४८
शूरमिन्द्र प्रतिक्रुद्ध भानुकोपो वचोऽब्रवीत् । ४९

इति श्रीस्कान्दे महापुराणे शाकरसंहितायां शिवरहस्यखण्डे
आसुरकाण्डे चतुर्दशोऽध्याय ॥

---

॥ अथ पञ्चदशोऽध्याय ॥

भानुकोपेन जयन्तादीनां कारागृहे स्थापन, ऐरावतेन श्वेतवननाथपूजन च ॥

किमर्थं तात भवता क्रियते यत्नतं प्रति । तमिन्द्राख्यमहं गत्वा बध्वा त यत्र कुत्र चित् ॥ १
आनयिष्यामि शीघ्रेण दास्या साक तयान्वितम् । यद्यहो मया विन्द्र पुरीं तस्यामरावतीम् ॥ २
दग्ध्वा देवांश्च पश्चाऽह प्रापयिष्यामि तेऽन्तिकम् । इत्युक्त्वा प्राप्य तत्राद्य मतस्थेऽय द्विजोत्तमा ॥ ३

ततस्तु शूरपद्मोऽयं महाविष्णुं सुरानपि । प्रेरयित्वा स्वकं वेश्म स्वयमन्तःपुरं ययौ ॥ ४
भानुकोपेन सेनान्या सहस्रगणिता तदा । वाहिनी प्रस्थिता चान्या तस्यास्स्यन्दन सन्ततीः ॥ ५
अश्वाश्चापि गजाश्चैव प्रतस्थुर्वीर्यवत्तराः । अनेककोटिच्छत्राणि ध्वजानि सुबहून्यपि ॥ ६
एवमेतैश्च तरसा भानुकोपोऽयमुज्ज्वलः । विंशत्यश्वसहस्रैश्च युक्तं स्यन्दनमुत्तमम् ॥ ७
आरुह्य सह दुर्मुखया भीकायापुरमाप सः । पुष्पारामञ्च तत्रत्यं वीक्ष्यायं चोदितोऽन्यथा ॥ ८
अदर्शनेन चेन्द्रस्य पुष्पारामं तदाच्छिनत् । प्रस्थितश्च पुनर्भूमिं सेनया पर्यटन् द्विजाः ॥ ९
अदृष्ट्वा तत्र देवेन्द्रं इन्द्रलोकं जगाम ह । रुरोध पत्तनं तस्य च्छिन्नभूरुह सन्ततिः ॥ १०
तदाकर्ण्य जयन्तस्तु चिन्तयित्वा भृशं तदा । आज्ञाप्य कृतबुद्धिस्तु तरसा निर्ययौ पुरात् ॥ ११
आरुह्य चाभ्रमुवल्लिमैरावतगजं परम् । धृतनानायुधश्चापि देवतैरमरैस्तथा ॥ १२
देवसेना तदा दृष्ट्वा युद्धाय कृतनिश्चयाम् । भानुकोपस्य सा सेना प्रापाशु बलगर्विता ॥ १३
सेनयोरुभयोश्चापि महद्युद्धं तदाभवत् । छिन्नात्तु देवसेना सा पलायत किल द्विजाः ॥ १४
पलायिताश्च तां सेनां पश्चात्तु तरसाऽसुराः । भानुकोपस्य सविधं आनिन्युर्मुदमीरिताः ॥ १५
दृष्ट्वैतच्च जयन्तस्तु विचिन्त्य सुतरां तदा । ववर्ष शरजालानि मारयामास वाहिनीम् ॥ १६
शतसंख्यां च सेनायां दैतेयानां महायशाः । ऐरावतश्च दैतेयानमारयदहो बहून् ॥ १७
नीलकेशाख्य दैतेयश्शस्त्राण्यथ ववर्ष ह । जयन्तस्योपरि क्रूरस्सुतरां बलवांस्तदा ॥ १८
तस्योपरि जयन्तोऽपि मुक्त्वा शस्त्राणि भूरिशः । चिच्छेद नीलकेशस्य कवचं सुदृढं क्षणात् ॥ १९
नीलकेशस्तु संक्रुद्धो मुक्त्वास्त्राणि बहून्यपि । अच्छिनद्धनुषो ज्यां च जयन्तस्य तदाऽसुरः ॥ २०
मायामार्गं ततो गत्वा नानारूपधरः पुनः । शरानस्योपरि भृशं जयन्तस्तु मुमोच हि ॥ २१
ततस्तु नीलकेशोऽयं किञ्चित् क्षीण बलोऽभवत् । अथ सोमासुरस्तूर्णं वरुणः पद्म एव च ॥ २२
मायाबली च बलवान् धाम्यश्चापि महासुरः । मागधो दण्डकश्चापि तथा मारुतवत्यपि ॥ २३
सुरकेसरि नामापि महाबल पराक्रमः । नीलकेशं क्षीणबलं दृष्ट्वा सर्वेऽपि दीप्रतः ॥ [illegible]
चक्रुर्युद्धं महाघोरं मायां दृष्ट्वास्य मोहिताः । तस्थुस्सर्वेऽपि चलिताः किञ्चिद्भग्नमनोबलाः ॥ २५
तादृशांस्तान् ततो वीक्ष्य भानुकोपः स्वयम्बली । उक्त्वा स्ववीर्यं शस्त्राणि मुमोचाभ्येत्य तं द्रुतम् ॥ २६
जयन्तोऽपि समानाय उक्त्वास्त्राणि ववर्ष हि । पुनश्च सहस्रास्त्राणि सहस्राणि महान्त्यपि ॥ २७
मुक्तानस्य चापं चिच्छेद भानुकोपस्य कर्कशम् । आदाय चापमन्यच्च भानुकोपोऽपि कोपधृक् ॥ २८
छित्वा मुक्तानि तेनाथ अस्त्राणि च तदाऽसुरः । ववर्षास्त्र सहस्राणि जयन्तस्योपरि द्विजाः ॥ २९
पुनश्च भानुकोपस्य रथस्थाश्वान्बहूनपि । मारयामास मुक्त्वाथ सहस्राणि सहस्रशः ॥ ३०
भानुकोपस्तु वीर्येण तदारुह्य महारथम् । अन्यान्यादाय बाणानि ववर्षाथोऽस्य भूरिशः ॥ ३१
तूणीरं चाच्छिनत्तीव्रं गजमैरावतं तथा । निशितेनास्त्र जालेन चकार रुधिराप्लुतम् ॥ ३२
जयन्तस्तु पपातायं मूर्च्छितो नितरां तदा । ऐरावतस्तु सपदि भानुकोपरथं वशी ॥ ३३
तिर्यक् दन्तप्रहारेण ताडयामास वेगतः । सारथिं च तदा हत्वा भानुकोपं मुखान्तरे ॥ ३४
आस्फालयच्च दन्ताभ्यां गण्डपाषाणनिष्ठुरे । तदाघातवशादस्य भग्नौ दन्तौ द्विजोत्तमाः ॥ ३५
भग्नदन्तं भानुकोपः कपोले ताडयन्द्रुतम् । तदा ताडनमात्रेण मूर्च्छामाप गजोत्तमः ॥ ३६
कोलाहलमकुर्वंस्ते दैतेयास्तु ततोऽद्भुतम् । प्रविश्य पत्तनं भूयो दग्ध्वा देवांश्च रोपितान् ॥ ३७

बध्वा देवाङ्गनाश्चापि जयन्तं च विमोहितम् । पूर्वं बद्धान् सुरांश्चापि गृहीत्वाशु तदासुरः ॥ ३८
शूरस्य निकटं प्राप भानुकोपस्सहासुरैः । वृत्तान्तं तस्य निखिलं अब्रवीत्स यथाक्रमम् ॥ ३९
ततस्तु शूरपद्माख्यं दृष्ट्वा देवांस्तदा क्रुधा । पुरस्तस्त्वजवक्त्र्यास्तान् संताड्य सुभृशं द्विजाः ॥ ४०
चिच्छेद च करांस्तेषां पादांश्चासुरोत्तमः । उत्पथांश्च तदा वीक्ष्य तान् श्रुत्वाऽमृतपानतः ॥ ४१
कारागृहं तदा देवान् प्रापयामास श्रीमतः । जयन्तप्रमुखान् बध्वा शृङ्खलाभिरहोऽसुरः ॥ ४२
देवाङ्गनाश्च शुश्रूषां विधातुं दितिजन्मनाम् । कल्पयित्वा तदा पुत्रं भानुकोपं वचोऽब्रवीत् ॥ ४३
जयन्तप्रमुखानाञ्च देवतानां तवाधुना । बध्वा पुत्रात्रानयने को भारो भानुकोप हि ॥ ४४
पुरा त्वं शैशवे पुत्र शयानस्सूक्ष्म मञ्चके । गवाक्षलब्धगैः पादैः स्पृशन्तं तं दिवाकरम् ॥ ४५
अबन्धो मञ्चपादे तं कोपेनैनं तदा किल । तदानीमाह मां ब्रह्मा मोचनीयो दिवाकरः ॥ ४६
इत्युक्तवन्तं ब्रह्माणं येनायं बन्धितो विधे । तेनैव भानुकोपेन मोच्य इत्युक्तवानहम् ॥ ४७
विधाता त्वां समभ्येत्य प्रार्थयामास वै किल । ब्रह्मादिकमादाय पश्चात् त्वं तं मुमोचिथ ॥ ४८
तादृशो ते बले वीर्ये जयन्तः कायमीदृशः । एवमादि वचः प्रोक्त्वा भानुकोपं निजात्मजम् ॥ ४९
स्वगृहं प्रेषयित्वाशु स्वयं चान्तःपुरं ययौ । ऐरावताख्यो नागेन्द्रो हित्वा मूर्छां द्विजोत्तमाः ॥ ५०
गत्वा श्वेतवनाभिख्ये पुरे पुण्ये सुशोभने । पूजयित्वा महादेवं दन्तौ लब्ध्वा मनोहरौ ॥ ५१
मेरुमाप तदा हस्ती यत्रास्ते बलसूदनः । यथेन्द्र प्रमुखा देवा बाधिताश्शूरपद्मना ॥ ५२
एवमेव हरिर्ब्रह्मा ऋषयश्च महात्मनः । शूरेण सिंहवक्त्रेण तारकेण तदात्मजैः ॥ ५३
बाधिताः पापिभिरत्यर्थं दिवारात्रमतन्द्रितैः ॥ ५४

इति गदितमशेषं षण्मुखायासुराणां निखिलदुरितहन्त्रे देवपूज्येन सम्यक् ।
तदिदमहमिदानीमानुपूर्व्याच्चरित्रम् व्यपगतकलुषाय्यां वोऽब्रवं भूसुरेन्द्राः ॥ ५५

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
आसुरकांडे पञ्चदशोऽध्यायः ॥
आसुरकाण्डस्समाप्तः ।



तदानीमेव तद्वायु संकृष्टा इव पर्वताः । आगतास्तस्य मार्गे ते तूलजालमिवानिले ॥ २४
अकंपयत्तदा शीघ्रमब्धिकल्लोलमण्डितः । शशाम वाडवो योऽग्निर्वाधाघात वशादयम् ॥ २५
एवमस्य गता मार्गे येये मेघार्क पूर्वकाः । बभ्रमुस्ते तदात्यर्थं वीरबाहोर्जवेनहि ॥ २६
यदा लङ्कापुरीमाप याळिवक्त्रासुरस्य सः । सेनापतिर्वीरसिंहस्तस्य तेजोबलान्वितः ॥ २७
वाहिनी पञ्चशतकैस्सेनानामाशु निर्ययौ । वीक्ष्य व्योमगतं शीघ्रात् गम्यते कुत्रथा त्वया ॥ २८
को भवानिति पृच्छंस्तं अहं शूरं व्रजाम्यमुम् । वीरबाहुरितिख्यातः किं कर्तुं शक्यते त्वया ॥ २९
इत्युक्त्वा धावनोद्युक्तमवर्षच्छरवृष्टिभिः । असुरास्तस्य भृत्यका महानिनदतत्पराः ॥ ३०
तानाशु खड्गमादाय कम्पिताश्वाहिनी शतैः । चिच्छेदान्येतु दैतेयाः पलायंत तदा द्विजाः ॥ ३१
ततस्तं वीरसिंहोऽपि स्वयं शूलं पविं तथा । क्षेपयामास वेगेन वीरबाहोस्तनुं प्रति ॥ ३२
अच्छिनत्तौ तदा शीघ्रं खड्गेनायं क्रमेणहि । चिच्छेदास्य शिरोहस्तौ वीरबाहुर्महाबलः ॥ ३३
एवमाकाशगस्तूर्णं हत्वा दैत्यान्बहूनयम् । लङ्कोपर्यपतद्भीमो वीरबाहुर्जवेनच ॥ ३४
पतनात्तस्य वेगेन पपाताधः पुरी भृशम् । मृताश्च बहवो दैत्याः केचिच्छिन्नांघ्रि पाणयः ॥ ३५
तिमिङ्गिलादयो मीना अद्भुःकांश्चिद्दितेस्सुतान् । ततोऽतिवीरसंज्ञेन पुत्रो याळिमुखस्य सः ॥ ३६
किमेतदिति कोपेन निर्ययौ योद्धुमुद्भटः । दृष्ट्वा तं वीरबाहुं ते तद्भटाः कोपविह्वलाः ॥ ३७
ववृषुश्शरवर्षाणि घर्ममेघाः इव क्वचित् । तत्सर्वं सहसा छित्वा मारयत्कांश्चिद्भटान् ॥ ३८
ततोऽतिवीरस्तत्क्षणा नवदण्डशक्तिसंनिभम् । अमुञ्चदायुधं भीमं वीरबाहुं प्रति द्विजाः ॥ ३९
खड्गमादाय सोप्याशु चिच्छेदायुधमागतम् । गदां मुमोच भूयोऽयं वीरबाहोस्तनौ दृढाम् ॥ ४०
सा तु वक्षस्थले तस्य पतिता भंगमाप ह । शूलमादाय वेगेन पुनश्चाशु जघान सः ॥ ४१
तूर्णं तदपि हस्तेन चूर्णयामास भीषणम् । करवालं गृहीत्वायं अक्षय्या दसमुज्वलम् ॥ ४२
उत्कृत्यास्य महिमाजालमतिवीरस्तमापहि । आमन्त्रितस्ततश्चापि संमुखाग्रपार्श्वतस्तथा ॥ ४३
पुनश्च मण्डलाकारं प्राप्यायावत्तदा भृशम् । एवं प्रदर्शयन् विक्रमं वीरबाहुरपि द्विजाः ॥ ४४
परस्परं युद्धमल्लौ युयुधातेतरामुभौ । ततः खड्गेन तद्धस्तौ वीरबाहुश्छिदस्तथा ॥ ४५
पाणिमेकं स्वयत्नेन चिच्छेद निशितेनहि । एवं लंकापुरीं दैत्यान् दरयायं सुबहूनपि ॥
पुनश्च खं गतस्तूर्णमट्टहासादि भीषणः ॥ ४६

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
वीरमाहेन्द्रकाण्डे प्रथमोऽध्यायः ॥

---

## ॥ अथ द्वितीयोऽध्यायः ॥

### वीरबाहुना वीरमाहेन्द्रपुरप्रवेशः ॥

सहस्र योजनायाम परिघां लंघ्य वेगतः । प्राकार द्वारमोपायमुत्तरं पत्तनस्य सः ॥ १
तत्र घोरातिघोरौ द्वौ पालकौ वीक्ष्य भीषणौ । सहस्र वाहिनी संख्यान् गजांश्चैव तथारथान् ॥ २
वाहिनी द्विसहस्रेण मितानश्वान्बलं तथा । यत्नेन गमिष्यामि मार्गेणैव तदाऽसुरैः ॥ ३
कार्यहानिर्भवेदेवमागतस्य ततो मम । इत्यादि चिन्तयित्वाऽयं प्राचीं द्वारं ततोऽगमत् ॥ ४
तत्रापि महिषाक्षाख्यं वीरभानुं महाबलौ । यावदुत्तरदिग्भागे चतुरङ्गबलं स्थितम् ॥ ५

पीत्वा तचाप्यरक्षस्त्वं तादृशं कृतोऽधुना । भजान्धकासुरौ हत्वा पालयामास वै सुरान् (भवान्)
मत्स्यं कूर्मं वराहाश्च नारसिंह त्रिविक्रमौ । हत्वा नेत्रेच मीनस्य कमठस्यास्थि कर्कशम् ॥ ४१
वराहस्यच दंष्ट्राच नृसिंहस्य त्वच तथा । त्रिविक्रमस्य पृष्ठास्थि गृहीत्वैव पुरा वयम् ॥ ४२
पालिता परमेशान त्वया सर्वेश्वरामरा । भण्डासुरं जलधरञ्च पञ्चमेढ महासुरम् ॥ ४३
हत्वा पूर्वं महादेव त्वया संरक्षितास्सुरा । एवमादि भयात्स्वामिन् दैत्यवर्गसमुद्भवात् ॥ ४४
उद्धृत्य देवान् देवेश ररक्षिथ किल प्रभो । सुप्ते जगति सर्वस्मिन् जागर्षि त्वमतन्द्रित ॥ ४५
अध्यान दिशसि स्वामिन् दुर्मार्गासक्त चेतसि । श्रम गते तथा शम्भो श्रान्ति हर हरत्यहो ॥ ४६
भय गते महादेव भीतेस्त्व रक्षसि प्रभो । सर्वदा जागरूकेण भवता रक्ष्यते जगत् ॥ ४७
किं कर्तव्य त्वया शम्भो वय पीड्यामहे भृशम् । कर्मण्यास्स हतेनैव त्वदाज्ञाधिष्ठितेनहि ॥ ४८
कृतश्च शुनासीर शच्या साकमरिन्दम । गजराडभ्युपतिश्चात्र संहार कारक ॥ ४९
अमराणा पुरीसद्यस्सर्वेर्तुकुसुमोज्वला । नन्दनं वैजयन्तीच मातलिश्चैव सारथिः ॥ ५०
कथा सुधर्मा देवाना सभा सद्भिरधिष्ठिता । आज्ञास्यचस्यामस्माक किंवा वृत्रारिरीदृशीम् ॥ ५१
त्वत्याप ब्रह्मविष्ण्वादि देवैस्साकं पुरन्दर । शिवलोकमनुप्राप्य सर्वपापनिकृन्तनम् ॥ ५२
शैलादिं तरसा दृष्ट्वा गणानामधिप वरम् । व्यजिज्ञिपत्स्वमीशानं नीलकण्ठमुमापतिम् ॥ ५३
आहोस्विन्नन्दिना प्रोक्तस्समयस्स तिरस्कृत । यदुक्तञ्च शूरेण तत्तद्देवैरनुष्ठितम् ॥ ५४
तथापि मानभगञ्च कर्तुमिच्छ चकारहि । किं कृत दैवतैस्सर्वै पाप शम्भो महेश्वर ॥ ५५
पिपीलिकाना यूकाना मशकाना तथैवच । अन्येषामपि जन्तूनामपि त्व पालक खलु ॥
एवमादि वदत्स्वत्र तदा निद्रावशापरे ॥ ५६

इति श्रीस्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
वीरमाहेन्द्रकाण्डे द्वितीयोऽध्यायः ॥

॥ अथ तृतीयोऽध्यायः ॥

जयन्तादि देवाना स्वप्ने स्कन्ददर्शनं, स्कन्देन वीरबाहु प्रेषणम् ॥ ॥

ततस्सर्वेषु देवेषु निद्रा प्राप्तेषु भूसुरा । प्रादुर्भूय महादेवतनूजष्षण्मुखस्स्वयम् ॥ १
नानारत्नसमाबद्धशातकुम्भकिरीटभृत् । प्रफुल्लाम्भोजसुषमाभृद्भिष्षड्भिर्मुखैरपि ॥ २
युगव्यायतवृत्तोद्यद्भुजैर्द्वादशभिर्भृशम् । उरसाऽप्यतिविस्तीर्णेनसुकुमारेण मण्डित ॥ ३
मष्टापदकृतोद्भास्वत्प्रकृष्टपरिधिराजितः । कटिप्रदेशलसद्रत्नस्वर्णसूत्रसुपेशलः ॥ ४
मुक्ताहारैर्विचित्रैश्च मण्डितोरस्स्थलस्तदा । अधिरूढबृहत्केकीवाहनस्तरसा सुरान् ॥ ५
सपीड्य सुरानसुरैर्भृश निद्रावशगतान् । आश्वासयञ्जयन्तादीन् स्वप्नरूपेण चागत ॥ ६
त्यज दुःख जयन्ताद्य कुशल ते भविष्यति । पुलोमजाशुनासीराविदानीं विप्रतस्सुखम् ॥ ७
आगमिष्यति मद्दूत स्वप्नेनैव महाबल । शूरञ्च संहरिष्यामि सानुजञ्च ससैनिकम् ॥ ८
स्थापयिष्यामि युष्मांश्च यथापूर्वं स्वकेपदे । एष प्रतिसुर दयसेनानीः स्वप्नमध्यग ॥ ९
आश्वास्य तदंघे क्षिप्र महाद्याम्मणौ गुहः । ततस्सर्वेषु देवेषु स्वप्ननिद्रेषु भूसुरा ॥ १०
यदाज्ञयोऽन्यमाश्रयं वीरबाहुस्तदागत । असुरा मोहयित्वाशु यावकान्नत्र संस्थितान् ॥ ११

कृतप्रणामस्तीर्भूपः प्रोवाच वचनं तदा । जयो भवन्तु भवतो भविष्यत्येव शीघ्रतः ॥ १२
इन्द्रस्तु त्वत्पिता देवैर्ब्रह्मणा विष्णुनासह । गत्वा कैलासमचलं दृष्ट्वा तत्र महेश्वरम् ॥ १३
स्तुत्वा प्रणम्य देवेशं पीडां शूरकृतां तदा । उक्तवानथ देवेशस्तस्मादिदमस्तुतं परम् ॥ १४
पार्वत्यां जनयामास सर्वं दैत्यनिबर्हकम् । कुमारस्त्वामरैस्सर्वैरागतश्शंभुचोदितः ॥ १५
श्रीसेन्तिलनगरं प्राप्तस्तेन संप्रेषितोऽधुना । वृत्तान्तं वेदितुं शूरपद्मनेऽभ्यागतोस्म्यहम् ॥ १६
त्वत्पिता च शुनासीरः प्रोक्तवान्वचनं तदा । पुलोमजा निवसति मेरौ रम्ये सुखेन सा ॥ १७
शचीदेवमिन्द्रोऽपि सुखेन वसति ध्रुवम् । क्रौञ्चतापननामानायसुरो हतवान्गुहः ॥ १८
महायज्ञ्यमसुरस्तूर्णं हत्वा शूरसुतासुरान् । पालयिष्यति देवैस्त्वा विदभ्यां सः स्थितं सुर ॥ १९
एवमुक्त्वाथ दैत्यैर्वेदितः स्वयम्बलः । सन्तुष्ट्या सह संभाष्य क्रमेणत्यागमं स्वकम् ॥ २०
प्राप्तस्वे सहसा भूयो वीरबाहुस्सुरोत्तमः । महुराद्य यथापूर्वमुत्तस्थुर्गतमूर्छनाः ॥ २१
आश्चर्याणि पुनर्वीथ्यां तस्यां तस्यां महान्त्यपि । दृष्ट्वा क्रमेण प्राप्य शूरवेश्मातिसुन्दरम् ॥ २२
सूक्ष्मरूपेण तेनैव लोचनानामगोचरः । गोपुरद्वारस्थयोऽसममयूरमिथयोस्तदा ॥ २३
पहरामपि दैत्यानां तद्भटानामपि द्विजाः । ददर्श शूरमसुरैरासेवित निशान्तिकम् ॥ २४
दिव्यसिंहासनारूढं दिव्याम्बरधरं परम् । स्फुरत्कनककोटीरमणिज्वालावलीवृतम् ॥ २५
कर्णकुण्डलकान्त्या च मण्डिताननमण्डलम् । मन्दहासपविस्फूर्जद्दन्तपङ्क्तिविराजितम् ॥ २६
स्फुरन्मुक्ताफलकृतपुष्पावलिभूषितम् । सादृशयोऽसाधाम मण्टपं कालमणिरस्ते ॥ २७
नृत्यद्भिरप्सरस्संघैर्नृत्यविद्याविशारदैः । श्रीराजनयिचार्भिर्दिव्यनारीभिरावृतम् ॥ २८
नानालंकारसंयुक्तं नानाभाषाविचक्षणम् । दृष्ट्वैव शूरपद्मानं वीरबाहुर्द्विजोत्तमाः ॥ २९
सिंहासनं विनाचैव मम नाथ (चैवाथवे) हि सः । इत्यालोच्य हृदि स्कन्दं चिन्तयामास वै द्रुतम् ॥ ३०
स्कन्दप्रसादादत्युग्रं नानारत्नविचित्रितम् । अनेकार्कप्रतीकाशमनूपमसुखबलम् ॥ ३१
ध्यानमात्रदलेनैव चिदाकृतं तदासनम् । लब्ध्वा पपुरस्त्वरितः यथारूपं तथाह्यसौ ॥ ३२
अग्रे शूरस्य निक्षिप्य सिंहासनमधिष्ठितः । महता प्रभावेन ज्वलन्निव भृशं तदा ॥ ३३
तादृशा समधिष्ठाप्य दैत्यास्ते सर्व्यचिन्तयन् । कोऽयमुज्ज्वलोभ्यर्थं ब्रह्मा वा विष्णुर्वापरौ ॥ ३४
कथमत्रागतश्चासौ पश्यधियमात्र पालवान् । एवं दैत्यविप्रेक्ष्य शूरः प्राह वचः मुधा ॥ ३५
कोपा भयाग्नरूपामु पुरतः कस्य कोऽसिवा । महेन्द्रजाल विधेयं त्वया सम्यगनुष्ठिता ॥ ३६
पुरतो मे स्थितिं कर्तुं कथमेतत्र सुरोत्तमाः । ब्रह्मादयो मुकुन्दोस्त्वं साम्प्राप्तमनुत्तमम् ॥ ३७
भवता स्थिरोपेतो सर्वालङ्कारमण्डितः । ब्रह्मादेवादयो विद्या कृता सम्यक् त्वयाऽधुना ॥ ३८
तस्मात्तुभ्यं प्रयच्छामि प्राप्यत्यागमदं क्षणात् । विमर्धमापत वृद्धि त्वया सम्यगनुत्तमात् ॥ ३९
इति शूरवचः श्रुत्वा वीरबाहुर्द्विजोत्तमाः । सत्यज्ञानमुखाम्भोजः प्रोवाच वचनं तदा ॥ ४०
शृणु शूर प्रवक्ष्यामि लक्ष्मणोऽयमानतः । ब्रह्मविष्ण्वादयो देवास्त्वया संपीडितास्सदा ॥ ४१
कैलासवासिनं देवं सर्वेषाममयप्रदम् । सर्वरोगापहं शान्तं साक्षात्कैवल्यदायकम् ॥ ४२
गत्वा तत्र समस्तास्तमनुज्ञा स्तोत्रशतैरपि । व्यजिज्ञपन् यथायुक्तं पीडां युष्माकृतां तदा ॥ ४३
संस्तुत्य महादेवं प्रोचुस्ते विनयान्विताः । देवदेव महादेव शूरोऽयं बाधते सुरान् ॥ ४४
तस्मात् त्वं तन्निवारणाय पार्वत्याममरेश्वरम् । उत्पादयाशु भगवन् कुमारं सुकुमारिणम् ॥ ४५

ततस्तु भगवान् देवान् ओमित्युक्त्वा महेश्वरः । अजीजनत्कुमारं तं कालेनैवासुरद्रुहम् ॥ ४६
कुमारंच ततः प्रेक्ष्य प्रोक्तवान्वचनं तदा । त्वं पुत्र देवसेनानीः कान्तिशीकान् सुरोत्तमान् ॥ ४७
रक्ष शूरमुखान् दैत्यान् हत्वा शीघ्रं महाशय । इत्यादिष्टो भगवता प्रतस्थे सहसा तु सः ॥ ४८
मध्येमार्गं महापापं दैत्यं क्रौञ्चाभिधं तथा । तारकंच महाघोरं भ्रातरं तव षण्मुखः ॥ ४९
हत्वा श्रीशैन्तिनगरे रम्ये वसति संप्रति । दयया त्वयि देवेशस्तेऽन्तिकं मामचोदयत् ॥ ५०
बुद्धिस्त्वाच सैनेयं मुक्त्वा देवान्यथापुरम् । जयन्तप्रमुखानाशु यथाऽऽसिन्पत्तने स्वके ॥
शोचेन्निवानीमागत्य संहरिष्याम्यसंशयम् ॥ ५१

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
वीरमाहेन्द्रकाण्डे तृतीयोऽध्यायः ॥

---

## अथ चतुर्थोऽध्यायः ॥

### वीरबाहुना शूरस्य उपदेशः शतमुखादीनां वधश्च ॥

जयन्ताद्यांस्ततस्त्वंच मुञ्चशूर सुतानिमान् । त्यक्त्वा गर्वं यथापूर्वं तिष्ठ भूयोऽप्रमादतः ॥ १
एवमादि वचश्चोक्त्वा वीरबाहुर्द्विजोत्तमाः । स्फुटाक्षरं सुगम्भीरं मौनमाप द्विजोत्तमाः ॥ २
शूरपद्मस्तु तं वीक्ष्य वीरबाहुं क्रुधा ज्वलन् । किन्नजानाति मच्छौर्यं युक्ताचेष्टा शिशोरियम् ॥ ३
तारकस्य वधं श्रुत्वा संहर्तुं तमहं क्षणात् । निर्गतस्तु विचिन्त्याथ बालस्य हनने कथम् ॥ ४
मुक्त्वा लज्जां गमिष्यामीत्येवं तूष्णीं स्थितं मया । प्रेरयिष्यामि सेनाढ्यो जेतुं तमहमुद्धतम् ॥ ५
जयन्तप्रमुखान् देवान् मनुष्याम्यमरानपि । आनीय तरसा बध्वाऽऽयसं ह्यावा पशाम्यहम् ॥ ६
एवमादि वचः प्राह गर्वेयुक्तं तदासुरः । ततः प्राह वचः शूरं वीरबाहुः क्रुधा पुनः ॥ ७
अविज्ञायास्य वृत्तान्तं शूरः स्कन्दस्य दुर्मते । बालोऽयं मां न जानातीत्येवमाप्युक्तवानसि ॥ ८
स तु देवाधिदेवस्य स्कन्दाख्या मूर्तिरव्यया । तस्य देहे समुत्पत्ति ब्रह्माण्डानि पुनर्लयम् ॥ ९
यस्माद्दौत्ये नियुक्तोऽहं नकिञ्चित्तमया(त्वमा)ऽश्रुतः । अवमाने कृते तेन तव दुष्टस्य सत्वरः ॥ १०
एवं कटुवचोभिस्तं वीरबाहुरभर्त्सयत् । ततः क्रुद्धेन शूरेण चोदिता दितिसंभवाः ॥ ११
सहस्रशिरसः क्रूरा द्विसहस्रकरास्तथा । सहस्रं संख्यासम्बद्धाः परिवव्रुर्बधाय तम् ॥ १२
तान्सर्वान् वीरबाहुस्तु गृहीत्वा पाणिना द्रुतम् । आस्फालयन्महीपृष्ठे गतप्राणांस्तदाकरोत् ॥ १३
प्रतस्थे सन्निधौ तस्य हत्वा दैत्यान् भयं क्षणात् । सिंहासनं तदान्तरधि वीरबाहोर्गतं किल ॥ १४
पुनश्च शतमुखं शूरः प्रेरयामास शीघ्रतः । प्रेरितस्तत्सेनाभिः प्राप योद्धुं क्षणादसुम् ॥ १५
वीरबाहुस्तु सेनासु सारवत्सु तदाभृशम् । उत्पाट्य गोपुरं विंशत्सहस्रघटमण्डितम् ॥ १६
क्षेपयामास वेगेन महता बलवान् द्विजाः । पतनादस्य सेनास्ता मृतिमापुः क्षणादहो ॥ १७
ततश्शतमुखः क्रुद्धो ववर्ष किल सायकान् । ते सर्वेऽस्य शरीरेतु पतन्तः क्षुण्णतां गताः ॥ १८
पुनश्च वीरबाहुस्तं उत्पाट्यान्यत्तु गोपुरम् । जघान तरसा वेगात् क्रुधात्यन्तं ज्वलन्निव ॥ १९
सच चिच्छेद शतशस्सायकैरस्त्रकोविदः । गोपुरं तरसा युद्धे शतवक्त्रो महाबलः ॥ २०
तोमरं प्रासशक्तींच बाणांश्चान्यान्बहूनपि । मुमोचास्य शरीरेऽयं पुनः कोपेन सोऽसुरः ॥ २१
तान् सर्वान् भञ्जयित्वायं धनुश्चास्य बभञ्ज हि । पुनः पाणिभिरायुद्धं आगतो द्विशतैरपि ॥ २२

मुनोदांसस्थलेनैव वीरबाहुर्महासुरम् । मुष्टिमात्रेण पतितं भूतले तं जघान सः ॥ २३
आक्रम्योरसि चैकेन, पादेनान्येन तत्क्षणम् । अस्खलच्च शिरांस्यस्य नालिकेरान् जना इव ॥ २४
एवं शतमुखं हत्वा वीरबाहुर्महाबलः । गृहीत्वात्यद्भुतं रूपं अत्युच्छ्रायं पुनश्च सः ॥ २५
पादेनास्फाल्य तरसा मेदिनीं स्थितवान् यदा । तदा भुग्नाऽभवद्भूमिस्तदाक्रान्ता भृशं किल ॥ २६
जलस्रोतश्च सुमहद्भूत्तत्पतनादहो । असुरानपि तत्स्थानश्वानः (सङ्काश्च) कर्षयत्तदा ॥ २७
केचिन्मृता दैत्या जलस्रोतसि मध्यगाः । पञ्चाशद्वाहिनी संख्या दैत्या भूयः प्रतस्थिरे ॥ २८
पर्यन्तद्वारवर्त्मानि वीरबाहो स्तनौ भृशम् । रुधिराणि तदाङ्गस्य पप्रभुस्सुबहून्यपि ॥ २९
अथ तान् वीरबाहुस्तु पाणिभ्यां मंत्रिणोऽसुरान् । सन्ताड्य मारयामास सर्वानेतान् क्षणात् द्विजाः ॥ ३०
पुरस्य पालकानेवं हत्वा भूयोऽपि गोपुरम् । नियुतस्वर्णकुम्भौघ भासुरं सुमनोहरम् ॥ ३१
वैशाखयोजनव्याप्तं योजनानां मितं महत् । पञ्चोत्तरशतानां च सहस्राणामपि क्रमात् ॥ ३२
उद्धृत्य पाणिना भूयो वेगेनाक्षिपदञ्जसा । निपपात महास्थानमण्टपे शूरपद्मनः ॥ ३३
निपातनात्तदा तस्य मण्टपोऽप्यपतत्किल । पुनश्च मण्टपानन्यान् प्राकारान् वलभीरपि ॥ ३४
गोपुराट्टाल सौधांश्च स्तंभान् गण्डशिलास्तथा । वृक्षानुत्पाट्य तत्रस्थान् क्षेपयित्वा पुनःपुनः ॥ ३५
ननर्त सोऽट्टहासेन करमुद्धृत्य लीलया । इतस्ततश्च पतनात्तेषां दैत्याः परे मृताः ॥ ३६
पलायनपराः केचिन्मुक्तकेशाम्बरा भृशम् । शूरस्तु सभामास्थाय मण्टपं पतनस्य च ॥ ३७
ज्ञात्वा संक्षोभमत्यर्थं कोपेन द्विति संभ्रमात् । सहस्रबाहून् प्रोवाच वीक्ष्य पञ्चाशतानतान् ॥ ३८
यूयं भटा जवेनैव (छलेनैव) यत्याच्चागच्छताऽधुना । इत्यादिष्टास्तदा तेन ते सर्वे वीर्यवत्तराः ॥ ३९
नानायुधानि तरसा मुञ्चन्तो निशितानि वै । सहस्रसंख्याः प्राप्यैव तं वद्धुं चोन्मनास्तथा ॥ ४०
भयशङ्कां प्रतीक्ष्यैव स्थितात् शूराधुनावयम् । इत्युपेत्याऽनुमतिं लब्ध्वा प्रतस्थुस्सहसाऽसुराः ॥ ४१
परिवृत्य तदा वीरबाहुमेते महासुराः । नानायुधानि तरसा मुमुचुर्निशितानि ते ॥ ४२
वीरबाहुस्तदा कोपात्सालवृक्षं महोन्नतम् । गृहीत्वाऽस्त्राणि तान्याशु चूर्णयामास वैभवम् ॥ ४३
आस्फाल्य सर्वानेतेन हतवान् किल निष्ठुरान् । तेषां मृतिं च श्रुत्वाऽथ दूतवक्त्रेभ्य शीघ्रतः ॥
चुकोप शूरपद्मस्तु वीरबाहुं महाबलम् ॥ ४४

शूरात्मजस्तु तरसा पितुराज्ञयाथ नानाविधाभरण भूषितबाहुगात्रः ।
वज्रं रथं दशसहस्रलसत्तुरङ्गैरारुह्य निर्गमनमप्यकरोत् द्विजेन्द्राः ॥ ४५

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
वीरमहेन्द्रकाण्डे चतुर्थोऽध्यायः ॥

---

॥ अथ पञ्चमोऽध्यायः ॥

वीरबाहुणा शूरात्मजस्य वज्रबाहोर्वधः ॥

ततश्शूरकुमारोऽयं वज्रबाहुर्महासुरः । मन्त्रिसेनापतीनां च कुमारैरमितैर्वृतः ॥ १
वाहिनी पञ्चशतकैर्गजैरपि रथैस्तथा । सहस्रवाहिनीसंख्यैरश्वैर्मारुतवेगिभिः ॥ २
वाहिनी द्विसहस्रेण पत्तिभिरावृतो बलैः । पटहध्वनिनिर्धूतपयोराशिमहाध्वनिः ॥ ३
धनुर्बाणसंयुक्तपाणिभिर्ध्वजिभिस्तथा । यत्र प्रतस्थे बलवान् वीरबाहुं प्रति क्रुधा ॥ ४

तदोल्कापातः पुरेऽकस्मात्पपातात्य भयंकरः । शुष्कवृक्षप्रकाण्डे च तेनैकः काकोऽवस्थितः ॥ ५
शिवारुतानि सर्वत्र श्रुतानि दनुजेनहि । रजस्वलाङ्ग रक्ताङ्ग रक्तमाल्यांबरावृताम् ॥ ६
तैलाप्लुतं तथा छिन्ननासां बाहुपक्षानपि । दृष्ट्वा दुःशकुनं चैव निशावसानकं तदा ॥ ७
अगणय्याथ तरसा वीरबाहोस्तदान्तिकम् । वीरबाहुस्तु सेनानीं संरब्धमभिवीक्ष्य सः ॥ ८
क्षिप्रमेनामहं हत्वा निर्गमिष्यामि षण्मुखम् । नोचेत्तस्य न दूतोऽयं प्रतिज्ञामकरोदिति ॥ ९
गर्जयामास बलवानुत्प्लुत्योत्प्लुत्य वेगतः । श्रुत्वाऽस्य गर्जनं वज्रबाहुर्विस्मितमानसः ॥ १०
किमेतदिति पप्रच्छ विजयं सारथिं स्वकम् । बोधितस्तरसा तेन सन्नद्धस्तु रणाय सः ॥ ११
तत्पूर्वमेव तत्सेना शरवृष्टिं ववर्ष सा । वीरबाहोश्शरीरे च रक्तास्रावो महानभूत् ॥ १२
ततः कोपेन महता वीरबाहुस्तदाऽसुरान् । गृहीत्वा पाणिनानेकांश्चिक्षेपान्तकमाशु तान् ॥ १३
भ्रामयित्वा पुनश्चान्यान् भूतले ताडयद्भृशम् । दिक्षु गदान् गृहीत्वाऽन्यान् आक्षिपत्तरसाऽसुरान् ॥ १४
आस्फाल्यान्यान् कपोलेषु हतवानसुरान् बहून् । गृहीत्वा केशपाशेन भ्रामयित्वार्णवांबुषु ॥ १५
लोकालोकेषु सर्वत्र द्वीपादिषु तथाऽसुरान् । पादाघातेनचरान्मुष्टियुद्धेन यापयन् ॥ १६
पादान् कराभ्यां संगृह्य बहूनां दितिजन्मनाम् । उत्पाट्य क्षेपयामास समन्ताद्व्योम्नि लीलया ॥ १७
शिरांसि मुष्टिघातेन परेषामुदरेऽकरोत् । तथान्येषामुरस्स्थाने पार्श्वे हस्तैकमुज्ज्वलम् ॥ १८
इतरेण भुजेनाशयमुत्तमाङ्गानि सर्वतः । अन्यान्बहूनेकधायं करेणास्फाल्य निष्ठुरान् ॥ १९
पिण्डीचकार बलवान्निष्पीड्य तरसाऽसुरान् । अंघ्रीन्गृहीत्वाऽन्येषामुत्क्षिप्योर्ध्वं व्यदारयत् ॥ २०
यावत्कालेन ते भूयो निपतन्ति रसातले । तावदेव पुनश्चान्यांस्तेषां लक्ष्यं चकार सः ॥ २१
एवमेवासुरान्सर्वान् हतवान् भूसुरा भृशम् । सेनापतिकुमारांश्च ताडयित्वा महासुरान् ॥ २२
वज्रमुष्टेण कृतवान् विगतप्राणमारुतान् । ततस्ससंभ्रमं वज्रबाहुस्तु तरसाऽसुरः ॥ २३
आदाय चापं सव्येन पाणिनान्येन मार्गणान् । योजयित्वाऽत्वरया शरान्सहस्राणि मुमोच सः ॥ २४
वीरबाहुस्तु तान् सर्वान् चूर्णयामास तूर्णतः । पुनर्मुमोच नाराचानयुतान्निशितान्बली ॥ २५
मुसलेन तदास्फाल्य तान्रेणूनकरोदयम् । ववर्ष वृष्टिं बाणानां सहस्राणां पुनश्च सः ॥ २६
वीरबाहुस्तु तान्सर्वान् करेणैवाकरोद्वृथा । पुनश्च वज्रबाहुस्तं मूर्ध्नि वक्षःस्थले क्रुधा ॥ २७
पाणिपादललाटेषु कण्ठादिषु मर्मसु । प्रतिस्थाने सहस्राणि शराणि निशितान्यहो ॥ २८
विमोचितानि सर्वाणि मुसलं तस्य कर्कशम् । छित्वा लग्नानि सर्वेष वीरबाहोस्तनौ भृशम् ॥ २९
मूर्छामाप दधार च वीरबाहुः क्षणं स्थितः । वीरबाहुस्ततः कोपाद्रथं तस्यातिसुन्दरम् ॥ ३०
ताडयामास पादेन शतधान्यपतच्च सः । वज्रबाहुस्तु तरसा पुनश्चान्यं महारथम् ॥ ३१
स्थित्वा मुमोच बाणानां सहस्रं निटिलेऽस्य सः । तान् सर्वान् पाणिना तस्य हत्वा निष्फलवानिनः ॥ ३२
साकं तेन रथं तूर्णं अक्षिपल्लक्षयोजनम् । ऊर्ध्वं भूयो पतद्भूमौ विशीर्णोऽगोरथःक्षणात् ॥ ३३
वज्रबाहुस्तु पतितस्तत्रैव च पुनः क्रुधा । गृहीत्वा चापमत्युग्रं यदा योद्धुमियेष सः ॥ ३४
तदानीमेव तस्यास्तु तद्द्विधा कृतवानयम् । खड्गमादाय च पुनः कोपेनोत्प्लुत्य रंहसा ॥ ३५
अभ्यागतस्य तस्यापि करं सासिसमच्छिनत् । गदां संभ्राम्य गुर्वीं च जघानास्योपरि क्रुधा ॥ ३६
चिच्छेद तामपि तदा करवालेन तस्य सः । ततस्तु वज्रबाहोश्च वीरबाहुश्शिरःस्वयम् ॥ ३७
अच्छिनत्सुदृढान्यस्य खड्गेनोत्प्लुत्य रंहसा । एवं हत्वाऽसुरान् सर्वान् वीरबाहुर्द्विजोत्तमाः ॥ ३८

स्कन्दस्याग्र्यायामध्येतु यदेच्छामकरोत्पुन । सवितापि ततश्शीघ्र प्रापास्तमयपर्वतम् । ३९
अहो स्कन्दस्य निन्दाया फलं शूरेण सम्प्रति । अनुभूतमिति ज्ञात्वा वीरबाहुस्त निर्ययौ ॥ ४०
वीथिस्थान्यद्भुतान्याशु पश्यन् भूप पुरस्तदा । उल्लंघ्य परिखा वेगात्प्राप लङ्कापुरीं क्षणात् ॥ ४१
तदागमनमस्याशु ज्ञात्वा यालिमुखासुर । सहस्रमौलिनिचयो द्विसहस्रकरावृत ॥ ४२
वीरबाहुस्तदासूत्वा मूर्ति पुत्रस्य मन्युना । वारयामास सेनाभिरसुरीभिर्महाबल ॥ ४३
अब्रवीद्वचन चोग्र वीक्ष्य तं यालिकन्धर । यस्मात्त्वया मारितोय मत्पुत्रस्तादृशो महान् ॥ ४४
संहरिष्यामि तस्माच्च पश्य मे वीर्यमुल्बणम् । एव वदत्तस्तस्य वीरबाहुर्निशम्य स ॥ ४५
विहस्य किञ्चिद्रोषात्त यालिवक्त्र तदासुरम् । सहस्रयालिवक्त्रैस्त्वं द्विसहस्रभुजैरपि ॥ ४६
भयप्रदोऽद्यमेकेन शिरसा मण्डितोऽधुना । किंकर्तव्य त्वयाद्यैव रणे तत्कुरु वीर्यवान् ॥ ४७
इति ब्रुवन्तं तं तस्य सेनाध्यक्षाश्च निष्ठुर । मुमुचुर्निशितान्याशु शस्त्राण्यस्त्रं तदाभुतम् ॥ ४८
तानस्त्रराशिसत्व पराय स्वहस्ताच्छिन्नमुज्ज्वल । ततस्तु यालिवक्त्रोऽसौ सहस्रै पाणिभि क्रुधा ॥ ४९
ताडयामास वेगेन वक्षस्युपरि निष्ठुरे । तत्क्षणेनैव ताम्पाणींस्तस्य खड्गेन चाच्छिनत् ॥ ५०
पुनश्चान्यै करैरुग्रै पर्वतानुन्नमानसौ । उत्पाट्य क्षेपयामास वीरबाहोस्तनौ द्विजा ॥ ५१
निपतन्तोऽस्य ते सर्वे शरीरे चूर्णता गता । चिच्छेद तानपि करान् सहस्रगणितांस्तदा ॥ ५२
मुण्डासहस्र भूयोऽपि प्रेरित वायुसख्य च । छित्वा खड्गेन मुण्डांश्च तस्यारं पृथिवीतले ॥ ५३
हत्वाऽसुरकुल भूप वीलादेर्गणाडम्बम् । गन्धमादनमाप्याय समुद्र लङ्घ्य पर्वतम् ॥ ५४
श्रीशैलन्तिनगर प्राप स्कन्दस्याश्रमसमुज्ज्वलम् । अग्रहीदागमलोकय क्षणेनैव नदो यथा ॥ ५५
तत्र दृष्ट्वा महात्मान आगत सह पर्वतम् । अशाखिफलसद्दक्षणमा पार्श्वे स्कन्दास्तथा ॥ ५६
ब्रह्मविष्ण्वादयस्सर्वे नाकलोक महस्तता । नत्वा स्तुत्वा स्थिता स्तोत्र कृताञ्जलिपुटास्तदा ॥ ५७
समाध्य सर्वान् सम्प्रार्थ्याङ्ग्यालिङ्ग्य तानयम् । वृत्तान्तमुक्त्वा सर्वेषा विशेषेण महन्यत ॥ ५८
अनुयातस्तदा सर्वेश्चाप स्कन्दस्य मन्दिरम् । दृष्ट्वात्र बयलेयाना स्वर्गं परम सुखम् ॥ ५९
प्रणम्य परया भक्त्या स्तुत्वा स्तोत्रशतैरपि । प्रबद्धलसितकरस्तस्थौ प्रश्रयणेन ■ ॥ ६०
हतानुभवस्तु वृत्तान्त पश्चात् स्कन्देन चाब्रवीत । श्रृणुक भवता स्वामिस्तथैवोक्ता मयाऽसुर ॥ ६१
न शृणोतिस्म तद्वाक्यमुल्लङ्घ्याशा तव प्रभो । हन्तु माञ्च तदा काश्चिदसुरानप्यचोदयत् । ६२
हत्वा तान् कृपया तेऽद्य पुन प्राप्तोऽहमन्तिकम् । उक्त्वैव विनयात्तत्र प्राह तं षण्मुखस्तदा ॥ ६३
स्थिरोऽसि नितरा भक्त प्रयासमनुभूतवान् । साहसैश्वाम्यसमित्यादि तथो प्रह्लाद्यच्युतम् ॥ ६४
इन्द्रादिदेवान् वीक्ष्याय षण्मुखस्सहसा पुन । नाक्रीडसे यतस्तेन महावयमसुरेण तत् ॥ ६५
श्वश्च संहरिष्यामि देवारिणपुरागमा । युष्माभु तत्र पश्यन्तु सुखेन सबान्धवम् ॥ ६६
एवमुक्त तदा सर्वे शृण्वन्तोऽमराष्टुक्षा । स्कन्दन स्पृष्टमापुस्ते वचो विष्णुमुखा द्विजा ॥ ६७

इति गदितमशेष वीरबाहोश्चरित्र निखिलदनुजमुख्यध्वंसकस्याधुनाय ।
पुनरपि च यदाभिस्फीतपुण्या मुनीन्द्रा समवहितमनस्कास्तच्छृणुध्वं कथा ■ ॥ ६८

इति श्रीस्कान्द महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
वीरमाहेन्द्रकाण्डे पञ्चमोऽध्याय ॥

॥ अथ षष्ठोऽध्यायः ॥

शूरेण स्वानुज पुत्र मन्त्रिभिस्सह मन्त्रालोचनम् ॥

अथ शूरस्तु पुत्रस्य श्रुत्वा तां विपदं तदा । असुरैरपि वार्ताभिः पद्मकोमलया शुचम् ॥ १
धर्मकोपस्तमगस्य मन्त्री तस्य महामतिः । सांत्वयामास वचनैर्दुःखितं शूरमाशु सः ॥ २
ऐश्वर्यं कीर्तिबुद्धीनां धृतिशौर्यौजसामपि । निलयस्त्वं महातेजास्सर्वेशः सर्वतन्त्रवित् ॥ ३
किमर्थमधुना स्वामिन् शूर शोचसि मूढवत् । ब्रह्मादि देवास्सर्वेऽपि त्वामवेक्ष्येदृशं प्रभो ॥ ४
न करिष्यन्ति किं दास्यं तस्माच्छोकं त्यजाधुना । दूतेनैवं हतं मत्वा कथं शोचसि कस्यचित् ॥ ५
आयुश्चैतावदस्यैतच्च पुत्रस्य कल्पितम् । मोचेत्कथमनेनायं हतस्सर्वारिघातकः ॥ ६
एवं बहुविधं तेन बोधितस्सहसाऽसुरः । पार्श्वस्थान् प्रेक्ष्य दूतोऽयं गतो वा वर्ततेऽथवा ॥ ७
एवमुक्तवाथ तैः प्रोक्तो गतएव इति द्विजाः । ब्रह्माणमानयाशेति दूतं प्राह महाबली ॥ ८
गत्वा दूतस्तु सर्वत्र प्रेक्ष्य तं स्कन्द पार्श्वगम् । सर्वान् देवानथागत्य प्रोवाचैवं यथातथम् ॥ ९
तच्छ्रुत्वा शूरपद्मोऽयं स्वदूत वचनं तदा । चुकोप देवान् सर्वांश्च मनसा ब्रह्मपूर्वकान् ॥ १०
आनयामास धातारं कथाण्डाधिपमासुरः । दूतमप्रेष्य तं प्रेक्ष्य अमरं पूर्ववत्कुध ॥ ११
ब्रह्मणिस्माहशूरोऽयं ततो ब्रह्मा यथापुरा । इत्याशुनगरं तस्य प्रापाभ्याशं पुनश्च सः ॥ १२
बहुमानेन तं भूयो दूतैस्साकं निजैरयम् । प्रेषयामास धातारं निजाश्रं सहसा तदा ॥ १३
सुपाथा तं बहिरस्याशु ब्रह्माण्डस्य गत खलु । प्रेषिता ये पुरा दूतास्ते सर्वेऽत्र समागताः ॥ १४
शूरं सिंहासनारूढं कृत्वाथ विनयान्विताः । त्वदाज्ञया वयं नाथ गत्वा सर्वमिहागताः ॥ १५
श्रीशोणितनगरे एकत्रस्सहभूतैर्महाबलैः । वाहिनी द्विसहस्रेण गणितैरावृतस्तथा ॥ १६
अष्टोत्तर शतैश्चापि सेनापतिभिरूर्जितैः । नवसंख्याधिकैर्लक्षैर्वीरैरमितशक्तिभिः ॥ १७
हत्वा तारकमन्येष परमेशाङ्गसंभवः । वर्तते सुमहातेजा ब्रह्मविष्ण्विन्द्र पूर्वकैः ॥ १८
सुरैस्संसेव्यमानस्सन् शुश्रूषाद्यतमानसैः । प्रेरयित्वा त्वदभ्याशं वीरबाहुं महाबलम् ॥ १९
विदितेनाधुना भूयो निवृत्तेन वली तव । सहतो वाळिवक्षोऽपि लङ्कापतिरसौ महान् ॥ २०
दग्ध्वा सर्वत्र साप्याशु सह तेनैव सुन्दरा । विदित्वा तव वृत्तान्तं भागतेनेश्वरात्मजः ॥ २१
कृत्स्नसज्जितवांस्कन्दो युद्धायोत्सुकमानसः । ब्रह्मादि देवान् संप्रेक्ष्य भो युद्धमसुरेण मे ॥ २२
इत्युक्त्वा तैश्च सन्तुष्टैस्सेवितस्तत्र तिष्ठति । एवं दूतवचः श्रुत्वा शूरपद्मो द्विजोत्तमाः ॥ २३
सिंहाननं सपुत्रांश्च तथा सेनापतीनपि । अमात्यानपि धर्मज्ञान् आनयामास शीघ्रतः ॥ २४
आगतांस्तानयं प्रेक्ष्य वाचमूचे विचारवान् । शृणुध्वमनुजाः पुत्रास्सर्वे यूयं समाहिताः ॥ २५
ब्रह्मविष्णुमुखा देवा गत्वाभ्याशं महेशितुः । याचन्ते नितरां शंभो शूरपद्म सुरानिमान् ॥ २६
रक्षणीयास्त्वयावैयमूचुः किल महेश्वरम् । तेषां तद्वचनं श्रुत्वा महादेवस्तु नाकिनाम् ॥ २७
कुमारं जनयित्वाशु सेनास्संयोज्य भूयसीः । प्रेषयामास तं देवो वालिशं परमेश्वरः ॥ २८
आगत्य सोऽपि श्रीशोणितमास्ते देवैः किलाधुना । ब्रह्मविष्ण्विन्द्र पूर्वैश्च पैशुन्यनिरतैरयम् ॥ २९
निश्चित्य युद्धमस्माभिरद्य एवेति सुनिश्चितः । तारकं च यदा सोऽयं मारयामास वालिशः ॥ ३०
निगृहीतुं तदैवैनं निर्गतोऽहं बलैस्सह । बालं मत्वापि शूरोऽयं निर्जगामेत्यपत्रपा ॥ ३१
भविष्यतीति मत्वाऽहं निवृत्तः पुनरेवहि । इतः परं किं कार्यं नो यूयं ब्रूताधुना द्विजाः ॥ ३२
तस्त्वैवं विरते तस्मिन्नसुरस्तं द्विजोत्तमाः । कथमेव त्वया स्वामिंस्तारकस्यापि घातकः ॥ ३३

दृष्टोऽपि धीरो नज्ञातो विशेषेण त्वया किल । भवोत्तर शतंचापि युगानामसुरेश्वर ॥ ६९
आयुस्तेन प्रदत्तानामीनोन मयतोगतम् ।
दापत्या स्वयाच येनान्ते (शापत्यास्येनायुधेनान्ते) मरणं तेऽवधृषसः ॥ ७०
मृत्वा शक्तिं धागतोऽयं सुकुमारः कुमारकः । नजानामि महादेवमायां दुर्घटकारिणीम् ॥ ७१
युद्धिरेतादृशीज्ञाता तव किं भ्रातरत्वया । इतः परं वा देवांस्तान् मुक्त्वा कारागृहस्थितान् ॥ ७२
प्रणम्य षण्मुखं मूयश्चुत्वोक्तिं तस्य निर्भयः । वसास्मिन् स्वपुरेऽत्र्ये भुक्त्वाभोगान्यथेप्सितान् ॥ ७३
इत्यादि वचनं तस्य निशम्यासुरनायकः । प्रोवाच वचनं रुष्टस्स्फुरद्दन्ताधरोज्वलः ॥ ७४
घूर्णयन् लोचने रक्ते स्वयस्तेशोद्गमावृतः । किं वदस्यधुना भ्रातः गतलज्जो महन्तिके ॥ ७५
विशेषयसि भूतानि च कश्चिद्बालकं तथा । प्रणम्य धनं तिष्ठेति प्रोक्तवानसि दुर्मते ॥ ७६
उपन्तपमुखान्मुक्त्वा श्रुतोऽस्मिमिति चाप्यहो । शापत्याच मरणं तद्वशोत्तरयुगावधौ ॥ ७७
ममेति चापदस्तूर्णमनृत वचनं यत । मायाऽयवा भवान्यो मलेर्मा विभ्रमोऽस्यते ॥ ७८
विलष्ट वीर्यमथवा मुक्तं दैत्यवरस्यच । नजानासि ममेशेन यर दत्तं त्वमद्य किम् ॥ ७९
यत्र कापि द्रुतं गच्छ मुखयत्र्याशो ममाधुना । इति साटोपमस्योक्तिं श्रुत्वा सिंहमुखस्तदा ॥ ८०
हितं मया समुदितं न शृणोमि विमूढधीः । विपरीतं च गृह्णाति यदिष्यामीप्समस्य यत् ॥
इति निश्चित्य मनसा प्रोवाच वचनं द्विजाः ॥ ८१
नानायुधानि मम सन्ति तथाक्षयाऽहं भूतानि बालमभिगम्य विजित्य भूयः ।
पश्यामि नूनमसुरेश तवान्तिकेऽत्र यस्यत्सुरौघकरि सिंहमुखोऽतिभीमः ॥ ८२
इति श्रीस्कान्दे महापुराणे शाङ्करसंहितायां शिवरहस्यखण्डे
वीरमाहेन्द्रकाण्डे षष्ठोऽध्यायः ॥

---

॥ अथ सप्तमोऽध्यायः ॥

स्कन्द सेनापतीनां नामानि, श्री स्कन्देन वीरमाहेन्द्रपुर समीपे हेमकूटाख्य पुरनिर्माणं च ॥

ततस्संश्रुत्य तस्योक्तिं शूरपद्मा प्रसन्नवाक् । सन्तुष्टो नितरां सिंहं प्रोवाच वचनं तदा ॥ १
शोधनार्थं त्वमत्रैवमुक्तवानसि सत्वर । तव बाधा न योग्याद्य बालमुद्दिश्य सम्प्रति ॥ २
आगतश्चेत्तदानीं त्वामानयिष्यामि शीघ्रत । तस्मात् त्वमधुना गेहं गच्छेत्युक्त्वा विसृज्य तम् ॥ ३
सह सर्वैश्च शूरोऽथ गुह्यान्तं प्राप भूसुराः । तस्यां रात्र्यां व्यतीतायां प्रातरुत्थाय षण्मुखः ॥ ४
सिंहासनमधिष्ठाय नानारत्नोप शोभितम् । ब्रह्मविष्णुमहेन्द्राद्यैस्सेव्यमानस्समन्ततः ॥ ५
नवसंख्याधिपैर्लक्षैर्भूतानां पतिभिर्वृतः । वीरबाहुमवेक्ष्याशु जगाद वचनं तदा ॥ ६
आनेतव्यो रथस्तूर्णं त्वया युद्धाय संप्रति । इति तस्य वचः श्रुत्वा वीरबाहुस्त्वरायुतः ॥ ७
तथैव वायु प्रोवाच स्कन्दस्य वचनं तदा । आनीय रथमत्यन्तमुज्ज्वलं वायुरव्ययम् ॥ ८
निवेशयामास ततस्सन्निधौ षण्मुखस्य हि । रथस्यानयनं श्रुत्वा वीरबाहुमुखाद्गुहः ॥ ९
अवरुह्यासनात् सैंहादारुरोह रथं क्षणात् । विष्णुब्रह्ममुखान् देवानारोपयामास वै प्रभुः ॥ १०
स्वं स्वं यानमथारोढु तारकारिः क्षणादिव । ततश्चचोदितास्तेन ते सर्वे यानमास्थिताः ॥ ११
हंसं ब्रह्मा हरिस्तार्क्ष्यं विमानन्तु पुरन्दरः । सेनानां पतयश्चापि रथानारुह्य सुन्दरान् ॥ १२

वाहिनी द्विसहस्राणि भूतान्यपिच निर्ययुः । देवदुन्दुभयस्तत्र निनेदुस्ताडिता भृशम् ॥ १३
झल्लरी काहली मड्डु डिण्डिमाः पटहास्तथा । निर्जितमर्त्यांभोधि कल्लोलध्वनि संरवाः ॥ १४
विपञ्ची परिवादिन्यो वल्लक्यो रुद्रपूर्विकाः । शङ्खादयस्तथान्ये च चित्राणि निनेदुर्मधुरस्वराः ॥ १५
जगुः किन्नरगन्धर्वाः सिद्ध विद्याधरोरगाः । मङ्गलानि देवस्य देवसेनापतेस्तदा ॥ १६
पुष्पवृष्टिरभूत्तत्र सुगन्धाकृष्टषट्पदा । विष्णुब्रह्मादयो देवास्तस्य प्रभोस्तुष्टुवुर्नारदौ ॥ १७
पार्श्वस्थौ परमेशाङ्घ्रिपङ्कजस्य जितेन्द्रियौ । अट्टहासपरास्सर्वे प्रापुरम्भोनिधेस्तटम् ॥ १८
रथाश्वसेनापादोत्थ धूलिस्सर्वत्र चावृता । पतितांभोनिधौ भूयः पङ्किलत्वं समानयत् ॥ १९
सेनानां गमनात्तस्मिन् सयमूल सदारकः । एवमंभोनिधिं तीर्त्वा सेनाभिस्सह षण्मुखः ॥ २०
उत्तरद्वारपर्यन्त भूमिमाप पुरस्य सः । तदानीमेव करसा ब्रह्माविष्णुश्च तावुभौ ॥ २१
प्रणम्य दण्डवद्भूमौ स्कन्दमूचतुरानतौ । अथ देवादिदेवेश भक्तानामभयप्रद ॥ २२
नगरस्य त्वया स्वामिन् पापिनस्तत्पुर प्रभो । स्थित्वात्रैव रणे शीघ्रं मागतं तं हनिष्यसि ॥ २३
इति संप्रार्थितो देवैर्देवसेनापतिस्तदा । विश्वकर्माणमभ्यीक्ष्य कुरुष्व नगरं क्षणात् ॥ २४
इति प्राह यवश्वेतवच्छुभ्राख्यं निर्ममे किल । नानामण्टप संयुक्तं गोपुरैरभिशोभितम् ॥ २५
अनेकाश्चर्यसंयुक्तं स्कन्दमन्दिरमण्डितम् । नानावीथिस्थ वेश्मौघैरावृतं सुमनोहरम् ॥ २६
हेमभित्तिनिर्मितस्तथाच हेमकूटाचलमद्भुतम् । पद विधाय तद्रूप मायया स (तस्यमायान्तम्) व्यजिज्ञिपत् ॥ २७
हष्टैतन्नगरं स्कन्दस्समाख्यैनच जिज्ञिपनम् । स्वगृहद्वारमभ्येत्य रथादवरुरोह सः ॥ २८
सेनापतीनां प्रत्येकं निवेशं समकल्पयत् । तेषां नामानि यद्येह शृणुध्वं द्विजसत्तमाः ॥ २९
शुभ्रश्च मेघमालीच श्वेतशीर्षकरस्तथा । कपालिनामा बलवानप्रसिद्धाभिधोपरः ॥ ३०
चित्राङ्ग उज्वालतालूच घनभीमोप्रतामकाः । अप्रेमपिप्पलौनन्दि सेनौ प्रसन्नसंज्ञकः ॥ ३१
प्रह्लसेन. पद्मश्च कपालोदण्डदपत्रवी । तथा परिघनेमिश्च परोहुतपक्षो महान् ॥ ३२
पुष्पदन्तश्च बलयाग्रुग्रकारदरावपि । मतिजिरकेतुमालीच चक्रोम्यो महाकेशकः ॥ ३३
नदीपतिकलिङ्गीच घोरोप्यन्योच्युतोबलः । शान्तश्च चित्रसेनोन्यो भूरिनामा सुशीलकः ॥ ३४
माशयो मानवान् सिंहस्तथाचोत्तासिंहकः । उग्रदिष्टो ज्येष्ठश्च प्रचण्डश्च मतङ्गः ॥ ३५
चण्डी महाबलश्चैतो नीलकण्ठसुबाहुकः । अण्डामरण्यसपश्च कालवाहोपि विग्रहः ॥ ३६
सुमाय माथ नामानौ निकुम्भः कुम्भजापरौ । पालको विदितश्चैव दाम्रुतास्याभिधोपरः ॥ ३७
हयग्रीवापरो धीमानयुताक्षस्तथैवच । सहस्रबाहुसन्नश्च ख्यातोन्योऽलन्तसंज्ञया ॥ ३८
पाशमगढकेशीच सोमनामापरो महान् । वज्रमालीच चण्डोऽपि परस्त्वघ्रमुखोबली ॥ ३९
शामनन्दनामानौ तथाचान्यपसंज्ञकः । कथघमेघविजय विद्रुमादरा लिफोभृता: ॥ ४०
दण्डस्वामी महावीरौ कालपाशश्च निष्ठुरः । तथा दशमुखाख्योऽपि कुमुदो भानुनामकः ॥ ४१
मणिश्याहुरकालोऽपि हरिकेशाख्योऽपरः । धनञ्जयो परो नाम्ना ख्यातो वृषभरूपक. ॥ ४२
परदशुचिमुखो धीमानपरोऽमलकेशकः । सुवक्त्रपद्माशुन्मत्तो नन्दीतदन्यनोभवः ॥ ४३
वायुवेगो महाकेशास्तथान्योऽपि सहस्रपात् । मानुरूप पतङ्गेच गुह्यानीवायुमायपि ॥ ४४
तथा शीतसुनारीच सुमाली मालिनामकः । ज्वालाकेशाभिधश्चैवमग्रोपरस्तत्र हर्मी ॥ ४५
ततस्तु देवतैस्सर्वैस्तत्र विष्णुमुखेरपि । वीरैर्नवाधिपैश्चैव श्रेष्ठैस्ततश्च ऋषिभिर्वरैः ॥ ४६
स्तूयमानस्तोमरथे प्रविश्य स्वपुरं प्रभुः । प्रविष्टेद्भुताकारे सिंहासनवरे गुरु. ॥ ४७

अथ शूरं सुरर्षिर्नारदः प्राप्य शीघ्रतः । मम शुक्रस्तु भवतां गुरुः प्राणसखो भृशम् ॥ ४८
स्कन्दस्समागतोऽद्याथ युद्धायासुरनायक । तत्क्रमागतस्तस्मात् कुरु युद्धं भयं विना ॥ ४९
अस्तु ते विजयश्चेति करिष्यामि तपो भृशम् । इत्युक्त्वा शूरपद्मानं नारदः प्रययौ द्विजाः ॥ ५०
श्रुत्वैतद्वचनं शूरो नितरां क्रोधविह्वलः । क्वायात्र मारयेत्युक्त्वा घोराघोरावुभावपि ॥ ५१
युवामानयतं शीघ्रात् समुद्रं निकटं मम । इति प्राह वचश्चैतावब्धिमानयतां क्षणात् ॥ ५२
समुद्रराजं शूरस्तु प्राहस वचनं तदा । बालेनानेन भूतानि त्वया किं मोचितान्यहो ॥ ५३
इति पृष्टस्समुद्रोऽपि शूरमाह तदाव्ययः । निग्रहीतुं मयाऽशक्यो बालोऽयममरेश्वरः ॥ ५४
अभयं पक्षतस्सोऽहं भूतानां मोचितः पुनः । इत्थं संश्रुत्य वचनं समुद्रस्यासुरेश्वरः ॥ ५५
कोपमाप भृशं विप्राश्चाप्यमुष्यं प्रतिचान्तरे । तदानीमागता दूता ज्ञात्वा सर्वं तदन्तिकम् ॥ ५६
प्रोचुश्च वचनं शूरं वीक्ष्य सिंहासनस्थितम् । शृणु शूर यथादृष्टमस्माभिस्तदतन्द्रितः ॥ ५७
स्कन्दोऽयं भूतसेनाभिस्तीर्त्वाब्धिश्च समागतः । हत्वा लंकापुरीं वीरबाहुना वीक्ष्यमर्दिताम् ॥ ५८
पुरस्योत्तर दिग्भागे तव दैत्याधिपाधुना । पुरमप्यद्विनिर्माय नानाश्चर्यसमन्वितम् ॥ ५९
वर्तते ब्रह्मविष्ण्विन्द्रैरावृतोऽत्रामरेश्वरः । सन्नद्धश्च रणायात्र त्वया साकमयं शिशुः ॥ ६०
एवं दूतवचः श्रुत्वा शूरपद्मा द्विजोत्तमाः । ज्वलन्निव तथा क्रोधवह्निना प्रेक्षितो भृशम् ॥ ६१
आनयामास दूतैस्तु भानुकोपं निजात्मजम् । भानुकोपस्तु तरसा बलैर्बहुभिरावृतः ॥ ६२
रथमारुह्य शूरस्य गृहद्वारं समागतः । अवरुह्य रथाच्छीघ्रमथायाय शूरसन्निधिम् ॥ ६३
प्रणनाम तदा तातमसुरेन्द्रं महाबलम् । शूरस्तमागतं प्रेक्ष्य वृत्तान्तं च व्यजिज्ञपत् ॥ ६४
श्रुत्वैतद्भानुकोपोऽपि जगाद वचनं तदा । गत्वाहमधुना तात जित्वा सर्वानिमान् क्षणात् ॥ ६५
बध्वा तं सहसेनाभिः प्रापयिष्यामि तेऽन्तिकम् । निशम्यैवं वचः प्रोक्तं स्वपुत्रेण तदाऽसुरः ॥ ६६
सन्तुष्टो विससर्जैनं रणायासुरनायकः ॥ ६७

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
वीरमाहेन्द्रकाण्डे सप्तमोऽध्यायः ॥
वीरमाहेन्द्रकाण्डस्समाप्तः ।



ஸ்ரீராமஜெயம்.

श्री महागुरुभ्यो नमः ॥ श्री विघ्नेश्वराय नमः ॥ अविघ्नमस्तु ॥

श्री शरवणोद्भवाय नमः ॥

# श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे

## ॥ युद्धकाण्ड प्रारम्भः ॥



षण्मुखं द्वादशभुजं त्रिपञ्चनयनपङ्कजम् । कुमारं सुकुमाराङ्गं केकीवाहनमाश्रये ॥

॥ अथ प्रथमोऽध्यायः ॥

ससैन्येन भानुकोपेन युद्धाय प्रस्थानम् ॥

भानुकोपस्तु निर्गत्य रथमारुह्य तत्क्षणात् । गत्वा गेहं स्वकं बध्वा कवचं वज्रनिष्ठुरम् ॥ १

तूणीरविलसत्पृष्ठभागः खड्गलसत्करः । अङ्गुलित्राणरमणीयांगुलीभिर्मनोहरः ॥ २

गोधाचर्मावृतरमीयमणिबद्धोत्तरस्थलः । तप्तजाम्बूनदोद्भासत्पीतांबरपरिष्कृतः ॥ ३

वीरपट्टावृतलसद्भासमानाभरणभूषितः । द्रोणप्रसूनव्यत्यस्तदामोद्दामप्रभाघनः ॥ ४

भूतसंमोहनाकारोपः करवालसत्करः । त्रिंशत्सहस्रतुरगावृतरथमध्ये स्थितः ॥ ५

छत्रचामरभृङ्गारकालाञ्च्यासकपाणिभिः । वीटी पेटीधरैरन्यैर्बहुभिः परिसेवितः ॥ ६

खड्गखेटधरैरन्यैरनेकैरावृतान्तिकः । निर्गतानेकशस्त्रौघैर्धृतकोटिरथानुगः ॥ ७

एवं तस्य सहसा यदा शूरात्मजो महान् । तदैव सेनापतयो निर्ययुर्धृष्ट - विक्रमाः ॥ ८

विजयो दुर्जयोऽप्येषां नेमिमायी महाबली । मुसली कण्टकस्तरः सूर्यांश्चाथ महौजसः ॥ ९

तथा दशमुखश्चापि मुनिलायो महाबलः । पिङ्गकेशः खड्गमुखा मटिपश्चोग्रबाहुकः ॥ १०

विष्णुसेनाविमोक्षोऽथ परो विजयसेनकः । सोमकश्च मधूच्छिष्टौ शक्तिजिष्णुर्निबन्धकौ ॥ ११

शनिश्च दुर्ल्यकेयादस्तथैवासुरसेनकः । तथा नियुतसंख्याका वाहिन्या दितिसंभवाः ॥ १२

तावत्संख्यारथाश्चैव निर्गताः किल शीघ्रतः । मृदुदुन्दुभिनिर्घोषा जितायुधिमहारथाः ॥ १३

अश्वानामारवास्तत्र करीणां बृंहितान्यपि । ध्वनयो रथचक्राणां घण्टानां करिणामपि ॥ १४

तुरङ्गकन्धरावद्धक्षुद्रघण्टारवा अपि । कम्पनं चैव सेनानां पांसवश्चार्कमावृताः ॥ १५

आवृताशेषदिग्भागाः संबभूवुस्तदा भृशम् । उद्दामगीर्भिरत्यन्तमुज्ज्वलैर्मार्गधैस्तदा ॥ १६

पठ्यमानस्वनामौघैरावृताश्वाश्चभूरयम् । संवर्ताब्धिनिभैस्तैश्च सैनिकैश्चाल दिक्तसत्तमाः ॥ १७

विज्ञाय सर्वमिदमस्य जितार्कवीर्यं दैत्यस्य निर्गमनमाशु विधातृमुख्यः ।
प्राणाधिकाङ्घ्रियमाप्तवेषसंघमावेदितुं सुरऋषिः किल मृत्युरेन्द्रः ॥ १८

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे प्रथमोऽध्यायः ॥

॥ अथ द्वितीयोऽध्यायः ॥

[श्री नारदेन स्कन्दनिकटे असुर युद्धोद्यम निवेदनम् ॥

आगत्य नारदस्स्कन्दं प्रणम्य परया मुदा । स्तुत्यं स्तोत्रवरैस्स्तुत्वा जगाद वचनं तदा ॥ १
उच्यतेऽयं मया स्वामिन् श्रूयतामधुना त्वया । सर्वज्ञेनापि देवेश क्षणमात्रं कृपावशात् ॥ २
भवदागमनं ज्ञात्वा शूरपद्मा निजात्मजम् । भानुकोपमिति ख्यातं जितभानुञ्च शैशवे ॥ ३
रणाय भवता दैव चोदयामास तं बली । निर्ययौ स महामायी महासंमोहकारकः ॥ ४
ब्रह्मविष्णु यमानसार्कं वरुणेनरणेऽजयत् । ब्रह्मास्त्रं ब्रह्मणो विष्णोश्चक्रं मुक्त्वाऽपद युधम् ॥ ५
पाशं प्रचेतसो दण्डं यमस्याप्यग्रहीद्बलात् । छेत्तुमर्हसि तं पापं भवानेव भयापहा ॥ ६
इत्युक्तिमस्य संश्रुत्य स्मितवक्त्रपयोरुहः । शाम्यं केसरी यद्वत् गजः केसरिणं यथा ॥ ७
गोमायुरिव शार्दूलं मायास्येव भवन्तिकम् । उक्त्वैवं सहसा स्कन्दो वीरबाहुं महाबलम् ॥ ८
पार्श्वस्थमग्रपीठस्थं गंभीरममितौजसम् । गत्वा त्वमधुना सद्यः पुरं पश्याश्व दुर्मतेः ॥ ९
अष्टाभिर्वैर्महावीरैर्लक्षसंख्यामितैस्तथा । सहस्रवाहिनीभिश्च वाहिनीभिः परिष्कृतः ॥ १०
निशम्य वचनं तस्य घोटमाशु निपात्यच । कृत्वा च तुमुलं युद्धं जित्वा तानसुराधमान् ॥ ११
पुनरागच्छ मेऽश्वाशं वीरबाहो महाशया । एवं नियोजितस्तेन वीरबाहुस्तदा द्विजाः ॥ १२
प्रतस्थे सहसा भीमो वीरलक्षणलक्षितः । कर्णकुण्डलसंयुक्तस्वर्णसूत्रलसत्कटिः ॥ १३
पद्मरागप्रभापुञ्जरमणीयोर्मिकाङ्गुलिः । हारकंकणकेयूरकिरीटसुमहच्छविः ॥ १४
गदां दधानो महतीं दण्डपाणिरिवान्तकः । शरजालावृतोद्भासस्तूणीराश्रयपार्श्वकः ॥ १५
चापं दधानस्सुमहत् पिनाकं शङ्करो यथा । खड्गकुन्तासिनिस्त्रिंशतोमराद्यायुधोज्वलः ॥ १६
मेरुमन्दरकैलासमहोच्छ्रायरथे स्थितः । शङ्खकाहळनिस्साणपटहाडम्बरारवः ॥ १७
वीज्यमानलसच्छुभ्रचामरद्युतिभूषितः । पताकावैजयन्तीभिर्लिखन्तीभिर्वसाहकान् ॥ १८
कदलीवनषण्डेन पर्वतेन्द्र इवोज्वलः । राकाशशाङ्कसदृशमुक्तातपत्रकः ॥ १९
वीणावेणुमृदङ्गादिधरैस्तुम्बुरुपार्श्वभूः । षड्भिर्विविधाप्रम्यान् गुण्यान् स्तान् वन्दिभिर्वृतः ॥ २०
इत्थं निशम्य प्रस्थानं तदा वीरा महौजसः । सेनान्यः शतशश्चापि रथानारुह्य निर्ययुः ॥ २१
सहस्रवाहिनीभूत संघोऽपिच तदाऽचलत् । सेनाश्वरथपादाता रवात्तत्यादर्पालयः ॥ २२
प्रस्थानं चक्रुरस्यैव पुराग्नु पुरो ययुः । तत्र केचित्समारूढाः धावतश्च परस्परम् ॥ २३
मण्डलाकारमभ्येत्य तत्रोत्प्लुत्य वेगतः । एवमापूरयन्सर्वे पुरोगा द्वारमस्य ते ॥ २४
तत्पूर्वमेव श्रुत्वैतद्भानुकोपस्ततो द्विजाः । यच्चैनं सरसा शूरनिकटे त्वसुरैर्वृतः ॥ २५
प्राघयिष्याम्यहं सत्यमित्युक्त्वा कोपविह्वलः । निर्ययौच पुरात्तूर्णमसुरैस्सुमहारथैः ॥ २६
ततोऽसुरा भूतसेनां दृष्ट्वा रणचरा इमे । को भार इति मत्वाभ्य चक्रुश्च किलिकिंचितम् ॥ २७
श्रुत्वैतद्भूतसेनापि कृत्वा रावं महाभयम् । उपर्युपर्यैव तदा गतास्तेषां हि पापिनाम् ॥ २८
ततस्सर्वेऽपि ते दैत्या ववृषुः किल भायकान् । आयुधानि तथाऽन्यानि भूतसेनासु निष्ठुराः ॥ २९
भूतान्यपि तदाच्छिन्नपाणिपादाङ्गकान्यहो । मूर्छितानि भुवि विप्रास्तच्छुत्यासहितानिहि ॥ ३०
ततः कोपेन भूतानि नानाधानैरमारयन् । अश्वानश्वैस्तद्रक्तस्य रथैश्चापिरथान् बहून् ॥ ३१
यमकुल्लाडयिरर्थैर्यमसुरैरसुरानपि । अतुरत्यन्तमुत्क्रोधाद्वहवश्च सदामृताः ॥ ३२
दृष्ट्वैतद्भानु कोपस्य सेनापतिषरोनलः । प्रेरयित्वा रथं शीघ्रादागतो भूतवाहिने ॥ ३३

धनुषा रथं समायोज्य ववर्षच शिलीमुखान् ॥ ३४

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे द्वितीयोऽध्यायः ॥

॥ अथ तृतीयोऽध्यायः ॥

माय भव्रमुखादीनां वधः

दुद्रुवुश्च ततोभूतसेनाश्चत्वारसमंततः । मुमुचुः कानिभूतानि सद्भ्याणताडितानिहि ॥ १
धीरुर्यैभद्भूतसेनान्यः पतिर्हिंसहाभिधोमहान् । दण्डमादाय हस्तेन दण्डपाणिरिवापरः ॥ २
ताडयित्वा रथायद्धतुरगानवरोम्भूतम् । ततोऽजलो धनुर्दृहं नदधैर्य रणांगणे ॥ ३
नजयेयं यदि तदेत्युपत्वाऽव्यर्वच्छरांस्तुतम् । सिंहस्तु तच्छरसोतो मध्येऽभिमुखमेत्यसः ॥ ४
रथमारुह्य तद्याशु चापमुत्पाट्यचाक्षिपत् । सोऽपिदण्ड समादाय महाभीमं त्वरायुतः ॥ ५
ताडयामास सिंहस्य शरीरे वज्रनिष्ठुरे । ततोऽजलं महाकोपाम्मुष्ट्या सन्ताड्य वक्षसि ॥ ६
संगृह्य पादावस्यार्थं भ्रामयित्वास्मपाणिना । आस्फालयन्महीपृष्ठे तत्तथा सोऽभवत्तदा ॥ ७
मृते तस्मिंस्ततश्चण्डदर्शीप्रमाथौ पुरागतः । वर्षन् शरसहस्राणि सिंहस्योपरिमागवद् ॥ ८
उपागतं तमभ्याशं सिंहो दण्ड मृतस्य सः । गृहीत्वा तरसा तेन ताडयामास वेगतः ॥ ९
सोऽपि दण्डं समादाय स्वकीयं समयत्नुधा । अताडयत्तथा सिंहमसुरेशो महाबलः ॥ १०
तौ तदान्योन्यदण्डाभ्यां ताडितौ पेततुर्भुवि । मूर्छितौ तु समीक्ष्याशु मायनीलावुभावपि ॥ ११
दैत्यभूतबलानांच पतीतावागतौ युधि । ततो नीलस्तकं दण्डं मायस्योपरिचाक्षिपत् ॥ १२
वेगेन ताडितो दैत्यः क्षण मूर्छामवाप्यच । त्यक्तमोहस्तु शूलेन तेन नीलमपोथयत् ॥ १३
भूतसेनापतिर्नीलस्सोऽपि मोहं गतस्तथा । मुक्त्वा मोह ततः कोपात् करेणास्फाल्यवक्षसि ॥ १४
करी तस्य निकेनाशु करेणाचम्य पृष्ठतः । दृष्ट्वा गळे तदीयंच सर्कैर्दन्तैश्चतुर्निष्ठुरैः ॥ १५
पीत्वा रक्तमयं नीलो मारयामास तं द्विजाः । मूर्छितौ यौ पुराचण्ड सिंहाख्यौ बलशालिनौ ॥ १६
धृतदण्डौ पुनर्धीरौ युयुधाते परस्परम् । परस्य ताडन कश्चित् सर्हेनैव रक्षति ॥ १७
क्रौक्षीकृत्य तदा पाद मूर्ध्नि संताडितु मनः । दधानैतस्य विज्ञाय युगोपाङ्घ्रस्तु ताडने ॥ १८
पुनर्हिंसदण्डवक्रं दण्डं संभ्राम्यव महाबलः । ताडयित्वापस्याशु दण्डं पृष्ठेचनवाहि ॥ १९
तथापि चण्डहिंसहेन युयुधे दण्डपाणिना । करेणैव निजेनायं ताडयित्वा पुन पुनः ॥ २०
सिंह कोपेन तस्याशु दण्डेनाताडयत्करम् । ताडनात्पतितस्सोऽपि शाखेव स तरो. क्षितौ ॥ २१
पतित स्फर चण्डस्समादायातिभैरवम् । क्ष्वेळाशब्देन महता जघानोरसि तस्य स. ॥ २२
ताडितो तं महाघोर पादेनाताडयत्परः । दृष्ट्वा खेचरादेवा वाचमूचुस्तदा द्विजः ॥ २३
भोभो सिंहासुरेशानो यमच जितवान् किम । मारयैन दुरात्मान महापापं महाबलम् । २४
इति संश्रुत्य देवानां वचनं भूतनायकः । पस्फालाशु करेणास्य कपोल हरिपद्मम ॥ २५
पपातास्फालनेनाय महां विगत चेतनः । प्राणानत्यजुमस्याशु विरपुर्द्भूतायमस्य द्रा ॥ २६
मनुजां माप्य सैंहीते समायर्यत्तदा खलु । तस्मिन् चित्राङ्गेपोम संप्राप्तेऽसुरो महान् ॥ २७
सिंहमुद्दिश्य च तदा निर्ययौ युमहारथ. । प्रज्वलद्दीप्तमाधान्त मधुनाम महाबलः ॥ २८

तस्मिन्नजमुखस्तूर्णं मुमुचुश्शर सन्ततिम् । शरांस्तथा गणय्यायं वटवृक्षं पुरस्स्थितम् ॥ २९
गृहीत्वोत्पाट्य तरसा रथे तस्यापतत्तदा । महता सिंहनादेन कंपयन्पृथिवीमिमाम् ॥ ३०
श्रुत्वा तस्य महारावं त्रस्तोऽभूदसुरस्तदा । मुक्त्वा करस्थितं चापं वेपमानाङ्गयष्टिकः ॥ ३१
दृष्ट्वैनमसुरं भीतं तदा प्राह मधुर्वचः । नशूरोऽसिच भीतोऽसि त्वं निवर्तस्व संप्रति ॥ ३२
इत्युक्त्वाजमुखं शीघ्रमवतीर्य रथाद्द्रुतम् । निरस्तवटवृक्षस्सन्निर्ययौ शिबिरं प्रति ॥ ३३
चलत्येवमसौ तस्मिन्नसुरश्शोकविह्वलः । धिग्जीवितं ममेदानीं वजितारेर्मृधे बलात् ॥ ३४
जीवनान्निधनश्चैव वरमेतद्वयास्यहि । इति संचिन्त्य मनसा दैत्यो योद्धुं मतिं दधत् ॥ ३५
नाहमस्मीति वेगेन महता कम्पयन्नथ । अभिदुद्रावतं शीघ्रमर्पयन्मार्गणान्बहून् ॥ ३६
समायान्तं पुनर्दैत्यं विहस्याथमधुर्बली । मोघांश्चकार सर्वांस्तान् करेणैव निरायुधः ॥ ३७
मुक्तान् पुनः पुनश्चापि दुर्धर्षः सायकांस्तदा । पुनः कोपेन महता रथं संगृह्य पाणिना ॥ ३८
भ्रामयित्वांबुधौ तस्य क्षेपयामास साश्वकम् । तदानीमेव तरसा पतितश्चाऽथ महीतले ॥ ३९
हस्तमुष्टिकरेणाथ ताडयामास वक्षसि । सोऽपि दैत्यं भुजेनैव मधुः परिघरोपिणा ॥ ४०
अताडयच्छूरं कोपाद् वज्रिणेव गिरिं हरिः । केशाकेशि तथा बाहू बाहव्येव महाबली ॥ ४१
पतित्वा भूतले भूयश्चोत्थितौ मल्लमार्गतः । युयुधाते तदात्यन्तं अजयश्च मधू द्विजाः ॥ ४२
छद्ममार्गं समारोप्य पतित्वायं स्वयं भुवि । अविक्षेपाय पादाभ्यां मधुर्यावत्पयोधरम् ॥ ४३
पतितोऽयं महीपृष्ठे शीघ्रमेवोत्थितस्तदा । महस्यायं क्रुधाभ्येत्य तात्वयोरभ्यास्य (रक्षस्य) पाणिना ।
छद्मरक्तमायपाऽमुञ्चदीरिणं चक्रमुज्ज्वलम् । निरायुधं समभ्येत्य दृष्ट्वा तत् पुनरेत्य च ॥ ४५
प्रवृत्तः कण्ठमेवास्य छित्वा शीर्षं गतं द्विजाः । स्वायुधेनैव बलवान्ममारायं यदाऽसुरः ॥ [illegible]
तदा संभूय सर्वेऽपि दैत्यसेनाधिपा द्रुतम् । समापत्य मृधे बाणान्ववर्षुर्भूतसंहतौ ॥ ४७
स्तनद्भर्मीबुवाष्ट्रीरिवस्थूलाश्मसमंततः । दुद्रुवुश्च तदा भूतसेनाः खस्ता हतास्ततः ॥ ४८
तान् सर्वानसुरानेको दण्डकश्चण्डदण्डकः । नियुतोद्गरशीरेषु वार्यरीन् सुमहायुधः ॥ ४९
अभ्येत्याद्रावयद्बाणैर्गोपालो गोव्रजं यथा । विद्धास्तद्बाणजालेन दैत्यास्तु पदशो मृताः ॥ ५०
छिन्नांघ्रिपाणिकवचमणिबन्धकलेवराः । मृता इवाक्षिण्वी केचिदुन्मीलय पतिता भुवि ॥ ५१
प्रादुद्रुवुस्तथा केचिच्छिन्न कर्णास नासिकाः । हाहाशब्दश्च सुमहानभूदंभोधिनिस्स्वनः ॥ ५२
दृष्ट्वैतद्भानुकोपस्तु महता क्रोधवह्निना । दृष्ट्वाधर्षं विजं दैत्यो गुणेन धनुरानमत् ॥ ५३
योजयित्वा क्षणेनैव भयाद्र समुपेक्षितम् । वाहिनी द्विसहस्रेण दैत्याश्चात्र मृताः किल ॥ ५४
अधावश्चापरे अस्ताच्छिन्नभिन्न शरीरिणः । सहस्रवाहिनी संख्या पतन्ते दितिजाः किल ॥ ५५
तस्मादहमसुं युद्धे विजेष्यामि ध्रुवं बलैः । नोचेच्छूरस्य पुत्रो नेत्युक्त्वायं रणभैरवः ॥ ५६
चोदनेचरथस्याशु भेरवित्वाततसारथिम् । आस्फाल्य धनुषो ज्यां च धृतलक्षकमुष्टिकः ॥ ५७
ध्वनयन्धर्मकालस्य मेघसन्ततिवद्भृशम् । ववर्ष शरवर्षांसि भूतसेनासु निष्ठुरः ॥ ५८
सेनास्ताश्च तदावृक्षान् पर्वतान्महतीश्शिलाः । आयुधान्यतिघोराणि महाराथविभीषणाः ॥ ५९
चिक्षिपुस्सहसा सर्वान् भानुकोपं प्रतिद्विजाः । तानि सर्वाणि सहसा भानुकोपो महाबलः ॥ ६०
मुक्त्वा कोटिशरांस्तीक्ष्णांस्त्रेणुतामनयत् क्षुधा । पुनश्च भूत सेनासु कोटिं बाणाननेकशः ॥ ६१
योजयामास वेगेन मण्डलीकृतकार्मुकः । मुक्तास्तेन शराश्शीघ्रं गरुडा इव रंहसा ॥ ६२

उच्छिद्य पाणिपादादीन् भूतानां निर्गतास्तदा । पुनश्च साट्टहासेन शतशोऽथ सहस्रशः ॥ ६३
ववर्ष मार्गणांस्तीक्ष्णाञ्छिद्राघे मेघवज्जलम् । भूतसेनास्तदाऽत्यन्तं छिन्नभिन्नांगयष्टयः ॥ ६४
अपलायन्तवित्रस्तास्त्वरयन्तो रणकाङ्क्षिणीम् । पराभवं तदा वीक्ष्य भूतानां धावतां द्रुतम् ॥ ६५
आजगामाति वेगेन रणमुग्रो महाबलः । भ्रामयन्भीषणं दण्डं घ्नन्यक्ष महारयम् ॥ ६६
तस्य वर्मणि दैत्यस्तु फलवान् कोटिकोटिशः । तत्याज सुमहाटोपो नदन्नद्भुत विक्रमः ॥ ६७
अकरोत्तानयं शीघ्रं दण्डेनाताड्य निष्फलान् । दण्डमादाय तरसा दैत्यराडक्षिपत् पुनः ॥ ६८
ताडयित्वा समभ्याशु खड्गेन वृथाऽकरोत् । पुनस्तु भानुकोपस्य सरथांस्तुरगानयम् ॥
मारयामास दण्डेन परस्योग्रो महाबलः ॥ ६९

भग्ने रथे तु महता बलशालिनैवमुग्रेण दैत्य तिमिरावलि भास्करेण ।
आरुह्य शीघ्रमपरं रथमुज्ज्वलाभं आगाद्रणं दितिसुतेषु परो द्विजेन्द्राः ॥ ७०

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे तृतीयोऽध्यायः ॥

---

॥ अथ चतुर्थोऽध्यायः ॥

भानुकोपेन गणाधिपैस्सह युद्धम् ॥

ततस्तु निशितान् बाणान् भानुकोपो महाक्रुधा । मुक्त्वा वह्नेः परस्याशु दण्डं धूलीचकार हि ॥ १
ववर्ष निशितान् भूयो मार्गणांस्तत्कलेवरे । तानयं तु करेणैव ताड्य मोघांश्चकार च ॥ २
पुनश्चाश्मैस्य बलवानाभिमुख्येन मार्गणान् । वर्ही मीनध्वजादाय भानुकोपेन तद्रथम् ॥ ३
अर्कमण्डलपर्यन्तमक्षिपद्गुणभैरवः । रथेनाभ्यागतं वीक्ष्य रविर्भीतस्तदा भृशम् ॥ ४
आयाति भानुकोपोऽयं अपराधं ममास्ति किम् । इत्याकुलेन मनसा यदा वै ददृशे द्विजाः ॥ ५
तदैव न्यपतद्भूयो मह्यां मन्मथोऽसुरः । उत्थाय च पुनः शीघ्रमुग्रं सन्ताड्य वक्षसि ॥ ६
अचिक्षिपत वेगेन पादौ संगृह्य सोऽम्बरे । सत्यलोकावधि तदा गत्वायं भूयसा क्षणात् ॥ ७
यदा निसृतः पुण्यस्य क्षयादिव च पुण्यकृत् । योजितस्तु तदा शक्त्या ब्रह्मणा मुक्तया पुनः ॥ ८
पतन् भुवि समापाशु मोहमुग्रोऽद्रिराडिव । तस्मिंस्तु पतिते दण्डी महावीरो महागिरिम् ॥ ९
उत्पाट्य सुमहारावो निरासासुरवर्ष्मणि । तं सहस्रशरान्मुक्त्वा शतधा सोऽच्छिनत् क्षणात् ॥ १०
रसाल वृक्षमादाय पुनश्च पुरतः स्थितम् । सारथिं ताडयित्वास्य हयांश्च समभारयत् ॥ ११
ततस्तु भानुकोपोऽयं मन्युनाच ज्वलन्निव । सहस्राणां दश तदा निशितानाशुगान् क्षणात् ॥ १२
ववर्ष निटिले तस्य गर्जयन्मेघवत् भृशम् । मुमोह समहीं प्राप्य तच्छरैस्ताडितो बली ॥ १३
तस्य तत्पतनं ज्ञात्वा पिनाकी शीघ्रमागतः । आस्फाल्योरं स्वकं गोत्रं प्रसार्यत्नकरी बलात् ॥ १४
प्रचक्रमे यदा क्षेप्तुं भानुकोपं प्रतिद्विजाः । तत्पूर्वमेव तस्यायं वक्षस्त्राणि रंहसा ॥ १५
सहस्राणि रणे भीमो मुञ्चतिस्म पिनाकिनः । तानि सर्वाणि तस्याशु वक्षो भित्वाच निर्ययुः ॥ १६
पपात समहीपृष्ठे हरिणेव महीधरः । ततस्सर्वाण्यपि भूतानि सर्वे सेनाधिपा अपि ॥ १७
भित्वा पर्वतान् वृक्षान् गण्डशैल गदा अपि । महता कन्दनेनापि निर्जितांबुधि निस्वनाः ॥ १८
अवर्षयस्य वेगेन भानुकोपे तदा भृशम् । भानुकोपस्तु तान्सर्वान् बान्मुक्त्वाऽऽशुगान् द्रुतम् ॥

उच्छिद्य भूमौ सस्तार महाबल पराक्रमः । पुनश्च मार्गणान्मुक्त्वा द्रावयामास तानयम् ॥ २०
पलायितेषु सर्वेषु बलेष्वथ महाबलः । अराण्ड रुद्रदण्डाख्य निरञ्जन कपालकाः ॥ २१
तथाण्ड लोचनाद्याश्च लक्ष्मीवास्तदा ययुः । ते सर्वे सुकुमाराङ्गाः सर्वाभरण भूषिताः ॥ २२
सर्वलक्षण संपन्ना धनुर्वेदशास्त्र विशारदाः । एकदैव ज्यया सार्धं योजयित्वा धनूंषिच ॥ २३
पद्मस्या स्तोरुन् विनिक्षिप्य रथेष्वालीढ मार्गतः । हतज्या स्फालनादेव गुणस्थशरपुंखकाः ॥ २४
यवपुंखशरजालानि साट्टहासास्तदाऽसुरे । तेषु कान्यस्य गात्रं च प्रविष्टा निर्गतानिहि ॥ २५
कानिचिच्च शरान्मुक्त्वा सोऽपि चिच्छेद शीघ्रतः । पुनश्च सोऽसुरः कोपात् सहस्रगणितान् शरान् ॥ २६
कोट्या मुमोच तान्सर्वान् लक्ष्मीशस्य महाबलः । तानेते सहसा चैतत् सहस्रशोऽधिकान् शरान् ॥ २७
मुक्त्वा न्यवर्तयन् भूयस्तऽन्तिकमहो द्विजाः । पुनश्च भानुकोपस्तु सायकानयनिर्मितान् ॥ २८
अनेककोटि संख्याकान्मुक्त्वाऽमितपराक्रमः । कार्मुकाण्यपि तेषां तु क्षोदयामास शीघ्रतः ॥ २९
पुनश्च वीरास्सर्वे ते शरानन्यान्धनूंषिच । समादाय जवेनैव यवपुंखसुरे तदा ॥ ३०
तेन मुक्तान् शरांश्चाशु चिच्छिदुस्समहोद्यमाः । तथा रथे तदीये ते सहस्रगणितान्शरान् ॥ ३१
शतानि चतुरंगेषु ध्वजेषु च तथा बहून् । सारथौ च सहस्राणि मुक्त्वा तान्नयमहीम् ॥ ३२
भानुकोपो महाकोप प्रज्वलितमानसः । महान्तं रथमारुह्य पुनश्चान्यं महाबलः ॥ ३३
सत्यजत्तेषु वीरेषु शतानिच शतानिच । सहस्राणां सहस्राणि नाराचानतुलान् छिताम् ॥ ३४
तैस्तदा वृषसर्वांगास्सर्वे कण्टकिता [illegible] । अभवन् विगतोत्साहास्सर्वदाक्षसुतागणाः ॥ [illegible]
तादृशांस्तान्समीक्ष्याशु वीरसिंहाभिधो महान् । रणकोलाहलारावो वर्धयन्नागतोऽपि तदा ॥ ३६
जवेनागान्महाभीमो वीरवासव भूतलम् । तानि सर्वाणि तरसा भानुकोपो युधिष्ठिरः ॥ ३७
धूलीचकार याणानां सहस्रशतकोटिभिः । यत्नाशानि सहस्राणि पुनः क्रुद्धोऽस्यसोऽसृजत् ॥ ३८
छित्वायं तानि वेगेन सहस्रगणितैश्शरैः । वीरसिंहोऽस्य वक्षश्च पूरयामास कोपतः ॥ ३९
भानुकोपोऽपि तस्याशु सायकैस्ताडितो भृशम् । ग्लानिमाप तदाऽत्यन्तं रक्तधारा परिप्लुतः ॥ ४०
क्षणेनैव तत्क्षत्रमलं नारायणस्य सः । असुरस्तं प्रतिक्रुद्धो मारकं सकलद्विषाम् ॥ ४१
प्रकाशयत्सकलं तु दिशो दश महाजवात् । प्रत्यस्यैकैकधा भिन्नं सर्वव्यामोहकं द्रुतम् ॥ ४२
महता शब्द जालेन पूरितादि गुहान्तरम् । प्रलयेव यदा कर्तुं वीरसिंहः प्रचक्रमे ॥ ४३
तदा हदिति तं भूमावुपरि भित्वाप्यपातयत् । ततस्तु वीरमार्ताण्डो दृष्ट्वा क्रोध विह्वलः ॥ ४४
किंकिणीं धनुषोऽग्रतां योजयित्वा समाययत् । समायत्स्वयमिन्द्रोऽस्य दूरेणासुरसत्तमः ॥ ४५
कलंबान् प्रेरयित्वाशु ज्यां चापं तस्य सोऽच्छिनत् । ललाटेऽपिच तावत्तु शस्त्राण्यस्यासृजत् द्विजाः ॥ ४६
पुनश्च कार्मुकं चापत्कालेनाप महोद्यतम् । योक्तुं ज्ययाऽऽरभद्धीमान् भानुनाशस्तदाप्ययम् ॥ ४७
रथं तुरङ्गमान्सर्वान्भानुकोपो महाबलः । वीरमार्ताण्डकस्याशु पातयामास भूतले ॥ ४८
पुनरस्त्रशस्त्राणि वक्षस्यस्य युयोज सः । ततोऽभवत्तदा वीरमार्ताण्डस्समहारवः ॥ ४९
उत्थाय स्वरयाचास्य वक्षोमध्ये पपातहि । भञ्जयित्वाशु तच्चापं क्षिपतिस्म महीतले ॥ ५०
ससंभ्रमं तदा दैत्यः करवालं कटिस्थितम् । कोशादुद्धृत्य तरसा क्रोडे तस्य प्रवेशयत् ॥ ५१
जग्राहच यदा भीमं रक्तधारा तदा भृशम् । विपपात महद्दुःख वक्षोमध्ये द्विजोत्तमाः ॥ ५२
तदाभी वीरमार्ताण्डः खड्गं स्वं परिगृह्य च । योजयामास तस्याशु वक्षस्यत्यन्तमुत्क्रुधा ॥ ५३

घोरबाणं तदाच्छिन्नमेतेनासीत्तु निष्फलम् । दैत्यस्तु पुनरुत्थाय निटिले शरं योजयत् ॥ ५४
करवालं महाकोपात् पातयामास तं भुवि । प्रतापे सहसा वीरराक्षसो नाम दुर्जयः ॥ ५५
आगत्य समहावीरस्तत्क्षणास्त्राण्यमोचयत् । तानि सर्वाणि दैत्येशो मुक्त्वाशस्त्राण्यनेकशः ॥ ५६
शतशस्तदाक्षवेधाशरेणावृतदिङ्मुखः । शतैस्तु सारथिं तस्य शरैर्मारयति स्म हि ॥ ५७
स्थाप्य सूतं पुनश्चान्य क्षणादेव महाबलः । सहस्रैर्निशितैर्बाणैर्मकुटं तस्य योज्ज्वलम् ॥ ५८
अपातयत्तदाक्षोण्यां वीरराक्षस संज्ञकः । त्रपया भानुकोपस्तु कोटीरं पुनरुज्ज्वलम् ॥ ५९
निधाय मौलौ बलवान् कोपाग्नि ज्वलितो भृशम् । चिच्छेद चापं तस्याथ सहस्रैर्निशितैः शरैः ॥ ६०
कार्मुकन्तु यदाऽऽदात्तु प्रवृत्तस्तरसा बली । तदैव भानुकोपोऽस्य रथं मुक्त्वाशरान् बहून् ॥ ६१
चिच्छेदसमहादोपरवचलितदिङ्मुखः । क्षणादेव पुनश्चाथ रथमास्थाय सुन्दरम् ॥ ६२
योद्धुमाप यदा कोपात्प्रहासनस्वरः । तदैवचापं तस्याथ भानुकोपोऽच्छिनत्पुनः ॥ ६३
ततश्शक्तिं महाकोपात् तस्याश्च सुमहारथ । शरैश्शतैस्सनिशितैरुर्वीं सामपिक्षणात् ॥ ६४
भयतश्च त्वरापूर्णं राक्षसो वीरपूर्वकः । रथेन साकं दैत्य तुनोदोर्वीतलस्थले ॥ ६५
निर्गत्य शीघ्रमाकाशे रथे स्थित्वा महासुरः । अट्टहासं निनादेन पूरयन्सकलादिशः ॥ ६६
मुमोच शक्तिं तस्याथ निशितां वज्रसन्निभाम् । पतनाथ महाशक्तिर्मोहमाप क्षितिगतः ॥ ६७
वीरान्तको वीरमहेश्वरश्च विनिर्गतः वीरपुरन्दरेण । महाबलैर्वीरमहेन्द्रवीर धीरौ तदा वीक्ष्य तवस्य विप्राः ॥

इति श्रीस्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे चतुर्थोऽध्याय ॥

---

॥ अथ पञ्चमोऽध्यायः ॥

वीरबाहुना भानुकोपस्य मूर्छोत्पादनम् ॥

प्रस्थिताश्च महावीरास्सर्वे कार्मुकपाणयः । घनाघना इव तदा महारावविभीषणाः ॥ १
वर्षन्तश्शरजालानि भानुकोपमभिद्रुताः । स्यन्दनं भानुकोपोऽपि नानालंकार मण्डितम् ॥ २
अधिष्ठाय पुनश्चान्य धर्षयन्तु शरान् बहून् । युद्ध तदाऽभवत्तेषां सुरासुरमहीभुजाम् ॥ ३
अदृष्टपूर्वमद्भुतं लोकानामतिभैरवम् । तदाऽसुरशरैर्विद्धावुभौ भग्नमनोरथौ ॥ ४
चापौ भग्नौ प्रासादेको मूर्छां तदाप हि । दृष्ट्वैवदासुरी सेना मृतानां गतचेतसाम् ॥ ५
आजगाम महावेगा महाराव विभीषणा । अट्टहासपरास्तत्र नानायुधशार्ङ्गपाणयः ॥ ६
खड्गखेटधराः वै चिद्रावयन्निवस समततः । एवं नदत्सुसर्वेषु दैत्येषु च तदा क्षणात् ॥ ७
महाबाहुर्महावीरो वीरबाहुर्विनिर्गतः । पठन् विविधवेदान्त गुहस्तोत्र परान्तरः ॥ ८
गुहाशयं गुहं ध्यायन् हृत्स्थितामोदहस्य सः । सुदृढं चापमादाय पिनाकमिव शङ्करः ॥ ९
दासस्तति संभूत्यै चापे मौर्वीं तदाऽयुनक् । आस्फालयच्च ता मौर्वीं सपक्षोति विभीषणाम् ॥ १०
तदा समभवद्घोरो निनादः पूरयन् दिशः । ब्रह्माण्डसुषिरं तद्गिरीणाञ्च गुहान्तरम् ॥ ११
अकाण्डेऽण्डं स्फुटितेषां ब्रह्मणोऽतिभयप्रदः । कल्लोलानां रवो वा स्यात् प्रलयांभोनिधेरिव ॥ १२
एवमुत्प्रेक्षितो नाना प्रकारेणच मानवैः । तादृशं च महारावं श्रुत्वा व्याघ्रभिया मृगाः ॥ १३

व्याघ्रा गजाश्च सिंहस्य रथयानस्य भीषणम् । शरभस्य रथोऽयं किमिति पञ्चानना मपि ॥ १४
स्वकभूभृद्गुहावासा दुद्रुवुः परितो दिशः । चकार भानुकोपोऽपि शिञ्जिन्यास्फालनं तदा ॥ १५
तदारावोऽभवच्चण्ड सर्वाब्धिक्षोभकः परः । ततस्तु भानुकोपस्तं वीरबाहुं महाबलम् ॥ १६
नयशास्त्रं नमधुरिमिसयुद्धो बलसिद्धये । दूतस्य कस्यचित्कोवा गर्वस्तादृशस्तव ॥ १७
मायावशेन पूर्वं त्वं मारयित्वाऽसुरान् गतः । दूतबुद्ध्याद्धाऽहं त्वां मुक्तवानस्मि सत्यतः ॥ १८
यद्यधुना बलं स्वस्य द्रावितं मारितं मया । जित्वा त्वामाहवे शीघ्रं सर्वान्देवांस्त्वदीयकान् ॥ १९
महच्छृङ्खलिकाबद्धान् करिष्यामि न संशयः । इति ब्रुवन्तं तं प्रेक्ष्य वीरबाहुर्वचोऽब्रवीत् ॥ २०
किमुक्तं तेऽधुना दैत्य पण्डितं मानिना त्वया । योद्धुमभ्यागतं दूतं न तथा वक्तुमर्हसि ॥ २१
दूते नास्ति बलं शौर्यमिति कस्य विनिश्चयः । मुक्त्वाऽभिमानं तस्मात्त्वं कुरु युद्धं मया सह ॥ २२
इत्थं वदति दैत्येशे वीरबाहौ महाबले । भानुकोपस्तु कोपेन दशास्त्राणि मुमोच हि ॥ २३
सोऽपि मुक्त्वा दश शरान् बिभेदैतानि देवपः । शतसंख्याशुगान् दैत्यो विससर्ज पुनः क्रुधा ॥ २४
तावद्बाणान्विमुच्याथ तानप्याच्छिनदुज्ज्वलम् । पुनश्च पत्रिणो दैत्यस्सहस्राणि जहौ तदा ॥ २५
वीरबाहुस्तु तान् छित्वा सहस्रैरेव कोपतः । तस्मिन्भूयस्सहस्राणि दशास्त्राण्यसृजत्सुरः ॥ २६
दशसिरससहस्राणां छित्वातानसुरारिः । भानुकोपोऽप्ययुतबाणान् लक्षसंख्यामितान्सुरे ॥ २७
तस्य लक्षशरैर्वीरबाहुः छित्वाशुगान्मृधा । दशलक्षखगान् दैत्ये प्राहिणोत्स महारयान् ॥ २८
तावत्संख्यान् विमुच्याथ दैत्यश्छित्वाशुगानपि । शतलक्षशराणां तु गुणेऽदासीन् महाक्रुधा ॥ २९
तावत्संख्यैश्शरैस्तस्य तान् हत्वा देवनायकः । पुनश्चशतसहस्राणि कोट्या तत्याज तं प्रति ॥ ३०
छित्वा तावच्छरैर्बाणानसुरो देवपोज्झितान् । कल्पान्तघनवद्भूयो ववर्ष सुबहून् शरान् ॥ ३१
वीरबाहुरपि क्रोधादट्टहासपरो भृशम् । मुमोच शस्त्रवर्षाणि महार्णवसमेऽभवत् ॥ ३२
तदा तयोस्समभवद्युद्धे विचित्रं दुर्दिनम् । रणव्यापृतगुणारावगर्जनातिभयप्रदम् ॥ ३३
शरजालप्रभापुञ्जस्फुरत्सौदामिनीवृतम् । शुक्लापाङ्गदिगन्तर्कपाम्पन्दातिवृष्टिव ॥ ३४
शिलीमुखनदीमध्यभ्रमच्चक्रयपर्वतम् । निर्यद्बाणप्रभावेन ध्वस्तचक्रं परस्परम् ॥ ३५
निष्कासद्युतिसच्छत्र फेनराजिविराजितम् । अनिमेषैरपि तदा सनिमेषतयेक्षितम् ॥ ३६
प्रवृत्ते दुर्दिने चैवं भानुकोपस्तदा शरैः । वीरबाहुविमुक्तानि छित्वास्त्राणि बहून्यपि ॥ ३७
पुनर्दशशराग्मुक्त्वा भञ्जयित्वाशु तद्धनुः । चकार सुमहारावं घर्मकाले पयोदवत् ॥ ३८
वीरबाहुस्ततश्चापं गृहीत्वान्यन्महोन्नतम् । प्रेरयित्वाशुगानाशु भञ्जयामास तद्धनुः ॥ ३९
असुरस्तु अथान्द्र्यो गृहीत्वान्यन्महद्धनुः । अहताशास्य जालेन पूरयंश्च दिशोदश ॥ ४०
अवर्षन्निशितान्बाणान् सहस्राण्यस्य वक्षसि । ततः कोपेन वीराणां वीरोत्यन्तं ज्वलन्निव ॥ ४१
कोटीरं पातयामास बाणैस्सत्वरमासुरम् । अलंचकार दैत्यस्तु यदान्येनस्वकं शिरः ॥ ४२
तदैव कवचं तस्य चिच्छेदायं पुनश्शरैः । भानुकोपं तदा भानुवत्सद्वीक्ष्य तादृशम् ॥ ४३
ततोऽसुरो महाकोपाद्धनुरास्फाल्य निष्ठुरम् । ववर्ष वीरनिदिष्टे नाराचानां सहस्रकम् ॥ ४४
प्रोतांस्तत्र करेणाशु वीरबाहुस्समुत्क्षिपन् । शिञ्जिनीं ताडयित्वायं महारावं विभीषणः ॥ ४५
अट्टहासपरोऽत्यन्तं मुञ्चतिस्मास्य वक्षसि । सहस्राणि तथा वक्त्र दोस्सन्धि युगलेषु ॥ ४६
प्रतिस्थानं शराणां प्रळयाग्निरिवज्वलन् । तञ्छरैरग्निसंकाशैर्दह्यमानस्तदासुरः ॥ ४७

मुमोह धनुषः कोट्यां बाहुन्निक्षिप्य भूसुराः । मोहितेतु महापापे भानुकोपे दुरात्मनि ॥ ४८
प्रसूनराजीष्यद्वत् किंशुकामेध्यशोणितैः । ततस्ससंभ्रमं सर्वे दैत्यास्संभूय तं वृताः ॥ ४९
ववर्षुश्शर जालानि युगपत् घर्ममेघवत् । वीरबाहुस्तथाटोपरवघ्ननितदिङ्मुखः ॥ ५०
हृदिध्यायन् गुहं साक्षात् दैत्य संहार कारिणम् । सहस्रकोटि शस्त्राणि मुक्त्वा मुक्त्वा क्षणाद्यम् ॥ ५१
छित्वाऽसुरशरान्सर्वान् मीहारान् भानुवाकरैः । अनन्तकोटि गणितैरस्त्रैस्सर्वान् दिदेहसुतान् ॥ ५२
समारत्यथारुद्रस्त्रिपुरं लीलया द्विजाः । तदा शिरांसि दैत्यानां बाणजानि कानिचित् ॥ ५३
पेतुरब्धौ पराण्याशु पर्वतेषु सरित्सुच । द्वीपात् द्वीपं तथान्यानि यावद्ब्रह्मगतानिहि ॥ ५४
इतराण्यत्र भार्याणां अपतन्पुर एव च ॥ ५५

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे पञ्चमोऽध्यायः ॥

---

॥ अथ षष्ठोऽध्यायः ॥

श्री स्कन्देन भक्तरक्षणाय अमोघास्त्र प्रयोगः ॥

नष्टृष्ट्वा कबन्धानि भूयांस्युत्थाय भीषणम् । तदा समभवत्तेषां रक्तैरेव महानदी ॥ १
मांसकर्दमभूयिष्ठा केशशैवालिनी सुखाम् । मद्गच्छपलच्छत्र फेनपङ्क्तिपरिष्कृता ॥ २
लुठत्पन्नत्तकपुशुरपद्राजिपरीवृता । कीकसीघयूहपृष्ठुचिपेशीसंघसमाकुला ॥ ३
परिभ्रमच्छ्येनकाकबृहद्धरि भीषणा । सारमेयशिवामिश्र पिशिताकांक्षयावृता ॥ ४
प्रेतैः पिशाचैश्च तथा संकुला सर्वतो भृशम् । एवं सृताऽऽसुरीसेना वीरबाहुशराग्निना ॥ ५
ततो भूतानि सर्वाणि भूतसेनाधिपा अपि । मूर्छिताश्च पराघेतु मिलिताश्सर्वे पतते ॥ ६
नृत्यगानपरेष्वेषु हसत्स्वपि परस्परम् । सहसा भानुकोपस्तु त्यक्तमोहस्तदा द्विजाः ॥ ७
मृतां बहुप्रकारेण स्वकीयां वाहिनीं तथा । विशेषेण तथा देवसेनांतामपि जीवतीम् ॥ ८
नृत्तगानपरां वीक्ष्य विचिन्त्य मनसापिच । साकं मया युयुधिरे एते सर्वे पलायिताः ॥ ९
अयमेको महाशूरो मत्समोऽस्य पृथग्जनः । तमेनं घटिकामध्ये मारयिष्यामि सत्यतः ॥ १०
नोचेदग्निं गमिष्यामि सोऽहं चापधरोऽवहि । इति प्रतिज्ञां कृत्वाऽयं दैत्यसेनाधिपः क्रुधा ॥ ११
नदन्, घुर्णं तदा तूर्णं केसरीव महोन्नतः । ववर्ष शिशिरदशास्त्रान् सहस्राणि सुर्दपति ॥ १२
तावच्छरान् शस्त्रैस्तच्छरांश्छित्वाशु देवपः । पुनर्मुमोच बाणानां सहस्राणि तदाऽसुरे ॥ १३
तानि सर्वाणि दैत्यस्तु महाबल पराक्रमः । भित्वाशु निशितैर्बाणैस्सहस्रैः कोपविह्वलः ॥ १४
पुनर्दश सहस्राणि मुक्त्वा शस्त्राणि निष्ठुरः । सैन्धवान तद्रथावन्धान् सारथिं मृतिमानयत् ॥ १५
अथ भूताधिपः कोपाकृष्यमसुरथं तदा । भाग्ल विशितैर्बाणैर्द्विशतैर्द्विशतैर्द्विजाः ॥ १६
भासुरं रथमश्वांश्च सारथिं कार्मुकं तथा । भित्वा महीतले धीरो जुघोर समहाबलः ॥ १७
ततोऽसुरो रथं प्राप्य कार्मुकंच समुद्यतम् । पुनर्मुमोच चक्राण्यसिश्रस्त शतानिवै ॥ १८
देवपस्तु तदा खिन्नः किंचित्कोपसमाप्लुतः । चतुर्दशशरैस्तस्य धनुश्छित्वाशु निष्ठुरम् ॥ १९
महता सिंहनादेन कंपयन्दैत्यकुञ्जरम् । सहस्रैस्तु शरैर्भूयश्छित्वा क्षतेव तद्रथम् ॥ २०

तुरङ्गमानपि तथा पातयामास भूतले । पुनर्दशशतैर्बाणैर्वक्षस्यस्य बिभेद हि ॥ २१
यदा रथं पुनर्दैत्यस्त्वारुरोह महोद्यतम् । तदाथ देवसत्त्वस्य निपतं पृष्ठभागगम् ॥ २२
सहस्रैश्छिन्नदृग्बाणैर्भित्त्वा चाराशु वक्षसि । ततस्ससंभ्रमं दैत्यश्चिन्तयित्वातरां तदा ॥ २३
अशक्योऽयं हि धनुषा जेतुमाद्य माधवः । इति जग्राह मोहास्त्रं सर्वव्यामोहकारकम् ॥ २४
मनसा मन्त्रयित्वा तदमुञ्चद्भीषणं भृशम् । यस्मा विनिर्ययौ सार्धं तमःपटलमेचकम् ॥ २५
अन्धीकृतजनाध्यक्षं तद्दशाशावृतान्तरम् । महाभीतिप्रदं घोरं महामायाकरं परम् ॥ २६
मोहकं मोहकस्यापि भीषणं भीषणस्य च । तदा भूतानि सेनानां पतयस्सर्वे एव ते ॥ २७
स्वायुधानि च घोराणि क्षिपन्ति स्माशु तत्क्षणात् । अवगम्य महावेगाद्गगनस्थान्हि देवपः ॥ २८
किमिदं भीषणं घोरं निवार्यं वैनया मया । मायाऽपि शीघ्रं सर्वाणि शस्त्राण्युच्छिद्य रंहसा ॥ २९
एवं ससंभ्रमे वीक्ष्य व्यग्रचित्ते सुराधिपे । सहसा साकममुना सेनास्सर्वाश्च भूसुराः ॥ ३०
निपतन्मोहयामास तदस्त्रं वीरबाहुना । स्तंभा इव स्थितास्सर्वे भूतसेनाधिपा भटाः ॥ ३१
रथेषु रथिनस्तत्र भूतलेऽपि परेक्षणात् । स्वस्वायुधान्यवष्टभ्य निद्रामापुर्द्विजोत्तमाः ॥ ३२
बालेनापि भुजाक्षेतु पावका इव तदा स्थिताः । सन्तोषेण तदा तेषु भानुकोपश्शरान्बहून् ॥ ३३
मुक्त्वाशु रुधिराप्लुतान् अकरोत्तान्सुराधिपान् । ज्ञात्वैतत्सर्वभूतानां हृन्निवासो दयानिधिः ॥ ३४
कुमारस्सुकुमाराङ्गस्सच्चिदानन्दविग्रहः । हेमकूटपुरे स्वामी दिव्यसिंहासने स्थितः ॥ ३५
सेव्यमानस्सुरगणैः परितः पार्श्वे यतिभिः । निवृत्तये तदस्त्रस्य मोहनाशस्तथा प्रभुः ॥ ३६
अमोघास्त्रं महाघोरं मुमोच सहसा ज्वलत् । भासयत्सुतरामाशास्सर्वा भानुकरा इव ॥ ३७
प्रभापुञ्जेन महता वारयामास तद्द्रुतम् । स्वापादिवोत्थितास्सर्वे वीरबाहुमुखास्सुराः ॥ ३८
भूत सेनाधिपतयस्त्यक्तमोहाः क्षणाद् द्विजाः । अमोघास्त्रं तु मोहास्त्रं वारयित्वा गुहान्तिकम् ॥ ३९
ययावथ पतिसेनाशु रथेनैव तथा भृशम् । कल्पितांस्सहसा वीरास्सर्वे लज्जितमानसाः ॥ ४०
प्रत्यक्षेऽकुशलानां नो वीर्यं किं वा प्रवर्तते । कृपया षण्मुखस्यैते रक्षितास्सहसा वयम् ॥ ४१
इति स्तुत्वा गुहं सर्वे स्तोत्रैर्वेदानुगुम्फितैः । योद्धुं पुनर्दैत्यवरमुपचक्रमिरे क्रुधा ॥ ४२
हन्तुकामस्तदा वीरबाहुस्तं सहसाऽसुरम् । अस्त्रं पाशुपतं वेगादग्रहीदेयमायकः ॥ ४३
वीक्ष्य तद्दैत्यनाथोऽयं भयाविष्टमनास्तदा । गृहीत्वाऽश्रमयैतस्य प्रत्यक्षं नगतः खलु ॥ ४४
यायाऽतो नगरं शीघ्रं अस्त्रं पाशुपतं महत् । समादायागमिष्यामि योद्धुमेनं महाबलम् ॥ ४५
इति निश्चितचित्तोऽथ सूक्ष्मरूपेण शीघ्रतः । मुक्त्वा रथं पुरं प्राप नानादैत्यसमाकुलम् ॥ ४६
यावद्दैत्यवरांस्तत्र क्रीडतोऽक्षेण वेदिषु । ययौ वीक्ष्य स्वयं गेहं नानारत्नविचित्रितम् ॥ ४७
सुन्दरीभिर्मनोहारि गात्रयष्टिभिरावृतम् । कृतनानोपचारोऽपि नितरां खिन्नमानसः ॥ ४८
चिन्तयित्वा रुक्मायात्र न्यवसत्क्षुधया भृशम् । भूतानि सेनापतयश्चक्रुः कोलाहलारवम् ॥ ४९
ववर्षुः पुष्पवृष्टिं च देवा व्योम्नि स्थितास्तदा । देवदुन्दुभयस्तावद्विनेदुस्ताडिता भृशम् ॥ ५०
तदा प्रोचुश्च भूतानि वीरबाहुं महाबलम् । नेतव्यो दैत्यवर्योऽयं पुराद् वध्योऽत्र देवप ॥ ५१
एवं वादिषु भूतेषु वीरबाहुस्तदाऽवदत् । पलायितो रणे योधा कोधासौच पुनर्भटैः ॥ ५२
नाभिभाष्य इति प्राहुर्वृद्धास्सत्यार्थवेदिनः । आगतश्चेत्स्वयमयं संहरिष्याम्यसंशयम् ॥ ५३
एवमादिवचः श्रुत्वा भूतसेनाधिपास्तदा । प्रहृष्टमनसस्सर्वे प्रस्थितास्स्वपुरं प्रति ॥ ५४

अथ शासनात् सैंहास् सर्वदैत्यापहारकः । वायुं स्वसारथिं सूर्यं रथस्यानयने गुहः ॥ २७
प्रेरयित्वाथ सेनायमानीतेऽस्मिन्महारथे । ब्रह्मविष्णिवन्द्रपूर्वैश्च स्तूयमानपदांबुजः ॥ २८
विपञ्चीगानसंसक्तनारदादिनिषेवितः । इत्थं दण्डैश्च नृत्यद्भिरप्सरोभिरुपावृतः ॥ २९
भेरीकाहळनिस्साणझल्लरीमड्डुमर्दळैः । शंखयंत्रविपञ्चाद्यैर्मर्दितांभोधिसंरवैः ॥ ३०
गायद्भिः किन्नरवरैः पठद्भिर्वन्दिभिर्गुणान् । छत्रचामरसंसक्तकरैर्देववरैरपि ॥ ३१
कृतनानोपचारौघैरन्यैरप्यावृतान्तिकः । माहात्म्यमयं देवः प्रतस्थे सहसा द्विजाः ॥ ३२
प्रस्थिताश्च तदा वीरास्सह सेनाधिपैरपि । रथानारुह्य तरसा सर्वाभरणभूषिताः ॥ ३३
भूतानि तानि तरसा कृतक्ष्वेळारवाण्यपि । तदा समभवद्रेणुपुञ्जो व्याप्तदिवाकरः ॥ ३४
समस्तास्सहसा सर्वे प्रापुरायोधनस्थलम् । ततस्तु भूतसैन्यानि संभूतान्यासुरैर्भृशम् ॥ ३५
सदृशानिरिवांभोधिसंक्षोभैरतिपर्वतैस्तदा । मुमुचुश्चाथ भूतानि वृक्षानुत्पाट्य पर्वतान् ॥ ३६
तथा शिलाश्च महतीस्त्वरेषु सुरारिषु । तेऽपि दैत्यास्तदाऽत्यन्तं क्रुद्धा भूतेषु शीघ्रतः ॥ ३७
स्वायुधान्यतिघोराणि तत्यजुस्सुमहारवाः । पुनर्भूतानि तान् कोपादसुरैरसुरान्तकैः ॥ ३८
तुरंगमैस्सहस्रैश्च दृशाभिर्मत्तहस्तिनः । सहस्रशस्तुरगान्स्तुरगान्सुबहूनपि ॥ ३९
रथैर्गजैश्च दितिजानास्फाल्यास्फाल्यारोहणात् । समारयन् बहून् दैत्यान् करिणश्च तुरंगमान् ॥ ४०
उत्पाट्य पादौ संगृह्य तथा दैत्यास्तुरंगमान् । संभ्राम्य कांश्चित् भूपृष्ठे सन्ताड्यमृतिमानयन् ॥ ४१
मद्गुराश्च तदाशीघ्रं भूतैर्मुक्तान्महीरुहान् । पर्वतानायुधैश्छित्त्वा महासमरभीषणाः ॥ [illegible]
पुनश्च भूतसेनास्तु क्रुधया नानायुधान्यपि । चिच्छिदुः पाणिपादादीन् द्रावयामासुरप्यहो ॥ ४३
निर्गताश्च ततश्शीघ्रं भूतसेनाधिपाः क्रुधा । दण्डखड्गशरैस्तद्वदायुधैरसुमहारवाः ॥ ४४
मारयन्तो बहून् दैत्यान् द्रावयामासुरञ्जसा । संबभुस्तदा दैत्य बलरूपाणि बहून्यपि ॥ ४५
शोणितौघवहन्तीव समजायत वैनदी । वीक्ष्यैतदतिशूरस्तु वीरेषु सुमहाबलः ॥ ४६
निर्जगाम महाटोपरवपूरितदिङ्मुखः । आरोहितरथे भग्ने पुनरारोहणाय च ॥ ४७
अनुयातो रथैरन्यैर्द्विसहस्रैर्महोन्नतैः । दशसाहस्रतुरगैः युक्ते रथवरे स्थितः ॥ ४८
ववर्ष शरवृष्टीश्च घनवन्मेघवद् भृशम् । तादृशं तं महाशूरमुमो वीराधिपो महान् ॥ ४९
दण्डमुद्यम्य वेगेन ताडयामास वक्षसि । कवचञ्च तदा छित्त्वा प्रहारेणास्य वक्षसि ॥ ५०
अतिशूरः पुनः कोपाच्छरान् शतसहस्रकान् । मुक्त्वा कळेबरं तस्य रक्ताप्लुतं तदाऽकरोत् ॥ ५१
ततस्ससंभ्रमं भूतपतिः पर्वतमुन्नतम् । उद्धृत्य सुमहावेगाद्रथे तस्य नुनोद हि ॥ [illegible]
निपपातास्य पतनाच्छतधास महीतले । क्षणात्पुनर्दैत्यवरो रथमन्यं समुज्ज्वलम् ॥ ५३

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे सप्तमोऽध्यायः ॥

---

॥ अथ अष्टमोऽध्यायः ॥

सिंहवक्त्रपुत्रेण अतिशूरनाम्ना विसृष्टस्य पाशुपतस्य श्री शिवसमीप गमनम् ॥

द्राऽऽरुरोह वेगेन तदानीं तस्य वैरिणः । पादघातेन हतवान् अश्वान् श्वसनवेगिनः ॥ १
तच्छरशतं दैत्यो मुक्तवानमरेश्वरे । दण्डेन ताडयित्वा तानकरोच्च महारवम् ॥ २

तमस्पृष्ट्वा महाघोरं तदास्त्रीं ब्राह्मणोत्तमाः । द्विजाः— किमर्थं सूत भगवन् भवत्यं यत्र कुत्र चित् ॥
दैवतानांच सर्वेषामस्त्राणामधिराजकम् । अस्त्रं पाशुपतं घोरमस्पृष्ट्वैनं दुरासदम् ॥ ३८
एतं तद्ब्रूहि सर्वेश शंभोरस्यास्त्रमाश्रयः । इति पृष्टस्तु तानाह सूतस्सर्वार्थसारवित् ॥ ३९
शंभुनास्य यदा दत्तमस्त्रं पाशुपतं महत् । तदासुरं महादेवः प्राह वाचममुं खलु ॥ ४०
स्पृश्यस्वैतयदा यस्मिन् कस्मिंश्चिद्वा निरायुधे । भावास्यतीदमस्त्रं ममैवाशु तदाऽसुर ॥ ४१
तत्रैव गतं शंभोर्निकटं भूसुरा द्रुतम् ॥ ४२
वृथास्त्रं पाशुपतं तदस्त्रं वीक्ष्याविदूरे प्रमुखाश्च दैत्याः ।
विष्णुर्भृशं भगवन्मोर्यास्ते हाहेति सर्वे भयकंपिताङ्गाः ॥ ४३
भूतानि कोलाहलमाशु चक्रुः पुष्पाणि देवाश्च ववर्षुरुच्चैः ।
तदास्त्रिशूलस्तु रथं विमुच्य भुजंगमो दंडधरः प्रतस्थे ॥ ४४
इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकांडे अष्टमोऽध्यायः ॥

---

॥ अथ नवमोऽध्यायः ॥

तारकपुत्रस्य असुरेन्द्रनाम्नः वीरबाहुना वधः ॥

अथातिशूरः कोपेन महता प्रज्वलन्निव । सभ्राम्य पाणिना दण्डमुत्प्लुत्योत्प्लुत्य वेगतः ॥ १
इतस्ततश्च धावन् हि तानि तानि विचित्रयन् । आयुधानि च चूर्णानि वृथाभूतानि दैत्यराट् ॥ २
मोचयन् र्हुमहारावैस्तत्रैवभूतनायकम् । आगत्य सहसाऽभ्याश ताडयामास वक्षसि ॥ ३
तमेव दण्डं संगृह्य भूतसेनाधिपः क्रुधा । ताडयित्वा तथैवैतं मारयामास भूसुराः ॥ ४
मृतं तमेनं संवीक्ष्य भूतसेनास्तदा भृशम् । कोलाहलं महाभीमं चक्रुस्सर्वास्समुद्धताः ॥ ५
निरावदसुरेन्द्रोऽथ वर्षं वर्षं शरं शरम् । महता शब्दजालेन घनाघन इव क्षणात् ॥ ६
तमायान्तं महावेगात् दृष्ट्वा भूतानि दुद्रुवुः । ततस्थेऽभिमुखे तस्य कनकस्सहसा महान् ॥ ७
नदन् भृशं महावेगात् अश्वास्त्वा बलमस्य च । तस्य वर्षांसि दैत्यस्तु तदैक शरमत्यजत् ॥ ८
करेण ताडयित्वा तद्रथमारुह्य तस्य सः । हत्वा सन्ताड्य सूतंच दन्तैर्दष्ट्वाऽस्य शिंजिनीम् ॥ ९
भञ्जयामास कोपेन शतशः कनकस्तदा । विसूतः पुनरेवाशु महान्तं गिरिमुद्वहन् ॥ १०
भ्रामयित्वा सुमहता वेगेनापि नुनोद च । असुरस्तु समादाय धनुरन्यन्महोन्नतम् ॥ ११
अष्टभिर्निशितैश्शरैश्छित्त्वैनं धराधरम् । पुनस्सहस्रशस्त्राणि प्रेरयित्वा महाबलः ॥ १२
कनकं पातयामास भूमावसुरनायकः । पतितेऽस्मिंस्तदा दैत्यः परमाक्रम्य सारथिम् ॥ १३
द्रावयन्नागतश्शीघ्रं भूतसेनास्समन्ततः । तमायान्तं महाघोरं उन्मत्तो नाम देवपः ॥ १४
महान्तं गिरिमुत्पाट्य पाणिना पर्वतोपमः । भर्त्सयन्सुमहारावैः करी केसरिणं यथा ॥ १५
पातयित्वाऽस्य तुरगान्सारथमसौ बली । ततोऽसुरस्तमुद्वीक्ष्य महता कोपवह्निना ॥ १६
बाणान् बहून् विमुच्यैनं स्रवद्रुधिरमेदुरम् । अकरोन्मोहवशगममरेशं क्षणादयम् ॥ १७
निर्दयो सहसा मत्तस्तदोन्मत्तमवेक्ष्यतम् । स्फुरत्स्फुलिङ्गनयनो गृहीत्वा पर्वतं पृथुम् ॥ १८

॥ अथ दशमोऽध्यायः ॥

वीरबाहुना शूरपद्मस्य रथसारथि हननम् ॥

मृतं तं वीक्ष्य देवास्तु चक्रुः कोलाहलारवान् । पलायनपरा दैत्या जितास्सर्वे महाभयात् ॥ १
ततः प्रतस्थे शूराणां शूरपद्मावरो महान् । मृतावनुजपुत्रौ तावतिशूरासुरेन्द्रयोः ॥ २
पलायनञ्च दैत्यानां दशदिक्षु समीक्ष्य सः । प्रेरयित्वा रथं शीघ्रात् धनुरादाय निष्ठुरम् ॥ ३
अटन्यां योजयित्वा ज्यां हस्तलस्तकमुष्टिकः । अताडयत्करेणैतामकरोत् सातु निस्स्वनम् ॥ ४
किमर्थं ताडयस्येनां मामलंघितमस्थितिम् । तव भूयादिदं सद्यो दैत्याधम सत्यतः ॥ ५
शोचतीवैवमसुरनायकं शिञ्जिनीतदा । श्रुत्वा संरावमस्यास्तु सर्वे लोकाश्च कंपिरे ॥ ६
ब्रह्मविष्णुसुरेन्द्राद्या देवा विभ्युस्तदाभयन् । पलायनं श्रुताग्याहु भूताग्यामाभिरक्षकम् ॥ ७
अभूवतायमरायो जनैराह्वाङ्क्षान्द्रवम् । स्थित्वातु सेनापतयस्तदा सर्वे महौजसः ॥ ८
तत्समीगंगिरिभिश्शाखैरन्यैर्नानाविधायुधैः । युयुधुस्तास्तदानं क्षिप्त्वा क्षिप्त्वा महाजवैः ॥ ९
चकार रेणूं स्तान्सर्वान् दशभिर्निशितैश्शरैः । पुनश्च तैस्सहस्रैश्च कोटिभिर्दैत्यनायकः ॥ १०
मुक्त्वा शरान् बहून् भूयो बिभेदैषां वपूंष्यथ । तच्छरैः पीडिताः केचित् स्थिताः खिन्ना भृशं तदा ॥ ११
अलुठन् पतिता महाममरे रूप मानवाः । पलायन्त महोच्छ्वासाः परे सेनाधिपा द्विजाः ॥ १२
एवं पराभवं सर्वे नानारूपेण संगताः । ततस्सर्वेदोद्भूय स्सर्वे समागत्य रणस्थलम् ॥ १३
चतुर्भिर्निशितान् बाणान् असुरेशो महाबलः । भूयोऽभिरामाश्चैषां शरान् भित्वा महासुरः ॥ १४
सहस्रकोटि संख्याकैश्शरैश्चापरथानपि । धूलीकृत्य महाकोपाद्दर्पं निशितान् शरान् ॥ १५
वक्षांसि लक्षीशाद्यैर्वा शतसाहस्र संख्यकान् । ते सर्वे मुमुहुस्सद्यस्तच्छरैर्भिन्नवक्षसः ॥ १६
प्रस्थितो वीरमार्तण्डः पृषत्कान् सुबहूनयम् । वीरेषु भवत्सु श्रीमान्मुमोचासुरनायके । १७
छित्वा तानाशुगैर्दैत्यो बहुभिस्सुमहाबलः । सन्दधे निशिते तस्य सहस्राणि शरान् पुनः ॥ १८
सुराधिपस्तान् चिच्छेद सहस्रैरेव रंहसा । ततस्तु शूरपद्मायं सहस्रैर्निशितैश्शरैः ॥ १९
शरान् धनुश्च तूणीरमस्य छित्वा न्यपातयत् । मुक्त्वा पुनस्सहस्राणि पातयामास तं क्षितौ ॥ २०
अपाययौ महावीरो वीरराक्षस सेवकः । अत्यन्तश्च सहस्राणि शस्त्राण्यक्षिपमहासुरे । २१
सहस्रैश्छिन्नतस्य छित्वा तान्येव कार्मुकम् । पतित्वाथ महाकोपाद्वीरस्तस्यरथे महान् ॥ २२
खड्गेन चापं चिच्छेद भग्नश्चक्रस्तदा स्वयम् । मुष्ट्या प्रहृत्य शूरं तं पततेस्म पुनश्च सः ॥ २३
निरायुधत्वाच्च शूरो गृहीत्वा पादमुत्क्रुधा । ऊर्ध्वमुत्क्षेपयामास यावद्दण्डं महासुरः ॥ २४
अण्डस्य भित्वाभिहतो पतितोऽयं महीतले । मोहमाप तदात्यन्तं श्मणकायस्सुरेश्वरः ॥ २५
अथवीरमहेन्द्रोऽपि प्रस्थितस्सायकान् बहून् । मुमोच दैत्यनाथेऽस्मिन् महाकोलाहलारवः ॥ २६
तान् शरैश्छिन्नतस्सोऽपि बहुभिर्दानवेश्वरः । मिथोरथं भ्रामयित्वा युयुधाते शरैरुभौ ॥ २७
ततः कोपवशाच्छूरः त्रिंशच्छस्त्राणि पादयोः । चत्वारिंशदुरोमध्ये त्रिंशद्बाहुयुगे तदा ॥ २८
युयोज तस्य सहसा पतितस्सोऽपि मोहितः । वीरधीरः प्रतस्थेऽथ वर्षन् बाणान् बहून् क्षणात् ॥ २९
तच्छरान् कार्मुकं दैत्यस्सहस्रैश्च बभञ्ज । रथं च सप्तभिश्शस्त्रैः पातयामास भूतले ॥ ३०
ताडितुं तु यदा देवो दण्डमादाय चागतः । चतुर्भिस्तं चकारास्त्रैर्विघादैर्दैत्येश्वरस्तदा ॥ ३१
पुनश्चतुर्दशास्त्राणि मुक्त्वा तं क्रोडबाहुषु । पातयामास भूपृष्ठे पर्वते हरिवत्क्रुधा ॥ ३२
ततस्समागतो वीरमाहेश्वर समाह्वयः । शक्तिं मुमोच धनुषा शक्यो जेतुं न चेत्ययम् ॥ ३३

तस्यां शूरस्तु बाणानां सहस्रं सहसाऽसृजत् । छित्वा तत्सर्वमव्येयं वक्षोमध्ये शिलाहदे ॥ ३४
पतितास्ते विशीर्णास्ते पापाघमतलोऽपतत् । अपातयत्सहस्रशरैरेनं स्कन्दमहासुरः ॥ ३५
ततस्समागतो वीरकेसरी गणनायकः । बहून् शरान् ववर्षाशु महता मन्युनाऽसुरे ॥ ३६
सप्तसप्तभिश्शरैस्तस्य धनुश्छित्वा रथं शतैः । मुमोच निशिते दैत्यस्सहस्राण्यमरेशितुः ॥ ३७
क्षिपतिस्म गिरिं वीरश्शूरे तस्मिन् पुनःक्रुधा । शरेणैकेन तं छित्वा तताम भुवि दैत्यराट् ॥ ३८
ततः कोपेन महता पतित्वा तद्रथे सुरः । करेण ताडयामास दैत्यवक्षसि निष्ठुरं ॥ ३९
भिन्नपार्श्वः पपातास्य पुरएव रथोगणः । शूरस्तु तं गृहीत्वाशु क्षीराब्धावक्षिपज्जवात् ॥ ४०
विमुक्तमोहस्सं स्वशरा सेनामाप पुनश्च सः । अथागत्य क्षणाद्वीर युयुधे तु महासुरे ॥ ४१
कालाग्निसमस्त्रकालं महाघोरं महाबले । पतितं तदुरो मध्ये प्रपेदे वेदनां भृशम् ॥ ४२
समीक्ष्यैतद्यशोधाहशरं जगाद देवराः । मुक्त्वा दानसहस्राणि पपिपातस्य वक्षसि ॥ ४३
अपातयत्तदैवेनमसुरेशो महीतले । अभिक्रमेण मागाय वीरस्तासन भूतलम् ॥ ४४
वीरान्तको महावीरो महाकोलाहलारवैः । कथं पराजयोऽस्माकमस्तेनानामध्वनेनत् ॥ ४५
इत्युक्त्वाशु ववर्षास्मिन् शस्त्राण्युग्राणि मन्युना । अनाद् सिंहवक्त्रो वीरवरासुरे वरम् ॥ ४६
तानि छित्वाथ दैत्योऽपि सहस्राण्यथ असुरे । सहस्रैश्छिन्नरथोऽपि गर्जयन् मेघवत् भृशम् ॥ ४७
अपहृतो महाकोपाच्छरैर्वज्रमयैस्तदा । तथापरथतानापि सहस्रैरभिनच्छितैः ॥ ४८
पुनश्च तदुरो भित्वा मोहयामास तत्क्षणात् । मोहितं तं तदा वीक्ष्य वीरवाहुरुपागतः ॥ ४९
महाबलसुपार्श्वेनं शूरपद्मा युधिष्ठिरः । पूर्वं स्वं दूतरूपेण समागत्यासुरान् बहून् ॥ ५०
मत्पुत्रश्च रणे हत्वा मायारूपेण निर्गतः । तदिदानीं धनुस्त्यक्त्वा दूतो भव महाशयः ॥ ५१
मोचितः क्षणेन भित्वा त्वां संहरिष्यामि सत्वरः । इति ब्रुवन्तं तं वीरः प्राह वाचं रणस्थले ॥ ५२
स्कन्दस्याहं दूतोऽपि महोऽपि क्षान्तपात्रविम् । कुम्भयुद्धं मया दैत्य ब्रुवाणः प्रलपनं वृथा ॥ ५३
दीसायेव महावीरे वीरबाहौ तु धाऽसुरः । सहस्रकोटि शस्त्राणि ववर्षास्मिन्महाबलः ॥ ५४
तावन्ति युगपद् वीरोऽपि तानि चके वृथा क्षणात् । कोटिभिश्च पुनस्तेन मुक्तं लक्षं सुरोऽच्छिनत् ॥ ५५
पुनश्च कोटिभिः कोटिशस्त्राण्युच्छिद्य देवपः । प्राहिणोत्किल्बिषे तस्य शत दैत्याधिपस्य सः ॥ ५६
प्रतिस्खलनमापेतत् स्वमासिताच्छितम् । शक्तिं विना युद्धमेव वाध्यते दनुजम न ॥ ५७
रिपुमेनं वधिष्यामि बहुभिश्च शरौघकैः । इति निश्चित्य मनसा परं सुरपुङ्गवः ॥ ५८
तान् छित्वा दीप्यमानोऽस्त्रवर्षं शक्तिदोषिवन् । मुमोच सुमहाकोपादनयस्य रणे तदा ॥ ५९
सोऽपि कोटिशरैस्तस्य स्वानपि हतवान् क्षणात् । पश्चाच्छक्तियंथाशु रणमध्ये धमधमदि ॥ ६०

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे दशमोऽध्यायः ॥

---

॥ अथ एकादशोऽध्यायः ॥

श्री स्कन्देन शूरवीर्यावरणम् ॥

ततस्ससंभ्रमं वीरस्समागत्य पराक्रमम् । वायव्यास्त्रमदात्रे ते योजयित्वा महारथम् ॥ १
सर्वाणि शूरसस्यैव गृह्णीयात् महाबलः । पतितं तं जवात्तत्र वक्षोमध्येऽपाडयदृढं ॥ २

प्राप धूलिस्वरूपं तु पतिते भुवि शीघ्रतः । संयोज्य कालसूर्यास्त्रे मुमोचासिं पुनः क्रुधा ॥ ३
कुण्ठिताग्रे निपतिते तेऽपि नूनं सुरेन्द्रिपुः । ततः कोपेन महता वीरबाहुर्बलान्वितः ॥ ४
वारुणेन्द्रास्त्रमन्यान्यां शास्त्रे संयोज्य रंहसा । भस्मत्वेऽपि तत्रैव तथा भूमिं गते द्विजाः ॥ ५
मायासुरास्त्रं महता मन्युना प्राहिणोत्सुरः । प्राप्य ते तं महावीरं लज्जयेव भुवं गते ॥ ६
नारायणस्य शस्त्रेण ब्राह्ममस्त्रं महत्क्रुधा । विससर्ज महाभीमे सर्वसंहारकारणे ॥ ७
स्फुरद्विप्रियके तेऽपि प्रतिहत्यास्य वक्षसि । एतद्दस्य बलं सर्वे दृष्ट्वाश्चर्यं गतास्तदा ॥ ८
तमाह वीक्ष्य शूरोऽयं स्फुरद्वीरं निरस्त्रकम् । मक्षिका यद्वदायस्य वह्निं यद्वत्तथैवते ॥ ९
दिव्यान्यस्त्राण्यपि मयि निरस्तानि गतानि हि । पुनरेव संहरेयं त्वां तव वीर्यं बलं तथा ॥ १०
मत्कारणामपि माहात्म्यं वीक्षितुं स्थितवानहम् । तदिदानीं क्षणेनैव संहरिष्याम्यसंशयम् ॥ ११
इत्युक्तमात्रेण तदा वीरबाहुः क्रुधा ज्वलन् । अस्त्रं पाशुपतं घोरं असुरेशो युयोज हि ॥ १२
विनिर्ययौ महादेवाद्दुरित्यपगादिकम् । वीक्ष्यैतच्छूरपद्मापि तदेवास्त्रं तदासृजत् ॥ १३
भूत्वा युयुधतुस्तेऽपि महारावविभीषणे । महत्त्वौ प्राप्तुर्भूयो निकटं भूसुराः क्षणात् ॥ १४
एतावद्धि बलं तेऽद्य पश्य वीर्यं ममाधुना । एवमुक्त्वा वचनं शूरपद्मा बहून् शरान् ॥ १५
अवर्षत्सोऽपि भूयांसि शस्त्राण्यस्मिन्महत्क्रुधा । दैत्यः पञ्चदशास्त्रैस्तच्छरदिच्छिन्नवत्क्रुधा ॥ १६
मुमोच शक्तिमतुलां दैत्ये देवगणाधिपः । सा धूलिरभवत्तत्र पतिता हृदयक्षसि ॥ १७
ततस्तस्मिन्सुरे दैत्यो दण्डं तु समचिक्षिपत् । तदानीमेव देवोऽस्मिन् स्वकं दण्डं मुमोच हि ॥ १८
तं धूलीकृत्य सहसा दैत्यदण्डो महाजवात् । अमोघस्सुरेशस्योरोमध्ये पतत् क्षणात् ॥ १९
मोहितं सारथिर्वीक्ष्य विशालस्त्वरया रथम् । मूर्छापनोदनायायं सञ्चयत्तं ववुज्वलम् ॥ २०
शूरो ववर्ष भूतेषु भीतेष्वथ शरान्बहून् । पलायितानि भूतानि तदानीं दश दिक्ष्वपि ॥ २१
ततः प्रतस्थे भगवान् गुहोऽमितपराक्रमः । पलायनं च भूतानां तत्पतिनाश्च मूर्च्छनाम् ॥ २२
ज्ञात्वानेकार्ककोट्याभं प्रेरयित्वा रथं वरम् । प्राह तं वचनं शूरं प्रेक्ष्य सर्वेश्वरेश्वरः ॥ २३
स्कन्दोऽयमिति मत्वा तु सर्वदैत्यविनाशकः । तव सेनाधिपास्सर्वे मृताः खलु महौजसः ॥ २४
तदिदानीं निवर्तस्व बालत्वेनान्वितो भवान् । दुर्बलं तारकं क्रौञ्चमिव मत्वा सुरेश्वर ॥ २५
इहागतोऽसि बालत्वात् न जानासि बलं मम । सुराणां विष्णुमुख्यानां यथा भीतिर्भवेद्ध्रुवम् ॥ २६
जयिष्यामि तथैवैनं त्वामद्य रणमध्यगम् । प्राहत षण्मुखो वाचं स्मयमानमुखाम्बुजः ॥ २७
ग्रहीष्यामि बलं तेऽद्य दुरात्मन् सुराधम । उक्तवानसि मां बाल इतीत्थं मन्दमूढधीः ॥ २८
वाग्घुमण्डानि सर्वैश्शल्कलाटाग्निकणोऽप्यलम् । इति स्कन्दवचः श्रुत्वा शूरपद्मातिमन्युना ॥ २९
जग्राह धनुरत्यन्तमुन्नतं पाणिना तदा । बभासे तन्मधुदेवस्त्रिविक्रम शरीरवत् ॥ ३०
योजयित्वा गुणेनैतत् ज्याघातं कृतवान् तदा । तदा णोऽभवत्ससागरोद्वेलनादवत् ॥ ३१
अग्रहीत् कार्मुकं स्कन्दः परमत्यन्तमुन्नतम् । ऊर्ध्वताण्डवसंहर्षहरपादवदुज्ज्वलम् ॥ ३२
स्फुरतामाद्योऽण्डानां सर्वेषां च यथा भवेत् । तथा गुणध्वनिं चक्रे देवसेनाधिपो भृशम् ॥ ३३
ततश्शूरश्शरैस्तस्य रथं देहं महत्क्रुधा । सर्वान् लोकानिमानाशु छादयामास निष्ठुरः ॥ ३४
ववर्ष तस्मिन् स्कन्दोऽपि शरान् छित्वास्य देवपः । छादयित्वा नभोमध्यं वर्षकालपयोदवत् ॥ ३५
ततः कोपेन शूरस्तु शरान् दशसहस्रकान् । छित्वा तत्सर्वमस्त्रायं मुमोच हि सुरेश्वरे ॥ ३६

धृत्वीहस्य गुहस्तस्य सायकान् सायकैस्स्वकैः । प्रयुयोज भुजद्वन्द्वे चतुर्दशशतानिषून् ॥ ३७
ते तत्र पतितास्सद्यः कुण्ठीभावमिताः खलु । वीक्ष्य तत्पार्षतीसूनुस्सहस्रैर्निशितैश्शरैः ॥ ३८
चिच्छेद धनुरस्येदं पविनेव गिरिं हरिः । शक्तिं तस्याश्च शूरोऽपि महाविघ्नोर्विभीषणाम् ॥ ३९
अच्छिनत्तामपि गुहश्चतुर्दशशरैः क्रुधा । ततस्ससंभ्रमं शूरो धनुरन्यत्समुद्यतम् ॥ ४०
गृहीत्वा युयुधेऽन्योन्यं मुक्त्वा मुक्त्वा शरान्बहून् । चकार साममुखाय भुजे वैधस्य दानवः ॥ ४१
कोलाहलं महाभीमं सिंहवत् रणकोविदः । रेणुत्वमगमंस्तेतु पतनाद्य शीघ्रतः ॥ ४२
ततः कोपेन महता षण्मुखोऽस्य धनुर्वरम् । रथं सुसरथाश्वाश्वान् क्रमेणैव महाबलः ॥ ४३
चिच्छेद निशितैरस्त्रैश्चतुर्दशभिराशुगान् । सहस्रैरपरैस्तद्वत्सचतुर्दशलक्षकैः ॥ ४४
ततश्शूरोऽप्यजच्छूलं निशितं सुमहारवः । भित्वा चतुर्भिस्तच्चाय सतभिश्च शरैः पुनः ॥ ४५
अच्छिनद्यासितच्छत्रं शूरस्य सुरनायकः । शरेणैकेन मकुटं उच्छिद्य पतुभिस्तथा ॥ ४६
भूषणानि च सर्वाणि ततानभुवि शीघ्रतः । ततो विलज्जा सुमहद्दुरन्तम्लाननोऽसुरः ॥
गलद्धस्त बलस्तस्थौ दरिद्र इव भूसुरः ॥ ४७

दृष्ट्वा दानवमीदृशं दितिसुतास्सर्वेऽपि दैत्येश्वरं संगत्याशु रणस्थलं शितशरैर्नानाविधैरायुधैः ।
चक्रुर्वैविबुधा महातिचपला अत्यंतुमान्येनते घषेलानादप्रपूरिताण्डकुहरास्संभूय भूमीसुराः ॥ ४८

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे एकादशोऽध्यायः ॥

॥ अथ द्वादशोऽध्यायः ॥

शूरः हतसेनः निरायुधो पुरं पलायितः ॥

अथांबिकातनूजोऽसौ घनं संभ्राम्यमन्युना । सन्दधे दैत्यसेनासु सर्वसंहारकारकम् ॥ १
तद्भासा भासयद्भास्वत्कोटिनिर्मलमण्डलम् (अस्त्र) । प्राप्य दैत्यबलं शीघ्रं बहुधा भाययत्तदा ॥ २
छिन्नकर्णकराः केचित् भिन्नपादगलाः परे । हृच्छनासाक्षिवक्त्राः हतवेशाभिजाप्यताः ॥ ३
मृतिमापुस्तदा दैत्यास्सर्वे ते तत्र संगताः । चूर्णीकृतास्तथानेन रथा अपि समुद्यताः ॥ ४
हस्तिनोऽश्वाश्च सर्वे ते निधनं प्रापिताः क्षणात् । छित्वा छत्राणि सर्वाणि रूप्यभाजनपङ्क्तिवत् ॥ ५
भर्तुं यमस्य दैत्यांस्तान् भाततान महीतले । तोमरप्रासखड्गाणि विशीर्णानि समन्ततः ॥ ६
नृत्यत्कबन्धविविधं पिशाचकुलसंकुलम् । इत्य परिभ्रमत्क्रव्य काकदर्पेण कुलाकुलम् ॥ ७
दधे तत्राऽभवत् क्षिप्रं तदायोधनभूतलम् । तादृशं तं महद्युद्धं दृष्ट्वा विष्णोस्सुदर्शनम् ॥ ८
स्तुतिं चकार महतीं कंपमानं निजात्मकम् । हत्वा तद्वैयमसुरानाप स्वन्दकरं द्विजाः ॥ ९
शूरपद्मा तदा दैत्यान्मृतान्वीक्ष्य सपन्नसः । अहो पाशुपतास्त्रया ह्यमोघा शक्तिरस्त्विम् ॥ १०
सहसा दानवास्सर्वे मृताः खलु महौजसः । इत्यमस्याद्भुतेनायं तस्थौ केवल एव सः ॥ ११
ततस्ससंभ्रमं मोघात्महामल्लं सुरेश्वरे । महाघोरं महारावं योजयामास दैत्यराट् ॥ १२
विनिर्गतं तदस्त्रं तु महाग्नो रूपमास्थितम् । बहुधा प्राप तरसा सैन्यमुद्दहनसन्निधिम् ॥ १३
शक्तिरेतद्गुहस्याशु करस्याऽप्रकाशयत् किल । मुमोच वैष्णवं भूयस्तस्मिन्नस्त्रं तदा मृधा ॥ १४
महता शब्दजालेन मरसंपत्सवरस्त्वागात् । नानाविष्णु स्वरूपेण प्राप्तिनदपि तं क्षणात् ॥ १५

सहस्रयोजनोच्छ्रायमुत्पाट्य सुमहाबलैः । चिक्षिपुर्जलमध्येऽब्धौ मन्दरं दैवताइव ॥ ४६
यदवश्च तदा दैत्यास्तत्रस्थास्तत्रापतन् द्विजाः । समुद्रश्च ततोल्लोलैरालिलिंगे पुरीमिमाम् ॥ ४७
पुनश्च तानि भूतानि सालमुत्तरदिक्स्थितम् । पातयित्वा पुरस्यास्य कञ्चुकाकारवत् स्थितम् ॥ ४८
निर्गलं प्रविश्याशु हत्वा दैत्यान् बहून् द्रुतान् । भित्वा गृहाणि भूयांसि लुण्ठयित्वा यथेच्छया ॥ ४९
पुनर्निवृत्य तरसा स्कन्दमापुस्सुरेश्वरम् । ततः प्रतस्थे भगवान् हेमकूटपुरं प्रति ॥ ५०
सह सैन्यैस्स्वकैस्सर्वैर्महाकोलाहलारवैः । ववर्षुर्देवतावृष्टिं पौष्पीताः परया मुदा ॥ ५१
देवदुन्दुभयो नेदुर्जितांबुधिमहारवाः । आतोद्यानिच सर्वाणि नादितानि तदा भृशम् ॥ ५२
पेठुर्गुणगणान्सर्वे बन्दिनस्स्फुटवाङ्मयाः । पठद्भिस्स्वचरस्तोत्रं भक्तसंघैर्गृहैः क्षणात् ॥ ५३
हेमकूटपुरस्थं स्वं भवनं प्राप्य सुन्दरम् । आरुह्य तरसा रम्यं सिंहासनमनुत्तमम् ॥ ५४
विनियोज्य ततस्सेनाः स्वगृहेभ्यः प्रहृष्टवान् । महाविष्णुमुखैर्देवैः स्तूयमानपदांबुजः ॥ [illegible]
कृतमानोपचारेण तस्थौ तत्र वरासने । ततो रविस्समुद्वीक्ष्य वियत्स्थो जयमीशितुः ॥ ५६
अपमीत्युरागेण निजं प्रेक्ष्य लक्षचक्षुः । वरुणस्य दिशासक्तिमेत्यास्यगर्त ततः क्षणात् ॥ ५७
गलन्निजांशुकोबोधि समस्त किल भूसुराः । शूरपद्मा स्त्रिया सार्कं पद्मकोमलकंठया ॥ ५८
रणाय क्लिन्नपन्मूर्यो विनिद्रस्सुतरां स्थितः । भानुकोपस्तदा श्रुत्वा पितुरागमनं क्षणात् ॥ ५९
जयाय कुर्वन् मन्त्रस्य पुरश्चरणमुज्ज्वलम् । युद्धशिक्षां तथा मायां संभ्रमेण पुनस्त्यजन् ॥ ६०
शूरमाप रजन्यां तं विश्रमाणसमाह्वये । व्यजिज्ञिपत् स्ववृत्तान्तं वृत्तं पूर्वं दिने तदा ॥ ६१

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकांडे द्वादशोऽध्यायः ॥

---

## ॥ अथ त्रयोदशोऽध्यायः ॥

### भाणदेव्या भानुकोपाय सम्मोहनास्त्र प्रदानम् ॥

जेतुं सकलसेनाभिस्सर्वैर्व्यायुधैरहम् । स्थितो यावत् प्रतीक्ष्यैनमविज्ञाप्य गतो भयात् ॥ १
बालेन युद्धं कृत्वा यं जयापजययोः फलम् । किमाप्नोपिच का कीर्तिरपकीर्तिर्भवेद् ध्रुवम् ॥ २
गत्वाहं प्रातरेवैनं वधिष्यामि यथावया । श्रुत्वा दूतमुखेनैवं शुचो मय पितस्ततः ॥ ३
अजितारेः पुनर्मास्तु संगमो मे त्वया रणे । त्वद्राज्यमपि दैत्येश सत्यमुक्तं मयाऽन्यथा ॥ ४
एवं सुतवचः श्रुत्वा बालोऽयं मां विनाऽऽहवे । जेतुं वैनाप्यशक्योऽतः पुत्रार्थं दूतमागतम् ॥ ५
सेनाश्च जित्वा तस्याशु समागच्छ महाद्यया । एवमुक्त्वा विसृज्याथ शूरपद्मा निजात्मजम् ॥ ६
तोषं संप्राप्य मनसा वसतिस्म निजे गृहे । समागत्य जयेनाथ भानुकोपं विनिर्गतम् ॥ ७
दूताः प्रोचुः पुरस्यास्य लुण्ठनं गोपुरस्य च । क्षेपणं भूतसेनाभिर्मर्दनं वेश्मनां तथा ॥ ८
अतिघोरस्य भग्नं प्राकारस्यापि पातनम् । शूरागमनमात्रेण कृतान्येतानि भूसुराः ॥ ९
श्रुत्वा दूतमुखेनैतद्भानुकोपः क्रुधा ज्वलन् । यथापूर्वमिदं सर्वं कुर्यितुस्तथा मयं पुनः ॥ १०
प्रेरयित्वा महाकायं तद्दिक् संरक्षणाय च । दत्त्वा साहस्रवाहिन्या सेनया सह दीपितः ॥ ११
विवेश स्वपुरं दैत्यो मालाभिश्च विभूषितम् । निर्मायच यथापूर्वं तत्सर्वं दैत्यवर्धकिः ॥ १२
विवेशात्मीयभवनं शत्रावेव क्षणाद्दयम् । स्ववेत्रस्समहाकायस्तत्रगाथा महाबलः ॥ १३

महद्दीप प्रभाजाल विनोदित तम स्थितिः । प्रातोदये पुनर्मायौ भानुकोपस्त्वरायुतः ॥ १४

समुत्थाय समाप्याशु दिनकर्म विशेषतः । संसार मायां तपसि वर्तमानां पितामहीम् ॥ १५

आगतां तामयं वीक्ष्य नत्वा स्तुत्वा स्तवैर्भृशम् । वीरबाहुकृतं भङ्गमुक्त्वा पप्रच्छ शेमुषीम् ॥ १६

प्राहसा ,विनयाश्रममहुरेशं तदासुरी । ब्रह्म विष्णुमुखा देवा भवद्भिर्बाधिताभृशम् ॥ १७

तदिदानीं कथं वास्याशुष्यार्क विजयोऽसुर.। एवं भूयो . वदन्तीं तां मायामाह तदाऽसुरः ॥ १८

अय देहि जयायास्य वीरबाहोर्भमायुधम् । यथा तथास्तु मावित्थं मायै पौत्रमुखोदिते ॥ १९

इति पृष्टा पुनर्माया भानुकोपेन धीमता । इदमस्त्रं महामोहं करिष्यति रिपूरणे ॥ २०

अधिताथ जयोऽस्मिन् दिवसे दैत्य सत्वरः । उक्त्वैवं तत्प्रदत्याशु मायाख्या निर्गतासुरी ॥ २१

लब्ध्वा मायास्त्रमतुलं तुष्टा परमयाऽसुरः । दारासनं गृहीत्वाशु शरपूर्णं निषङ्गवान् ॥ २२

कवचं वज्रसंकाशं बध्वा स्वाङ्गे महाबलः । वाय्वग्नियमचन्द्रार्कं ब्रह्मविष्णु धारान्वरान् ॥ २३

तथा पशुपतेरस्त्रमन्यानसेश्वरेश्वरम् । समादाय रथैरश्वैर्गजैरपि समुन्नतैः ॥ २४

प्रत्येकं वृन्दसाहस्र वाहिनी गणितैर्वरैः । तथा विंशत्सहस्रेण वाहिन्या गणितैर्बलैः ॥ २५

प्रतस्थे सुमहारावैर्भानुकोपो रणोत्सुकः । निर्घोषैरपि भेर्यादिस्वनयुतार्भैश्च वेणुभिः ॥ २६

चपपुष्टशीकराश्वागाः पीत्वा मेघजलं करैः । पर्वते मेघमार्गेऽपि सूर्यमार्गे तुरङ्गमाः ॥ २७

कृत्वा पदानि भूयांसि निर्गता जयशालिनः । चक्रध्वनिरभूच्चद्रथानां महतां तदा ॥ २८

वह्निनिभास्तथा दैत्याः कृष्णाङ्गाः पीतकेशिनः । निर्गता वद्धवस्त्रीप्रास महाकोलाहलारवैः ॥ २९

रथहस्त्यश्वदैत्यौघैर्ध्वजैश्छायाविधायिभिः । लसद्रत्नप्रभाजालछत्रचामरकैरपि ॥ ३०

संबाधगामिमिर्जातं तिमिरावृतभूतलम् । स्फुरदायुधभूपास्य रत्नधुत्या निवारितम् ॥ ३१

एवं महता प्रभावेन भानुकोपः क्षणाक्षयम् । विनिर्गत्य समापार्थं सालद्वारं बलैस्सह ॥ ३२

सहस्राक्षमुखं दूतं वीक्ष्य वाचं ततोऽब्रवीत् । वीरबाहुमिवं दूत मद्वचो ज्ञापयाधुना ॥ ३३

आयास्यामि रणे जेतुं त्वामद्य क्षणमात्रतः । तस्य निर्गत्य शीघ्रेण सज्जितस्त्वङ्गसेनया ॥ ३४

एवमुक्त्वा विसृष्टोऽथ दूतो दैत्येन शीघ्रतः । गत्वा वीरस्य निकटं तत्प्रोक्तमेवमेवतत् ॥ ३५

श्रुत्वा तु वीरबाहुस्स तथेत्युक्त्वा विसृज्य च । ततः प्राप्य गुहं वीरो भक्तिनम्रकृताञ्जली ॥ ३६

प्रणम्य परया भक्त्या तस्थौ बद्धकराञ्जलिः । स्कन्दस्तमब्रवीद्वीक्ष्य सर्वभूतान्तरालयः ॥ ३७

मायात्मजं दुरात्मानं त्वया युद्धाय मत्सुत । सहस्रवाहिनीभूतैर्गत्वा सेनाधिपैर्भवान् ॥ ३८

वीरैरपार्थिवैर्लक्षैः करोतु रणसाक्षया । मोहयिष्यति युष्मांस्तत्र मुक्त्वा मायास्त्रमाहवे ॥ ३९

*मत्कं पुरतश्चरिष्यति मदन्तिकः प्रयास्यथ । एवमुक्त्वा महासेनः प्रेषयामास तं रणम् ॥ ४०*

प्रतस्थे वीरबाहुश्च नत्वा स्कन्द रथेस्थितः । भूतानामास्त्वैस्त्वद्वारुणानां पटहैरपि ॥ ४१

सर्वेऽपि सहसा जग्मुर्युद्धमापुर्महाबलाः । ततो देवेषु ते दैत्या युयुजुस्स्वायुधान्यपि ॥ ४२

असुरसेनासु भूतानां सुमहाराव भीषणाः । तदा बहूनि भूतानि निपेतुर्भूतले भृशम् ॥ ४३

छिन्नपाण्यङ्घ्रिदोर्द्वंद्व प्रपदादीनि भूसुराः । ततो भूतानि सर्वाणि संभूय दितिजर्षभान् ॥ ४४

ताडयित्वा शिरोमध्ये पीडयित्वा परान्वरान् । अत्यन्त्यान्यान्महावीरान् पिण्डीकृत्य तथापरान् ॥ ४५

गृहीत्वा पाणिना पादानास्फाल्य च महीतले । भ्रामयित्वेतरानब्धौ बहून् क्षिप्त्वा व्यमारयन् ॥ ४६

मायापुरवरानेतान् त्रिपुराणामिवेश्वरः । चकुस्सर्वान् वृथाभूतान् परेषां क्षणमात्रतः ॥ ४७

नीलानि कानि भूतानि धृतपञ्चायुधानि च । पञ्चाशानपि परान् दैत्यान् हत्वा शीघ्रवैस्तदा ॥ ४८

नारायण इव तदा विरेजुर्दैत्यघातिनः । भ्रामयित्वा गजान् कानि दन्तानुत्पाट्य रंहसा ॥ ४९
आदिक्रोडस्य दंष्ट्रां तां इव रेजुर्हरात्मजाः । करिवक्त्राणि भूयांसि गिरिरूपेषु शत्रुषु ॥ ५०
गमनागमनाभ्यां च क्रौञ्चे तारकवत्प्रभुः । जित्वा विष्णुमुखान्पूर्वं भूतचक्रैस्ततो हताः ॥ ५१
केचिद्दैत्या महाभीमा जलन्धर इव स्वयम् । शूले प्रोता परे दैत्या भैरवेणान्धको यथा ॥ ५२
एवं नानाप्रकारेण बहवो दानवा हताः । परेषु केषु वीराश्च ववर्षुर्निशितान् शरान् ॥ ५३
निरर्गांश्चानुकोपोऽथ दृष्ट्वा सर्वमिदं क्षणात् । मुक्त्वा रथाश्वान्वेगेन भूत सेनामभिक्रुधा ॥ ५४
आरोपित गुणं चापं कृत्वा संशयमन्थरम् । निर्गतो वीरबाहुश्च सहसा रणकोविदः ॥ ५५
तावुभौ रणशार्दूलौ परस्पर जयेच्छया । ववर्षतुर्महाकोपौ सायकान्निशितान्बहून् ॥ ५६
मिथस्तयोश्शरास्तेऽपि युयुधुर्योगिनो यथा । संगमापुस्तदान्योन्यं हतास्सर्वे क्षणादमी ॥ ५७
उभौ देवासुरौ सोऽप्याद्देवलोकमवाप्य च । क्षणेन ब्रह्मणो लोकं विष्णुलोकं ततः पुनः ॥ ५८
समुद्राश्च दिशात्खाद्यचक्रवालगिरिं परम् । युयुधाते रथस्थौ तौ महाकोलाहलारवौ ॥ ५९

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे त्रयोदशोऽध्यायः ॥

---

॥ अथ चतुर्दशोऽध्यायः ॥

वीरबाहु भानुकोपाभ्यां युगपत्पाशुपतास्त्र प्रयोगः ॥

भानुकोपः पुनः कोपाद्वीरवक्षसि निष्ठुरे । योजयामास निशितान् सहस्राणि शरांस्ततः ॥ १
वीरस्तु सायकैस्तीक्ष्णैस्तत्सुताश्वरथान् द्रुतम् । सहसैवच्छिदत्कोपवह्निज्वालाविभीषणः ॥ २
यावदाप्य दैत्योऽसौ रथमन्य समुद्यतम् । प्रयोक्तुमैच्छद्विशिखानि पुनस्तिग्मशायका ॥ ३
तावदेव सहस्राणि तूणोद्धृतभुजान्तरे । चक्रुर्भूतानि संरावान् दृष्ट्वा तद्रणमण्डले ॥ ४
ततः कोपेन दैत्योऽपि तस्याग्नेयं तु दारुणम् । आवृतावनि दिग्लोक ससागर भीषणम् ॥ ५
महता निनदेनापि भूतान्यद्रावयद्भृशम् । भूतसेनाधिपानेतद्वीयपक्षिगतं क्षणात् ॥ ६
वीरबाहुस्समीक्ष्यैतदाग्नेयं सन्दधे महान् । कश्चित्स्फुलिङ्गजालेन ज्वाला मालाभिरम्बतः ॥ ७
तथा पवन धूमेन महता निनदेन च । प्रकाशेनापि संध्यासं स्फुरद्ब्रह्माण्ड मुज्वलम् ॥ ८
चलत्सारमहं क्षुभ्यद्भूमादि सरिदब्धि च । धूलीकृत समस्तादि अस्फुटद्भूमि मण्डलम् ॥ ९
प्रलिहद्वायवाग्रे तदस्त्रमापात्युदान्तिकम् । दृष्ट्वा ससंभ्रमे दैत्यः पावमान तदास्यजत् ॥ १०
धर्षयित्वा समुद्रं तदचलांश्चालयद्भृशम् । कल्पान्तवात्यादुष्प्रेक्ष्यं महासंताप भीषणम् ॥ ११
प्रशमीकृतवत्स्पष्टं प्रपेदे देवसन्निधिम् । सार्पमस्त्रं युयोजाथ वीरबाहुर्महाक्रुधा ॥ १२
विनिर्गत्य वदनेनैतदनन्तैर्बहुभिर्वृतम् । भस्मीकुर्वन्महोरुच्छ्वासैर्विविधैर्विषपर्णैरपि ॥ १३
विध्वंसैतत्फणाभिश्च पक्षीभिरभिमण्डितम् । आप्लुत्य सूर्यमाकाशं अभ्यरात् पाश्चल्लमासुरम् ॥ १४
निकषापाञ्चरं दीर्घं सर्वलोक भयानकम् । भानुकोपस्समीक्ष्यैतद्गारुडास्त्रं प्रयुक्तवान् ॥ १५
अनन्त तार्क्ष्यं रूपेण गरुडात्तेन पर्वतान् । क्षेपयन्नवनेस्यान्त वार्धीसमिव मारुतः ॥ १६
विलोक्य सरितां नाथांस्तुण्डेन प्रासदच्छीन् । त्वमागतमभ्यासं वीक्ष्य तदेयनायकः ॥ १७
गृध्रगाङ्गं महाघोरं महाबल पराक्रमम् । महता मन्युना भीमं सर्वसंत्रासकारकम् ॥ १८

चिक्षेप तस्मिन् विधिना विधिज्ञो बलवत्तरः । रणद्घण्टिका मालामध्यघण्टा महारवम् ॥ १९
किङ्किणिकिङ्किणिकाराव बधरीकृत दिङ्मुखम् । शृङ्गोत्क्षिप्तातितुङ्गाद्रि राजराजि विराजितम् ॥ २०
निजपादखुराग्रैश्चविलिखद्भूतलं भृशम् । वीज्यमान महावाल वायुधुताद्रिमस्तकम् ॥ २१
महद्गम्भीर शब्दौघ पूरिताण्ड महानिलम् । गृहीत्वा पतगेन्द्राक्षं चक्रवासेन विभीषणम् ॥ २२
भीषयत्सकलान् दैत्यान् कम्पयत्सकलं जगत् । आयादश्वाशमाश्वेतत्सर्वयदैत्य नायकम् ॥ २३
ससम्भ्रमं दैत्यो याम्यं ग्राहं युयोजह्नि । निर्गते बहुभिस्तेतु तत्सदृपैर्विभीषणैः ॥ २४
महाघनिपरे घोरे वीक्ष्य तच्चप्रकम्पिते । प्रणम्यस्व यथामार्गं निर्गते भूसुरास्तदा ॥ २५
ततोऽस्त्रजन्महाघोरं अस्त्रं नारायणस्य सः । निर्गत्य तन्महावेगाद्युद्धनारायणाह ति ॥ २६
धृतपञ्चायुधं भीमं वृषभाक्षेणचायुधत् । दृष्ट्वा तद्भीमद्राक्षं वीरयाद्धुर्महाजवम् ॥ २७
तुतोद तन्महाघोरं महाभीमं महाबलम् । अनन्तकोटिभिर्वीरभद्रैरपि परीवृतम् ॥ २८
भित्वा नारायणास्त्रं आगच्छद्वीक्ष्य दैत्यराट् । अस्त्रं पाशुपतं घोरं बलराजं महाभयात् ॥ २९
तत्याज विधिना दैवे सर्वशक्ति निबर्हणम् । तदानीमेव वीरोऽपि सन्दधे तन्महाबलः ॥ ३०
विनिर्गतं एतुपतेरस्त्रमस्त्रेश्वरेश्वरम् । कल्पान्त चण्डसंरम्भ महाभीषण मारुतम् ॥ ३१
संभूताशेषदिग्भागघनधूमसमाकुलम् । क्वचिदावर्तसंसक्तमहावैश्वानरोज्ज्वलत् ॥ ३२
हालाहलादिगरलकोलाहलविभीषणम् । महाकल्प समुद्भूत सागरानुक्रमात्क्वचित् ॥ ३३
तथा प्रलयकालोत्थ पुष्कला वर्तकायुधम् । अनन्तादय नागेन्द्रान् सर्वसंहारकारणान् ॥ ३४
भूतप्रेतपिशाचांश्च विस्तजाकुशषिस्तथा । पत्राभृत विश्वाम्बतमसं चातिभीषणम् ॥ ३५
महासंमोहकृत्सन्महामायाभिरेवच । दंष्ट्राकरालवदन महामृत्यु गणावृतम् ॥ ३६
महाभीममहाशालसंघसंधृतपार्श्वभु । अधिरूढाश्ववाहेन्द्र गणराज गणाकुलम् ॥ ३७
महापर्वत सङ्काश नारसिंह गणैरपि । महाघोर महाराव शरभैश्चैस्तथा क्वचित् ॥ ३८
अधयाद्दम समारूढैर्महाभीमैर्महाबलैः । भञ्जनाद्रि समाकार पिशाचगणा संस्थितैः ॥ ३९
मार्त्यैमातङ्गजालमहाभूतस्थितैरपि । वाहिभीकृतयाञ्चीरैर्महावृषभवाहनैः ॥ ४०
अधिरूढमहावेग तुरंगैर्महाबलैः । ऋक्षवक्त्रमहाभीमशार्दूलगणवाहनैः ॥ ४१
तथा सिंहसमूहस्थैर्गजराजस्थितैरपि । वृहत्पर्वतनौकाश्वधीर पस्थितैस्तथा ॥ ४२
नानारत्नप्रभाजालव्योमयानस्थितैरपि । एवमादिभिरन्यैश्च वृतो रुद्रगणैः परैः ॥ ४३
विधातृदरिबारित्रिन्द्र यादःपत्यन्तकादिनाम् । अस्त्रैस्तत्तत्स्वरूपैश्च बहुभिः परितोवृतम् ॥ ४४
खड्गखट्वांगमुसलभिन्दिपालभुशुण्डकैः । परिघैस्तोमरैश्चैवमुद्गरैश्च शतघ्निभिः ॥ ४५
प्रासाद्यैस्सायकैश्चैव रङ्कुशैश्शक्तिभिस्तथा । चापैर्गदाभिः पाशैश्च कुठारैस्त्रिशिखैरपि ॥ ४६
असिभिः कवचैश्च ह्लादिनीभिस्समन्ततः । एवमादिभिरस्त्रैश्च भीषणं भीषणं भृशम् ॥ ४७
दृष्ट्वा निर्गतयोर्जातमस्त्रयोस्तुमुलं रणम् । सुप्तव्महाहदोदन्वद्यमुनाक्षुरनिस्वनम् ॥ ४८
दह्यमानमहीव्योम पतन्मेरु महारवम् । तप्यमानग्रहर्क्षांशस्फुटद्ब्रह्माण्डभित्तिच ॥ ४९
धूळीकृताद्रिनिकरस्यिस्यन्दनभीषणम् । निपतद्दन्तदिग्नाग कुलं क्षोण्यां महाभयात् ॥ ५०
प्रशमत्पवनाश्वासधैश्वानरमहाजवम् । कृतपाताळकं पश्चात्तद्दिश्यादिव दृशम् ॥ ५१
सन्तापीकृतसर्वातिमदाहकारैर्विभीषणम् । मयाविष्णुमहाटवमीरिसप्पद्विष्णु मयप्रदम् ॥ ५२

आश्लिष्य मन्मथं रत्या कृताक्रन्दनरोदनम् । ऋषिपत्नीभिरन्याभिरालिङ्गितनिजप्रियम् ॥ ५३
एवं पशुपतेरासीदनयोस्तु यदारणम् । तदा ममार सेनापि वह्नीकल्पान्त कालवत् ॥ ५४
श्रुत्वा तयोर्महारावं महासंमोहकारकम् । भीषणं भीषणस्यापि मोहकं मोहकस्य च ॥ ५५
मृत्योर्मृत्युप्रदं घोरं सर्वभूतभयावहम् । बिभ्युस्सुरासुरस्याये दैत्यास्सर्वेऽपि पापिनः ५६
किमेतदिति शूरोऽपि विचार्यच विचार्यच । प्रेषयामास दूतांश्च ज्ञातुं तच्छीघ्रगामिनः ॥ ५७
तदानीमेव तत्रत्यं ज्ञात्वा सर्वं हि केचन । दूतास्समागताश्शीघ्रं ऊचुरेतद्यथाक्रमम् ॥ ५८
प्राह शूरस्तु तान् दूतान् दूतबुध्या स्थितोऽस्म्यहम् । वीरसेनमविज्ञाय वीरोऽयं निहतामिति ॥ ५९
एवं पाशुपतास्त्रे ते युद्धं कृत्वाति भीषणम् । आवयोश्च रणेनाशु लोकानां प्रलयो भवेत् ॥ ६०
इति ज्ञात्वा निवर्तेते प्रयोक्तारावुभावपि । दृष्ट्वा तद्देवतास्सर्वास्तुष्टिमापुस्तदा भृशम् ॥ ६१
निरगाद्भानुकोपोऽपि भूतसेनो नभःस्थलम् । छन्नवेषस्स्थितस्तत्र मायया दुर्मतिर्द्विजाः ॥ ६२
ततो भूतानि सर्वाणि वीरास्सेनाधिपा अपि । निश्चित्य गमनं तस्य चक्रुः कोलाहलारवान् ॥ ६३

भीत्येव भानुरसहसा पयोधिं मुक्तांबरोऽस्ताद्रिशिरस्स्थितांघः ।
प्रापाद्य दैत्यस्य नभस्स्थल स्थितिं ज्ञात्वा शनैः स्वस्सकरो द्विजेन्द्राः । ६४

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे चतुर्दशोऽध्यायः ॥

---

॥ अथ पञ्चदशोऽध्यायः ॥

भानुकोपस्य सम्मोहास्त्रेण भूतसैन्यान सम्मोह्य समुद्रे निपातनम् श्रीस्कन्द दयया तेषां रक्षणञ्च ॥

अथ सर्वेऽपि ते वीरा भूतसेनाधिपास्तदा । परेद्युरागमिष्यामः प्रणम्य स्कन्दमव्ययम् ॥ १
इति निश्चित संयाता यदा स्वस्थानस्थिता भृशम् । तदाऽसुरो विचार्यासौ गतश्चेदयशो भवेत् ॥ २
मायां समातनोदेवं सर्वव्यामोहकारिणीम् । कल्पान्तघनजीमूतमहावायुमहारयम् ॥ ३
आगत्य सर्वानाच्छाद्य मोहयामास वेगवान् । क्षोभयामास भूतानि सह वीरैर्महाबलैः ॥ ४
साकृत्वार्णवमम्भोधौ यथा सेनाधिपैरपि । ततस्तु भानुकोपोऽसौ समायात् पितरं क्षणात् ॥ ५
दृष्ट्वा रिपूनहं शीघ्रात् क्षिप्त्वाम्भस्यागतोऽपि च । अन्येद्युरेव तं बालं जित्वा प्रह्लादिष्यताम् ॥ ६
कारावेश्मनितान् सर्वान् पातयिष्याम्यसंशयम् । इति पुत्रवचः श्रुत्वा प्रीत्या परमयाऽसुरः ॥ ७
आघ्रायच शिरस्तस्य समालिङ्ग्यात्मजं तदा । संस्थाप्य निकटे प्रादात् कोटीरादि विभूषणम् ॥ ८
अनया प्रियवचस्यायं तथा नाप्तवयास्सरे । जितस्त्वं देवतास्सर्वाः कुरु पुत्र महाबल ॥ ९
इत्यभ्यनुज्ञश्शूरेण भानुकोपोऽविशत् गृहम् । ततस्सुरास्समीक्ष्यैतां वीराणां विपदं तदा ॥ १०
समाजग्मुर्गुहाभ्याशं ज्ञापितुं खिन्नमानसाः । तत्पूर्वमेव तत्सर्वमुक्तवान्नारदो गुहम् ॥ ११
अथ शक्तिं गृहीत्वायं मोचयित्वा तरस्वतः । आनयेनान्महावीरान् इत्थं सन्दधे गुहः ॥ १२
विनिर्गता सहस्रार्ककोटितेजोविजृम्भिणी । गाढान्धकार रात्रौ सा स्वेच्छाप्रियकरभीषणा ॥ १३
भ्रमन्महाचलेन्द्रोपयास्याऽऽयभयावहा । भ्रुकुटीकुटिलश्यामदेवसंघसमाकुला ॥ १४
तथा प्रलयमेघाभधूमज्वालावृता क्वचित् । क्वचित्तु समदशालामालाशङ्किणसंवृता ॥ १५
रणत्कुलिशसंपायमहामेघावृता क्वचित् । अनुधावद्भिरत्यर्थंभयमयायुमरतयताम् ॥ १६

इन्दुपादरपतिग्रहविप्रस्थवसामपि । अर्हान्याद्दृशैश्चापि कृतस्तोत्रैस्समागता ॥ १७
दृष्ट्वा तामतुलां शक्तिं स्कन्दस्यामित तेजसः । प्रतस्थेऽथ समुद्रोऽसौ भयकंपित विग्रहः । १८
न कृतं चेद्यदा कर्मभया रक्षाधुनाचमम् । स्तुत्वा स्तववरैस्तां ता प्रणनाम पुनः पुनः ॥ १९
तमाश्वास्यच साशक्तिरापमध्यं महाजवात् । तदानीमेव ते सर्वे त्यक्तमोहास्सुराधिपाः ॥ २०
शक्तिस्तुतिं गुहस्यैते सर्वेलोक सुपावनीम् । विलोक्य तादृशीं शक्तिं ,स्तुत्वाप्तुपस्यामुदा ॥ २१
वयं सुरक्षिताः पूर्वं मायायास्तारकस्यहि । इदानीमपि तां किं ते ,करवाम च निष्क्रयम् ॥ २२
इति तेषां वचः श्रुत्वा शक्तिस्सा प्राह तांस्तदा । मायास्त्रं सन्निरस्य त्वं वीरानानय मेऽन्तिकम् ॥ २३
विसृष्टैवं गुहेनाशु शूयमागच्छतेश्वरम् । गच्छामि तत्पुनस्स्कन्दमित्युक्त्वा देवमापसा ॥ २४
वीरबाहुस्ततो वीरान् ससेनेशानवेक्ष्य सः । दृश्यतेद्विपुरो दैत्यनगरं क्रोशमात्रतः ॥ २५
तत्र तिष्ठत्यसौ सर्वान्समान् दैत्यस्तु मायया । मोहयामास तं हन्तुं नगरं ,तस्य धीमतः ॥ २६
लुण्ठयित्वा वहिष्यामस्स्वयमेष्यति सोऽसुरः । तदानीं तं हनिष्यामि भ्रातुकोपमहं रणे ॥ २७
अन्यथाहं मरिष्यामि सचापोऽसौ पतन्भुवम् । प्राहैवं तस्मैवीरः प्रतिश्रुत्यामुमास्तह ॥ २८
पश्चिमां दिशमापुस्ते पुरः कोलाहलारवाः । प्रतिहाराधिपस्तत्र प्राकारस्य महासुरः ॥ २९
मायापुत्रो महाद्वीपराजिराजितसन्निधिः । वरसिंहासनारूढो व्याघ्रवक्त्राह्वयोऽपरः ॥ ३०
चतुरंगबलेनापि महता सेवितो द्विजाः । श्रुत्वा तदा रयान् सर्वैः प्रतस्थे स्वबलैरपम् ॥ ३१
ततस्समभवद्भूतैरसुराणां महद्रणम् । पर्वतैः पादपैरश्वैः पाषाणैरपि निष्ठुरैः ॥ ३२
मृताश्च बहवो दैत्यास्तदानीं रुधिराप्लुताः । व्याघ्रवक्त्रस्ततः कोपाच्छूलमादाय रंहसा ॥ ३३
निर्गत्य पर्वतान्वृक्षांश्छित्त्वा चक्रे महारवम् । निर्जगाम ततस्सिंहो भूत सेनाधिपो महान् ॥ ३४
प्रलयांबुदनिर्घोषमहारावविभीषणः । ताडयामास तं दैत्यशूलेनैव दुरासदाम् ॥ ३५
योजयामास शूलेन स्वेन दैत्यं सुरोऽप्यथ । एवं परस्पराघातात् भिन्नं शूलं तयोर्द्वयोः ॥ ३६
मल्लयुद्धेन घोरेण मारयामास तं सुरः । तस्मिन्मृते तदा देवाः पुष्पाणिववृषुस्तराम् ॥ ३७
प्राप तोषं तदास्वर्थं वीरबाहुर्महाबलः । ततो भूतानि सर्वाणि भित्वा प्राकारमुन्नतम् ॥ ३८
उत्पाट्य गोपुरं रम्यं नुनुदुस्तत्पुरे जवात् । पतनादस्य तत्रत्या बहवो मृतिमापिरे ॥ ३९
प्रविश्य वीरा वीथीषु दैत्यान् हत्वा बहूंस्तदा । गोपुराणि विमानानि वेश्मानि सुबहून्यपि ॥ ४०
बभूवुस्तुमहाग्नया भूतसंघैरभिद्रुधा । चतुरंगबलैश्चाक्षैर्जघ्नुस्तत्र महौजसः ॥ ४१
वीरबाहुस्ततोऽग्नेश्च वायोरस्त्रे उभेसृजत् । योजयामास कोपेन पुरस्य दहनोद्यतः ॥ ४२
दग्धुमग्निस्तदा भीत्या पुरीं तत्र विचिन्तयत् । पत्तने मत्प्रयोक्तासौ किं ममेतिप्रचिन्त्यताम् ॥ ४३
ददाह सुमहारावैर्महाज्वालावलीवृतः । वियद्गमत्र प्रहर्षोऽथ महासन्तापकारकः ॥ ४४
इतस्ततश्च धावद्भिराकुलो वीक्षितोऽसुरैः । दृष्टैतच्छूरपद्मानं प्राप्य दूताः क्षणात्तदा ॥ ४५
शृणु स्वामिन्महादैत्य भानुकोपो यदागतः । तदानीं ते सुरास्सर्वे मोहितास्सरितां पतौ ॥ ४६
मोचितास्स्कन्द शक्त्यातु मोहात्प्राप्य पुरं तव । मारयित्वा बहून् दैत्यान् व्याघ्रवक्त्रमुखान् क्षणात् ॥ [illegible]
अदहन् पत्तनं रम्यं दशशाहस्रयोजनम् । दहतेचाधुनाप्यग्निर्न प्रशाम्यति दैत्यप ॥ ४८
एवमूचुस्ततस्तस्तो निशम्यैषां वचोऽसुरः । कोपं चकार सहसा शूरपद्मा महासुरः ॥ ४९

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धखण्डे पञ्चदशोऽध्यायः ॥

---

कोपादस्य पुरा वेधान् मुक्त्वा तं प्रणमाधुना । तथा चेत्सुप्रसन्नोऽसौ वरं दत्वा यथेप्सितम् ॥ ३३
सर्वाभिस्सहसेनाभिर्गमिष्यति यथागतम् । एवमादि वचः श्रुत्वा हिरण्यस्यात्मजस्य सः ॥ ३४
प्राह तं मन्युना शूरः स्फुरद्दशनवाससा । किमुच्यतेऽधुना भ्रान्त त्वया पण्डितमानिना ॥ ३५
उच्चैर्वदसि तं शम्भुं बालकं मत्पुरोऽपि हि । बोधयामास कोपैवं संहरिष्यामि तं वद ॥ ३६
मदैश्वर्यं बलं वीर्यं नित्यत्वमपि सर्वदा । ममानुजस्य मच्चुभिश्चक्रं त्वक्त्वाद्य ब्रह्मणे ॥ ३७
प्रत्यहं दिनशुद्धिश्च ब्रह्मणोक्ता सहात्मजैः । इन्द्रादि देवतास्सर्वा मत्स्यवाहे नियोजिताः ॥ ३८
दैत्यानां कुलनीतिं त्वमज्ञात्वा किञ्चिदुक्तवान् । ईदृशं पुनरुक्तं चेत् त्वां हनिष्याम्यसंशयम् ॥ ३९
एवं शूरवचः श्रुत्वा हिरण्यः खिन्नमानसः । नश्यत्येवैष महाप्राज्ञः काले प्राप्ते विनाशके ॥ ४०
यथेष्टमस्य वक्तव्यमिति निश्चित्य सोऽसुरः । क्षमस्व तात मद्वाक्यं बोधनाय समीरितम् ॥ ४१
जित्वाहं सह सेनाभिर्बालं जन्यसमागतम् । आगमिष्यामि तेऽभ्याशं कोऽभारस्तज्जये वद ॥ ४२
संप्रेरय रणायैनं मामतो जनकाधुना । इत्युक्त्वा शूरपदाब्जं प्रणनाम तदात्मजः ॥
प्रीत्या निशम्य वाक्यं तदेनं प्रेरयत् द्विजाः ॥ ४३
ततोऽगमत् संगृह्यमुज्ज्वल प्रभो हिरण्यनामा दितिजन्मनां वरः ।
कृताहवान्तः करणो निजानुजैस्सहस्रसंख्यैस्सहसा विनिर्ययौ ॥ ४४

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकांडे षोडशोऽध्यायः ॥

---

॥ अथ सप्तदशोऽध्यायः ॥

शूरकुमारेण हिरण्येन मत्स्यरूपेण समुद्रवासः ॥

विनिर्गतो यदा दैत्यो द्रोणमालाविभूषितः । सहस्रसिंहसंयद्रथमुपसर्पे स्थितः ॥ १
सहस्रसंख्यैस्सेनेशैश्चतुरङ्गबलैस्सह । कांचनमायपुरश्रीभिर्हिरण्याख्यो महासुरः ॥ २
शताभिश्चातसंख्याभिर्वाहिनीनां रथास्तथा । तावत्संख्यास्तथा नागा महापर्वतसन्निभाः ॥ ३
सहस्रवाहिनी संख्या द्विशतैश्च तुरंगमाः । तावत्संख्या सुराश्चपूतनिर्भयमुत्साहसाऽमुना ॥ ४
तदा भेरीरवोऽभ्यासीज्जितांबुधिमहाध्वनिः । आतोद्यानि बहून्येवं ताडितानि समाकुलम् ॥ ५
क्षणेन वीरनिकटं प्राप्याय वसनं स्वकम् । विलोक्य निधिं कोपेन महताथ ज्वलन्निव ॥ ६
चतुर्धा च बलान्याशु विभज्य स महासुरः । सहस्रवाहिनीमानैर्गणितानि पृथक् पृथक् ॥ ७
नियोजयन् चतुर्दिक्षु स्वबलेश्च स्वयं तदा । वीरबाहुं प्रति क्रोधादागतस्समहारवः ॥ ८
वीक्ष्यैनं वीरबाहुश्च कोपमिश्राकुलोऽभवत् । तदानीं महापुत्रेण नारदेन महर्षिणा ॥ ९
वेदितैतद्बलो धीमान् विभज्य स्वबलान्यपि । चतुर्धा विनियोज्याशु स्वबलैस्साकमुज्ज्वलैः ॥ १०
युयुधे स हिरण्येन महारावं विभीषणः । तदा समभवद्युद्धं भूतानामसुरैर्भृशम् ॥ ११
दैत्यसेनाधिपानांच भूतसेनाधिपैस्तथा । वीरानुजानामनुजैस्सहस्रैर्दितिजन्मनः ॥ १२
मुसलैर्मुद्गरैश्चक्रैर्भिण्डिपालैश्च तोमरैः । असिपाशशरैश्शूलवज्रशक्तिकुठारकैः ॥ १३
द्रुमपाषाणगिरिभिर्लगुडैर्लोहकैरपि । छिन्नपाण्यङ्घ्रिशिरसो भिन्नकूर्परनासिकाः ॥ १४
हस्तोरुमणिबन्धाश्च शकलीभूतदन्तकाः । द्विधाभूताङ्गशेषाश्च विशीर्णमपराः परे ॥ १५

अथासन्निपतद्वीरस्तिष्ठतः कर्णलोचनैः । स्रवद्रुधिरमूर्धिभिर्भीषणास्सुभूरी परे ॥ १६
एवं मृताश्च यद्यो मूर्छामापुर्महाभटाः । वीरबाहुरथागत्य दैत्यान्मुक्त्वा शरान्बहून् ॥ १७
अभावयन्महाकोपात् ज्यास्फालरवभीषणः । तदा नदीमहावेगा रुधिरैस्समजायत ॥ १८
नृत्यद्भिश्च कबन्धैस्तु भयदातीव सास्थली । तदा हिरण्यः कोपेन सहस्रैरयुतैरपि ॥ १९
नियुतैः कोटिभिर्बाणैर्भित्वा भूतानिकानिचित् । मोहयित्वा तथान्यानि द्रावयामास सूसुराः ॥ २०
ततः प्रतस्थे नीलाख्यो भूतसेनाधिपो बली । महाकोलाहलारावसंपूरितदिगन्तरः ॥ २१
तस्मिन् दैत्यस्तदा कोपात् मुमोच शक्तिमुज्ज्वलाम् । पतनादस्य नीलोऽसौ मोहं प्राप्य क्षणात् पुनः ॥ २२
सालवृक्षं समादाय बभञ्ज रथमासुरम् । ततो रथान्तरं दैत्यस्समारुह्यातिमन्युना ॥ [illegible]
सायकान्निशितांस्तस्य मुमोचोरसि शीघ्रतः । भूतेशो गिरिमुत्पाट्य महान्तमभिदानवम् ॥ २४
अनुद्रम्याभ्युनातीव महारवेण भीषयन् । अच्छिनत्तं गिरिं दैत्यस्त्रिभिरेव शरैस्तदा ॥ २५
अभिक्रम्य ततो देवस्स दैत्यं रथमुत्क्षिपम् । क्षेपयामास वेगेन महता पर्वतोपमम् ॥ २६
सोऽपि सेनापमाकाशं गत्वा भूयो निवृत्य च । रथमन्यं समारोढुं यद्वागाद्दानवो जवात् ॥ २७
तदैव नीलस्तं प्राप्य ताडयामास वक्षसि । ततोऽसुरो गृहीत्वैनमक्षिपत्पाणिना तदा ॥ २८
ससंभ्रममथागत्य भूत सेनाधिपो महान् । पादेन ताडयित्वैनं चकारारथमुद्यणम् ॥ २९
पतितं व्योमतो मह्यां दृष्ट्वैनं दानवेश्वरम् । पपाताम्बो परिजयात् नीलः कोलाहलारवैः ॥ ३०
स्रवद्रुधिरवक्त्रोऽसौ तदा मूर्छामवाप्य च । निवृत्तमूर्छस्सहसा योद्धुं नीलेन दैत्यराट् ॥ ३१
ससार स्वाहृति काश्चिन्मायी मायामयी द्विजाः । तथैव निर्गतस्तस्यो हिरण्याक्षोऽद्भुतासुरः ॥ ३२
अपुष्पकेन देवेन महाभाग विभीषणः । तमेनं ताडयामास नीलोऽमिथ्यासुरं भृशम् ॥ ३३
दण्डेन पृथुना मूर्ध्नि महता मन्युना तदा । भ्राम्य मोह रथोर्ध्वं तु पतित्वा भूतले क्षणात् ॥ ३४
पुनरेत्य तमोऽध्यक्षोऽसिहस्तवान् । आगतेनाथ नीलेन युद्धं कृत्वातिदारुणम् ॥ ३५
क्षणेन पृथिवीं प्राप हतकोलाहलारवः । आगत्य तत्र नीलोऽपि तमेनं युयुधे तदा ॥ ३६
युध्यन्निव तृषा दैत्यस्समुद्रमनयत्सुरम् । द्वीपाद् द्वीपं प्रयात्यन्यद्वनं चैवातिभीषणम् ॥ ३७
पर्वतात्पर्वतपरं कन्दरात्कन्दरं महत् । लोकालोकान्तरं नीलमानयित्वा महाबलम् ॥ ३८
अकरोत् खिन्नमनसं भ्रामयित्वा पुनः पुनः । तदा शूरतमो दैत्यो हिरण्यः प्राप्तचेतनः ॥ ३९
मायामयेन दैत्येन सार्कं तमयुध्यत द्विजाः । अधिष्ठाय [illegible] चाप्यमभेद्यं महत् क्रुधा ॥ ४०
तुतोद नीलं दैत्योऽसौ महाबलपराक्रमम् । मुमोह सहसा नीलो स्रवद्रुधिरविप्लुतः ॥ ४१
मोहितं वीरबाहुस्तु ज्ञात्वा तं कृतकोपतः । विज्ञाय मायां दैत्यस्य विधानार्थं तदात्यजत् ॥ ४२
स्वकमायाहृतो दैत्यस्तस्थे केवल पवसः । तस्मिंस्तदा वीरबाहो सहस्राणि शरानयम् ॥ ४३
अन्दधे सहसा वीरे गर्जन्समहारवम् । पतित्वा तदुरोमध्ये कुण्ठीभावं गताश्च ते ॥ ४४
ततः कोपेन महता वीरबाहुर्निशितैश्शरैः । ध्वजकवचबाणानि चिच्छेदास्य क्षणाद्द्वयम् ॥ ४५
चापान्तरं यदा दैत्यो जग्राह सहस्रावली । छित्वा तदा हिरण्यस्य कार्मुकं शरधिं शरान् ॥ ४६
रथं ससूतं सुपृष्ठे सहस्रैश्च सतान सः । बिभेद वज्रसमहत् पुनः कुन्ददरादैरयम् ॥ ४७
रथमन्यं समारोढुं प्रवृत्ते दानवेश्वरे । रथं तं सहसा छित्वा बहुभिस्सायकैस्सुरः ॥ ४८
यमस्थान्यान् रथान् सर्वांस्तत्र स्थितान् पुनः । चकर्त हिरण्योऽसौ चिन्तामाप तदा भृशम् ॥ ४९
विनष्टमायुधं सर्वं मदीयं बलमप्यहो । संहरिष्यत्ययं दैत्यान् चन्द्रहास सुरानपि ॥ ५०

मत्पिता शूरपद्मासौ बहुपुत्रानजीजनत् । तेषु पिण्डप्रदानाय यदि कश्चित् स्थितोऽस्तिचेत् ॥ ५१
तदा यशो जगत्यस्मिन्नन्यथा त्वयशो भवेत् । तस्मात्पिण्डप्रदानाय मया स्थातव्यमस्यहि ॥ ५२
इति निश्चित्य मनसा मायया रूपमग्रहीत् । क्षणेन वारिधिं प्राप्य मत्स्य रूपं समास्थितः ॥ ५३
तथा त्रिविधसेनापि वैस्तैर्मृतिमवापहि । दृष्ट्वा पलायनं तस्य भूतानि सुमहारवान् ॥ ५४
चक्रुस्सुनिभृतात्यन्तं भूतसेनाधिपा अपि । दध्मौ शङ्खं महारावं वीरबाहुस्तदा भृशम् ॥ ५५
अकिरन्निर्जरावीरे सुगन्धिकुसुमान्यपि । शूरपद्मा निशम्यैतद्वृत्तान्तं दूतवक्त्रतः ॥ ५६
महापद्मस्तदा तस्थे महता मन्युना ज्वलन् । ततस्समागतस्तस्य तनुजोऽग्निमुखोऽसुरः ॥ ५७
यो दिग्गजान् सुपर्वांस्तद्भ्रांश्च महाजवान् । गृहीत्वा चतुरङ्गेन क्रीडतिस्म महाबलः ॥ ५८
गर्भेवसत्यथामातुस्सन्तापमकरोत् भृशम् । मायया तत्पितामहा चाहूतोऽग्निमुखाख्यया ॥ ५९
यो विष्णोर्गरुडं धातुर्हंसमानीय शैशवे । अकरोल्लीलया क्रीडां बध्वा रज्वा महाबलः ॥ ६०
ज्येष्ठेन वन्धितो भ्रातुरित्ययं शर्वरीश्वरम् । गृहीत्वा पीडयामास दुरात्मा पापकर्म हन् ॥ ६१
सर्वदेवाल्ल संपभो महामायी महाबलः । तादृशोऽग्निमुखो नत्वा पितरं वाक्यमुक्तवान् ॥ ६२
विचारः क्रियते तात किमर्थं भवताप्यहो । निर्जितब्रह्म विष्ण्वादि देवेन नमितानमम् ॥ ६३
इति पृष्टस्तदावदे पुत्रमासुरनायकः । देवसेनापतेर्दूतो वीरबाहुरिहोऽधुना ॥ ६४
दृष्ट्वाऽस्मन्नगरं रम्यं करदति सज्जनैरयम् । प्रेषिता मेघमालाश्च वहेः प्रयाणनाय ते ॥ ६५
पराक्रमयुतेनेन भर्त्सिता रणमूर्धनि । त्वद्भ्राता सहिरण्योऽपि युद्धं कृत्वाऽमुना पली ॥ ६६
निर्जितोऽब्धि गतस्तत्र वर्तते रूपभेदवान् । अनेनमारिता दैत्या बहवो बलशालिनः ॥ ६७
एवं पितुर्वचः श्रुत्वा जगादाग्निमुखोऽसुरः । अहो तात विचारः कस्तवदूतभये वद ॥ ६८
जित्वा समेनमायोधे त्वत्पार्श्वं शिरसा वहन् । आगमिष्यामि निकटं तस्यं प्रेरयस्व प्रभो ॥ ६९
शूरस्य वचसा तेन प्रेरितोऽग्निमुखस्तदा । प्राप्य वेश्म स्वकं रम्यं सदामीवेष भूसुरा ॥ ७०
मायया धनमतुलं गृहीत्वा चापमद्भुतम् । धृतदेवबराब्धौघस्सर्वायुधधरो महान् ॥ ७१
सहस्रवाहिनीनागैस्तावत्संख्यरथैरपि । द्विसहस्रैश्च वाजिभ्यास्तुरङ्गैर्वायुवेगिभिः ॥ ७२
अनेक वाहिनी दैत्यैरावृतः परितो वहेः । सोमकण्टक सोमाख्यौ तथा वै सूर्यशत्रुणा ॥ ७३
मेघपिङ्गलकाख्यांच सेनेशैर्बहुभिः परैः । कालभैरवहुभिस्तद्वत् ध्वजैश्छत्रैरूपशोभितैः ॥ ७४
महता वाद्यघोषेण महाधूलिभिरावृतः । सूर्यस्योदयवेलायां वरेण्युद्ध भूतलम् ॥
प्राप तीव्रप्रतापेन यत्र वीरा वसन्ति ते ॥ ७५

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवारहस्यखण्डे
युद्धकाण्डे सप्तदशोऽध्यायः ॥

---

॥ अथ अष्टादशोऽध्यायः ॥

वीरबाहुना शूरपुत्रस्य अग्निमुखस्य वधः ॥

तदानीमभवद्युद्धं सेनयोरुभयोर्भृशम् । परस्परांहतिनोर्द्रुमपर्वतजालकैः ॥ १
लक्षवीरास्ततः कोपान्निर्गत्य सहसाऽसुरान् । द्रावयन्तिस्म पार्श्वस्तान्महायसविशारदाः ॥ २
ततः प्रतस्थिरे सोमकंटको मेघसंज्ञकः । सोमश्च वैरि सेनेशा महाभ्वेळादयाः क्षणात् ॥ ३

युयुधुस्तान् सप्तवीरान् शरैर्व्यैर्महायुधै. । ततो मृताधिपश्शीघ्रं महान् वीरपुरन्दरः ॥ ४
निर्गत्य बाणान्मुक्त्वाथ छित्वा तेषां रथानपि । सोमकष्टकनामानं हतवान् सायकैः क्षणात् ॥ ५
अथ दैत्याधिपास्सर्वे रथानारुह्य रहसा । चक्रुस्तयोधनं घोरं महारावं विभीषणा ॥ ६
तत. कोपेन महता रथास्तेषां धनूंष्यपि । छित्वा निशितदोर्दण्ड वक्षस्सु निशितान् शरान् ॥ ७
मुक्त्वाशु सुमहावीरो महानादं चकार हि । अथ मेघो महावेगात् गृहीत्वा दण्डमुन्नतम् ॥ ८
संभ्राम्य ताडय तत्सूतं हतवानसुराधिप. । तद्दृष्ट्वा सहसावीरो महामर्षो महाबल. ॥ ९
भित्वा वक्षस्तदीयं च शक्त्या स हतवान् क्षणात् । पलायिताश्च ते सर्वे दैत्य सेनाधिपास्तदा ॥ १०
स्वसेनाधाधनं दृष्ट्वा महानग्निमुखोऽसुर । वर्षन्शरान् बहून्भूतसेनाश्चाद्रावयत्क्रुधा ॥ ११
समागत्य महावीरो याणा·वीरपुरन्दर. । सन्दधेऽग्निमुखे तस्मिन्महाकोलाहलारव ॥ १२
ततो दितिजवर्योऽसौ निपद्य तद्द धनु । छित्वा शरैः पुनश्शक्त्या मोहयामास स क्षणात् ॥ १३
तदानीं सप्तवीराश्च वीक्ष्य वीरपुरन्दरम् । मोहितं मनुमालीय महाकोपेन संयुता ॥ १४
सहस्राणि युद्धे तस्य बाहापसद्भये तथा । प्रेरयित्वा यमहस्तद्वयं बाणैस्समुन्नतम् ॥ १५
अथ दाम्दामघोऽप्योवद् उच्चकान्मन्युना भृशम् । जित्वा युष्मान्वीरबाहु जयिष्यामि क्षणादहम् ॥ १६
तदिदं वचनं तस्य निशम्यैते महाबला. । छित्वा रथतुरगांश्च महाकोपाकुलाश्शरैः ॥ १७
चिच्छिदुस्तस्य चक्राणि महापाषाणनिघ्नम् । तत. क्षणेन दैत्योऽसौ स्फुरदग्नि विलोचन ॥ १८
आरुह्याशु रथं चान्यं अस्त्र पाशुपतं महत् । कल्पान्त तत् क्षणेनैव स्फुरदग्नि विनिर्गतम् ॥ १९
मत्वा तदस्त्रं ते वीराव्यवहत्वमिति भूसुरा । पावकं तत्पुरस्सर्वे व्यग्रचित्तास्तदा भृशम् ॥ २०
कपलीशस्य तस्यापामस्त्रं पाशुपतं महत् । अमारयत् क्षणेनैषा·महावीरानदो छित्वा ॥ २१
महाकोलाहलं चक्रे तान् दृष्ट्वाऽपि मुसलस्तदा । भूतानि दुद्रुवुर्भीता· प्रापुर्दुःख पलाधिपा ॥ २२
तदानीं वीरबाहुस्तु दृष्ट्वा तत्सहसागत । महाटोपवदैत्येषु केसरीव गजेश्वरम् ॥ २३
तमायान्तमसौ दैत्य प्रेक्ष्यवाचमुवाच हि । ममारयस्त्वमसुरान् बहून् पूर्वं रणान्तरे ॥ २४
जयिष्यामि क्षणेनाहं त्वामभ्यागतमत्र च । त्वां विजेतुमशक्तोयं स्त्रीसमोऽसीन्द्रय तथा ॥ २५
इति ब्रुवन्त स वीरो अगाद वचनं क्रुधा । हिरण्यो मधुर स्यातु दिवामीतोरवैर्यथा ॥ २६
महाकुम्भमहादैत्यो महामायी पलायित । भानुकोपो महापापो माथा कृत्वा गत दिवं ॥ २७
भागमिष्यत्यय युद्धं संहरिष्यामि त तदा । युधिष्यति मयाद्यापि पलायिष्यति [illegible] गत ॥ २८
युष्मान्न त्वां हनिष्यामि येन केनापि रक्षितम् । इत्युक्त्वा चापमादाय सन्धायाशु गुणेन स ॥ २९
चकार निस्वनं भीमं महाकोपेन संयुत । तदानीमकरोद्दैत्यो गुणारावं भयानकम् ॥ ३०
श्रुत्वा ते तद्गुणारावान् विमुखस्सर्वे सुरा तदा । तत कोपेन दैत्योऽथ महता वाहिना ज्वलन् ॥ ३१
चतुर्दश शरास्तीक्ष्णानभिवेषमयोजयत् । तावद्भिस्सायकैश्छित्वा वीरबाहु क्षणेन तान् ॥ ३२
महाकोलाहलं चक्रे ब्रह्माण्डं पूरयन्निव । तस्मिन्नग्निमुखः कोपात् चिरात्संधायाक्सादश्चाम् ॥ ३३
तस्याग्र सुमहारावो मर्त्सयन्परुषोक्तिभि । तावद्भिरेव तान्सर्वांनच्छिनद्भूतनायक ॥ ३४
श्रुत्वा सहस्र भूपोऽपि दैत्यश्शङ्खं निनाद स । तच्छिद्यमानो देवोऽथ स्फुरद्दन्तच्छदो भृशम् ॥ ३५
रथाश्वपार्श्वयन्तारं तावत्ताच्छिन्नदुर्मुखा । दानवश्शीघ्रमारुह्य रथमन्य समुन्नतम् ॥ ३६
संधाय दण्डं पृथुलं मुहुर्वान्वीरपर्वणि । तमायान्तमथ घोरं चिच्छेदाशस्त्रं रणे ॥ ३७

पुनर्दिविजवर्योऽयं गृहीत्वा धनुरद्भुतम् । वायुसर्पयमास्त्राणि मुमोच सहसा रुषा ॥ ३८
तान्येव मुक्त्वा वीरोऽसावाच्छिद्यैतानि कोपतः । मुक्तवान् शितमेतस्मिन् अग्निवक्त्रे महाऽसुरे ॥ ३९
तच्छराक्रमितो दैत्यो मूर्छामाप स्वके रथे । क्षणेन त्यक्तमूर्छोऽयं कालीं सस्मार पूजिताम् ॥ ४०
प्रादुरासीत् भद्रकाली सैंहमारुह्य वाहनम् । चापशूलपरश्वादि वरायुधकरा तदा ॥ ४१
अनेककोटि काळीभिर्वृताभिश्च परीवृता । महता वाद्यघोषेण संपूरितदिगन्तरा ॥ ४२
तादृशीं भद्रकालीं तां दृष्ट्वा प्रार्थितवानयम् । अयेन भद्रकाल्यद्य भद्रदेवाश्रिताय भो ॥ ४३
वीरबाहुं महाघोरं अद्य शत्रुं निबर्हये । इति वादिनमेनं सा आहवार्थं तथेति च ॥ ४४
विनिर्गता महाघोरा महारावेण भीषणा । तां वीक्ष्य सहसा वीरास्सर्वे बिभ्युर्द्विजोत्तमाः ॥ ४५
समादायाथ सा घोरा शूलं तस्मिन्युयोज ह । धूळीचकार तच्छीघ्रं चतुर्दशभिरेष सः ॥ ४६
पुनश्च भर्त्सयन्ती सा कटुवाचा सुरेश्वरी । महाघोरं महातीक्ष्णं शूलं तत्याज निष्ठुरा ॥ ४७
तदप्ययं महाकोपात्सहस्रैश्छिन्नवद्बली । ततस्ससंभ्रमा सा तु महाकोपेन वाहनात् ॥ ४८
अवरुह्य समादाय खड्गमत्यन्तभीषणम् । हन्तुकामा गतावीरं क्षणेनाप महाजवात् ॥ ४९
तदानीं वीरबाहुस्तु तां वीक्ष्याभ्यासमागताम् । स्त्रियश्च हननात्पापमिति मत्वा मनस्वी ॥ ५०
भर्त्सयित्वा भुजानष्टा तदीयान्सभुजेन सः । गृहीत्वाऽन्येन हस्तेन ताडयामास वक्षसि ॥ ५१
उद्वमन्ती मूर्छा रक्तमास्येन पृथिवीतले । क्षणाद्धीनसत्वा सा पतित्वा पुनरुत्थिता ॥ ५२
सहोदरेण स्कन्दस्य युद्धं न जयप्रदम् । इति ज्ञात्वा मनस्येषा वीरबाहुं महाबलम् ॥ ५३
त्वदीयं बलमज्ञात्वा संगतास्म्यद्य भक्तितः । ज्ञात्वा स्वयमपि पक्षेव भानुकोपादिहानयाम् ॥ ५४
स्कन्द प्रसाद संपन्नो भव वीर महाबल । एवमादि वचः प्रोक्त्वा स्तुत्वा तं तदनुज्ञया ॥ ५५
सिंहमारुह्य वेगेन स्वालयमगमत् द्विजाः । ज्ञात्वा गतां भद्रकालीमग्निवक्त्रो महाऽसुरः ॥ ५६
अनया वा रिपून्सर्वान्क्षयं रणमध्यगान् । तस्याः पराक्रमं द्रष्टुं मया सा सुस्मृता खलु ॥ ५७
नहि युद्धे परापेक्षा ममास्ति भुवनत्रये । अहमेव रिपून् सर्वान् हनिष्यामि क्षणेन च । ५८
अन्यथा पितरं शूरं नमिष्यामि सत्यतः । इत्येवं शपथं शीघ्रादुत्थितो दैत्यवल्लभः ॥ ५९
महता सिंहनादेन पूरिताशो महाबलः । शतं नाराच्यं तत्याज वीरबाहौ महद्रुषा ॥ ६०
वीरोऽपि तच्छरैमैव छित्वा तस्मिन्महासुरे । अवर्ष भूयः कोपेन बहून्बाणान्महाजवान् ॥ ६१
तानयं दैत्यराजस्तु शतैर्मोच्छिद्य वीर्यवान् । शैलावलिं चक्रराशु महाप्रलयमेषयत् ॥ ६२
ससंभ्रमं ततो वीरश्चतुर्दशभिरस्त्रैः सः । भित्त्वा धनुर्महोच्छ्राये चक्रे कोलाहलारवम् ॥ ६३
तमाकर्ण्य महाकोपादग्निवक्त्रोऽसुरेश्वरः । सन्दधे महापाशास्त्रं सर्वशत्रुनिबर्हणम् ॥ ६४
नानाविधास्त्ररूपेण निर्गतास्तदा जगत् । तदैव वीरभद्रास्त्रं वीरबाहुर्युयोज ह ॥ ६५
महाघोरं महाभीमं अस्त्रं तद्ग्रसमाशु च । करवालीहस्त वेगेन छित्वा तस्य शिरो महत् ॥
पातयित्वा महीपृष्ठे मारयामास तं द्विजाः । ६६

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे एकादशोऽध्यायः ॥

॥ अथ एकोनविंशोऽध्यायः ॥

वीरबाहु प्रेषित पत्रिकां दृष्ट्वा यमेन तद्भ्रातृणां पुनरुज्जीवनम् ॥

ततस्तन्मरणं ज्ञात्वा सहसैन्यैस्सकैर्वरैः । चतुर्विंशत्सहस्राणि सेनानामधिपाः पराः ॥ १
संभूय सहसा सर्वे ववर्षुस्सायकान् शितान् । संरम्भिणश्च नितरां घर्मकालघना इव ॥ २
तेषु दैत्येषु देवोऽपि शतकोटि शरानयम् । वर्षयन्द्रावयामास सर्वांश्चिद्बलशालिनः ॥ ३
आयुधानि तथान्येषां छित्वा तानभिवन्दितान् । विहाय बलवानन्यान् मारयामास भूयसः ॥ ४
तदा केचिद्दितिसुता मृतानारोप्य वर्ष्मसु । वसुमारभरात्क्रान्ता मार्गे विधिचोदिताः ॥ ५
अलीकवीर विज्ञानादन्येऽपि भृशमोहिताः । सञ्जातायामसृङ्नद्यां पतित्वा केचनासुराः ॥ ६
पयोधिं प्राप्य यदयो निधनं प्रापिरे वत । छिन्नमूर्धशरीराणि नटन्ति स्म बहून्यपि ॥ ७
बभ्रमुः काककङ्काद्याः पक्षिणो मांस लिप्सवः । तदा किलिकिलारावाः पत्तने तत्र तत्र च ॥ ८
जनानां रोदनारावास्संबभूवुस्समन्ततः । तदानीं देवतास्सर्वाः पुष्पाणि सुबहून्यपि ॥ ९
मुदा वर्षाणि वस्त्राणि चोत्क्षिप्योत्क्षिप्य हस्ततः । ननृतुस्सुमहाराजाः प्रीतिसंफुल्लमानसाः ॥ १०
तथा भूतानि सर्वाणि भूतसेनाधिपा अपि । स्वक मोदात्तदा वीर यमोनाम सुरेश्वरः ॥ ११
प्रोवाच वचनं धीमान्वीरबाहु समीक्ष्य सः । शतयोजनदूरेण वटवृक्षस्थितो महान् ॥ १२
तत्र ते विगतप्राणा वृक्षमूले तवानुजाः । यमोऽपि सेवामादाय प्राणान् स्वपुरमाययौ ॥ १३
इति श्रुत्वा वचस्तस्य वीरबाहुस्सुदुःखितः । स्वबलस्यादकमहावीर्यं तत्र गत्वा निजानुजान् ॥ १४
दृष्ट्वा परवशं मातान्पतित्वा तेषु मोहितः । मुक्तमोदः क्षणाद्भूयो प्रलप्य बहुधाप्ययम् ॥ १५
शिवाक्षेणाभिविद्धार्थमस्याय कर्ईशिता । विश्वजाबालसो मूर्धस्तु प्रक्षण्यानुजानिमाम् ॥ १६
मृकण्डुसूनुमुद्दिश्य शासनश्च पुराकृतम् । अर्पयामास यःपूर्वं हरेति क्षणमुक्तवान् ॥ १७
तद्वर्षं धर्मपादेन कृतं धै शासनं भृशम् । तथा दुस्साकदुर्मत्योरर्थे वसाधनं कृतम् ॥ १८
श्वेतकेत्वभिधस्यार्थे पुरा यत्ताडनं कृतम् । अस्मर्यते किं तत्सर्वं मन्तकेन प्रमादिना ॥ १९
मार्गे विभूतिरुद्राक्षधारिणामपराधतः । वर्तते तादृशः कोऽयं मदद्रत्वेवमाचके ॥ २०
लिखित्वा प्रेषयामास यमलोक महत्क्रुधा । तत्खं शीघ्रतो गत्वा यमलोकं तदन्तिके ॥ २१
भाषयन् सकलाः काष्ठा निपपात महाज्ज्वाल् । धर्मराजस्तदुद्धृत्य किमेतदिति विस्मितः ॥ २२
वाचयित्वानु विज्ञाय महाभीतिमवापसः । ततस्तु तान्यमो ज्ञात्वा कैलासे पर्वतोत्तमे ॥ २३
ज्ञानदृष्ट्या विचार्यायं मोदमानानमहेशयान् । तत्र कैश्चैश्चैस्सर्वैर्नानारूपैर्विभीषणैः ॥ २४
महान्तं महिषं भीममधिष्ठाय ययौ यमः । तत्र दृष्ट्वा महावीरानुद्यानवनवासिनः ॥ २५
असुरैर्मोहितैर्भूतैः आवृतान् दिव्यरूपिणः । गायद्भिर्गान्धर्वैर्नृत्यद्भिप्सरोभिः परिष्कृतान् ॥ २६
मदनानन्दसम्पूर्णान् मण्डितान् भूषणैरपि । वीक्ष्य सान्त्वमणम्याय समवर्तीकृताञ्जलिः ॥ [illegible]
भोभो वीरा मया यूयमानीता इति भाषितः । वर्तते वीरबाहुस्तु महाकोपेन संयुतः ॥ २८
तद्यूयं च इयां इत्वा मयि सर्वे महौजसः । आगच्छन्तां पुनस्तत्र संप्रार्थ्यैवं परेतराट् ॥ २९
प्रेषयामास पुरतो वीरबाहोस्सुरेश्वरान् । तदानीमुत्थिता वीरास्स्वापादिव महौजसः ॥ ३०
वीरबाहुस्तु तान्वीरान्वीक्ष्यालिङ्ग्य मुहुर्मुहुः । शिरांस्येषां समाघ्राय प्रीतिमाप तदाभृशम् ॥ ३१
तदानीमागतस्सोऽपि धर्मराजस्त्वरायुतः । प्रणम्य च महावीरं प्रोवाच विनयान्वितः ॥ ३२
गणपते वा मया तव भस्मरुद्राक्षधारिणाम् । एतस्यामपि भोवीर क्रोशमान (दिवरात्रि) गणान्वितः

एते तवानुजा वीराः कैलासे संस्थिता मुदा । आहूयतानागतोऽस्मि मीसाभ्यां सुरेश्वर ॥ ३४
अद्य कोपं दयां त्यक्त्वा मयि त्वं करुणानिधे । इत्युक्तवन्तं वीरासं वीरबाहुस्तदाऽब्रवीत् ॥ ३५
शिवप्रियस्त्वं नितरां शिवभक्तप्रियस्तथा । त्वयैवं क्रियते चात्र त्यज भीतिं ममाधुना ॥ ३६
एतेषां मरणं ज्ञात्वा दुःखार्तेन मया यम । त्वया हतमिति भ्रान्तं सत्यमेव विमोहनात् ॥ ३७
गच्छस्व पुरमद्यात्र यथापूर्वं शिवाज्ञया । एवं ह्याप्यनुज्ञोऽयं वीरेण शमनस्तदा ॥ ३८
प्राप स्वसैन्यैः स्वपुरं प्रणम्येव महीसुराः । तदा ववृषुः पुष्पाणि देवास्तस्मिन्सुरेश्वरे ॥ ३९
कोलाहलं ततश्चक्रुर्भूतान्यपि सहाधिपैः । एवं वीरैर्वृतस्तस्थौ वीरबाहुर्यदा द्विजाः ॥ ४०
तदैव दूतास्तत्सर्वं वृत्तान्तं शूरमूचिरे । श्रुत्वा दूतमुखेभ्यस्तु शूरपद्मा तदाद्भुतम् ॥ ४१
करोद्वास्मिन्मुखायासी मृतावसनुजावहि । शिवस्य सर्वास्तत्राशु हाहेति रुरुदुस्तराम् ॥ ४२
दुःखिता दितिजन्मानस्सर्वे तत्पुरवासिनः । तदानीमागताः पुत्राश्शूरस्य त्रिसहस्रकाः ॥ ४३
सर्वेऽपि ते समुद्वीक्ष्य शूरस्तुस्सुदुःखिताः । वीरैरेतैरसंख्यैर्भूतैश्च बलशालिभिः ॥ ४४
एकोऽयमेभिः प्रबलैर्युद्धाय प्रेरितः कथम् । मृते तस्मिन् त्वया तात किं दुःखं प्राप्यते वद ॥ ४५
तिष्ठामश्च वयं सर्वे जीवन्तो बलशालिनः । हिरण्यभानुकोपौ च महावीर्य पराक्रमी ॥ ४६
सेनासुतेतिव भवान् विचारं किं करोति भो । शोषणोऽपि समुद्रस्य नहि क्षोभो बलस्य नः ॥ ४७
नेदं व्यत्यासयिष्यामः क्रिया पर्वत यत्नमम् । आद्यं शमयिष्यामो यथेच्छं प्रेरयाशु नः ॥ ४८
भूतवीरं शिवान् जित्वा गमिष्यामस्तवान्तिकम् । एवमुक्तस्तु तान् शूरो रणाय प्रेरयत्सुतान् ॥ ४९
लब्ध्वानुज्ञास्ततस्सर्वे सुसन्नद्धा महौजसः । भूत द्रोण सजो रथ्याश्वयांस्तुंगानधिष्ठिताः ॥ ५०
अनेकैश्च महाशूरैश्चतुरंगबलैस्सह । बलघोषैर्जितांबोधिघोषैश्शंखैर्जयैरपि ॥ ५१
प्रस्थिताश्शूरपुत्रास्ते युवानः स्थिरविक्रमाः । तदा ननर्त पृथिवी भारमोक्षो भवेत ध्रुवम् ॥ ५२
एतेषां मरणाच्छीघ्रं ममेतिव महीसुराः । बभ्रमुः कङ्ककाकाश्च तेषामुपरि भीषणाः ॥ ५३
उल्कामयोऽपि सर्वत्र पेतुः क्षोण्यां सुदारुणाः । छत्रोपरिस्थितास्त्वेषां वैकालरूपिणः ॥ [illegible]
शकुनं संमुखं वै भाविमृत्युप्रसूचकम् । अगणय्य तदा ते तद् जगमन् रणमण्डलम् ॥ ५५
बलयोरुभयोरत्र बभूव तुमुलं रणम् । वृक्ष पर्वत पाषाण वर्षैर्योर्नितरां तदा ॥ ५६
भूतसैन्यैर्महावीरैः परिभूताश्च दानवाः । हतास्ततश्च परितो दुद्रुवुर्योद्धुमक्षमाः ॥ ५७
तान् दृष्ट्वा सुकुमारास्ते कुमाराश्शूरपद्मनः । गुणानारोपयित्वाशु चापेषु सुदृढेषु च ॥ ५८
आस्फालयित्वा तान् सर्वान्महारावविभीषणान् । भव्यपुंखायकानुग्राञ्शितशिखान्सुस्थिरान् बहून् । ५९
पलायन्त तदा त्वन्तं भूतान्यपि समन्ततः । ततश्च भूतसेनान्यः प्रमथश्च महाबलाः ॥ ६०
प्रस्थितास्सहसा भीमा महारावपराक्रमात् । वृक्षैश्च पर्वतैर्दण्डैरास्फाल्याश्वान्रथानपि ॥ ६१
सूतानाताड्य पादैश्च रथान्नुत्क्षिप्य चापरान् । मुसलैरायसैस्तेषामुपरस्थुसुमहत्स्वपि ॥ ६२
संताड्यच शिरांस्येषां छित्वा परशुभिस्तथा । केषांचित् पर्वतांस्तुंगानुत्क्षिप्योत्क्षिप्य कोपतः ॥ ६३
भित्वा धनूंषि चान्येषामेवं युयुधिरे भृशम् । एवमेतान् महावीरान् सेनान्युध्यततो भृशम् ॥ ६४
शूरात्मजाः पुनस्सर्वे दृष्ट्वा जन्यं रुषान्विताः । नवपुंखेस्रमाणि प्रज्वलन्ति महान्ति च ॥ ६५

तैर्विद्धदेहास्ते सेनेशाः किंचिद् दीनास्तदाऽभवन् । ततो लक्षामरेशेभ्यो विजयाद्यो जयप्रदः ॥ ६६
अतिघोराघलास्तद्वत् कवीरनृपादयः । अनन्तवामनोऽनन्तवारुणश्चान्तको महान् ॥ ६७
अकलंको निर्गुणको मारुतश्चाद्रिकण्टकः । तथाद्वात्रलिश्चैव निर्गतास्तु सहस्रकाः ॥ ६८
ते सर्वे सङ्गतास्तत्र वधं तेषां दुरात्मनाम् । हन्तुमालोचयित्वाथ वीरबाहुं व्यजिज्ञपन् ॥ ६९
लब्धानुज्ञा महावीराः क्षणेनासाद्य तान्रिपून् । ववर्षुश्च शरांस्तीक्ष्णान् महाकोपेन भीषणाः ॥ ७०
परस्परं तदा तेषां महद्युद्धं बभूव हि । ततस्तेषां सहस्राणां रथान् दैत्यास्तदाच्छिदन् ॥ ७१
सहस्रसंख्यास्ते वीरास्तद्ध्वजान्कार्मुकानपि । छित्वा शुभ्ररथान् सर्वान् बभञ्जुः पर्वतोपमान् ॥ ७२
भूमिमास्थाय दैत्यास्तु वृक्षान्गुल्मान्यपर्वतान् । अचिक्षिपन् सुरेष्वेषु महाकोलाहलारवाः ॥ ७३
सहस्रसंख्या वीरास्तु तान् छित्वा निशितैश्शरैः । आग्नेयास्त्राणि घोराणि मुमुचुर्दानवेषु ते ॥ ७४
तच्छरैर्भिद्यमानांगास्त्रस्यद्रुधिरमण्डिताः । मुमुहुर्दानवाः केचित् युयुधुश्च परैः परे ॥ ७५
केचिद्वीरास्त्यामध्यायुधिक्षिपुरुद्धोबलाः । वीरास्तु सहसा भूमौ पतिता रणगर्विताः ॥ ७६
आक्रदान्परस्पाभूयो ववर्षुस्सायकान् बहून् । तच्छरैः पीड्यमानास्ते दानवा भृशकोपिताः ॥
सन्नद्धास्सहसा तेषां बभञ्जुश्च धनूंष्यपि ॥ ७७

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे एकोनविंशोऽध्यायः ॥

---

॥ अथ विंशोऽध्यायः ॥

वीरबाहुना धर्मकोपस्य मारणम् ॥

पुनश्च तेषामन्योन्यमलं युद्धमभूत्तदा । खेदमापुस्तदा देवा दैत्यैस्सन्ताडिता भृशम् ॥ १
ततस्तु विजयश्श्रीमान् तेषु वीरो महाबलः । लब्ध्वा चापं निषंगं च शरपूर्णं महेश्वरात् ॥ २
ववर्ष तेषु दैत्येषु महता मन्युना शरान् । तन्मुक्तास्सहसा तेषां शिरांस्युच्छिद्य सायकाः ॥ ३
इतस्ततश्च पतिताः पेतुरब्धिषु तैस्सह । पुनरुत्पन्नशिरसः क्षणादेव तदासुराः ॥ ४
बभूवुस्ते महाटोपा युयुधुः सायुधैस्सुरम् । पुनश्च तान्महाकोपात् पाणिपादशिरांस्ययम् ॥ ५
अच्छिनद्वाणपंक्तिभिर्भीमवेगैर्महारवैः । तथैवैते समुत्थायास्तथावशाः पातितोऽसुराः ॥ ६
ववर्षुस्सायकानुग्रान् विजये दुर्जयेऽरिभिः । एवं बहुप्रकारेण छित्वोत्पन्नोत्तमांगकान् ॥ ७
वीक्ष्य तेन मनस्यन्तर्विचार्य विजयस्तदा । अहो गुह महाबाहो सर्वदैत्यनिषूदन ॥ ८
किं कर्तव्यं मया स्वामिन्नेते मायाविनोऽसुराः । जातयत्नैर्ममूर्धानश्छेदितेष्वपि तेऽपिह ॥ ९
युध्यंस्त्यक्तुमनसस्सर्वे युगपदेव माम् । इति दुःखितचित्तोऽयं स्मृत्वा देवं गुहं हृदि ॥ १०
प्रादुरासीच्च भगवांस्तस्मै शीघ्रमुमासुतः । विजयाद्य जयश्रीश्च तव भूयान्महाशय ॥ ११
एते लब्धवराः पापाः ब्रह्मणः पूर्वजन्मनः । पयवेन शरोपैतं वक्रदेव महाबल ॥ १२
आच्छिन्नानि शिरांस्याशु सद्य एव भवेत् । एषु यः कोऽपि मुच्येत तदैषां न मृतिः किल ॥ १३
तस्मात्त्वं सहसा वीर शरेणैतेन तानिमान् । मारयोच्छिद्य मूर्धानं महाशक्ति गरीयसी ॥ १४
इति येन विधातुं वै शिरश्छेदं चकार सः । दत्वा मदद्भुतास्त्रं भैरवं दनुसंहती ॥ १५
अन्तर्दधे क्षणादेव भगवान्पार्वतीसुतः । लब्धास्त्रो विजयः स्कन्दात् कृत कोलाहलारवः ॥ १६

सन्दधे तन्महाभीमं सर्वशत्रुनिबर्हणम् । तदस्त्रं पशुपाभिख्यं नानाभयकरप्रभाक् ॥ १७
यदा प्रतस्थे तरसा घातयन् सकलान्रिपून् । तदा भक्तो महापाशुपतं दैत्यवरस्तु तम् ॥ १८
मापालं तत्यजे कोपात् निवारयितुमाशुगः । अमोघास्त्रमनुनिक्षिप्य शरदशास्त्रसंभवात् ॥ १९
अमारयन्महावेगाच्छित्त्वा तांश्चापि दैत्यपः । मृतेषु तेषु दैत्येषु त्रिसहस्रेषु भूसुराः ॥ २०
विजयस्तु महातेजा स्वयं स्कन्दं चचार सः । भूतान्यपि महाघोरं चक्रुस्सर्वाणि भीषणम् ॥ २१
ववर्षुर्देवतास्सर्वाः पौष्पीं वृष्टिं तदा भृशम् । तदेतत्सर्वमालोक्य दूतास्शूरं व्यजिज्ञपन् ॥ २२
तच्छ्रुत्वा शूरपद्मासौ दुःखार्तो निममज्ज हि । तमेनं धर्मकोपाख्यः महावीरः परो महान् ॥ २३
आत्मपुत्रवियोगार्तं धृत्वा मरणेऽपि । नहि शोको महावीर्यपराक्रमवतामिह ॥ २४
त्वं तु दैत्यवरो धीमान् सर्वेषामधिपो महान् । दुःखितुं न हि युक्तं ते सर्वदा सर्वद प्रभो ॥ २५
यतेतेऽसद्दशोकालस्सर्वेषां प्राणहारकः । स्वराच यतते स्वामिन् प्राणानन्यगतानपि ॥ २६
ऐश्वर्यं वीर्यमतुलमिन्द्रलोकत्रयं तथा । सेनाश्च बलिनो वीराः किंन्यूनं तव भो विभो ॥ २७
इत्यादि वचनैश्शूरं प्राप्तदुःखं महासुरम् । क्रमेण सान्त्वयामास धर्मकोपो महामतिः ॥ २८
तस्य तद्वचनं श्रुत्वा गतदुःखोऽभवदीश्वरः । जित्वाऽहमेव तान्सर्वान् आगमिष्यामि शीघ्रतः ॥ २९
इत्युक्त्वा धर्मकोपेन प्रतस्थे महता पथा । तदैनं धर्मकोपस्तु प्राह वाक्यं महामतिः ॥ ३०
अस्योपरि त्वया गन्तुमसांप्रतमिहाधिप । मत्सदृशेषु सर्वेषु तिष्ठत्स्वप्यनुजीविषु ॥ ३१
गत्वाहं तान् जयिष्यामि रिपून् सर्वान्निहागतान् । त्वदाज्ञां शिरसा धृत्वा दानवानामधीश्वर ॥ ३२
निशम्य तद्वचश्शूरः सन्तोषेण तथेतितम् । प्रेरयित्वाऽऽसनं सैंहं आरुरोह पुनश्च सः ॥ ३३
ततश्च धर्मकोपस्तु धृतनानायुधान्वयान् । दिग्गजं पुण्डरीकाख्यं आरुह्य निरगात् किल ॥ ३४
ध्वजछत्रपताकौघवारितार्कातपोतुलः । वाहनाश्च तत्रामात्याश्चतुरंगबलान्यपि ॥ ३५
वाद्यानामारवाश्चास्य ब्रह्माण्डोदमनादयत् । एवं निर्गत्य वाहीत्वा वीथीरालङ्घ्य शीघ्रतः ॥ ३६
प्राप युद्धस्थलं घोरं सह सैन्यैर्महाबलैः । तमायान्तं तदा वीक्ष्य भूतानि सुमहारवान् ॥ ३७
चक्रुस्तत्तुल्यवेगेन समुद्रवरभीषणम् । निशम्य तानयं भीमो विकाराक्रान्तमानसः ॥ ३८
धनुराटोपविस्फार्य गुणमास्फाल्य कोपतः । ववर्ष भूतसेनासु सायकान्निशितान्बहून् ॥ ३९
बलयोरुभयोर्भूत दानवानां परस्परम् । वीराणां लक्षसंख्यानां मंत्रिणां च महद्रणम् ॥ ४०
घर्षतां दैवतान्यपि नामानि वदतां गुणान् । संबभूव महाघोरं तुमुलं भीषणं भृशम् ॥ ४१
तदा वीरास्तु ते सर्वे यमदूता इवाशुगाः । आगत्य तरसा तेषां प्राणानादाय निर्गताः ॥ ४२
तान् दृष्ट्वा केचिदसुराः पलायनमदोक्षिताः । तदा तु धर्मकोपोऽपि भूतसेनासु कोपतः ॥ ४३
ववर्ष सायकानुग्रान् भीषणांश्च महारवैः । पुण्डरीकगजोऽप्यन्यानमारयद्बहून् रिपून् ॥ ४४
ततस्तु वीरा नागेऽस्मिन् तत्कुम्भे मार्गणान् बहून् । स्रवद्रुधिरसर्वाङ्गो महाकोपेन दिग्गजः ॥ ४५
गृहीत्वा मुसलं घोरमायसं वेगतो भृशम् । अताडयच्च भूतानि तेन सर्वाणि तान्यथ ॥ ४६
मुमुहुः कानिचित्तेषु पलायन्तिस्म कानिचित् । वीरबाहुस्तु तद्वीक्ष्य वीराणामधिपः क्रुधा ॥ ४७
तस्मिन् पृषत्कान्सुबहून् मत्तजे सहसागळे । विद्धमात्रेण तद्बाणैः किंचित्क्षीणबलोऽभवत् ॥ ४८
दृष्ट्वैतद् धर्मकोपस्तु भ्रामयित्वा गजेश्वरम् । तस्मिन्वीरे शतं कोपात् बाणानामयुतं द्विजाः ॥ ४९
तदानीं वीरवर्योऽसौ रुधिराप्लुतविग्रहः । रथे स्वके क्षणं तस्थे विद्धदेहः पराशुगैः ॥ ५०

नरसदैत्य चण्डाढ्यो ,ब्रह्मा त खिन्नमानसम् ।,प्राहिणोच्छक्तिमान् शक्तिं हतसंप्राप्तमीषणाम् ॥ ५१
वीरबाहुस्ततः कोपादुत्थायाभ्यागतान्तिकाम् । धूलीचकार बाणेन तामेकेन ततो द्विजाः ॥ ५२
पुनश्च कवचं तस्य चिच्छेद सुदृढं शरैः । छिन्नकञ्चुकोऽमास्थो दैत्येशस्य तदा रुषा ॥ ५३
मुमोद दण्डं पृथुलं दण्डपाणिरिवान्तकः । वीरोऽथ तस्य पतनाद्गुणमाप तदाक्षणम् ॥ ५४
वीरबाद् यलं वीर्यमुपत्वा स्वस्थासुरो महान् । बहूंश्चर्पणनाराचाश्चिक्षिपतान् देवनायके ॥ ५५
वीरोऽपि तरसा तस्मिन् मुक्त्वास्त्राणि महद्गुणा । मुमोच शक्तिमतुलां स्मृत्या विहितिमस्पसः ॥ ५६
असुरस्तु दुरात्मायं अस्त्रेणैतां यताच्छिनत् । तदृष्ट्वा सहसामर्षात् वीरबाहुः क्षपापुनः ॥ ५७
बिभेदास्त्रेण हस्तोरो निष्ठुरं हस्तोऽपि च । तदानीमेव दैत्योऽसावमूर्च्छद्गजकन्धरे ॥ ५८
तद्दैवसमहेमोऽपि गृहीत्वा मुसलं दृढम् । तेन सन्ताड्य वीरस्य शूलं तं प्रापयन्धृतिम् ॥ ५९
ततः कोपवशाद्दैत्यस्त्वरया स्थानुदुत्तम् । कपोले ताडयित्वैनं गृहीत्वोर्ध्वं मुमोच सः ॥ ६०
घर्षणकोपवश नागेन्द्रः पतित्वा भूतले क्षणात् । मुमोह परमेशोऽगमन्मुहुर्दयद्विजाः ॥ ६१
अथ भूपोऽपि दैत्योऽयं पापात्मा द्रुतमुत्थितः । दण्डं महान्तमादाय वक्षस्येनमताडयत् ॥ ६२
यमश्च तं करेणायं गृहीत्वा कोपविह्वलः । वीक्ष्य तदानवश्रेष्ठो मुमोच कुलिशं महत् ॥ ६३
पुष्पयाश्च देवोऽयं गदादायकरेणतत् । अताडयन्महाकोपादसुर पापिनं तदा ॥ ६४
पतितं तं महीपृष्ठे पादेनापि जघानहि । वक्षस्थलतदारुकमासेनायं मृतोऽसुरः ॥ ६५

दृष्ट्वा मृतं धनुजमग्निमणमाशु दैत्याः स्थातुञ्च तस्य पुरतो नितरामशक्ताः ।
शस्त्रायुधानि परितः परिरिरभ्रन्विचित्रा. प्राद्रुद्रवन् गलितवैभवमरा जवेन ॥ ६६

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे त्रिंशोऽध्यायः ॥

---

॥ अथ एकत्रिंशोऽध्यायः ॥

भानुकोपेन शरस्य स्कन्दस्याग्रपुरदेश. भानुकोपस्य तृतीय युद्धम् ॥

ततस्तु पुण्डरीकोऽपि गतमूर्छो गजेश्वरः । वीरबाहुं समासाद्य प्रणम्य विनयेन तम् ॥ १
दिग्गजानां वरिष्ठं मां विद्धि वीर महाबल । गृहीतोऽहं दुरात्माऽयं निग्रहेण ,यथाप हि ॥ २
स्वेच्छयाऽमुष्य मुक्तयातो प्रभकुत्रापि गच्छति ।
अद्भुताश्चेन्मया तस्य यागस्थैनं (बाध्यिन्स्ति) तदाऽसुरः ॥ ३
मोचितोऽहं त्वया शश्वत् तादृशं पापिनं सुर । मया कृतापराधं त्वं क्षमस्व दयानिधे ॥ ४
महिमानं मयाज्ञात्वा शान्तचित्तेन देवप । त्वदाज्ञयाऽस्य मत्स्थानं वसिष्यामि यथापुरा ॥ ५
इत्युक्त्वा दीनवचसा प्रणनाम पुनः पुनः । तथेति प्रेरयामास वीरबाहुर्गजेश्वरम् ॥ ६
प्रासादगुहो गजश्चैव स्वस्थानमगमत् द्विजाः । ववर्षुश्च सुरा वीरे कुसुमानि मुदान्विताः ॥ ७
सेनाग्रमुसैनायान् उत्प्लुत्य वयापुरा । तत्तासर्वमाकर्ण्य शूरपद्मा भटाननैः ॥ ८
प्राप दुःखं तदात्यन्तं विचारेणापि संयुतः । तदैव यामिन्यां शीघ्रं नियम्य क्षितिजान् पहन् ॥ ९
एकस्मिन् सर्वं स्थाप्य स्वपमास द्विजोत्तमाः । ततस्तु भानुकोपोऽपि मायाजः परे दिने ॥ १०

त्वरयागतो गृहं शीघ्रं तदाऽभ्यासुरो महान् । धर्मकोपस्य मरणं श्रुत्वा वृत्तं सवृत्ततः ॥
लुण्ठनं च पुरस्यापि वर्तमानैस्सुरेश्वरैः । दह्यमानस्ततोऽत्यन्तं दुःखेन महता हृदि ॥
विनिष्क्रम्य गृहात् स्वस्य प्राप तात गृहं क्षणात् । नत्वा च पितरं शूरं प्रोवाच वचनं तदा ॥
तातास्मभिरमी जेतुं अशक्या बलिनो युधि । भवानपि महावीर्यो भावितस्तैर्महाबलैः ॥
नाशितं बलमस्माकं स्कन्देन सुरपीडनात् । मृता इति न वच्मीदं भीत्याहं बहवोऽसुराः ॥
यदा सञ्जीवनं तत्र भवेदिति महासुर । इदानीमपि तान् दैत्यान् यद्वान्मुक्त्वा नमस्कृतः ॥
सुप्रसन्नो यदि गुरुस्तत्राऽस्माकं स्थितिर्भवेत् । इत्यादि वचनं श्रुत्वा पुत्रेणोक्तं तदाऽसुरः ।
महता मन्युनाऽथैव ज्वलन्निव वचोऽब्रवीत् । ब्रह्मविष्णुमुखैर्देवैः स्तूयमानोऽहमानतैः ॥
आरब्धं न हि मुञ्चामि प्राणैः कण्ठगतैरपि । अपकीर्तिर्भवेत्त्यागे भवान्भीतस्तदामिह ॥
गच्छत्वमधुना भ्रान्त स्वपथा यत्र कुत्रचित् । अहमेव जयिष्यामि तान्रिपून्रणमध्यगान् ॥
इति शूरवचः श्रुत्वा भानुकोपस्तदात्मजः । क्षमस्व त्वं मया तात प्रोक्तं तत्कपटेन हि ॥
भयदत्वाद्रिपून् सर्वान् जेताऽसि जनकाधुना । इति तद्वचनैरार्यं सन्तुष्टो दैत्यवल्लभः ॥
प्रेरयामास युद्धाय भानुकोपमरिन्दमम् । ततः स्वगृहमभ्येत्य भानुकोपो महाबलः ॥
अनेकदैवतास्त्राणि नानायुधवराण्यपि । संपाद्य स्वयमारुह्य रथमश्वसमुन्नतम् ॥
महता वाद्यघोषेण भक्षीभिरेव पेवालैः । बद्दीमिरासुरीभिश्च सेनाभिस्संपरिष्कृतः ॥
आतुलेहवशाच्चायं दुःखेन परिपीडितः । निश्चित्यायमथापायं वीथीस्त्वरया रणस्थलम् ॥
तत्र दृष्ट्वानुजान्वीरान् त्रिसहस्रमितान्मृतान् । अन्यानप्यसुरांस्तत्र समन्तात्पतितान् बहून् ॥
महद्दुःखपराक्रान्तः कोपेनापि ज्वलन्नयम् । संहरिष्यामि तानेतान् रिपूनाशु रणाङ्गणे ॥
विनिःहन्त्यन्यथा चैनं जनास्सर्वेऽपि मामिह । हरिद्रं गणिकासक्तमिव मन्मथपीडितम् ॥
उक्त्वैवं मनसा दैत्यः जगाम रिपुमण्डलम् । ततस्सर्वाणि भूतानि दृष्ट्वैनं तु महासुरम् ॥
कोपं पापो महाभीमस्समायात्यति वेगतः । सैन्यैश्च बहुभिर्घोरैरिति व्यग्रमनांसि च ॥
अभिजग्मुर्महाकोपात्तेऽधुमुर्मूर्च्छुराः । तदाऽसममभूद्युद्धं सैन्ययोरुभयोर्भृशम् ॥
पुष्पपर्वतरापामगदायुद्धवर्षिणोः । बहवश्च मृतास्तत्र शूराश्चलपराक्रमाः ॥
ननृतुश्च कबन्धानि बहून्यत्र विशीर्यणम् । शिवाश्च काकगृध्राश्च पिशिताकांक्षयागताः ॥
एवं वृत्ते रणे घोरे दैत्यानां पुरतस्तदा । प्रणष्टुवन्ति भूतानि स्थातुं सर्वेण दुद्रुवुः ॥
तदैव च समागत्य भूतसेनाधिपाः क्रुधा । अयुध्यन् पापिनो दैत्यान् शस्त्रैर्मर्मच्छिदोऽभृशम् ॥
पलायन्त तदा दैत्याश्छिन्नभिन्नशरीरिणः । तान् दृष्ट्वा भानुकोपोऽयं महापापो महासुरः ॥
प्रेरयित्वा महास्त्राणि तान्मुकुन्दमपर्वतान् । धूलीकृत्य महाकोपान्महास्त्रैवैश्च मीपयन् ॥
आग्नेयास्त्राणि भूरीणि सैनेशेषु तदाऽत्यजत् । अक्षमास्सोढुमेतानि भूतानामधिपा युधि ॥ ३९
स्रवन्तो रक्तधारास्ते पलायन्तिस्म विद्रुताः । वीरबाहुस्समीक्ष्यैतत् प्रेरयित्वा रथं स्वकम् ॥ ४०
अभिजग्राह वेगेन धनुरायस्य वर्षयन् । छित्वाऽऽयुधानि दैत्येन मुक्तानि सुबहून्ययम् ॥ ४१
अमारयत् बहून्दैत्यान् युध्यतस्समहाबलः । ततस्तं भानुकोपोऽयं वीरं प्रोवाच कोपतः ॥ ४२
त्वं दूत पूर्वमसुरान् बहून् हत्वा गतः खलु । अधुनाप्यागतोऽत्याशं मम भूयः क्व गच्छसि ॥ ४३
यत्र कुत्र गतं चापि संहरिष्याम्यहं ध्रुवम् । एवं जगाद वीरत्वं किञ्चिद्दैत्याधमस्तदा ॥ ४४

तमेनं वीरबाहुश्च प्रोवाच वचनं बली । उभावपि करिष्यावो युद्धमत्र सुदारुणम् ॥ ४५
पश्यन्तु देवतास्सर्वा जयंचापि पराजयम् । वृथोक्त्या किं दुरात्मंस्त्वं कुरुयुद्धं मयासह ॥ ४६
इत्युक्तमात्रेण तदा भानुकोपो महद्रुषा । वीरस्य वक्षसि तदा सहस्रं सन्दधे शरान् ॥ ४७
ततस्तु वीरबाहुश्च महता मन्युना युतः । युयोज भुजयोस्तस्य सहस्रं रणगर्वितः ॥ ४८
मघुरस्तु शसेनायं निषंगं तस्य चाच्छिनत् । ततः कोपेन दैत्यस्य निटिले शक्तिमुज्वलाम् ॥ ४९
प्राहिणोत्सहसा वीरो महाकोलाहलारवः । मुमोह तत्क्षणं दैत्यश्शकेस्संपतनादयम् ॥ ५०
तदानीं देवराजोऽयं वायव्यं पुनरत्यजत् । तथैव मुक्त्वा दैत्योऽपि चिच्छेद च महाबलः ॥ ५१
देवस्तु सहसाऽऽग्नेयं मुमोचापि महासुरम् । छित्वा तेनैव तद्दैत्यस्सौरं तत्याज कोपतः ॥ ५२
वीरबाहुस्तु तेनैव व्यर्थतामगमच्च तत् । ततस्तु दैत्यः कोपेन मौप्यंस्त्रं सुरेश्वरम् ॥ ५३
प्राहमस्त्रं तुनोदाशु सर्वसंहारकारकम् । अच्छिनद्वीरबाहुश्च तेनैव तन्महाबलः ॥ ५४
गतेषु व्यर्थतामेवमस्त्रेष्वसुरनायकः । महाघोरं महाभीमं मन्त्रं नारायणस्य सः ॥ ५५
सन्दधे सहसा कोपाद्वीरबाहुं प्रति द्विजाः । तदेतन्निर्गतं घोरं भासयत्सकलादिशः ॥ ५६
वीरबाहुं वीरबाहुश्च तदेव प्राहिणोद्रुषा । परस्पराहतिवशात्तूर्ष्णीभूते तदाऽस्त्रे ते ॥ ५७
ततस्तु भानुकोपोऽसौ महता मन्युना ज्वलन्
यदि मुक्तं पशुपतेरस्त्रं सर्वारिसूदनम् ॥
योऽभविष्यति सोऽप्येतद् इतिसंचिन्त्य भूरिशः ॥ ५८

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकांडे एकविंशोऽध्यायः ॥

---

॥ अथ द्वाविंशोऽध्यायः ॥

॥ वीरबाहुना भानुकोपवधः ॥

ततः क्षणेन मायावी माययाऽलक्ष्यतो गतः । इतस्ततश्च पुरतः पृष्ठतस्स सुरेशितुः ॥ १
भ्रमन्ववर्ष घाराभि वाराण्वीरवर्ष्मणि । अयदृशकमहाधारो वीरबाहुस्तदा भृशम् ॥ २
कगतोऽयं दुरात्माऽद्य वर्षत्यत्र शरानपि । नलक्ष्यते शरा एव लक्ष्यन्ते पातितोऽस्त्र हि ॥ ३
इतिव्यग्रमनास्तस्थौ पश्यन्दिक्षु विदिक्ष्वपि । विम्मुखसुरास्तत्राऽऽयन्ति मृतान्यपि महाधिपैः ॥ ४
ततः क्षणेन वीरोऽय ज्ञात्वा मायां दुरात्मनः । विज्ञानास्त्रं ससर्जाशु सर्वव्यामोहकारणम् ॥ ५
तस्यारुह्य महिषैनं रणारूढं वियत्स्थले । दृष्ट्वा कोपेन महता ययौ तत्र रथेन सः ॥ ६
तदा तयोर्महद्युद्धं तत्रासीद्दारुणं सरम् । इतस्ततश्च सर्वत्र भ्रामयित्वा रथावुभौ ॥ ७
वर्षिणोद्दारवर्षाणि घनाघन इवाम्बुभिः । मुञ्च बाणान् हनिष्यामि त्वं [illegible] मम सन्निधौ ॥ ८
इत्युक्तमात्रेण तदा वर्षितोश्च परस्परम् । ततः कोपेन महता एवञ्च दापयमाशु च ॥ ९
वीरस्वं यद्गतोऽस्त्रकृपाणग्रहणपूर्वकम् । पराक्रामपि च सन्ताड्य पदं मार्त्संयतोरपि ॥ १०
परस्परं यद्गतोऽपीडतमहाबलयोः । चरतामपि गद्गतोऽस्त्रतोवेगाद्दृढस्य च ॥ ११
हताशंसमहारवकोलाहलसुबाहुयोः । परस्परं मार्त्संयतोः पदयोर्गिरिर्यथा ॥ १२

एवं तदा तयोर्जाते रणे देवासुरेशयोः । तच्छरैर्भूतलं सर्वं पातितैरावृतं तदा ॥ १३
वह्वयश्च तदा भूतदानवा मनुरुज्ज्वलाः । मकरादयो महास्तत्र वीक्ष्यैतत् विस्युराद्भयम् ॥ १४
येनैव वायुतुल्यानि धमधन्मारकाण्यपि । प्रळयाग्निरिवात्यन्तं दाहकानि परान्युधि ॥ १५
भास्वन्ति सूर्यनीकाशं ह्लादिनीव महास्वनैः । घोराणि त्रिपुरारातेश्शरवद्दाहकान्यरीन् ॥ १६
एवं विधानि शस्त्राणि मुक्त्वा मुक्त्वा पुनःपुनः । युद्धमल्लावुभावेतौ तदाऽयुध्यतां भृशम् ॥ १७
गिरयश्च तदाऽत्यन्तं शरैरेभिस्सुपूरिताः । बलाहकाद्रिभिर्छिन्ना भृशं शकलतां गताः ॥ १८
दिशश्च विदिशस्तद्वत्सूर्याचन्द्रमसावपि । महांद्वाकाशपातालसमुद्राश्चापि पूरिताः ॥ १९
ववृषुरिंगमाज्मेघान् पर्वतास्तत्र तत्र च । प्रकुञ्च तदा पृथ्वी दह्यमाना शरैर्भृशम् ॥ २०
शोषमापुस्समुद्राश्च दग्धास्सर्वाश्च तारकाः । आवृतं धूमजालेन ब्रह्माण्डस्यान्तरं तदा ॥ २१
अन्योन्यं च तदास्त्राणि वहून्विच्छिन्नतावुभौ । आश्चर्येण तयोर्युद्धं वीक्ष्य देवाश्च तापसाः ॥ २२
न सन्ति धन्विनस्तुल्या एतयोरुभयोरिह । महोर्वीर्यमहोदार्यं गांभीर्यञ्चेति विस्मिताः ॥ २३
ततस्तु मन्युनाऽतीव भानुकोपो महासुरः । धूळीचकार वीरस्य रथं शरसहस्रकैः ॥ २४
मत्तनोत्तमहारावं केसरीव भियान्वितः । सर्वभ्रमं महावीरो दैत्यस्यास्य दुरात्मनः ॥ २५
खड्गेन रथं छित्वा पातयामास भूतले । दैत्यस्तु पुनः कोपाद्विशिखास्त्राणि वक्षसि ॥ २६
मुक्त्वा तस्य महारावं चक्रे तं भीषयन्निव । अंसावास्फाल्य पाणिभ्यामात्मनो भूसुरोत्तमाः ॥ २७
तदाम्बर्धवद्वीरश्चतुर्दशाभिराशुगैः । छित्वा तन्मुकुटं भूमौ अपातयद्धि महत् ॥ २८
असुरोऽपि महासत्वः कवचं तस्य निष्ठुरम् । शातद्विरकरोच्छिद्रं शतधा पापवान् द्रुतम् ॥ २९
वीरबाहुर्महाक्रोधादाच्छिन्नतद्धनुर्वरम् । सुरमिनिनिदितैर्बाणैर्महाकोलाहलारवः ॥ ३०
भग्ने धनुषि दैत्योऽसौ भ्रुकुटीकुटिलेक्षणः । नुनोद शक्तिमतुलां आहीमस्मिन्सुरेश्वरे ॥ ३१
तस्यां चापो स्फुरद्भेदशतकोटिशतान् शिताम् । धनवं शातिनं वीराश्च्छिन्नयास्त्राश्चाशमापहि ॥ ३२
तदानीं देववर्योऽसौ वीरदर्पनामाणताभिनकाम् । ध्यात्वा स्वर्गं सितांभोजे हृदयस्थे महेशितुः ॥ ३३
खड्गमादाय कोशास्थं चिच्छेदैनां महाबलः । द्विधाभूतां च तां दृष्ट्वा सन्तोषं प्रापिरे सुराः ॥ ३४
खड्गं कोशे पुनः स्थाप्य स्थिते तस्मिन्सुरेश्वरे । भानुकोपो महापापो गृहीत्वा खड्गमद्भुतम् ॥ ३५
कृतकोलाहलारावो भ्राम्यैतत्पाणिनाऽऽगतः । तदा वीरो महाकोपो बहुभिस्सायकैर्वरैः ॥ ३६
विभेद वक्षस्स्थलेऽस्य पापिनो वज्रनिष्ठुरम् । मगरण्येवमसुरो रक्तस्रावपरिप्लुतः ॥ ३७
आगम्य तेन तत्क्षणमच्छिन्नकोपविह्वलः । कृत्वा पुनर्महारावं बभ्रामेतस्ततो भृशम् ॥ ३८
तदानीं देवराजोऽयं स्वं खड्गमग्रहीद्वरम् । मृत्योरुभयोर्वैकृत्यमयोरिव वीरयोः ॥ ३९
खड्गयुद्धं तदा जातं महाघोरं भयानकम् । असुरस्तदहं पापः खड्गं दोष्णि सुरेशितुः ॥ ४०
अपासयत्क्षणेनैव तन्मोघीकृत्यामरेश्वरः । अंसं दक्षिणमस्यायं छित्वा महीमपातयत् ॥ ४१
वामेन पाणिना भूयः खड्गमादाय कोपतः । प्रहर्तुमुद्यतस्यास्य चिच्छेदैनमपि द्विजाः ॥ ४२
ततः कोपवशाद्दैत्यो मायास्त्रं घोरमाददे । सस्मार पावकापोऽयं प्रयोक्तुं सुरनायके ॥ ४३
तावदेव सधर्मासिना छित्वा तस्य शिरोमहत् । पातयामास भूपृष्ठे तं पर्वतमिव द्विजाः ॥ ४४
प्राप्तकालवशं पापं दैत्यं तं वीक्ष्य देवताः । ववर्षुः परया प्रीत्या सुगन्धिकुसुमानि ताः ॥ ४५
निनेदुश्च तदाऽत्यन्तं भूतान्यपि सहाधिपैः । प्राप सन्तोषमत्यर्थं भानुश्रेष्ठ्य सुतं रिपुम् ॥ ४६
तदानीमेव वीरोऽसौ नभस्त्यक्त्वा महीतलम् । अयरक्षानुजैर्वीरैः भूतैरपि परिष्कृतः ॥ ४७

प्रतिज्ञा मम निर्व्यूढा यस्मात्पापोऽद्य मारितः । पूर्वैरपि देवेशो गुहोऽस्माभिर्निवन्दितः ॥ ४
इत्युक्त्वा सकलान्वीक्ष्य वीरबाहुस्तु तैर्युतः । महता वाद्यघोषेण हेमकूटपुरोत्तमम् ॥ ४
प्राप्य स्कन्दालयद्वारि रथात्स्वादवरुह्य सः । प्रविश्यान्तर्गृहं देवं दृष्ट्वा मङ्गलविग्रहम् ॥ ५
बहुधारं ननामैनं विनयेन मुदान्वयम् । वीरबाहुं समुद्धृत्य पाणिभ्याममरेश्वरः ॥ ५
महता त्वं प्रयासेन महापापममारयः । श्लिष्टोऽसि नितरामद्य सन्तोषो मे महानभूत् ॥
[illegible] वरमभीष्टं ते वीरानुज महाबल ॥ ५२

इति प्रभुक्तं भगवन्तमेनं प्रोवाच वाचं कृतपाणिबन्धः ।
तवाज्ञयाऽहं जितवानमुं मे यदि प्रसन्नस्त्वयि भक्तिरस्तु ॥ ५३

माऽस्तु मे ब्रह्मविष्ण्वादिदेवतानां पदं प्रभो । तव पादाम्बुजद्वन्द्वे भक्तिर्भवतु पावनी ॥ ५
इति संप्रार्थितो देवस्तमेनं विनयान्वितम् । मद्भक्तिरव्यया पुण्या लभ्यते न सुरैरपि ॥ ५
कृपावशात्तथास्त्वेवं उक्त्वा तं सकलानपि । प्रेषयामास तान् स्वं स्वं गृहं प्रत्यमरेश्वरः ॥ ५
ते गुहं संप्रणम्यैनं वीराः प्रापुः स्वकान् गृहान् । यदिदं पठते नित्यं श्रद्धाभक्तिसमन्वितः ॥ ५
शृण्वन्ति ये नरश्रेष्ठा भानुकोपस्य पापिनः । वीरबाहुहतं घोरमन्यैरपि सुदुष्करम् ॥ ५
भवेच्छत्रुजयस्तेषां सर्वाभीष्टं च जायते । श्रुत्वैवं पाण्डवाश्शत्रून् दुर्योधनमुखान्रणे ॥ ५
अजयन् सहसा मत्तान् धर्ममार्गरतास्सदा । तथा परशुरामोऽपि कार्तवीर्यार्जुनादिकान् ॥ ६
अजयद्रणमध्ये तान् रिपून् वीर्यबलान्वितान् । श्रुत्वा ऋषिमुखाद्वाली हनुमानञ्जनात्मजः ॥
शत्रूनजेयानपरैरजयच्च महाबलान् ॥ ६१

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे द्वाविंशोऽध्यायः ॥

---

## ॥ अथ त्रयोविंशोऽध्यायः ॥

### शूराज्ञया सिंहमुखेन युद्धाय निर्याणम् ॥

ततो दूतमुखेनासौ भानुकोपं मृतं सुतम् । विज्ञाय पतितो भूमौ मूर्छामापातिदुःखितः ॥ १
विललाप प्रबुद्धोऽसावाशु सर्वासुरेश्वरः । हा पुत्र भानुकोपाद्य जितभानो महाबल ॥ २
तथापि मरणं चेत्प्राप्तं त्रिगुरुस्त्रिलोकोऽमराः । श्रीमूर्तिर्यो जिष्णुरीशो परिमर्दितविक्रमः ॥ ३
वाचिष्यते हरिर्दुग्धसिन्धावस्तु गुहान्तरः । शच्या सह शुनासीरः पुनः स्वर्गे सुखिष्यति ॥ ४
दिशामधीशास्सर्वेऽपि सुखमेष्यन्ति ये किल । एवं विलप्यमानेऽस्मिंस्तदानीं केचनासुराः ॥ ५
शिरः कबन्धं पाणींश्च गृहीत्वा तस्य चागताः । भक्षिताङ्गान्सुतस्यैतान् दृष्ट्वा शूरः पुनर्द्विजाः ॥ ६
स्वपत्नद्भुता शोकात् सन्धाय च यथाक्रमम् । मन्थ्वीमिस्तदा तत्र समायातपद्मकोमला ॥ ७
दृष्ट्वा पुत्रस्य सांगानि पतितानि भूतले क्षणम् । विललाप सुदुःखार्ता विमुक्तकचबन्धना ॥ ८
विलोपपायपथानम्य स्पृष्ट्वाऽघ्राय पुनः पुनः । वक्षस्थलस्थितं वक्त्रं पुत्रस्यैव महायशसः ॥ ९
आदाय तरसा पूर्वं दृष्टवान् पक्षवान् खलु । दत्तात्मजोऽपि ते देवाश्चमूर्षे दुर्गमीदृशम् ॥ १०
तेषां स्त्रियोऽपि तादृशीं प्राप्नुयुस्त्वीदृशीं दशाम् । एवं शूरो सुरासर्वे शक्तिरक्ष मृतं सुतम् ॥ ११
विलोक्य व्यलपत्तत्र नितरां भृशुरोषणः । समुत्थाय ततश्शूरो महता मन्युना ज्वलन् ॥ १२

नेतान् क्षणेनाहं हत्वा तद्रुधिरैरिह । विधाय वीरपर्वं च जीवयिष्यामि तं मृतम् ॥ १३
त्वा कांश्चिदसुराग्रक्षयानस्य वर्मणः । विधायान्तःपुरं मायाः पद्मकोमलकादिकाः ॥ १४
यित्वा तदा दूतान् वीक्ष्य वाचमुवाचह । क्षणेन यूयं सर्वेऽपि भानुकोपादिकान्मृतान् ॥ १५
त्वा सिंहमुखस्याग्र पुनरागच्छताधुना । इति तेन विसृष्टास्ते गत्वा सैंहमुखं पुरम् ॥ १६
सुराख्यं महावेगात् नानारत्नविराजितम् । दृष्ट्वा तत्रासुरश्रेष्ठं सिंहवक्त्रं महाबलम् ॥ १७
प्याञ्जलिहस्तास्ते विनयेनावदन्वचः । भ्राता तवासुरश्रेष्ठ त्वामाख्यानयतेत्यमून् ॥ १८
साम् प्रैरयत त्वं तत् निर्गच्छाशु विलम्बनम् । इत्युक्तमात्रेण तदा पृष्टा वृत्तान्तमूचिरे ॥ १९
क्षयक्रमेण दूतास्ते भानुकोपवधं द्विजाः । तच्छ्रुत्वा सहसा दैत्यो महद्दुःखमवाप्य च ॥ २०
पिनापि व्यलम्भूयो लज्जानमितकन्धरः । उत्थाय रथमारुह्य चतुरंगबलैस्सह ॥ २१
जैश्छत्रैश्चनेकैश्च चामरादिविभूषितम् । निर्गत्याकाशमार्गेण प्राप शूराधिपां पुरीम् ॥ २२
वराह ध्वाच्छीघ्रमविशज्ज्येष्ठमन्दिरम् । तत्र दृष्ट्वाऽग्रजं शूरं प्रणनामासुरेश्वरम् ॥ २३
स्तदा समालिंग्य पाणिभ्यामनुजं बली । दुःखाक्रान्त इवाभाति असुरेश भवानिह ॥ २४
किमेतदिति पृष्टस्सन् निधायैनं निजान्तिके । कस्माद्वृत्तान्तमुक्त्वाऽशु त्वं जित्वा ताश्रिपून्रणे ॥ २५
नर्निकटमागच्छ ममानुज वराधुना । आहूतस्त्वेतदर्थं च भवानत्र मया खलु ॥ २६
ति श्रुत्वा भ्राता सिंहवक्त्रोऽब्रवीद्वचः । अनिशम्य वचो मे त्वं सर्वानेतानमारयः ॥ २७
स्ताःपरविंयं सत्यज्ञानानन्दस्वरूपिणम् । मोकयाम्यालिशं तस्मादनुभूतं फलं त्वया ॥ २८
शान्यते विधिस्सर्वैर्निवारयितुमप्यहो । मद्वचो भवतस्त्वासीद्विपमत्यन्तदाहकम् ॥ २९
कमितेनाधुनाऽहं तान् हत्वा सर्वानरिपून् क्षणात् । आगत्य त्वन्मुखं भ्रातर्द्रक्ष्यामि न ततोऽन्यथा ॥ ३०
स्य तद्वचनं श्रुत्वा शूरपद्मा तथेति तम् । प्रेषयामास बलवान् बलयन्तं निजानुजम् ॥ ३१
सिंहमुखोऽप्येत्य गृहं स्वं तत्र निर्मितम् । मांसं बहुविधं रक्तं सौद्रं क्षीरदधीन्यपि ॥ ३२
नसलाकरसानामि (नामानि) सुरया सह ताम्यथम् । भुक्त्वा परिमलद्रव्यं लिप्त्वा दिव्यागुरुवलः ॥ ३३
नूतने वसनं धृत्वा तथा नूतनभूषणम् । शिवेन दत्तं दण्डं च चक्रं कुलिशमेव च ॥ ३४
शूलमन्यानि देवानां शस्त्राण्यपि महान्त्यथम् । मायापाशं महाघोरमादाय सहसा बली ॥ ३५
कालक्षाश्वसंयुक्तरथे स्थित्वा मनोहरे । सेनाधिपैर्महावीरैः स्वसुतैश्च बलोत्कटैः ॥ ३६
अतिघोरेण नितरां छत्रोघनिनदेन च । भूतनानायुधैनैव लक्षवाहिनिकेन सः ॥ ३७
चतुरङ्गबलेनाशु निर्जगाम बहिः क्षणात् । मदवारीणि फेनानि गजानां वाजिनां तथा ॥ ३८
अभवत्प्रविघवह्नीमे तदानीं भूमिदेवताः । बभूव वाद्यघोषोऽपि जितांबुधिमहारवः ॥ ३९
अनेककोटिभिश्छत्रैर्ध्वजैरपि समुन्नतैः । आवृताशेषदिग्भागैस्संवाधे प्राप धर्मं तद् ॥ ४०
गृध्रारूढेष्वपि तदा श्येना अपि ध्वजे स्थिताः । अलातचक्रं सर्वत्र निपपात भयङ्करम् ॥ ४१
शुष्कवृक्षस्थिताः काका वदन्तिस्म तदा भृशम् । अनेकदुर्निमित्तानि जातान्येवं तदा द्विजाः ॥ ४२
आयान्तमेवमालोक्य सिंहवक्त्रं ससैनिकैः । महाविष्णुमुखादेवा भीताः स्कन्दमवाप्य ते ॥ ४३
प्रणम्य साञ्जलिकरा भक्तिनम्रास्सुरेश्वरम् । देवदेव दयासिन्धो समायात्यसुरो महान् ॥ ४४
सिंहवक्त्र इतिख्यातश्शूरस्यैवोऽनुजः परः । सहस्रमूर्धा बलवान् द्विसहस्रमहाभुजः ॥ ४५
सहस्रयोजनायाममहद्दृढभुजान्तरः । तथाण्डानि सहस्राणि शास्ति जित्वा रिपून्बलात् ॥ ४६
दिनमेकमसौ भूमिं पर्वतैरखिलैर्गजैः । अपि च महासर्पैः कूर्मेण विधृतामिमाम् ॥ ४७

धर्मारातिर्बली मायी महापापो महाबलः । अत्तुं लोकानिमान् सर्वान् खण्डेनापि परं दृढः ॥ ४८
कदाचिन्मेरुमुत्पाट्य दण्डयत्यण्डकुण्डके । आस्फाल्य तमसारत्वात् युयोज च यथापुरा ॥ ४९
छायापादर्थद्वयं शंभुदत्तं शूलं बिभर्त्ययम् । पलज्ज्येष्ठो हरिं रुद्रानेकादशककोटिकान् ॥ ५०
न बाधसे तथेशानं पालयंत्येव मार्गतः । दुरात्मायं महापापः कृपिभिर्बाधते ह्यमून् ॥ ५१
तमेनं भीषणं घोरं महाबलपराक्रमम् । हत्वा रक्ष कृपासिन्धो देवदेव सुरानिमान् ॥ ५२
इति तेषां वचश्श्रुत्वा कृपया परया गुहः । तथेति वायुमभ्याशवर्तिनं सारथिं सुखम् ॥ ५३
रथमानय शीघ्रेण महान्तमिति सोऽब्रवीत् । तस्य तद्वचनं श्रुत्वा धीरबाहुस्समीपगः ॥ ५४
नमस्कृत्य गुहं साक्षात् सच्चिदानन्दरूपिणम् । अहमेव प्रभो सर्वानमुना रणमध्यगान् ॥ ५५
संहरिष्यामि तद्देव प्रेरयैनं तथानुजम् । कण्ठे हत्वा वचस्तस्य मुग्धस्मितमुखांबुजः ॥ ५६
प्रेरयामास युद्धाय वीरमेनं सुरेश्वरः । निशादैत्यधीरस्तु लक्षैरप्यधिकैर्द्रुतम् ॥ ५७
तथा सेनाधिपैर्गत्वा स्वगृहं सहसा बली । दिव्यांबरधरः श्रीमान् द्रोणमालाविभूषितः ॥ ५८
धृतनानायुधस्तद्वद्रथमारुह्य सुन्दरम् । निर्ययावथमाहद्भ्यैर्योधैर्महाबलैः ॥ ५९
सहस्रवाहिनीसंख्यैर्भूतैरपि महायुधैः । रेणवश्च तदाऽत्यन्तमुत्थितास्सूर्यमावृताः ॥ ६०
आतोद्यानि च तत्रैव ताडितानि महाबलैः । ध्वजांश्च पताकाश्च धृताश्छत्राणि भूरिशः ॥ ६१
नानारत्नप्रभावन्ति प्रस्थितानि तदा पुरः । क्षणेन युद्धसंकेतस्थलमापुर्महाबलाः ॥ ६२
तदा समभवद्युद्धं सेनयोरुभयोर्भृशम् । ताडितातोद्यसंरावबधिरीकृतकर्णयोः ॥ ६३
भ्रमन्महारथांगस्वनैर्भीमस्तुनादयोः । आवाश्वघण्टाघर्घरिकामहाध्वनिविभीषणयोः ॥ ६४
मध्ये हेषागजबृंहितारावयोरपि । भूतपर्वतपाषाणद्रुमशूलास्त्रवर्षिणाम् ॥ ६५
भूतानामपि दैत्यानां मुञ्चतां सायकान् बहून् । तथा शूलासिप्रासानि तोमराणि वराण्यपि ॥ ६६
एवं पत्तिमहारथैर्युध्यतोः खड्गयादिनोः । तयोः प्रवृत्ते लोकानां तुमुले भीषणे रणे ॥ ६७
तदानीमसुरास्सर्वे संभूय रणकोविदाः । तन्मुखान्पर्वतान्वृक्षानन्यानुद्दिश्य शीघ्रतः ॥ ६८
भूतानि द्रावयामासुरसर्वाणि च महासुराः । निर्गत्य सहसा सिंहो भूतसेनाधिपो महान् ॥ ६९
दण्डेन महता दैत्यानास्फाल्यास्फाल्य कोपतः । अमारयद्बहूनुग्रान् गजानिव मृगाधिपः ॥ ७०
ततः प्रतस्थे तरसा दैत्यसेनाधिपो बली । हरिसुतो रणे भीमो वज्रवक्त्रो युधिष्ठिरः ॥ ७१
ववर्ष स महापापो निशितान् सायकान् बहून् । छित्वा तान् देववर्योऽयं दण्डेन महता पुनः ॥ ७२
गात्रोपरि महाकोपात् अघानोऽसि निष्ठुरम् । छिन्नं कवचमस्यासु तस्याघातवशात् द्विजाः ॥ ७३
वामघोऽपि ततः क्रुद्धो नितरां तस्य वक्षसि । भ्रामयित्वा पृथुं खड्गं प्राताडयदसौ रुषा ॥ ७४
वेणुनामगमहृण्डः कठिनेऽस्य विघट्टनात् । पुनश्च दानवः पापो परशुं मार्गयन् स्वरम् ॥ ७५
तुनोदासिनमहावेगात्समन्वेषसुरोत्तमः । धूलीकृत्य तु दण्डेन वज्रं च धनुर्वरम् ॥ ७६
ततस्तु शक्तिं दैत्योऽसावत्यजत्सुरनायके । तामायान्तीं महावेगाद्वेगाच्चिच्छेद तु द्विधा ॥ ७७

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे त्रयोविंशोऽध्यायः ॥

---

॥ अथ चतुर्विंशोऽध्यायः ॥

वीरबाहुना सिंहवक्त्रस्य पुत्राणां वधः ॥

छिन्नां शक्तिं समुद्वीक्ष्य दैत्योऽसौ पापकर्मकृत् । ज्वलन्निव महाकोपाद्दण्डमादाय भीषणम् ॥ १
नुनोद देववर्येऽस्मिन् दण्डपाणिरिव द्विजाः । तदाघातवशाद्देवस्स्रवद्रुधिरदूषितः ॥ २
स्थित्वा क्षणं जवेनासावाप्लुत्यैनं महासुरम् । कराभ्यां दण्डघोराभ्यामास्फालयदुरो महत् ॥ ३
स दुरात्मा स्रवद्रक्तो वक्त्रेण नितरां तदा । भूतले भूधरइव पतित्वा निधनं गतः ॥ ४
ततस्संभूय दैत्याश्च सर्वे ते युयुधुः क्रुधा । तद्दृष्ट्वा कनकः श्रीमान् लक्षमध्ये महाबलः ॥ ५
कनकाभो महावीरो महावेगेन चागतः । महता मन्युना सर्वान् द्रावयामास सायकैः ॥ ६
मद्बलात्तत्पुरःस्थातुमशक्ता दुद्रुवुर्द्विजाः । ततो दैत्यबलाधीशो दुर्मुखो नाम पापवान् ॥ ७
निवर्त्य तानयं दैत्यान् द्रुतान् भीतान् महाबलः । ववर्ष मार्गणान् भीमान् पर्जन्येघमहाध्वनिः ॥ ८
भूतान्यपि तदास्यन्तं पर्वतान् शाखिनश्शिलाः । समूह्य तस्मिन्पापिष्ठे तत्यजुर्महदारवैः ॥ ९
ततस्तु दुर्मुखः क्रुद्धो नितरां रथपञ्जकः । दानवः प्रविभिन्नोस्त्रवधुधत्ताम्हुताम् प्रति ॥ १०
ततस्ते वीरमार्ताण्डो मायां विज्ञाय पापिनः । बाणालं सन्दधे वीरो भूतानामधिपः क्रुधा ॥ ११
[illegible] ससम्भ्रमं तदा दैत्यस्तस्य केवलमेव [illegible]ः । गतमापो ववर्षाशु सहस्रं सायकान् शितान् ॥ १२
चिच्छेद दानवं देवस्सहकोण महाबलः । शतभिः कार्मुकं चापि ह्यमेकेन कञ्चुकम् ॥ १३
पूरयामास तत्कायमनेकैस्तु पुनश्शरैः । मूर्छामाप क्षणेनायं मायया ऽदृश्यतां गतः ॥ १४
दुद्राव स महापापो रक्तैराप्लुतविग्रहः । भूतानि तं गत त्वरया दुर्मुखं पापकर्मिणम् ॥ १५
रणे पलायितस्यानुधावनं युक्तं न कस्यचित् । इत्यमालोच्य तान्याशु निवृत्तानि महारवैः ॥ १६
पलायमानस्ते दैत्या योद्धुमत्र समागताः । पलायनमवेक्ष्यास्य दामयामासधीश्वरः ॥ १७
सिंहवक्त्रो महाकायो निरगात्सहसा द्विजाः । तं दृष्ट्वा पर्वताकारं महाभीमं महास्वनम् ॥ १८
संभूय तानि भूतानि ववर्षुः पर्वतान् द्रुमान् । तन्मुक्तास्त्वनलैर्नैते पर्वता भूरुहा अपि ॥ १९
पुनरेव पतन्तिस्म ज्वालनेवास्य धूपिताः । रेणुभावं गताः केचित् विशीर्णा भुवि सर्वतः ॥ २०
तमस्त्वा मृगसिंहाद्याः पतितास्तीव्रमद्रवन् । ताराग्रहाणां मार्गोऽपि स्वहस्तैः पतितैः पुरा ॥ २१
उद्वृत्तचक्षुः कोपाद्वितीय रथाचदा । तैरेव पर्वतैर्वृक्षैस्तानि भूतानि कानिचित् ॥ २२
प्रापयामास निधनं चोदितैश्च महासुरः । पाणिनाऽऽहत्य भूपृष्ठे चाम्याक्ष्यास्फाल्य रंहसा ॥ २३
पर्वते यानि भूतानि रथे सौरे पराण्यपि । समुद्रेऽपि तथान्यानि द्वीपेषु च महाबलः ॥ २४
पादस्तन्यानि मुष्ट्यापि समन्ताद्योरगात्य कानिचित् । अन्धमिश्राचय यानि भ्रामयित्वाऽऽशु तान्यपन् ॥ २५
ब्रह्मविष्ण्वादिलोकेषु चोत्क्षिप्योत्क्षिप्य कानिचित् । इन्द्रादिलोकपालानां स्थानेषु सुमहत्स्वपि ॥ २६
वरयासौ तथाऽन्यानि पाताले [illegible] पराण्यपि । क्षिप्त्वा पराणि भूमावप्याच्छादयेयं महाबलः ॥ २७
सर्वासु दिक्षु भूतानि सर्वलोकेष्ववाकिरत् । पादाघातेन भूतानि पादाभ्यां मर्दनेन च ॥ २८
पादेन मोदयित्वा [illegible] इस्तयित्वा शिरांस्यपि । शूलाग्र्या विलोपपाय दुस्तरेण पराण्यपि ॥ २९
पाणिभ्यां कानि संपीड्य भक्षयित्वाच कोपतः । पुनश्च स महापापो मुसलैर्मुद्गरैश्शरैः ॥ ३०
हलापरशुशूलैश्च गिरिभिस्तरुभिः परैः । सन्ताड्य छिन्नगात्राणि मारयामास तान्यथ ॥ ३१
एवं बहुषु भूतेषु मृतेषु द्विजपुङ्गवाः । महाविष्णुसुरैर्गुप्ताः पलायनमहाभवन् ॥ ३२

आरुरोह पुनश्चान्यं रथं पापोऽतिसुन्दरम् । ततोऽग्निकोपनः क्रुद्धो भूतेशो निर्ययौ क्षणात् ॥ ३३

वदन् पराक्रमं स्वस्य सिंहवक्त्रमभिद्विजाः । महाघोरं महाशूलं नुनोदासिन्महासुरे ॥ ३४

भग्नं वक्षसि तस्यैतत् पतित्वा सुदृढे भृशम् । पुनः कोपाग्निनाऽतीव दण्डमादाय देवपः ॥ ३५

भ्रामयित्वा महावेगात् कृत्वा कोलाहलारवम् । सन्ताड्य सारथिं तस्य निन्ये संयमनीं पुरीम् ॥ ३६

वीक्ष्य तत्सिंहवक्त्रोऽसौ दण्डमादाय भीषणम् । प्रेरयित्वा क्षणेनैनं मोहयामास भूसुराः ॥ ३७

परिकस्य पुनस्तूर्णमन्यं दानवपुङ्गवः । सुमालिनमभिक्रोधादाययौ भूतनायकः ॥ ३८

तस्मिन्नसुरवर्योऽसावुत्पाट्य गिरिमुन्नतम् । जघान मन्युनाऽत्यन्तं महान्तं पर्वतोपमे ॥ ३९

तमेव पाणिनाऽऽदाय कन्दुकं बालकाइव । मनुर्देववर्योऽसिन्महाबलपराक्रमः ॥ ४०

तदानीं मोहमापायं पतनादस्य वक्षसि । दण्डी तं पतितं वीक्ष्य दण्डमादाय देवपः ॥ ४१

अताडयदुरोमध्ये तस्य वज्रसुनिष्ठुरे । रेणुतामगमत्सोऽथ निपातनवशात्तदा ॥ ४२

समागत्य पुनः कोपाद्बाहुना सुरनायकः । ताडयामास दैत्येशं सिंहं मत्तगजो यथा ॥ ४३

तमेनमसुरः क्रूरो पादेनास्फाल्य भूतले । पातयित्वाऽमुना देवं क्षेपयामास चाम्बरे ॥ ४४

स पुनर्देववर्यस्तु निपत्यास्मिन्महाजवात् । पक्षशाखेषु सर्वेषु शाखासृग [illegible] द्विजाः ॥ ४५

चञ्चुपोत्पुत्य कोपेन मर्दयित्वा पुनः पुनः । लाघवेन चचाराथ लतासु भ्रमरा इव ॥ ४६

विचरन्तममुं दैत्यः पाणिनाऽऽस्फाल्य मन्युना । मक्षिका मनुजा यद्वत् पिण्डीकृत्य नुनोद ह ॥ ४७

स तु दूरे पतित्वाऽऽशु मोहमाप सुरेश्वरः । सेनापतिषु सर्वेषु निर्जितेष्वमुना क्षणात् ॥ ४८

प्रस्थितास्सहसा वीरा वर्षयन्तश्च सायकान् । तच्छरास्तस्य सर्वतो पुष्पवृष्टिरिवापतन् ॥ ४९

ततस्तु दानवेशोऽसावतीवैर्याद्दूरात् । कृतकोलाहलारावः केसरीव गजान्रिपून् ॥ ५०

गृहीत्वा पाणिभिः कोपादास्फाल्यैतान्परस्परम् । पादाघातेनच परानुत्क्षिप्य सत्वरान् परान् ॥ ५१

हत्वा परेषां बलवानन्यथान्योन्यमेव सः । एवं बहुप्रकारेण तान् वीरानजयत् द्विजाः ॥ ५२

दुद्रुवुस्ततस्सर्वे महाभीता मृगाइव । ततस्तु वीरवर्योऽपि वीरबाहुरुदीक्ष्य तान् ॥ ५३

चापमादाय सुदृढं वर्षयामास सायकान् । महापापेषु दैत्येषु घनकालघनाइव ॥ ५४

मृतिमापुस्तदा दैत्या बहवः पापकर्मिणः । चतुरङ्गबलेचापि क्षणेन त्रिघनं गतम् ॥ ५५

भूरीणि च वर्षयानि तन्नुतश्शोणितौघसि । चक्रमुक्तं तदा कङ्कपेतादाश्च पिशाचकैः ॥ ५६

दुर्धर्षस्य तनुत्राद्दशतसंख्या दुरासदाः । ववर्षस्सरवर्षोऽपि वीरबाहौ सुरेश्वरे ॥ ५७

सोऽपि तेषु महाकोपाद्ववर्षानेकसायकान् । अनेककोटिसंख्याकान् अरणजेस्ते महाबलाः ॥ ५८

तावद्भिस्तान् समुच्छिद्य धनूंषि च रथानपि । नखायित्वा महाकोपाच्चकार च महारवम् ॥ ५९

ततस्सर्वेऽपि ते दैत्यास्संभूयैनं महाबलम् । धनुषा योद्धुमेतेन शक्तः कोऽपि न विद्यते ॥ ६०

इति खड्गाःसमादाय धृतखड्गेन तेन च । अयुध्यन्सुमहापापा नानाशिक्षाप्रकारतः ॥ ६१

खड्गेनापि यदा जेतुमशक्यो देवनायकः । आययुः परिदग्धुं (परितस्तं) तेहन्तुकामा महाबलाः ॥

तदैतान् भूसुरश्रेष्ठा वीरबाहुर्महाबलः । चिच्छेदैकेन चापेन खड्गेन निशितेन हि ॥ ६३

हत्वा तानसुरान् पापान् सिंहवक्त्रसुतानयम् । आरुरोह पुनर्दिव्यरथं परममङ्गलम् ॥ ६४

ववर्षुश्च तदा देवा पुष्पाणि परया मुदा । तत् दृष्ट्वा सिंहवक्त्रोऽसौ नितरां खिन्नमानसः ॥ ६५

एक [illegible] सुतानेतान् हतवानिति लज्जया । कोपेन च ज्वलन् पापो मनसा चिन्तयदिदम् ॥ ६६

सर्पानेतान् भक्षयित्वा धामुना वज्रशालिना । सर्वान् लोकान् हनिष्यामि कोपोपशमताय च ॥ ६७

इति वीरस्य निकटमासाद्य सत्योऽसुरः । प्रत्यग्रहीत्समायान्तं वीरबाहुरपि द्विजाः ॥ ६८
तमागतमसौ दैत्यः प्रोवाच वचनं तदा । नचासि त्वं गुहो लक्षवीरेष्वेकोऽथवा पुनः ॥ ६९
तथा नवसु वीरेषु दूतो वा सत्यतो वद । इति पृष्टस्सधर्मात्मा व्याचष्टे तत्पुरो बली ॥ ७०
दासोऽहं देवदेवस्य गुहस्यामिततेजसः । हन्तारमसुरान् विद्धि दूतभावेन मां पुरा ॥ ७१
आह्वयन्ति सुरश्रेष्ठा वीरबाह्वाख्ययाच माम् । यो वा कोवाऽसि किं तेन तव दैत्याधुना वद ॥ ७२
इति गंभीरया वाचा वदन्तं देवनायकम् । दुर्बलासुरहन्तृत्वे किं बलं तव दूतक ॥ ७३
हतवानसि मत्पुत्रानिदानीं बालकानिह । तं त्वां क्षणेन हत्वाऽहं श्येनादीन् तर्पयामि तान् ॥ ७४
बलं व्यपोहयिष्यामि तव स्कन्दस्य शीघ्रतः । भूतानां देवतानांच वीराणां रणमध्यतः ॥
एवं पराक्रमं वाक्यं तस्यायमवदत्तदा ॥ ७५
इतिगदितमशेषं सिंहवक्त्रेण वीरो वचनमतिकटुत्वान्मन्दमन्दं निपीय ।
श्रवणवरपुटाभ्यामुग्रमन्योपमुग्र (वह्नि) विज्वलनविलाभ्यामास्थितोऽयं मुनीन्द्राः ॥ ७६

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे चतुर्विंशोऽध्यायः ॥

---

## ॥ अथ पञ्चविंशोऽध्यायः ॥

सिंहवक्त्रस्य मायापाशेन वीरबाहु मुखादीनां उदधिरो प्रक्षेपणम्, गुहेन युद्धाय प्रस्थानंच ॥

ततस्सत्तु शस्त्राणि निशितानि सुरेश्वरः । तत्याज तस्य सुदृढे वक्षोमध्ये दुरात्मनः ॥ १
निपत्य [illegible] ते भग्नाः पतिता भूतले यदा । तदा दैत्यवरस्तस्मिन् भीषणं दण्डमुज्ज्वलम् ॥ २
मुमोच समयं वीरस्त्रिभिश्चाच्छिनच्छरैः । पुनस्सहस्रं तत्याज तस्य मूर्ध्नि महद्रुषा ॥ ३
निपात्य तानि रेणुत्वमगमंस्तत्र भूसुराः । मुमोच सिंहवक्त्रश्च पुनः कोपेन भीषणम् ॥ ४
तेषु तद्वीरबाहुस्तु सहस्राणि मुमोच हि । छित्वा तान्येव तं शीघ्रमाहारयधौ तरसा यदा ॥ ५
पुनस्सहस्रं तत्याज वीरस्तत्पति सत्वरम् । तच्छिद्य सहसा तानि पश्याद्वीरमनुद्विजाः ॥ ६
सर्वभक्षं तदा वीरः खड्गमादाय रंहसा । चिच्छेदैतन्महाघोरं वीरबाहुस्सुरेश्वरः ॥ ७
मुष्टिमापुस्तदादैत्या वीक्ष्य वीरबलं भृशम् । वीरबाहुः पुनः कोपादस्त्रं पाशुपतं महत् ॥ ८
प्रेरयामास बलवान् सर्वसंहारकारकम् । तदैव सहसा दैत्यो मुमोचैतद्विभीषणम् ॥ ९
परस्परमुभे युध्वा निमुसे ते यथागतम् । अमिदैत्य तदा वीरः प्रापाश्चर्यं मतस्ययम् ॥ १०
[illegible] मया वाञ्छसे हन्तुं गुहेनार्थं विना रणे । संहरिष्यामि ससेना इति वीरः क्रुधा ज्वलन् ॥ ११
मुक्त्वा चतुर्दशशरान् हतवानस्य सारथिम् । ततः कोपेन दैत्योऽपि गदां तत्याज भीषणाम् ॥ १२
पतिता सा शरीरेऽस्य भंगमाप सहस्रधा । अथ देवसहस्रेण रथं चिच्छेद मन्युना ॥ [illegible]
तथा भूतानि सर्वाणि मर्दयन्ति महीधरान् । वृक्षान् लगुडपाषाणान् परिघप्रमदासुरम् ॥ १४
ततस्सिंहमुखः कोपाद्धस्तमादाय चापम् । सहस्रचापानादाय सन्धायैतानि शीघ्रतः ॥ १५
कृत्वा गुणध्वनिं भीमं बहुकोटिदारनयम् । ववर्ष तेषु भूतेषु हतकोलाहलारवः ॥ १६
तदा मृतानि भूतानि बहूनि छिन्नमस्तकाः । निपेतुश्च स्थानस्थालयेषु सरित्स्वपि ॥ १७
काननेषु समुद्रेषु द्वीपेष्वाशासु चांबरे । ज्योतिश्चक्रे रथे भानोर्ब्रह्माण्डे पतिसद्मनि ॥ १८
लोकालोकेषु सर्वत्र भीष्मघातेन भूसुराः । अमाविदन्नारैरैतनांसि अन्तर्भागमये ॥ १९

कृतोपचारैरमरैर्गुहोऽसौ निर्ययौ यदा । तदा बभूवुर्वाद्यानामारावा युगपत् भृशम् ॥ ५५
सितच्छत्राणि भूयांसि ध्वजौघाश्च प्रतस्थिरे । पटोक्षपचिताः केचित् ध्वजाः परमशोभनाः ॥ ५६
ऋषयश्च कृतस्तोत्रा गायन्तो नारदादयः । पठन्विजापदानाश्च वन्दिनः कलकण्ठकाः ॥ ५७
इतस्ततश्च धावन्ति भूतानि सुबहून्यपि । आयुधान्यतिघोराणि भ्रामयित्वा कराग्रतः ॥ ५८
अश्रूयत कलारावः काहलीनां मनोहरः । जय देवाधिदेवेश भक्तवत्सल विश्वप ॥ ५९
रक्ष सर्वान्सुरानेतान् भवद्भक्तिपरायणान् । आययावाययौ दैत्यकुलसंहारकारकः ॥ ६०
आययौ देवसेनानीराययावखिलेश्वरः । आययौ पार्वतीसूनुराययावरिकेसरी ॥ ६१
महादेवकुमारोऽयमाययावसुरान्तकः । धृतशक्त्यायुधो भास्करः स्कन्दस्समाययौ ॥ ६२
समाययावयं स्वामी भक्तानां रक्षणोद्यमः । लीलया क्रीडते लोकान् लोकवाद्यो गुहाशयः ॥ ६३
गुहः परमकल्याणगुणोऽमितपराक्रमः । समाययौ च देवेशः सर्वसंपत्परीवृढः ॥ ६४
सर्वविस्सर्वनेता च सर्वदेवाभिवन्दितः । सर्वाराध्यो जगत्सृष्टिस्थितिसंहारकारकः ॥ ६५
सर्वेश्वरसमप्रख्यश्शंभोः प्रेमास्पदोऽनिशम् । अणिमादिगुणोपेतः स्वतन्त्रः सर्वदा सदा ॥ ६६
सर्वेषां प्राणिनां धात्र्यस्सर्वथोमसुखावहः । पटहादिमहावाद्यानघःस्वसुदेशाः ॥ ६७
एवमादिमहारावं व्याप्तलोकत्रयं गुहः । शृण्वन्युद्धक्षितिं प्राप सहवीरैर्महाबलैः ॥ ६८

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे पञ्चविंशोऽध्यायः ॥

---

॥ अथ षड्विंशोऽध्यायः ॥

सिंहवक्त्र भक्षितानां भूतानां श्री गुहेन पुनरानयनम् ॥

तदामी देवतास्सर्वा ब्रह्मविष्णुपुरोगमाः । दूरीकृत्य स्वयं वीरैः स्थितवान् कृतविग्रहः ॥ १
तदा समभवद्युद्धं भूतानामसुरैर्भृशम् । वृक्षपर्वतपाषाणवर्षिणां तुमुलात्मनि ॥ २
भङ्गमापुस्तदा दैत्याः पीडितास्तैर्महाबलैः । दृष्ट्वैतान्सिंहवक्त्रस्तु निनादोरुविग्रहः ॥ ३
अग्रसीत्तु समायान्तं महाघोरं महाकृतिम् । वृक्षपर्वतपाषाणैर्भूतानि युगपत् द्विजाः ॥ ४
तान्यथ द्विलक्षैः स्वैः करैरादाय शीघ्रतः । विवृत्यास्यं महाकायः पातयामास चोदरे ॥ ५
नासापुटेभ्यो निर्गत्य श्रोत्ररन्ध्रेभ्य एव च । तदा भूतानि तस्याशु दुद्रुवुः कानि दूरतः ॥ ६
उदरस्थानि चान्यानि तस्य छेत्तुं महोदरम् । स्थितान्याशु द्रवन्ति स्म सैरापुर्वैरिभूसुराः ॥ ७
शुभोजैर्वं महापापस्तानि सर्वाणि दानवः । सहस्रबाहिनीर्दर्यासरूपातान्याशु भीषणः ॥ ८
पुनश्च वीरान्सेनेशानन्यानप्यभुजत्तथा । स्थितस्तदा गुहस्त्वेको वीक्ष्य सर्वमरिंदमः ॥ ९
तदेतत्सर्वमालोक्य दूताः केचन शीघ्रतः । शूरपद्मानमागत्य प्रोचुश्चैवं यथाक्रमम् ॥ १०
वीरबाहुमुखान्वीरान्मायापाशवशंगतान् । भक्षितानि च भूतानि निशम्य स्वकनीयसा ॥ ११
दत्वा तेभ्यस्तद्रत्नानि दूतेभ्यस्सोऽसुराधिपः । सुमनोहरवस्त्राणि भूषणान्यपि तोषवान् ॥ १२
प्रेरयच्च पटुर्दैत्यान्पश्चात्ते स्वानुजो महान् । समुत्थायाऽऽसनात्सिंहाद्दाहरोहच्च गोपुरम् ॥ १३
वीक्षितुं स्वानुजं दैत्यं भक्षकं सकलद्विषाम् । गोपुराग्रे स्थितश्शूरः स्कन्दमैक्षं रणस्थले ॥ १४
भीमरूपं महाकायं सिंहवक्त्रं समीक्ष्य सः । तुष्टिमाप परां तत्र स्थितवान् पुनरेव च ॥ १५

संहरन्तोऽसुरान्पापान् ब्रह्मविष्णुहरा इव । मनोवायुमहावेगान् शोषयन्तो महाघनान् ॥ ४०
समुद्रान्वडवावह्निमर्कादीनां रथानपि । ब्रह्माण्डमेरुभूम्यादीन् स्फुटयन्तो महारवाः ॥ ४१
छित्वा शिरांसि दैत्यानां दोंषि गात्राणि भूरिशः । तथागजाश्वथालम्यान् छित्वा छित्वा सहस्रशः ॥ ४२
विकीर्यन्तोऽण्डमध्येऽस्मिन् भित्वाण्डं पार्थिवं पुनः । प्रविशन्तश्च तोयेषु तत्रत्येषु महत्स्वमी ॥ ४३
पंक्तिकेष्वथ तेष्वेते रक्तक्षोदेन भूरिणा । प्रविश्याण्डानि चान्यानि तत्रत्यानसुरान् बहून् ॥ ४४
जघ्नुर्मुक्त्वा सुरानन्यानृषीनपि महीसुराः । अहो गुहस्य महिमा केन वा ज्ञायते द्विजाः ॥ ४५
यद्येको मुक्तमात्रेण सायकः कोटिगुणो भवेत् । कोटिसहस्रगुणिता कोट्या बाणा महाजयाः ॥ ४६
असंख्याकास्ततस्तेषु व्याप्याण्डानि बहून्यपि । अमारयन्महापापानसुरानेवमुज्ज्वलाः ॥ ४७
ब्रह्मविष्णुमुखास्सर्वे देवाः कंपितविग्रहाः । उन्मील्य नयनाभ्याशु भीत्या मस्तकपाणयः ॥ ४८
पाहि नो भगवन् स्वामिन् देवदेव कृपाकर । मारयाशु महापापानसुरान् भक्तवत्सल ॥ ४९
सुब्रह्मण्य सुरश्रेष्ठ रक्ष रक्ष सुरानिमान् । इति तुष्टुवुरीशानं गुहं परममङ्गलम् ॥ ५०
अचिन्त्यमहिमाधारमस्खलद्वैभवं तदा । क्षणेन तेषु दैत्येषु मृतेषु रणमण्डले ॥ ५१
ननृतुश्च कबंधानि भूयांसि हि विभीषणम् । कंकादयोऽपि मिलिता वृकगोमायुभिस्तदा ॥ ५२
सिंहाननस्तदा पूर्वदेहं प्राप विमूर्छितः । त्यक्तमायो महादेहो मृतान् दैत्यान् स्वकीयकान् ॥
मिलितानिव भूतानि वीरान्वीक्ष्य क्रुधा ज्वलन् ॥ ५३

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे षड्विंशोऽध्यायः ॥

---

॥ अथ सप्तविंशोऽध्यायः ॥

श्रीगुहेन सिंहमुख वधः ॥

सहस्रं धनुषामाशु गृहीत्वा सुमहारवः । दशलक्षशरान्देवे मुमोच सहसाऽसुरः ॥ १
छित्वाऽमून् पार्वतीसूनुस्सहस्रेण पुनः क्रुधा । युयोज तस्मिन् पापिष्ठे सहस्राणि महीसुराः ॥ २
दशलक्षं मुमोचाथ शरान् घोरान् सुरेश्वरे । स्फुरत्कोपमहावह्निव्याकुलाक्षो सुराधिपः ॥ ३
तावदेवाशु तान्बाणानच्छिनल्लीलया गुहः । ततस्सिंहाननः कोपात्स्कन्दस्यैस्ससायकैः पुनः ॥ ४
बिभेद वक्षः पापात्मा स्कन्दसूतं महायशम् । संबभूव तदा तस्य रुधिरौघस्तु सारथेः ॥ ५
तं दृष्ट्वा षण्मुखः कोपात् निशितान् सायकान् शतान् । रथं चिच्छेद दैत्यस्य प्रेरयित्वा महाबलः ॥ ६
ततस्ससंभ्रमं दैत्यस्समादाय शरान्बहून् । ववर्ष देवे क्रोधेन यमंकालपयोदवत् ॥ ७
तदानीमेव तान् सर्वान् भित्वा बहुभिराशुगैः । चिच्छेद कार्मुकाण्यस्य सहस्रं युगपत् क्रुधा ॥ ८
सहस्रसंख्यैरिषुभिः पार्वतीनन्दनः क्षणात् । छिन्नचापोऽसुरः कोपात् शूलमादाय भीषणम् ॥ ९
मुमोच देवनाथेऽस्मिन् कृतकोलाहलारवः । आगतं तं महाघोरं अर्धाध्वे वीक्ष्य देवपः ॥ १०
बिभेद सायकैर्दिव्यैश्चतुर्दशभिराशु सः । पुनस्तत्याज पापिष्ठ सहस्राणि सुराधिपः ॥ ११
तानि सर्वाणि दण्डेन विनिवार्यासुराधमः । कृतकोलाहलारावः स्कन्दस्योपरि चागतः ॥ १२
समायान्तं तदा वीक्ष्य षण्मुखो दानवाधिपम् । शतैर्निर्निशितैर्बाणैः अच्छिनत्तत्करं परम् ॥ १३
अपरेणासुरो भूपरं दण्डं भीषणं ध्रुवम् । समादाय नुनोदास्मिन् देवेशे मन्युना ज्वलन् ॥ १४

तमायान्तं महाभीमं वीक्ष्य दृष्टं सुरेश्वरः । सहस्रेण शरैः कोपादच्छिनत्सहसा द्विजाः ॥ १५
पुनः पाशं महाघोरं प्रेषयामास दैत्यपः । चिच्छेद तत्सहस्रेण सुब्रह्मण्यस्सुराधिपः ॥ १६
ततः कोपेन महता द्विसहस्रकरैः गुहम् । बन्धितुं सुमहाटोपरवपूरितदिङ्मुखः ॥ १७
समाययौ महावेगादसुरेशो महाबलः । तमायांतं तदा वीक्ष्य विस्तृतात्मकरं गुहः ॥ १८
द्विसहस्रशरैस्तस्य करांश्छित्वाप्यपातयत् । पतिताः पाणयो भूमौ महान्त इव भूरुहाः ॥ १९
प्ररोहन्ति स्म भूयोऽपि पाणयस्तस्य पापिनः । तैस्समादाय शस्त्राणि छिन्नानेव महासुरः ॥ २०
महाकिलिकिलारावो महावेगो महत्क्रुधा । माययाश्वसुरपाताळानोत्यमहामदः ॥ २१
तदा समीक्ष्य तं पापं भ्रुकुटीकुटिलेक्षणम् । छित्वा शिरांसि तस्यायं सहस्रं निशितैश्शरैः ॥ २२
द्विसहस्रैर्महाघोरैः दोंषि सर्वाणि चाच्छिनत् । संयमुधुर्महाघोरा मूर्धानस्तस्य दोष्ण्यपि ॥ २३
यथापूर्वं समुद्वीक्ष्य देवास्सर्वे सुदुर्गमाः । प्रापुरत्यर्थमत्युग्रं भीता व्याकुलमानसाः ॥ २४
ससार पार्वतीसूनुर्वीर्यवान् पुराहतम् । वटवृक्षसमीपे वैरसुरैरेभिरात्मनः ॥ २५
तस्मादेव प्ररोहन्ति पाणयोऽस्यातिपापिनः । इति ध्यात्वा यदा तस्थौ सुब्रह्मण्यस्सुराधिपः ॥ २६
तदा महासुरः पापो नजानाति भयान्वयम् । ऐश्वर्यं मद्बलं शौर्यमजरामरणोत्तमम् ॥ २७
छिन्नानां पुनरुत्पत्तिः पाण्यादीनांचपालिता । नमुञ्चामि सुरान् सर्वान् मुंचामि त्वां शिशुं पुनः ॥ २८
यत्रकुत्रापि वीर्येण गच्छ गच्छ यथामति । तस्य तद्वचनं श्रुत्वा किं जल्पति भयादिह ॥ २९
दुरात्मन् जल्पनं मास्तु क्षणमात्रं विलोकय । त्वां हनिष्याम्यवश्येन सत्यमुक्तं नचान्यथा ॥ ३०
इत्याह भगवान् स्कन्दो गंभीरं ब्राह्मणोत्तमाः । तच्छ्रुत्वा स महापापो महाकोपो महाबलः ॥ ३१
महारंभेण निर्गत्य द्विसहस्रकरैर्गिरीन् । तावत्संख्यान्समुत्पाट्य सुमोदाक्षिपत्सुरेश्वरे ॥ ३२
शतेन तानयं वीरदशाराणां वेणुनां तदा । प्रेरयित्वा सहस्राणि स्कन्दे वक्षसि क्रुधा ॥ ३३
प्रस्रवद्रुधिराङ्गुष्ठोऽप्ययं पापस्तान् रसयन् । गिरीनुत्पाटयामास महतो भीषणारवः ॥ ३४
तदानीं तस्य सर्वाणि शिरांस्यच्छिनदुत्क्रुधा । सहस्रेणशरैः स्कन्दः केवलं लीलया द्विजाः ॥ ३५
उत्पन्नानि पुनस्तानि शिरांस्यस्य दुरात्मनः । यथापूर्वं तदाछैत्सीत्तान्मुनीन्द्र सुमहारवः ॥ ३६
द्विसहस्रशरैः स्कन्दश्छित्वैतैर्नान्महागिरीन् । यमस दोंषि सर्वाणि दैत्यस्यास्य पुनर्द्विजाः ॥ ३७
उत्पन्नानिच सर्वाणि पुनः पुनरसौ गुहः । चिच्छेदाप्यधिकं घोरं सहस्रादपि पापिनः ॥ ३८
निपेतुः पाणयस्तस्य शिरांसि सुमहान्त्यपि । दिक्षु सर्वासु पाताळे भूनभोवारिधिष्वपि ॥ ३९
पर्वतादिषु सर्वत्र भीरभ्रम तदा भृशम् । विभ्युस्सर्वे सुरश्रेष्ठास्तद्दारायभयाकुलम् ॥ ४०
पतितेषु शिरस्स्वेषु विधृतास्तेषु पक्षिणः । मृगाद्यो भद्भीत्या गुहाभ्रान्त्या प्रविव्यथे ॥ ४१
मम्लुः पिहितवक्त्रेषु तदा सर्वे महासुराः । एवं छिन्नेषु सर्वेषु चोत्पन्नानि यदा पुनः ॥ ४२
तदा मुक्त्वा शिरस्त्वेकं वामदिव्यमयं गुहः । अच्छिनत्तस्य सर्वाणि शिरांसि महतः करान् ॥ ४३
प्ररोहंश्च यथापूर्वं पाणयोऽस्यानि पापिनः । पुनः पुनरहो विप्रा यदा दैत्यस्य रंहसा ॥ ४४
तदानीं पार्वतीसूनुर्भर्त्सयामास तत्क्रुधा । नासाग्रे सांगुलिं कृत्वा मायेति मनसास्मरन् ॥ ४५
ध्वंसगतानि तान्याशु कल्पे वह्निरो यथा । गुहाज्ञया शिरांस्यस्य पाणयोऽप्यपुनर्विदितुः ॥ ४६
एकशेषितमूर्धानं द्विपार्णि वीक्ष्य तं गुहः । उत्पत्स्यंते क्षणादेव छिन्नान्यपि शिरांसि मे ॥ ४७
इत्युक्तं त्वया घोर पश्यामाभीदर्शनम् । इति प्रोवाच भगवान् स्मयमानसुराग्रजः ॥ ४८
तच्छ्रुत्वा स महापापो दानवः कोपविह्वलः । पश्य वीर्यं ममेदानीं पश्चमुखाधम बालिश ॥ ४९

इत्युक्त्वा सुमहारावस्सुब्रह्मण्यमभिक्रुधा । गिरिमेकं समुत्पाट्य नुनोद सुरनायके ॥ ५०
चिच्छेद तं गिरिं शीघ्राच्छरेणैकेन षण्मुखः । ततः कोपाकुलो दैत्यो दण्डमादाय भीषणम् ॥ ५१
शक्त्या शरैश्च भवतो योद्धुं सामर्थ्यमेव हि । नमयाम्यायुधेनात्र बालेत्युक्त्वा नुनत्द्विजाः ॥ ५२
तदानीं पार्वतीसूनुः कुलिशं भीषणं महत् । अनेककोटिसवितृसमतेजोभिरुज्ज्वलम् ॥ ५३
प्राहिणोत्सुमहारावं भीषयत्सकलं जगत् । निर्गत्य तन्महावेगाच्छित्वा दण्डं तदीयकम् ॥ ५४
पतित्वा तदुरोमध्ये भित्त्वैतत् क्षणमात्रतः । विनिर्ययौ समादाय प्राणांस्तस्य दुरात्मनः ॥ ५५
स्नात्वांभसि च गङ्गायाः पुनरावृत्य शीघ्रतः । करमाप यथापूर्वं स्कंदस्यैतत् द्विजोत्तमाः ॥ ५६
तदानीं सदुरात्मापि पतित्वा भूतले क्षणात् । उद्गिरन्रुधिरस्रावमास्येन परितो भृशम् ॥ ५७
लुठन्निवसतस्तूर्णं मुमोच प्राणमारुतम् । मृतं तमेनं पापिष्ठं दृष्ट्वा तुष्टास्सुराधिपाः ॥ ५८
सुगन्धीनि विचित्राणि मुमुचुः कुसुमानि ते । चक्रुः कोलाहलारावान् भूतान्यपि तदा भृशम् ॥ ५९
मेलयित्वा गुहो वीरान् भूतान्यपि सुरान्परान् । महता वाद्यघोषेण भूतकोलाहलेन च ॥ ६०
हेमकूटं समागत्य भवनद्वारि शीघ्रतः । मयकल्परथात् तस्य वीरान् सर्वान् पृदान्प्रति ॥ ६१
प्रेरयित्वा विवेशान्तःपुरं स्वयं सुरैस्सह । आरुरोह वरं सैंहमासनं ब्राह्मणोत्तमाः ॥ ६२
एतदाख्यानमखिलं यश्शृणोति पठत्यपि । सर्वान्कामानवाप्नोति विजयं शत्रुसंहतौ ॥ ६३
श्रुत्वाऽगस्त्यमुखादेतद्रामो दशरथात्मजः । अजयद्रावणमुखान्राक्षसान्पापकारिणः ॥ ६४

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे सप्तविंशोऽध्यायः ॥

---

॥ अथ अष्टाविंशोऽध्यायः ॥

सिंहवध दुःखितेन शूरेण युद्धाय निर्याणम् ॥

ततो दूताननैश्शूरस्सिंहवक्त्रं मृतं द्विजाः । निशम्य गोपुरात्तस्य पपाताधो महीतले ॥ १
लुठन्निवसतस्तत्र प्रललापातिदुःखितः । महाविष्णुमुखास्सर्वे स्वपरवाऽम्महयोऽमराः ॥ २
स्वं स्वं पदमधिष्ठातुं कृतिनोऽद्य यथापुरा । तथेदस्यनुजावस्था कथं रिपुविनाशक ॥ ३
एवमादीनि भूयांसि प्रविलप्यासुरेश्वरः । उत्थायात्यम्बुखोऽयमाशु सिंहासनं महत् ॥ ४
आरुह्य मन्युमास्थन्तं परिस्फुरितलोचनः । मदीयाण्डेषु सर्वेषु बहवो दानवा बलाः ॥ ५
सन्ति सिंहमुखादस्मान्मृतादपि यशस्विनः । आहूय तानहं गत्वा जित्वैकं बालकं रणे ॥ ६
आगमिष्यामि भूयोपि पत्तनं मामकं क्षणात् । इत्युक्त्वा प्रेषयामास दूतान् साहस्रकोटिकान् ॥ ७
गत्वाण्डेषु च सर्वेषु दूतास्तत्र स्थितान्बहून् । विज्ञाप्य शूरवचनमसुरान् बलशालिनः ॥ ८
महापुरमिदं भूयो दानवैस्तैर्महाबलैः । क्षिप्तं जगदिदं शंभोस्ससुरासुरमानुषम् ॥ ९
विनिर्गतं शिवस्थायां पादायेव यथापुरा । जटाजूटतटाद्गंगा प्रवाह इव भीषणाः ॥ १०
तत्र तत्र स्थिता दैत्या निर्मिथांडं विलाध्वनः । विनिर्गता महाघोरास्सर्वधृतार्कादिरसमयः ॥ ११
स्वदीप्त्यान्धकारीयैर्व्याप्तलोकत्रयोऽतपाः । अथाक्षेपां मर्थ यद्रेतीरन्धेय नभस्तः ॥ १२
महारावेण लोकानां भयभूत तदा भृशम् । अनुष्टयन्मयस्सर्वे तत्पादोत्थैश्च रेणुभिः ॥ १३
पादन्यासमहावेगात् ब्रह्मांडं चास्फुटत्तदा । संघार्य प्रापिरे भूमितलाश्चं बलिसद्म च ॥ १४
तथा विपुर्विधायायाकलितुं यत्र क्वचित् । बलध्वानमावकाशत्वाद्दिचारेण दरेण ह ॥ १५

गिरयश्च तथा सर्वे तूलवत् खं समाश्रिताः । दैत्यसेनामुखेनैव ब्रह्माण्डं पूरितं तदा ॥ १६
अनागतानां दैत्यानामवकाशोऽत्र दुर्लभः । तेषामागमनं श्रुत्वा शूरः परमया मुदा ॥ १७
उत्थायान्तःपुरं गत्वा स्नात्वा भुक्त्वा यथेच्छया । धृतत्रिपुण्ड्ररुद्राक्षमालाभूषितविग्रहः ॥ १८
अनुलिप्य सुगन्धेन चन्दनेन निजाङ्गकम् । मालाभिरमलाभिश्च वासितात्मोत्तमांगकः ॥ १९
नूतनानि विचित्राणि वस्त्राण्याभरणानि च । धृत्वा पाशुपतं दिव्यमस्त्रराजेश्वरं महत् ॥ २०
प्रक्षालादीनि धान्यानि समादाय विचक्षणः । सहस्रकोटिसंख्याकपरशुसत्यानुगः ॥ २१
प्रस्थे सहसा शूरो दैत्यानामधिपो यदा । तदा दैत्याः क्षणेनैव सिंहवाहनमद्भुतम् ॥ २२
समानीयागतास्तत्र रथमप्यत्यनुत्तमम् । सहस्राक्षतुरंगसिंहभूतगणावृतम् ॥ २३
सिंहध्वजाङ्कितं रम्यं मनोमारुतवेगिनम् । ब्रह्मसृष्टिभ्योऽत्यन्तं रथस्यास्यागमे तदा ॥ २४
शीततामगमत्सूर्यस्संस्थाशाम चण्डयानकः । तस्मिन्रथवरे रम्ये नानायुधसुनिर्भरे ॥ २५
धिग्हताश्वकुलक्ष्माभृद्वृन्दचक्रमनोहरे । वीरयागप्रसूतेऽस्मिन् प्रदानाशोऽप्यनश्वरे ॥ २६
स्थित्वा वाद्यार्थैर्वैर्यैः प्रयुक्ताशीर्भिरेव च । पुरोविकीर्यत्पुष्पौघवृष्टिभिर्हृष्टमानसः ॥ २७
प्रस्थितस्सहसा दैत्यराजोऽयं सारथीन् बहून् । नियुज्य चोदने तस्य सेरी नीलगिरिर्यथा ॥ २८
विनिर्गतास्तदा केचित् कालांच्यासकपाणयः । पुरतश्छत्रिणः केचित् भृङ्गारफलशालिनः ॥ २९
वीजयमानलसत्पुच्छचामरासक्तपाणयः । धृतच्छत्रबृहच्छत्रमनोहरकराः परे ॥ ३०
चक्रुः कोलाहलारावं दानवाश्च तदा भृशम् । तीर्त्वा वीथीरनेकाश्च गोपुराण्यसुरेश्वरः ॥ ३१
प्रधानगोपुरद्वारं पद्मायामसुरैस्सैन्यकैः । तदा तत्र स्थिता दैत्यास्तं दृष्ट्वा दैत्यनायकम् ॥ ३२
चक्रुः किलिकिलारावं धृतनानायुधपाणयः । निर्गत्य वीरं शूरो महेभमदधारिभिः ॥ ३३
संपूरितं पुरो मार्गं तीर्त्वा प्राप रणस्थलम् । तदानीं दानवाः केचित् हेमकूटपुरंपरम् ॥ ३४
ययधुः कृतसंनाहा महापापा महाबलाः । मूर्छामापुस्तदा ब्रह्मविष्णुपूर्वास्सुरेश्वराः ॥ ३५
भूतान्यपि तदा वीरा विष्णुसर्वे बलाधिपैः । प्रह्लादयस्ततो देवं गुहं नत्वा व्यजिज्ञपन् ॥ ३६
सर्वानुद्वास्याद्भुतान्सर्वान्मेळयित्वाऽसुरेश्वरः । समागतोऽयं युद्धाय स्वयं शूरो दुरात्मवान् ॥ ३७
तस्य सेनामुखं स्वामिन् भवत्सीलपतनं तव । तदेनमसुरं पापं मायाभ्रमरेश्वर ॥ ३८
इति तेषां वचःश्रुत्वा गुहः परमकारणः । आनयाश्वत्र वायोस्त्वं मनोवेगरथं परम् ॥

इति श्रीव्यासवासिष्ठसंवादघारोऽस्त्वरयुतः ॥ ३९

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे अष्टाविंशोऽध्यायः ॥

---

॥ अथ एकोनत्रिंशोऽध्यायः ॥

विष्णुना देवानां स्कन्दमहिमानुवर्णनम् ॥

आदाय वज्रं चक्रं शूलं शक्तिं बिभीषणाम् । खड्गं खेटं मुद्गरं दण्डं मुसलमेव च ॥ १
धनुस्तारकमहाघोरास्तोमराणि वज्राण्यपि । विनिर्गत्य रथं रम्यं वायुनानीतमग्रिमम् ॥ २
आरुरोह सुरैस्सर्वैः पूजितः पुष्पवृष्टिभिः । भवाब्धिव्याधिवैद्यैस्सर्वैरपि महावर्धैः ॥ ३

छतस्तोमवरैस्तुंगरथाकद्यैरश्विभिः । प्रतस्थेसहसास्वामी भूतैरपि महाबलैः ॥ ४
वाहिनीद्विसहस्रेण गणितैर्बृहदायुधैः । ब्रह्मादय स्सुरास्सर्वे ववृषुः कुसुमान्यपि ॥ ५
वाद्यघोषो महानासीत् कल्पांतघननादवत् । छत्रचामरसंघाश्च वारिताकांतपास्तदा ॥ ६
पेतुर्गुणगणास्सर्वांश्चन्दितः कलवाङ्मयाः । ततो भूतानिसर्वाणि दानवाः क्रूरकर्मणः ॥ ७
अष्टोत्तरसहस्रांडस्थिता एते महाबलाः । अनेकशिरसः पापा नैकहस्ताश्च मायिकाः ॥ ८
प्रत्येकं लोकमखिलं भोक्तुं चापि परीवृढाः । तथाण्डानिच सर्वाणि प्रकंपयितुमीश्वराः ॥ ९
स्फुरद्भिद्युद्वेशाः समुद्रोदनिनास्वकाः । पिलिखचन्द्रसूर्यादिताराश्चशिरसो मलाः ॥ १०
यथा सिंहमुखः पापो भानुकोपो यथा खलः । तारकोऽग्निमुखो यद्वत् वालिवक्त्रो महासुरः ॥ ११
सुन्दोपसुंदनामानौ मधुकैटभसंज्ञकौ । जलन्धराख्यो बलवान्महिषासुरसंज्ञकः ॥ १२
तथा सर्वे इमे क्रूरा महाबलपराक्रमाः । ब्रह्मविष्णुमहेन्द्रादि दिक्पालायुधशालिनः ॥ १३
अनंतकोटिसंख्याका हसंवृताःखलुपापिनः । परिभूतानि सर्वाणि पुरैकाण्डासुरैः खलु ॥ १४
तदस्माकं सवेदेषां कथंचा प्राणरक्षणम् । येषां सर्वाण्डदैत्यानामेको मध्ये परीवृढः ॥ १५
ब्रह्मविष्णुसुरान्सर्वान् जेतुमाश्चप्रयत्नतः । तेषु द्वौ मिलितौ स्यातां चेत्तयोःकःपुरोवसेत् ॥ १६
वीरास्सेनाधिपाश्चैतौ विजेतुं नपरीवृढाः । युष्मत्वां सुखयाणेरस्माकं कात्र शक्तिः ॥ १७
चतुरंगबलंचेत्स्यात् प्रवृत्तं योद्धुमासुरम् । तदावीराश्च सेनेशास्तृणं वत्तुगतं यथा ॥ १८
भक्षिष्यंति तथा सर्वे वीरबाहुर्यदि स्थितः । सोऽपि त्यक्तबलोऽभ्येति पराभवमसंशयम् ॥ १९
स्वामुत्र गुहः साक्षात्समर्थस्सर्वदैत्यहा । पलायितुमिहास्माभिरवकाशो न लभ्यते ॥ २०
ध्रुवा युद्धमिहेदानीं मरिष्यामो यथाबलम् । इत्थमुक्त्वा मिथस्तानि प्रवृत्तानि रणे द्विजाः ॥ २१
वीरास्सेनाधिपा दैत्यान्वीक्ष्याथासद्बलं गतम् । दृष्टीरयित्वा तेऽन्योन्यमुपचक्रमिरे रणम् ॥ २२
सदेन्द्रप्रमुखादेवा विष्णुमीक्ष्य वचोऽब्रुवन् । हन्तुमेतान्महापापान् असुरान् केशवाखिलान् ॥ २३
गुहेनानेकदिवसा व्ययथाता [illegible] संशयः । कदा द्रक्ष्यधो भावि कदावा देवमोचनम् ॥ २४
कदाऽस्मद्दुःखनाशो वा पदमाप्तिः कदाथवा । न लभ्यते किमस्माभिरेतत्सर्वं [illegible] जीविभिः ॥ २५
इति तेषां वचः श्रुत्वा विष्णुराह सुरानिमान् । साक्षात्परशिवोऽस्माकं कर्ता नेता च शङ्करः ॥ २६
षण्मुखाख्यां स्वयं कृत्वा दैत्यान्हन्तुमागतः । लीलया योऽखिलांल्लोकानण्डानि सहस्रेहिमिः ॥ २७
दर्शयामास चात्मीयदेहरोमसु षण्मुखः । पंक्षश्चर्यंवितसंख्य संहर्तुमखिलद्विषाम् ॥ २८
अमीषां हनने भारः कोवास्यादितिजन्मनाम् । क्षणमात्रेण तानेतान् संहरिष्यत्ययं गुहः ॥ २९
युष्माभिरमरास्सर्वे विस्मृतो महिमाऽस्यधे । शिशुबुद्धिं विशेषेण करोषि त्वं पुरन्दर ॥ ३०
सर्वाण्डाधिपतौ तस्मिन् गुहे परमपावने । तपोमहिम्ना केनापि सुराणां भरतागतः ॥ ३१
ईदृशं महाकारं गृहीत्वा देवनायकः । मंदस्मितेन कोपेन शापेनाप्योधनेनवा ॥ ३२
क्षणेन हन्तुं शरादीनयं शक्तोऽसुरान्वराम् । को विजानाति देवस्य बलं परममद्भुतम् ॥ ३३
धृत्वायुधानि भूतानि वीरान् बलपराक्रमान् । लीलया मेळयित्वात्र युद्धायागतवान् खलु ॥ ३४
हत्वाऽसुरान् क्षणेनैतान् हनिष्यत्यसुराधिपम् । शृणुध्वममरास्सर्वे सत्यं सत्यं मयोदितम् ॥ ३५
इति विष्णुवचः श्रुत्वा पुरंदरमुखास्सुराः । त्यक्त्वा शङ्कां हृदंभोजे ध्यायन्तो देवनायकम् ॥ ३६

सत्यज्ञानानंदमयं सर्वशत्रुनिबर्हणम् । विष्णुना ब्रह्मणा सार्धं प्राप्य स्कन्दान्तिकं सुराः ॥ ३७
अनुसृत्य गुहं तेन ययुस्सर्वेऽसुरार्णवे । दृष्ट्वैतन्मन्दहासेन विवेशायोधनस्थलम् ॥ ३८
गुहस्सर्वैस्सुरैस्सार्धं वीरबाहुमुखैरपि । तदाभवन्महाघोरं भूतानामसुरैर्भृशम् ॥ ३९
वृक्षपर्वतपाषाणवर्षाणां तुमुलं द्विजाः । कश्चित्सेनापतीनां वीराणामेकतत्तया ॥ ४०
भंगमापुस्तदा दैत्यैः परिभूता इमेऽखिलाः । वीरबाहुस्तदा तूर्णं गृहीत्वा धनुरुन्नतम् ॥ ४१
प्रयुङ्क्त्वा सुबहून् बाणान्हत्वा दैत्यान्बहून् क्षणात् । पराभवं गतः प्राप निकटं षण्मुखस्य सः ॥ ४२
तदा दैत्या महाघोरा गुहं आवृत्य पापिनः । बालोऽयं नितरां कोऽस्य शक्तिर्युद्धाय सांप्रतम् ॥ ४३
इति ब्रुवन्तः पापिष्ठा दण्डांश्चक्राणि भूरिशः । कुलिशानिच शूलानि शक्तीस्समुसलान्यपि ॥ ४४
ववर्षुः कृतसंरावा युगपद्दानवा भृशम् । वीक्ष्य तान्पापिनः कोपात्सुब्रह्मण्यस्सुरेश्वरः ॥ ४५
आनमय्य धनुर्घोरं योजयित्वाऽत्ययासह । मरुतोच्छिलसिलीरावं प्रलयांबुदमेघवत् ॥ ४६
तदाकर्ण्य महाघोरं चतुरंगबलं तदा । पपात भूमौ मोहेन दैत्यानां ब्राह्मणोत्तमाः ॥ ४७
छित्वाऽस्त्राणि बहून्याशु चापान् बाहून् शिरांस्यपि । वक्षांसि दोंषि दैत्यानां छित्वा छित्वा महीतले ॥ ४८
पातयामास धर्मात्मा गिरीन्वृक्षथवाइव । अश्वानां पादबालानि स्कन्धानपि मन्धरान् ॥ ४९
चक्राणि केतून् स्तंभांश्च रथानां महतां तथा । दंतिनांच रदशुण्डान् पादशालकमस्तकान् ॥ ५०
तथा ध्वजानि छत्राणि चामराण्यायुधान्यपि । भूषणानि विचित्राणि किरीटानि महान्त्यपि ॥ ५१
छित्वा हतान् दैत्यानाममेघौघो महीतले । स्वर्गे व्योमशिरेऽस्त्राणि गुहस्यामिततेजसः ॥ ५२
ब्राह्मं लोकं तथा विष्णोः भूलोकमपि भूसुराः । पातालमण्डमिशिरा अम्भोदिवलयं तथा ॥
अमारयंस्तदा दैत्यान् बहूनत्रसमागतान् ॥ ५३

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे एकोनत्रिंशोऽध्यायः ॥

---

॥ अथ त्रिंशोऽध्यायः ॥

श्री गुहेन शूर सैन्य वधः ॥

मुक्त्वा देवानुपर्यन्यान् बहुधा ब्राह्मणोत्तमाः । प्रस्थितानि (मथितानि) शिरांस्येषां स्मशानेऽथशिरोयथा ॥ १
तैरेवपूरितं विश्वं जगदेतच्चराचरम् । दैत्यानां छिन्नहस्तस्थान्यायुधानि तदाऽसुरान् ॥ २
आयुधानि शरैस्तस्य पतित्वा मारयन्बहून् । एवं नाना प्रकारेण मृता एतेऽसुराधमाः ॥ ३
दृष्ट्वैतद्देवताः सर्वा ब्रह्मा विष्णुपुरोगमाः । आपुस्संतोषमत्यन्तं वीरास्सेनाधिपाश्च ते ॥ ४
प्रथमं दानवान्सर्वान् आगतान् ददृशुः पुनः । न संहारं कृत तेन गुहेन क्षणमात्रतः ॥ ५
मृतान् सर्वत्र पतितान् केवलं ददृशुः किल । प्रीत्या परमया चक्रुः स्तोत्रमेते सुरैस्सह ॥ ६
इत्थं मृतेषु सर्वेषु दानवेषु दुरात्मसु । भवकालमवाप्याशु पुनरप्यन्तरासुराः ॥ ७
आपूरयन्यया पूर्वमण्डमेतन्महाबलाः । सर्वदैत्याधिपं शूरं दृष्ट्वा तं पापकर्मिणम् ॥ ८
चमूः कोलाहलारावान् सर्वे तत्र समागताः । मृतासुरकबन्धेषु विस्रस्तेषु महीतले ॥ ९
हत्वा पदानि तत्रस्थशोणितौघानतीत्य च । हनिष्यामो वयं शूर शत्रुमेतं रणस्थले ॥ १०
इति प्रतिज्ञां कृत्वा ते दृष्ट्वा स्कन्दमरिन्दमम् । बालोऽयं नितरां सेना ह्यागता दितिजन्मनाम् ॥ ११

अण्डान्तरेभ्यो हतशेषेक एव रणस्थले । नसन्ति नागास्तुरगा बालस्यास्य रथादयः ॥ १२
इत्याश्चर्यं गताः पापाः परिवृत्य गुहं तदा । शूरस्यागमनादेनं हनिष्याम इति क्रुधा ॥ १३
ववर्षुर्निशितान्बाणानायुधानि महाबलाः । विचारमापुर्भूतानि वीरास्सेनाधिपास्तदा ॥ १४
तदा वायुमपेक्ष्यायं गुहः परमपावनः । स्मयमानमुखाम्भोजः प्राह गंभीरया गिरा ॥ १५
प्रेरयाशु रथं वायो पुरः पश्चाच्च मध्यतः । पार्श्वभागेषु वेगेन सर्वत्र क्षणमात्रतः ॥ १६
इति स्कन्दवचः श्रुत्वा तथेति रथमाशु सः । मुमोच भूतले व्योम्नि समुद्रेषु सरित्स्वपि (हरित्स्वपि)
लोकालोकेषु सर्वत्र रथमत्यन्तवेगिनम् । तत्र तत्र महाघोरान् अमारयदसौ शरैः ॥ १८
अनेककोटिसंख्याकैः अजेयान् शत्रुभिर्गुहः । ममार क्षणमात्रेण चतुरंगबलं तदा ॥ १९
मृतातुरैः स्तराभूमिः पतितैः भारविह्वला । चकम्पे सवहच्छेपकंपनाद्वा द्विजोत्तमाः ॥ २०
तदासुरान् सारमेयाश्चखिदुः कुणपानिह । सखेटपाण्यो व्योम्नि व्यरुवन् राहवो यथा ॥ २१
ग्रस्तसूर्येन्दु सुमहन्मण्डलानिति जन्मनाम् । भूतप्रेतपिशाचाश्च रथाकर्षणयन्त्रिताः ॥ २२
दैतेयानां महाघोराः प्रवृत्ता मांसभक्षणे । निर्गतानि गुहास्त्राणि शूलरूपेण कानिचित् ॥ २३
महापरशुरूपेण चक्राकारेण कानिचित् । धनुःशक्त्यसिबाण्यादिरूपेणान्यानि भूसुराः ॥ २४
अपकृत्य तदामायां वीरत्वं दितिजन्मनाम् । तन्मुक्तदैवतास्त्राणि विश्वं व्यानशिरे जगत् ॥ २५
सारवेगमतीत्यैव तत्र तत्रामरेशितुः । रथोऽगमत् प्रणुन्नोऽयं वायुना शीघ्रगामिना ॥ २६
रथवेगं तदा दृष्ट्वा गुहस्यामिततेजसः । शराणां कार्मुकस्यापि सारथेश्च समर्थताम् ॥ २७
गुहस्य महिमावार्यं सारथेर्महिमा उत । ब्रह्मादीनां अघोरास्त्रादिस्वालोक्यामरास्तथा ॥ २८
आश्चर्यमापुरत्यर्थं ब्रह्मविष्णुपुरोगमाः । एवं क्षणेन तान् दैत्यानमारयदसौ गुहः ॥ २९
कुणपानि च सर्वत्र पतितानि महीतले । रक्तानि भुवमापूर्य पातालमपि भूसुराः ॥ ३०
व्यासुचक्षितरामाशु नृत्यन्तु कुणपेष्विव । अनेककोटिसंख्येषु भीमरूपेषु सर्वतः ॥ ३१
एवं मृतेषु सर्वेषु पापेषु ब्राह्मणोत्तमाः । पुनरण्डांतराद्दैत्याः प्राप्यैतत्पूर्ववद्रुषाम् ॥ ३२
आपूर्यन्महाघोरा रत्नायुधसमुज्ज्वलाः । तानप्यमारयत् क्षिप्रं सर्वदैत्यविनाशकः ॥ ३३
पुनः पुन रसमायाता नैवमेव अधान सः । अण्डद्वारं शरैः कोपादाच्छादयदसौ गुहः ॥ ३४
मार्गाभावाग्रदादैत्याः नागताः खलु भूसुराः । ब्रह्माण्डभित्तिपर्यन्त मसुरैस्त्यक्तजीविभिः ॥ ३५
निर्ममे कुणपाकारो महान् गिरिरहो द्विजाः । सर्वोऽपि तदा रक्तैः रसुराणामजायत ॥ ३६
तमेनं पर्वतं स्कन्दः कृतमन्दशुचिस्मितः । भसीचकार कोपेन वीक्ष्य द्वादशलोचनैः ॥ ३७
स्फुरत्स्फुलिङ्गनिचयैः क्षणमात्रेण भूसुराः । अवकाशो यथापूर्वं सर्वत्र समजायत ॥ ३८
चेलुर्भसानि परितः केवलं विरलानिह । तदा विष्णुमुखाः देवा महिमानं विलोक्य ते ॥ ३९
सुब्रह्मण्यस्य सन्तुष्टाः स्तुतिं चक्रुः सुपावनीम् । हत्वाऽसुरविमान् पापान् रक्तार्णव परिप्लुतम् ॥ ४०
महान्तं कुणपाकारं पर्वतं क्षणमात्रतः । भसीचकार कोपेन केवलं नेत्रवह्निना ॥ ४१
शूरपद्मवधे तस्य कोऽतिभारो महेशितुः । इति ब्रुवंतस्तेऽन्योन्यं प्रणम्य परया मुदा ॥ ४२
शूरपद्मा ततो देवं दृष्ट्वा कोपाग्निनाज्वलन् । चचालोपरिचार्तामि भर्त्सयन् देवनायकम् ॥ ४३
भस्मप्रदीप्तं पापिष्ठ सुब्रह्मण्योऽमरेश्वरः । प्राह तं वचनं शूरो दैत्यानामधिपो गुहम् ॥ ४४
वरेण परमेशस्य मरणं नास्ति मे ध्रुवम् । हतवन्तो मया युद्धं पराभवमिताः खलु ॥ ४५
देवानां वचनं श्रुत्वा मत्कृपि कुर्वेतामिह । आगतोऽसि विचारेण हीनो बालोऽत्र संयुगे ॥ ४६

छित्वा तान्यपि धर्मात्मा पुनर्मुक्तानि शीघ्रतः । धूळीकृत्य पुनर्दैत्ये जहौ सप्तशतं शरान् ॥ २४
मोघीकृत्यासुरो बाणान् द्विसहस्रं मुमोच हि । तावत्संख्यैः शरैः स्कन्दस्तान् छित्वा देवनायकः ॥ २५
सन्दधे द्विसहस्राणि शस्त्राण्यस्योपरि क्रुधा । उच्छिद्य तानि दैत्योऽयं त्रिसहस्रैर्महाशरैः ॥ २६
कंपयन् शेषभूम्यादीन् महाकोलाहलारवैः । अनंतकोटिसंख्यानि ववर्षासुरनायकः ॥ २७
धूळीचकार क्षिप्रेण तानि सर्वाणि षण्मुखः । एवं परस्परं छित्वा युयुधाते शरानुभौ ॥ २८
उत्पपात तदा वह्निरन्योन्यशरघट्टनात् । अशोषयदयं व्योम गङ्गामब्धीनहो द्विजाः ॥ २९
श्रीरलक्ष्मीस्तयोर्वीर्यं पश्यन्ती सातिविस्मिता । तस्थेसमीपे कथाऽहं भजिष्याम्यनयोरिति ॥ ३०
ददर्शं तु तयोरंशे शरैरत्याकृतेनहि । ततस्तु शूरपद्मोऽयं तद्ध्वजं वृहत्यजम् ॥ ३१
छित्वा कोलाहलं कृत्वा दध्मौ शंखं महारवम् । पुनर्ववर्ष भूयांसि शराण्यसिन् दुरासदान् ॥ ३२
तानि सर्वाणि सर्वेशो मोघीकृत्य शरैः परैः । समुद्रे पातयत्तस्य शरैश्छित्वा रथध्वजम् ॥ ३३
दैत्यस्य तस्य देवेश हलहला ब्राह्मणोत्तमाः । ततस्तु भानुकंपाख्यो भूतानां मध्यतो बलः ॥ ३४
सहस्राक्षेषु वाह्नानां सहस्रं संविधाय सः । चकार सुमहारावं सर्वशब्दाभिभावकम् ॥ ३५
अनेकयुगपर्यन्त मभ्रमत तदा रथः । प्रतिस्खलनमाप्याथ मण्डभिक्षौ महीसुराः ॥ ३६
पाञ्चजन्यं तदा दध्मौ हरिस्तांतं मितं परम् । प्रेरितस्तु तदा वह्निर्देवैः कुक्कुटरूपवान् ॥ ३७
कुक्कुटध्वजरूपेण रथे स्थित्वा गुहस्य सः । चिततान महाशब्दं महाप्रळयमेघवत् ॥ ३८
सर्वमेतत्तदा दृष्ट्वा विष्णुब्रह्ममुखासुराः । चक्रुः कोलाहलारावं तेऽपि सन्तुष्ट मानसाः ॥ ३९
तमाकर्ण्य महाशब्दं शूरः पापविनिर्मितः । मत्कर्षं कुर्वतां नित्यं देवानां माधवादिनाम् ॥ ४०
स्थित्वा मम पुरो भीत्या किंवा कोलाहलैरलम् । तदेतान् पुरतो हत्वा भविष्यामि शतद्विशशुम् ॥ ४१
इतिप्रतिज्ञां कृत्वार्थं रथेनैव नभः स्थले । गत्वा ववर्ष शस्त्राणि देवानुद्दिश्य कोपतः ॥ ४२
तानि सर्वाणि सर्वात्मा गुहः परमपावनः । मोघीचकार स्थित्वात्र भूतले सायकैः परैः ॥ ४३
प्रेरयित्वा रथं स्कन्दः खं स्वयं प्राप्य देवताः । मास्तु भीरिति साध्वोक्त्वा दूरतो स्थापयत् खलु ॥ ४४
अवाप्य प्रीतिमतुलां तस्थुस्तत्र गुहाज्ञया । पुरतो वर्तमानं तं प्रेक्ष्य शूरो महासुरः ॥ ४५
दुद्रुवुध सुरास्सर्वे पश्चाद्मित्वा शराम्मम । बालिशोऽयं समागत्य वर्तते पुरतः स्वयम् ॥ ४६
चलं मम समीपेऽमं आतमत्र रणस्थले । चिन्तयित्वेत्यमसुरो ववर्ष सुबहून् शरान् ॥ ४७
भञ्जितस्तच्छरान् क्षिप्रात् भत्यग्रैरमरेश्वरः । तयोर्वक्रमभूत्तत्र युध्यतोस्सुमहारथौ ॥ ४८
वायुभ्रमणवत् ग्राभ्यां वामचक्राणि चक्रवत् । कुंभकारस्य चक्रेषा यथा भ्रमति भूसुराः ॥ ४९
पुनः क्षणेन पाताळं भूमिमाकाशमप्यर्घ्वान् । पर्वतान्मेघवत् ब्रह्मविष्णुलोकान्समंततः ॥ ५०
चक्रवाळगिरिं वार्धिं महान्तं तु तमोमयम् । लोकमण्डकटाहस्य मूलमंतः क्षणेन तौ ॥ ५१
भ्रामयन्ताविमान् सर्वान् भूत्वा भासाक्षिपत्त्विषा । भ्रमतोरेतयोरेवं रथयोर्ब्राह्मणोत्तमाः ॥ ५२
त्रिभुवनसर्वे जता भूमि स्सकंपे सप्तसागराः । अद्रयः पांसवो जाता ब्रह्माण्डमपि चास्फुटत् ॥ ५३
अयतं स्तारकास्तस्ता स्समवंयैवं बलाहकाः । शूरपद्मा तदा बाणान्यवर्षीनीनिवाचिकम् ॥ ५४
मध्ये मध्ये महापापः परशून् कुलिशानपि । वज्रायुधानि भूयांसि शूलानि मुसलान्यपि ॥ ५५
टंकानि शक्तिपरिघान् भिण्डिपालानि तोमरान् । लाङ्गलादीनि चान्यानि ववर्षानंतसंख्यया ॥ ५६
तानि सर्वाणि सर्वात्मा छित्वाग्रैर्यायुदैवतैः । चतुर्दशभिरत्यैस्तद्दयाभ्वान् हतवान् प्रभुः ॥ [illegible]

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे पञ्चदशोऽध्यायः ॥

॥ अथ द्वात्रिंशोऽध्याय ॥

प्रत्यष्ट स्कन्द शूरयो युद्ध वर्णनम् ॥

प्रविनष्टरथाश्वोऽथ स्थित्वा भूमौ धनुर्धर । मुमोचानन्तसत्याकान् सुब्रह्मण्य प्रति कुधा ॥ १
छित्वा तान् देवनाथोऽथ तत्याजासिन् बहून् शरान् । तानवेक्ष्य पुनश्चाथ बिभेदास्य सायकै ॥ २
मुमोच भुजयोरस्य सहस्र पार्वतीसुत । वृष्टिधारा गिरौ यद्वत् तथैवेमे पृथागता ॥ ३
पतितशा तस्य दोर्द्वन्द्वे पतिने स्वदोऽपिच । तदा कोपेन शूरोऽथ सुब्रह्मण्यभुजोपरि ॥ ४
द्विसहस्रशरा स्तीक्ष्णान् प्राहिणोद्दानवाधम । चक्रे कोलाहलाराव तदास्यन्त दुरात्मवान् ॥ ५
पतनाश्च देवस्य अससभावमितास्तदा । तद्दृष्ट्वा दानव पापो महता मन्युना ज्वलन् ॥ ६
भूतसेनेशरीरेषु सुयोजानन्तसायकान् । छित्वा तानपि सर्वात्मा चिच्छेदास्य धनुर्वरम् ॥ ७
सहस्रसर्पैर्निशितैर्घोरैरमितविक्रम । तदाशीमहुरस्त्रीधारादाय धनुरन्तरम् ॥ ८
गत्वाकाश महावेगात्तत्रस्थस्तत्स्यजे शरान् । गत्वा तत्रापि देवेशः स्तमेनमयुधत् द्विजा ॥ ९
युध्यन्निवासुरो भूय क्षणेनाप महीतलम् । मायया वञ्चयित्वा [illegible] महापापो महाबल ॥ १०
तत्रापि देवसेनानीरागत्वन युयोधहि । ततोऽपि देत्य पापिष्ठ पाताळ धारिपीनपि ॥ ११
चक्रवाळगिरिं मेरु महान्त धारिंघि क्षणात् । दिक्पालाना तथा लोकात् ब्रह्मणो माधवस्य च ॥ १२
तत्र तत्र दुरात्माय माययागाघदाऽसुर । गत्वा तेषु स्थलेष्वेन अयुधद्देवनायक ॥ १३
अण्डभित्तिस्थल प्राप्य वर्षाय शरान् बहून् । गत्वा तत्रापि देवेश क्षणेनाद्य रथ परम् ॥ १४
अपातयदसौ दैत्य भूपृष्ठे वर्णुभिश्शरै । ततस्ससार दैत्योऽथ इन्द्रलोकस्य परम् ॥ १५
समागते जयेशास्मिन् स्थितवायमयुधच्छरै । पुर्वविलोक्य दैत्योऽथ द्वारमण्डस्य सायकै ॥ १६
गुहस्य विहित घस्या चिच्छेदैतान्निजैश्शरै । भिन्नेषु तेषु शाखेषु द्वारमासीयथापुरा ॥ १७
ततो बलानि भूयासि दैत्यानामागतानिहि । आजुहाव दुरात्माय तानि वीक्ष्य हतारय ॥ १८
आस्फाल्य यादाय योन्य मुमुस्यो गुत्स्यधगात । ततो विष्णुमुखादेवाश्चतुरगवल तदा ॥ १९
हालाहलानि घोराणि कुलिशानि बहूनिवा । कालाग्निधूमवृन्दानि किमेतदिति विस्मिता ॥ २०
आगत महता वेगात् किंयाण्डस्य बहिर्जलम् । इत्यालोक्य भयाविष्टा परिवुद्रुवुरञ्जसा ॥ २१
तदानीं तस्मै दैत्या गुहमावृत्य पापिन । ववर्षु स्साबयकान् घोरान् नानारूपाणि भीषणा ॥ २२
मन्दस्मित तत कृत्वा हुङ्कारेणाललोकयतान् । ददाह परमात्माय सुसूक्ष्ममसमय द्विजा ॥ २३
पुन पुनर्ददाहैव आगतानसुरांस्तथा । ततस्तु चक्र परशु दण्ड मुसलमाश्यसिम् ॥ २४
तत्र तत्र स्थिता दैत्या ब्रह्माण्डेषु महाबला । नायास्यन्ति यथा घोरा दहतेति महाशया ॥ २५
तत्याज तानि धर्मात्मा हन्तु तान् ब्राह्मणोत्तमा । तानिपञ्चायुधान्याशु विनिर्गत्य महाजवात् ॥ २६
गुहाम्भाद्यस्थितान् दैत्यान् हत्वाऽण्डस्य बहि क्षणात् । अनन्तकोटिचण्डांशुभासिर्गत्वा महार्णवे ॥ २७
बहुधा प्रविभिन्नानि ब्रह्माण्डानि प्रविश्य च । तेषु तेषु स्थितान् पापान् दैत्यान् जघ्नु किल द्विजा ॥
शूलपद्म तत कोपात् पारमेश विनिर्मितम् । सर्वसंहारक चक्र चक्राणामधिदैवतम् ॥ २९
मुमोच देवसेनेशो गुहे परमपावने । तदाऽऽलोक्य गुहश्शीघ्र प्रसार्य स्वकर तदा ॥ ३०
जग्राह लीलया स्वामी प्रत्यङ्गाधिपय महत् । दृष्ट्वैतद्दानवोऽत्यन्त शोकमाप निजात्मनि ॥ ३१
बहुरूप गृहीत्वाऽथ मायया स युयोध स । अनन्ताकारमिश्र त वीक्ष्य देव स्मिताननः ॥ ३२
महामोहहर घोर ज्ञानास्त्र सन्दधे महत् । गतमायस्तदा दैत्यस्तस्थे वैचल्य एव स ॥ ३३

ततो ब्रह्मादयो देवा मुमुचुः कुसुमानि ते । चक्रुः कोलाहलारावं सर्वेऽपि युगपद् द्विजाः ॥ ३४
ततस्तु शूरो ब्रह्माण्डमतीत्य युद्धमाचरत् । अण्डान्तरमुभौ गत्वा युयुधातेऽतिभीषणम् ॥ ३५
पुनरंडान्तरं प्राप्य महाबलपराक्रमौ । कृत्वा युद्धं महाघोरं त्यक्त्वा तदपि भूसुराः ॥ ३६
अण्डान्तराणि सर्वाणि चैवमेतौ सुरासुरौ । गत्वा विभीषणं तेषु युयुधाते यदा द्विजाः ॥ ३७
तदा ब्रह्ममुखा विष्णुं पप्रच्छुर्भयविह्वलाः । दुर्जयोऽयं हरे शूरो महामायोऽतिवञ्चकः ॥ ३८
आह्वयामास युद्धाय सुब्रह्मण्यं सुरेश्वरम् । तस्य तद्वचनं श्रुत्वा देवोऽप्यण्डान्तरं गतः ॥ ३९
ददर्श किं तं परिपिष्टं देवः परमवञ्चकम् । किं च जातं रणे किंवा जातं विष्णो वयं न हि ॥ ४०
बाधते महती भीतिरस्मान् संशयमानसान् । इति तेषां वचः श्रुत्वा स्मृत्वा देवस्य वैभवम् ॥ ४१
प्राह विष्णुस्सुरान् सर्वान् भयकंपितविग्रहान् । शृण्वन्तु दैवताः सर्वा युष्माकं भीतिरत्र ■ ॥ ४२
साक्षात्परशिवदशंभुष्पणमुखो नात्र संशयः । धनुष्यप्रतिमं तस्य बलं परममद्भुतम् ॥ ४३
जानतोऽपि च तं युष्मान् बाधते संशयो महान् । सर्वाण्डान्यपि मायामायास्यस्य सिशोभितः ॥ ४४
तत्र संशयो मास्तु सत्यं सत्यं मयोदितम् । इति विष्णुवचः श्रुत्वा सन्तोषं प्रापिरे सुराः ॥ ४५
तदानीमेव शूरोऽयं स्वाण्डेषु महद्रणम् । स्वपुरस्यागतोऽप्यासी विनिवृत्य द्विजोत्तमाः ॥ ४६
समाहू (ह) तोऽमुना देवस्तत्र स्कन्दो महाबलः । ततो महेन्द्रमगरीदैत्येया युद्धमीक्ष्य ते ॥ ४७
परियमुर्महाघोरा दानवेन सुघोदिताः । मन्दस्मितेन तान्सर्वानवीक्ष्य देवो ददाह ह ॥ ४८
तदा विष्णुमुखा देवा विकीर्य सुमनोहरान् । तुष्टुवुर्देवमीशानं सुब्रह्मण्यं सुरेश्वरम् ॥ ४९

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे द्वात्रिंशोऽध्यायः ॥

---

॥ अथ त्रयस्त्रिंशोऽध्यायः ॥

सुधामन्दर पातेन मृतासुराणां पुनरुज्जीवनम् ॥

ततो दैत्याधिपो दैत्यान् भस्मीभूतान् ससैनिकान् । स सैन्यं युद्धमध्यस्थो वीक्ष्य दुःखेन पीडितः ॥ १
किमिदानीं करिष्यामि विनाशयेयं दुरात्मवान् । सस्मार मातरं मायां तपस्वीमरूपिणीम् ॥ २
आगतायां महावेगात् दानवेन्द्रस्य सन्निधिम् । तामाह दानवान् सर्वान् पुनरुज्जीवयेति सः ॥ ३
जगाद वचनं सा तं शूरं वीक्ष्यासुरेश्वरम् । महादेवस्वरूपं त्वं युद्धं निन्दितवानसि ॥ ४
त्वया मदुक्तं वचनं न श्रुतं खलु पैतृकम् । युद्धं च कृतवांस्तेन दुर्जयेनातिमोहितः ॥ ५
तदस्य शक्त्या मरणं तव भावि न संशयः । तत्तिष्ठतु मृता दैत्या उज्जीव्याः पुनरेव चेत् ॥ ६
महतीमोनिधेरन्ते सुधामन्दरपर्वतः । वर्तते पुनरुज्जीवी मृतान् सर्वान् क्षणेन सः ॥ ७
आनेतव्य इति प्रोक्त्वा जगामैषा यथागतम् । तदाकर्ण्य वचस्तस्यास्सन्तोषेणासुरेश्वरः ॥ ८
सिंहवाहनमारुह्यचेन्द्रलोकस्थं त्यजन् । आनयाशु गिरिं तं त्वं सुधामंदरनायकम् ॥ ९
इत्युक्त्वा प्रैरयज्जीवमिन्द्रलोकस्थं तदा । तथेति गत्वा तत्रायमादाय गिरिमद्भुतम् ॥ १०
वहन् समागतः क्षिप्रं महावेगेन भूसुराः । तदानीमसुरास्सर्वे शूरद्भ्रातृ सोदराः ॥ ११
भानुकोपमुखाः पापासिंहवक्त्रमुखा अपि । जीवान्ते निधनं प्राप्ताः स्वपुत्रास्तन्मारुतेन ते ॥ १२
समुत्तस्थुर्महाघोराः पापाविव महीसुराः । चक्रुः कोलाहलारावं युगपद्दानवा भृशम् ॥ १३

युद्धस्थलमिवाभाति किमेतदिति वादिनः । इति ब्रुवन्तश्शस्त्राणि पतितानि समन्ततः ॥ १४
समादाय स्थितास्सर्वे सन्नद्धास्संभ्रमात् ते । समुत्थितांस्ततः शूरः पुत्रभ्रातृमुखासुरान् ॥ १५
इन्द्रलोकरथं वीक्ष्य परां प्रीतिमवाप सः । निविष्ट्य देवान् सकलान् दुरात्मा पापकर्मकृत् ॥ १६
तदेतद्दूतो दृष्ट्वा देवास्सर्वे भयान्विताः । इयमेव पदमासीत्साकमसुरैःखलैः ॥ १७
पीडा न ज्ञायतेचेद्धा प्रोक्त्वैवं दुद्रुवुः क्षणात् । चक्ररूपेण भूयांसस्तपान्येतु शिखण्डिनः ॥ १८
हंसपारावतपिककौशिकाक्लिवकादिनाम् । त्यक्त्वाऽऽयुधानि स्वान्येवं भयाविष्टास्तदा द्विजाः ॥ १९
दुःखमापुस्तदावीरा भूतान्यपि बलेश्वरैः । तदेतत्सर्वमालोक्य स्मयमानमुखांबुजः ॥ २०
तस्थौ तत्र गुहस्साक्षात्सच्चिदानंदविग्रहः । लब्धानुज्ञास्तदा शूरास्सिंहवक्त्रमुखाःखलाः ॥ २१
विजेतुमागताः स्कन्दं प्रदीपं शलभा इव । आगत्य च इमे बाणान्ववर्षु निशितान्गुहे ॥ २२
विभुस्तदा तदा वीरास्तदाटोपमवेक्ष्य से । ततः पाशुपतं घोरं सर्वशत्रुनिकृन्तनम् ॥ २३
सन्दधे तेषु पापेषु धर्मात्मा षण्मुखः क्षणात् । उद्भिरन्महासर्पान् कुलिशानि विषाण्यपि ॥ २४
वज्राशनींस्तान् महतान् शस्त्राणि सुमहान्त्यपि । वारिधीनपि कल्लोलैर्भीषणांश्च समन्ततः ॥ २५
वह्नीनस्त्राणि खान्यामि महाघोराणि भूसुराः । उच्छिद्य दैत्यमस्त्राणि क्षणेनैवातिभीषणम् ॥ २६
हत्वा तानसुरान् पापान् पुनरायपंतंच तम् । पृथ्वीहस्य पुनर्वाप्तात् गुहपार्श्वं तदागमत् ॥ २७
तदावधिमहदूरोऽपमेकत्तस्थे ऽमस्थले । आपुः प्रीतिं तदा देवाः परमां धातृपूर्वकाः ॥ २८
ततोदैत्यस्ततःक्रुद्धो भ्रुकुटीकुटिलेक्षणः । इन्द्रलोकरथं प्रेक्ष्य प्राह वार्थं तदा खलः ॥ २९
वीरान् भूतानि चान्यांश्च समानीयान्डगोळके । स्थापयित्वा वसाङ्गुत्यमितुपस्त्वा मैन्द्रपदम् ॥ ३०
स तथेति विनिर्गत्य महावेगेन भीषणः । मोहयित्वा तदा वीरान् भूतान्यपि महीसुराः ॥ ३१
क्षणेन तान् समादाय तत्र मायाभ्रमात्स्वयम् । प्रविवेश तदास्कन्दे शूरपद्माऽसुराधमः ॥ ३२
दुःखमापुस्तदा देवाः हाहेतिच भयान्विताः । इन्द्रलोकरथैतैस्तत्रभीतानन्डगोळके ॥ ३३
ज्ञात्वा गुहः पराभाव्य मुमोचास्त्राणि भूरिशः । तदस्त्राणि महावेगात्स्वास्तांस्तद्रथे स्थितान् ॥ ३४
बोधयित्वा क्षणेनैतान् रथेनैव गुहान्तिकम् । प्रापयामास वेगेन समानीय रथं द्विजाः ॥ ३५
समुत्तीर्य रथाद्वीरा वीक्ष्य षण्मुखम् । प्रणम्य पत्या भक्त्या तुष्टुवुर्देवनायकम् ॥ ३६
सुब्रह्मण्यस्तदावीक्ष्य रथं तं दानवस्य सः । मा पुनर्गच्छ दैत्यस्य समीपं रथं यताम च ॥ ३७
इत्युक्त्वा स्तंभयित्वैनमिन्द्रलोकरथं गुहः । व्यवस्थत्र धर्मात्मा वीक्ष्य शूरं निजेक्षणैः ॥ ३८
दुर्मदस्सुरः कोपाच्छरवर्षाण्यपि षण्मुखे । छित्त्वैतानि गुहो वार्धैर्वर्षाखिन पुनर्दृढम् ॥ ३९
मोचीरस्य गुहस्तान् दानवः पापकर्मकृत् । युयोज सारथी कोपाद् मार्गणान् सुपहृनवम् ॥ ४०
सद्भिः पीडितो वायुरश्वतोतोमिराकुलः । रथस्य चोदनेऽशक्तः स्तम्भे तस्थौ दुःखितः ॥ ४१
दुर्मदस्सुरस्यार्थं धनुश्छिन्नशराङ्गुणः । गुहस्सहस्रसंख्याकै निशितैः प्रांशुलोत्तमाः ॥ ४२
ततः प्रवृद्धरां शूरसंदं सुपत्राङ्गु बाहनम् । गुहस्य सन्निधिं प्राप कृत्वा कोलाहलारवम् ॥ ४३
शूलमादाय वेगेन सर्वसंहारकारकम् । तदीयपादन सिंहो रथाभ्यान् षण्मुखस्य सः ॥ ४४
शास्त्रास्त्राहत्य वेगेन कोलाहलारवं तदाकरोत् । दानवोऽपि तदा शूलं प्रेषयामास षण्मुखे ॥ ४५
तदर्थान् सुवहून् घोरान् विषाणि भुजिङ्गाम्यपि । विर्मोचयानि भूतानिचायुधानि महान्त्यपि ॥ ४६
वपमार्दीनि गस्त्यानि विरामर्द्वीव्वा मृताम् । वेगेन महता दीप्तमपमृत्युरसिविधिम् ॥ ४७
तस्मिन् कोटिदातान् स्कन्दो मुमोच निशितांस्तदा । तानुच्छिद्याग्रदण्डैर्शरान्तं भूसुरा यदा ॥ ४८

तत्याज कुलिशं घोरं तदा तस्योपरि क्रुधा । गुहस्य कुलिशं घोरं शूलमासे विधाय तत् ॥ ४९
समानीय भवत्वैतद्गुहपाणौ स्थितं स्वयम् । भग्नहृष्टमनसो देवा रक्ष रक्ष दयानिधे ॥ ५०
हत्वैनं पापिनं घोरं दुरात्मानं प्रभो गुह । तुष्टुवुर्देवमीशानं सुराणां तमुमासुतम् ॥ ५१
तदा गुहश्शरान् घोरान् त्रिसहस्राणि शीघ्रतः । तत्याज वाहने सिंहे दैत्यस्यास्य दुरात्मनः ॥ ५२
तदैव सिंहो भूपृष्ठे पतित्वाशु ममार सः । असुरस्तु तदा भूमिमाश्रितस्सहसा द्विजाः ॥ ५३
अत्यद्भुतं महाघोरं रथांगाह्वयपक्षिणः । गृहीत्वा देहमत्युग्रमुड्डीयनभसिक्षणात् ॥ ५४

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे त्रयस्त्रिंशोऽध्यायः ॥

---

॥ अथ चतुस्त्रिंशोऽध्यायः ॥

## शूरेण मायया बहुरूपग्रहणम् ॥

पक्षवातेन भूतानि वीरानपि बलाधिपान् । मोहयित्वा पुनश्चान्यांस्तुण्डेनान्यांश्च जावयन् ॥ १
तुण्डेन कांश्चित्कोपेन गृहीत्वा प्रैरयद्दिवि । पादाभ्यां दारयन् व्योम्नि तथा भूतानि कानिचित् ॥ २
भ्रमित्वोपरि वेगेन सारथिञ्च रथं तथा । वेगेन महताऽभ्येत्य सन्ताड्य व्योम गच्छति ॥ ३
पीडयत्याशु कोपेन रथवच्चतुरङ्गमान् । वीरशस्त्राणि घोराणि भक्षयित्वा विशीर्यति ॥ ४
एवैतदखिलं देवशत्रुरस्यास्य दुरात्मनः । अनंतकोटिसंख्यानि शस्त्राण्यस्मिन्यवर्षहि ॥ ५
तानि सर्वाणि दैत्योऽयं पक्षाभ्यां ताडयन् भृशम् । खण्डयित्वाशु तुण्डेन पादाभ्यामपि दारयन् ॥ ६
परिभ्रमन्पुनर्वेगात् पातालं वारिधीनपि । चक्रवालगिरिं भूमिं पर्वतान् सरितस्तथा ॥ ७
पुनर्वेगेनचाभ्येत्य वीरान् भूतानि भक्षयन् । व्यक्षेपयत्तथाऽम्भांसि तुंडेनास्फाल्य कोपतः ॥ ८
बभ्राम सुमहारावैष्षण्मुखस्य रथोपरि । वीक्ष्य तं पक्षिणं घोरं पार्वतीतनयः स्मयन् ॥ ९
न सोढव्यं ममेवार्यं पक्षिणा युद्धमीदृशम् । इत्युक्त्वा रथमाभ्यास भूमिष्ठो देवनायकः ॥ १०
अथालोकपदिन्द्रस्य मुखमग्रे निवासिनः । इन्द्रस्तदानीं मायूरं गृहीत्वा रूपमद्भुतम् ॥ ११
आगत्य तं प्रणम्याशु विनयेनासुरान्तकम् । स्थित्वा मदुपरिस्वामिन् तेन युद्धं दुरात्मना ॥ [illegible]
कुरु सर्वामरेशानेत्येवं तुष्टाव षण्मुखम् । तस्य तद्वचनं श्रुत्वा तथेत्याह्य षण्मुखः ॥ १३
मयूरं प्रेषयामास चक्रवाकोपरि क्रुधा । चक्रवाकस्तदा कोपादागत्यैनं शिखण्डिनम् ॥ १४
दंशयामास तुंडेन पादेनास्फाल्य रंहसा । मयूरोऽयं तदा रोदमापाल्यन्ते भयान्वितः ॥ १५
तद्वीक्ष्य पार्वतीसूनुस्तस्य वक्त्रे शरान्बहून् । शिरोवक्षः प्रदेशोऽस्य मुखोचांघ्रिषु भूयसा ॥ १६
तैर्बाणैः पीडितोऽत्यन्तं रुधिरौघपरिप्लुतः । धुन्वन् पुनर्वितत्याथ पक्षौ स्वस्यातिभीषणौ ॥ १७
बभ्राम सकलान् लोकान् क्षणमात्रेण कंपयन् । तदानीं देवनाथोऽपि यत्र यत्रासुराधमः ॥ १८
निर्गच्छति महावेगात्तेषु सर्वत्र सायकान् । प्रेरयित्वा ववर्षास्मिन् युगान्तोग्रकमेघवत् ॥ १९
गतसम्भ्रमं तस्य धनुर्भञ्जयितुं खगः । आगतष्षण्मुखाभ्याशं महावेगेन भूसुराः ॥ २०
अभ्यागतं समीपे तं वीक्ष्य खड्गेन देवपः । छित्वा द्विधा महीपृष्ठे पातयामास षण्मुखः ॥ २१
स दुरात्मा पतित्वाथ महीरूपेण भूयसा । उत्थितस्सहसाऽत्यन्त मायया भीषयन्गुहम् ॥ २२
तदा रथीन्द्रोऽर्थयोश्च द्वयो मार्गौ दुरात्मना । वीक्ष्य तं भीषणाकारं गुहस्त्वमिति तं ब्रुवन् ॥ २३

तत्याज तस्मिन् पापिष्ठे निशितान् लक्षसायकान् । महासमुद्ररूपेण बाणास्ते पृथिवीं क्षणात् ॥ २४
गत्वा विनाशयामासुरसुरामितरूपिणीम् । ततो देवः पुनः कोपात्समुद्रस्याऽर्ति पृथुम् ॥ २५
गृहीत्वा महदुच्चैस्तरागतस्यापमुपोपरि । युयोज तस्मिन्बाणानां शतं शीघ्रं सुरेश्वरः ॥ २६
त इमे मार्गणाः शीघ्रं गत्वाऽनन्ताग्निरूपिणः । ददाह वारिधिं घोरमसुरेण विचेष्टितम् ॥ २७
तदानीं दानवः पापो वृद्धन्यक्षेमदद्वपुः । निरगात्प्रतिदिक्षेशं स्फुरदग्निकणावृतः ॥ २८
सहस्रबाणांस्तत्याज तस्मिन् देवः स्वयंशिव । चण्डवायुस्वरूपेण गत्वा ते वह्निमीदृशम् ॥ २९
शमयामासुरारादेनं तदानीमेव भूसुराः । अग्राह स महावायोदशरीरं भीषणं भृशम् ॥ ३०
पापात्मा दानवो घोर स्तदानीमेव वञ्चकः । तस्मिन् लक्षशरान् घोरान् सन्दधे देवनायकः ॥ ३१
अमी शरा महासर्पसंघरूपेण निर्गताः । कवलीकृत्य वायुं तु निवृत्ता गुहमाययिरे ॥ ३२
तत्सहस्राणि सर्वाणि तत्तद्रूपं च दानवम् । हत्वेत्यमापुस्तत्र्वैवं निवृत्यैतानि शीघ्रत ॥ ३३
एवं घोरेण युद्धेन चत्वारो दिवसा गताः । सुरासुरेशयोर्युद्धमह्वयोर्ब्राह्मणोत्तमाः ॥ ३४
पुनस्त्रिमूर्तिरूपेण दैत्योऽयं वञ्चकः परः । समायाति महावेगाद्दानवाकारतः क्वचित् ॥ ३५
इन्द्रादि देवरूपेण भूताकारेण कुत्रचित् । पैशाचं रूपमास्थाय यक्षेरपि विभीषणम् ॥ ३६
भल्लकस्य महाघोरं रूपमादाय चैकतः । महाव्याघ्रस्वरूपेण परितो याति दुर्मतिः ॥ ३७
समुद्ररूपेणैकत्र भूप (विप) रूपेण चान्यतः । संघमेघावलितमः पर्वतादिसमुद्भवत् ॥ ३८
विद्रुतागसिंहविहगमृगसंघ इव क्वचित् । स्वस्वरूपेणचान्यत्रतारकाकारतस्तथा ॥ ३९
सिंहाननस्याग्निमुखभानुकोपमुखादिनाम् । कनीयसां सुतानां च भीमरूपेण सर्वतः ॥ ४०
मन्त्रिसेनापतीनां च रूपं गृह्णन् क्वचित्क्वचित् । निर्गत्य सुमहारावं भीषयामास दानवः ॥ ४१
पलायन्त तदा देवा भृशंत्रस्ता समंततः । तदैतत्सर्वमालोक्य स्मितं कृत्वा गुहस्तदा ॥
सहस्रकोटिसंख्याकान्यत्पर्वाक्षिन् शरान् शितान् ॥ ४२

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे चतुस्त्रिंशोऽध्यायः ॥

---

॥ अथ पञ्चत्रिंशोऽध्यायः ॥

स्कन्देन शूरपद्मवधः ॥

तानि सर्वाणि शस्त्राणि दैत्यस्यास्य दुरात्मनः । एवंवस्य स्वरूपस्य समाधिवशेन , नीयतः ॥ १
आगत्यतानि हत्वाशु स्वरूपाणि ययुर्गुहम् । शूर एकस्तदावस्थे परिशिष्टो गुहान्तिके ॥ २
तमेनमसुरं वीक्ष्य देवः परमवैभवः । एतानि तवरूपाणि दृष्टवानस्मि दानव ॥ ३
मदीयमपिरूपं त्वं पश्येत्युक्त्वाऽसमेश्वरः । जग्राह विश्वरूपं स्वमयादमानसगोचरम् ॥ ४
महानगाः पर्वता पादतलमध्ये व्यवस्थिताः । सागराः प्रपदे तस्य तारका ह्लादिनी महाः ॥ ५
पादाङ्गुलीषु विध्वान्ता गुल्फयोदशाशि भास्करौ । नैर्ऋत्यापांपती तावप्यत्रैवान्तर्गतावुभौ ॥ ६
जङ्घयोर्ऋक्षपधिन्तामणिर्जानौ महेशितुः । विद्यादयः स्थिता इन्द्रजयन्तावूरुसंस्थितौ ॥ ७
कटिसन्धौ कालपमायसुराः कटिदेशगाः । पार्श्वभागे स्थिता देवा नाना गुह्यादि देशगाः ॥ ८
शेषः स्वममृतं नामाघुन्वत्तिजंघतांग्रभोः । दिव्ये वक्षसि शास्त्राणि ज्ञानं यज्ञोपवीतकम् ॥ ९

अण्डानि रोमकूपेषु पाणौ भोगस्य संस्थितिः । ब्रह्मा विष्णुश्च भुजयोरंगुलीष्वमरस्त्रियः ॥ १०
शब्दजालमशेषं तत्र कण्ठदेशे समाश्रितम् । आस्यमध्ये स्थिता वेदा देवदेवस्य भूसुराः ॥ ११
अक्षराणि च दन्तेषु जिह्वायां तु शिवागमाः । सप्तकोटिमहामन्त्रा ओष्ठदेशे व्यवस्थिताः ॥ १२
वायुर्नासिकसंस्थोऽस्य नेत्रयोरिन्दुभास्करौ । दिशश्चोत्रप्रदेशस्था ललाटे प्रणवः स्थितः ॥ १३
परमात्मा शिवः साक्षात् स्वयं शिरसि राजते । एवमत्यद्भुतं रूपं दर्शयामास षण्मुखः ॥ १४
दृष्ट्वैतदमरास्सर्वे भयकंपितविग्रहाः । कृताञ्जलिपुटा मूर्ध्नि स्तुतिं चक्रुः परां तदा ॥ १५
सान्वीक्ष्य कृपया देवो मास्तु भीर्वोऽमरा इह । इत्युवाच कृपांभोधिर्गुहः परमपावनः ॥ १६
तुष्टुवुश्च तदा देवास्सुब्रह्मण्यं प्रणम्य ते । शूरस्तु तादृशं रूपं दृष्ट्वा दैत्यशासनम् ॥ १७
चित्ते सञ्चिन्तयामास प्राप्य शर्मं गुहस्य सः । हत्वाऽऽसुरीमयं सेनामन्यैरपि मया सह ॥ १८
कृत्वा युद्धं महाघोरं इन्द्रलोकस्थं पुनः । हत्वा स्वयशसं मायां मत्कृतां च विनाशयत् ॥ १९
अनन्यसदृशं रूपं ससुरासुरमानुषम् । अनन्तकोटिब्रह्माण्डकलावासमदर्शयत् ॥ २०
तमेनं मूढबुध्याहं ज्ञातवानस्मि बालिशम् । अयमेव महादेवः परमात्मा स्वयं शिवः ॥ २१
पुत्रसिद्धसुखायैवं उत्कण्ठौ पुरा किल । न श्रुतं सद्वचोऽस्माभिर्मत्तैरैश्वर्यमानिभिः ॥ २२
पादरोमसु दृष्टानि ब्रह्माण्डान्यखिलानि मे । आपादमस्तकं नेत्रैरस्य रूपं मयेक्षितम् ॥ २३
अनेककालं लसति सौन्दर्यं तु नवं नवम् । मत्संयुद्धिनं कुरुते तरां प्रीतिस्तु जायते ॥ २४
तपोमहिम्ना तस्यैतं दृष्टवानस्मि विग्रहम् । कृपया मयि देवोऽयं युद्धायात्र समागतः ॥ २५
जायते च तरां भक्तिरेतस्मिन्नन्तरात्मनि । प्रदक्षिणनमस्कारस्तोत्रेषु च मनो मम ॥ २६
परिस्फुरति मे नेत्रं दक्षिणं बाहुरप्यहो । ज्ञात्वा शत्रुसहायार्थं आगतं तं मनो मम ॥ २७
परिद्रवति कोपेन परिस्पृष्टं तवामिह । हन्तुं यदि च देवोऽयं आगतो मां रणस्थलम् ॥ २८
कौतिभारस्तदा तस्य लीलामेव चकार सः । अदृश्यश्च महादेवो दैवतानां च पश्यतः ॥ २९
मयुक्तमितिमां केचिदूचिरे ज्ञानमोहिताः । अनेन यस्मादयुधं वीर्यं कीर्तिस्ततस्तराम् ॥ ३०
मुक्त्वा देवान् प्रणस्यैनं स्थितं चेत्तत्कृतो मम । एवमादि विचार्याथ मनसाऽस्मिन् स्थिते सति ॥ ३१
उपसंहृत्य विश्वात्मा विश्वरूपं वपुः पुनः । क्षणेन तस्य प्राचीनं स्वरूपमग्रहीत् द्विजाः ॥ ३२
विज्ञानेऽपहृते दैत्यः कोपेन परिपीडितः । वीक्ष्य देवं विहस्याथ करावास्फाल्य भीषणम् ॥ ३३
योद्धुं मया समर्थोऽयं मायया वपुरग्रहीत् । अन्यादृशं क्षणेनैतत् निगृहीतं मया शिशोः ॥ ३४
तस्मान्मत्सदृशो नास्ति लोकेषु हि विचक्षणः । पश्चादेनं अयिष्यामि देवान् स्सर्वान् क्षणेन तान् ॥ ३५
प्रेरकानस्य बालस्य भक्षयिष्याम्यसंशयम् । इति सञ्चिन्त्य मनसा दुरात्मा विधिचोदितः ॥ ३६
महान्धकारं संपाद्य मायया भीषणं वपुः । अनेकपाणिपादोग्रमनेकमुखभीषणम् ॥ ३७
गृहीत्वैतादृशं घोरमुत्थितो व्योम्नि भूसुराः । तत्रस्थित्वा सुरान् सर्वान् वीक्ष्य कोपेन दारुणः ॥ ३८
प्रवृत्तो भक्षितुं शीघ्रात् प्रसार्यात्मकरान्बहून् । तदा देवा भृशं त्रस्तास्सुब्रह्मण्यं सुरेश्वरम् ॥ ३९
रक्ष रक्ष कृपांभोधे भक्तानामभयप्रद । मायाढ्यं दुरात्मानं देवानां भयदायिनम् ॥ ४०
महाघोरं महाकायं भर्त्सयन्तं जगत्त्रयम् । इत्थं प्रलपमानास्ते दुद्रुवुश्च समन्ततः ॥ ४१
मयूररूपो मघवानपार्थयदसावपि । तदेषां तु पश्यत्स्वेव देवेशः कृपयान्वितः ॥ ४२
अपेक्ष्य शक्तिमतुलां शत्रुसंहारकारिणीम् । द्विधा भित्वाऽसुरं शीघ्रादागच्छेति मुमोच ताम् ॥ ४३

मन्दं मन्दं विनिर्गत्य सूर्यकोटिसमप्रभा । वर्षयन्ती महद्वह्निं विनिवार्यासुरं तमः ॥ ४४
मायारूपेव तस्याशु शक्तिरेषा समागता । यदा शूरस्य निकटं तदानीमसुरोत्तमः ॥ ४५
धनश्वरं कदाप्येनं किं मां शक्तिः करिष्यति । विहस्य कोपादसुरो लोकान् हत्वा क्षणाच्छिशुम् ॥ ४६
हनिष्यामीति वेगेन गत्वा मध्य पयोनिधे. । स्फुरद्वह्निप्रवालौघं धूमराशिसमावृतम् ॥ ४७
तप्तकाञ्चनपुष्पाढ्यं श्यामरत्नदलावृतम् । रक्तोत्पलफलाकीर्णं मेघशाखामनोहरम् ॥ ४८
ब्रह्माण्डभित्तिपर्यन्तं गतमूलं महोन्नतम् । वितन्वानं घनच्छायां लक्षयोजनदूरतः ॥ ४९
कंपयन्तं हरेर्लोकं ब्रह्मणोऽपि महीसुराः । दिक्पालानांच सर्वाणां सूर्यचन्द्रविवस्वताम् ॥ ५०
मातृणां कन्यकानांच लोकान् सप्तपयोनिधीन् । अण्डभित्तिं तदास्फाल्य दारयन्तं महीमपि ॥ ५१
गृहीत्वैतादृशाकारं चूतवृक्षस्य दानव. । अपीडयज्जगत्सर्वं स्कन्धैरास्फाल्य मन्युना ॥ ५२
तदाटोपप्रशाखाग्निस्फुटद्ब्रह्माण्डकपिता । अधोमुखम जालानि न्यपतश्च तदा भृशम् ॥ ५३
आदिकूर्मोऽष्टदिङ्नागा अनंताद्यामहोरगाः । चकपिरे समुद्राणामेकीभावोऽभवत्तदा ॥ ५४
गिरयस्तारकास्तस्तर्षां न्यपतन् सर्वतो द्विजाः । चन्द्रसूर्यांशुमौ सर्वैर्ग्रहैर्मुक्त्वा स्थान् स्मकान् ॥ ५५
अपलायंस्तरां त्रस्ता हाहेति परितो भुवम् । कैलासे केचिदभवन् मेरावपि गतास्तदा ॥ ५६
पपात ब्रह्मणोऽप्यण्डं विभिन्नं भूतले भृशम् । एवमेतस्य दैत्यस्य मायां वीक्ष्य दुरात्मनः ॥ ५७
गुहस्य सा परा शक्तिः कोपेनात्यन्तभीषणा । महासंहाररुद्राभा व्याप्नुवन्ती जगत्त्रयम् ॥ ५८
विधातृवर्ग्यमध्यस्थज्योतिर्लिङ्गस्वरूपिणी । महाभैरवशूलस्य समप्रख्यातिभीषणा ॥ ५९
दहन्ती सकलान् लोकान् सुरया कैलासपर्वतम् । शोषयित्वा तथांभोधीनागत्याशु द्विधाकरोत् ॥ ६०
ततस्तु दानवः पाप. स्वचूतस्वरूपवान् । स्वस्वरूप गृहीत्वाऽथ खङ्गमादाय वेगतः (चागतः) ॥ ६१
तमेनमसुरं घोरं पक्षोभित्वा द्विजोत्तमाः । विनिर्गत्य पुनश्शक्तिर्मांसयन्ती वियत्स्थलम् ॥ ६२
स्तूयमाना सुरैस्सर्वैर्व्योमगङ्गाभिसिञ्चणात् । स्नात्वा देवादिदेवस्य करमाप महीसुराः ॥ ६३
द्विधाभूतोऽसुरः पापो मार्गेणैकेन वर्हिणः । कुक्कुटस्यापरेणायं शरीरान्थ्रां विनिर्गतः ॥ ६४
मयूरकुक्कुटाकारौ परमेशं गुहं तदा । योद्धुमभ्यागतौ कोपात्कुक्कुटोद्यतरोहसा ॥ ६५
कृपया तौ गुहः साक्षात्परमानंदविग्रहः । मयूरकुक्कुटावेतावपालोकयदञ्जसा ॥ ६६
तयोर्वभूव विज्ञानं तदानीं स्वकगर्भयोः । प्रणम्य तौ गुहं देवदेवं मुमुक्षुभूंशम् ॥ ६७
सुमहत्पक्षतश्चा वीक्ष्य कुक्कुटं भीमविग्रहम् । ध्वजरूपेण तिष्ठास्मिन् मद्रथेतिजगादतम् ॥ ६८
तदाशां शिरसा धृत्वा कुक्कुटः प्राप्तचेतनः । आरुह्य तस्य परमे रथे स्थित्वाऽति भीषणम् ॥ ६९
महारावं चकाराशु ब्रह्मांडसभेदयत् । अयरह्य मयूरस्त्वाद्वारहोने द्विरफिण्डनम् ॥ ७०
इन्द्ररूपान्नरदरसीघ्रं यद्रावणदम् द्विजाः । मयूरस्तु तदा भूमौ अन्तरिक्षेच दिव्यपि ॥ ७१
सर्वेलोकेषु श्रावैनमघापद्सुरा: क्षणात् । धावतो वर्हिणो वेगादष्टयो विभिदुस्तदा ॥ ७२
पपात मेरुमूर्ध्नि पृथिव्यपि तदासुरम् । अश्वियायू चर्तपाते ब्रह्माण्डेन भृशं तदा ॥ ७३
विलस्य वेणि स्वौ पक्षी वेगागवैर्जगत्त्रयम् । विभीषयस्तदाऽस्यन्त पञ्चाम्रःदाशु सर्वेतः ॥ ७४
उत्पादयन् भयं शेष शाहु वेत्यादिनां भृशाम् । उवाह वैयसेनेदा सुयतन्य महाबलम् ॥ ७५
मेघरूपो दशिर्यन्त् परमेशानुवाह सः । भेवयित्वैषमादाशु सर्वेश्व दिक्पालिण्डनम् ॥ ७६
अनन्तरोरविपशदंशुपमाप्तविगतो गुहः । आप युद्धस्थले वेगाचय वेवमुख्या. स्थिताः ॥ ७७
तदा वर्दिमदायन्तौ रूप कुक्कुटवर्हिणोः । गुहाज्ञया परित्यक्त्वा रूपं जगृहतुः स्वकम् ॥ ७८

नमस्कृत्वा गुहं भक्त्या भृशं तुष्टुवुस्तदा । तथा भूतानि वीराश्च सह सेनाधिपैर्बलैः ॥ ७९
संगत्य दैवमावृत्य चक्रुः कोलाहलारवान् । ब्रह्मविष्णुमुखा देवाः प्रणम्य गुहमव्ययम् ॥ ८०
प्रहृष्टमनसस्सर्वेऽप्यस्तुवन् देवनायकम् । कृपापूरितदृष्ट्यैतानवालोकयदग्निभूः ॥ ८१
मृतश्शूर इति श्रुत्वा तद्भार्या पद्मकोमला । तदानीमेव मरणमापेयं भूसुरोत्तमाः ॥ ८२
विधिशुद्ध्या परानार्यस्तस्य वह्निं मनोहरम् । शूरादीनां मृतिं श्रुत्वा हिरण्यदशूरपद्मजः ॥ ८३
हन्त तात वचोऽस्माभिरीरितं न श्रुतं त्वया । मृतः कुक्कुटरूपेण ध्वजे तिष्ठसि वैरिणः ॥ ८४
मायूरं वपुरास्थाय वहस्येनं किलाधुना । एवमादि विलप्यायं यदिदष्टोऽस्य सैनिकैः ॥ ८५
बाधन्ते मां तदाऽत्यन्तं इति सञ्चिन्त्य चेतसि । गत्वा शुक्रस्य निकटं स्वगुरोर्दानवात्मजः ॥ ८६
पित्रोः कृत्यानि कृत्वाऽयं ऐश्वर्यं क्षणभंगुरम् । विनिन्द्य शिवमुद्दिश्य मोक्षार्थी तप आश्रितः ॥ ८७
यः पठेच्छृणुयाद्वैतदाख्यानं परमाद्भुतम् । तस्य शत्रुभयं नास्ति शुभ्रब्रह्मण्यकृपाबलात् ॥ ८८
श्रुत्वा ऋषिमुखेभ्यस्त्वेतद्विष्णुसुरं रिपुम् । कालनेमिं महाघोरं अजयत् ब्राह्मणोत्तमाः ॥ ८९
उपमन्योर्मुनिश्रेष्ठाच्छ्रुत्वा कृष्णो जगत्पतिः । भौमादीनसुरान्पापान् हतवान् क्षणमात्रतः ॥ ९०
श्रुत्वा पितामहश्शुक्रात् दधीचस्तपतांवरः । आख्यानमेतदखिले अजयद्धरिमच्युतम् ॥ ९१

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे पञ्चत्रिंशोऽध्यायः ॥

॥ युद्धकाण्डः समाप्तः ॥



श्री.

ஸ்ரீராமஜெயம்.

श्री महागुरुभ्यो नमः ॥ श्री विघ्नेश्वराय नमः ॥ अविघ्नमस्तु ॥

श्री शरवणोद्भवाय नमः ॥

# श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे

## ॥ देवकाण्ड प्रारम्भः ॥



॥ देवकाण्डे प्रारम्भ मङ्गल श्लोकाः ॥

कल्याणं द्रवतं कटाक्षलवतो भक्ताय हत्वा रिपून् कल्याणाचल कार्मुकस्य तनुजं कारुण्यपाथो निधिम् ।
कल्याणाकृतिमव्ययं गिरिसुता प्रेमास्पदं पावनम् कल्याणाय भजेऽनुजं गणपतेः श्रीदेवसेनापतिम् ॥
भजेऽहमनिशं वल्ली देवसेनापतिं गुहम् । मयूरवाहनं शक्तिधरं तारकमारकम् ॥

### ॥ अथ प्रथमोऽध्यायः ॥

### श्री देवसेना विवाह निश्चयः ॥

अथावेक्ष्य गुहो देवान् जयन्तप्रमुखानिह । बन्धितानात्मयेत्याह वीरबाहुं तदाऽसुरैः ॥ १
स तथेति विनिर्गत्य गुहाज्ञां शिरसा वहन् । जयंतादीनथाभ्याय बन्दितस्तैर्महाबलः ॥ २
गृहान्तमुपेत्य तान् वीरोऽदानयित्वा समागतः । प्रणम्य ते गुहं दृष्ट्वा स्तुतिं चक्रुस्तदा तदा ॥ ३
तानुवाच कृपांभोधिस्सुखिनो भवताधुना । स्वर्गभोगान् यथापूर्वं भुक्त्वा नृपमितिद्विजाः ॥ ४
इत्याशिषो जयंतादि देवाः परमया मुदा । प्रपेभुरिन्द्रमभ्याशे स्थितमभिमुखस्तदा ॥ ५
परितुष्टस्सुरेशानो जयंतादीन् सुतानिमान् । आलिंग्य प्रणवेनायमुवाच वचनं च तान् ॥ ६
यानि भूतानि वीराश्च मृताः पूर्वं रणस्थले । उत्तिष्ठन्तु पुनर्जीवन्त्विति समस्मार षण्मुखः ॥ ७
तदाज्ञया मृतास्सर्वे नमिताः प्राप्त चेतनाः । अपांपतिमवेक्ष्याथ गुहः परनिषूदनः ॥ ८
महेन्द्रनगरं दैत्यकृतावासं महाज्ञया । कवलीकुरु शीघ्रात्त्वमित्याज्ञां कृतवान् द्विजाः ॥ ९
स तथैव चकाराशु संगीत्यांभोनिधिः पुरम् । विनिर्गत्य ततो देवैर्वीरैरन्यैश्च षण्मुखः ॥ १०
श्रीसन्धिनगरं रम्यमाप वाद्यमहारवैः । तत्र गत्वा मयूराख्यादवरुह्यासनं महत् ॥ ११
सिंहमध्यादरोहायं सूर्यंशास्तं गतस्तदा । कुमारं तत्र ते भक्त्या (भक्तया) देवादेवमपूजयन् ॥ १२
तदानीं तेषु कृपया दृष्टिं चक्रे सुरेश्वरः । अर्चितेषु पुनस्सूर्ये परेद्युष्षण्मुखः स्वयम् ॥ १३
अपूजयन्महेशानं जगतां पितरं तदा । पूजयित्वा पुरारातिं षण्मुखो हृष्टमानसः ॥ १४
आरुह्य वर्हिणं रम्यं नानालंकारमण्डितम् । श्रीसन्धिनगराद्वीरैस्सेनैर्वीरस्यन्दनस्थितैः ॥ १५
प्रतस्थे परया प्रीत्या पराचलमभि द्विजाः । गुहाज्ञया तदा विष्णुब्रह्ममुख्यास्सुरेश्वराः ॥ १६

स्वं स्वं वाहनमारुह्य निर्ययुस्सहसा द्विजाः । छत्रचामरसंघाश्च निर्ययुर्व्यजनैस्सह ॥ १७
ध्वजा महोन्नतास्तद्वद्वाद्यानि विविधान्यपि । चञ्चुनाभूमिमुल्लिख्य मयूरो भीषयन्नहिम् ॥ १८
केकारवैर्महाघोरैर्विचचाल क्षणात् द्विजाः । कुक्कुटोऽपि महामेघानशनिं निजचञ्चुना ॥ १९
लेलिहानो महारावो निरगाद्भुरास्तदा । मृगाणां चापि मृतानामारावैस्तु मृगाः परे ॥ २०
गुहां प्रविविशुस्त्रस्ताः पर्वतस्य समंततः । केकिकुक्कुटशब्देभ्य भृशंत्रस्ता महोरगाः ॥ २१
बिलानि विविशुश्शीघ्रं गंभीराणि तदा द्विजाः । समजायत वेदाना (देवाना) माराधोऽपि ऋषीश्वराः ॥
अस्तुवन् गुहमीशानं स्तोत्रवर्यैः स्तुतिप्रियम् । तदा किन्नरमुख्यानां गानासक्तमना गुहः ॥ २३
पराचलं महारावैरपायं दानवान्तकः । ऋषयष्षड्विधाश्चाद्या देवा अपि गुहं तदा ॥ २४
स्थातव्यमत्र देवेश भवता पर्वतोत्तमे । एवमप्रार्थयन् स्तुत्वा सुब्रह्मण्यं सुरेश्वरम् ॥ २५
तानुवाच गुहो वीक्ष्य युष्माभिस्सम्यगीरितम् । याच्ञार्थं मया पूर्वं तदेतत् स्मारितं किल ॥ २६
इत्युदीर्य गिरेरूर्ध्वमारुरोह सुरेश्वरः । तत्रगत्वा गुहो वीक्ष्य विश्वकर्माणमग्रतः ॥ २७
निर्मातव्यं त्वया रम्यं पुरं मम सुरप्रिय । इति संभाषयामास कारुण्यामृत विग्रहः ॥ २८
स तस्य भवतं मूर्ध्नि छाया तक्षाथ नाकिनाम् । निर्ममेऽथ पुरं रम्यं नानावृक्षोपशोभितम् ॥ २९
गोपुराट्टालसंयुक्तं प्राकारवलभीवृतम् । नानाश्चर्यसमोपेतं नानालंकारमण्डितम् ॥ ३०
एवं निर्मितमन्वीक्ष्य त्वष्ट्रा सन्तुष्टमानसः । वीथीषु वीरान् भूतानि विनियोज्य बलाधिपैः ॥ ३१
प्रविश्य स्वालयं रम्यं मयूरादवरुह्य सः । सिंहासने समारुह्य पार्श्वयोश्च सुरांस्तदा ॥ ३२
स्थापयित्वा स्वयं वीरैः कृतनानोपचारवान् । ऋषिभिष्षड्भिरत्यन्तं पूजितः पार्वती सुतः ॥ ३३
तदा तेषां सुविज्ञानं उपदेष्टुमनास्सुरान् । ब्रह्मादीन् स्वस्वभवनं प्रेरयामास भूसुराः ॥ ३४
प्रेरयित्वा स्वविज्ञानं उपदिश्याग्र संस्थितः । महाविष्णुमुखानिन्द्रः प्रोवाच स्वसुतामिह ॥ ३५
गुहाय संप्रयच्छामि विवाहोक्तविधानतः । इति तस्य वचः श्रुत्वा सन्तोषेण तथेति ते ॥ ३६
आपिरे स्वानि वेश्मानि कलकल्या इव क्षणात् । स्वगृहं प्राप्य मघवानिन्द्राणीं स्वसुतांगजाम् ॥ ३७
आनेतुं प्रेषयामास तथेति स्वभटांस्तदा । तस्मै शीघ्रमेवैनामिन्द्राणी मेरुवासिनीम् ॥ ३८
प्रणम्य शूरमुख्यानां संहारं देवमोचनम् । पराचलप्रवेशं च गुहस्य परमात्मनः ॥ ३९
श्रुतोद्वाहमतद्वच्च यथेन्द्रेण सुभाषितम् । उक्त्वा तामानयित्वाशु स्वसुतां सगाम्नीं तथा ॥ ४०
प्रादुरिन्द्रस्य भवनं नानालंकारशोभितम् । तामागतां शची दृष्ट्वा पुत्रीं प्राहसिताक्षया ॥ ४१
कन्याः प्रणेमुरागत्य परिफुल्लकपोलकाः । अथातोऽपि समागत्य नमश्चक्रे स्वमातरम् ॥ ४२
आलिंग्य तं सा रुदती (सुदती) दुःखमाप तदा भृशम् । समीचीनामुवाचैषा वाचं स्त्रीणां च नाकिनाम् ॥ ४३
सर्वे जना निशाम्यैतत् कल्याणं शरजन्मनः । तुष्टिमापुस्तदाऽत्यन्तं प्रसन्नेनान्तरात्मना ॥ ४४
विनिर्गत्य सुराधीशस्समागत्य सुरैस्सह । प्रणम्य षण्मुखं प्राह विनयेन नतानन: ॥ ४५
शूरपद्ममुखान् दैत्यान् स्वामिन् हत्वा सुरानिमान् । ररक्षिथ कृपासिन्धो दत्वाऽस्मभ्यं पदं स्वकम् ॥ ४६
प्रयच्छामस्ततः किंवा लीलामङ्गलविग्रह । तथापि देवदेवेश भक्तानामिष्टपूरक ॥ ४७
रक्षार्थं देवतानां त्वं मत्पुत्र्याः पाणिसंग्रहम् । कुरु सर्वामरेशान रक्ष रक्ष दयानिधे ॥ [illegible]
इत्युक्त्वा प्रणनामार्यं दण्डवत्पृथिवीतले । तमाह देवदेवेशस्तथेत्युक्त्वा पुरन्दरम् ॥ ४९
परेद्युरेव कल्याणं भवत्वत्र मदाज्ञया । उत्तिष्ठ शीघ्रं गच्छत्वं तदर्थं यत्नमाचर ॥ ५०
इत्युक्तः प्रेषयामास सन्तोषेणामराधिपम् । ततोऽमरेशो निर्गत्य तुष्ट्या परमया युतः ॥ ५१

सुरेन्द्र प्रेष्य दूतान् स्वान् प्रेषयामास शीघ्रत । भूपतीन्मुचुकुन्दादीन् गन्धर्वाधिपतीन्सुरान् ॥ ५२
आनयध्व गुहस्यात्र श्व कल्याणमिति द्विजा । पुनश्च विश्वकर्माणं कुरु कल्याणमण्टपम् ॥ ५३
वापीकूपतटाकादीनन्यानिकरणान्यपि । इति सञ्चोदयामास मघवान् सुरवर्द्धकिम् ॥ ५४
स तथेति चकाराशु तत्सर्वं सुरवर्धकि । एवमिन्द्रस्तदा कृत्वा कल्याणापेक्षित स्थित ॥ ५५
मुचुकुन्दमुखान्दूता भूपतीनमरानपि । व्यज्ञिज्ञिपनिदं सर्वं वृत्तान्त ब्राह्मणोत्तमा ॥ ५६
मुचुकुन्दस्समाकर्ण्य कल्याण षण्मुखस्य स । प्रीत्या परमयाऽऽश्चर्य दूतास्तानुपचारत ॥ ५७
सबन्धुभिर्नागरैश्च स्वदारैश्चैवविलासिभि । नागरीभिश्च योषाभि पुरन्ध्रीभिर्विनिर्गत ॥ ५८
प्राप तत्पत्तन रम्य यत्र स्कन्दो विराजते । अन्येऽपि पृथिवीपाला दिगन्तेषु स्थिता द्विजा ॥ ५९
चन्द्रसूर्यौ तथा देवा ऋषय पुण्यशालिन । श्रुत्वा द्रुतमुखेभ्यस्ते कल्याण द्रागजाग्मत ॥ ६०
मृदुगमनसहस्रैव नानालंकार मन्थरा । चतुरंगबलैस्साक वाद्यानाच महारवै ॥ ६१
शिबिकान्दोलिकारूढै प्रभुभिश्च समन्तत. । सुन्दरीभिस्सुररम्याभि विनिर्गत्य महाबला ॥ ६२
पराचलबहिर्भूषु स्वावास चक्रिरे मुदा । पुष्पारामेषु वृक्षाण्यारामेषु सरित्स्वपि ॥ ६३
प्रयागु मण्टपस्यात्र संवाधेन महीसुरा । मुचुकुन्दमुखाभूपा देवाश्च ऋषयस्तदा ॥ ६४
शतक्रतोर्गृहं गत्वा दृष्ट्वा त त्वरया सह । मिथ कृतोपचारास्ते कृतसल्लापिनोऽवसन् ॥ ६५
समागतास्तु देवाना भूपानाच वरा स्त्रिय । इन्द्राणीनिकट गत्वा प्रणम्यैनाच तत्सुताम् ॥ ६६
कल्याणवेषा ता देव्यो गमनाचिरसज्जिकाम् । मङ्गलकृत्सालङ्काला दिव्याम्बरविभूषणै ॥ ६७
ततो विधाता निर्विघ्नसमयोऽयमिति द्विजा । कल्याणाय निशाम्यैवदिन्द्रो विष्णवादिभिस्सह ॥ ६८
सुब्रह्मण्यस्य भवन गत्वा देव प्रणम्य स । आगच्छ देवदेवेश विवाहाय गृह मम ॥ ६९
समयोऽय समीचीनस्तावत्वेनान्कृपानिधे । इत्युक्तवन्त त प्रेक्ष्य परमात्मा गुहस्तदा ॥ ७०
विहस्य किञ्चित्सन्तोषाद्यकल्याणालंकारात् । आरुह्य बर्हिण रम्य नानालंकार मण्टपम् ॥ ७१
नयाधिकैर्महाबाहैर्लक्षपर्यन्तगामिभि । कृता मपायनस्तोत्रैर्देवैरञ्जलिपाणिभि ॥ ७२
विकीर्यपुष्पवर्षाभ्या भक्ताभ्या परया मुदा । गजतारायणाभ्याच प्रतस्थे सहसा द्विजा ॥ ७३
तदानीं चन्द्रसूर्यौच छत्रे दधतुरुज्ज्वले । चामरव्यजनाभ्याच वायुश्चाचेतसावुभौ ॥ ७४
कालोऽपि भीषण खड्गमादाय निर्गतस्तदा । वेदघोषोऽभवत्तत्र्योर्वाद्यानाच महारवा ॥ ७५
ऋषयश्च तदा स्तोत्रैरस्तुवन् स्तुत्यमव्ययम् । कुक्कुटोऽपि तदारावम् अकरोद्भीषण भृशम् ॥ ७६
जगुर्गानानि रम्याणि विधरा कलवाद्यया । ऊर्वशी मेनका रम्भा ननृतुर्गानतत्परा ॥ ७७
पूर्णकुम्भान् समादाय ऋषयोऽग्रे समागता । एव नानोपचारेण वीथीरुल्लंघ्य षण्मुख ॥ ७८
मरुत्वतो गृहद्वारवीथीमापामरैस्सह । तदा सरस्वतीलक्ष्मीमुखा देववरस्त्रिय ॥ ७९
नीराजनक्रियाचक्रुरष्टमङ्गलकान्यपि । प्रदक्षिणत्रय कृत्वा विविशुर्भवनान्तरम् ॥ ८०
ततस्तुभगवान् देवो मयूरादवरुह्य स । कल्याणशालानिकटमाप मङ्गलैस्सरवै ॥ ८१
तदा समागता देवी शक्रस्य परया मुदा । अप्सरोभिर्गृहं नत्वा (गत्वा) क्षीरै पादावपूजयत् ॥ ८२
आनर्चपुष्पैर्दिव्यैस्सा कृत्वा दीपावलिं पुन । प्रदक्षिणप्रणामानि कृत्वा भवनमाप सा ॥ ८३
सुवर्णपादुके रम्ये नानारत्नविचित्रिते । धृत्वा गुहस्तनैर्देवो ययौ कल्याणमण्टपम् ॥ ८४
समारुरोह तत्रस्थ दिव्य सिंहासन पुन । विष्णवादिदेवा स्कन्दस्य नियोगात् स्वासनानित ॥ ८५
भेजिरे मुचुकुन्दाद्या प्रणम्याञ्जलिपाणय । वीरबाहुमुखा वीरा विदधुर्गुह सन्निधाम् ॥
एव नानोपचारेण पूज्यमानस्सुरेश्वर ॥ ८६

अथ निरगमदीशस्स्यन्दनं व्योमयानं कनकमणिविचित्रं सार्धमद्रीन्द्रपुत्र्या ।
वियति शिवविशुद्धे वाद्यघोषैरनेकैर्जितघनघनरावैरास्थितो द्रष्टुमेतत् ॥ ८७

इति श्रीस्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
देवकाण्डे प्रथमोऽध्यायः ॥

---

## ॥ अथ द्वितीयोऽध्यायः ॥

### श्रीस्कन्द देवसेना परिणयः ॥

ततः दृष्ट्वा महादेवं समुत्थाय गुहादयः । प्रणम्य परया भक्त्या तुष्टुवुर्बद्धपाणयः ॥ १
अवरुह्य विमानात् स्वात् निरगाद्भवया शिवः । सा गुहं पुरतो गत्वा पार्वती परमेश्वरी ॥ २
प्रणम्य पादयोर्मूर्ध्ना तुष्टाव विनयेन च । समालिङ्ग्य गुहं शम्भुः समाघ्रायाशु तच्छिरः ॥ ३
हर्षं प्राप तदाऽत्यन्तं पुनः पुनरहो द्विजाः । विष्णुब्रह्मादयो देवा नत्वा देवं त्रियम्बकम् ॥ ४
अस्तुवन् विविधैस्स्तोत्रैर्ब्रह्माद्यास्त्रिपुरास्तदा । कृपया तान् विलोक्येशः प्राप कल्याणमण्टपम् ॥ ५
अनुसृत्य सुराः सर्वे परमेशं सहागताः । तत्र सिंहासनं दिव्यमागतं तच्छिवाज्ञया ॥ ६
अलञ्चकार तद्देवः परमानन्दविग्रहः । सुब्रह्मण्यं महादेवः स्वाङ्कमारोपयत्तदा ॥ ७
प्रणेमुरम्बिकानाथं संस्तुतं सकलास्सुराः । त्वदाज्ञया गुहः स्वामी हत्वा दैत्यान् सुदुर्ग्रहान् ॥ ८
मोचयित्वाऽमरान् पश्चादागतोऽत्र पराबले । प्रीतये षण्मुखस्यास्य भवान् ससुतामिह ॥ ९
पाणिं ग्राहयसि स्वस्य कुलस्योद्धतये प्रभो । एवं प्रणम्य देवेशं ब्रह्मा वृत्तान्तमुक्तवान् ॥ १०
तदङ्गीकृत्य शिरसञ्चालनेन महेश्वरः । द्रष्टुमभ्यागतोऽस्म्याह कल्याणमिति वाग्यतः ॥ ११
पुरन्दरः तदा विष्णुरालयाच्च सुतां तव । कल्याणवेषां परमां अनयद्वै द्विजोत्तमाः ॥ १२
पत्न्याऽमरेश्वरस्यैव शचीनाम्न्या निजात्मजा तदा । कल्याणमण्टपे लक्ष्मीवाणिभ्यां सह सुन्दरीम् ॥ १३
समुत्थाय ततो देवाः प्रणेमुस्तां वराङ्गनाम् । पार्वतीपरमेशानौ श्वशुरौ प्रणनाम सा ॥ १४
अवलोक्य तदा लज्जाभावं षण्मुखमग्रतः । तदानीं पार्वतीनाथः कृपाचक्षेऽप्यलोकयताम् ॥ १५
करेणावृत्य तामेनां गौरी सञ्चुम्ब्य गण्डयोः । कृपया वीक्ष्य देवेशी जगतां जननी स्नुषाम् ॥ १६
स्वपुत्रवामके सैंहे स्थापयित्वा गता स्वयम् । एकासनस्थितावेतौ देवसेनागुहावुभौ ॥ १७
वीक्ष्य सर्वे सुराः नत्वा सन्तोषं प्रापिरे तदा । चकार षण्मुखस्याथ पादप्रक्षालनं शुचिः ॥ १८
शचीपाणिस्थभृङ्गारजलैरिन्द्रो विनिर्गतैः । समभ्यर्च्य चन्दनैः पुष्पैर्धूपदीपादिभिस्तथा ॥ १९
कृतनानोपचारौघः पादोदं पावनं तदा । कुम्भचित् स्थापयामास स्वीकर्तुं तदनन्तरम् ॥ २०
जलमादाय हस्तेन गुहस्यैव कुटुम्बिनी । इति धवलद्धारां चकार मघवान् द्विजाः ॥ २१
ततो मङ्गलसूत्रं संगृह्य मनसा विधिः । प्रादात् गुहकराब्जे तत् स्वेच्छामङ्गलहेतवे ॥ २२
बबन्ध देवसेनायाः कण्ठे तद्देवनायकः । सुगन्धिकुसुमस्रग्भिः पुनः पश्चादभूषयत् ॥ २३
ततः पुरन्दरः पुत्रीजामात्रोस्सुरसायनम् । अमृतं फलमन्यच्च नैवेद्यमकरोत्सुधीः ॥ २४
वाद्यघोषस्तदाऽत्यन्तं बभूव घननादवत् । आशीः प्रयुज्य तस्यास्तु तुष्टिमापुस्तदा भृशम् ॥ २५
जुहाव समिदाज्याहुतीभिः पावके ततः । प्रदक्षिणांश्चापि विधिविधिज्ञा ब्राह्मणोत्तमाः ॥ २६
प्रदक्षिणीकृत्य वह्निं तया स्कन्दस्स्वयं प्रभुः । पाणिनाऽऽरोपयामास पत्न्याः पादं तदाऽश्मनि ॥ २७

ददर्शतुस्तदात्वेतौ दंपती सावरुन्धतीम् । ततो महेश्वरं गौरीं पितरौ जगतामुभौ ॥ २८
त्रीणिप्रदक्षिणान्यत्र कृत्वा नेमतुरञ्जसा । स्थापयामासतुर्गौरीपरमेशौ निजासने ॥ २९
समालिङ्ग्य स्नुषां पुत्रं कृपादृष्ट्या विलोकयतौ । अथ विष्णुमुखा देवा भद्रसिंहासनस्थितान् ॥ ३०
प्रणम्य तुष्टुवुर्भक्त्या दृष्ट्वा तान् लोचनप्रियान् । अंतर्दधतुरंबेशौ तदानीमेव भूसुराः ॥ ३१
आश्चर्येण ततो देवाः स्तोत्रं चक्रुरुमेशयोः । तदानीं भार्यया साकं स्वालयं प्राप षण्मुखः ॥ ३२
श्रुण्वन्मङ्गलवाद्यानि स्तोत्राणि विविधान्यपि । द्वारि स्थित्वासुरान् सर्वान् प्रेषयित्वा गृहान्प्रति ॥ ३३
द्वारपालान् गृहद्वारि कल्पयित्वा तदा प्रभुः । विवेशान्तःपुरं रम्यं भार्यादत्तकरो द्विजाः ॥ ३४
देवसेनागुहौ तत्र तस्थतुः परया मुदा । मुचुकुन्दमुखान् भूपान् देवानन्यानृषीश्वरान् ॥ ३५
यथायोग्यं सुपूज्यांस्तान् पूजयित्वा पुरन्दरः । वासोभिर्भूषणैर्दिव्यैः कल्पवृक्षसमुद्भवैः ॥ ३६
त्रासदोषविनिर्मुक्तै मणिभिर्हारकङ्कणैः । तोषयित्वा यथान्यायं प्रेषयामास तान् द्विजाः ॥ ३७
भार्यया सह तदा सोऽयं स्वगृहे न्यवसन्मुदा । स्थित्वाऽत्र कतिचित्कालं सुब्रह्मण्यस्तयासह ॥ ३८
पट्टाभिषेकमिन्द्रस्य कर्तुं स्वर्गं प्रति द्रुतम् । प्रतस्थे स्वगृहद्वारि सर्वदेववरो द्विजाः ॥ ३९
तदा प्रतस्थुर्भूतानि वीरास्सेनाधिपा अपि । चक्रुः कोलाहलारावान् पटहानां महारवैः ॥ ४०
तच्छ्रुत्वा मघवान् ब्रह्मा हरिरन्ये सुरोत्तमाः । सर्वेऽपि मिलितास्तत्र गुहधामान्तिके तदा ॥ ४१
ततो मनोजवं रम्यं रथमारुह्य षण्मुखः । प्रतस्थे सकलान् देवान् कृतस्तोत्र प्रणामकान् ॥ ४२
निजासनान्यधिष्ठातु मुक्त्वा देव्या क्षणात् द्विजाः । गुहाज्ञया ततो देवा वाहनेषु व्यवस्थिताः ॥ ४३
निकटं देवदेवस्य पुरतो भक्तिसंयुताः । वाद्यानामारवोऽप्यासीत् प्रलयांबुधिनिस्स्वनः ॥ ४४
निर्ययुस्तत्क्षणाः केचित् भक्तिमद्गुहवामराः । एवं निर्गत्य देवेशः प्रापायममरावतीम् ॥ ४५
विद्याधरप्रिया रम्यां दृष्ट्वा तां पार्वतीसुतः । सुरतक्षाणमभ्वीक्ष्य कुर्वतां पूर्ववत् क्षणात् ॥ ४६
इति प्रोवाच भगवान् कारुण्यामृतसागरः । निर्ममे स तथैवाशु पुरीं सर्वसुरालयाम् ॥ ४७
तदा विष्णुमुखा देवास्त्वष्टारं शिल्पिनां वरम् । तोषयामासुरत्यन्तं मृदुवाग्भिर्महीसुराः ॥ ४८
तेन साकं सुरा गत्वा गुहमेतद्व्यजिज्ञपन् । श्रुत्वा तद्वचनं तेषां वाहनादवरुह्य सः ॥ ४९
प्राप स्वभवनं रम्यं तत्रस्थ विश्वशोभितम् । तत्र सिंहासने रम्ये पत्न्या तस्थौ तदाऽभिभूः ॥ ५०
तदा शची पुरस्त्रीभि विमानेनागता गृहम् । स्वकीयं सर्वरत्नाढ्यं सर्वाश्चर्यसमन्वितम् ॥ ५१
तदानीमभिभूः प्राह ब्रह्माणं पार्श्ववर्तिनम् । पट्टाभिषेकं कृत्वा त्वमिन्द्रस्यागच्छ शीघ्रतः ॥ ५२
स देवस्य पराज्ञां कृत्वा मूर्ध्नि स्वके विधिः । अपेक्षितानि द्रव्याणि संपाद्यागत्य तद्गृहम् ॥ ५३
कृत्वाऽभिषेकं शुद्धोदैः पट्टबन्धं तदाऽकरोत् । पुनः प्राप गुहाभ्याशे स्वयं तेनाभिपूजितः ॥ ५४
ततो मरुत्वानृषिभिराशिषा संप्रयोजितः । वन्दितो निखिलैर्देवैर्नृत्यद्भिश्चाप्सरोगणैः ॥ ५५
गायद्भिः किन्नरवरैः कृतनानोपचारवान् । कियन्तं कालमास्थाय सिंहासनमनुद्विजाः ॥ ५६
प्रस्थितो देवसेनेशं ननाम परितोषवान् । शरजन्मा मरुत्वन्तं स्वयं पालय पूर्ववत् ॥ ५७
निष्कण्टकं सुखेन त्वमित्युवाच दयानिधिः । प्रेरयामास विष्ण्वादीन् स्ववेश्मानिप्रति द्विजाः ॥ ५८
स्वगेहद्वारि वीरान् स्वान् कृत्वा देवान् स्वयं गुहः । शुद्धान्तं प्रविवेशायं प्रीत्या परमया युतः ॥ ५९
उषित्वैवं कियत्कालं स्वर्गलोके यथारुचि । पुनः स्कन्दगिरिं गन्तुमियेषांगनया सह ॥ ६०
प्रतस्थे सहसा स्वामी ब्रह्मविष्णुमुखान् सुरान् । प्रणम्य परया भक्त्या बद्धाञ्जलिपुटैः स्थितान् ॥ ६१
कृपया वीक्ष्य तान् स्वेषु लोकेषु प्रैरयद्गुहः । प्रेरयित्वा स्वर्गं देव्या रथमारुह्य सुन्दरम् ॥ ६२

लवल्याख्याऽभवत्तस्याः केन वा हेतुना तथा । यदैतदखिलं सूत तपतांवर नोऽधुना ॥ २२
सूतः — काञ्चीपुरं जगत्स्थानं वर्तते यन्महत्स्थलम् । तत्समीपे पुरं रम्यं मूर्धास्फाटीति विश्रुतम् ॥ २३
लवलीनिलयः कश्चिद्गिरिस्तत्र विराजते । तत्र व्याधोऽवसच्छ्रीमांस्तिरपल्यस्तपोधनाः ॥ २४
व्याधानामधिपो नित्यमेच्छत्तस्य सुतंपरम् । गिरौ तस्मिन्महाख्ये शिवाख्यो मुनिसत्तमः ॥ [illegible]
तपश्चचार पुण्यात्मा तपस्वी सत्यवर्धनः । स कदाचिन्मृगीं रम्यां स्वसमीपे स्थितामृषिः ॥ २६
विलोक्य कामवशगो मुमोह नितरां तदा । तदालोकनमात्रेण गर्भं चकेऽस सामृगी ॥ २७
लवलीकुञ्जमध्ये सा सुषुवे स्त्रियमुत्तमाम् । विलोक्य तां विजातीयां दुद्राव भयविह्वला ॥ २८
रुरोद तत्र सा बाला सुस्वरेण तदा द्विजाः । तां दृष्ट्वा व्याधवर्योऽयं सदन्तीमागतः कश्चित् ॥ २९
प्रियङ्गुव्रीहिसंपन्नकेदारालोकनाय सः । प्रीत्या परमया युक्तो गृहीत्वा तां मनोहराम् ॥ ३०
गत्वा स्वस्य कुटुंबिन्या हस्तयोर्दत्तवान्मुदा । पुत्रोत्सवक्रियां कृत्वा तदानीं व्याधनायकः ॥ ३१
स्वक्रियाऽनुदिनं कन्यामपोषयदहो द्विजाः । ववृधे सा क्रमेणैव कन्या द्वादशवत्सरम् ॥ ३२
रेणुक्रियाविलासेन बालवेषाद्यसमन्विता । ततस्तु तां व्याधनाथस्संवत्सरमीढ शेमुषीम् ॥ ३३
केदारे कुत्रचिन्मध्ये स्थापयामास रक्षितुम् । शकुन्तादुपयातेभ्यः प्रियंगुव्रीहिणोद्धरान् ॥ ३४
सच्छायां तत्र कृत्वेयं भर्त्सयन्ती पतत्रिणः । ऊर्ध्वस्वरैश्शब्दभेदैर्न्यैवसत्सुमनोहरा ॥ ३५
बालबाले लवल्या लावसत्त्राख्या बभूवहि । तामेवां रक्षितुं स्कन्दो मुक्त्वा स्कन्दगिरिं तदा ॥ ३६
प्राप श्रीपरिपूर्णाख्यं गिरिं परमशोभनम् । तदानीं नारदो दृष्ट्वा लवलीनायिकामिमाम् ॥ ३७
प्रणम्य स्कन्दपत्नीति, ज्ञात्वा सर्वमलञ्जसन् । प्राप्य श्रीपरिपूर्णाख्यं गिरिं परममद्भुतम् ॥ ३८
[illegible] दृष्ट्वा गुहं देवदेवं नत्वा ऋषीश्वरः । दृष्टाऽऽयातोऽस्मि लवलीमित्युक्त्वा देवनायकम् । ३९
विशेषेण प्रणम्याथं प्रतस्थे स्वेच्छया पुनः । व्याधवेषं गृहीत्वाऽथ निरगात्षण्मुखस्तदा ॥ ४०
समागत्य जवेनाथं लवलीनायिकान्तिकम् । का त्वं बाले सुता कस्य किं नामासि कथा जनिः ॥ ४१
कथमेतादृशीं व्याधाः कीरक्षमतिसुन्दराम् । आस्थापयन्निमे त्वांहि प्रियङ्गु रक्षितुं वने ॥ ४२
मार्गो वाच्यो जन्मभूमेर्मुखाब्जा लक्षां वरानने । यद किञ्चिदिहस्थेनमवलोकय मासिह ॥ ४३
जानासि विजनस्थत्वमुचितं काननस्य च । वनेषु नितरां भ्रान्त्या खिन्नस्यास्याशु नायिके ॥ ४४
अमृतस्य पिपासा मे सुधापूर्णनिजाधरे । एवं वादिनि देवेशे तत्पिता व्याधनायकः ॥ ४५
सेवितो · बहुभिर्व्याधैः क्रूररूपैर्धनुर्धरैः । वाद्यानामारवैर्भीमैः प्रतस्थे पुरतो द्विजाः ॥ ४६
तदानीमेव देवोऽपि गृहीत्वाऽऽसनशाखिनः । अवंतवेदशाखस्य रूपं परममद्भुतम् ॥ [illegible]
तस्थे केदारनिकटे छायां कृत्वा सुशीतलाम् । व्याधस्समागतः पुत्र्याः फलानि विविधानिच ॥ ४८
प्रियंगुपिष्टं समधु वात्सल्येन ददौ द्विजाः । मन्येऽनुजीविनस्तस्य वृक्षमेनं विलोक्यते ॥ ४९
इतः पूर्वं नदृष्टोऽयमितिज्ञेतुं तदाऽऽगताः । तान्निवार्य प्रधानोऽयं व्याधः पुत्रीमवेक्ष्य सः ॥ ५०
वत्सेयं कागतोवृक्षस्सुच्छायस्तवसंगतः । इत्युक्तवन्तं जनकं वजानेऽहमिमं पितः ॥ ५१
मायेव भाति नितरामित्युवाच वरानना । गाऽस्तुते भीतिरेतस्माद्वृक्षात्सुशीतलात् ॥ ५२
भवत्वयं सदावत्से कानने सुखदोऽनिशम् । इत्युक्त्वा प्रययौ व्याधो वनानि विविधानिच ॥ ५३
गते सपरिवारेऽस्मिन् जगाह प्राक्तनुं गुहः । धनुर्ब्बाणिर्महारूपो युवा नेत्रप्रियो वरः ॥ ५४
वाद्धवाक्यानि भूयांसि वगादालिङ्गनोत्सुकः । आलिङ्ग नाथ तामेनामवदत्कण्ठतो द्विजाः ॥ ५५

तमेनं सा भयोद्विग्ना प्राहवाचं नतानना । अहं हीनकुलोद्भूता त्वंतु राजकुलोद्भवः ॥ ५६
प्रियंगुपालिका राजन् आवयोः कियदन्तरम् । तवेदमिहायुक्तं गच्छगच्छ यथागतम् ॥ ५७
यदि दृष्टः पुलिन्दैस्त्वं तदा बाधा भवेत्ध्रुवम् । इत्युक्तवत्यामेतस्यां तदानीं व्याधनायकः ॥ ५८
समागतः पुनर्व्याधैर्वेदुमिरस्त्रमहायुधैः । समाकाय गुहस्तीर्णं स्थाविरं रूपमद्भुतम् ॥ ५९
जरापलितसर्वांगं दण्डमालम्ब्य पाणिना । व्याधस्य तस्य भस्मानि ददावाशीः प्रयुज्य सः ॥ ६०
गंतव्यं कुत्र भवतः किमपेक्षितमत्र च । इति पृष्टस्तदा तेन वृद्धः प्राह वचो द्विजाः ॥ ६१
किमप्यपेक्षितं व्याध वरं मे नास्ति वस्तुषु । स्नातुं मां कुमारीतीर्थमागतं विद्धि ते गिरौ ॥ ६२
इति तस्य वचः श्रुत्वा तथेति व्याधनायकः । स्नात्वा त्वमत्र मत्पुत्र्या सह साहाय्यवर्ती गतः ॥ ६३
इत्युक्त्वा पूर्ववत्तस्याः फलादीनि प्रदाय सः । ययौ सखीयैः पुरुषैर्व्याधोऽपं प्राह्मणोत्तमाः ॥ ६४
ततो वृद्धस्तु तां कन्यां क्षुत्पीडा वर्तते मम । इत्युक्त्वाहाय तद्धस्तात् फलपिष्टमधून्यपम् ॥ ६५
भक्षयित्वा पिपासा मे वर्ततेऽथेत्युवाच ताम् । इतस्ताटाकस्त्वमहांस्तीर्त्वा जलनिरीक्ष भवान् ॥ ६६
पीत्वा जलानि स्वादूनि पुनरागच्छतु क्षणात् । इति तस्या वचः श्रुत्वा तथेति तरुणीमहम् ॥ ६७
वृद्धस्ततस्त्वं साहाय्यं प्राप्य मार्गं प्रदर्शय । सा तथेति विनिर्गत्य तटाकान्तं निनाय तम् ॥ ६८
पीत्वाऽऽकण्ठं जलान्येव तत्रागत्य सरोवरे । पुनरागत्य तां बालां तृष्णा मे जलकांक्षिणी ॥ ६९
निवृत्ता वर्तते तृष्णा मदनसंभोगलक्षणा । त्वां नियम्य सर्वांगसुन्दरे दयया मयि ॥ ७०
त्वां नतोऽस्मि सुधापूर्णमधुराधरशालिनि । अङ्गीकुरु त्वं विजने वने मां बाधते स्मरः ॥ ७१
इति तस्य वचः श्रुत्वा लपती वृद्धमीक्ष्य तम् । वृद्धस्त्वं तापसोऽथापि यत्किञ्चिद्वदसीह माम् ॥ ७२
वयोधिको नमस्कारः क्रियतेऽद्येति चोक्तवान् । अस्मादीयैर्यदि भवान् दृश्यस्येतादृशस्तदा ॥ ७३
बाध्यते नितरां त्वं पलायागच्छ संप्रति । पुरोगच्छाम्यहं शीघ्रादित्युक्त्वा प्रययौ पुरः ॥ ७४
तदानीं षण्मुखो ज्येष्ठं गजरूपमचिन्तयत् । स तु गन्धद्विपाकारो महावेगेन निर्ययौ ॥ ७५
तं दृष्ट्वा गजमद्वं सा भीतभीता महाजवात् । आगत्य वृद्धमालिङ्ग्य त्वदुक्तं तच्छृणोम्यहम् ॥ ७६
रक्ष रक्ष गजात्तस्मात् शरणागतवत्सल । इति तस्या वचः श्रुत्वा प्रणम्य गणनायकम् ॥ ७७
तुष्टाव परया भक्त्या षण्मुखो वृद्धवेषवान् । उपसंहृत्य तद्रूपे विघ्नेशोऽन्तरधे द्विजाः ॥ ७८
ततस्तु तां महारामे रम्ये तस्मिन् रराम सः । केशसंयमनं कृत्वा वपुष्यन्तच्छद्म ददौ ॥ ७९
स्वरूपं दर्शयामास संभोगानंतरं द्विजाः । तं दृष्ट्वा षण्मुखं भीता प्रीत्या परमया युता ॥ ८०
प्रणम्याञ्जलिहस्ताथाप्राग्रेय तवसुन्दरम् । वपुरेतादृशं देव न प्रदर्शितवानसि ॥ ८१
प्रतारणं कृतं तूष्णीमहो लीला तवेदृशी । इत्यादि वचनं प्रोक्तवा तुष्टाव लवलीगुहम् ॥ ८२
ततस्तामाह देवेशो मन्दस्मितमुखाम्बुजः । विष्णोस्त्वं तनया पूर्वं तपः कृतवती महत् ॥ ८३
तपसा तेन सन्तुष्टः परां प्रीतिमवाप्तवान् । त्वयि स्नेहस्माधिक्यादेवं संयुक्तवानहम् ॥ ८४
तत्त्वं प्रियङ्गुकेदारे पुरा गच्छ ममाधुना । आगमिष्यामि तत्रापि महामार्गे जवादहम् ॥ ८५

इति गुहवचनं निशम्य वल्ली तदुपरि सन्निहितात्ममानसेयम् ।
विहितवरनमस्क्रियागुहस्य द्रुतमपि पूर्वमवापतत्स्थलं सा ॥ ८६

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
देवकाण्डे तृतीयोऽध्यायः ॥

---

॥ अथ चतुर्थोऽध्याय ॥

श्रीलवल्या स्कन्दपरिज्ञानवर्णनम् ॥

ततस्तु तत्सखी काचित् प्रियङ्गुवीरुधपालिनी । पप्रच्छ कमता कालमियन्तमिति ता द्विजा ॥ १
तामाहैव तटाकेऽस्मिन् स्नात्वा भूयस्समागता । कथं ते तटाकोऽयमधरस्य विशुद्धिवत् ॥ २
स्फुरते लोचने रक्ते केशास्सस्तिन्तिसर्वतः । प्रवर्तन्ते मुखे स्वेदबिन्दवोऽपि मनोहरा ॥ ३
लपेत्युक्तवती ज्ञात्वा शङ्कमाना निजप्रियाम् । मारोपयसि निन्दा त्वं सखि हे मयि सम्प्रति ॥ ४
एवमन्योन्यमनयोर्वदतोस्तत्र तोत्तमम् । समागतस्तत्र गुहो धृतकार्मुकसायकान् ॥ ५
दृष्ट्वा खेदमतिभ्रान्त इव स वाचमुक्तवान् । युवां बाले गजभ्रेष्ठं किं ददर्शथुरसत्तम ॥ ६
मच्छराविक्षतसर्वाङ्ग पलायनमिहाश्रितम् । इति वाच निशम्यास्य सखीचापि जगादतम् ॥ ७
त्वदीय तव तुल्यस्य भटस्य वद मा च नौ । इत्युक्त्वा चिन्तयामास मनस्येवा द्विजोत्तमा ॥ ८
उभयोरनयोर्दृष्टौ स्यातोस्यास्वयंमार्गणम् । गजाक्षीना तया तस्या प्रियङ्गुवीरुहरक्षिताम् ॥ ९
पुन सा वीक्षते तामन्यमन्वीक्षतेतराम् । इत्यसदिग्ध तावेतौ लवली यपमुखी सखी ॥ १०
स्वकेदारे गता येनान्मनुनाथ लग्नान्सुमा । अनुसृत्याशु ता देव प्रार्थना ब्राह्मणोत्तमा ॥ ११
मास्तु कोपा वरारोहे युवयोर्यद्रपक्षितम् । तत्ययच्छामि शीघ्रेण दया कुरु वरानने । १
समाकर्ण्य वचस्तस्य राजानो व्याधकन्यकाम् । याऽस्ति वा मयानेना कथमिच्छति पालिकाम् ॥ १३
इय विष्णोर्वेदाल्लब्धमभूत्त जातु चोत्तमा । तपोमहिम्ना व्याधस्य बभूव तनुजा ननु ॥ १४
मया नियोजयस्येना परेणुरुनन्दरे यदि । पठे(पठे)लिखित्वा [illegible] बाश्र भद्रा पश्याम्यसशयम् ॥
इति तस्य वच श्रुत्वा सखी प्राह गिरं तदा । न युक्तमीदृशं तेऽद्य वचन मानिना वर ॥ १६
आनयिष्यामि ता क्रीडाकृष्णारामे मनोरमे । तिष्ठ तत्र यदि व्याधैरीदृशो वीक्षितस्तदा ॥ १७
परिपीडा भवेत्तस्य सावधानेन तिष्ठ भो । इत्युक्त्वाऽग्याशमागत्य लवल्या सा सखीक्षणात् ॥ १८
प्रणम्य वाञ्छा तस्यैव उक्त्वा तस्यै विशेषित । आनीय कृष्णारामेऽस्मिन् कुत्रचित् स्थाप्यसुन्दरीम् ॥ १९
स्वय पुष्पापहारस्य व्याजेनाग्यत निर्गता । ततस्समागतो वीक्ष्य तामेना लवलीं गुह ॥ २०
द्रुतमुत्थाय सा तस्मै प्रणनाम स्मरातुरा । ता समालिङ्ग्य देवेशस्सपीड्यस्तनकुड्मले ॥ २१
दष्ट्वाधर इतनखक्षतैस्सो रराम ताम् । ततस्समागता पुष्पाण्याहृत्यैतत् सखी क्षणात् ॥ २२
आवचय्य चिरुरेष्वस्या कुसुमानि बहूनि सा । आहूय ता पुन क्षेत्र प्रियङ्गुरक्षितु ययौ ॥ २३
तत्र सा लवली तस्थे सयोगप्यप्युखस्मरे । कदा भवेदितितरा विरहाकुलितान्तरा ॥ २४
अथ व्याधादसमागत्य क्षुपस्पु (क्षुपस्तेषु) प्रियङ्गुषु । निरीक्ष्यैव लवलीं बाला चेह परमशोभनाम् ॥ २५
तालनेत्री स्वगृह प्राप लावण्यतासुज्वला । पक्षिणा तत्र यातानां वृक्षाणा गिरिराणमहो । २६
मृगाणामपि चान्येषा मुक्त्वोपत्या गमन द्विजा । स्मृत्वातु लवली देव मदनेन निपीडिता ॥ २७
विहाय कन्दुकक्रीडाम यामपि शिशुप्रियाम् । मुमूर्छकामवशगा मुहुरुद्विग्नमानसा ॥ २८
ततो मातृमुखास्तस्या परिवृत्य समन्तत । आशङ्क्यावेशमेतस्या निषृयं कुलदैवतम् ॥ २९
गुह महोपचारेण नैवेद्यैरप्यतोषयन् । ततो धात्री समाविश्य गुहस्वामितत्जन ॥ ३०
सयोगोऽभवदद्वैयभावेशो ब्राह्मणोत्तमा । श्रुत्वैव गुहनामानि समुत्तस्थौ जवन सा ॥ ३१
एवं बहुप्रकारेण तस्थे विरहविह्वला । ततो व्याधा प्रियङ्गूस्तानलुनन पक्वता गतान् ॥ ३२

सम्प्राप्य षण्मुखस्तत्र तामदृष्ट्वा निजप्रियाम् । इतस्ततश्च वीक्ष्यैना विरहेण समन्वितः ॥ ३३
पप्रच्छ पर्वतान् वृक्षान् काननानि मृगानपि । वापीकूपतटाकादीन् क्वासा प्राणनायिका ॥ ३४
इति पृष्ट्वा रसेनाथ मायादेहमतः स्थौ । गृहपृष्ठप्रदेशेऽस्या गत्वा रात्रावुमासुतः ॥ ३५
निर्यास्यति कदा त्वया सखीश्चात्र स्थितो द्विजाः । तदा समागता तस्यास्सखी सा वीक्ष्य षण्मुखम् ॥ ३६
न लभ्यतेऽवकाशोऽत्र संयोगाय तवाधुना । न युक्तः खलु संयोगो गेहेऽस्मिन्चालयासह ॥ ३७
तदन्यस्थानयित्वैना गच्छेस्त्वमुक्त्वा स्वयसखी । समेत्य तत्समीप सा स्वपतीं प्रातर तथा ॥ ३८
पितृन्भ्रातास्तनिद्राभिर्व्याप्यैषां क्षणेनताम् । निरर्गळं कवाटञ्च कृत्वैना गुहसन्निधिम् ॥ ३९
प्रापयित्वा सखीरश्वद प्राहवाच द्विजोत्तमाः । हणे यदि मयान्व्याधैः परिवीक्ष्यो (कुहरेषी) भविष्यति ॥
सरक्ष्यैना तदन्यत्र गच्छेत्युक्त्वाकरौ तदा । तयस्या करयोस्तस्य गुहस्य परमात्मनः ॥ ४१
अर्पयित्वा गुहेनैव सन्तुष्टेनातरात्मना । कृतनानोपचारा तु प्रणम्य लयलीमपि ॥ ४२
परिरभ्य स्वय गेह मायानुमतिमाप्य सा । वल्ली गुह प्रणम्याथ याने तमसि साहसात् ॥ ४३
कथमस्मान्नतहरत्वत्र रक्षितुं मा कृपावशात् । इत्युवाच ततस्तेहाथाऽव्यापयैमनोहरं ॥ ४४
श्रुत्वा तुविस्मिना (सुविस्मित) पश्चाद्ग्रामपालैरलक्षित । दूरे कस्मिन्महारामे गत्वा साकं तया गुहः ॥ ४५
रेमे समदहासेन रतिशास्त्रविचक्षण । व्यतीतायां ततो रात्र्यां लयस्या जननी तदा ॥ ४६
समुत्थाय सुता पार्श्वे वीक्ष्याऽदृष्ट्वा ससम्भ्रमम् । पप्रच्छ तत्सखीं गत्वा क्वचली क्वगतेति ताम् ॥ ४७
विज्ञायते मया नैवा मातरेवेति साब्रवीत् । प्रवृत्ते वचने हाहाकारे सर्वत्र भूसुराः ॥ ४८
व्याधनाथस्ततोव्याधै लिरगाहीक्षितु त्वया । चोरयित्वा सुता बाला कोऽगीदित्प्रापभूतल ॥ ४९
इति व्याधान् बहून् घोरान् मार्गेषु प्रैरयत्ततः । स्वय वनेषु रम्येषु पर्वतेषु सरित्स्वपि ॥ ५०
परिभ्रमन् क्रमेणाथ वृक्षारामयाप तम् । तत्र दृष्ट्वाऽनु तान् व्याधान् क्वचली भयकारिताः ॥ ५१
समायान्त्यत्र देवेश रक्षमा शाक्तपाणय । इत्युक्त्वा प्रणतामेना वीक्ष्य किञ्चित् स्मितानन ॥ ५२
मास्तु भीतिर्वरारोहे मयि तिष्ठति वल्लभे । तिष्ठ मत्पृष्ठदेशे त्व योद्धु शक्तिश्च वर्तते ॥ ५३
समाकर्ण्य वचस्तस्य पृष्ठभागमगात्तदा । तदैव ते समागत्य पुत्रीचोर इति क्रुधा ॥ ५४
जघ्नुश्च कटुवाचोऽस्मिन् ववर्षुरसायकान् बहून् । वल्ली तदा भयोद्विग्ना सहरैताम् महाबलात् । ५५
पालयस्व भयादस्माद्रक्षमां प्राणनायक । इत्युवाच ततो देव सर्वभूतहितोद्यतम् । ५६
तच्छ्रुत्वा कुक्कुट देवस्तदाऽस्मार्षीदुमासुतः । समागत्य क्वचेनाथ महारव चकारहि ॥ ५७
निशम्य त महाराव प्रळयाम्बुदनिस्वनम् । पतित्वा भूतले सर्वे अमू व्याधान् भयातुरा । ५८

इति श्रीस्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
देवकाण्डे चतुर्थोऽध्यायः ॥

॥ अथ पञ्चमोऽध्यायः ॥
श्रीवल्लीकल्याणम् ॥

दृष्ट्वा तानखिलान्व्याधाञ्छिखिवाहनायक । अनुसृत्य गुह वल्ली पितृन् स्वसमन्विता ॥ १
अवकुण्ठितसर्वाङ्गी चेलेनानुययौ द्विजाः । मध्ये मार्ग समागत्य तदा ब्रह्मात्मसम्भव ॥ २
नारदस्तपसा श्रेष्ठो लीलामानुषविग्रहम् । प्रणम्य गुहमाकर्ण्य वृत्तान्तमनुपूर्वशः ॥ ३

यद्यद्घोरतरं पापं तत्तदत्र विनश्यति । एवमादि वचः श्रुत्वा गुहस्य परमात्मनः ॥ ३९
तदांप्रीतिमवापासौ मन्दस्मितमुखांबुजा । तत्र तीर्थे परे लिङ्गं प्रतिष्ठाप्यामरेश्वरः ॥ ४०
पूजयित्वा पुरारातिं कृपां प्राप्य महेशितुः । स्थित्वाऽत्र कतिचित्कालं नगानामुत्तमे द्विजाः ॥ ४१
दिव्यं विमानमारुह्य तथा सहदेवपः । प्राप्य स्कन्दगिरिं रम्यं विमानादवरुह्य सः ॥ ४२
तत्र स्वगेहमुद्दाम्नं प्राप देव्या द्विजोत्तमाः । प्रणनाम ततो देवं देवसेना समागता ॥ ४३
प्रीत्या तां वीक्ष्य देवेशः कृपां चक्रे मुदा तदा । देवसेनां ननामाथ वल्ली परमशोभना ॥ ४४
आलिंग्य जातहार्दां तां स्मितपूर्वमभाषत । सुसहायाऽभवामहं त्वमत्र ननु बालिके ॥ ४५
प्रीतियुग्भ्यां गुहस्ताभ्यां सिंहासनमशिश्रयत् । देवसेना ततः स्कन्दमाननः पतिमव्ययम् ॥ ४६
अपृच्छदानता वल्ल्या वृत्तान्तमनुपूर्वशः । गुहः—शृणुष्वेन्द्र तनुजे पूर्वमास्तां वरानने ॥ ४७
मत्पाणिग्रहमुद्दिश्य ते तपो चरतं महत् । तपसा तेन तुष्टोऽहं मुग्धेमां त्वां मघवति ॥ ४८
उपयन्तुं कृताशातो युवामुत्पत्तिमाश्रिते । तथैव त्वामिन्द्रपुत्री विधिनांगीकरोम्यहम् ॥ ४९
इयमन्या वपुरुत्पत्या काञ्चीपुरसमीपतः । जयध्याख्यगिरौ रम्ये मत्स्नेहातिशयान्विता ॥ ५०
तपश्चचार परमं ध्यात्वा मामेव मानसे । तत्र नद्यां वने कस्मिन् कण्वशापवशात्सरिः ॥ ५१
शिवश्रध्यामिवस्तत्र चचार परमं तपः । तत्रागता तदा लक्ष्मीर्हरिणीरूपमास्थिता ॥ ५२
तां दृष्ट्वा ऋषिवर्योऽयं मुमोह मदनातुरः । लवली कुञ्ज (कुश) मध्ये यत्सुरूपा वराङ्गना ॥ ५३
तदाप्यया जगत्यस्मिन् प्रथिता तेन सुन्दरी । तपेन्द्रः कण्वशापेन निषादानां कुले जनिम् ॥ ५४
अवाप व्याधनाथोऽयं दृष्ट्वा तां लवली तदा । समादाय श्रियै तस्य दत्तवाननपत्यवान् ॥ [illegible]
तामिमां प्रीतिसंयुक्तो विवाह्य विधिनाप्रिये । स्थित्वा श्रीपरिपूर्णाख्यगिरौ साकं तया पुनः ॥ ५६
प्राप्तवानस्मि निकटमनयानहतेप्रिये । श्रुत्वैतद्देवसेनासा नितरां हृष्टमानसा ॥ ५७
तत्र तत्र स्थिते देव युयोजैकरतामिमाम् । सोदर्यौ करुणामूर्ते जगादैव गुहं तु सा ॥ ५८
ततस्तु लवलीदेवसेनां वीक्ष्य तवान्तमाम् । इदानीं सर्वदा मां त्वं रक्षेत्युक्त्वा रराम (ननाम) सा ॥
आलिंग्य तां देवसेना सखीत्वं हृदयंगमा । त्वया गुहकृपा पूर्णा कारिता मयि बालिके ॥ ६०
कृतार्थौ तदिदास्यावस्मिन्युक्त्वाते परस्परम् । गुहपार्श्वगते देव्यौ रेजाते नितरां द्विजाः ॥ ६१
मयूरकुक्कुटौ तत्र भक्तोवेगतयस्तथा । अञ्जलिकिवियलातिं तदधुस्तत्र गुहाश्रयः ॥ ६२
गुहस्तुवीरैस्सेनेशैर्भूतैरपि महाबलैः । कृतनानोपचारेण तस्थे स्वीर्भ्यां वरासने ॥ ६३

इति गदितमशेषं यद्विपृष्टं भवद्भिर्निखिलसुरवराणामीशितुष्षण्मुखस्य ।
चरितमथ पुनर्वो वच्मि यच्छ्रोतुमिच्छासफलमपि तदत्र ब्राह्मणानामधीशाः ॥ ६४

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
देवकाण्डे पञ्चमोऽध्यायः ॥

---

॥ अथ षष्ठोऽध्यायः ॥

मुचुकुन्दराजः चरित्रम् ॥

ऋषयः—

मुचुकुन्द इति प्रोक्तस्सूत पूर्वं त्वया नृपः । कल्याणायागतः कोऽयं स्कन्दस्य परमात्मनः ॥ १

सूतः—

श्रोतव्यं सावधानेन वक्ष्येऽहं ब्राह्मणोत्तमाः । पुरा कैलासशिखरे पार्वतीपरमेश्वरौ ॥ २
शृङ्गारवनमालोक्य बिल्ववृक्षस्थलीं स्थितौ । तदानीं वानरः कश्चिच्छ्यामवर्णो महाबलः ॥ ३
आरुह्य वृक्षं पत्राणि बैल्वानि परया मुदा । छित्वा तयोस्ततो भक्त्या पातयामास भूरिशः ॥ ४
किमेतदिति वृक्षं तं समवलोकयद्द्विजाः । वृक्षस्योपरि वीक्ष्यैनं वानरं कोपविह्वला ॥ ५
व्यजिज्ञपन्महादेवं घातयेति तदा शिवा । परमेशस्तदा देवीमाश्वास्यैनमिमानयम् ॥ ६
इत्युक्त्वा तं कपिश्रेष्ठमाह्वयामास देवपः । आहूतस्स समागत्य प्रणनाम महेश्वरम् ॥ ७
तमेनं पार्वतीनाथः कृपया परयाऽन्वितः । सार्वभौमो भवाशु त्वं बिल्वपत्रैर्मदर्चया ॥ ८
भुवि सर्वमहीपालमौलिलालितपादवान् । अन्ते कैलासमागत्य गाणापत्यं सुदुर्लभम् ॥ ९
अवाप्य परया प्रीत्या वसेत्येवमुवाच तम् । अप्रार्थयत्तदा देवं मुचुकुन्दो महाबलः ॥ १०
देवदेव महादेव करुणामृतसागर । मद्रूपत्तिर्भवेदस्मै भवत्कृपाय विश्वप ॥ ११
तदा ज्ञात्वं भवेदत्तं तस्मै वदनमीदृशम् । ममाकारं (प्रेमाकारं) भवत्वीश रक्षमां परयामुदा ॥ १२
इति प्रसाद देवेशं हरिश्चन्द्राऽन्वयेऽभवत् । गुहकल्याणमन्वीक्ष्य भक्त्या परमया गुहे ॥ १३
मुचुकुन्द इतिख्यातस्सर्वदेशेषु सर्वदा । गुहव्रतानि दिव्यानि वसिष्ठात्तपसां वरात् ॥ १४
श्रुत्वा यथाक्रमेणायमाचचारादरेण सः । मुनयः — मुचुकुन्दो नृपश्रेष्ठो वसिष्ठादपि सत्तमात् ॥
समाकर्ण्याचचारायं व्रतानि परया मुदा । अनुष्ठितानि कैः कानि वदात्र ऋषिसत्तम ॥ १६
सूतः — पुरा भगीरथो नाम राजा परमधर्मवान् । पराजितो रणे सोऽयं घोरसंज्ञेन रक्षसा ॥ १७
सकुटुंबो वनं प्राप देशभ्रष्टस्तदा भयात् । राज्यञ्च वनिधतं तेन राक्षसेनास्य भूसुराः ॥ १८
वनं गतस्तदा राजा भृगोस्तु ऋषिसत्तमात् । श्रुत्वा गुहव्रतं दिव्यं भक्त्या परमया सह ॥ १९
भृगुवारे विधानेन संकल्प्य ब्राह्मणोत्तमाः । वर्षत्रयं चचारायं शुक्रवारे वरं व्रतम् ॥ २०
ततः कालेन तं घोरं राक्षसं शक्तिरूपया । गुहस्य देवदेवस्य मारयामास भूसुराः ॥ २१
भगीरथस्तु सन्तोषात् स्वराज्यं प्राप्य पूर्ववत् । निष्कण्टकं महाराजो ररक्ष निखिलां महीम् ॥ २२
शुक्रवारव्रतं तस्मात् गुहस्येष्टफलप्रदम् । नारदस्तपतां श्रेष्ठश्चरित्वा व्रतमुत्तमम् ॥ २३
कृत्तिकायां विधानेन श्रेष्ठोऽभूदपि सत्तमम् । तस्यामेव द्विजः कश्चिदनुष्ठाय व्रतं मुदा ॥ २४
मनुर्भूत्वा स तु श्रीमान् बभार पृथिवीमिमाम् । पुनरस्यां द्विजोऽन्योऽपि समाप्य व्रतमुत्तमम् ॥ २५
त्रिशंकुनाम्ना पृथिवीं शशास स नृपाधिपः । अपरो द्विजराजानवनुष्ठाय व्रतं महत् ॥ २६
कृत्तिकायां यथा शास्त्रं भक्तिमंतौ गुहोपरि । संरक्ष्य राज्यमाख्यातौ तौ ह्याचन्तिम सन्तिमौ ॥ २७
देहान्ते प्रापतुर्मोक्षं गुहस्यैव प्रसादतः । स्कन्दषष्ठी व्रतं त्वन्यद्विख्यातं भुवनत्रये ॥ २८
चरित्वा यत्पुरा देवा ऋषयश्च तपोधनाः । त्यक्त्वाऽसुरभयान् प्रापुः पदानि स्वानि पूर्ववत् ॥ २९
व्रतादीनि राजाऽसौ मुचुकुन्दो महामनाः । आचचार क्रमेणैव गुहे . विन्यस्तमानसः ॥ ३०
प्रादुरासीत्ततस्तस्य परमात्मा गुहस्स्वयम् । वाञ्छितानि प्रदास्यामि वरैतानि नृपोत्तम ॥ ३१

इति ब्रुवन्तं तं राजा प्रणम्य भुवि दण्डवत् । स्तुत्वैनं विविधैः स्तोत्रैरप्रार्थयदयं द्विजाः ॥ ३२
नवसंख्याधिकालक्षवीरा देव कृपानिधे । भवन्तु मेऽनुजाःस्वामिन् सहायान्प्राप्य तानिमान् ॥ ३३
निष्कंटकमिदं राज्यं पालयिष्याम्यनुज्ञया । श्रुत्वैतद्वचनं स्वामी तथेत्युक्त्वा दयानिधिः ॥ ३४
वीरबाहुमुखान्वीरानवलोक्याब्रवीद्वचः । यूयमस्यानुजाः शीघ्रं भवताद्य ममाज्ञया ॥ ३५
इत्युक्तिमस्य संश्रुत्य वीरास्ते भयकंपिताः । दैत्यसंहारकाणां नो देवदेव कथं रतिः ॥ ३६
भवेदस्यानुजत्वेतदस्मभ्यं उचितं प्रभो । इति तेषां वचः श्रुत्वा कोपाकुलित मानसः ॥ ३७
पुनः प्राह गुहो वीरान् वीक्ष्य संभर्त्सनेन तान् । नाङ्गीकुरुत मद्वाक्यं यस्माद्यूयं तु गर्विताः ॥ ३८
प्राप्य मानुष्यमेतेन स्थिरवाचास्यानुजाः क्षितौ । तपः कृत्वा परं पश्चाद्विशुद्धाः किल्बिषावृताः ॥ ३९
आगच्छत ममाभ्याशं पुनरस्ते मदाज्ञया । इत्युक्तमात्रे ते वीरा मनुजं रूपमास्थिताः ॥ ४०
क्षन्तव्यो नोऽपराधोऽयं देवदेव कृपानिधे । इत्युक्त्वा रुरुदुर्भूमौ प्रणेमुर्भयकम्पिताः ॥ ४१
लब्ध्वानुज्ञां ततो भूपस्यानुजत्वं समाश्रिताः । परित्यज्य शचीभर्तुरुपेन्द्र [illegible] भूसुराः ॥ ४२
मुचुकुन्दाय भूपाय गुहः परमपावनः । अनुग्रहं विधायैवं अन्तर्धानं समाश्रितः ॥ ४३
मुचुकुन्दस्ततो धीमांश्चतुरङ्गबलं महत् । प्रत्येकं संप्रदस्याप्य भ्रातॄणां परया मुदा ॥ ४४
राज्यं बभार सन्तोषात्सुब्रह्मण्यं हृदि स्मरन् । ततस्तु कर्पूरग्रामे राजकन्याः समेता नवाः ॥ ४५
पाणीन् संग्राहयामास भ्रातॄणामन्तरस्त्रियः । पुष्पगन्धि विवाहाय वीरबाहुर्महाबलः ॥ ४६
पुत्रानुत्पादयामास क्रमकानकसंज्ञकौ । साकं दुहित्रावरया चित्रवल्याख्यया द्विजाः ॥ ४७
सजीजनंस्तदा वीराः पुत्रानन्येऽपि भूपतेः । वीरबाहुर्ददौ पुत्रीं चित्रवल्लीं मनोहराम् ॥ ४८
कश्चित्तज्ज्येष्ठभ्राताय मुचुकुन्दाय शास्त्रतः । तस्याः करस्थितं कीरं चित्रवल्ल्या मनोहरम् ॥ ४९
यमदूता गृहीत्वेमं यमपार्श्वे पुरे तदा । कांक्षिण्यै प्रददुः शीघ्रं बलात्कारेण भूसुराः ॥ ५०
वृत्तान्तमेतच्छ्रुत्वाऽथ वीरास्ते क्रोधविह्वलाः । युद्धं कृत्वा यमेनैते गृहीत्वा पुनराशु तम् ॥ ५१
चित्रवल्ल्यै प्रदायैनं तेनुः प्रीतिं तदा भृशम् । अन्तर्वत्नीमभवद्बाला चित्रवल्ली नृपप्रिया ॥ ५२
तदा कैरळदेशस्थं फलमैच्छन्महद्रसम् । वीरास्तत्रत्यराजानं दूतवक्त्रेण भूसुराः ॥ ५३
पप्रच्छुरेतद्रूपेण नददौ क्रोधविह्वलः । जित्वा तं रणमध्ये तत्फलं संगृह्य शीघ्रतः ॥ ५४
ददुरेतत्फलं तस्यै चित्रवल्ल्यै तदा द्विजाः । तत्र तत्र स्थितान् दुष्टान् जित्वा देशेषु संगरे ॥ ५५
स्ववशीकृत्य गां सर्वां ररक्षुर्योगवर्तिनः । चित्रवल्ल्यग्निवर्णाख्यं कुमारं सुषुवे तदा ॥ ५६
मुचुकुन्दस्य भूपस्य प्रिया सर्वाङ्गसुन्दरी । तस्मिन्काले शक्रपुरीं बलो नाम महासुरः ॥ ५७
अरौत्सीद्रणदक्षोऽयं निर्जेतुं दुर्बलं द्विजाः । तेन योद्धुमशक्तत्वात्सुराणामधिपस्तदा । ५८
मुचुकुन्दं नृपश्रेष्ठं दूतैरानयदात्मनः । मुचुकुन्दस्समागत्य बलसेनां महाबलाम् ॥ ५९
अमारयन्महासत्वो रणमध्यं समाश्रितः । अवशिष्टस्तदा तस्थौ बलपक्षो महासुरः ॥ ६०
वज्रेण मरुतामीशस्तं जघान महीसुराः । बलारिः कथितस्तेन तदारभ्य पुरन्दरः ॥ ६१
हत्वा बलं महाघोरं मुचुकुन्देन भूभुजा । स्वगृहं प्राप मघवान् सन्तोषेणामरेश्वरः ॥ ६२

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
देवकाण्डे षष्ठोऽध्यायः ॥

---

॥ अथ सप्तमोऽध्यायः ॥

**श्रीमुचुकुन्देन कमलालये श्रीत्यागराजप्रतिष्ठा ॥**

ततः स्नात्वा नृपसुराधीशौ परमशोभनौ । पूजागृहं पुरारातेः प्रविविशतुस्तदा ॥ १
उपविष्टो नृपश्रेष्ठस्सुखमासनमुत्तमम् । ददर्श पूजाकालेऽस्य सोमास्कन्दं महेश्वरम् ॥ २
प्रसन्नवदनांभोजं परमानन्दविग्रहम् । तं दृष्ट्वा परमेशानं मुचुकुन्दो नृपोत्तमः ॥ ३
कैलासवासिनं देवमंबिकासहितं प्रभुम् । स्मृत्वा तुष्टाव भक्त्या समानंदाश्रुपरिप्लुतः ॥ ४
तस्मै प्रसन्नो भगवान्मुचुकुन्दाय भूभुजे । विष्णुनाऽऽराधितः पूर्वमहमिन्द्रमिहागतः ॥ ५
तं मां त्वं पूजयामा[illegible] यतो यतः । इत्युपांशु महीपाले प्राहवाक्यं महेश्वरः ॥ ६
न श्रूयते यथेन्द्रेण तथैव ब्राह्मणोत्तमाः । तच्छ्रुत्वा मुचुकुन्दोऽयं प्रसन्नेनान्तरात्मना ॥ ७
तस्थौ पूजां सुरेशस्य विलोकयानन्यमानसः । समाप्य पूजामिन्द्रोऽपि प्रस्थितो भूभुजा सह ॥ ८
प्राप्य भोजनशालां स्वां कामधेनुमचिन्तयत् । धेनुस्समागता शीघ्रं कामदा स्वामिनाय सा ॥ ९
भोजयित्वा तदा [illegible] दिव्यं पयोयुतम् । दापयित्वा विभूषाश्च वस्त्राण्यपि महीभुजे ॥ १०
पप्रच्छ भूयो भूयोऽथ वाञ्छितं वद हे नृप । इति प्रेम्णा सुरेशानो मुचुकुन्दं महीसुरः ॥ ११
तच्छ्रुत्वा स महीपालस्सन्तोषेण युतस्तदा । प्रपच्छ सांबमीशानं त्वयात्र शक्र पूजितम् ॥ १२
तमेनं परमेशानं पूजयिष्यामि भक्तिमान् । निशम्यैतत्सुरेशोऽपि विचारेण महीयसा ॥ १३
प्राह वाक्यमिदं वीक्ष्य नमदीयो महेश्वरः । विष्णुनाऽऽराधितो दैवदत्तस्त्वमुष्मै मया नृप ॥ १४
तत्पूजाकारणं वक्ष्ये शृण्वेकमनसाऽधुना । [illegible] पुरा विष्णुः परमेशं [illegible] ॥ १५
तपश्चचार सुमहत्पुत्रार्थमवनीपते । प्रसन्ने च महादेवे प्रणम्य परया मुदा ॥ १६
देवदेव महादेव त्वया दत्त मदात्मकम् । आयुष्मन्तं [illegible] ॥ १७
तव प्रसादात्पुत्रो मे भूयादद्य कृपानिधे । निरपत्यस्य देवेश तदेनोऽपाकुरु क्षणात् ॥ १८
इति संप्रार्थयामास परमेशं तदा हरिः । तथेति पार्वतीनाथो वरं प्रादाद्धरेस्तदा ॥ १९
तदेतत्सर्वमालोक्य पार्वती कुपिता तराम् । यस्मान्महेशं मुक्त्वा मां अर्चयित्वा त्वमसौ हरिः ॥ २०
अवाप्तवान्वरं तस्य जातः पुत्रो महाज्ञया । भवनेत्राग्निनिर्दग्धो भवत्वस्य यथाविधि ॥ २१
पञ्चकोऽयं महामायी मोहयित्वाऽस्मनोऽखिलान् । महानसीति सदाजल्पंस्त्वयि मदपि ज्ञापयति ॥ २२
पातयामास दुर्मार्गे, तदस्य सुखमीक्षितुम् । नयुक्तमिति देवेशमुक्त्वा भूयो जगत्पतिम् ॥ २३
अन्तर्धिं शंभुना प्राप पार्वती भूपते क्षणात् । ततो विष्णुस्सुदुःखार्तस्सोमास्कन्दममुं परम् ॥ २४
प्रतिष्ठाप्य विधानेन बहुकालमपूजयत् । ततः काले महादेवः कस्मिंश्चिदुमया सह ॥ २५
स्मेरमुखो हरेस्संमुखाविरासीद्दयानिधिः । तुष्टाव सांबं ससुतं परमेशं पुनर्हरिः ॥ २६
ततः प्रसन्नो भगवान् गौरीमुखमलोकयत् । तदिङ्गितं हरिर्ज्ञात्वा प्रणम्योमां गिरीन्द्रजाम् ॥ २७
अज्ञानेन भवानि त्वामसंपूज्य महेश्वरम् । अपूजयं तमेवैकमपराधो भवेन्मम ॥ २८
महान्तं कालमारभ्य पुत्रार्थं च तपः कृतम् । तं त्वं रक्ष महेशानि शापं दाहो भवत्विति ॥ २९
इति स्तुत्वा महादेवीमप्रार्थयदधोक्षजः । ततो हैमवती विष्णुं सुप्रसन्ना जगादतम् ॥ ३०
विष्णो भवतु दग्धस्य त्वत्पुत्रस्य महेश्वरात् । पुनस्सञ्जीवनं शीघ्रं मदाज्ञाहि गरीयसी ॥ ३१
इत्युक्त्वाऽन्तर्दधिं प्राप गिरिजा शंभुना सह । ततस्सन्तुष्टमनसा विष्णुर्मूर्ध्युर्मनोभवम् ॥ ३२
मनसोऽजीजनत्स्मृत्वा महादेवाज्ञया सुतम् । संवर्धितोऽयं हरिणा बहुकालं मनोभवः ॥ ३३

सुरकार्यं समुद्दिश्य दग्धत्रिपुरविद्विषा । पुनस्तपादितस्तेन प्रसन्नेन शिवेन सः ॥ ३४
तमिमं विग्रहं विष्णुः पूजयित्वाऽसवान्वरम् । उरस्यारोप्य देवेशं शेषशायी हरिस्तदा ॥ ३५
क्षीरार्णवे जगामायं निद्रां योगाख्यां तदा । वक्षोमध्ये तदा विष्णोस्सोमास्कन्दो महेश्वरः ॥ ३६
अनंतविष्णोरुच्छ्वासनिश्वासान्दोलितविग्रहः । इतस्ततश्चचालायं शाल्मलीव पवनाहतः ॥ ३७
एवं गते हरौ निद्रामुपारोप्य वक्षसि । समागतस्तदा योद्धुं वाकलाख्यो महासुरः ॥ ३८
ततो भीतमनाश्शीघ्रमहं विष्णुं पयोनिधौ । बोधितुं गतवानस्मि वृत्तान्तं भूपते तदा ॥ ३९
प्रबुद्धस्सहसा विष्णुरुत्थितो मां विलोक्य च । ज्ञात्वा मदागमनं चासौ मत्तो भीतिस्तवेतिमाम् ॥ ४०
उक्त्वोरःस्थितमीशानं दत्वाऽस्माकममुं शिवम् । स्वयं निर्गत्य भूलोके मुचुकुन्दपुरं परम् ॥ ४१
प्राप्य दृष्ट्वा महादेवं तत्र चिद्रूपिणं शिवम् । आनन्दाश्रुपरीताक्षस्तदा गद्गदवाग्घरिः ॥ ४२
चतुर्मासान्तमनत्वा नकिञ्चिदपि माधवः । स्थित्वा (सुप्त्वा) समुत्थितस्त्वीशो प्राप्यानुग्रहमद्भुतम् ॥
निर्गत्य युद्धे वाकलिं हत्वा घोरं महासुरम् । क्षीरार्णवमनुप्राप्य मां पुरं प्रति माधवः ॥ ४४
प्रेषयित्वा यथापूर्वमधिशिश्ये महोरगे । पश्चादहं मत्पुरं स्वयं तदारभ्य महेश्वरम् ॥ ४५
उमया सहितं देवमभ्यर्चामुत्तममव्ययम् । मर्च्याम्यमुमीशानमनन्यमनसा नृप ॥ ४६
तद्दातुं माधवस्यैनमप्याप्यानुमतिं पराम् । न शक्यते नृपश्रेष्ठ विष्णोरमिततेजसः ॥ ४७
तदनुज्ञामवाप्याशु गृहीतुं शक्यते भवान् । इति तस्य वचः श्रुत्वा मुचुकुन्दो महानृपः ॥ ४८
विष्णोरभ्याशमाप्याथ तत्रस्यैतदखिलं वचः । श्रावयामास तं गत्वा सुराणामधिपं पुनः ॥ ४९
विष्णोरनुज्ञा संप्राप्ता मया देवपतावुना । तद्दातुमर्हसि भवान् परमेशं सुरेश्वर ॥ ५०
इत्युक्तिमस्य संश्रुत्य विचारेण महीयसा । विमलादातुमीशानं सोमास्कन्दं द्विजोत्तमाः ॥ ५१
त्वष्ट्राऽस्य निर्मितानन्यान् षडस्य सदृशाम्बरान् । प्रादात् क्रमेण देवेशो विग्रहान् भूभुजे तदा ॥ ५२
विलोक्य तान्सर्वं ज्ञात्वा कपटं च शतक्रतोः । तमेव विग्रहं भूयः पप्रच्छ सुरपुङ्गवम् ॥ ५३
ततः प्रादात्सुरेशोऽस्य तं देवं परया मुदा । गृहीत्वाथ महादेवं मुचुकुन्दो नृपोत्तमः ॥ ५४
कमलालयमागत्य स्थलानामुत्तमोत्तमम् । प्रतिष्ठाप्य विधानेन चक्रे पूजोत्सवादिभिः ॥ ५५
महोपचारं देवस्य सोमास्कन्दस्य भक्तिमान् । तत्समीपपुरेष्वन्यान्विग्रहान् षडपि द्विजाः ॥ ५६
अपूजयन्महात्मायमवनीशो द्विजोत्तमाः । चण्डालजनिमापाथ सुरेशोऽपि महेश्वरम् ॥ ५७
स्वात्मना पूजितं यस्मात्सोमास्कन्दं प्रदत्तवान् । कमलालय एवायं पुण्यक्षेत्रे तदा क्षणात् ॥ ५८
चाण्डालत्वं ततः कृत्वा महादेवस्य पावनात् । प्रणम्य परमेशानं प्राप्तवानिन्द्रतां पुनः ॥ ५९
मुचुकुन्दो महीपालो निर्माय पुरविद्विषः । प्राकारमण्टपाट्टालगोपुरादीननेकशः ॥ ६०
कारयित्वा महापूजां महादेवस्य भक्तिमान् । निष्कण्टकमसौ राज्यभारं धृत्वा महाधनः ॥ ६१
आत्मजायाभिषेणाय पट्टबन्धं विधाय सः । कैलासं पर्वतश्रेष्ठमापन्ने ब्राह्मणोत्तमाः ॥ ६२
वीरबाहुमुखा वीरा अपि स्थाप्यात्मजान् स्वकान् । अग्निवर्णस्य निकटे तपः कृत्वा सुदुश्चरम् ॥ ६३
मुक्त्वाशु मानुषान् देहान् गृहीतात्मशरीरिणः । प्राप्य स्कन्दगिरिं स्वयं प्रणम्य गुहमव्ययम् ॥
तत्र तस्थुस्सुसन्तोषात्संप्राप्तवञ्जुमहाः ॥ ६४

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
देवकाण्डे सप्तमोऽध्यायः ॥

सुब्रह्मण्याय नमः ॥ हरिः ॐ ॥ शुभमस्तु ॥

॥ देवकाण्डस्समाप्तः ॥

उ
ஸ்ரீராமஜெயம்.

श्री महागुरुभ्यो नमः ॥ अविघ्नमस्तु ॥ श्री विघ्नेश्वराय नमः ॥

श्री प्रणतार्तिहरायपरस्मैब्रह्मणेनमः ॥

# श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे

## ॥ दक्षकाण्ड प्रारम्भः ॥

मौर्वी भूभित्यजस्ततासनशिरस्त्वक्शारिचक्रद्वयश्रुकाण्डानैर्हितशारसस्सुन्दरे सुस्सवाहस्सेहयाः ।
तेषामेव शिरः पदेषु वसतिस्त्वस्त्वेति यस्य श्रुतं देवश्चिरपरिच्छेद्यरसमात्मन् कुर्यात्सदा मङ्गलम् ॥

॥ अथ दक्षकाण्डे प्रथमोऽध्यायः ॥

पारशिवस्यैव परं ब्रह्मेति निरूपणम् ॥

ऋषयः —

दक्षाध्वरः पुरा प्रोक्तस्त्वया सूत तपोधन । जयन्तायेन्द्रपुत्राय समासेन बृहस्पतिः ॥ १
प्रोक्तवानिति तं भूयो विस्तराद्वक्तुमर्हसि । तदेतेषां वचः कर्णे कृत्वा प्राह मुनीश्वरः ॥ २

सूतः —

शृण्वन्तु ब्राह्मणास्सर्वे भवन्तो ब्रह्मवित्तमाः । सत्यलोके पुरा ब्रह्मा सर्वैर्देवैस्तपोधनैः ॥ ३
ऋषिभिर्दशभिः पुत्रैः प्रजापतिभिरास्थितः । दक्षोऽयं प्रथमस्तस्य पुत्राणां ब्राह्मणोत्तमाः ॥ ४
प्रणम्य पितरं मूर्ध्ना पप्रच्छ जगतां प्रभुम् । भोः पितस्सर्वतत्त्वार्थसर्ववेदार्थकोविद ॥ ५
कोवाग्रण्ये त्रिमूर्तीनां वरिष्ठो जगतांप्रभुः । परिपूर्णः परंज्योतिः परमात्मा सनातनः ॥ ६
कर्ता सर्वस्य जगतः पालको हारकस्तथा । सर्वजीवेषु सर्वत्र साक्षित्वेन व्यवस्थितः ॥ ७
इति तस्य वचश्श्रुत्वा ब्रह्मा ध्यात्वा शिवं हृदि । आनन्दाश्रुपरीतास्यो हर्षगद्गदयाक्षणम् ॥ ८
आविर्बभूव यो वह्निज्वालामालावृतोऽन्तरे । ब्रह्मविष्ण्वोर्महामोहादारुकहं दयतोः कृपा ॥ ९
सर्वेश्वरस्स एवैकश्शम्भुराकाश मध्यगः । भवमेव जगत्कर्ता विशेषाद्रावणोऽपि ॥ १०

दक्षः —

कस्मादयं पितामोर्बो ब्रह्मविष्ण्वोरयं हरः । संहर्ताऽतत्कर्तामत्र यथा जगदीशयोः ॥ ११

ब्रह्मा —

तस्मादयं महादेवो ब्रह्माणं मां हरिं तथा । कल्पयित्वावयोः कृत्यं हृदये संव्यवस्थितः ॥ १२
प्रेरयत्यनिशं ह्येवेद्धे कृत्ये सर्वत्र विश्वपः । मोहितौ च समुद्वीक्ष्य निगृह्णावां स रक्षति ॥ १३
तथापि ■ महादेवो विमात्येक ह्यावयोः । अध्यापयत्स्वयं वेदान् पुराणानिव पूर्वतः ॥ १४
पुष्पेषु गन्धवत् देवस्तिलेष्वपि च तैलवत् । घण्टायां ध्वनिवत्तत्र प्रभावस्परमेश्वरः ॥ १५
सर्वत्र सर्वदा देवस्सर्वेष्वपि च संस्थितः । प्रसाददोऽयमेकस्मात्कस्य पुत्रयोर्विभुः ॥ १६

दक्षः —

सर्वस्य ब्रह्मवादात्मत्यं स्वयं सत्यसिद्धिसुसितः । कथमस्यादरेणेयं तात वक्ति जगत्प्रभो ॥ १७

ब्रह्मा—

उपचारेण सर्वस्य ब्रह्मतामाह साश्रुतिः । भूलोके ब्राह्मणान्ब्रह्मणा भेदं वदन्ति ते ॥ १८
तथा सर्वस्य जगतो ब्रह्मत्वमिति निश्चयः । सर्वव्यापित्वमीशस्य धीरथैवं श्रुतिरव्यया ॥ १९
सर्वस्यापि महादेवतादात्म्यं वदति ध्रुवम् । स्वभावेन महादेवं मृत्युञ्जयमुमापतिम् ॥ २०
विश्वाधिकं महामीत्याऽभिधत्ते ब्रह्मशाश्वतम् । अन्तर्यामी स एवैषां जीवानां परमेश्वरः ॥ २१
एक एव जगत्कर्ता नान्यो रुद्रान्महेश्वरात् । अनेक गुणसंपन्नो निर्गुणोऽपि महेश्वरः ॥ २२
अरूपी बहुरूपी च सर्वरूपी परात्परः । त्रिपदार्थ स्वरूपीशस्सर्व कल्याण कारणः ॥ २३
परात्परं परञ्ज्योतिस्तस्यातीतस्तम पदहि । मोहितौ विष्णु धातारावयां रक्षितवान्पुरा ॥ २४
माययोरस्थिनी देवो बिभर्तिशापनाबहि । सर्वव्योममनुभावेद्यविष्यन्ति वेदवृत्ताम् ॥ २५
शिवं तदा ते विज्ञाय मुक्तिमेष्यन्त्यसंशयम् । तस्यास्य महिमावक्तुं शक्यते न मया सुत ॥ २६
यत्रापि देवो वदति मांच विष्णुं क्वचित्स्थले । उपचारेण तत्रापि देवेशं परमार्थतः ॥ २७
एकभावेन कर्माणि देवान्विष्णु मुखानुपीन् । मार्गेणान्येन देवेशं भयाद्वदतिहि श्रुतिः ॥ २८
अस्मासु शम्भुबुद्ध्यैव तत्रापि भवति श्रुतिः । यदिशवेन समानत्वाम् मोहाद्धीकृतचेतसा ॥ २९
वदत्येष महापापो नरकं प्रविशेत्खलु । वदन्ति शिवशास्त्रे तेषुप्रीतिर्हि नस्सदाम् ॥ ३०
शम्भुनाप्यप्रपश्यामो दुर्बुद्धीन्पापकर्मिणः । शिवपशुपतिश्शम्भुः पशवो वयमेवहि ॥ ३१
भूम्यां लिङ्गानि देवस्य शङ्खस्थापदादिभिः । प्रतिष्ठाप्यैव विधिना पूजितानि निदर्शनम् ॥ ३२
स एव भोगं मोक्षश्च प्रददात्याश्रितस्य हि । तस्मात्त्वमपि तं देवं शरण्यं शरणं व्रज ॥ ३३
एवमेव मया प्रोक्तं पुरा पुत्र स्वभावतः । मोहेन त्वं महेशस्य न स्मरस्येतदीशितुः ॥ ३४
तदिदं सर्वमाकर्ण्य ब्रह्मणोक्तं प्रजापतिः । ऐश्वर्यसिद्धमनसा प्रयत्नो तपसस्थलम् ॥ ३५

ब्रह्मा—

सन्मानसे समुत्पन्नं मानसाख्यं सरश्चयत् । तत्तीरे शोभने गत्वा तपसा परमेश्वरम् ॥ ३६
प्रीणयित्वा निजाभीष्टं लभस्व परमेश्वरात् । इत्युक्त्वा प्रैषयत्पुत्रं दक्षमम्बुजभवस्सवम् ॥ ३७
तदानीमेव दक्षोऽसौ तात्स्थलं प्राप हृष्टधीः । तत्रस्थितोऽतपद्घोरं शिवे विन्यस्तमानसः ॥ ३८
वर्षाकाले जले स्थित्वा हेमन्ते हिममध्यगः । ग्रीष्मे पञ्चाग्निमध्यस्थो मूलाग्नि उपलयन्धूम्राम् ॥
एकादशसहस्राणि वर्षाणामयुतोपरि ॥ ३९

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे प्रथमोऽध्यायः ॥

---

॥ अथ द्वितीयोऽध्यायः ॥

दक्षेण श्रीमहेश्वराद्वरप्राप्तिः ॥

प्रादुरासीत्तदा शम्भुर्दक्षाय महासूनवे । आरुह्य शाकरं दिव्यं नानालङ्कारमण्डितम् ॥ १
स्तूयमानो मुनिवरैर्गन्धर्वैः किन्नरैरपि । तं दृष्ट्वा परमेशानं दक्षः परमया मुदा ॥ २
स्तुत्या स्तोत्रशतैर्दिव्यैः प्रणनाम पुनः पुनः । प्रीणय तं परमेशोऽसौ प्रसन्नेनान्तरात्मना ॥ ३
दक्ष ते सुप्रसन्नोऽहं वरं वरय वाञ्छितम् । इतिशंभोर्वचश्श्रुत्वा दक्षः प्राह मुदायुतः ॥ ४

देवदेव महादेव शरणागतवत्सल । सर्वैश्वर्येण सम्पन्न शम्भो भो व्योममध्यग ॥ ५
भूरपन्तरिक्षस्वर्गाणां पातालाना विशेषत । ब्रह्मविष्ण्वादिलोकानामाधिपत्य प्रयच्छ मे ॥ ६
तत्रतत्रस्थितास्सर्वे भवन्त्वाज्ञानुगा मम । तव प्रसादात्सर्वेश सर्वत्रापि सुपूज्यता ॥ ७
भगवन्त महादेव सुरत्वान्य यज्ञकञ्जन । न भजेय कृपासिन्धो भजन्त्वेते सुरास्तु माम् ॥ ८
भूयासुस्तनयामह्य बहवो वेदपारगा । सुताश्च बहवस्सर्वेश सर्वलोकपितामह ॥ ९
गौरीं मद्गर्भसंभूता तनयत्वमसि देवत । विवाहिता महादेव रक्षता मा महेश्वर ॥ १०
पद्ममादीनि भूयासि तस्येणानि महेश्वर । दत्तमसिद्धिसिचेरुत्याथे पर्यन्त्वेते महाज्ञया ॥ ११
इत्युक्त्वान्तर्धिमापाय त्वरया परमेश्वर । ततोदक्षो लब्धवरस्तुतोऽत्यन्त महेश्वरात् ॥ १२
ससार पितर प्रीत्या ब्रह्माण लोकनायकम् । ज्ञात्वा प्रीतद्दक्षिणाचिन्तयामास मानसे ॥ १३
भोगायायमहादेवे प्रसक्तोऽपि कुमारक । वरयत (यम) तयामोक्षे नतु द्विनिरुपद्रवे ॥ १४
मयिपत्येरतस्तु द सम्पतुम्बुरस्ववम् । अनुग्रहविनाशम्भो कस्यमोक्षे भवेन्मति ॥ १५
इतिसञ्चिन्त्य शीघ्रेण विधिस्तत्रसमागत । वन्दितस्तेनदक्षेण चाशिषायोजयच्च तम् ॥ १६
ततोदक्ष महात्मा ब्रह्माण जनकमुदा । निर्मातव्य पुरस्त्व मम सर्वोत्तम पित ॥ १७
इतिवाह चतुरशीघ्रमध्येति विधिस्त्वसौ । इत्याभिरम्य नगर नानाश्चर्यसमन्वितम् ॥ १८
नाम्ना दक्षपुरीत्येव प्रथित भुवनत्रये । दक्षोऽपिविधिमुखाद्देतच्छ्रुत्वा हृष्टमनाभृशम् ॥ १९
स्वपुरीं प्राप्य तरसा स्वगृह प्रविवेश हि । ततस्सिंहासने दिव्ये नानारत्नविचित्रिते ॥ २०
इन्द्रादिदेवैर्गुह्या पूर्वैर्दैवैर्नमस्कारवधि । महद्भिस्सूर्यमुखैश्चापि दिक्पालैर्लोकपालकै ॥ २१
पद्ममादिभिर्नित्यैश्च सेवितोऽतिष्ठदद्भुते । क्रमेण ब्रह्मपुरीं वैरवतीं मनोहराम् ॥ २२
ब्रह्माद्यपतापन महताच समन्वित । सहस्रसंख्यान्पुत्रांश्च जनयामास सात्विकान् ॥ २३
तेषामाविकर्माणि विधायविधिना विधि । तोषयित्वाऽऽनुमपसा परमेशं वरात्परम् ॥ २४
षड्रूपसर्वलोकाना प्राप्यागच्छत शीघ्रत । इतितान्प्रेषयामास तपसेसात्मजान् द्विजा ॥ २५
ततोदक्षसुतास्सर्वे मानसाख्य सरोवरम् । समागत्य तपस्तेपुस्सर्वेस्सुदुश्चरम् ॥ २६
तपोमहद्विशुद्धान्तःकरणा नियता भृशम् । तदानीं नारदश्रीमान् प्राप्यतेषा तप स्थलम् । २७
सद्गुणमुनिशार्दूल पयाम्याय तपोघना । प्रणम्य कुशलपृष्ट्वा सर्वेप्रीतिमापयु ॥ २८
किमर्थं तप्यतेघोरं तपोयुष्माभिरत्र हि । इतिपृष्ट पुनस्तेन नारदेन महर्षिणा ॥ २९
पृथिव्यामर्त्यमस्माक जगता समयदिविति । तच्छ्रुत्वा तानसर्वेषामुवाच विधेस्सुतान् ॥ ३०
महादेवप्रसादेन सर्वेषामेवमूचिरे । महोमोहमहोमोह तपतामपियो भृशम् ॥ ३१
प्रीणयित्वा महादेव तपसा सुविस्तृता । प्रार्थ्यते दुःखरूपेण युष्माभिर्विनिकिल्बिषैः ॥ ३२
प्रपञ्चस्तृविरेतेषा य पितुर्मोहयोगात् । शिरच्छेदोऽभवत्पूर्वं परमेशात्महेश्वरात् ॥ ३३
शाश्वत बहुभिस्तद्वदरूपी चराचरम् । सद्गुण नितप दुःखमासत्नामुत्सुगावित ॥ [illegible]
तथा जन्मादिदुःखानि भजते नितरामयम् । राक्षसैरसुरैरन्यैः प्रत्यहं बाध्यते परतु ॥ ३५
पय दुःखस्वरूपादि स्मृता सुखवर्जिता । तस्मात्तत्र निवृत्तानासदैव दुःखैकभाजने ॥ ३६
तपसा परमेशान तोषयित्वा महेश्वरम् । भजध्वं मुक्तिमतुलां निरवद्यपदान्विताम् ॥ ३७
एवं मुनिवरस्तेषा सत्यज्ञान शिवाश्रयम् । उपदिश्य जगामैवस्वेच्छया व्योम्नि भूसुरा ॥ ३८

श्रुत्वा तदुक्तिं ते सर्वे तथैव कृतमानसाः । प्रसाद्य तपसा देवं मुक्तये परमेश्वरम् ॥
मोक्षमापुर्महात्मानः पुनरावृत्तिदुर्लभम् ॥ ३९

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे द्वितीयोऽध्यायः ॥

॥ अथ तृतीयोऽध्यायः ॥

चन्द्रशाप प्राप्ति परिहारौ ॥

अथदक्षस्तु विज्ञाय वृत्तान्तं खिन्नमानसः । पुनस्सहस्रसंख्याकान् पुत्रानुत्पाद्यपूर्ववत् ॥ १
समादिश्य तेषां कर्माणि तपसे प्रीतिपूर्वकम् । सृष्ट्यर्थं प्रेषयामास सर्वलोकस्य बुद्धिमान् ॥ २
तथैव तेषु सर्वेषु प्रवृत्तेषु तपोमहत् । नारदस्सहसाऽऽगत्य विनिन्द्य सृष्टिकर्तृताम् ॥ ३
मोक्षेमति विधायैषां पूर्ववद्योगमार्गितः । तेऽपिप्रसाद्य देवेशं तपसा परमेश्वरम् ॥ ४
अपवर्गं गताभावगर्भसंसरणवर्जितम् । वृत्तान्तमेतद्विज्ञाय पुनर्दक्षः क्रुधान्वितः ॥ ५
पुंसृष्टिं प्रविहायासौ षष्टिर्विंशतिकन्यकाः । ससर्ज सुकुमाराङ्गीस्सर्वलक्षणसंयुताः ॥ ६
धर्मस्यभृगुमरीचीनां पुलस्त्याङ्गिरसोरपि । पुलहस्य वसिष्ठात्रिप्रमुखानां तपस्विनाम् ॥ ७
दत्तवान्विधिना तेषां कन्याकल्याणमङ्गलम् । अजीजनन्बहून् ताश्च पुत्रान्कन्यास्सुशोभनाः ॥ ८
पुत्रीश्च बह्वीस्सौभाग्या दक्षपुत्र्यः क्रमेणच । एवं पौत्रैर्वृतो दक्षः पौत्रीभिश्च समन्ततः ॥ ९
ससर्ज सप्तविंशत्यः पुनःकन्या महौजसः । ताश्च सर्वा ददौ कन्याश्चन्द्रायाह्लादकारिणे ॥ १०
तासांमध्ये शशीसक्तिं कृत्तिकायामथाऽकरोत् । ततस्तु कन्यादुःखेन पराववृत्तयोचयत् ॥ ११
तास्त्वाह रमते चन्द्रः कृत्तिकायां यथा पितः । इतितासां वचश्श्रुत्वा दक्षः कोपसमाकुलः ॥ १२
शशाप चन्द्रश्च परं क्षयरोगीति तदाद्विजाः । तथैव चन्द्रमाः पञ्चदशवारे क्षयं गतः ॥ १३
कलामात्रावशिष्टोऽयं देवेन्द्रं प्राप रक्षकम् । इन्द्रोऽपि चन्द्रमुद्वीक्ष्य मोक्तयान्वचनं तदा ॥ १४
पूर्वेविधिशापादयं ब्रह्मविष्णुमुखैस्सुरैः । प्रसाद्य विधिनाऽहं सं मोचितः किल चन्द्रमाः ॥ १५
प्रतिसंवत्सरं दृष्टमेकस्मिन्दिवसे मुखम् । नयुक्तमिति ते सर्वे नेक्षन्तेऽद्यापिते मुखम् ॥ १६
विद्यमानेऽपि दोषेऽस्मिन्निन्द्रमप्यभयत्वसु । तस्मात्त्वमाशु ब्रह्माणं विज्ञाप्य जगतां प्रभुम् ॥ १७
बोधयित्वाऽमुना दक्षशापान्मोक्षं भजेत्वमुम् । प्रेरयामास बलिमानिन्द्रश्चन्द्रमसं द्विजाः ॥ १८
स तथेति विनिर्गत्य प्राप्य धातारमञ्जसा । प्रणम्य परयाप्रीत्या स्तुत्वाच विविधैः स्तवैः ॥ १९
दक्षशापस्य मोक्षञ्च प्रार्थयामास चन्द्रमाः । तस्यतद्वचनंश्रुत्वा जगाद कमलासनः ॥ २०
दक्षोऽयं नश्शृणोत्यस्मदुक्तिं दुष्टमना भृशम् । करोति मय्यपिक्रोधं तस्मात्त्वं चन्द्र बुद्धिमान् ॥ २१
गत्वा महेशनिकटं विज्ञाप्य सदाशिवम् । यःकालकूटं पुरा पीत्वा देवान्सर्वानरक्ष सः ॥ २२
हत्वा यमं महाघोरं मार्कण्डेयं ररक्षहि । इतिधातुर्वचः श्रुत्वा चन्द्रः कैलासपर्वतम् ॥ २३
प्राप्य नन्दिमुखाद्देवं महादेवमथाप्यच । प्रणम्य परया प्रीत्या तुष्टाव विविधैस्स्तवैः ॥ २४
प्रसन्नेच महादेवे वृत्तान्तञ्च जगादहि । ततः प्रसन्नहृदयो भगवानम्बिकापतिः ॥ २५
दयाऽमर्य शशाङ्कस्य कलामात्रावशेषिणः । धृत्वा चूडतया मूर्ध्नि क्षणमात्रं महेश्वरः ॥ २६
शशाङ्कचन्द्रपूर्णस्य सर्वलोकेश्वरस्तथ । समाधायमथातुल्यं वृद्धिभावपूर्वयमुदा ॥ २७

इतिदत्तवरेशम्भौ ब्रह्मविष्णुमुखास्सुराः । महिमानमजानाति तवलोको महेश्वर ॥ २८
तस्मात्त्वं लोकरक्षार्थं चन्द्रचूड दयानिधे । चन्द्रस्य कल्पयास्वाशु क्षयवृद्धी उभे अपि ॥ २९
प्रतिमासं महादेव तदिदं लोकनायक । ज्ञात्वा लोकोभवच्चन्द्रो निजमिष्टमवाप्नुत ॥ ३०
इत्यूचुस्तञ्च वर्णे श्रुत्वातेषां महेश्वर । तथैव चन्द्रं परया दयया भक्तवत्सल ॥ ३१
प्रेरयामास विश्वात्मा विश्वसंरक्षणोद्यम । चन्द्रोऽपि देवदेवेशं प्रणम्य मासतत्पर ॥
प्रययौ स्वपदं हृष्टो मुदा ब्राह्मणपुङ्गवाः ॥ ३२

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे तृतीयोऽध्यायः ॥

---

॥ अथ चतुर्थोऽध्यायः ॥

देवीगर्वापनोदाय शिवेन प्रपञ्चोपसंहारः ॥

तदिदं सर्वमाकर्ण्य दक्षोऽयं कोपविह्वलः । मया शप्तोऽपि चन्द्रोऽसौ मोचितश्शम्भुना कथम् ॥ १
इत्यथ शङ्करस्यास्य चक्रे दूषणमुत्कटम् । तच्छ्रुत्वा तपतां वर्यं पुलहो ऋषिसत्तम ॥ २
शिवस्य दूषणं दक्ष सर्वैश्वर्यविनाशकम् । भविष्यसि अनैश्वर्यो दूषणस्यास्य दुरात्मवान् ॥ ३
अथच्छापस्य गतिरप्युक्ता तेन महात्मना । त्वत्सुतामपि देवोऽयं कालेनोद्वाहयिष्यति ॥ ४
इतितस्यवचः श्रुत्वा त्यक्तकोपो मुदावसत् । एवंस्थिते पुरा दक्षे ब्राह्मणानामधीश्वराः ॥ ५
अस्मिन्गौर्यास्तु संभूतिं वक्ष्ये युष्माकमद्भुताम् । कैलासे ब्रह्मविष्णुभ्यां देवैरन्यैश्च सेविते ॥ ६
पार्वतीपरमेशानौ पुरा तस्थतुरुज्ज्वलौ । तदोत्थाय भवान्येषा प्रणम्य परमेश्वरम् ॥ ७
भगवन्देवदेवेश सर्वज्ञ जगतां प्रभो । यथोत्पन्नजगत्सचराचरमथ तदा ॥ ८
वक्तुमर्हसि विश्वात्मन्विश्वसंरक्षणोद्यम । इतिदेव्या तदापृष्टश्शङ्करो लोकशङ्करः ॥ ९
जगाद वृषिङ्गतो यथापांगममागतं । सर्वलोकस्यदायाक्ष सर्वज्ञ परमेश्वर ॥ १०
ततस्तु देवी देवेश पुनः प्राह कृताञ्जलिः । भगवन् भवसर्वेश सत्यचिल्लक्षण प्रभो ॥ ११
मदमेव तवेशान शरीरं रूपमद्भुतम् । न मां विना तवेशान शरीरं रूपमस्ति हि ॥ १२
मय्येवेक्ष्य जगत्सर्वं चेष्टसे तत्स्वमायया । इतिदेव्या वचः श्रुत्वा सावलेपं महेश्वर ॥ १३
महिमा नहि कल्याणी त्वया नज्ञायते परम् । मुक्तल्ब्धा मदग्यादौ स्थित्या त्वामेव चोन्नताम् ॥ १४
उत्पत्स्यति सोऽद्यतु त्वयि सर्वत्र सर्वदा । परिपूर्णं परञ्ज्योतिः परमात्मा स्वयंस्थितः ॥ १५
प्रेरयामि सृजाम्येतत् प्रतिमा स्वमधारयत् । विनामत्प्रेरणं सर्वं जगत्त्व समतन्द्रिते ॥ १६
तथेप्सिते तदाज्ञाय विलोक्य पुरोमम । इति सर्वैश्वरदाम्मुखस्थितानन्दविग्रहः ॥ १७
उपसंहृत्य विश्वात्मा शक्तिं सर्वनियामिकाम् । स्वस्मिन् तस्थौ महज्ज्योतिः पार्वत्याः पुरतो द्विजाः ॥ १८
तदा जगदिदं सर्वं नीरूपं निष्क्रियं भृशम् । नाहोरात्रो नचाभूच्चन्द्रोवविरहुताशन ॥
तमोभूतं जडाकारं भीषणं वेपरं द्विजाः ॥ १९

दृष्ट्वैतदद्भुतमसौ गिरिराजपुत्री भीतामुखी भवमशेषगुरुं प्रणम्य ।
तुष्टाव वाग्भिरतुलाभिरनन्यभावा कृत्वाञ्जलिं करयुगं शिरसि द्विजेन्द्राः ॥ २०

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे चतुर्थोऽध्यायः ॥

---

॥ अथ पञ्चमोऽध्यायः ॥

एकादशकोटिरुद्रैः मध्यार्जुनक्षेत्रे श्रीशिवाराधनं दाक्षायण्युत्पत्तिश्च ॥

अथ देवं समीक्ष्यैवा प्रार्थयामास शाङ्करी । जयदेव महादेव भक्तवत्सल शंकर ॥ १
मया न ज्ञायते स्वामिन् महिमा तव विश्वप । सोढ्वाऽपराधं देवाद्य मदीयं रक्षरक्ष माम् ॥ २
यथा पूर्वमिमान्सर्वाननुजीवय महेश्वर । किमशक्यं महादेव तव सर्वेश्वरेश्वर ॥ ३
एवं संप्रार्थ्यमानोऽयं गौर्या गौरीमनोहरः । प्रसन्नहृदयः पूर्वमेकादशककोटिकान् ॥ ४
रुद्रान्बोधयच्छम्भुः स्वापादिव महीसुरः । ततस्ससंभ्रमं रुद्रास्समुत्थाय शिवं हृदि ॥ ५
ध्यात्वा ज्ञात्वैतदखिलं शिवलीलेति ते द्विजाः । उद्बोधाय मनः कृत्वा सर्वेषां प्राणिनाममी ॥ ६
मध्यार्जुनं महत्क्षेत्रं जगत्यस्मिंस्तपोमये । संप्राप्य शिवपूजाञ्च यामेष्वेते चतुर्ष्वपि ॥ ७
चक्रुः प्रसन्नहृदयाश्शिवपरा मनीषया । ततः प्रादुरभूद्देवस्तेषामग्रे महेश्वरः ॥ ८
तं दृष्ट्वा परमेशानमस्तुवन् बद्धपाणयः । प्रणिपत्य महीपृष्ठे दण्डाकारतया द्विजाः ॥ ९
नमस्ते विश्वरूपाय विश्वस्रष्ट्रे परात्मने । संहर्त्रेऽस्य स्वतन्त्राय महाप्राणाय शूलिने ॥ १०
क्षयद्वीराय शूराय नमोऽस्तु स्थिरधन्विने । भवत्प्रसादाद्देवेश जगदेतच्चराचरम् ॥ ११
जीवितु यथापूर्वमयात्तावनमीश्वर । तेषां तद्वचनं श्रुत्वा महादेवस्तथेत्यमून् ॥ १२
उक्त्वान्तर्धिमगाच्छीघ्रं प्रसन्नहृदयेन च । अथ विष्णुविधात्रादि देवाः प्रातमभ्युदयः ॥ १३
उत्तस्थुस्सहसा सर्वे सर्वज्ञाविद्विशावाया । आदित्यचन्द्रप्रमुखैश्चिरादेव भूसुराः ॥ १४
निवृत्ते तिमिरे गाढे प्रकाशोऽभ्यागतो जगत् । ततस्सर्वेऽपि ते देवा देवदेवस्य शूलिनः ॥ १५
माहात्म्यमवबुध्यैते पूजां चक्रुश्च पावनीम् । यदान्तर्धिमगाद्देवस्तदा रुद्राग्निकोपयच ॥ १६
अपेक्षितं किं युष्माकं तत्प्रयच्छामि शीघ्रतः । इति देवस्य वचनं निशम्य कृपयेरितम् ॥ १७
भवत्प्रसादाद्देवेश भगवन्तं महेश्वरम् । निशायामर्चयन्तीत्थं सर्वदा मनुजोत्तमाः ॥ १८
शिवरात्र्यर्चनफलं तेषामस्तु कृपानिधे । तथेत्यन्तर्हिते देवे रुद्रास्स्वपदमापिरे ॥ १९
ततो विष्णुमुखा देवाः कैलासं पर्वतोत्तमम् । अधिगम्य महादेवं तत्र दृष्ट्वा पिनाकिनम् ॥ २०
प्रणम्य परया भक्त्या प्रोचुश्च वचनं तदा । एतावत्कालपर्यन्तं भगवन् मृतप्रायत ॥ २१
अस्मच्छापामृतास्सर्वे परित्यक्तक्रिया वयम् । प्रायश्चित्तं यदेतेषां सर्वपापहरं परम् ॥ २२
इत्येषां वचनं श्रुत्वा स्मयमानमुखश्शिवः । युष्माकं न हि दोषोऽस्ति सुरास्सर्वे महाशयाः ॥ २३
गौर्याः कृतमिदं सर्वमनयाद्यवलेपतः । अद्यप्रभृति युष्माभिर्नित्यकर्माणि नाकिनः ॥ २४
कर्तव्यानीति सानुकम्पं प्रेरयामास शंकरः । तथैव देवा निर्गत्य स्वस्थानं प्राप्य ते मुदा ॥ २५
तस्थुः कर्माणि कुर्वेव निशायाञ्चिन्तनोऽनिशम् । ततस्ससंभ्रमं गौरी समुत्थाय कृताञ्जलिः ॥ २६

प्रणिपत्य महादेवं प्रश्रयेण नतानना । भगवन् देवदेवेश सर्वज्ञ जगतांप्रभो ॥ २७
कथमागो ममैवैतद्वद सर्वदयानिधे । इति पृष्टो महादेवो देव्या चित्रचरित्रया ॥ २८
प्राह मन्दस्मितमुख स्फुरद्गम्भीरवाग्भरः । स्थित्वा मन्निकटे त्वं त्वामुपेक्षामुक्तवत्यसि ॥ २९
तेन दोषेण लोकोऽयं तिमिरेणावृतः खलु । त्वमेव कुरु कल्याणि प्रायश्चित्तं तदेनसः ॥ ३०
त्वन्तु सर्वस्य जगतो जननी कृपयान्विता । इति देवस्य वचनं निशम्य गिरिजा ततः ॥ ३१
तथेति तत्पदस्थाने पप्रच्छ परमेश्वरम् । (शिवः)-पुण्या यमुना भूलोके प्रसिद्धा या नदी शुभा ॥ ३२
तस्याः पद्मवने शुभ्रे शङ्खाकृतिशिलातले । तपः कुरु तदा दक्षप्रजापतिस्तदन्तिकम् ॥ ३३
समागत्याभिवीक्ष्यैनं शंखं दिव्याकृतिं परम् । प्रदीप्यति तदानीं त्वं कन्याकारं प्रदर्शय ॥ ३४
दक्षोऽपि त्वां तदालब्ध्वा सर्वावयवसुन्दरीम् । परितुष्टेन मनसा कन्यां संपोषयिष्यति ॥ ३५
क्रमेण द्वादशाब्दान्ते दक्षाणां भाविनापयोः । इत्युक्त्वा प्रेषयामास भवानीं परमेश्वरः ॥ ३६
तथेति प्रस्थिता गौरी कालिन्दीमागता द्रुतम् । तत्पद्मच्छदे रम्ये शंखरूपं समद्भुतम् ॥ ३७
गृहीत्वा परमेशानं ध्यात्वा मनसि सुस्थिता । तपश्चचार महत्येषा सुनिश्चितमतिस्तदा ॥ ३८
एतस्मिन्नन्तरे दक्षो रवौ मकरसंस्थिते । मघाह्वये च नक्षत्रे सपत्न्या सह सुव्रतः ॥ ३९
स्वपुत्रीभिश्च सर्वाभिर्द्विजैरपि तपोधनैः । स्नानार्थं नियमेनाग्रे शङ्खं पद्मे ददर्श ह ॥ ४०
दृष्ट्वा तदद्भुतं शङ्खं जग्राह सहसाऽऽदरात् । गृहीतमात्रे दक्षेण ततस्तं शंखमद्भुतम् ॥ ४१
शिशुरूपा विशालाक्षी सर्वावयवसुन्दरी । शिवरूपमिमां गौरीं दृष्ट्वा विस्मितलोचनः ॥ ४२
समादायाशु भार्यायास्तनयायाः करयोर्ददौ । वेदवल्ल्याह्वया सैषा सन्तोषेण समन्विता ॥ ४३
आघ्राय नेत्रयोः दृष्ट्वा ददौ स्तन्यं सुधामयम् । ततस्ताभिस्सपत्नीभिः परितस्संवृता सती ॥
स्वपुत्रीभिश्च सहसा स्वगृहं प्राप भूसुरः ॥ ४४

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे पञ्चमोऽध्यायः ॥

---

॥ अथ षष्ठोऽध्यायः ॥

तपश्चरन्त्याः गौर्याः पुरतः ब्राह्मणाकारेण श्री ईश्वरस्य प्रादुर्भावः ॥

अथ दक्षोऽपि नियमात् समाप्य सहनारिभिः । तपोधनैर्भूसुरैश्चाद् गृहमभ्यागतो द्रुतम् ॥ १
बालेव ववृधे गौरी पित्रोः प्रीतिं प्रकुर्वती । दर्शने पञ्चवर्षेऽस्यास्तपस्तत्तु मनोऽभवत् ॥ २
शिवस्य पाणिसंग्राहमिच्छन्त्याः परमेशितुः । सुनिश्चितमतिः पश्चात्तपो गृहमयाचत ॥ ३
पितरौ स्वानुकूलौ सा प्रीतियुक्तौ सुमङ्गला । तथैव तस्याः पितरौ तपोगृहमनुत्तमम् ॥ ४
विधाय पर्णगृहाश्च सखीश्च परिरक्षकाः । कारयित्वा ततो देवीं स्थापयामासतुर्मुदा ॥ ५
साऽपि गौरी सखानुजा मुनिभिस्तपसांवरैः । तपश्चचार सुमहत्तपस्विन्या स्थिरंतराम् ॥ ६
तदानीं वेदवल्ल्याख्या दक्षस्य सहधर्मिणी । कन्यकायास्समुत्पन्ना तपोवृद्धिस्समापनी ॥ ७
पञ्चवर्षं तदात्मसत्तामुत्थाय शुचिस्मिताम् । इयं भगवती गौरी साक्षाद्रूपद्युमा ॥ ८
तपोमहिम्ना मन्नाम्ना पुत्री नो जगदम्बिका । धन्योऽस्मि नितरामत्र धन्याम्बनिन्दिते ॥ ९
इति तत्तपसाध्याया दक्षस्यास्य कुटुम्बिनी । प्रसन्नहृदया तस्थौ इत्यादोमीति निश्चिता ॥ १०

तपश्चरन्तीं तां गौरीं शिवैकमनसा द्विजाः । स्वद्वादशाब्दपर्यन्तं ध्यानस्तोत्ररतां तदा ॥ ११
परमात्मा शिवो ज्ञात्वा ब्राह्मणाकारमास्थितः । गौर्यास्तपोगृहद्वारमवाप्यावेदयच्छिवाम् ॥ १२
[illegible] गौरी समुत्थाय शिवभक्ता क्षितीश्वरः । समागत इतिज्ञात्वा निर्ययौ पुरतो गृहात् ॥ १३
दृष्ट्वैनं ब्राह्मणश्रेष्ठं दक्षकन्या महादरात् । प्रणम्य प्रापयित्वान्तर्गृहमस्य महात्मनः ॥ १४
आसनं सुमहद्दत्त्वा कृत्वार्घ्याद्युपचारकान् । सपर्ययातं संपूज्य महत्या भक्तिपूर्वकम् ॥ १५
अपेक्षितं किंभगवन् पप्रच्छैवं शुचिस्मिता । इतिब्रुवाणां तां गौरीमाहचैव द्विजोत्तमः ॥ १६
गृहीतुं ते करं मेऽद्य काङ्क्षा कल्याणि वर्तते । तत्पूरय कृतार्थोऽसि प्रसन्नायां त्वयि द्रुतम् ॥ १७
इति तस्य वचश्श्रुत्वा गौरी खिन्नमनास्तदा । हस्तौ श्रवणयोः कृत्वा प्राह धैर्यं समाश्रिता ॥ १८
शिवस्य धर्मपत्नीत्वमिच्छन्तीं मां परात्मनः । कथं तुक्त्वा मयं मूर्खं त्वमित्थमिह चोक्तवान् ॥ १९
नाहं परात्पराद्देवमन्यं कमपि कांक्षये । इति तस्या वचश्श्रुत्वा कोपयुक्तो द्विजोत्तमः ॥ २०
सुखेन लभ्यो देवोऽयं न भवत्येवमुक्तवान् । कृतेऽपि तीव्रे तपसि प्रसन्नो न भवेद्यदि ॥ २१
प्राणानपि परित्यक्ष्ये त्वं गच्छाशु यथागतम् । इत्युक्त्वा सहसा देवी निवृत्ता स्वयमेव सा ॥ २२
तदाशु भगवानीशस्स्वरूपं परिगृह्य सः । दर्शयामास तत्तस्याः सुमनोहरमद्भुतम् ॥ २३
दृष्ट्वैनं परमेशानं भक्त्या परमया शिवा । प्रणम्य सहसा मुदा यथाविध्य कृताञ्जलिः ॥ २४
क्षन्तव्योऽयं महादेव देवदेव कृपानिधे । अपराधो मदीयोऽत्र रक्षरक्ष महाप्रभो ॥ २५
मास्तुभीतिर्वरारोहे तपसा महताऽमुना । तवसुन्दरि सन्तुष्टो नितरां दक्षकन्यके ॥ २६
इत्युक्तवन्तमीशानं नमस्कृत्य पुनश्च सा । आमन्त्र्याप्यनयया तस्थे तस्य पुरोऽम्बिका ॥ २७
ततस्तु दक्षमंधायाः परिचारजनो द्रुतम् । गत्वा निवेदयामास ब्राह्मणागमनं तदा ॥ २८
दक्षोऽपि तं द्विजन्मानं ज्ञात्वा शंभुरिति द्विजाः । निश्चित्य मनसा पश्चात्कन्यादानाय महेशितुः ॥ २९
संभारानानयामास पदार्थादीननेकशः । देवर्षिसिद्धसाध्यादिगणानपि तदानयत् ॥ ३०
कल्याणाय गृहाग्रस्थानमकारयदसौ बहून् । संस्थाप्य रंभास्तंभांश्च तत्रतत्र सुपेशलान् ॥ ३१
धूतपत्राणि भूरीणि बबन्ध किल रज्जुभिः । विनिर्गत्य ततो देव्या गृहं प्राप्य प्रजापतिः ॥ ३२
प्रणम्य ब्राह्मणाकारं शिवं दृष्ट्वा प्रसन्नधीः । दुहितासहितं विप्रं कल्याणायानयद्गृहे ॥ ३३
नानापुष्पावकीर्णेऽस्मिन्नानाध्वजविचित्रिते । नानामण्डपसंयुक्ते नानावेदिसमन्विते ॥ ३४
तत्र सिंहासने रम्ये सर्वरत्नविचित्रिते । शिवं निवेशयित्वान्तःपुरे दुहितरं सताम् ॥
प्रेरयामास मतिमानलङ्काराय भूसुरः ॥ ३५
दक्षस्य कन्या जगतां जनित्री ज्ञात्वा तदाभ्यज्य जटां व्यपोह्य ।
धृताच्छवस्त्राभरणानि धृत्वा समाससादाशु शिवान्तिकं सा ॥ ३६
इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे षष्ठोऽध्यायः ॥

---

॥ अथ सप्तमोऽध्यायः ॥

दाक्षायणी विवाहः ॥

ततो विष्णुमुखा देवाः प्रणम्य परमेश्वरम् । ववर्षुस्सुमनो वृष्टीस्स्तुवन्तो बद्धपाणयः ॥ १
लक्ष्मीसरस्वतीमुख्या देवीं दाक्षायणीं शुभाम् । प्रणम्य परया प्रीत्या विकीर्य सुमनोहरान् ॥ २
कृतस्तोत्रवरा स्तस्थुः परितो ब्राह्मणोत्तमाः । वाद्यानामारवोऽप्यासीत्प्रळयांबुदनिस्स्वनः ॥ ३
जगुः किन्नरवर्याश्च रक्तकण्ठा स्तदाभृशम् । ब्रह्मादयस्सुरास्सर्वे परमेशं तदाऽस्तुवन् ॥ ४
रम्भातिलोत्तमाद्याश्च ननृतुर्नृत्तकोविदाः । पुण्ये मुहूर्ते दक्षोऽपि देवदेवस्य शूलिनः ॥ ५
पादाब्जे क्षाळयामास भार्यादत्ते जले विभोः । अर्चयित्वाथ विधिना नानापुष्पैर्महेश्वरम् ॥ ६
पाणिं संग्राहयामास धारां कृत्वा सुपावनीम् । दुहितुः पाणिकमलं परमेशेन भूसुराः ॥ ७
समस्तजगतां कर्ता विधाता हव्यवाहनम् । हविर्भिश्छन्दयामास महता विभवेन सः ॥ ८
नारायणमुखा देवाः पेठु र्वेदाङ्गमङ्गळान् । तदैव परमेशोऽयं क्षणादन्तर्धिमापहि ॥ ९
ततस्तु गौरी दुःखार्ता स्वात्मानं हृदयेन सा । विनिन्द्य पद्मामुख्याभिर्देवपत्नीभिरावृता ॥ १०
सबाष्पनयना मातुः प्रविश्य गृहमान्तरम् । रुरोद बहुवारं सा दुःखेन महतान्विता ॥ ११
वेदवल्लीमावाप्यो गौरीमभ्येत्य दुःखिताम् । अकस्मात्त्वापचारेण देवोऽन्तर्धिमगात् सुते ॥ १२
तस्य तपसा भूयः प्रसाद्य परमेश्वरम् । मम दुःखं त्यजाशुत्वमितिदुःखाद्विमोच्यताम् ॥ १३
इति तासां वचश्श्रुत्वा कथञ्चित् परमेश्वरी । निगृह्य दुःखं मनसा विवेश तपसो गृहम् ॥ १४
तत्र गत्वा यथापूर्वं चचार सुमहत्तपः । ब्रह्मविष्णुमुखा देवा गतेऽन्तर्धिं महेश्वरे ॥ १५
दुःखमापुस्तदा सर्वे मुनयश्च तपोधनाः । पापात्मा ननु दक्षोऽयं यतोऽस्माकं महेश्वरः ॥ १६
मनुमहमकस्यैव प्रसक्तोऽपि द्रुतं ययौ । अथवाऽस्मासु दोषोऽस्ति यत्किञ्चित्त तपसा ॥ १७
इति नानाप्रकारेण स्वमनस्सु विचिन्त्य ते । तस्थुर्मौनतया सर्वे नतवक्त्रास्सुदुःखिताः ॥ १८
सुराणां सुमहद्दुःखं दुःखितां स्वात्मजामपि । व्यसनञ्च सुरस्त्रीणां वीक्ष्य दक्षोऽपि दुःखितः ॥ १९
कल्याणमण्डपे देवान्वीक्ष्य सर्वानुवाच तान् । रुष्टः कोवा मयि सुरा दोषो वदत शंकरः ॥ २०
कल्याणमध्ये कल्याण मुक्त्वैवं गतो ननु । कोविदं प्रार्थयामास स्वयमेव पिनाकधृत् ॥ २१
अज्ञातपितृको नित्यं श्मशाननिलयोऽशुचिः । ब्राह्मणाकार मासाद्य मत्पुत्रीं कोऽशिवस्स्वयम् ॥ २२
प्राप्य तन्निकटं तान्तु प्रार्थयामास वञ्चकः । तच्छ्रुत्वा शमिमं क्रूरं समानीयाद्यमेवहि ॥ २३
देवतानाञ्च युष्माकं सन्निधौ दुहितुर्मम । विधिना पाणिसंग्राहमकारयमहं सुराः ॥ २४
तथापि मन्ये कल्याण मपकीर्तिं विगर्हिताम् । संपाद्यायं सभामध्ये नर्तको धूर्त्तशेखरः ॥ २५
नहि मुञ्चति लोकेऽस्मिन् गुण स्सांसिद्धिको जनम् । यतो ब्राह्मणवेषोऽप्येवं चेष्टां चकारह ॥ २६
इत्यादि वचनं दक्ष स्सर्वेषां संनिधौ तदा । उक्त्वा सुरा न्विमान् सर्वान् प्रेरयित्वा पदं प्रति ॥ [illegible]
तदाप्रभृति देवेऽस्मिन्छङ्करे लोकशंकरे । कोपोऽस्य दोषमाहात्म्यात्सञ्जातोननु भूसुराः ॥ २८

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखंडे
दक्षकाण्डे सप्तमोऽध्यायः ॥

---

॥ अथ अष्टमोऽध्यायः ॥

तपस्यन्तीं देवीं परिगृह्य ईश्वरेण कैलासगमनम् ॥

एवं बहुतिथे काले गते दाक्षायणीं शिवाम् । तपश्चरन्तीं सुमहत्कृशाङ्गीं नियमेन ताम् ॥ १
अनुग्रहं तदा कर्तुमात्मारामः कुतूहलात् । जटी तापसरूपेण भूतिरुद्राक्षभूषणः ॥ २
कपालमालासच्चूडो धृतशूलकपालवान् । शिञ्जन्नूपुरमञ्जीरनादनादितदिङ्मुखः ॥ ३
धृतकाषायवसनश्शंभुस्तत्र समाययौ । तं दृष्ट्वा तापसश्रेष्ठं समुत्थाय कृताञ्जलिः ॥ ४
अर्घ्यपाद्योपचारांश्च कृत्वा दाक्षायणी शिवा । विष्टरं परिकल्प्यास्य विनयेन स्थिता पुरः ॥ ५
तदैव स महादेवः प्रसन्नहृदयो द्विजाः । आरुह्य वृषभं दिव्यं कैलासशिखरोपमम् ॥ ६
क्वणत्किङ्किणिकाग्रामविराजितबृहद्गलम् । आविरासीत्कृपासिन्धुराश्रितानां सुरद्रुमः ॥ ७
देवदुन्दुभयो नेदुर्जितमेघस्वना शुभाः । पुष्पवृष्टिं ददुस्तत्र दिव्यगन्धैर्मनोहरा ॥ ८
सिद्धसाध्यमुखैर्देवैर्ब्रह्मविष्णुपुरस्सरैः । परीवृतः परात्मायं परितो ब्राह्मणोत्तमाः ॥ ९
तं दृष्ट्वा सा महादेवं प्रणम्य परया मुदा । कृतप्रदक्षिणस्तोमा भक्तियुक्तान्तरेण च ॥ १०
क्षमस्व देवदेवेश मन्तुं त्वं करुणाकर । पुनः पुनरियं गौरी प्रणनाम शुचिस्मिता ॥ ११
गृहीत्वा तामिमां देवीं पाणिभ्यां परमेश्वरः । वृषोपरि व्यवस्थाप्य वामपार्श्वे मनोहरे ॥ १२
ययौ कैलासमतुलं सर्वदेवगणैः स्तुतः । तत्र गत्वाऽऽलयं सैशमविशद्भवनं द्विजाः ॥ १३
ततः परिजना देव्या दक्षस्य निकटं गताः । वृत्तान्तमानुपूर्व्यात्समूचुः प्राप्तभया द्विजाः ॥ १४
श्रुत्वा प्रजापतिर्दैवात्समीक्ष्य निकटे स्थिताम् । अद्य कश्चायममरास्तथैव पुरा गतः ॥ १५
इदानीमयमागत्य तस्कराणां पुरस्सरः । मद्दुहितरं चौर्यात् गृहीत्वा गतवान् खलु ॥ १६
उल्लङ्घ्यार्थं ममाज्ञां च कृतवानयशोऽपि मे । विना पित्रोर्मतिं लोके कः कुर्यादीदृशीं क्रियाम् ॥ १७
अमुना यत्र कुत्रापि कल्याणं न कृतं श्रुतम् । न दृष्टं भिक्षुको यस्मादितः पूर्वं सुरा ननु ॥ १८
यदि दृष्टं हृतं वा स्यात् दृश्यं कुरुते सुधीः । इत्यादि वचनं दक्षस्तेषामग्रे तदा ब्रुवन् ॥ १९
प्रेरयित्वा सुरानेतान् स्वयं प्रति भूसुराः । शिवे परात्मनि भृशं कोपी तस्थे दुरात्मवान् ॥ २०
शिवनिन्दां चकारैवं प्रतिक्षणमयं यत । तमेवं दक्षममरा ब्रह्मविष्णुमुखास्तदा ॥ २१
निन्दया देवदेवस्य महादेवस्य शूलिनः । दक्षोऽयममरैः सार्धमस्माभिर्नाशमेष्यति ॥ २२
त्यक्त्वैनं यत्र कुत्रापि गम्यते नहि पापिनम् । तस्मात्सर्वं वयमिह बुद्धिमुक्त्यास्य पापिनः ॥ २३
निन्दामपि निवर्त्यास्य करिष्यामो हितं ध्रुवम् । इति निश्चित्य ते सर्वे प्रोचुर्वाचं द्विजेश्वराः ॥ २४
दक्ष सर्वासु विद्यासु दक्षस्त्वं जगतां प्रभुः । दत्ता शिवस्य देवस्य भवता दुहिता ननु ॥ २५
जामाता तव देवोऽयं सर्वलोकेषु विश्रुतः । तदस्य दूषणं मास्तु योषा कोपा भयावहम् ॥ २६
संबन्धे तु कृते पश्चात्कुलादेः परीक्षणम् । तदयुक्तं हित्वा शीघ्रं पुत्रीं जामातरं तव ॥ २७
कैलासपर्वतं गत्वा वीक्ष्यागच्छ यथापुरा । सन्धिं कृत्वाऽमुना भूयश्शंभुना जगतां प्रभो ॥ २८
इत्यादि वचनं तेषां श्रुत्वा शान्तात्ममन्युमान् । तथेति निरगाच्छीघ्रं कैलासं प्रति भूसुराः ॥ २९
तत्र गत्वाशु देवस्य शंकरस्य परात्मनः । भवनद्वारमासाद्य द्वारपालैर्निरोधितः ॥ ३०
आज्ञया दक्ष देवस्य गन्तुमर्हसि नान्तरम् । तत्तिष्ठ त्वमिहान्यत्र गच्छ वा यत्र कुत्र च ॥ ३१
इति तेषां वचः श्रुत्वा द्वारेशानां प्रजापतिः । कन्यां ममेक्षितुं शंभुं जामातरमिहागतम् ॥ ३२

मया किमर्थं युष्माभिः क्रियते मेऽवरोधनम् । इत्युक्तिमस्य संश्रुत्य प्रत्यूचुस्ते गणेश्वराः ॥ ३३
शृणु दक्ष वचोऽस्माकं मूढबुद्धे दुराशय । ऐश्वर्यं भवता प्राप्तमीश्वराच्छंकरात्ननु ॥ ३४
निष्कण्टकमिदं विश्वं भुज्यते सचराचरम् । तेन दत्तस्त्वया पापिन् कृतवान् दूषणं विभोः ॥ ३५
नास्ति ते बुद्धिरल्पापि दैत्यानामपि साऽस्ति हि । तदद्य वीक्षितुं युष्मन्मुख मेषामसांप्रतम् ॥ ३६
संभाषणे कथा कैव भवेद्दोषो महानिह । यद्यस्ति तव सेवायां शङ्करस्य परात्मनः ॥ ३७
मतिस्तुनिश्चिता तथ्यं भक्त्या समयमीशितुः । ज्ञात्वाऽऽज्ञया ततो गन्तुं महेश्वरपुरं प्रति ॥ ३८
न चेद्गच्छ यथामार्गं तिष्ठ वाऽत्र सुधामते । इतितेषां वचः श्रुत्वा दक्षः खिन्नमनास्तदा ॥ ३९
निवृत्तः प्राह कोपेन गणेशानां पुरो वचः । न वन्दे शंकरं युष्मत्स्वामिनं द्वारपालकाः ॥ ४०
ब्रह्मविष्णुमुखा देवा भ्रुवोर्किं मम सर्वदा । कार्यं कुर्वन्ति भीतास्ते मदाज्ञावर्तिनो ध्रुवम् ॥ ४१
सर्वेषामपि देवानामहमेवप्रवर्तकः । निवर्तकोऽपि संहर्ता धारकोऽपि जगत्प्रभुः ॥ ४२
तयोर्वचनमाकर्ण्य युष्माभिरवरोधनम् । कृतं दुहितृजामात्रोः कार्याकार्यमजानतोः ॥ ४३
तदिदानीं सुरान् सर्वान् रुद्रस्यास्य नमस्क्रियाम् । स्तुतिं ध्यानञ्च यत्किञ्चिदस्ति तद्विषयञ्च तत् ॥ ४४
इत ऊर्ध्वमकर्तव्यमिति ज्ञापयामि तान् । इत्यादिवचनं वक्षस्तेषामुक्त्वाशु सन्निधौ ॥
निवृत्य स्वपुरं प्राप नानालङ्कारमण्डितम् ॥ ४५

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे ऽष्टमोऽध्यायः ॥

---

॥ अथ नवमोऽध्यायः ॥

ब्रह्मणो यज्ञे दक्षेण शिवनिन्दा ॥

अथ ब्रह्ममुखैर्देवैः पूजितोऽग्रे समागतैः । स्थित्वा निवेदयामास वृत्तान्तममरेश्वरान् ॥ १
युष्मद्वाक्यं निशम्याहं ब्रह्मविष्णुमुखास्सुराः । गतोऽस्मि वीक्षितुं रुद्रं कैलासगिरिमात्मजाम् ॥ २
द्वारस्थैस्तत्र रुद्रस्य क्रूरैः किञ्चिद्विचेष्टितम् । न गन्तव्यं न द्रष्टव्यं त्वन्मुखं शंकराज्ञया ॥ ३
स्थितात्र गच्छ वा तिष्ठ इति निष्ठुरभाषिभिः । दूषणानि च भूरीणि कृतानि मम तैरहो ॥ ४
वाक्यं दुहितृजामात्रोरसमाकर्ण्य सुरेश्वराः । न तेषामपराधोऽत्र मयि दोषो न संशयः ॥ ५
सुकन्याऽभिमानं गतवान् तावहं वीक्षितुं यतः । बहुना किं सुरास्सर्वे शृणुध्वमवधानतः ॥ ६
इतः प्रभृति युष्माभिर्न कर्तव्या नमस्क्रिया । न स्तुतिर्न स्मृतिर्वापि रुद्रस्य क्रूरचेतसः ॥ ७
कृता चेदपराधोऽपि युष्माकं सुमहान् भवेत् । प्रयच्छेयं परेभ्योऽहं तावकानि पदान्यपि ॥ ८
उक्त्वा वृत्तान्तमेवं तान् प्रेषयित्वा स्वयं द्विजाः । न्यवसद् बहुकालं स स्वयं सन्तृप्तपञ्जिवम् ॥ ९
अथ कालेन महता विधाता विश्वसृड्विधिः । मखं कर्तुमनास्तस्य यानि द्रव्याणि भूसुराः ॥ १०
अपेक्षितानि संपाद्य तानि सर्वाणि शीघ्रतः । राजानमध्वरस्याहं महादेवं त्र्यंबकम् ॥ ११
विश्वाधिकं परञ्ज्योतिस्स्वरूपं ब्रह्म केवलम् । आनयित्वा हविर्भिस्तं पूजयिष्यामि भक्तितः ॥ १२
दक्षोऽयं विमुक्तो मोहादभिवीक्ष्य यदीश्वरम् । तथापि तं महादेवं पूजयिष्याम्यसंशयम् ॥ १३
यत्किञ्चिदपि वा दक्षः करोतु मम दुर्मनाः । परित्यजेऽहं प्राणांश्च सद्यो नात्रसंशयः १४
यस्य प्राणाभिमानोऽस्ति तस्य भीतिः कथञ्चिद्भवेत् । प्राणेश्वरो महादेवः कृत्तिवासाः पिनाकधृक् ॥ १५

रक्षेदित्थं मतिं कृत्वा ब्रह्मा लोकपितामहः । कैलासं पर्वतश्रेष्ठं गत्वा परमया मुदा ॥ १६
तत्र दृष्ट्वा महाकायं नन्दिनं द्वारपेश्वरम् । प्रणम्य तन्मुखाद्देवं बोधयित्वा तदाज्ञया ॥ १७
प्रविश्य भवनं रम्यं महादेवस्य भूसुराः । विनयेन महादेवं दृष्ट्वा हृष्टमना विधिः ॥ १८
पुनः पुनः प्रणम्याथ प्रार्थयामास भूरिशः । देवदेव महादेव शरणागतवत्सल ॥ १९
रक्ष मां करुणामूर्ते यज्ञेश्वर महेश्वर । मया करिष्यमाणे त्वं प्रसन्नो भव चाध्वरे ॥ २०
क्रतुमप्यस्य देवेश प्रथमं हविरीश्वर । भविष्यामि कृतार्थोऽहं तेन सत्यं जगद्गुरो ॥ २१
इति प्रश्नवचः श्रुत्वा देवदेवोऽब्रवीद्वचः । प्रेरयामि विधे यज्ञे नन्दिनं तव मामकम् ॥ २२
इति शम्भुर्विधातारं मन्दस्मितमुखाम्बुजः । प्रेरयामास विश्वात्मा ब्रह्माणं परया मुदा ॥ २३
तथेति स विधाताशु प्रणम्य परमेश्वरम् । विनिर्गत्य पुनर्गत्वा दक्षस्यान्तिकमाप्तवान् ॥ [illegible]
विज्ञाप्य तस्य लब्धाज्ञो गत्वा मेरुं महीभृतम् । समागत्यात्र शिखरे मनोवत्याह्वये शुभे ॥ २५
[illegible] शिरसा शुचिर्भूत्वा यागारम्भं चकार सः । विष्ण्वादि देवतास्सर्वा ब्रह्मपुत्रा महौजसः ॥ २६
समालोच्यागतास्तत्र कैलासमचलं परम् । निर्गत्य तासां पुरतो वक्तापि जगतां प्रभुः ॥ २७
उक्तवोपचारानेतासां परिकल्प्यासनानि च । दक्षप्रजापतिं तावदागतं पुरतो विधिः ॥ २८
विनिर्गत्योपचारेण प्रेरयित्वा ततस्तदा । विधायास्यासनं रम्यं स्वयं तस्थौ तदाज्ञया ॥ २९
नन्दी समागतश्शीघ्रं तदानीं शङ्कराज्ञया । उत्थाय तं विनिर्गत्य पुरतोऽस्य महात्मनः ॥ ३०
नानोपचारैस्संपूज्य प्रणम्य परया मुदा । मध्ये महार्हे संस्थाप्य वरे सिंहे महासने ॥ ३१
समागतांस्समानीय शतकोटिमिता गणाः । आसनानि वराण्येषां परिकल्प्य यथाविधि ॥ ३२
विधेश [illegible] महारम्भो यागं कर्तुं द्विजोत्तमाः । तदा दक्षस्तु तं दृष्ट्वा शैलादिं गणनायकम् ॥ ३३
विष्ण्वादि देवास्सर्वेऽपि तिष्ठन्ति परितोऽप्यहि । यथा सरस्वतीमुख्या देवानां पत्नयस्तथा ॥ ३४
विलक्षणोऽयं सर्वेषां यदासनगतो बत । द्वाःस्थोऽयं कस्यचित् क्रूरो गर्वान्वितो महाखलः ॥ ३५
कैलासे वर्तते नित्यं रुद्रस्य क्रूरचेतसः । कोऽयं तमानयामास इति कोपाकुलान्तरः ॥ ३६
ब्रह्माणं वीक्ष्य चाहाथ ज्ञात्वा सर्वं दुरात्मवान् । आनीतो भवता नूनं रुद्रस्य द्वारपालकः ॥ ३७
आसनश्चास्य सुमहद्दत्तवानसि विश्वसृट् । पितेति त्वामहं ब्रह्मन् मुक्तवानस्मि सत्यतः ॥ ३८
अन्यथैतस्य शीघ्रेण शिरश्छेदं करोम्यहम् । तस्माद्रुद्रस्य यज्ञेऽस्मिन्यदातव्यं हविर्वरम् ॥ ३९
प्रीणनीयास्सुरास्सर्वे विष्णुपूर्वाः त्वया मखे । यत्र कुत्रापि महिमा रुद्रस्य श्रूयते श्रुतौ ॥ ४०
अप्रमाणं हि सा सर्वा त्यक्ता त्यज महाज्ञया । रुद्रस्स्वभावात्क्रूरात्मा तामसोऽस्थिधरोऽनिशम् ॥ ४१
तस्यास्य द्वारदेशस्य त्वादृशः क्रूरचेतनः । इत्यादि वचनं दक्षे जल्पति ब्राह्मणोत्तमाः ॥ ४२
श्रुत्वैतदखिलं नन्दी वचसोः कार्यो युगम् । कृत्वा शिवशिवेत्युक्त्वा कोपाकुलितचेतनः ॥ ४३
ध्यात्वा शिवं महादेवं दक्षमेनं समीक्ष्य च । हे हे दक्ष महापापिन् शिवस्य परमात्मनः ॥ ४४
दूषणं क्रियते हन्त त्वयाद्यासन्नमृत्युना । जिह्वाप्रकम्पनं तच्छिर्षगास्यस्य भेदनम् ॥ [illegible]
शंभो दूषणकर्तॄणां सकृदेव यदन्ति हि । मुक्तवानसि पापिष्ठ शिवेच्छा कीदृशीत्यहम् ॥ [illegible]
त्वां विनिन्दकमीशस्य महादेवस्य शूलिनः । अत एव महापापिन् जीवसित्व मनुं क्षणम् ॥ ४७
इतऊर्ध्वं त्वया मुखं यत्किञ्चिज्जल्प्यते यदि । छिन्नं विद्धि शिरश्शीघ्रं मिदैवास्मिन्मखायुधे ॥ [illegible]
हविर्नास्तीति देवस्य यज्ञेचैवत्वमुक्तवान् । शंभो यज्ञेश्वरस्यात्र वारयित्वा प्रजापतिम् ॥ ४९

अहत्वा ये महामोहाद्धविः प्रथममध्वरे । तेषां शिरांसि शीघ्रेण छिन्नानि स्युर्मदाज्ञया ॥ ५०
गच्छन्तु संपदो भ्रान्त [illegible] सर्वाशिशवेच्छया । शिवनिन्दाकरं दक्ष शिरस्ते पततु क्षितौ ॥ ५१
समुच्छिन्नमिदं भूयो भवत्याजं विगर्हितम् । तिष्ठन्ति ये दुरात्मानो निकटे ते दुरात्मनः ॥ ५२
तदीयशिरसांछेदो भवत्वाशु तवाध्वरे (पदाकरे) । पीड्यन्त्वेते खलास्सर्वे शूलपक्षेन सन्ततम् ॥ ५३
शपित्वैवं क्षणादेव नन्दी शंकरवल्लभः । उत्थाय सकलै र्भूतगणैः कैलासमुत्तमम् ॥ ५४
आगत्य दृष्ट्वा देवेशं सोमं सोमार्धशेखरम् । प्रणिपत्यानुपूर्व्येण वृत्तान्तं देवसन्निधौ ॥ ५५
कथयित्वा प्रणम्य भूयोऽपि महादेवं महाबलम् । आज्ञया शंकरस्यायं स्वद्वारं प्राप भूसुराः ॥ ५६

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे नवमोऽध्यायः

---

॥ अथ दशमोऽध्यायः ॥

दक्षयागारम्भे दधीच्यागमनम् ॥

ततो विष्णुमुखा देवाः शैलादौ निर्गते क्रुधा । भीता भृशं ययो नैन्दि दक्षयोर्ब्राह्मणोत्तमाः ॥ १
तदा तु दुःखपरा नम्रवक्त्रा स्वर्थं गतप्रभाः । यज्ञमध्ये विधातापि यागं दक्षाद्भयं गतः ॥ २
यागादपि चर तूष्णीं भावः कलहसंभवात् । इति निश्चित्य मनसा तस्थौ कैवल्यमेव सः ॥ ३
ततो दक्षस्समुत्थाय कोपात् स्वपुरमागतवान् । यथायथं देवताश्च स्वपदानि गतास्तदा ॥ ४
नन्दिशापमनुस्मृत्य भीत्या मनसि भूसुराः । तदाप्रभृति कुत्रापि यागो नास्ति जगत्सु ह ॥ ५
अनेककालपर्यन्तं भीत्याऽत्यन्तं तयोर्द्विजाः । स्वयमेव तदा दक्षो यागं कर्तुमनाः पुनः ॥ ६
सर्वान् देवान् समुद्वीक्ष्य प्रोवाच वचनं च तान् । नन्दिशापवशात्सर्वे देवा यूयं भयं गताः ॥ ७
विमुखाः [illegible] मखे तस्मादहं याग महाध्वरम् । करिष्यामि ततः पश्चात्परित्यक्तभयास्सुराः ॥ ८
कुरुताप्यचलं शाश्वा मुक्त्वा चर महाक्रतुम् । इत्युक्त्वा विश्वकर्माणं वीक्ष्य प्राह वचस्तथा ॥ ९
विशाला यागशाला मे कर्तव्येति द्रुतं त्वया । तस्य तद्वचनं श्रुत्वा वर्धकिनोकिनां क्षणात् ॥ १०
गङ्गातीरे कनखलस्थाने रम्ये सुपावने । सहस्रयोजनायाममप्राकारसुमनोहराम् ॥ ११
गोपुराट्टालवलभीहर्म्यादिभिरलङ्कृताम् । वापीकूपतटाकाद्यैः वृक्षारामैश्च पेशलाम् ॥ १२
भक्ष्यव्यञ्जनशालाभि विशालाभिरितस्ततः । दधिक्षीरघृतानां च शालाभिः परितो वृताम् ॥ १३
कस्तूरी चन्दनादीनां शालानामपि मण्डिताम् । सुवर्णरजतरत्नानां वस्त्राणामपि भूरिशः ॥ १४
यागोपकरणानाञ्च शालाभिः परितो वृताम् । शतयोजनविस्तीर्णकुण्डमण्डलवेदिकाम् ॥ १५
पत्नीभिश्चित्रशालाभिरभितः परिवेष्टिताम् । आसनानि च भूरीणि देवतानामितस्ततः ॥ १६
एवमादिभि रत्नैश्च मण्डितामतिसुन्दराम् । निर्माय यागशालां तां दक्षायास्मै न्यवेदयत् ॥ [illegible]
विलोक्य तामिमां शालां दक्षो लोकेषु विश्रुतः । सन्तोषेण च संयुक्तो महता ब्राह्मणोत्तमाः ॥ १८
स्रुक्स्रुवादीनि सर्वाणि यागोपकरणानि च । कल्पवृक्षं कामधेनुं निधिश्चिन्तामणिं तथा ॥ १९
आगतानां दापयितुं वस्त्राण्याभरणान्यथम् । मण्टपे मण्टपे सर्वान् स्थापयामास भूसुराः ॥ २०
त्रिंशत्सहस्रमप्यस्य दातारो ब्राह्मणाः परे । व्यञ्जनप्रमुखानाञ्च षष्टिसाहस्रसंख्यया ॥ २१
कल्पितास्तेन दक्षेण ब्राह्मणानामधीश्वराः । ततस्तु चोदिता दूता ब्रह्मविष्णुमुखान् सुरान् ॥ २२

बोधयित्वाऽऽगताश्शीघ्रं दक्षस्य निकटं द्विजाः । अथ विष्णुविधीन्द्राद्या देवाश्च मुनिसत्तमाः ॥ २३
सूर्याचन्द्रमसौ दैत्या रक्षांस्यपि स्वबलैस्सह । सपत्नीभिश्च सन्तुष्टा वीक्षितुं सहसागताः ॥ २४
तेषां तु पुरतो गत्वा ब्रह्मविष्णू उभावपि । तोषयित्वा यथान्यायं स्थापयित्वा वरासने ॥ २५
नानोपचारैरमरानृषीनपि वरानथम् । आसनेषु तदा तेषु व्यवस्थाप्य स्वयं पुनः ॥ २६
देवतानां च सर्वेषां मध्ये तस्थे तदा द्विजाः । प्रसिद्धा बहवो विप्रास्तद्वानीं तेऽपि चाययुः ॥ २७
लक्ष्मी सरस्वतीन्द्राण्यो याश्चान्या देवपत्नयः । ऋषीणां पत्नयश्चापि कर्वांस्तास्सुमनोहराः ॥ २८
प्रविश्य वेदवल्यास्तु गृहं परमशोभनम् । कृतनानोपचारास्ता स्तस्थुस्तं परितो मुदा ॥ २९
दक्षस्तु प्रेषितान् दूतानागतान्वीक्ष्य संमुखः । कोवाऽत्र नागतो दूता देवद्विजऋषिष्वपि ॥ ३०
यद्यन्तु निकटेऽस्माकं भवन्तो निर्भया इह । इति तस्य वचश्श्रुत्वा तदा दूता वचोऽब्रुवन् ॥ ३१
ऋभुसनकोऽपि ते वीक्ष्य ब्राह्मणानामधीश्वराः । अगस्त्यस्तपतां श्रेष्ठो नारदोऽत्र प्रभो महान् ॥ ३२
सनकाद्याश्च मुनयो वेदवेदांगपारगाः । दधीच्यत्रिवसिष्ठाश्च पराशरभृगुमपि ॥ ३३
दुर्वासास्तपतां धर्मो दूषयित्वा जगत्प्रभुम् । भवन्तं भवन्तश्च नाययुस्ते तपोधनाः ॥ ३४
इति तेषां वचः श्रुत्वा दक्षः पापी तदा हसन् । रुद्रभक्ता इमे सर्वे नागतास्तत्र यद्यते ॥ ३५
मागच्छन्निवति तान् सर्वान् धिक्कृत्य वचोऽब्रवीत् । तदा दधीचिर्विशिष्यैश्च प्रशिष्यैश्च तपोधनाः ॥ ३६
समागतो महात्माऽयं सर्वेश्वरपरो द्विजाः । तं दृष्ट्वा रुद्रभक्तोऽयं न भवत्यत्र पद्रि ॥ ३७
मद्दीक्षया चागतोनूनमिति निश्चितमानसः । आसनं कल्पयामास शिष्याणामपि मुहुराः ॥ ३८
तदा दधीचिस्तं वीक्ष्य चाह्वाने भवता कृतम् । किमर्थमिति पप्रच्छ स्फुरद्गम्भीरवागयम् ॥ ३९

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे दशमोऽध्यायः ॥

---

॥ अथ एकादशोऽध्यायः ॥

दक्षेण शिवनिन्दनम् ॥

प्रत्युवाच ऋषिं दक्षो वीक्ष्य तं तपतां वरम् । मत्कन्यापाणिसंवादं कृत्वा पूर्वं त्रिलोचनः ॥ १
मध्ये कल्याणमुच्छिद्य गत्वाशु कुटिलक्रियः । पुनरागत्य चौर्येण गृहीत्वा तामिमामथम् ॥ २
गतवान् क्रूरकर्मात्मा क्रूरदन्तघनोद्यमः । तथापि वीक्षितुं तत्र कैलासे तामुपायहम् ॥ ३
गतवानस्मि सहसा वेत्रतीहारवर्तिभिः । अनुरोधः कृतोऽस्माकं श्रुत्वतद्वचनैरहो ॥ ४
मायया मोहयित्वाऽयं मत्पुत्रीं मत्समीपगाम् । कृत्वातु विमुखीमत्र वर्तते परवञ्चकः ॥ ५
तत्कृते ब्रह्मयागेऽस्य निर्बन्धेन हविर्मया । दत्तस्यस्तस्य तदा नन्दी समुत्थाय शिवाय वै ॥ ६
मदत्वा प्रथमं यज्ञे हविरग्नौ यजन्ति च । तेषां शिरांसि छिन्नानि विशीर्णानि भवन्त्विति ॥ ७
उक्त्वा कोपाकुलश्शीघ्रं ययौ भद्गीतिसंयुतः । भद्रलाघातकवच श्रुत्वा सर्वे इमे सुराः ॥ ८
न कुर्वन्ति तदारभ्य यागं भीता विना हरम् । अहमेव पुनस्तेषां प्रगणय्य वचोऽस्य च ॥ ९
करोमि रुद्रं मुक्त्वा तं यागं परमपावनम् । तदर्थममरास्सर्वे मयाऽऽहूता स्तपोधन ॥ १०
आगतं भवताप्यत्र प्रष्टुं यागं महात्मना । तात्त्वमागतमिमं मन्ये नात्र कार्या विचारणा ॥ ११

तदेतस्य वचश्श्रुत्वा दधीचिस्तपतां वरः । हासं कृत्वा तदा प्राह करावास्फाल्य कोपतः ॥ १२
त्वत्पुण्यमखिलं दक्ष पापायैवाभवत्किल । इत्युक्त्वा मौनमास्थाय तूष्णीं तस्थे तदा द्विजाः ॥ १३
ततः प्राह वचो दक्षः कोपाकुलितलोचनः । रुद्रस्य भक्तिमत्वात्त्वं विहस्यात्र विनिंद्य माम् ॥ १४
इत्युक्त्वा कोपकुटिलवक्त्रस्तस्थे तदा द्विजाः । उक्तवानसि यत्किञ्चिद्दधीचे पुरतो मम ॥ १५

दधीचिः —

अध्वरेशं महादेवं मुक्त्वा दक्ष मखं भवान् । कर्तुमिच्छति मोहेन महता सर्वशास्त्रवित् ॥ १६
ब्रह्मविष्णुमुखान्देवान् पशून् सृष्ट्वा महेश्वरः । कल्पयित्वा स्थितिं तेषां संहरिष्यति कालतः ॥ १७
सर्वपाशजलकरशम्भुः परमात्मेति विश्रुतः । हव्याशो हविराकारो जनको जातवेदसः ॥ १८
कर्ता यज्ञस्य देवोऽयं रक्षकोऽस्य जगत्प्रभुः । शिव एवेति वेदान्ता नान्योऽस्तीति वदन्ति हि ॥ १९
भक्तिश्चेदत्र यज्ञेश रुद्रमुद्दिश्य मत्पुरः । अनेन दत्तमैश्वर्यं विष्ण्वादीनां हि नाकिनाम् ॥ २०
सर्वकर्ता महादेवो नास्य कर्तास्ति कुत्रचित् । शिवो महेश्वर ईशम्भु नीलग्रीवस्त्रिलोचनः ॥ २१
अन्तर्यामी परं ब्रह्म परात्परतरश्च सः । सर्वेष्वेतेषु देवेषु वरीयान् ब्राह्मणोह्यसौ ॥ २२
त्रिमूर्तिषु परा मूर्तिरस्यैव जगतां प्रभोः । ब्राह्मणोऽयं महादेवः क्षत्रियो विष्णुरित्यपि ॥ २३
आम्नाय एव भगवानभ्यासेन वदत्यमुम् । इममर्थं महामोहादवमत्याऽऽम्नायचोदितम् ॥ २४
अध्वरेशं महादेवं होतारं रुद्रमव्ययम् । मुक्त्वान्याञ्छल्मलीपुष्पतुल्यांस्तुच्छफलप्रदान् ॥ २५
मेलयित्वा वृथारंभो वर्तसेऽत्र क्रतुम्मुखः । दासीपुत्रः स्वजनकमविज्ञाय यथापरम् ॥ २६
मन्यते पितरं तद्वत्सर्वज्ञातमिदं त्वत । पुण्यार्थं तु प्रवृत्तस्य पापमत्र फलन्तु ॥ २७
वेदमार्गं परित्यक्त्वा वर्तते कुपथे भवान् । अतोऽस्य तव यागस्य महाविघ्नो भविष्यति ॥ २८
भावत्कस्तु विनाशोऽपि भवतस्सत्यमुच्यते । भीषास्मात्सर्वदा वायु र्वात्युदेति च भास्करः ॥ २९
ऊर्ध्वं ज्वलति वह्निश्च नाकं रक्षति वृत्रहा । पञ्चमस्सोऽपि (स्योपि) मृत्युस्तत्कृतकस्याशु विद्रुतः ॥
भीषास्माद्याति देवेषु कोन बिभ्यति तं वद । कालकालस्य देवस्य सर्वदा चित्स्वरूपिणः ॥
तत्तस्मै भक्त्या दक्ष दातव्यं प्रथमं हविः ॥ ३१

इति तस्य वचो निशम्य दक्षः कलुषाविष्टमना ऋषीश्वरस्य ।
निजगाद च वीक्ष्य तं दुराशः पुनरुद्भ्रान्तविलोचनो द्विजेन्द्राः ॥ ३२

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे एकादशोऽध्यायः ॥

---

॥ अथ द्वादशोऽध्यायः ॥

दधीचिमहर्षिणा शिवस्य परं ब्रह्मेति निरूपणम् ॥

ऋषे नाहं प्रयच्छामि रुद्रस्यास्य हविर्वरम् । यज्ञे तद्द्वये दत्वा विष्णवे प्रभविष्णवे ॥ १
पूज्यस्स एव यज्ञेऽस्मिन् मया सर्वजगन्मयः । इति तस्य वचः श्रुत्वा पुनः प्राह ऋषीश्वरः ॥ २
अपूज्यस्य त्वया पूजा क्रियते चेत्प्रजापते । सद्यो मृत्युर्भवेन्नूनमिति शास्त्रविदो विदुः ॥ ३
सर्वज्येष्ठो महादेव शिवया चन्द्रार्धशेखरः । अध्वरेश इति ख्यातो अद्वयो लोकवेदयोः ॥ ४
प्रथमं तस्य पूजाहि कर्तव्या क्रतुषु प्रभोः । इति तस्य वचश्श्रुत्वा दक्षः प्राह पुनर्वचः ॥ ५

ईशानमेव यागेऽस्मिन् दिगीशं प्रथितं भुवि । रुद्रानेकादश तथा पूजयिष्याम्यसंशयम् ॥ ६
तेषु रुद्रेषु सोऽप्येकस्ते पूज्या मया क्रतौ । दधीचिः—एते सर्वं महादेव तुल्या रुद्राः प्रजापते ॥ ७
ध्यायन्ति ये महात्मानश्शिवं परमकारणम् । सारूप्यभाजस्ते सर्वे रुद्राश्च प्रथिता ननु ॥ ८
न तावता क्रतौ पूज्यास्ते रुद्राः परमेशवत् । ब्रह्मादीनामपि वरा भवन्त्येते न संशयः ॥ ९
तथापि ते महादेवभक्ताः पूर्वं पदेच्छया । स्वपदानि च सम्प्राप्ता नार्हन्त्येते हविर्वरम् ॥ १०
भागातु पारमेशं तदन्तुं वा तावकेऽध्वरे । एवं तपोभिर्देवेशः प्रसन्नः पूर्वमीश्वरः ॥ ११
ईशाने परिकल्प्याशु दिगीशं निजरूपिणम् । दिक्पालभावे रुद्रांस्तु व्यवस्थाप्य सुरेषु तान् ॥ १२
रक्षस्वनिशमाचन्द्रतारं स्वस्वपदमीश्वरः । सार्कं सुरास्त्रयस्त्रिंशत्कोटिकास्तैर्मिता खलु ॥ १३
भात्येषामधिकारोऽपि गृहीतु शाङ्करश्च तत् । तस्माद्दक्ष महादेवं यज्ञ यज्ञेश्वरं परम् ॥ १४
स एव भगवानीशः स्वर्गाभीष्टं प्रदास्यति । इत्युक्तिमस्य संश्रुत्य पुनः प्राह सुराधमान् ॥ १५
क्षये किमर्थं भवता महान्यत्नोऽस्तु भूयते । आवोतज्ञानमर्मेण यज्ञस्य हविरीरितम् ॥ १६
तस्य रुद्रं यागेऽस्मिन् पूजयिष्यामि कश्चन । सर्वेषामपि रुद्राणां तारतम्यं न विद्यते ॥ १७
इच्छया मम तेष्वेको मत्पूजार्हो न चापरः । इत्युक्तिमस्य श्रुत्वाऽयं दधीचिः प्राह तत्त्ववित् ॥ १८
एकोऽपि रुद्रनामैदं जगाते तद्वच षण्मुखे । उपरेऽपि सर्वसन्तापकारके प्रथित ननु ॥ १९
सारूप्यभाक्षु भूतेषु गणेष्वपि च वर्तते । पातालनामधेयाभे कालाग्निरिति यश्श्रुतः ॥ २०
तस्मिंश्च हाटकेशेऽपि कूश्माण्डेऽपि प्रवर्तते । द्रव्य (हव्यं) गृहीत्वा देवानां यतः यात्यग्निः पावकः ॥
अनुद्रुत स्तदा तैस्तु भीतोऽरोदीद्भृशं सुरैः । रोदनाद्रुद्रनामा च वर्तते ॥ २२
परब्रह्मणि सर्वेशे महादेवे सदाशिवे । नीलग्रीवे ज्ञानानन्द बोधदुग्धाम्बुधौ शिवे ॥ २३
दयार्द्रायत्तपापानां भक्तानां दयया ह्यसौ । वर्तते योगरूढिभ्यां तन्नामैदं सुपावने ॥ २४
तस्माद्दक्ष वृथा मोहं मुक्त्वा त्वं परमेश्वरम् । यज्ञ यज्ञेश्वरं साक्षात्सर्वानुकम्प्या महेश्वरम् ॥ २५
दक्षः—त्रिषु मूर्तिषु रुद्रोऽयमेकस्संहारकारकः । क्रियेते ब्रह्मविष्णुभ्यां ताभ्यां सृष्टिस्थिती ननु ॥ २६
महत्तुरत्वैश्वर्यं कथमस्य भवेदिदम् । मोहात्त्वमेव तं सर्वकर्तारं वदसि ध्रुवम् ॥ २७
एवं वदन्तं विप्रेन्द्राः पापिष्ठं प्राह तापसः । शृणु दक्ष महामोहं मुक्त्वा त्वं प्राज्ञचेतसा ॥ २८
शान्तमूर्तिर्महादेवः स्वस्त्यानन्दगुणः स्मृतः । नास्ति तस्य शरीरेऽत्र मुक्त्वा चिच्छक्तिमव्ययाम् ॥ २९
स एव ब्रह्मविष्ण्वादीनुत्पाद्य जनकस्स्वयम् । सृष्टिस्थित्यादि कार्याणि कर्तृनेतान्विधाय च ॥ ३०
नीदमागेषु सर्वेषु शायनं न हि तैरपि । प्रेरयत्यनिशं सर्वान् कालचक्रस्थितानमून् ॥ ३१
हत्वा कालेन तानेतान् ब्रह्मविष्णुमुखान् सुरान् । लीलयाथ पुनस्सृष्ट्वा स्वकर्माणि विधाप्य च ॥ ३२
पेशान्व्यवस्थापयामास सपरब्रह्ममहेश्वरः । तथा विभूतिरुद्राक्षाण्यनुधारयति प्रभुः ॥ ३३
पञ्चाक्षरं महामन्त्रं पञ्चब्रह्मस्वरूपकम् । उपदिश्य महादेवो रक्षत्यनिशमव्ययः ॥ ३४
मोहितांस्तु पुनर्दृष्ट्वा विनिगृह्णाति शंकरः । नकारयोऽन्यैस्सुरैर्वस्तुसंहारः कर्तुमीश्वरात् ॥ ३५
करोति तं सततदाभूद्भद्ररूपी जगद्गुरुः । अतस्सृष्टिस्थितिध्वंसतिरोभावप्रसादयो विभोः ॥ ३६
परमेशान्महादेवात् सत्यज्ञानस्वरूपिणः । एवमेव पुरा केचिद्देवाः प्राप्तसंशयाः ॥ ३७
मेरुं गत्वा विधातारं दृष्ट्वा तत्र प्रजापते । स्तुत्वा ते विविधैः स्तोत्रैः पप्रच्छुर्विनयानताः ॥ ३८
मुरेशं भगवन्ब्रूहि स्वसंशयापनोदाय चेतसाम् । परब्रह्म परञ्ज्योतिः कोऽत्र देवो भवेदिति ॥ ३९

तेषां तद्वचनं श्रुत्वा ब्रह्मा ध्यात्वा क्षणं तदा । हृत्पुण्डरीकमध्यस्थं नीलग्रीवं त्रिलोचनम् ॥ ४०
चन्द्रार्धभूषणं सौम्यं सच्चिदानन्दविग्रहम् । कृष्णपिङ्गलमीशानं ऋतं सत्यं परात्परम् ॥ ४१
आनन्दाश्रुकणान् सिञ्चन् हर्षगद्गदवाग्ययम् । ईशानस्सर्वविद्यानामीश्वरो जगतां प्रभुः ॥ ४२
ब्रह्मणोऽधिपतिं स्वयंभु ब्रह्माधिपतिरव्ययः । सदाशिवः परंज्योतिरोङ्कारनिलयो महान् ॥ ४३
स एव शंकरश्शंभुः परं ब्रह्म न चेतरः । सत्यं सत्यं पुनस्सत्यमुद्धृत्य भुजमुच्यते ॥ ४४
ऋतं सत्यं परंब्रह्म पुमांसं कृष्णपिङ्गलम् । ऊर्ध्वरेतसमेकं विश्वाकारं महेश्वरम् ॥ ४५
नमस्कृत्यैव ते वेदा वदन्तीशं महाभयात् । स एव तस्मात्सर्वेशश्शाश्वतं मयोच्यते ॥ ४६
तत्समो नास्ति लोकेषु न वरो नापरः क्वचित् । सर्वज्यायानणीयांश्च स्तब्धो वृक्ष इवाचलः ॥ ४७
दिवि तिष्ठति सर्वात्मा तेन पूर्णमिदं जगत् । यस्माद्वाचो निवर्तन्ते अप्राप्य मनसा सह ॥ ४८
आनन्दमस्य यो वेत्ति न भयं तस्य कुत्रचित् । अद्यापि ब्रह्मविष्णुभ्यां न दृष्टोऽयं महेश्वरः ॥ ४९
पशूनां पतिरीशोऽयं ब्रह्माद्याः पशवः स्मृताः । करुणामूर्तिरतुलो भक्तानामभयङ्करः ॥ ५०
सर्वैश्वर्येण संपन्न ईशस्सुराकाशमध्यगः । बहुना किं परं ब्रह्म स एव ऋषिसत्तमाः ॥ ५१
इति धातृवचः श्रुत्वा ते सर्वे मुनिसत्तमाः । त्यक्तमोहा महादेवं परं ब्रह्म सनातनम् ॥ ५२
ज्ञात्वा प्रणम्य धातारं तुष्टुवुश्च विविधैः स्तवैः । धृतत्रिपुण्ड्ररुद्राक्षमालाभरणभूषिताः ॥ ५३
वरपञ्चाक्षरीमन्त्रजपतत्परमानसाः । कैवल्यमापुस्सर्वे शिवभक्ताः प्रजापते ॥ ५४
ततस्सभगवानीशः परमात्मा शिवः स्वयम् । नान्योऽतोऽस्ति महादेवाद्ब्रह्माधीशः परात्परः ॥ ५५
इति वेदान्तवाक्यानां निष्ठा काष्ठा महेश्वरे । पतिस्सएव भगवांस्त्वदन्ये पशवः स्मृताः ॥ ५६
निश्चितं ब्रह्मणा पूर्वमेवं वेदानुसारतः । त्वञ्च पूर्वं वचः श्रुत्वा ब्रह्मणस्त्वत्पुरीदृशम् ॥ ५७
अवाप्य भक्तिं देवेशे तपस्तप्त्वा सुदुश्चरम् । आसदसीश्वराद्दक्ष परमैश्वर्यमीदृशम् ॥ ५८
ब्रह्मणस्त्वधिकत्वं च विष्णोर्दानवमर्दनम् । स्वर्गाधिपत्यमिन्द्रस्य शिवपूजाफलं खलु ॥ ५९
मायया मोहितो नूनं त्वमासन्नमृतिर्यतः । ब्रह्मणा विष्णुना वापि तस्य माया दुरत्यया ॥ ६०
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । न बाधते तान् सा घोरा महात्मानशिवाश्रितान् ॥ ६१
अत एव भवानद्य किञ्चिद्वा न सात्यहो । महामोहवशादेते ब्रह्मविष्ण्वादयस्सुराः ॥ ६२
यातास्तेऽन्तिकं प्राप्य सर्वेऽपि हविराशया । बहुना किं दुराचार यदीच्छसि परं हितम् ॥ ६३
आह्वयेशं महादेवं हविर्भिः प्रीणयाशुना । सर्वात्मा स महादेवः परं ब्रह्म न चेतरः ॥ ६४
हितमिच्छन्नहं दक्ष तथेत्यभयदं ध्रुवम् । एवमुक्त्वा ऋषिवरो मौनमास्थाय तिष्ठति ॥ ६५

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे द्वादशोऽध्यायः

---

॥ अथ त्रयोदशोऽध्यायः ॥
श्री शिवेन दारुकावनप्रवेशः ॥

विहस्य दक्षः पापिष्ठः पुनः प्राह वचो द्विजाः । परमात्मा कथं रुद्रः परं ब्रह्म कथं मुने ॥ १
यदि वायं परं ब्रह्म कथमेष दिगम्बरः । कथं बिभर्ति शूलं वा कपालं चातिगर्हितम् ॥ २
मुक्तलज्जः कथं वीरणां भिक्षामटति निर्भयः । कर्कशं व्याघ्रचर्मापि कथं धत्ते पिनाकधृक् ॥ ३

मृगं वा परशुं घोरं पाणिभ्यां वहते खलु । आशीविषैः महाघोरैः स्वसर्वं वेष्टित विग्रहः ॥ ४
भूतसेनाभि रनिशं भीताभिः परितो वृतः । मूर्ध्ना बिभर्ति सततं शिरोमुण्डं शुचिस्मितम् ॥ ५
धत्ते डमरुकञ्चापि महारावविभीषणम् । अपस्मारमधः कृत्वा पादस्याधापि वर्तते ॥ ६
धृत्वा करतले वह्निं नृत्यते खलु भीषणम् । निष्ठुरं गजचर्मापि ध्रियते किं परात्मना ॥ ७
वाराहं दंष्ट्रमुत्पाट्य कथं ब्रह्म बिभर्ति तम् । ध्रियतेऽनेन घोरेण कमठास्थि सुनिन्दितम् ॥ ८
अपिवरकालकूटंच विषन्तु (विषम) श्लेष्मापुरा । भिक्षामटति लोकेषु सर्वेष्वपि दुराशया ॥ ९
वृद्धिलं वृषभं वृद्धमारोहति विगर्हितम् । मुण्डमालाभिरन्याभिस्सर्वदा परिवेष्टितः ॥ १०
अशुचीनि सर्वास्थीनि धत्तेऽङ्गे कुसुमं यथा । यज्ञोपवीतमप्यापि शिरोरुहमयं किल ॥ ११
शूलाग्रे प्रेतमनिशं प्रोतं कृत्वा विभीषणम् । श्वशानभस्मभिर्गात्रं मुखल्प्य सततोद्यमः ॥ १२
नन्नृते स महाटोपं कृत्या कृत्या मदेन सः । संहर्ता सर्वभूतानां विष्टुरो बहुरूपवान् ॥ १३
कामान्धीकृत चक्षुस्सञ्छिरसा वहते स्त्रियम् । पक्कां परामपि सदा पार्श्वे लोकेषु विश्रुतः ॥ १४
सकुटुम्बी गृहस्थोऽयं पुत्रधान्यधनवर्जितः । तमोमयगुणो घोरे स्वसर्वेषामपकारकः ॥ १५
कथमेतादृशो रुद्रः परं ब्रह्म श्रुतीश्वर । एवमुक्तवन्तं तं कोपा दधीचिं वीक्ष्य तापसः ॥ १६
न हि संभाषणं युक्तं त्वयैवानेन पापिना । अवलोकयितुञ्चास्य न युक्तं मुखमीदृशम् ॥ १७
महामोहवशात्पापी सभायामेवमुक्तवान् । अनुकल्पोत्तमेतस्य न युक्तं गन्तुमर्हसि ॥ १८
इति निश्चित्य मनसा माहेशं तापसेश्वरः । महामोहवशादस्य विवरण परमात्मनः ॥ १९
अमूनि सुचरित्राणि दूषणत्वेन जल्पसि । एतानि किल जानासि चरितानि महेशितुः ॥ २०
अन्तर्यामी स सर्वेषां सर्वात्मा च महेश्वरः । न शक्यतेऽस्य केनापि स्वरूपं द्रष्टुमद्भुतम् ॥ २१
सर्वलोकोपकाराय श्रीमत्कैलासपर्वते । तथा विराजते शंभुर्ज्ञानमूर्ति र्वेदाकृतिः ॥ २२
स्थिराश्च सकलान्वेदाननुगृह्णाति देवपः । दिगंबरादि चरितं कारणादस्य नान्यथा ॥ २३
शृणु दक्ष दुराचार संप्राप्तज्ञानलोचनः । पुरा केचिन्महाभागा ऋषयो दारुकावने ॥ २४
भक्तिहीना महादेवे कर्मठा दुष्टचेतसः । न तपोव्यतिरेकेण देवता काचिदस्ति हि ॥ २५
न कर्मैव विना देवः फलं कश्चिद्ददाति हि । फलं ददाति सर्वेषां तत्तत्कर्माणि सत्यतः ॥ २६
न कर्मणा विना देवो नास्त्यन्यः फलदायकः । भोगोऽपि कर्मणा जन्तो रपवर्गोऽपि तेनहि ॥ २७
इत्यादिकुकथाः कृत्वा तस्युस्तत्वा चिरादमी । सर्वेतान्पापिनो ब्रह्म विष्णुपूर्वा सुरोत्तमाः ॥ २८
शात्वैषां शङ्करे भक्तिर्न भविष्यत्यपस्तः । पापोपहतचित्तानां शिवे भक्तिर्न जायते ॥ २९
शिक्षितुञ्चासमर्थास्ते शापभीत्या प्रजापते । व्यजिज्ञपन्महादेव मिदं सर्वं तदा सुराः ॥ ३०
श्रुत्वैतदखिलं शंभुः प्रेषयामास तांस्तदा । पुनः कालेन महता शङ्करो लोकशंकरः ॥ ३१
ससार विष्णुं तान्सर्वान्व्यामोहयितुमीश्वरः । तदाज्ञया हरिस्तूर्णमाससाद शिवान्तिकम् ॥ ३२
तत्पाणिमवलंब्यायं शिवारिंसहासनात्सकाशात् । अवरुह्याशु कैलासं मुक्त्वा परमपावनम् ॥ ३३
विष्णो त्वयाऽत्र मोहिन्या रूपमास्थाय शीघ्रतः । मोहनीया दुराचारा मदाज्ञावर्तिनाऽधुना ॥ ३४
इत्युक्त्वा स महादेवो दिगंबरतया तदा । इच्छाज्ञानक्रियाज्ञापित स्वरूपं सुलमद्भुतम् ॥ ३५
पराशक्तिस्वरूपञ्च कपालं परमेश्वरः । पादुकेच तिरोधानशक्तिरूपे विचित्रिते ॥ ३६
परिकल्प्याविवेशाशु दारुकावनमीश्वरः । तदानीं मोहिनी शम्भुं वीक्ष्य मोहमवाप्य सा ॥ ३७

अथाचलतामुना भोग शिवेन परमात्मना । ऊर्ध्वरेतास्तदा शम्भु लीलापाङ्गेक्षणामिमाम् ॥ ३८
चारुहार मनोहारि दन्तपङ्क्तिशुचिस्मिताम् । नवविद्रुमसङ्काश प्रकाशाधरपल्लवाम् ॥ ३९
अर्धेन्दु वक्र भ्रूक्षेपक्रिया नीलाब्जलोचनाम् । सुवृत्ताभ्या स्तनाभ्यां च स्तोकनम्रा कृशोदरीम् ॥ ४०
नीलोत्पलसमच्छायरोमराजिविराजिताम् । चाटुवाक्यैकवचना वीक्ष्य मन्दस्मितानन ॥ ४१
कालान्तरे त्वया मेऽस्तु सभोगरससंमोहिनि । अधुना दारुकारण्ये गत्वा [illegible] विमुखानपि ॥ ४२
तापसान्मोहयित्वाऽऽशु पुनरागच्छ शीघ्रत । इत्युक्त्वा प्रेरयामास तां तदा परमेश्वर ॥ ४३
साधु शर्वोपि सुश्रुत्वा तपोवनमनुत्तमम् । विवेश भिक्षवाही सर्वतस्ते यत्र तापसा ॥ ४४
दृष्ट्वैना तापसाः सर्वे लीलामन्थरगामिनीम । इतस्ततश्च परितो वीक्ष्य मुग्धस्मिताननाम् ॥ ४५
हरिणीमिव विभ्रस्तनयना वनमध्यगाम् । कन्दर्पकल्पमायापरकेदाररूपिणीम् ॥ ४६
मितव्यक्तकलापाणिपल्लवा लीलया मुहु । पादाङ्गदकलाराव बोधयन्ती मनोभवम् ॥ ४७
पीडिता कामबाणेन तापसास्ते प्रजापते । नियमान् संपरित्यज्य सर्वेऽपि गलितेन्द्रिया ॥ ४८
परिवृत्य विकारेण तामेता स्तत्तथासत । उन्मेषयोऽप्यक्षय बहुधा वर्णयन्त्या वराङ्गनाम् ॥ ४९
तस्थुर्मोहपरास्सर्वे कथालाप यथेच्छया । तदानीं स महादेवो तद्दीक्षामागतो युवा ॥ ५०
कन्दर्पकोटिसंकाश शरीरो भिक्षुकाकृति । अटतिस्म तदा भिक्षा पठन्वेदवच क्वचित् ॥ ५१
वीणातन्त्रीं समुत्पीड्य क्वचिद्गायति सुस्वरम् । शिवागमान् पठित्वापि भैक्षं गृह्णाति कुत्रचित् ॥
शिवसंकीर्तनं कृत्वा कुत्रचिल्लीलया शिव ॥ ५२

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे त्रयोदशोऽध्याय ॥

---

॥ अथ चतुर्दशोऽध्याय ॥

ईश्वरेण दारुकावने भिक्षाटनादिकम् ॥

एव विलासमार्गेण भिक्षामटति शङ्करे । तद्वामपूर्वदर्शीका ऋषिपत्न्यो महेश्वरम् ॥ १
युवान सुन्दराकार वीक्ष्य कामवशं गता । स्रस्ताभरणनीवया प्रोच्छूनसद्वीचिलम्बना ॥ २
स्तनस्तना कण्टकित शरीरावयवा भृशम् । श्लथधम्मिल्लनिचया धाङ्गुलाकपटायना ॥ ३
भिक्षाप्रदानव्याजेन भिक्षुक तमुपाययु । तदानीं घृतगर्भास्ता पुत्राश्चाजीजनन् क्षणात् ॥ ४
शिवाज्ञया शिवं सर्वे प्रणम्य विनयेन ते । तस्थुस्तानात्मजान्वीक्ष्य सन्तोषेणाह भिक्षुक ॥ ५
स्थात्वा मानम सर्वेऽपि यूय पुत्र मद्याज्ञया । तप कुरुत सुमहत् प्रेरयित्वैवमात्मवान् ॥ ६
चचाल ऋषिपत्नीभि रनुयातोगिरीश्वर । मोहिन्यपि तदा तत्र ऋषिभि परितो वृता ॥ ७
समापयौ शिवस्थाने सर्वावयवपेशला । ऋषय स्वस्त्रियो दृष्ट्वा तत्र कामवशाकुला ॥ ८
भिक्षुकस्तिलयपर्याये समागत्यात्र मत्प्रिया । मायया मोहयामास मन्त्री मन्त्रौषधैरिव ॥ ९
येयाऽस्मान्मोहयामास मोहिनी वरवर्णिनी । स तु नारायणो नून तथा विलय वराहि ॥ १०
आरवैश भातदस्तर ते ऋषय कोपविह्वला । अस्माकं व्रतभङ्गेन परिक्लिश्नायते यदि ॥ ११
मायाविषेण तत्पाप प्रभवति न संशय । पतिव्रतात्वमेतासा स्त्रीणा भर्ता हि दुर्लभम् ॥ १२
सर्वलोकेषु विषयातमवशारसमभूव हि । इत्यालोच्यान्तरैवैते ऋषय स्वकुटुम्बिनी ॥ [illegible]
बहुधापि समाहूय यूय गच्छत मद्गृहान् । प्रत्यूचुर्धुर्वार्ते ते तत्रा दस तपोधना ॥ १४

तेषां तद्वचनं श्रुत्वा स्त्रियस्सर्वा दिगंबराः । शिवानुधावनं मुक्त्वा विविशुः स्वगृहान्मुः ॥ १५
शिवाज्ञयैव परमा दक्ष नार्यः क्षणादहो । निजरूपं समादाय विष्णुश्शंभुं प्रणम्य च ॥ १६
तस्थे स्तुतिपदैः स्तुत्वा बद्धाञ्जलिपुटो भयात् । तदा ब्रह्मादयो देवा स्समागत्य महेश्वरम् ॥ १७
प्रणम्य तुष्टुवुर्भक्त्या गृहीतनिजविग्रहम् । शिवं परमकल्याणं नीलग्रीवं परात्परम् ॥ १८
तदा तं देवमतुलं दृष्ट्वा ते ऋषयः क्रुधा । यस्मादेवस्त्रकारायमस्माकमयशो महत् ॥ १९
तपोमहिम्ना वध्योऽयमस्माभिरिह दुष्क्रियः । इति निश्चित्य ते सर्वे चक्रुः कर्माभिचारकम् ॥ २०
तदा व्याघ्रो बभूवात्र घोरः परशुरेव च । मृगसर्पौ च भूतानि भीषणानि बहून्यपि ॥ २१
शुचिस्मितं शिरोमुण्डमपस्मारश्च भीषणः । महाराविरट्टहासैः परुषैर्वचनैरपि ॥ २२
सर्वकंपिरे जनास्सर्वे सर्वेलोकस्थिता अपि । तदा ब्रह्मादयो देवाश्शिवस्य परमात्मनः ॥ २३
पृष्ठभागं गतास्सर्वे भीतभीता भृशं पत । शिवस्तदैवामाटोपयुतात्तत्र विभीषणात् ॥ २४
श्रुत्वा गमनमेतेषां तस्थे शान्त्या निजान्तरे । तदन्तरे शिवं व्याघ्रो भर्त्संयन् कुटिलाननः ॥ २५
हन्तुकामोऽन्तिकं प्राप विस्तार्योर्ध्वं करं क्रुधा । गृहीत्वा पादमेतस्य करेणास्फाल्य निष्ठुरम् ॥ २६
हत्वा त्वचं समादाय वस्त्रवद्विदधे शिवः । ततः परशुमायान्तमायुधं परिकल्प्य सः ॥ २७
महाघोरं महानादं गृहीत्वा पाणिना मृगम् । तिष्ठ मत्कर्णसविधे शब्दं कृत्वा सदेति तम् ॥ २८
स्थापयामास विश्वात्मा सतामर्त्त प्रजापते । समायान्तं पुनस्सर्पं महानादेन भीषणम् ॥ २९
कल्पयामास बाहुरूपं सर्वाभरणभूषितः । ततो भूतानि सर्वाणि महाघोराणि शङ्करः ॥ ३०
साट्टहासानि बलवान् स्वसेनाः परिकल्प्य च । शिरोमुण्डं दधौ मूर्ध्नि शुचिस्मितमुखश्शिवः ॥ [illegible]
अपस्मारमपि क्रूरं पादस्याधश्चकार हि । एवं व्यर्थतया तेषु गतेषु ऋषयः क्रुधा ॥ ३२
अग्निं संप्रेषयामासुर्हन्तुं तं परमेश्वरम् । बभार पाणावायान्तं कालानलसमप्रभम् ॥ ३३
ततो मन्त्रान्महाघोरान् हन्तुं तं प्रैषयञ्छिवम् । गृहङ्गमकाकारं परिकल्प्य तपोबलात् ॥ ३४
तं च घोरं महानादं दधौ हस्ते पिनाकधृक् । विफलेष्वेवमेतेषु ऋषयः क्रोधविह्वलाः ॥ ३५
शेपुस्तं परमेशानं सर्वे दक्ष प्रजापते । शापाश्च तेषां देवेशे व्यर्थतामगमं स्तदा ॥ ३६
ज्वलद्वह्निमुखे यद्वत्तूलराशिर्महानपि । तदेतत्सर्वमालोक्य भीतभीतास्तपोधनाः ॥ ३७
व्यर्थानि मन्त्रवीर्याण्यासन् क्रियास्सर्वास्समन्त्रकाः । अस्मिन् पुरुषधौरेये पुंसामसतिमानुषाः ॥ ३८
इति चिन्तामवाप्यैते, तस्थु र्म्लानताननाः । तदानीं स महादेवः स्मयमानमुखांबुजः ॥ ३९
महिमानं न जानन्ति ममैषामिति तापसाः । इति स्मृत्वा ननर्तायं ताण्डवं नटनं भृशम् ॥ ४०
तस्य तं नटनं दृष्ट्वा सर्वे ते भयकंपिताः । बद्धमुष्ठा महाभीता निपेतुर्नमिताननाः ॥ ४१
शिवस्तदा कृपां चक्रे सर्वेषु करुणाकरः । समुत्थाय ततस्सर्वे प्राप्य प्रान्तं प्रणम्य तम् ॥ ४२
जय देव महादेव क्षमस्व करुणाकर । अपराधं शिवासार्धं रक्ष रक्षान्तकान्तक ॥ ४३
इति स्तुत्वा स्थितानेतान् बद्धपाणीन्महेश्वरः । प्रोवाच करुणामूर्तिः र्बोधयैतान्वचनं तदा ॥ ४४
एतावत्कालपर्यन्तमृषयो यूयमीश्वरम् । मामविज्ञाय दुर्मार्गमवष्टभ्यातिमोहिताः ॥ ४५
अतिष्ठन् किल युष्माभिरित ऊर्ध्वं मदाज्ञया । स्थातव्यं वैदिके मार्गे भसरुद्राक्षधारिभिः ॥ ४६
यतध्वं यूयमनिशं मामेवानन्यभावनाः । प्रेषयित्वा कृपांभोधिरेवमेतानृषीश्वरान् ॥ ४७

कैलासं प्राप तरसा नानाश्चर्यसमन्वितम् । तत्र विष्णुमुखान् देवान् प्रेषयित्वा स्वयं शिवः ॥
शिवया सहितो देव्या क्रीडंस्तस्थौ प्रजापते ॥ ५८

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखंडे
दक्षकाण्डे चतुर्दशोऽध्यायः ॥

---

॥ अथ पञ्चदशोऽध्यायः ॥

गजासुरवधः ॥

दिगंबरादिचरितं श्रुत्वपर्यन्तमद्भुतम् । शिवस्यानन्यतुल्यस्य भूयोऽप्रष्टुमिच्छतः ॥ १
मयोक्तं लाघवाभेन दक्षान्यत्र यथोमिते । शृणुष्वावहितो भूत्वा विगतैना भविष्यसि ॥ २
पुरा गजासुरो घोरस्तपस्तप्त्वाऽपि निष्ठुरः । प्रीणयित्वा विधातारं वरं वव्रे प्रजापते ॥ ३
अवध्यत्वं सुरैर्दैत्यैः कश्चहीनं शिवं विना । सुबहूनि तथायूंषि बलं वीर्यं पराक्रमम् ॥ ४
एवमादीनि चान्यानि प्रदत्तानि स्वयंभुवा । ततो लब्धवरो दैत्यो बबाधे सकलं जगत् ॥ ५
जित्वा ब्रह्मादि देवांश्च रणमध्ये शतावधम् । हत्वा ऋषीन् सुरांश्चापि सुबहून्यप्येकदतः ॥ ६
इत्थं प्रतिदिनं तस्थे बाधयन् सकलञ्जगत् । ततः कदाचिदमरनायकं पक्षमेदकम् ॥ ७
जित्वा रणे द्रावयित्वा गजमभ्रमुवल्लभम् । गृहीत्वा पाणिना बालं भ्रामयित्वा समन्ततः ॥ ८
क्षेपयामास दुष्टात्मा सुदूरं मूर्छितं गजम् । दिशामधीशानन्यांश्च द्रावयामास पीडयन् ॥ ९
यक्षानपि तदा हत्वा भूलोकनिवासान् परान् । हन्तुमद्रावयद्घोरः पुनः काश्चित्परीश्वरान् ॥ १०
भीतास्ते तापसाः काशीं समागत्याश्च संभ्रमैः । ऋषिभिर्मिलिता गत्वा मणिकर्ण्यां ततः पुनः ॥ ११
प्रविश्य विश्वनाथस्य परमंधाम चाद्भुतम् । तत्रत्यैरपि देवस्य परिचर्यारतैर्जनैः ॥ १२
विश्वनाथं प्रणम्यैते तस्थुस्तत्र भयान्विताः । तदानीमागतस्तत्र त्वरया [illegible] गजासुरः ॥ १३
द्वारि स्थित्वा महारावं चकाराति विभीषणम् । तच्छ्रुत्वा तपसां वर्या भीतभीता महेश्वरम् ॥ १४
समालिङ्ग्यैव सर्वेऽपि मुमुहुर्गतचेतनाः । तत्क्षणेन पुनः पापी तीर्त्वा द्वारं शिवान्तिकम् ॥ १५
हन्तुकामस्तदा सर्वानपि दक्ष प्रजापते । ततस्तु भगवानीश स्सर्वेषामालिंग्य स्वयम् ॥ १६
आविरासीदनर्कार्क प्रभमास्थाय विग्रहम् । तर्जयंस्तं महानादैः घोरमेनं महेश्वरः ॥ १७
अनेककालमखिले दधुतादशब्दा महेशितुः । स तु पापी शिवं ज्ञात्वा क्षणद्धीरमपि स्थिरम् ॥ १८
युयुधे तं महामोहात्परमेशं गजासुरः । ताडयामास पादेन शिरस्यस्य दुरात्मनः ॥ १९
महाबलो महाधारो मद्वेपुरस्त महेश्वरः । स पपात महीपृष्ठे तत्र दैत्याधमो द्रुतम् ॥ २०
रुरोद स महारावो रुधिराप्लुतविग्रहः । त्वचमग्राह देवोऽस्य तदानीं निष्ठुरं शिवाम् ॥ २१
श्रुत्वाऽस्य रोदनारावं भयमाप शिवाप्यहो । तदद्भुतं महेशस्य विग्रहं वीक्षितुं तदा ॥ २२
सर्वेषामपि देवानां लोचनानि प्रजापते । कुण्ठीभावं गतान्याशु सूर्यकोटि समप्रभम् ॥ २३
त्वचावकुण्ठिते देवे गजस्यास्य दुरात्मनः । लोचनानि च सर्वेषां तदा शक्यानि वीक्षितुम् ॥ २४
परित्यक्तभया स्सर्वे ददृशुस्तं महेश्वरम् । प्रमेमुश्च महाभक्त्या कृत्तिवाससमीश्वरम् ॥ २५
तपोधनाश्च ते सर्वे गतमोहा महेश्वरम् । ददृशुः परमज्योति र्यथा दैवस्य केवलम् ॥ २६

हतोऽयममरेशेन शङ्करेणार्तिहारिणा । इति निश्चित्य सर्वे ते तुष्टुवुः परमेश्वरम् ॥ २७
ब्रह्मविष्णुमुखैस्सार्धं परित्यक्तभया मुदा । जय शम्भो महादेव प्रणतार्तिप्रभञ्जन ॥ २८
समस्तजगतां नाथ सच्चिदानन्दविग्रह । गजचर्माम्बरं त्वां ये वर्णयन्ति बुधोत्तमाः ॥ २९
मा भवन्तु भयं तेषां यस्मात्कस्मादितः परम् । भवन्तु पूज्यास्सर्वत्र सर्वलोकैः नमस्कृताः ॥ ३०
तथेत्यन्तर्हिते देवे दत्वा वरमनुत्तमम् । ब्रह्मविष्ण्वादयस्तुष्टिमवापुः परमां तदा ॥ ३१
गजासुरं महाघोरं सदा देवर्षिबाधकम् । हत्वा ररक्ष सकलांस्त्वचं चास्यातिकर्कशाम् ॥ ३२
प्रख्यापनाय सर्वेषां दधौ विश्वाधिकद्विषः । न च तद्भूषणायास्य भूषणायैव केवलम् ॥ ३३

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे पञ्चदशोऽध्यायः ॥

---

॥ अथ षोडशोऽध्यायः ॥

अमृतमथनं कालकूट विषोद्भवश्च ॥

बिभर्ति देवो दंष्ट्रां तामिश्शुर्के यत्कथापुरा । ब्रवीम्येनां कथां तुभ्यं शृणु दक्ष यथातथः ॥ १
हिरण्याक्षोऽसुरो घोरो गृहीत्वा पृथिवीमिमाम् । स जगामाशु पातालं दानवो घोरकर्मकृत् ॥ २
नासिकाया तदा विष्णु र्ब्रह्मणो निरगात्क्रुधा । वाराहं वपुरास्थाय हन्तुकामोऽसुराधमम् ॥ ३
तत्र गत्वा हिरण्याक्षं हत्वा पातालमध्यगम् । स्थापयामास पृथिवीं पूर्ववद्भगवान्स्वकः ॥ ४
ततस्तु तस्य पापस्य रक्तपानेन माधवः । दृप्तो बबाधे नितरां सर्वान् लोकांस्ततोऽधिकम् ॥ ५
ततो देवा महादेवं शरण्यं शरणं गताः । रक्ष देवानिदानीं त्वं विष्णुना दंष्ट्रिरूपिणा । ६
बाध्यमानानहोरात्रं सर्वेषामार्तिहन् प्रभो । इति तेषां वचः श्रुत्वा कृपया चन्द्रशेखरः ॥ ७
हत्वा वराहं तं घोरं दंष्ट्रामुत्पाट्य तस्य च । भस्मकस्मरान् सर्वानापत्प्रणाशकः ॥ ८
तदा तुष्टाव देवेशं गतमोहो हरिश्शिवम् । नमस्तुभ्यं महेशाय भक्तानामिष्टदायिने ॥ ९
संहर्त्रे कालरूपाय लोकोपद्रवकारिणाम् । शङ्कराय नमस्तुभ्यं मंगलाय नमोनमः ॥ १०
दंष्ट्रामिमां महादेव मदीयां सर्वरक्षक । वोढुमर्हसि देवेश मद्दर्पापनयाय भो ॥ ११
दृष्ट्वैनामपि मे भूयो नाशनं भवतीश्वर । इति संप्रार्थितस्तेन विष्णुना परमेश्वरः ॥ १२
तथेति तां बभारासौ सर्वज्ञः करुणाकरः । कूर्मरूपी पुरा विष्णुर्मन्दराख्यमहाद्रिम् ॥ १३
धृत्वा पयोधिममरै र्मन्थामृतकांक्षया । अत्यन्तममृतं तस्मात्तदांभोधे र्मदत्तरम् ॥ १४
तत्राऽन्योन्य म युद्ध देवानामसुरैस्सह । अस्माभिर्मथ्यमानेऽब्धौ संबभूवामृतं ध्रुवम् ॥ १५
तदा कूर्मोऽपि संदृप्तो डोलयामास वारिधिम् । मयैव मथितोंऽभोधिर्महाबलवता ननु ॥ १६
बभूव बाधा लोकानां क्षुब्धे दुग्धाम्बुधौ तदा । अशक्नुवन्तस्तां बाधां पुरस्कृत्य विधिं सुराः ॥ १७
गत्वा कैलासमतुलं महादेवं व्यजिज्ञपन् । तदा तमपि देवोऽयं हत्वा कूर्मं महाबलम् ॥ १८
जग्राह तस्य पृष्ठास्थि महाघोरस्य शंकरः । देवैस्संप्रार्थितो देवो बभारैतत्प्रजापते ॥ १९
रक्षार्थं सर्वलोकानां कालकूटं पपौ शिवः । पुरा सुरासुरैस्सर्वैः कृते युद्धेऽपि दारुणे ॥ २०
केनोपायेन मरणं मस्माकं न भवेदिति । सञ्चिन्त्यैवं विधात्रा ते विष्णोश्चाज्ञामाययुः ॥ २१

श्रुत्वा विष्णुर्वचस्तेषां ध्यात्वोपायं हृदव्ययम् । पीतेऽमृते न मरणमित्युक्त्वा तान् सुरान् हरिः ॥ २२

क्षीराम्भोधिं ममन्थाथ मन्थाने मन्दरे स्थिते । कृत्वा तु वासुकिं योक्त्रं सर्पराजं सुरैस्सह ॥ २३

तदा कलकलारावो महानासीद्भयङ्करः । सर्पस्योच्छ्वासनिश्श्वासैरभवद्धि क्षुभितोऽम्बुधिः ॥ २४

ततस्सर्पमुखाद्घोरं विषमग्नी पपात हि । अनेककोटिवडवानलच्छायं तमोमयम् ॥ २५

क्ष्वेडेनासीदिदं सिन्धुं व्यानशे सर्वतो मुखम् । दुद्रुवुश्च ततो देवा योक्त्रं मुक्त्वाशु वासुकिम् ॥ २६

पलायनपरो विष्णुः पश्चाद्दग्धोऽमुना भृशम् । शक्त्या मुकुन्दो मन्दोऽभूदासीद्गतधृतिस्तथा ॥ २७

मधृतिर्वायुरप्यासीद्वरुणश्चाप्यपोहितः । निर्व्यापारः कुबेरोऽभूदेवमन्येऽपि नाकिनः ॥ २८

विषाग्निदग्धास्सर्वेऽपि हाहेति सुमहारवाः । अरक्ष्यमाणास्सर्वे ते शरण्यं शरणं शिवम् ॥ २९

गन्तुं कैलासमचलं सर्वे दुःखनिवारकम् । प्रापुः किलिकिलारावैस्तु दक्ष प्रजापते ॥ ३०

विषाग्निदग्धसर्वाङ्गो विष्णुः कृष्णोऽभवत्तदा । तत्र द्वाराऽऽलयद्वारि शैलादिं गणनायकम् ॥ ३१

प्रणम्य तस्मै वृत्तान्तं मुमुचुस्सर्वेऽपि दुःखिताः । कृपया तेषु शैलादिरुक्त्वा सर्वं सुरानिमान् ॥ ३२

निरुध्य तत्र स पुनर्ब्रह्मणा विष्णुनापि च । इन्द्राद्यैरपि दिक्पालैः प्रविश्यान्तःपुरं द्रुतम् ॥ ३३

पञ्चमावरणे तत्र व्यवस्थाप्य दिशां पतीन् । पुनरावरणे षष्ठे ब्रह्मविष्णू उभावपि ॥ ३४

सन्निरुध्य शिवायाथ स्वयमन्तःपुरं तदा । गत्वा शिवाय प्रोवाच सुराणामागमं तदा ॥ ३५

शिवाज्ञया पुनर्नन्दी ब्रह्माणं विष्णुमेव च । प्रवेशयामास तदा समोऽन्तःपुरं मुदा ॥ ३६

प्रनिम्नौ ब्रह्मविष्णू तौ प्रणम्य परमेश्वरम् । तथा तुष्टुवतुर्भक्त्या स्तोत्रैर्वेदागमशुभितैः ॥ ३७

तुष्टस्तदा विलोक्यैतौ ब्रह्मविष्णू महेश्वरः । किमेतदधुना विष्णो शुद्धस्फटिकसन्निभ ॥ ३८

विषाग्निदग्धतनुः कृष्णोऽसि नितरामहो । पुण्डरीकेक्षणोऽपि त्वं रक्तनेत्रो विराजसे ॥ ३९

शरीरं तावकं विष्णो रूपं सन्दह्यते तराम् । तप्तकाञ्चनसंकाशो वैवर्ण्यं भजसे विधिः ॥ ४०

इति शम्भोर्वचः श्रुत्वा विष्णुः प्राह महेश्वरम् । अविज्ञाप्य महादेव मथनममृतेच्छया ॥ ४१

ममन्थिम सर्वे स्मरे क्षीराम्भोधिं महेश्वर । तत्र समभवद्घोरं विषं कालानलोपमम् ॥ ४२

तज्ज्वालापुरसर्वाङ्गास्सर्वे देवालयपकः । अरक्ष्यमाणाश्शरणं प्रपन्नास्त्वां सदाशिवम् ॥ ४३

पुरतो धावतो देवाननुयातोऽहमग्रणीः । अस्मच्छरीरमेतत्स्वामिन् दग्धं शम्भो विशेषतः ॥ ४४

घोरेणानेन देवेश विषमीदातिबाध्यते । कृष्णोऽहमधुना शम्भो बाध्यमानः क्षणे क्षणे ॥ ४५

अनन्यशरणान्देवान् भव भिषग्धिक प्रभो । रक्ष रक्ष कृपाम्भोधे नाविलम्बितुमर्हसि ॥ ४६

सर्वेषामन्तरात्मा [illegible] सर्वव्यापी सनातनः । गृहीत्वैव विषं रूपं कल्याणगुणमण्डितम् ॥ ४७

रक्षितुं सर्वलोकांस्त्वं सर्वदात्र विराजसे । इत्युक्त्वा माधवश्शीघ्रं प्रणनाम पुनः पुनः ॥ ४८

इति श्री स्कन्द महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे षोडशोऽध्यायः ॥

---

## ॥ अथ सप्तदशोऽध्यायः ॥

### हालाहल भक्षणम् ॥

बहिः स्थितास्तदा देवा स्सर्वे युगपदेव ते । रक्ष रक्ष महादेव शरणागतवत्सल ॥ १
दह्यमानान्सुरान्सर्वान्विषच्छ्रवमहाग्निना । अनन्य शरणाञ्शंभो त्वामेव शरणं गतान् ॥ २
बहुना किं महादेव रक्ष रक्षेति चुक्रुशुः । तेषां तानार्तवाक्छ्रुत्वा शङ्करः करुणाकरः ॥ ३
किमेतदिति पप्रच्छ ब्रह्माणं वीक्ष्य पावनः । रक्षास्माम् पार्वतीनाथ देवान् दैत्यतपोधनैः ॥ ४
विषाग्निना दह्यमानानतिघोरेण विश्वप । सर्वे सुरासुराश्शंभो बहिरेव तपोधनैः ॥ ५
महाघोरं विषं सोढुं मशक्ता सुराश्शीश्वर । कोऽशक्ति नितरां शिवा स्वामेव शरणं गताः ॥ ६
रक्षा तदाशु कर्तव्या भवता परमेश्वर । इति ब्रह्मवचः श्रुत्वा नन्दिनं वीक्ष्य शंकरः ॥ ७
भ्रूविक्षेपश्चकारासौ कृपया देवनायकः । ज्ञात्वा तदिङ्गितं नन्दी पुनर्गत्वा सुरासुरान् ॥ ८
आनीय स्थानयित्वाऽथ सन्तिकं प्राप शांकरम् । तदा सर्वे महादेवं वीक्ष्य सोमार्धशेखरम् ॥ ९
प्रणेमुर्दण्डवद्भूमौ स्तुत्वा स्तोत्रै रनेककैः । तदानीममरानन्यान्वीक्ष्य गौरी दयावती ॥ १०
कृपाश्चकार रक्षितानिति शंभुं निरीक्ष्य सा । तदा शिवस्समीपस्थं सुन्दरं वीक्ष्य सुन्दरम् ॥ ११
गृहीत्वा विषमेनस्य पुनरागच्छ शीघ्रतः । इत्युक्त्वा प्रेषयामास गणनाथवरं शिवः ॥ १२
शिवाज्ञयाऽयं निर्गत्य करे जग्राह तद्विषम् । एत्य सत्कराब्जेऽस्य कोमले भूह्यत्तदा ॥ १३
सुन्दरस्तद्विषं शंभोर्ददौ हस्ते तदाज्ञया । पाणावस्य महेशस्य कस्तूरी बिन्दुवद्विषम् ॥ १४
संबभूव क्षणादेव तदा दक्ष प्रजापते । ततो देवान्निरीक्ष्यायं भीतभीतान्महेश्वरः ॥ १५
केह किममरा दूरात् क्षेप्तव्यं वा मयाऽथवा । परित्यक्तभया यूयं वदताश्च मदाज्ञया ॥ १६
इत्युवाच महादेवो महाग्रासो जितान्तकः । तस्य तद्वचनं श्रुत्वा ब्रह्मविष्णुपुरोगमाः ॥ १७
भगवन् दूरतः क्षिप्तं पुनरायास्यति क्षणात् । इति नो भीतिरधुना महती परिवर्तते ॥ १८
क्षणेनानेन घोरेण दग्धाहसर्वे जितान्तक । इदमेतत्करे स्वामिन् भवतो भीतिरद्य नः ॥ १९
सर्वज्ञस्त्वं दयासिन्धुस्सर्वरक्षापरायणः । मृत्युञ्जयः शिववीरः कालकालो महेश्वरः ॥ २०
यथोचितं समुद्दीक्ष्य रक्षदेवान् परात्पर । नमो नमस्ते रुद्राय सर्वभूतहितैषिणे ॥ २१
कालकालाय भवते सर्वरक्षाय (भक्षाय) शूलिने । इति स्तुत्वा प्रणेमुस्ते दण्डवत्परमेश्वरम् ॥ २२
शिवस्तदा शिवां वीक्ष्य स्मितवक्त्रांबुजप्रभाम् । पपावेतत्कृपांभोधि . अखण्डानन्द विग्रहः ॥ २३
विषमेतन्महाघोरं मानीलाभं यदा गलम् । दृष्ट्वाप तदा देवास्सर्वेऽप्यञ्जलिपाणयः ॥ २४
देवदेव दयासिन्धो भक्तवत्सल विश्वप । अनन्तमहिमाधार स्वतन्त्रानन्द विग्रह ॥ २५
ब्रह्मक्षत्रञ्च यस्याहुरोदनं ब्रह्मवादिनः । मारकृत्व्यञ्जनं मृत्युं महाग्रासस्य शूलिनः ॥ २६
स्वतन्त्रशक्ते स्तककण्ठे शुद्धस्फटिक सन्निभे । संभवातु विषं घोर मलंकारस्तवाद्भुतः ॥ २७
अलङ्कार भगवन्स्तव कण्ठ यदा विषम् । अलङ्कुर्वन्ति देवश्रीकण्ठ मंगळयतन्तवः ॥ २८
देवानां विपदग्धानामस्माकं भवता प्रभो । विषं पीत्वा कृता रक्षा न च विस्मर्यते तत् ॥ २९
इत्यादिवचनान्येते तदा प्राहुः प्रजापते । तथेति तद्गले शंभुः स्तंभया...

स्वतन्त्रशक्तेरीशस्य महिमा केन वर्ण्यते (गण्यते) । ततो देवास्सुसंतुष्टा स्तुष्टुवुः परमेश्वरम् ॥ ३१
नमो नमस्ते देवेश नीलग्रीवाय शंभवे । पशूनां पतये तुभ्यं देवानां प्राणदायिने ॥ ३२
प्राणेश्वराय रुद्राय नमस्ते कृत्तिवाससे । अद्यप्रभृति लोकोयं भगवन्तं महेश्वरम् ॥ ३३
त्वां विजानातु सततं नीलकण्ठं दयानिधे । स्तोत्रेणानेन सन्तुष्टो भगवान् परमेश्वरः ॥ ३४
मथित्वा यूयममराः क्षीरसंयोधिं मदाज्ञया । पीयूषं मथनोद्भूतं पिबत त्यक्तशंकया ॥ ३५
भविष्यति न संदेहः पीयूषमतुलं क्षणात् । इत्युवाच सुरान्वीक्ष्य दयया परमेश्वरः ॥ ३६
ततो देवास्तु सन्तुष्टाः प्रणम्य गिरिजापतिम् । गत्वा ममन्थुः क्षीराब्धिं लब्ध्वाऽमृतमनुत्तमम् ॥
पपुस्सर्वेऽमृतत्वाय शिवाज्ञापरिचोदिताः ॥ ३७

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे सप्तदशोऽध्यायः ॥

---

॥ अथ अष्टादशोऽध्यायः ॥

ब्रह्मविष्ण्वोः पुरतः शिवाविर्भावः ॥

आख्यानमेतत्कथ्यते ब्रह्माज्ञामिहितं मया । सर्वदेवपरित्राणं विषं पीत्वाऽकरोच्छिवः ॥ १
विस्मापनचरित्रञ्च प्रतिप्रश्नं प्रजापते । मत्तश्शृणु वृथा मोहं परित्यज्याऽप्यधामतः ॥ २
पुरा हरिविधातारौ मेरुपार्श्वस्थितावुभौ । तदा देवाश्च ऋषयः सन्देहाविष्टमानसाः ॥ ३
प्रणम्य तौ समभ्येत्य पप्रच्छुश्च कुतूहलात् । कोदेवस्सर्वदेवानां वरिष्ठो व्यापकः प्रभुः ॥ ४
अन्तर्यामी परञ्ज्योतिः परमात्मा परात्परः । स्रष्टा च सर्वभूतानां पालको हारकस्तथा ॥ ५
इति तेषां वचश्श्रुत्वा ब्रह्मा प्राह वचस्तदा । अहमेव जगत्कर्ता मत्तस्सर्वं विवर्धते ॥ ६
लयमेष्यति मय्येव जगदस्ते मदाज्ञया । इति ब्रुवाणं ब्रह्माणं वीक्ष्य प्राह वचो हरिः ॥ ७
निर्माय त्वामहं पूर्वं रक्षामि विभुराप्तदः । नान्यतोऽस्ति जगत्कर्ता मत्तस्सर्वं हि जायते ॥ ८
जगन्मूलमहं यस्मात्सर्वं विष्णुमयञ्जगत् । अन्योन्यमेवममरौ महामोहवशंगतौ ॥ ९
अहमेव परं ब्रह्म न त्वमित्यूचतुस्तदा । पुनःपुनस्तदेवौ बहुकालं प्रजापते ॥ १०
तदा सर्वेऽपि तत्रस्था भीता जग्मुर्निजालयान् । पुनर्बहुतिथे काले गते प्रणवपूर्वकः ॥ ११
समागत्याह भगवान्वेदतत्त्वार्थबोधकः । हरे विधे वृथा किंवा युवाभ्यां क्रियते कलिः ॥ १२
शिव एव जगत्कर्ता परमात्मा महेश्वरः । विश्वाधिको विश्वमयो रुद्र एव महानृपिः ॥ [illegible]
सर्वैश्वर्येण संपन्नश्शंभुराकाशमध्यगः । अणोरणीयानीशानो महतोऽपि महानयम् ॥ १४
महीनाथनिवा सोऽयमुमया सहितः प्रभुः । दिव्यश्च अनिता ब्रह्मास्तकविष्णोरपि स्वयम् ॥ १५
एवं वेदवचश्श्रुत्वाऽप्येतौ मोहपरायणौ । अगणय्य यथापूर्वञ्चक्रतुः कलहं पुनः ॥ १६
ततः प्रादुरभूद्देवः परमात्मा महेश्वरः । महदहङ्कारवशादेतौ स्थितौ नूनं भविष्यतः ॥ १७
गर्वो मयाऽपनेतव्य स्सुरयोरेतयोरिह । इति कोट्यर्कसंकाशां ज्योतीरूपं शिवस्तदा ॥ १८
दृष्ट्वैतौ तत्परञ्ज्योति व्योम्नि सर्वाङ्गिवारकम् । किमेतदिति भीतौ तौ विचारञ्चापतुर्भृशम् ॥ १९
तदानीमंबया साकं शिवः स्वं रूपमद्भुतम् । दर्शनं प्रददौ शीघ्रं ब्रह्मविष्ण्वोर्महेश्वरः ॥ २०

अथ दृष्ट्वा महादेवमंबिकापतिमव्ययम् । हरिरुत्थाय वेगेन नमस्कृत्वा पुनः पुनः ॥
स्तुत्वा स्तोत्रशतैर्देवं क्षीराब्धिमगमत्स्वयम् ॥ २१

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे अष्टादशोऽध्यायः ॥

---

॥ अथ एकोनविंशोऽध्यायः ॥

भैरवेण ब्रह्मशिरः खण्डनम् ॥

ततो विष्णौ प्रणष्टेऽथ क्षीराब्धिं तरसा भयात् । महामोहवशाद्ब्रह्मा अप्रणम्य महेश्वरम् ॥ १
ऊर्ध्वं पञ्चमेन देवेशं निन्दयामास मूढधीः । तदा सस्मार देवेशो भैरवं कोपविह्वलः ॥ २
आविरासीत्तदा शीघ्रं भैरवश्शंकरात्तथा । भस्मोद्धूलितसर्वाङ्गो भुजंगकटिसूत्रवान् ॥ ३
शिरोऽस्थीरनिनद्धः कपालावलिभूषितः । बिभ्राणः परमं शूलं पाशं डमरुकं तथा ॥ ४
वृत्तघोरस्फुरन्नेत्रो महाघोरकपालवान् । रक्ताभिर्विंहताभिश्च जटाभिरतिभीषणः ॥ ५
भसितप्रकाशसर्वाङ्गो मन्दस्मितमनोहरः । ब्रह्माण्डान्यखिलान्याशु भक्षितुञ्च परीवृतः ॥ ६
तादृशोऽयं महादेवं प्रणम्य प्रश्रयानतः । कर्तव्यं किं मया स्वामिन्नाज्ञापय जगत्प्रभो ॥ ७
कृपां कुरु मयीश त्वं किङ्करे तव शंकर । इत्युक्तवन्तं तं वीक्ष्य प्राह वाचं महेश्वरः ॥ ८
मन्मायामोहितस्यास्य ब्रह्मणो मद्विनिन्दकम् । छिन्धि शिरस्त्वं देवानां विष्ण्वादीनाञ्च गर्विणाम् ॥ ९
ऋषीणामपि रक्तानि भिक्षाव्याजेन शीघ्रतः । गृहीत्वा पुनरुज्जीव्य मृतानप्यथ भैरव ॥ १०
गत्वा स्वभवने तिष्ठ ब्रह्माण्डोर्ध्वे महाशय । देवतानां मृषीणाञ्च रक्षां कुर्वन्नतन्द्रितः ॥ ११
इति संप्रेषयित्वैनं मन्तर्धिमगमच्छिवः । वृत्तान्तमेतद्विज्ञाय भियारेण स्थितो हरिः ॥ १२
ततस्तु भैरवः कोपाद्ब्रह्मणः पञ्चमं शिरः । चिच्छेद सुमहाटोपः कराग्रेण भीषणः ॥ १३
स पपात महीपृष्ठे ब्रह्मा रक्तस्रवाप्लुतः । मुमोह च क्षणेनाथ रुधिरौघे प्रजापतिः ॥ १४
शोषयित्वाऽस्य रक्तानि भैरवो निशितेक्षणः । पुनरुज्जीवयामास भैरवस्तं कृपादृशा ॥ १५
समुत्थाय ततश्शीघ्रं ब्रह्मा ज्ञात्वाऽस्य वैभवम् । गतमोहः प्रणम्यैनं तुष्टाव भयकंपितः ॥ १६
क्षमस्व मन्तुं देवेश महामूढस्य मे विभो । पुनर्मा भवतु स्वामिन्ममाज्ञानं तथा कृपा ॥ १७
तदर्थं मच्छिरोमुण्डं पात्रीकुरु दयानिधे । करस्थं मत्कपालं ते भिक्षापात्रं भवत्वलम् ॥ १८
अनेनैव कपालेन रक्तभिक्षां गृहाण भो । इत्युक्त्वा प्रणनामायं पुनः पुनरमुं विधिः ॥ १९
तथेति तद्गृहीत्वायं निर्ययौ मेरुपर्वतात् । ततस्ससर्ज भूतानि स्वेच्छया भैरवः क्षणात् ॥ २०
हालाहलं कालवेगं तथाग्निमुखसोमकौ । अन्यानपि बलानीशो भूतसेनापतीनपि ॥ २१
भूतैरनेकैस्सेनेशैर्युतोऽयं कालभैरवः । रक्तभिक्षाच्छलेनायं भूलोकं सञ्चरंस्तदा ॥ २२
काननेषु च सर्वेषु पर्वतेषु महत्स्वपि । पाताळे नागलोके च देवलोके तथैव च ॥ २३
तत्र स्थितानां देवानां मृषीणां गर्विणामयम् । जग्राह तेषां रक्तानि कपालेनैव भैरवः ॥ २४
मृतानपि तदा कांश्चिज्जीवयामास लीलया । अटित्वा सर्वतो भिक्षां विष्णुलोकं समाययौ ॥ २५
तरसा भूतसैन्यानि स्थापयामि तदा भृशम् । आपूर्य विष्णोर्गृहद्वारं विष्वक्सेनगणाश्रितम् ॥ २६

रुरोध तानि गणपो विष्वक्सेनोऽतिनिष्ठुर । तमेन भैरवश्शीघ्र सन्ताड्य च कपोलयो ॥ २७
प्रोतयित्वा स्वशूलाग्रे विष्णोरस्याशमायथौ । तदा सर्वशम विष्णु र्भोगशायी महाभयात् ॥ २८
समुत्थाय प्रणम्यैन श्रीभूमिभ्या सह स्तुवन् । तत प्रोवाच तं विष्णु र्भैरव वीक्ष्य भीषणम् ॥ २९
किमर्थमागतोऽसि त्व भक्तानामभयप्रद । त्वद्दर्शनेनदेवाह कृतार्थोऽस्मि जगद्गुरो ॥ ३०
रक्षमा करुणामूर्ते भवदेकसमाश्रयम् । इत्युक्तवन्त त प्राह भैरवो मधुसूदनम् ॥ ३१
कांक्षित्वा तव रक्तानि शिरसोऽह समागत । भिक्षाव्याजेन तद्देहि शीघ्रमेव हरेऽधुना ॥ ३२
इति तस्य वच श्रुत्वा कृतार्थोऽस्मीति माधव । भित्वा नखेन निटिल रुधिराणि मुमोच ह ॥ ३३
अग्राह तानि सर्वाणि कपालेनैव भैरव । महत्या धारयाऽस्रावा निश्रसाहस्र संख्यया ॥ ३४
पपात पश्चान्नीरक्तो माधवो मोहविह्वल । परिपूर्णं तथाप्येतत्कपाल नार्धमात्रत ॥ ३५
पतितस्तु महाविष्णु महामोहेन वीक्ष्य तम् । श्रीभूमी दु खदु खार्ते देव्यावभ्येत्य शीघ्रत ॥ ३६
मालाप्य पादौ पाणिभ्या भैरवस्य महात्मन । रक्षरक्ष दयाम्भोधे विष्णु त्व भैरवेश्वर ॥ ३७
माङ्गल्यभिक्षा भगवन्नावयोर्देहि शीघ्रत । इति तुष्टुवतुर्देव्यौ सदाशिवन्त महेश्वरम् ॥ ३८
तत प्रसन्नो भगवान् भैरवो वीक्ष्य माधवम् । कृपयोज्जीवयामास करुणामृतसागर ॥ ३९
समुत्थित स्ततो विष्णु र्लब्धसंज्ञोऽस्तवीत्प्रभुम् । स्तुवन्तं त समाश्वास्य कृपया भैरवो हरिम् ॥ ४०
पुन स्वमुखलावण्य निर्ययौ कालभैरव । महत श्चापघोषेण गणानामारवेण च ॥ ४१
पाश्व स भैरव विष्णुर्न्यवाद्भूत्वमागत । प्रणम्यभैरव स्तुत्वा शूलप्रोत स्वक गणम् ॥ ४२
विष्वक्सेन मोचयित्वा स्वावासं प्राप माधव । भैरवोऽपि स्वभवन गणै प्राप महारवै ॥ ४३
शिवाज्ञयाप संहृत्य ब्रह्मविष्णुमुखान्सुरान् । कल्पान्तरे जगत्सर्वं महाकोलाहलारव ॥ ४४
दंष्ट्राकरालवदना शिरोमुण्डमालालङ्कृतविग्रह । दृष्ट्वा कलाटमयनवह्निलेशेन तानिमान् ॥ ४५
तत्स्थलेऽपि तथा गोऽय भैरव पितृकानने । वेद्मान् सर्वान् सारमेयान् परिकल्प्य स्वतन्त्रत ॥ ४६
माद्य तानय भीममिनव् स्ताहद्योगेणे । परीवृत पश्यात्वा परमानन्दनिर्भर ॥ [illegible]
विधत्स्यनुलाकारो भैरवस्तत्र तत्रच । स ग्रामभिक्षा कर्तैतत्कथित ते प्रजापते ॥
अन्यच्चरितं मधुना ब्रवीमि तव शङ्करम् ॥ ४८

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे एकोनविंशोऽध्याय ॥

---

॥ अथ विंशोऽध्याय ॥

॥ धर्मविष्णो र्ईश्वरवृषभ वाहनत्वप्राप्ति ॥

चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते । तावत्येव निशा प्रोक्ता तदहोरात्रसंख्यया ॥ १
शतत्रय षष्ट्यधिक वर्षमेक सुनिश्चितम् । शतसंवत्सरान्तेऽस्य वधमेति तदा विधि ॥ २
दिनमेक तदा विष्णोस्तावती रात्रिरस्य वै । वर्षाण्युत्तराणि त्रिशत दिनान्यस्यैकहायनम् ॥ ३
ततो वर्षशतस्यान्ते वधमेति हरिस्तदा । एव बहुला संहारे विष्णुना प्रलयो महान् ॥ ४
समायाति तमुद्वीक्ष्य धर्मोऽत्यन्त भयान्वित । प्रणम्य वृषभाकारस्तुष्टाव परमेश्वरम् ॥ ५

जय शम्भो महादेव रक्षमां शरणागतम् । महासंहारकालोयमागमिष्यति शीघ्रतः ॥ ६
मुक्त्वा मां संहरेशान तदा सर्वं जगत्प्रभो । इति स्तोत्रशतैः स्तुत्वा प्रार्थयामास शंकरं ॥ ७
ततः प्रसन्नो भगवान् दत्वा तस्य वरं पुनः । वाहनं परिकल्प्यैनं बलं दत्वाऽस्य तादृशम् ॥ ८
नित्यत्वमपि दत्वाऽस्य कृतादिषु युगेषु च । परिकल्प्यच पादोन संचारं तं चतुष्पदम् ॥ ९
प्रीत्या परमया सोऽहं न्यवसामि त्वदात्मनि । सन्निधौ मम सर्वत्र तिष्ठ त्वं सुपावन ॥ १०
मामनाराध्य ये मर्त्याः पुण्यानि सुमहान्त्यपि । समाचरन्ति तान्याशु महापापफलाय वै ॥ ११
मद्भक्तानांच पापानि महापुण्यफलानि वै । भवन्तु धर्म त्वत्प्राहं यस्य भक्तस्य दृढधीः ॥ १२
यदानुग्रह मिच्छामि तदा त्वं वृषरूपभाक् । समागच्छ महासत्त्व ममाशु शिरसा वहन् ॥ १३
इत्यानुक्त्वा महादेवो वाहनं तं विधाय सः । प्रेरयामास तच्छ्रुत्वा विष्णुं स्सर्वजगन्मयः ॥ १४
वृषरूपी महादेवमुवाह त्रिपुरान्तकम् । यदा त्रिपुरसंहारं कृतवान्परमेश्वरः ॥
अत एव महादेवो वृषवाहः प्रजापते ॥ १५

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखंडे
वृषकाण्डे विंशोऽध्यायः ॥

---

॥ अथ एकविंशोऽध्यायः ॥

॥ शिवेन महासंहारकाले भस्मास्थ्यादि धारणम् ॥

अन्यदपिप्रमतुलं महादेवस्य पावनम् । ब्रवीमि शृणु दक्ष त्वमवधानेन केवलम् ॥ १
कालाग्निरुद्रो भगवान् सरुद्रो भैरवोऽपि च । सर्वं कल्पान्तशंभो रावया तौ महाबलौ ॥ २
अवान्तराख्यसंहार स्सतुक्षेप्य प्रजापते । सर्वग्रासो महादेव स्सर्वब्रह्माण्डमखिलं जगत् ॥ ३
सर्वान् लीलावीक्षणेन हासेन ■ परान् क्रुधा । अट्टहासेन नृत्येन स्फालनमनाशिना ॥ ४
हुङ्कारेण ■ हस्तेन पादाघातेन लीलया । नानारुद्र गणैस्साकं संहारं यं चकार सः ॥ ५
■ महाप्रलयो नाम सर्वेषां नाशकारकः । संहर्ता स महादेव स्तदानन्तान् हरीन् विधीन् ॥ ६
इन्द्रादीनपरान् देवांस्तत्तदण्डेषु संस्थितान् । दग्ध्वाकांश्चित्तदा तेषां भस्मानि परमेश्वरः ॥ ७
भस्मालेपपदार्थांगमुद्धूळनविधानतः । बभार मुण्डमालाश्च परेषां स्वेच्छया विभुः ॥ ८
अस्थीनितेषामाकल्पं विलसाम महेश्वरः । यज्ञोपवीतमन्येषां मूर्ध्नाश्चि चकारहि ॥ ९
तथा विष्णून् परान्शूले संविधाय विधीनपि । साट्टहासपरो नृत्यमानन्देन चकारहि ॥ १०
सर्वभूतैकदमन स्सासाच्छिन्नमूर्तिरव्ययः । भक्तिहीना महादेवे ये तदा प्रळये हताः ॥ ११
तदुद्भूतैः पिशाचैश्च परितोऽयं परीवृतः । गाढान्धकारमध्यस्थः केवलो हृष्टमानसः ॥ १२
महाश्मशानवहनमध्ये नृत्यति कुत्रचित् । लीलया तान् पिशाचांश्च हत्वा केवलएव सः ॥ १३
पुनश्च तं व्यतीत्यैतं महाप्रळयमीश्वरः । परानन्दवशेनायं देव्याः पुरतएव सः ॥ १४
विधायच महानृत्तं पश्यन्त्याः केवलं शिवः । ततस्ससर्ज भूतानि सिसृक्षा शक्तिसंयुतः ॥ १५
महाण्डानिच सर्वाणि तत्तल्लोकान्यथा पुरा । तेषु सर्वेषु चाण्डेषु विष्णूनपि विधीन् बहून् ॥ १६
मात्मतोऽपि तथा सर्वान्सुराग्राक्षसानपि । अधिकारश्च सर्वेषामानुगुण्यतया शिवः ॥ १७

दत्वा सदर्हविद्यानामुपदेशञ्चकार स । अत एव महाप्राज्ञ प्रथित परमेश्वर ॥ १८
अस्थिभूषणमाहात्म्यमपि ते वच्म्यहं शृणु । पुरा विष्णुमुखा देवा प्रणम्य गिरिजापतिम् ॥ १९
तपसाऽऽराध्य देवेश प्रार्थयामासुरीश्वरम् । हरशम्भो महादेव विश्वेशामरनायक ॥ २०
महाप्रलयकालोऽयमागमिष्यति विश्वप । व्यतीतानि च जन्मानि बहून्यस्माकमीश्वर ॥ २१
नपुनर्जनने शक्ति स्थिमना सस्तौ प्रभो । तव पादाम्बुजध्यानान्मोक्षो भवतु सस्तुते ॥ २२
अस्मिन्महति संसारे हत्वाऽस्मान् करुणाकर । संगृह्य तेषामस्थीनि चाकल्प परिकल्पय ॥ २३
समादाय तथाऽन्येषां भस्माभ्युद्धूलय प्रभो । तथा हरस्नेहान्मोक्षोऽपि सुलभो न कृपानिधे ॥ २४
या भूता भवता जह्नुकन्या लोके सुपावनी । तस्या यदीयान्यस्थीनि प्रक्षिप्तानि महीतले ॥ २५
तेषामपि महादेव मुक्तिर्भवतिहि प्रभो । तस्मादस्मान् कृपासिन्धो रक्ष संसृतिमध्यगान् ॥ २६
तैरेव प्रार्थितो देवस्तथैव कृपयाऽकरोत् । अतस्सुराणां रक्षार्थं भस्मास्थीनि दधौ विभु ॥ २७
कालकाल स्वयंज्योति परमात्मा महेश्वर । अजरामरणनिर्मुक्त स्वर्वेज्ञानमयविग्रह ॥ २८

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे एकविंशोऽध्याय ॥

---

॥ अथ द्वाविंशोऽध्याय ॥

जलन्धरासुर वध ॥

चरितं देवदेवस्य सहादरादि प्रजापते । मयाभिहितं पुण्यं शृणु चान्यद्वदाम्यहम् ॥ १
पुरा मघवान् कैलासे शिवसेवार्थमागत । सावलेपस्तदा द्वारि शम्भु प्रमथरूपभाक् ॥ २
तस्थे तत्र स्वय स तु वीक्ष्य द्वास्थ पुरन्दर । कोधा महेशसमय पप्रच्छैवमहङ्कृत ॥ ३
अनुक्त्वोत्तरमस्याय क्रुधा समवलोकयत् । त वीक्ष्य वज्री कोपेन मुमोच कुलिश पुन ॥ ४
तस्योरसि पतितेन छिन्नशातलसुनिष्ठे । रेणुनामसमच्छीभाहमहद्धिषाण् बहून् ॥ ५
स्वरूपमाशु जग्राह रौद्र पश्चान्महेश्वर । ज्ञात्वाऽशु वृत्रहा शम्भु प्रणम्य भयकम्पित ॥ ६
क्षमस्व मन्तु देवेश सर्वभूतदयापर । इति स्तोत्रशतै स्तुत्वा प्रसादयदसौ शिवम् ॥ ७
ता प्रसन्नोभगवान्वृत्रारिं प्रेक्ष्य शङ्कर । भास्तु भीतिस्तवेन्द्राद्य प्रसन्न विद्धि मामिह ॥ ८
इत्यनुग्राह्य देवेन्द्र प्रेषयित्वा पुरं प्रति । निजकोपानल सिन्धौ क्षिप्त्वा करुणया शिव । ९
आविवेशाल्पं शीघ्रस्तदैव परमेश्वर । स तु कोपानल दसाभो शिशुर्भूत्वा रुरोद ह । १०
सर्वैश्चापि शम्भोऽथ देवैरन्यैस्तपोधनै । तच्छ्रुत्वा वरुणोऽभ्येत्य गृहीत्वाऽमुमपोषयत् ॥ ११
दिनेदिने शिशुस्तस्य ववृधे मन्दिरेऽप्यते । धाता समागत कालाहरणस्य गृह स्वयम् ॥ १२
तदा ■ वरुणस्तस्य हस्त धातु ददौ शिशुम् । गृहीत्वा द्रुहिणा वाल स्वाङ्कमारोपयद्विभु ॥ १३
बालोऽयं पाणिना धातु श्मश्रूणि परिगृह्य च । कर्षयामास बल्चाश्रोद्वेन समन्वित ॥ १४
ब्रह्मा – समरे ब्रह्मविष्ण्वादीन्विजयिष्यत्यसशयम् । नास्य शापात् भय यत्र कुम्भन महतामपि ॥ १५
ख्यातिं जलधर इति त्रिषु लोकेषु चैष्यति । धैर्यशौर्यगुणोपेतो महासत्त्वो महाबल ॥ १६
जित्वाऽमरपुरीमुग्रो दैत्यराज्य प्रयच्छति । एवमुक्त्वा विधिरगाद्विजागारं मनोहरम् ॥ १७

जलन्धरः पुनः कालं कियन्तं वरुणान्तिके । स्थित्वा ततोऽसुरान् घोरान्मेलयित्वा महीमगात् ॥ १८
जित्वा दिशांपतीन् सर्वानसुराणां सुरालयम् । दत्वा जालंधरं नाम नगरं मयनिर्मितम् ॥ १९
अधिष्ठाय महावीर्यो जिताशेषसपत्नवान् । कालेन कालनेम्याख्यदैत्यस्य च सुतामयम् ॥ २०
वृन्दां विवाह्य सन्तोष मवाप्य परमं ततः । पुनः कालेन महता देवान्मेरुसमाश्रितान् ॥ २१
ज्ञात्वा गत्वाऽथ तान्सर्वान्युद्धे जित्वा हरिं पुनः । देवतानां सहायं च कुर्वाणं युद्धमध्यगम् ॥ २२
युयोध विंशतिसमा सहस्राणामरिंदमः । श्रमिणं तं मुमोचाथं स्वकीर्तनरतं बली ॥ २३
ततो देवा भयत्रस्ताः सेन्द्राः कैलासमाश्रिताः । गत्वा स्वनगरं दैत्यस्तत्र स्थित्वा चिरं पुनः ॥ २४
स्वसेनाभि र्ययौ क्रूरः कैलासं पर्वतोत्तमम् । वृन्दाया वचनं पत्न्या निरुन्धत्या महासुरः ॥ २५
आगच्छतीति संश्राव्य देवा भयद्रुताः । तदागमं ततो देवा ज्ञात्वात्यन्तं भयान्विताः ॥ २६
प्रणम्य नन्दिनं द्वाःस्थं महादेवस्य पावनम् । विविशुर्मन्दिरं देवदेवस्यैते तदाज्ञया ॥ २७
तत्र दृष्ट्वा महादेवं सर्वसंसारमोचकम् । प्रणम्य दण्डवद्भक्त्या तुष्टुवुः स्तुतिभिस्तदा ॥ २८
वृत्तान्तमखिलं प्रोचुः पृष्टास्ते शंकराय ते । तदा देवोऽभयं दत्वा देवानां परमेश्वरः ॥ २९
स्वयं द्विजाकृतिर्भूत्वा निर्ययौ पुरतोऽस्य सः । दण्डी कमण्डलुकरो धृतच्छत्रो ऋषिर्यथा ॥ ३०
अनुयातस्सुरैस्सर्वैरिन्द्राद्यैश्छद्मवेषिभिः । जलन्धरस्य निकटमापायं द्विजसत्तमः ॥ ३१
दृष्ट्वा जलन्धरं देवः को भवान् कुत आगतः । कुत्रवा गम्यते सर्वं वदस्वेदं महेश्वरः ॥ ३२
जलंधराख्योऽहं जित्वा देवान्सर्वान्रणांगणे । गच्छामि शंकरं जेतुं कैलासमधुनाऽचलम् ॥ ३३
इत्युवाच ततश्शंभु र्विहस्यामुं वचोऽब्रवीत् । कोवा योद्धुमलं शंभुं महाघोरं पिनाकिनम् ॥ [illegible]
भवता स्मर्यते येन योद्धुं सोऽपि पराभवम् । प्राप्नोति नात्र सन्देहस्तं जेतुं कथं प्रभुः ॥ [illegible]
निवसामि महेशस्य निकटेऽहं जलंधर । पुनर्गच्छ यथावार्ता यदि जीवनमिच्छसि ॥ ३६
समाकर्ण्य वचस्तस्य विप्रस्यास्य जलन्धरः । न जानासि बलं विप्र मदीयं त्वं दुरासदम् ॥ ३७
प्रदर्शयामि तद्विप्र क्षणमात्रेण भूसुर । इति संरम्भवचनं क्रुद्धस्य द्विजसत्तमः ॥ ३८
जलन्धरस्य पापस्य विप्ररूपो निशम्य सः । बलं त्वदीयं दैत्य तावकं वीक्षितुं मम ॥ ३९
कुरु द्रक्ष्यामहस्त्वं तु चक्रमेतत्स्वमूर्धनि । उद्धृत्य पाणियुग्मेन समारोपय मासुरः ॥ ४०
इत्युक्त्वा विलिलेखायं पादाङ्गुष्ठेन तत्क्षितौ । दृष्ट्वा तच्चक्रमसुरो भूतलग्राह वद्विजम् ॥ ४१
मया विद्राविता देवा महाविष्ण्वादयो रणे । पुरा करोम्याशामयं चाहवं क्षणमात्रतः ॥ ४२
शोषितास्सागरास्सर्वे गिरयः कन्दुकीकृताः । कोऽतिभारोऽस्य मे चक्रमुद्धर्तुं तदिदं द्विज ॥ ४३
इत्युक्त्वोद्धृत्य पाणिभ्यां स तदारोप्य वक्षसि । यत्नेन महता मूर्ध्नि पुनरारोपयत् क्षणात् ॥ ४४
द्विधाकृत्वा पपातैनं तच्चक्रं भूतले जवात् । रक्तच्छायो महानासीत्तदानीं तत्रवेगवान् ॥ ४५
जलंधरः पपाताशु क्षितौ पर्वतवत् द्विधा । भ्रमाच्च पुनरुद्धीर्षं विलुठन् भूतलेऽसुरः । ४६

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे द्वाविंशोऽध्यायः ॥

---

जलन्धरः पुनः कालं कियन्तं वरुणान्तिके । स्थित्वा ततोऽसुरान् घोरान्मेळयित्वा महीमगात् ॥ १८
जित्वा दिशांपतीन् सर्वानसुराणां सुरालयम् । दत्वा जालंधरं नाम नगरं मयनिर्मितम् ॥ १९
अधिष्ठाय महावीर्यो जिताशेषसपत्नवान् । कालेन कालनेम्याख्यदैत्यस्यच सुतामयम् ॥ २०
वृन्दां विवाह्य सन्तोष मवाप्य परमं ततः । पुनः कालेन महता देवान्मेरुसमाश्रितान् ॥ २१
ज्ञात्वा गत्वाऽत्र तान्सर्वान्युद्धे जित्वा हरिं पुनः । देवतानां सहायं च कुर्वाणं युद्धमध्यगम् ॥ २२
युयोध विंशतिसमा स्सहस्राणामरिंदमः । श्रमिणं तं मुमोचायं स्वकीर्तनरतं बली ॥ २३
ततो देवा भयत्रस्ता स्सेन्द्राः कैलासमाश्रिताः । गत्वा स्वनगरं दैत्यस्तत्र स्थित्वा चिरंपुनः ॥ २४
ससेनाभि र्ययौ क्रूरः कैलासं पर्वतोत्तमम् । वृन्दाया वचनं पत्न्या निरुध्यत्वा महासुरः ॥ २५
मागत्यास्तिसंरंभात्तत्र देवा भयद्रुताः । तदागमं ततो देवा ज्ञात्वाऽत्यन्तं भयान्विताः ॥ २६
प्रणम्य नन्दिनं द्वाःस्थं महादेवस्य पावनम् । विविशुर्मन्दिरं देवदेवस्यैते तदाज्ञया ॥ २७
तत्र दृष्ट्वा महादेवं सर्वसंसारमोचकम् । प्रणम्य दण्डवद्भक्त्या तुष्टुवुः स्तुतिभिस्तदा ॥ २८
वृत्तान्तमखिलं प्रोचुः पृष्टास्ते शंकराय ते । तदा देवोऽभयं दत्वा देवानां परमेश्वरः ॥ २९
स्वयं द्विजाकृतिर्भूत्वा निर्ययौ पुरतोऽस्य सः । दण्डी. कमण्डलुकरो धृतच्छत्रो ऋषिर्यथा ॥ ३०
अनुयातस्सुरैस्सर्वैरिन्द्राद्यैश्छद्मवेषिभिः । जलन्धरस्य निकटमावायं द्विजसत्तमः ॥ ३१
दृष्ट्वा जलन्धरं देवः को भवान् कुत आगतः । कुत्रवा गम्यते सर्वं वदस्वैवं महेश्वरः ॥ ३२
जलंधराख्योऽहं जित्वा देवान्सर्वान्रणांकणे । गच्छामि शंकरं जेतुं कैलासमधुनाऽचलम् ॥ ३३
इत्युवाच ततश्शंभु विहस्यामु वचोऽब्रवीत् । कोवा योद्धुमलं शंभुं सर्वज्ञं पिनाकिनम् ॥ ३४
मनसा स्मर्यते येन योद्धुं सोऽपि पराभवम् । प्राप्नोति नात्र सन्देहस्तं सखेतु कथं प्रभुः ॥ ३५
निवसामि महेशस्य निकटेऽहं जलंधर । पुनर्गच्छ यथामार्गं यदि जीवनमिच्छसि ॥ ३६
समाकर्ण्य वचस्तस्य विप्ररूपं जलन्धरः । न जानासि बलं विप्र मदीयं त्वं दुरासदम् ॥ ३७
प्रदर्शयामि तद्विप्र क्षणमात्रेण भूसुराः । इति संरम्भवचनं क्रुद्धस्य द्विजसत्तमः ॥ ३८
जलन्धरस्य पापस्य विप्ररूपो निशाम्य सः । बलं तत्कीदृशं दैत्य तावकं वीक्षितुं मम ॥ ३९
कुतूहलमतस्त्वं तु चक्रमेतत्स्वमूर्धनि । उद्धृत्य पाणियुग्मेन समारोपय मासुरः ॥ ४०
इत्युक्त्वा विलिलेखार्थं पादाङ्गुष्ठेन तत्क्षितौ । दृष्ट्वा तच्चक्रमसुरो भूयस्तमाह चद्विजम् ॥ ४१
मया विद्राविता देवा ब्रह्मविष्ण्वादयो रणे । पुरा करेणाशमयं वाडवं क्षणमात्रतः ॥ ४२
शोषिताश्च सागरास्सर्वे गिरयः कन्दुकीकृताः । कोऽतिभारोऽस्य मे चक्रमुद्धर्तुं तदिदं द्विज ॥ ४३
इत्युक्त्वोद्धृत्य पाणिभ्यां स तदारोप्य वक्षसि । यत्नेन महता मूर्ध्नि पुनरारोपयत् क्षणात् ॥ ४४
द्विधाकृत्या पपातैनं तच्चक्रं भूतले ज्वलत् । रक्तस्रावो महानासीत्तदानीं तद्वेगचात् ॥ ४५
जलंधरः पपाताशु क्षितौ पर्वतवत् द्विधा । ममारच पुनश्शीघ्रं विलुठन् भूतलेऽसुरः । ४६

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे द्वात्रिंशोऽध्यायः ॥

भविष्यत्यत्र तुलसी मनोज्ञा विष्णुवल्लभा । तां दृष्ट्वा माधवस्तस्यामासक्तहृदयस्सदा ॥ ३३
भविष्यति हरिं तस्याः पाणिं ग्राहय पद्मज । स तयाऽनुदिनं भोगान् भुक्त्वा स्वेच्छमतन्द्रितः ॥ [illegible]
भविष्यति परित्यक्तमोहोऽयं नूनमात्मभूः । बिभर्ति मालामतुलां शिरसा मधुसूदनः ॥ ३५
इत्थं मालाञ्च पद्मोत्थ कल्पयिष्यत्यसंशयम् । स्वकृत्यंच हरिः पश्चात्करिष्यति विधे दृढ ॥ ३६
इत्युक्त्वा प्रेषयामास पद्मजं परमेश्वरी । ततो ब्रह्मादयो गौरीं महादेवं प्रणम्य ते ॥ ३७
स्वपदानि ययुः सर्वे प्रसन्नहृदया द्रुतम् । ब्रह्माचत्वरया [illegible] गत्वा बीजं तदद्भुतम् ॥ ३८
स्थापयामास गौर्याज्ञां शिरसा संवहन्विभुः । तदानीमभवत्तत्र तुलसी सुमनोहरा ॥ ३९
तद्दर्शनेन विष्णोस्तु तद्दुःखं सहसा गतम् । विवाह्य तां हरिरपि पश्चात्तु तुलसीमिमाम् ॥ ४०
नित्यं संक्रीडयामास स्वेच्छया हृष्टमानसः । बभार तन्मयीं मालां शिरसा सुमनोहराम् ॥ ४१
गतमोहस्ततो गत्वा वैकुण्ठं स्वालयं हरिः । तत्र स्थित्वा स्वकृत्यंच कृत्वा कालेन माधवः ॥
तोषयित्वा महादेवं विश्वाक्षकमलार्चनैः ॥ ४२
चक्रं जलन्धरवधाय शिवेन पूर्वं यन्निर्मितं सवितृकोटिसमानकान्ति ।
लब्ध्वा तदद्भुतमयं हरिराप तुष्टिमित्थं विभोर्विविधरूपकथामयोक्ता ॥ ४३
इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे त्रयोविंशोऽध्यायः ॥

---

॥ अथ चतुर्विंशोऽध्यायः ॥

॥ शिवेन शिरसि गङ्गावहनम् ॥

पार्श्वे शिरसि भार्ये द्वे वहतीति महेश्वरः । यदुक्तं त्वन्मया पूर्वमुत्तरं शृणु तत्र च ॥ १
पुरा कैलासशिखरे पार्वती परमेश्वरे । छादयामास नयने पाणिभ्यां प्रणयक्रुधा ॥ २
तदा जगदिदं सर्वं तिमिरेण परिप्लुतम् । दृष्ट्वैतदद्भुतं गौरी भीतभीता तदा भृशम् ॥ ३
मुमोच पाणी तौ देवनयनाच्छादकावुभौ । स्वेदोद्भवस्तदा तत्र महत्यासीत्कराब्जयोः ॥ ४
क्षोभेभि देशाभि गौर्याः क्षिप्तं तत् स्वेदजं जलम् । तदिदं क्षणमात्रेण व्याप्नोति सकलं जगत् ॥ ५
तदा विष्णुमुखा देवास्सर्वेऽपि भयकंपिताः । अकाण्डे प्रलयः कोऽयमिति चिन्तापरायणाः ॥ ६
महादेवं समाराध्य तुष्टुवुः परमं मुदा । रक्ष रक्ष महादेव जगदेतच्चराचरम् ॥ ७
अकाण्डप्रलयग्रस्यमानं शम्भो दयानिधे । इति स्तुतस्सुरैस्सर्वैः लोकसंरक्षणोद्यतः ॥ ८
तेषु दयां कृत्वा धृताशय जलं महत् । जटायां रोम्णि चैकस्मिन् बभार जलबिन्दुवत् ॥ ९
दृष्ट्वैतदद्भुतं विष्णुब्रह्माद्याः सुरास्तदा । प्रणम्य दण्डवच्छंभुं स्तुत्वा बहुविधैः स्तवैः ॥ १०
भगवन् पावनी सेयं नदी गौरीकरोद्भवा । विधृता भवता यस्माज्जटायां परमेश्वर ॥ ११
दर्शनात् स्पर्शनात्तद्वत् पानात्मज्जनादपि । सर्वेषामपि जन्तूनां सदा पापप्रणाशिनी ॥ १२
अस्माकमस्या देवेश जलं किञ्चित्प्रयच्छ भो । इति ते ब्रह्मविष्ण्विन्द्राः पृथक् शंभोर्जलं मुदा ॥ [illegible]
गृहीत्वा स्वेषु लोकेषु कल्पयामासुरञ्जसा । वैष्णवी प्रथिता लोके विष्णोरेतत् सरिद्वरा ॥ १४
कमण्डलौ परं तद्ब्राह्मी तोयं दधौ सदा । आकाशगङ्गा विख्याता स्वर्लोके या व्यवस्थिता ॥ १५

ततः कालेन महता ब्रह्मलोकस्थितां नदीम् । भगीरथः प्रयत्नेन नयति स्म क्षितौ यदा ॥ १६
तदा दधार तां शंभुः कल्लोलावलिभीषणाम् । शोषयामास तां देवीं जटायामेव शंकरः ॥ १७
पुनस्तां प्रार्थितस्तेन तत्यजे शङ्करापगाम् । निर्ययौ सा महावेगान्महदूर्मिसमाकुला ॥ १८
भागीरथी महीपाल मुक्तमात्रेण शंभुना । सगरांस्तारयामास संसारघोरसागरात् ॥ १९
स्नान्ति तस्यामिदानीं ये गङ्गायां शंकरात्मजे । ते मुक्तकिल्बिषा मोक्षमाप्नुवन्ति प्रजापते ॥ २०
इति गङ्गाप्रसङ्गेन गङ्गाधारणमीरितम् । अन्यच्चरित्रमधुना शृणु दक्ष प्रजापते ॥ २१
पुरा ससर्ज सनकप्रमुखांश्चतुरो विधिः । ज्ञानिनस्ते तपोनिष्ठा विमुखाः सृष्टिकर्मणि ॥ २२
वभ्रूयुस्तान् समुद्दिश्य ब्रह्मा साकं मधुद्विषा । कैलासे देवमीशानं विज्ञापयितुमागतः ॥ २३
श्रुत्वैतत्सनकाद्याश्च तदा तत्र समागताः । संस्तावयतां वृत्तं तौ देवौ परमेश्वरम् ॥ २४
दृष्ट्वा जगद्बलं नास्तीत्येवं तावूचतुस्तदा । तावुभौ शंकरः कोपाद्ददाह निटिलाक्षिणा ॥ २५
वामभागे ततो गौरीं विससर्ज महेश्वरः । तावपीशः पुनस्सृष्ट्वा लीलया विधिमाधवौ ॥ २६
इतः प्रभृति ते भूयाज्जगत्सृष्टौ बलं विधे । शक्त्याऽनयाऽहं संयुक्तो विहरामि यतस्सदा ॥ २७
तद्गच्छ विष्णुना सार्धं सृज सर्वं यथा पुरा । इत्युक्त्वा प्रेषयामास तावुभौ परमेश्वरः ॥ २८
ततः प्रणम्य तौ देवं शिवां तां ज्ञानरूपिणीम् । ययतुः स्वपदं प्रीत्या तदाज्ञापरिचोदितौ ॥ २९
ससर्ज पुनरा ब्रह्मा जगत्सर्वमतन्द्रितः । जगत्सृष्ट्यर्थमीशोऽभूच्छिवया दक्ष सगुणः ॥ ३०

साऽपि तस्य प्रभा सत्य (गौरी) ज्ञानानन्दस्वरूपिणी ।
न तयोर्विद्यते भेदश्चन्द्रचन्द्रिकयोरिव ॥ ३१

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे चतुर्विंशोऽध्यायः ॥

॥ अथ पञ्चविंशोऽध्यायः ॥

मागधमुनेः गजमुखासुरोत्पत्तिः ॥

अजीजनच्छिवः पुत्रावित्युक्तं दक्ष यत्त्वया । तत्कथां सर्वपापघ्नीं शृणु त्वमवधानतः ॥ १
असुरेन्द्राः पुरा युद्धे द्राविता वज्रपाणिना । भूतलेऽवसन्सर्वे दुःखादेकोऽभ्याशं ययौ गुरोः ॥ २
आलोक्य शुक्रस्सहसा आगत्यास्य तदागमम् । असुरेन्द्र त्वया कार्यो न शोकोऽत्र मयि स्थिते ॥ ३
मागधाख्यो महायोगी वसिष्ठस्य कुलोद्भवः । तपस्यति महाघोरं तपोनिश्चितमानसः ॥ ४
तस्यासुरी यदा काचिन्नारीसंगमवाप्स्यते । तदा तस्यासुरो घोरो महान् गजमुखाह्वयः ॥ ५
भविष्यति महासत्त्वदिग्गजाकारः स्वयम् । हत्वा शत्रून् स्वयं राज्यं परिपालयति ध्रुवम् ॥ ६
इत्युक्त्वा प्रेरयामास शुक्रस्तमसुरेश्वरम् । ततोऽसुरेन्द्रो मतिमान् स्वगृहं प्राप्य शीघ्रतः ॥ ७
विभूत्याख्यां स्त्रियं वीक्ष्य प्रोवाच वचनं मुदा । विभूते सुकुमाराङ्गि मागधस्तपतां वरः ॥ ८
मेरोर्दक्षिणभागेऽस्मिन् घोरे तपसि वर्तते । तं प्राप्य तापसश्रेष्ठमुपगम्य वरं सुतम् ॥ ९
त्वद्गर्भशुक्तिनिर्भिन्नसुतरत्नेन अतुलम् । जितासुर (शत्रु) द्विपाननेन भविष्यति निराकुलम् ॥ १०
सुरद्विषः पदं सर्वे तदानीं जितशत्रवः । इत्युक्त्वा प्रेषयामास सुरारिः कार्यगौरवात् ॥ ११
सा तथैवेति निर्गत्य मागधस्तपतां वरः । यत्रास्ते यत्र महती तपस्यग्रदेवमानसः ॥ १२

तत्र गत्वा समीक्ष्यास्य तपोनिष्ठां सुनिर्मलाम् । चिन्तयामास हृदये महदाश्चर्यसंयुता ॥ १३
न मया शक्यते चित्तं दृढचित्तस्य भेदितुम् । मागधस्यास्य महतो यत्नेन बहुनापि वा ॥ १४
पुनर्निवृत्ता निकटमसुरेन्द्रस्य यद्यहम् । गमिष्यामि तदा सोऽप्यतिदुःखी भवेदिति ॥ १५
तस्मादत्र तपस्तप्त्वा साधयिष्यामि तं वशम् । इत्यालोच्य चचारैषा पुरतोऽस्य तपो महत् ॥ १६
ततः कालेन महता करिणं करिणी शुभम् । विलोक्य तापसश्रेष्ठस्समुत्थाय मुमोह च ॥ १७
सदार्वी [illegible] सा प्राप्य प्रणम्य तपतां वरम् । कदा मुने त्वया संगो भविष्यति ममेत्यहम् ॥ १८
तपः कृत्वा तवाभ्याशे स्थित्वास्मि बहुकालतः । तत्त्वमंगीकुरु स्वामिन्मामिहाशु स्मरातुराम् ॥ १९
इत्युक्तिमस्याश्श्रुत्वाऽयं तापसः प्रीतिसंयुतः । तथेतिकरिणीरूपं ग्राहयित्वाऽऽसुरीमिमाम् ॥ २०
स्वयं मतङ्गजो भूत्वा रेमे तां मागधस्तदा । तदा गजमुखो घोरो दैत्यस्तस्यामजायत ॥ २१
रोमकूपेषु बहवो दैत्यास्तस्याश्च जज्ञिरे । तैरयं दानवै दैत्यै श्ववातानुवर्म महान् ॥ २२
खड्गखेटधरः क्रूरः कृतकोलाहलारवः । विक्षिपन् पर्वतान् वृक्षान् पर्वतेषु द्रुमेष्वपि ॥ २३
समेतौ पितरौ सोढु मक्षमौ भयकंपितौ । मुक्त्वा वनं दुद्रुवतु दूरमाश्चर्यसंयुतौ ॥ २४
कुत्रचित् गह्वरे स्थित्वा कम्पितां वीक्ष्य चासुरीम् । किमेतदिति पप्रच्छ वृत्तान्तं तापसोत्तमः ॥ २५
सा जगाद यथावृत्तं तस्मै सर्वं महात्मने । तदाकर्ण्य वचस्तस्या मागधो दुःखविह्वलः ॥ २६
लोकानां देवतानां च मया पीडा समार्जिता । इत्युक्त्वा तापसश्रेष्ठो ययौ भूयस्तपोवनम् ॥ २७
सा प्रणम्य ऋषिं शीघ्रात्तिलकाख्यां ययौ पुरा । वृत्तान्तमेतदखिलं मसुरेन्द्र मबोधयत् ॥ २८
असुरेन्द्रोऽपि निर्गत्य सहसा तेन संयुतः । बबाधे नितरां लोकान् देवेन्द्रप्रमुखानपि ॥ २९
तदा दैत्यगुरुः शुक्रस्समागत्याथ रंहसा । प्रसाद्य देवमीशानं तपसा परमेश्वरम् ॥ ३०
वरं लब्ध्वा ततो देवाद्यमेच्छं सञ्जराभयात् । भविष्यति भयनोषेयत्र कुत्रापि ते ध्रुवम् ॥ ३१
इत्युवाच तं ययौ शुक्रो गजवक्त्रं महासुरम् । स तु शुक्रवचश्श्रुत्वा मेरुपार्श्वे मनोहरे ॥ ३२
तपश्चचार सुमहत्सहस्राब्दं तृणाशनः । तावत्कालं च पर्णाशी तावत्पीत्वा जलान्यपि ॥ ३३
वायुभक्षस्तथा पञ्चवह्निमध्ये दुरासदे । मूलानलं समुद्दीप्य सुषुम्नानाडिमार्गतः ॥ ३४
पीत्वाऽमृतं शिरोमध्यस्थितमेकाग्रिणा स्थितः । चचार दशसाहस्रवर्षान्तं तप उत्तमम् ॥ ३५
तद्दृष्ट्वा दैत्यवर्यस्य तपश्शक्रादयस्सुराः । दुद्रुवु नितरां भीतिं समनन्द्य तदाऽनुवन् ॥ ३६
तदा शिवस्य मनसि कृपामूर्तेः कृपाऽभवत् । संयमूलास्य देहोऽपि [illegible] ॥ ३७
तदाऽस्य मूर्ध्नि दैत्यस्य ववर्षुः पुष्पसन्ततिम् । तदन्तरे वृषारूढः प्रादुरासीद् महेश्वरः ॥ ३८
तं दृष्ट्वा देवमीशानं प्रणम्य प्रणयान्वितः । तुष्टाव वाग्भिरिष्टाभि महादेवमयं तदा ॥ ३९
वरं वरय भद्रान्तु यत्ते मनसि वर्तते । प्रसन्नोऽहं प्रदास्यामीत्येवमाह शिवोऽसुरम् ॥ ४०
तच्छ्रुत्वा देवदेवस्य वचनं सुरघातकः । यदि प्रसन्नो भगवन्यदि दास्यसि मे वरम् ॥ ४१
हरीन्द्र प्रमुखा देवास्सर्वे प्राप्य मामकम् । पराजिता भवन्त्वीश सिंहं गोमायुवृन्दवत् ॥ ४२

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे पंचविंशोऽध्यायः ॥

## ॥ अथ षड्विंशोऽध्यायः ॥

### गजमुखासुर राज्यपालनम् ॥

आयुधान्यपि भूरीणि मम नानाविधान्यपि । माभून्मृतिर्महेशान मम सन्ताडनायुधैः ॥ १
तथा परेषां बहुभिश्छेदनकृन्तनायुधैः । विक्षेपणायुधैरन्यैरेवं नानाविधैरपि ॥ २
देवतानां मनुष्याणां असुराणांच रक्षसाम् । मृगपक्षिभुजङ्गानामन्येषां बलिनामपि ॥ ३
समरे मे भयं माभूदत्र कुत्रापि दुर्जये । मदाज्ञया जगत्सर्वं वर्ततां परमेश्वर ॥ ४
मायया मरणं यत्र कुत्रचिद्वाऽपरेश्वर । समागतश्चेदुत्पत्तिः पुनर्मां भवतु प्रभो ॥ ५
तथैतत्सर्वमाकर्ण्य तथेत्युक्त्वा महेश्वरः । अन्तर्हितोऽभवच्छीघ्रं तस्यैव पुरतश्शिवः ॥ ६
ततो गजमुखः पापी सर्वमेतन्महेश्वरात् । लब्ध्वाऽसुरैर्महाघोरै रनेकैर्नितां मुदा ॥ ७
हरीन्द्रप्रमुखान् देवान् जित्वा तत्तत्पदान्यपि । असुरेभ्यः प्रदत्त्वाशु भूलोकं प्राप्य दुष्टधीः ॥ ८
तत्र स्थित्वा पुरे रम्ये मतङ्गाख्ये मनोरमे । दर्शकयोजनायामविशालबहुवीथिके ॥ ९
तत्र वेश्मानि रम्याणि दैत्यानां राक्षसामपि । भ्रातृणांच तथान्येषां दत्त्वाऽत्यन्तं कुतूहलात् ॥ १०
स्वयं विवेश तन्मध्यस्थितं वेश्म मनोहरम् । ततोऽसुरेन्द्रतनयां कालेनाथं महासुरः ॥ ११
विचित्रकामिकां रम्यां विवाह्यात्यन्तसुन्दराम् । सुराणामसुराणांच पाक्षसानां तथैवच ॥ १२
विद्याधराणामन्येषां विवाह्य तनयाः पराः । विनियोज्य स्वहस्ते च सुरेन्द्रप्रमुखानपि ॥ १३
कल्पवृक्षं कामधेनुं निधिं चिन्तामणिं तथा । सुखेन साकमसुरै रमाद्यैर्बहुभिस्तथा ॥ १४
महताच प्रतापेन शशास निखिलं जगत् । तदा कदाचिदिन्द्राद्या देवास्तत्र समागताः ॥ १५
प्रणम्य दण्डवद्बद्धाञ्जलयस्तत्पुरः स्थिताः । तान्वीक्ष्य देवानसुरः प्रोवाचायं वचस्त्वदः ॥ १६
अद्य प्रभृति ये देवा यूयं सर्वेऽप्यतन्द्रिताः । प्रणम्य त्रिशवारं मां कृत्वा च करकुट्टनम् ॥ १७
करौ श्रवणयोः कृत्वा व्यत्यासेन पुनः पुनः । नमनोन्नमनं कृत्वा चाज्ञया मम गच्छत ॥ १८
इत्युक्त्वा प्रेषयामास सुरान् गजमुखासुरः । तदाज्ञया सुरास्सर्वे तथा तं ते सिषेविरे ॥ १९
महता दुःखभारेण बहुकालमतन्द्रिताः । ततः कदाचिदमरा सहाच्युतद्रुहिणा इमे ॥ २०
कैलासं पर्वतश्रेष्ठं प्राप्य नन्दीश्वराज्ञया । तत्र दृष्ट्वा महादेवं संसारामयभेषजम् ॥ २१
प्रणम्य दण्डवद्भक्त्या तुष्टुवुर्विविधैः स्तवैः । प्रसन्नः परमेशानः पप्रच्छागमनं हरिम् ॥ २२
वृत्तान्तमखिलं विष्णुरुक्त्वाऽप्रार्थयदीश्वरम् । शंभो सर्वेश विश्वेश भक्तानां भयभञ्जन ॥ २३
सुरान् गजमुखेनैतानसुरेण दिवानिशम् । बाध्यमानान्महादेव शिवोत्पाद्यात्मजं परम् ॥ २४
पाहि सर्वामरेशान शरणागतवत्सल । इति तस्य वचश्श्रुत्वा तथेति परमेश्वरः ॥ २५
प्रेषयामास ताञ्छंभुः प्रणतार्तिप्रभञ्जनः । ततो देवाश्च सन्तुष्टाः प्रणम्य स्वास्पदं ययुः ॥ २६

इत्थं सुरेषु सकलेषु निजास्पदानि यातेषु तेषु शिवया सह शंकरोऽपि ।
रम्यासरसाद् हरिचन्दनपारिजातमुख्यैर्द्रुमैस्तदनु केळिवनं विचित्रम् ॥ २७

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे षड्विंशोऽध्यायः ॥

---

॥ अथ सप्तविंशोऽध्यायः ॥

श्रीमहागणपति जननम् ॥

अथ तत्र महादेवो विचित्रं वीक्ष्य कानने । चित्रमण्डपमाप्यायं तत्रस्थं गिरिजासखः ॥ १
रत्नसिंहासनारूढो देव्या सह महेश्वरः । चित्रभित्तिस्थितान्यत्र चित्राणि परया मुदा ॥ २
विलोक्य प्रपञ्चं चात्र क्रमात्तमवलोकयत् । शम्भुना वीक्षणाच्चसात् प्रणवाद्यक्षरं पती ॥ ३
समुत्पन्नौ तदाऽन्योन्यं रेमाते तौ मुदान्विते । वीक्ष्य तौ परया प्रीत्या गौरी चाश्चर्यसंयुता ॥ ४
पप्रच्छ सा महादेवं किमेतदिति शंकरी ।
श्रीशिवः — कल्याणि तावकीं विद्धि कृपां लोकोपकारिणीम् ॥ ५
इत्युक्त्वा प्रणयात्तौ तावदालोकयतामुभौ । तदा गजमुखस्तत्र प्रादुरासीद्गणेश्वरः ॥ ६
चन्द्रार्ककोटिसङ्काशः क्रीडतोर्गजयुग्मयोः । सोऽयं विनायको देवं देवीमपि मुदा तदा ॥ ७
प्रणनाम महातरशो दण्डवत्प्रश्रयान्वितः । तं समालिङ्ग्य चाघ्राय मूर्ध्नि गौरीमहेश्वरौ ॥ ८
स्वमङ्कमारोपयतां तौ तदा तं गणेश्वरम् । ततः प्राह वचः शंभुर्गणेशं कृपया सुतम् ॥ ९
ये वै भजन्ति पुरुषाः मद्नन्यं ममात्मजम् । तेषां भवन्त्यभीष्टानि शीघ्रं निर्विघ्नभावतः ॥ १०
त्वं गणानामशेषाणां पतिराद्यो महाशयाः । स्वकार्यादौ समभ्यर्च्य त्वामीदं प्राप्नुयाज्जनः ॥ ११
हत्वा गजमुखं घोरं दैत्यश्रेष्ठं सुरद्रुहम् । सुरान्विष्णुमुखान्पुत्र पालय त्वमतन्द्रितः ॥ १२
इत्युक्त्वा तं समाहूय परमेशो गणेश्वरम् । कैलासगोपुरद्वारि स्थापयित्वा स्वयं शिवः ॥ १३
गौर्या सह विवेशाशु सुखासनं हृष्टमानसः । ततो नन्दिमुखास्सर्वे गणा विष्णुमुखास्सुराः ॥ १४
प्रणम्य तं गणेशानं स्तुत्वा नानाविधैः स्तवैः । तदाज्ञया सहस्राणि चक्रिरे पूर्ववत्तदा ॥ १५
शिवस्तदा शिवां वीक्ष्य प्राहवाचं कुतूहलात् । अक्षद्यूतेन कल्याणि विहर त्वं मया सह ॥ १६
पराभवमिता चेत्त्वं भूषणानि प्रयच्छमे । दास्याम्यहं मदीयानि भूषणानि पराजितः ॥ १७
एवं पणोक्तिसमये विष्णुस्तत्र समागतः । पार्वतीपरमेशानौ नत्वा तस्थे भयान्वितः ॥ १८
अकल्पयत्तदा विष्णुं साक्षिणं परमेश्वरी । सुन्दराद्याः परिजना निर्युक्ते द्यूतसाधनम् ॥ १९
तत्रस्थाने हरिश्चार्थ विधायैतत् हराज्ञया । अक्षद्यूतविहारे स्म शिवयोरवलोकयत् ॥ २०
पराजितस्तया शंभुर्दिवाथवा सुवपहत्यथा । तथाऽपि शंकरस्सोऽहं जितवांस्त्वां मनोरमे ॥ २१
प्रयच्छ मह्यं शीघ्रेण कल्याणि तव भूषणम् । इत्युवाचोक्तिकुशलः परमेशः परामुमाम् ॥ २२
विहस्य सा भगवती भवताऽत्र किमुच्यते । मुकुलत्वेन देवेश पराभवमितेन च ॥ २३
देहिदेहि त्वदीयानि भूषणानि ममाधुना । साक्षिणं माधवं पृष्ट्वा मुक्त्वा सिध्यायत्त्वदिशाय ॥ २४
इत्युवाच तदा विष्णुर्शिवेन परिचोदितः । भ्रूक्षेपेण वचः प्राह कूटसाक्षी नताननः ॥ २५
जितमद्य महादेवि सर्वज्ञेन शिवेन हि । इति विष्णुवचः श्रुत्वा गौरी कोपाकुलानना ॥ २६
पश्यता भवता विष्णो मत्पक्षेणापि यन्मृषा । प्रोक्तं तत्त्वं भव क्षिप्रादन्धाजगररूपवान् ॥ २७
शशापैवं शिवा विष्णुं कूटसाक्षिणमानतम् । ततो विष्णुर्शिवाशापात् भीतभीतो महेश्वरम् ॥ २८
प्रणम्य प्रार्थयामास शापमोक्षं प्रजापते ।
शिवः — पटद्वीपे तपः कृत्वा दुश्चरं तिष्ठ माधव ॥ २९
विनायकस्तदा कालाद्धत्वा गजमुखासुरम् । समागमिष्यति त्वं दृष्ट्वा शापमोक्षं समेष्यसि ॥ ३०

इत्युक्त्वा प्रेरयामास विष्णुं तं परमेश्वरः । ततोऽन्धोऽजगरो विष्णुश्शिवानुज्ञामवाप्य सः ॥ ३१
पद्मद्वीपं समासाद्य वटवृक्षस्य कोटरे । सप्तयोजनमानेन विशाले भीषणे ध्रुवम् ॥ ३२

प्रविश्य तस्थौ शिवमद्वितीयं ध्यात्वा हृदब्जे गणनायकञ्च ।
विष्णुस्तदैकाग्रमनाश्शिवाया , श्शापप्रभावात्तनुगुप्सिताङ्गः ॥ ३३

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे सप्तविंशोऽध्यायः ॥

---

॥ अथ अष्टाविंशोऽध्यायः ॥

गजमुखासुरवधः ॥

ततो देवास्सुराधीशप्रमुखा देवता शुभाम् । गजाननेन तेनैव, कैलासं पर्वतोत्तमम् ॥ १
प्राप्य तत्र गणाधीशं पूजयित्वा परात्परम् । नानाविधैश्च नैवेद्यैः पुष्पैर्नानाविधैरपि ॥ २
तुष्टुवुर्नितरां स्तुत्यं स्तोत्रैर्वेदान्तगुम्भितैः । ततः प्रसन्नो भगवान्विघ्नाधीशश्शिवात्मजः ॥ ३
युष्मदिष्टं विधास्यामि सुरास्सर्वे महौजसः । किं कर्तव्यं मयाद्यात्र यूयं वदत निर्भयाः ॥ ४
इत्युवाच ततो देवा निर्भया वाक्यमूचिरे । गणनाथ महासत्त्व भक्तानामिष्टदायक ॥ ५
गणाग्र्यं त्वां गणपतिं शरण्यं शरणं गताः । रक्षरक्षासुरान् सर्वान् हत्वा गजमुखासुरम् ॥ ६
दुरात्मना गणाधीश बाध्यमानानहर्निशम् । इति तेषां वचश्श्रुत्वा तथेत्युक्त्वा गणाग्रणीः ॥ ७
अथरुद्रासनात्सिंहाद्विर्गत्य द्वारि दीप्ततः । मयूराख्यमहाभूतवरवाहमारुह्य चोन्नतम् ॥ ८
भूतसेनाभिरतुलं महाराजाभिरावृतः । छत्रचामरसंघैश्च ध्वजव्यजनकैरपि ॥ ९
वाद्यानामारवैः स्तनद्भिर्जिताम्भोधिस्वनैरपि । वर्षद्भिः पुष्पनिकरान् देवैरपि परिवृतः ॥ १०
मतङ्गनगरद्वारं प्राप विघ्नेश्वरो जवात् । तदागमं समाकर्ण्य गजवक्त्रो महासुरः ॥ ११
रथमारुह्य वेगेन चतुरङ्गबलैस्सह । चामरैर्व्यजनैश्छत्रैर्ध्वजैर्वाद्यैरनेकशः ॥ १२
सहस्रवाहिनीसंख्यामितसेनासमावृतः । निर्ययौ नगराद्वाहो महता संभ्रमेण सः ॥ १३
तदाऽभवद्रणं घोरं सेनयोरुभयोस्तयोः । सेना पराभवमिता तदा दैत्यस्य तत्क्षणात् ॥ १४
वीक्ष्यैतद्गजवक्त्रोऽसौ महाकोपाकुलाननः । चापमाकृष्य शस्त्राणि सहस्राणि ववर्ष सः ॥ १५
द्रावयामास भूतानि सहस्रैर्निशितैश्शरैः । पुनः कोपेन विघ्नेशे प्रेरयित्वा रथं जवात् ॥ १६
निजगाद ततो वाचं समुद्वीक्ष्यासुराधमः । न जानाति भवान्वीर्यं मम शंभुवरं तथा ॥ १७
गच्छ तूष्णीं यथामार्गं यदि जीवितुमिच्छसि । न शक्तस्त्वं मया योद्धुं बालोऽसि नितरामिह ॥ १८
पराजिताः पुरा केचिद्रिपवो रणमागताः । आयुधैर्न हतिस्सर्वैर्मम शम्भुवरादिह ॥ १९
देवतानां सहायार्थं आगतस्त्वं वृथाग्रहात् । यदि योद्धुं मनस्तेऽद्य कुरु युद्धं मया सह ॥ २०
जित्वा भवन्तं पश्चात्तान् संहरिष्यामि नाकिनः । तस्य तद्वचनं श्रुत्वा दानवस्य गणेश्वरः ॥ २१
शिवाज्ञयाऽहं त्वां हन्तुं देवान्रक्षितुमागतः । इन्द्रादीनां यथापूर्वं पदानि परिकल्पय ॥ २२
न चेदिदानीमाज्ञा ते भविष्यति न संशयः । त्वमद्य भूमिं संवीक्ष्य तिष्ठ स्वकप्रमादवान् ॥ २३
इति विघ्नेशवचनं श्रुत्वाऽयं दानवेश्वरः । ववर्ष तस्मिञ्छस्त्राणि वज्रस्थाणुमहारवः ॥ २४
तान्ययोमुसलेनायं क्षणात्कुण्ठीचकार ह । कार्मुकञ्च महाघोरं चिच्छेदास्य दुरात्मनः ॥ २५

चापान्तरं समादाय चापाग्रं निकटं तदा । चिच्छेद तच्च विघ्नेशस्तेनैवास्य महाबलः ॥ २६
पुनर्दण्डं समादाय साट्टहासेन सोऽसुरः । अभ्यागतो जवेनायमभ्याशं तस्य भीषणः ॥ २७
धूळीकृत्य तमप्याशु दण्डं विघ्नेश्वरस्तदा । अताडयदुरोमध्ये मुसलेन दुरात्मनः ॥ २८
दुःखमाप तदात्यन्तं ताडितोऽयं महासुरः । अत्रान्तरे गणाधीशस्तदीयानि बलान्यथ ॥ २९
युगपन्मारयामास क्षणात्परशुना वत । ततः कोपानलप्लुष्टो गजवक्त्रो महासुरः ॥ ३०
ववर्ष तस्मिन् महति देवतास्त्राणि भूरिशः । तानि सर्वाणि विघ्नेशं प्रदक्षिणविधानतः ॥ ३१
प्रणम्य तस्थिरे भीत्या तदा द्रुत प्रजापते । दृष्ट्वैतदसुरः कोपाद्ववर्षाक्षिप्तच्छरान् बहून् ॥ ३२
कल्पकाल भुजाटोपसेषो तृणीयं पातया । गणाध्यक्षस्ततो ज्ञात्वा तमशास्त्रवधं तथा ॥ ३३
हुलोद् दन्तमेतस्मिन् क्षणे छित्वा महाबलः । समभ्येत्य वेगेन भित्त्वोरस्तस्य निष्ठुरम् ॥ [illegible]
क्षणात् सापूर्वकांभोधौ स्नात्वा तस्य करं ययौ । उत्सृज्य देहमसुरस्तदा तं रुधिराप्लुतम् ॥ ३५
जग्राह देहमुग्र मूषिकस्य महोन्नतम् । सुवृत्तकर्णपृथुलघोरनेत्रद्वयान्वितम् ॥ ३६
स्थूलदीर्घातिकठिनपक्ष्मबालेन संयुतम् । पादैश्चतुर्भिः परितश्चलद्भिः पर्वतान् द्रुमान् ॥ [illegible]
नयन्तं पांसुतामुग्रमण्डाग्रच्छं परीवृढम् । महाकायं महाघोरं तर्जयन्तं जगत्त्रयम् ॥ ३८
तादृशोऽयं महावेगाद्विघ्नेशनिकटं ययौ । मारुह्यास्मिन् गणाध्यक्षो कल्पयत्तं स्ववाहनम् ॥ ३९
चचार स तु विघ्नेशमयात्तद्यानयानहो । ततो ब्रह्ममुखा देवाः प्रीतिमापुस्तरां तदा ॥ ४०
ववर्षुः सुमनोजालं तत्रत्तुश्च समन्ततः । पेठुर्गुणगणांस्तस्य नितरां मागधा इव ॥ ४१
ततस्तेषु कृपां चक्रे विघ्नेशः करुणाकरः । यानि भूतानि दैत्येन मारितानि दुरात्मना ॥ ४२
उत्तस्थुस्तानि सर्वाणि विघ्नेश्वर कृपावशात् । असाध्यं किं गणेशस्य रक्षकस्य सतां सदा ॥ ४३
ततः कोलाहलं चक्रुर्भूतानि निखिलान्यपि । असुरेन्द्रस्तदा भीतो भूतेभ्यश्च पुरन्दरात् ॥ [illegible]
पक्षिणो रूपमादाय मेरोः प्राप गुहां तदा । शुक्रोऽपि पक्षिरूपेण भीत्या प्रापपदं स्वकम् ॥ [illegible]
मृतो वज्रासुरो घोरो यत्रद्रको दुरात्मवान् । पुरं बभूव तत्रैव महद्भक्तजनाश्रयम् ॥ ४६
तत्र विघ्नेश्वरं शंभुं प्रतिष्ठाप्य विधानतः । सनातना पूजयामास भक्त्या गणपतीश्वरम् ॥ ४७
पुनश्च मूषिकारूढो भूतैर्देवैश्च सेवितः । छत्रचामरसंवीतो निर्जगाम मुदान्वितः ॥ ४८
[illegible] मार्गवशात्रय षष्ठीर्पं मनोहराम् । ततो विनिर्ययौ विष्णुर्मास्वाश्चात्र समागमम् ॥ ४९
[illegible]धाजगद्रूपोऽसौ विघ्नेशस्य महात्मनः । तत्र दृष्ट्वा गणेशानं प्रणम्य परया मुदा ॥ ५०
तुष्टाव मुक्तवद्रूपो नैजं रूपमवाप्य च । नमस्तेऽस्तु गणेशान भक्ताभीष्टसिद्धिद ॥ ५१
अनाथनाथ भक्तेश सर्वलोकैकनायक । भवद्दर्शनमात्रेण मम घोरमिदं वपुः ॥ ५२
गौरीशापवशात्प्राप्तं विनष्टं खलु देवप । इत्युक्त्वा पूजयामास भक्त्या तं परया हरिः ॥ ५३
पूजाद्रव्याणि संपाद्य भक्ष्यैर्भोज्यैरनेकशः । ततः प्रसन्ने विघ्नेशे प्रोवाच वचनं हरिः ॥ ५४
अर्चयन्ति धनुर्मासे षष्ठ्यामस्यां नरोत्तमाः । सर्वाभीष्टप्रदं त्वां ये तेषां सर्वेश वाञ्छितम् ॥ [illegible]
दातुमर्हसि विघ्नेश मदुःखापनाय भो । इति तस्य वचः श्रुत्वा तथेत्युक्त्वा गणेश्वरः ॥ ५६
गणेश्वरो ययावाशु कैलासं पर्वतोत्तमम् । प्रणम्य तत्र पितरौ पार्वतीपरमेश्वरौ ॥ ५७
तदाज्ञया निजद्वारवेदिमाधगतिस्म भः । ततो विष्णुमुखा देवाः प्रणम्यात्र विनायकम् ॥ ५८
स्तुत्या धनुर्धरश्चान्यं बद्धाञ्जलिका इमे । विघ्नेशाऽऽसामिरमरैरसुरस्य दुरात्मनः ॥ ५९

पुरतो गजवक्त्रस्य यत्कृतं कुट्टनादिकम् । तत् स्वामिन् पुरतस्तेऽद्यप्रभृत्यस्तु महात्मनः ॥ ६०
न विस्मृतिं प्रपेदेन मद्रक्षाकारणस्य भो । एवं त्वत्पुरतो मर्त्या ये कुर्वन्ति क्रियामिमाम् ॥ ६१
तेषामभीष्टदो नित्यं भवदेव भवात्मज । ततो लब्धवरास्सर्वे नत्वा कुट्टनपूर्वकम् ।
स्वपदानि ययुः प्रीत्या देवा विघ्नेश्वराज्ञया ॥ ६२

आख्यानमेतद्भगवतो मयाऽत्र प्रजापते वर्णितमानुपूर्व्यात् ।
गणेश्वरस्यामितवैभवस्य किं तावता रूपमीश्वरस्य ॥ ६३

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे अष्टाविंशोऽध्यायः ॥

---

॥ अथ एकोनत्रिंशोऽध्यायः ॥

श्री परमेश्वरस्य निर्गुणत्व निरूपणम् ॥

तामसत्वं शिवस्याथ यदुक्तं त्वया दक्ष प्रजापते । शृणु तत्र ब्रवीम्यद्य चरित्रं भवधामतः ॥ १
गुणातीतो महादेवः कल्याणगुणभूषणः । अनन्तमहिमाधारः परञ्ज्योतिः परात्परः ॥ २
सत्त्वं रजस्तमश्चेति गुणान् सृष्ट्वा पुरा शिवः । रजसा योज्य धातारं स्रष्टुं लोकान्मतिं ददौ ॥ ३
सत्त्वेन विष्णुं संयोज्य पालनाय मतिं ददौ । अन्यैः कर्तुमशक्यत्वात् संहारस्य सुदुस्समैः ॥ ४
अधिष्ठाय तदा शंभुस्तमस्तत्त्वोऽपि केवलः । प्रतिकल्पं महादेवस्सर्वं संहरति प्रभुः ॥ ५
अन्यथा सर्वं विधानाद्युपदेष्टा कथं शिवः । सनकादि ऋषीणां च ब्रह्मविष्ण्वादि नाकिनाम् ॥ ६
स्वच्छाकृतिः कथं यान्ये तामसश्चेद्भवेच्छिवः । सत्यं ज्ञानमनन्तं च ब्रह्मप्राह शिवं श्रुतिः ॥ ७
एवमादि महेशस्य तामसत्वेन संभवेत् । निरञ्जनं महादेवं निर्गुणं निष्कलं ध्रुवम् ॥ ८
अनन्तमहिमाधारमपरिच्छिन्नवैभवम् । अप्राकृतशरीरश्च रूपलक्षणवर्जितम् ॥ ९
अत्यन्तपरिशुद्धत्वाच्छिव इत्याह हि श्रुतिः । ब्रह्मविष्णुमुखा देवा गुणत्रयसमन्विताः ॥ १०
निद्रालस्यवशत्वाच्च कृष्णत्वात्तामसो हरिः । अहंकारादियुक्तत्वाद्राजसः परिपठ्यते ॥ ११
शिवज्ञानार्चनध्याननिष्ठत्वात्सात्त्विकश्च सः । एवं गुणत्रययुतो ब्रह्मा च चतुराननः ॥ १२
दुःखाज्ञानादियुक्तत्वात्तामसात्मा विधिस्स्मृतः । सुवर्णसदृशाकारो राजसोऽहंकृतीयुतः ॥ १३
शिवज्ञानादियुक्तत्वात्सात्त्विकोऽपि प्रजापते । एवमेव जगत्सर्वं गुणत्रयमयं किल ॥ १४
शिवस्तु निर्गुणश्शान्तः केवलं ज्ञानरूपवान् । चराचराणां सर्वेषामन्तरात्मा महेश्वरः ॥ १५
कल्पभेदोपचारेण तामसो भाति नान्यथा । निर्वाणादि यथाप्रोक्तं तामसान्तं चरित्रकम् ॥ १६
शिवस्य दारुकारण्यनिलयानां महर्षीणाम् । द्विसहस्रोत्तरपञ्चाशत्सहस्राणां च रक्षितुम् ॥ १७
तत्तद्रक्षाविधौ स्यात्तच्चरितं तत्तदीरितम् । तस्मात्त्वमपि यज्ञेऽस्मिन्यज्ञ यज्ञेश्वरं शिवम् ॥ १८
स एव भगवांस्त्वाञ्च दक्ष रक्षति सर्वतः । एवमुक्ते ऋषिवरे दधीचे पुनरेव सः ॥ १९
यो वा को वा भवत्वेष न तस्मै दीयते हविः । यत्किञ्चिदपि वक्तव्यं त्वया नैवात्र तापस ॥ २०
गच्छ गच्छ यथामार्गं मुक्त्वा वाचालतामिह । इत्युक्तवति दक्षेऽस्मिन् पुनः कोपाकुलो ऋषिः ॥ २१
निगृह्य कोपं यत्नेन स्वान्तरेव वचोऽब्रवीत् । अध्वरे ये महादेवं न यजन्ति द्विजाधमाः ॥ २२
न तेषां तत्फलं किन्तु विपरीतफलं भवेत् । तस्मात् त्वदीय यज्ञस्य विच्छेदो भवति ध्रुवम् ॥ २३

छिन्नं तव शिरस्सद्यो भविष्यति न संशयः । एतैश्च सकलैर्देवै र्भोक्तुमभ्यागतै र्हविः ॥ २४
इत्युक्त्वाऽथ द्विजान्वीक्ष्य यज्ञवाटमुपागतान् । यूयं विप्राधमास्सर्वे कुशास्त्रासक्तमानसाः ॥ २५
शिवद्रोहपरा नित्यं शिवार्चनपराङ्मुखाः । वेदमार्गैकविमुखा शिवप्रियविनिन्दकाः ॥ २६
नरकेषु च सर्वेषु पततात्यन्तदुःखिताः । शपित्वैवं ऋषिवरः सशिष्यैस्साकमीश्वरम् ॥
ध्यात्वा हृत्पद्मनिलये स्वाश्रमं प्रययौ द्विजाः ॥ २७

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे एकोनत्रिंशोऽध्यायः ॥

---

॥ अथ त्रिंशोऽध्यायः ॥

दक्षेण दाक्षायण्याः तिरस्कारः ॥

गते ऋषिवरे तस्मिन्दक्षस्यास्य दुरात्मनः । बलं वीर्यं धृतिः कीर्तिस्संपदश्चाथ निर्ययुः ॥ १
ततो दक्षस्य भूपृष्ठे ध्वजदण्डो द्विधाऽपतत् । मंगलतन्तुर्भार्यायाः कण्ठाच्छिन्नः पपात ह ॥ २
तस्थिरे काककङ्काद्याः यूपस्तंभे समोपते । एवमादीनि वीक्ष्यापि दुर्निमित्तानि दुर्मनाः ॥ ३
परित्यक्तभयो विष्णुं पूजयित्वाऽथ पद्मजम् । देवतानामृषीणाञ्च कृतवानोपचारवान् ॥ ४
तथा दुहितृवर्गान् भूषणैर्वसनैरपि । मानयन् ब्राह्मणान् सर्वान् कामधेनुसमर्पितैः ॥ ५
भोजयन्नशनै र्भक्ष्यैः कल्पवृक्षविनिर्मितैः । भूषणैर्मणिभि र्दिव्यै श्चिन्तामणिसमुद्भवैः ॥ ६
तोषयामास बहुभिस्तत्र तान् समुपागतान् । एतान्सर्वाणि सर्वेऽपि वाशीषमुद्दिजाः परे ॥ ७
गृहीत्वा केचिदभ्यत्र स्वाण्याशु पुनरागता । रथानां तुरगाणां च गजानां च महारवाः ॥ ८
यस्तुल्ताय शालायां विशालायां समुद्ययुः । बहून्यपि विमानानि संबाधेनात्र तस्थिरे ॥ ९
रम्भाद्यप्सरसस्तत्र ननृतुस्सुमनोहरम् । जगुर्विद्याधराः केचित् कलकण्ठश्रुतिप्रियम् ॥ १०
नवधूकास्सुरास्तत्र सन्तुष्टास्तस्थिरे मुदा । दत्वा दानानि दक्षोऽपि ब्राह्मणेभ्यो यथेप्सितम् ॥ ११
अग्निं प्रज्वाल्य तरसा देवानुद्दिश्य मन्त्रतः । आहुतीः प्रददौ तेषामानुपूर्व्याद्धविर्भुजाम् ॥ १२
तत् ज्ञात्वा नारदः श्रीमान् कैलासमचलाधिपम् । गत्वा तत्र महादेवं साम्बं भक्त्या प्रणम्य तम् ॥ १३
वृत्तान्तमेतत् प्रोवाच बद्धाञ्जलिकरो ऋषिः । भावरेशाय भवते दक्षो यज्ञसुतोऽव्ययम् ॥ १४
अदत्वाय हविर्भागमन्यान्देवान्यजत्यलम् । यज्ञेश्वरे त्वयि शिव विमुखो दुर्मना इति ॥ १५
तदा तद्वचनं गौरी श्रुत्वा विस्मितमानसा । दक्षस्य तस्य तं यागं द्रष्टुं निश्चितमानसा ॥ १६
प्रणम्य देवमीशानं प्रोवाच परमेश्वरम् । दृष्ट्वाऽत्र यागं देवेश पुनरायामि शीघ्रतः ॥ १७
अनुज्ञां कुरु यागार्थे मम सर्वेश्वराधुना । इति भार्यावचश्श्रुत्वा स्मयमानमुखाम्बुजः ॥ १८
कथं गच्छसि कल्याणि त्वामनाहूय मोहतः । दक्षोऽयमस्मान्मुक्त्वान्यान् देवान्सपर्यन्यजत्यसम् ॥ १९
ततश्च तव यागाय निषिद्धा खलु भामिनि । इति शंभोस्समाकर्ण्य दक्षकन्या शिवावरा ॥ २०
पुनः प्राह पितृस्नेहाल्लोकयात्रा विधित्सया । क्षमस्व मन्तुं दक्षस्य किञ्चित्तस्य शिवाधुना ॥ २१
वीक्ष्य यागमहं तस्य समायास्यामि शीघ्रतः । आज्ञया तव देवेश सोत्सुकैवमुमा तदा ॥ २२
प्रणनाम महादेवं दण्डवद्विनयेन सा । तथेति स महादेवः प्रेषयामास तां शिवाम् ॥ २३
शिवाज्ञया गणास्तस्य विमानं निर्मिरे महत् । अनेककोटिसूर्याभं नानारत्नविचित्रितम् ॥ २४

सर्वालङ्कारसंयुक्तमाल्यैतच्छिया तदा । सुमालिनीमालिनीभ्यां धृतदिव्यातपत्रका ॥ २५
मंगलासुमनोभ्यां च वीज्यमाना च चामरैः । मार्यया नन्दिकेशस्य सुकेश्या शोभनांगया ॥ २६
धृतनानामणिप्रोतपादुका सुमनोहरा । अनिन्दिता कमलिनी विकीर्यत्पुष्पसन्ततिः ॥ २७
तालवृन्तापराभिश्च दिव्यस्त्रीभिः परिवृता । वीटिकापेटिकाभिश्च तथा दर्पणपाणिभिः ॥ २८
स्रग्गन्धवस्त्राभरणपेटिकाकोटिभि स्तथा । नृत्यद्भिरप्सरस्संघैस्सुकुमारांगयष्टिभिः ॥ २९
गायद्भिर्विमानानि बहून्यपि सखीजनैः । शुकहस्ताभिरन्याभिः पिकहंसात्मपाणिभिः ॥ ३०
शारिकादिकराभिश्च सुन्दरीभिः परिवृता । एवमादिभिरन्याभिर्दिव्यस्त्रीभिरियं क्षणात् ॥ ३१
प्रतस्थे वाद्यघोषेण महता परमेश्वरी । धृतच्छत्राणि भूतानि वृषभध्वजपूर्वकम् ॥ ३२
धृतायुधानि चान्यानि तदा द्वादशकोटयः । निर्ययुस्तानि सर्वाणि महाकोलाहलारवैः ॥ ३३
सौमनस्यात्ययगणाः प्रपश्येमां पदे पदे । महता संभ्रमेणैव यागशालामियं ययौ ॥ ३४
अवरुह्य विमानात् स्वाहाय वृक्षान्तिकं शिवा । तदा दक्षस्सुतामेनामवमत्य दुरात्मवान् ॥ ३५
अमङ्गलस्य पतिरविज्ञातकुलोद्भवः । अनाचाररतो नित्यमतादृतस्ततो मया ॥ ३६
तदर्थायां मया नैवाहूता किल मखे परे । तथापि त्वं वृथाशांवादां प्रागता ननु ॥ ३७
गच्छ तासहसा पर्युर्गेहमेव श्मशानकम् । इत्युक्तवति दक्षेऽस्मिन् दुराचारे शिवाऽवदत् ॥ ३८
सोदर्यो मम सर्वास्ताश्च त्वया संमानिताः खलु । तासाञ्च पतयस्तात तथा सर्वेऽपि मानिताः ॥ ३९
अन्येऽपि बान्धवास्सर्वे पूजितास्तात त्वया ततः । मत्पतिं मां च यागेऽस्मिन्नस्मं मैव गणयस्यहो ॥ ४०
आगतायां मयि तथाप्यहो कोपाकुलो भवान् । पुनर्गच्छेति वदसि त्वं मामत्र समागताम् ॥ ४१
अपराधं मया किं वा चरितश्श्रेयसे न ते । इति गौर्या वचश्श्रुत्वा पुनर्दक्षप्रजापतिः ॥ ४२
तदर्थायां त्वं च नैवास्मयागं द्रष्टुमिहार्हसि ॥ ४३

सर्वांस्ता अपि मे पुत्र्यस्समाहूता मयाऽत्र ताः । तासाञ्च पतयस्सर्वे मम जामातरस्तु ते ॥ ४४
न जामाता [illegible] पतिर्न पुत्री त्वं च सत्यतः । तासामेव प्रयच्छामि वाञ्छितानि मदिच्छया ॥ ४५
सर्वदा मां विचार्यैता तिष्ठन्ति त्वं न तादृशी । अस्मात्तव पतेर्यागे न दास्यामि हविर्वरम् ॥ ४६
वेदवाक्येन तस्यापि हविः प्रोक्तं तथाप्यहम् । अगणय्यैतमधुना बलाद्य हतोद्यमः ॥ ४७
नियागमभिद्वारेण न वक्तव्यं त्वया वचः । तद्गच्छ तूष्णीं पुरतो मम लज्जां विहाय च ॥ ४८
इति तस्य वचः श्रुत्वा तस्यै गौरी क्रुधान्विता । तदा सर्वेऽपि तत्रत्या विष्णुर्देवी समीक्ष्य ते ॥ ४९
विमलाख्या सखी गौर्यास्तदा तां संप्रणम्य सा । कोपं संहर देवेशि माता त्वं जगतोऽस्य भो ॥ ५०
त्वत्कोपेन जगत्सर्वं संबाधं भवति ध्रुवम् । उपसंहर कल्याणि कोपमेतद्दुरासदम् ॥ ५१
इत्युक्त्वा सा पुनर्भूमौ दण्डवत्प्रणनाम च । तदा दक्षसुता गौरी कोपं मुक्त्वा समीक्ष्य तम् ॥ ५२
दक्षमेनं दुरात्मानं प्रोवाच वचनं पुनः । दूषणं देवदेवस्य यत्कृतं दक्ष सांप्रतम् ॥ ५३
सत्यधं तेन मच्चित्तं नितरामत्र वर्तते । मद्रूपेण न तथा सदा मे त्वत्कृतेन हि ॥ ५४
निरञ्जनं निराधारं निर्गुणं निरुपद्रवम् । सर्वेशं सर्वविद्यानामादिकर्तारमव्ययम् ॥ ५५
तत्त्वातीतं शिवं शान्तं शङ्करं प्रणतार्तिहम् । तामस मोहचानमोहाद्दक्षो यायं तवेदशम् ॥ ५६
सर्वसंहारकर्तृत्वात्सतामस इवाभवत् । तस्मै देयो हविर्भागस्सादिपूज्यो नचेतरः ॥ ५७
यन्नाम परमं पावा शिव इत्यक्षरद्वयम् । सकृज्जपति यत्पापी जनोमोक्षं स विन्दति ॥ ५८

यो विनिन्दति सर्वेशं संसारान्मोक्षकारकम् । तस्य पापस्य सहसा समायाति महद्भयम् ॥ ५९
एवं शिवस्य महिमा श्रूयते हि श्रुतौ तराम् । तस्मात्त्वमपि पापात्मा शिवनिन्दापरायणः ॥ ६०
विनश्यसि न सन्देहः क्षिप्रेणात्र शिवाज्ञया । इत्युक्त्वा सा महादेवी विमानं दिव्यमास्थिता ॥ ६१
निवृत्य सहसा प्राप कैलासं पर्वतोत्तमम् । तत्र दृष्ट्वा महादेवं प्रणम्य परया मुदा ॥ ६२
वृत्तान्तमुक्त्वा देवेशी प्रार्थयामास तद्वधम् । अशृण्वन्निव तस्येत्थं तदा शंभुरुमाधवः ॥ ६३
पुनश्च शांकरी देवं प्रणम्य भुविदण्डवत् । शम्भो सर्वेश विश्वेश विश्वरक्षापरायण ॥ ६४
प्रशान्तरागद्वेषस्त्वं करुणामृतसागर । उच्छिद्य यज्ञमेतस्य तं च संहर शीघ्रतः ॥ ६५
स तु पापी दुराचारः शिवनिन्दापरायणः । सर्वलोकहितं तस्मान्ममेप्सपूरणं तदा ॥ ६६

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे त्रिंशोऽध्यायः ॥

---

॥ अथ एकत्रिंशोऽध्यायः ॥

॥ शिवेन दक्षयाग ध्वंसनाय वीरभद्रप्रेषणम् ॥

इति गौर्याः स्तुतिं श्रुत्वा महादेवोऽखिलाशनः । सस्मार मनसा वीरं वीराणां भक्तभद्रदम् ॥ १
वीरभद्रं महाकायं सर्वलोकैकनायकम् । तदा अथमयेत्युच्चैः प्रादुरासीच्छस्वयम् ॥ २
ललाटचण्डनयनवह्निकुण्डान्महेशितुः । महाद्रिशिखरप्रख्य शिरस्सहस्रकैर्युतः ॥ ३
द्विसहस्रभुजैः स्थूलैरायतैरतिभैरवैः । खड्गखेटगदाचक्रवज्रशूलधनुर्धरान् ॥ ४
मुसलप्रासनाराचतुलायुधततिं वहन् । विष्ण्वादिदेवनिकरमुण्डमालोज्ज्वलाकृतिः ॥ ५
करस्थितमहाघण्टाविजयारावभीषणः । स्फुरद्रक्तप्रभाभास्वज्जटामकुटमण्डितः ॥ ६
आरक्तपृथुलाकारो घोरदंष्ट्रो महाहनुः । नानारत्नौघखचितदिव्यमञ्जीरपादवान् ॥ ७
यमद्धिचयात्युग्रलोचन त्रिसहस्रकः । श्रीपर्णं शङ्खमादाय नादयन् लीलया तराम् ॥ ८
यमपाशपुटैर्बद्धिमहद्धासमहारवः । धाराढ्यं दन्तमादाय कच्छपाह्वं तथा महत् ॥ ९
विष्णुमहाविदेवानामस्थिमालामनोहरः । संभ्राम्य खड्गं हस्तेन धून्वन् खेटमितस्ततः ॥ १०
घोषमण्डानि सर्वाणि करेणच परीवृतः । यावन्नितस्ततस्तूर्णं कृत्वा कोलाहलारवम् ॥ ११
भोगिभोगसमग्रभुजभूषणसर्पवान् । अनेकरत्नखचितभूषणैरपि भूषितः ॥ १२
भूतिभूषितसर्वाङ्गो रुद्राक्षकृतभूषणः । हरिचन्दनसंलिप्तललाटोरःप्रदेशवान् ॥ १३
दाक्षायण्यास्तदा कोपाद्भद्रकाली भयंकरी । तादृशी निरगाच्चण्डा कृत्वा कोलाहलारवम् ॥ १४
भद्रकालीवीरभद्रौ पार्वतीपरमेश्वरौ । कृतप्रदक्षिणौ नत्वा तस्थाते पुरतस्तयोः ॥ १५
वीरभद्रस्तदा देवं वीक्ष्य प्राह भयान्वितः । जय शम्भो महादेव क्षयवीर पिनाकधृक् ॥ [illegible]
आज्ञापय भयद्धासं यत्कुत्रापि शंकर । यद्वा हरिः किं नेतव्यो ब्रह्मा वा भयवन्तिदम् ॥ १७
तवाज्ञया जगत्सर्वं सुरानिन्द्रमुखानुत । राक्षसान् किन्नरान् यक्षांस्तत्सहलोकान् परानपि ॥ १८
अद्रीन्वापि विश्लेष्य पेषयामि करैरुत । किं करोम्यहमीशान तव स्मृतिपथं गतः ॥ १९
इत्युक्त्वा विनयेनायं तस्थौ बद्धाञ्जलिः पुरः । ततः प्रभुस्समुद्वीक्ष्य वीरभद्रं महाबलम् ॥ २०
भद्र वीर महासत्त्व मदाज्ञापरिपालक । मुक्त्वा मामधुना दक्षस्सर्वान् देवान्यजत्यलम् ॥ २१

तत्र गत्वा हविर्भागं पृष्ट्वा [illegible] मामकं चरम् । दक्षश्चेत्तद्गृही वाशु समागच्छ मदन्तिकम् ॥ २२
न प्रयच्छति चेद्दक्षस्तदा तममरैस्सह । हत्वा शिरस्समुच्छिद्य यागमध्ये दुराशयम् ॥ २३
तिष्ठ तत्र तदाऽहञ्च समायास्यामि शीघ्रत । इत्युक्त्वा प्रेषयामास वीरभद्रं महेश्वर ॥ २४
अथ देव प्रणम्याथ प्रनम्ये सहभावली । कृत्वा कोलाहलारावं परमानन्दनिर्भर ॥ २५
ससर्ज वीरानतुलान्निश्वासोच्छ्वासयोस्तथा । रोमकूपेषु सर्वेषु नासाकर्णपुटेष्वपि ॥ २६
स्वेदबिन्दुषु नेत्रेषु जटाग्रोर्ध्वकेष्वपि । वक्षोबाहु गलेष्वन्यान् जानुजङ्घात्रिकेष्वपि ॥ २७
नाभीकटीमुखेष्वेवमङ्गेष्वास्यसमान्बहून् । गणान् भूतानिभूतीश्च क्षणमात्रेण लीलया ॥ २८
तदानीं प्रस्थिता साऽपि भद्रकाली शिवाज्ञया । कालीस्वसदृशा वह्व्यो नानावर्णास्ससर्ज ह ॥ २९
नीलरक्तधवलश्यामा पीतकर्बुरवर्णका । शार्दूलसिंहशरभगजाश्ववृषभाननाः ॥ ३०
भल्लूकमार्जारकाश्वगवयादिमुखास्तथा । नानायुधकरास्सर्वास्सर्वे नानाविधायुधाः ॥ ३१
नानावर्णास्तथा सर्वे नानाविधमुखा गणा । नानाभूषणदीप्ताग्न्यर्कण्डपद्मविलोचना ॥ ३२
महासत्वा महावेगा महाविष्णवस्थिमालिका । ब्रह्माण्डशालामशेषाणां पिण्डीकरणपण्डिताः ॥ ३३
भस्मभण्डानि सर्वाणि पाडयञ्च क्षुदन्विता । एव विधानि भूतानि वीरा काल्यो विभीषणाः ॥ ३४
मोहिन्यश्चैव शाकिन्यो डाकिन्यो योगिनीगणा । भैरव्य कालरात्र्यश्च कृतकोलाहलारवा ॥ ३५
सर्वे सर्वाश्च सर्वाणि निर्जग्मुस्तुमुल तौ । भानुकपादयस्सर्वे गणा वाद्यान्यताडयन् ॥ ३६
छत्रचामरकेत्वादिधारिणो निर्गता द्रुतम् । नानोपचारनिरता परे सर्वेऽपि निर्ययु ॥ ३७
पिनाकिरण्डिमुखा धूतछत्रा विनिर्ययुः । क्षणेन सर्वे दक्षस्य यज्ञपूर्णवेश्म तत् ॥ ३८
चकम्पिरे तदा सर्वे जना लोकाश्चतुर्दश । तदानीं वीरभद्रस्तु वीरान्वीक्ष्य परानपि ॥ ३९
आवृत्य शाला महतीं यूय तिष्ठत हे गणा । ये तिष्ठन्त्यत्र शालायां भोक्तुमभ्यागतास्सुरा ॥ ४०
कश्चिद्य तेऽन्यथा सर्वे निर्गमिष्यन्ति वञ्चका । स्थातव्यमवधानेन युष्माभिस्त्विदिहाधुना ॥ ४१

इति श्री स्कान्द महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे एकत्रिंशोऽध्याय ॥

---

॥ अथ द्वात्रिंशोऽध्याय ॥

दक्षनिकटे वीरभद्रेण शिवाय हविर्भागदान चोदना ॥

इत्युक्त्वा वीरभद्रस्तु भद्रकाली सहायवान् । विवेश यागसदनं सर्वदेवगणाकुलम् ॥ १
प्रविष्टे वीरभद्रेऽस्मिन्यागशाला मनोरमाम् । तदा गणा इमे यागशालामावृत्य पापिन ॥ २
तत्पालकान् भटान्सर्वान् हत्वा कृत्वा महारवम् । तस्थुस्ते सावधानेन वीरभद्रस्य शासनात् ॥ ३
वीरभद्रं तदा वीक्ष्य विष्णुब्रह्ममुखास्सुरा । सहायां च भद्रकाल्या भीता प्रोचु परस्परम् ॥ ४
कावेतावतुलाकारौ भ्रुकुटीकुटिलेक्षणौ । पार्वतीपरमेशानकोपोद्भूताविमौ ध्रुवम् ॥ ५
आययो रीदृशः कोप कथ [illegible] स्यादुपक्रम । इति केचित्सुरा वाचमथ प्रोचुस्तदानता ॥ ६
विनाशकालस्सम्प्राप्तस्सर्वेषां नास्त्यनाथिह । इत्यथ केचिदमरा ध्वस्तमूचु परस्परम् ॥ ७
शिवस्य शिवभक्तस्य निन्दका येच पापिन । तपामाशा अथदेवी वाक्यमेतत् ध्रुव श्रुते ॥ ८
इत्येतद्धि दक्षोऽस्मिन्निदानीमिति चोदिरे । शिवनिन्दापराणाश्च गोष्ठ्या ये निवसन्ति ते ॥ ९

विनश्यन्तीति वचनं शैवस्यास्मात्तु तद् ध्रुवम् । किमर्थं मतिरुत्पन्ना यागे दक्षस्य पापिनः ॥ १०
अनयाहि सुराणांच युगपन्मृतिरागता । अस्मानपि सुरान्सर्वान् स्वप्रयोजनकारिणः ॥ ११
मत्वा सर्वात्मना सत्त्वविहीनान् वन्यजादिवत् । प्रवृत्तोऽयं महादेवं मुक्त्वा यागे सुनिश्चितः ॥ १२
तस्माद्देवागतो मृत्युस्सर्वेषामीश्वराज्ञया । इत्यूचुः केचिदमरा महाभयसमन्विताः ॥ १३
दाक्षायण्यवमानेन सर्वलोकजनन्यसौ । विनिर्गता हतश्शीघ्रं तत्फलं समुपस्थितम् ॥ १४
इति नानाप्रकारेण वदत्स्वेतेषु नाकिषु । वीरभद्रस्तदा काल्याऽऽगत्य दक्षान्तिकं क्रुधा ॥ १५
कृत्वा कोलाहलारावं नादयञ्छृङ्गमद्भुतम् । विहस्य तस्थे पुरतो दीक्षितस्सुरपुङ्गवैः ॥ १६
शृङ्गध्वनिं समाकर्ण्य सुराः केचन दुद्रुवुः । अस्फुटच्च तदा मेरुर्धरित्र्या सह शीघ्रतः ॥ १७
मुमुहुः सर्वलोकस्थाः प्राणिनस्सकला अपि । भीतास्सुराश्च तत्रस्था मुमुहुः पतिता भुवि ॥ १८
शालायाश्च बहिर्देशं प्राप्य केचित्सुरास्ततः । वीरैर्व्यापादिताः क्षिप्राः पुनश्शालामवापिरे ॥ १९
एवमेतेषु सर्वेषु भयं प्राप्तेषु नाकिषु । मुमोह दक्षः पापिष्ठस्तदानीं बहुविह्वलः ॥ २०
पुनस्संज्ञातविज्ञानस्सदाऽत्यन्तं भयान्वितः । वीरभद्रं समीक्ष्यायं निजगाद वचस्तदा ॥ २१
कस्त्वं किमर्थं संप्राप्तः कुतो देवाग्महाबल । इत्युक्तवति दक्षेऽस्मिन्वीरः प्राह गभीरवाक् ॥ २२
विद्धि मां देवदेवस्य महादेवस्य शूलिनः । आत्मजं तस्य यागे ते हविरादातुमागतम् ॥ २३
तद् त्वं दक्ष हविर्दांभोदेहि शीघ्रमिहाध्वरे । इत्युक्तो वीरभद्रेण दक्षः प्राह पुनर्वचः ॥ २४
न दीयते हविर्भागो यागेऽस्मिञ्छङ्करस्य वै । मुक्त्वा तं तामसं देवान् हविर्भिः प्रीणयाम्यहम् ॥ २५
एवं वादिनि दक्षेऽस्मिन्ब्राह्मणो भयकंपितः । प्रश्रयेण समुत्थाय प्राह वाक्यं तदा द्विजाः ॥ २६
अध्वरेशं महादेवं हविर्भिः प्रीणयाधुना । तस्याज्ञया जगत्सर्वं समर्यादं हि वर्तते ॥ २७
स यथार्हति देवेशो हविषः प्रथमस्य हि । सत्यं सत्यं ब्रवीम्यद्य तव दक्ष प्रजापते ॥ २८
इति वेदवचश्श्रुत्वाऽप्ययं दक्षप्रजापतिः । न दातुमैच्छद्देवस्य हविर्वैरमदो द्विजाः ॥ २९
तदानीमेव वेदोऽसौ स्तुत्वा सांबं महेश्वरम् । वीरभद्रं प्रणम्याशु प्रश्रयेण तदाज्ञया ॥ ३०
स्वपदं प्राप तरसा ब्राह्मणानामधीश्वरः । एवमुक्त्वा गते वेदे वीरभद्रः पुनः क्रुधा ॥ ३१
दक्षं वीक्ष्य दुराचारं देवसङ्घाग्रमध्वरे । उवाचेनं महासत्त्वशिवाग्रगः मनसा स्मरन् ॥ ३२
दक्षः — न मया दीयते भागो रुद्रस्य कुकर्मणः । भूतैः प्रेतैः पिशाचैश्च सर्वदा संचरत्ययम् ॥ ३३
तस्माद्यज्ञे मदीयेऽसौ हविर्भोक्तुमसांप्रतम् । इत्युवाच दुराचारश्श्रुत्योर्नाशयद्वचः ॥ ३४
तस्य तद्वचनं श्रुत्वा वीरभद्रः प्रतापवान् । युष्माकममरास्सर्वे संमतं किं वचोऽस्य वै ॥ ३५
इति पप्रच्छ तत्रस्थान् ब्रह्मविष्णुमुखान्सुरान् । वीरभद्रस्य वचनमशृण्वन्त इवामराः ॥
तस्थुर्नताननास्सर्वे मोहविघ्ननिजान्तराः ॥ ३६

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे द्वात्रिंशोऽध्यायः ॥

---

॥ अथ त्रयस्त्रिंशोऽध्यायः ॥

श्री वीरभद्रेण सपरिवारस्य दक्षस्य देवानाञ्च वधादि शिक्षणम् ॥

तदैतदखिलं दृष्ट्वा वीरभद्रो महाबलः । कृत्वा कोलाहलारावं ब्रह्माण्डं स्फोटयन्निव ॥ १
दण्डेनाताडयद्विष्णोरुरोमध्येऽतिवीर्यवान् । तदामौ कौस्तुभं रत्नं पद्मा च तदुरोगता ॥ २
भिन्ना पपात शतशो भूमिपृष्ठे द्विजोत्तमाः । पतित्वा तरसा विष्णुर्मुमोह गतविक्रमः ॥ ३
विधातारं ततो मूर्ध्नि मुष्टिनाकुट्टयद्विभुः । पपात सोऽपि मोहेन यावत्तूर्णं प्रजापतिः ॥ ४
गायत्रीमपि सावित्रीं ब्रह्माणीमपि निर्गताम् । छिन्ननासाकुचाग्रान्ते करवालेन वीरपः ॥ ५
ततो देवाः परा भीता दुद्रुवुस्सर्वतो बहिः । वह्निर्भूतैश्च वीरैश्च द्राविताः पुनरन्तरम् ॥ ६
ततस्तु चन्द्रं धावन्तं पादेनाताड्य सत्ववान् । पेषयित्वा यमस्यापि शिरश्चिच्छेद निष्ठुरम् ॥ ७
कपोले ताडयामास सूर्यस्याद्भुतविक्रमः । भग्ना दन्तास्तदा तस्य निपेतुः पृथिवीतले ॥ ८
भगस्योत्पाटयामास लोचने द्वे दुरात्मनः । इन्द्रं कोकिलरूपेण निर्यान्तमपि सोऽच्छिनत् ॥ ९
अग्नेर्हस्तांश्च रसनां हविर्भोक्तुरकर्तयत् । नासिकामग्निभार्यायाः खड्गेनाच्छिनदद्भुताम् ॥ १०
दण्डेन निर्ऋतिं ताड्य जघानाभिभदा तथा । मुसलेनाप्सेनानां पतिं हत्वा महाबलः ॥ ११
समारयत्ततो वायुं पाशं परशुना द्विजाः । कुबेरं निजशूलाग्रे प्रोतयित्वा ननर्त ह ॥ १२
रुद्रास्त्वेकादश तदा सेशाना भयकंपिताः । वीरभद्रं प्रणेमुस्ते प्रणतार्तिप्रभञ्जनम् ॥ १३
तानेतान्वीरभद्रोऽसौ भर्त्सयित्वा मुमोच ह । मखुरेन्द्रं शरेणायं निरस्तुं हतवांस्तदा ॥ १४
मृगरूपेण धावन्तं यज्ञं यागगृहान्तरे । निरुध्य पुरतो गत्वा चिच्छेदाक्षेण मन्युना ॥ १५
तदेतत्सर्वमालोक्य दक्षश्चिन्तामवाप्तवान् । मयि पश्यति वीरोऽयं यच्च देवानमारयत् ॥ १६
उक्तो हि शंकरस्यास्य महिमा ब्रह्मणा पुरा । ज्ञात्वा तं देवमीशानं तपः कृत्वा सुदारुणम् ॥ १७
ऐश्वर्यं प्राप्तवानस्मि कृपयाऽस्य महेशितुः । क्षामनुष्यातु देवोऽयं मयाऽद्येन विनिन्दितः ॥ १८
क्रियमाणे पुरा यागे ब्रह्मणा मखकेन मे । न दातव्यं हविश्शंभोरिति कुण्ठीकृतं खलु ॥ १९
मयाऽपि देयं तं मुक्त्वा समाराध्यः क्रतुस्सुरैः । दधीचिना वचः प्रोक्तं न श्रुतं हितमिच्छता ॥ २०
दाक्षायण्या वचः श्रुत्वा न श्रुतं सुतरां वचः । वीरोऽयं पार्श्वविः पृच्छकमयाऽत्र विमुखीकृतः ॥ २१
प्रणवेन समुत्थाय वेदेनोक्तश्च न श्रुतम् । अनर्थ एव देवानां विष्ण्वादीनां मयाऽऽर्जितः ॥ २२
कुपितं वीरभद्रञ्च दृष्ट्वा काळीञ्च तादृशीम् । आकृतानि च भूतानि ज्ञात्वा मन्युमहाननुधन् ॥ २३
अभीरिव तदा भीतो मौनं तस्थे द्विजोत्तमाः । वीरभद्रस्समुद्धृत्य खड्गमादाय वेगतः ॥ २४
चिच्छेद तस्य मूर्धानं दक्षस्यास्य दुरात्मनः । निष्कृतिश्शिवनिन्दाया वीरेणात्रोपपादिता ॥ २५
अग्नौ प्रक्षेपयामास शिरश्छिन्नं दुरात्मनः । तदानीमभवद्भस्म केवलं तत् द्विजोत्तमाः ॥ २६
हतं दक्षं ततो दृष्ट्वा तत्पत्नी वेदवल्लिका । तत्पुत्रो बान्धवाश्चान्ये परिययुस्समंततः ॥ २७
वेदवल्यास्तदा कर्णाञ्छिन्नवत्परवीरहा । वीरभद्रस्तदान्यासां भद्रकाली बलोत्कटा ॥ २८
छित्वा शिरांसि सहसा कन्दुकांश्च चकार ह । देवर्षीणां मनुष्याणां भार्याश्चान्या मनोरमाः ॥ २९
भद्रश्चैतामिमौ दत्वा वीरकाळ्योप्यनेककाः । तदाज्ञामवाप्याशु वीरकाळ्योस्तयोर्महत् ॥ ३०
यागशालाबहिर्देशे स्थितं सैन्यं दुरासदम् । स्थित्वा प्राकारमतुलं प्रविश्य यागवेश्मनि ॥ ३१

कृत्वा कोलाहलारावं सुरानन्यान् द्विजाधमान् । अपीनलैर्शितैः खड्गैः मुसलैस्तोमरैः परैः ॥ ३२
पादाघातेन हस्तैश्च जघ्नुश्च बहुधा द्विजाः । केषां शिरांसि भूतानि भिन्तन्त्यत्र दुरात्मनाम् ॥ ३३
गळान्दोंषिच केषांचिद्वभञ्जस्थीनि कोपतः । चिच्छिदुश्च शरीराणि जिह्वाः केषां तदाच्छिदन् ॥ ३४
नेत्राण्युत्पाटयामासु शरीरात्पवपाटयन् । भित्वाऽऽयुधैश्शरीराणि केषां रक्तानि चापिबन् ॥ ३५
आज्यस्थालीषु केषांचिच्छरीराणि दुरात्मनाम् । निक्षिप्य कथयित्वाऽग्नौ बुभुजुस्तन्मनोहरम् ॥ ३६
इक्षुरांशाणि केषांचिन्माळा [illegible] विनिर्मिताः । शङ्खनामारवं चाकृद्विरावसंकीर्तनं तथा ॥ ३७
पलायनपरानन्यान् सुरान्पादैरपेषयन् । मधुक्षीराज्यदध्यादि हवींषि लिलिहुस्तदा ॥ ३८
यागार्थं मागतान्मेषाश्छित्पीत्य चिच्छिदुस्तदा । भूतैरशमयन्वह्नीन् कुण्डस्थान् कोपवैभवात् ॥ ३९
ववहुर्यागशालां तां कानि भूतानि कुत्रचित् । विभिदुः कलशान् सर्वान् गहार्या गास्यपातयन् ॥ ४०
विभिदुस्स्येनवेदीश्च कृत्वा कोलाहलारवम् । विमानानि रथानश्वान्वाहनानिच नाकिनाम् ॥ ४१
आयुधानिच भूषाश्च पक्षौ चिक्षिपुरुत्क्रुधा । एवं दक्षस्य कन्याश्च आमातृन् बान्धवान् द्विजाः ॥ [illegible]
वाचामगोचरतया बाधन्तेस्मातिपापिनः । काकाश्श्येनाश्च गृध्राश्च तदा सर्वत्र तस्थिरे ॥ ४३
एवं नानाप्रकारेण हतेष्वेषु सुरास्वसु । गतमोहस्तदा विष्णुरुत्थितः कोपविह्वलः ॥ [illegible]
मृतास्वसेनास्संवीक्ष्य पार्श्वे विघ्नमुपस्थितम् । शिवनिन्दाफलमिदं नैव अहो द्विजोत्तमाः ॥ ४५
योद्धुं वीरेण तस्यासीन्मतिरात्म विनाशनी । हूतं गरुडमारुह्य सत्वरागमनाय तम् ॥ ४६
तस्मिन्नागते विष्णुः कोपशोकसमन्वितः । पुनः समाश्वयोत्थाय तार्क्ष्यमत्यं महाबलम् ॥ ४७
आरुह्य पाञ्चजन्यञ्च शङ्खं दध्मौ जनार्दनः । तदा भूतेषु काळीषु ववर्ष निशिताञ्छरान् ॥ ४८
प्रतिजघ्नहिरे विष्णुं काळ्यो भूतानि चायुधैः । युध्यन्तं वीक्ष्य तं विष्णुं वीरभद्रः प्रतापवान् ॥ ४९
योद्धुं तेन मतिं चक्रे विष्वक्सेनं महाकृपा । तदा शिवाज्ञया तत्र रथः कश्चित्समागतः ॥ ५०
सहस्रैर्वतुरगयुतश्चित्रध्वजावृतः । अनेकैरायुधैः पूर्णो दिव्यमालापरिष्कृतः ॥ ५१
गतमोहस्तदा धाता विष्णुं वीक्ष्य युधि स्थितम् । मत्वाध्वंसं सुराणाञ्च मरणं भयकंपितः ॥ ५२

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे त्रयस्त्रिंशोऽध्यायः ॥

---

## ॥ अथ चतुस्त्रिंशोऽध्यायः ॥
### ॥ विष्णुना श्रीवीरभद्र प्रसादकरणम् ॥

समयो मम रक्षाया इत्थंभात इति निश्चितः । स्वयं तु सारथिं भूत्वा रथमारुह्य शीघ्रतः ॥ १
वीरभद्रस्य निकटमानयत्तं रथं परम् । अवरुह्य रथादस्मात् वीरभद्रं प्रणम्य सः ॥ २
शिवाज्ञया रथश्रेष्ठो भवते समुपस्थितः । अलंकुरु महासत्त्व स्थिते मयि [illegible] सारथौ ॥ ३
भद्रकाळ्याऽन्वया वीरसमरागच्छ ते प्रभो । इत्युक्त्वा प्रणनामायं दण्डवत्पृथिवीतले ॥ ४
वीरभद्रस्ततस्तस्मिन् मुक्त्वा कोपं महाबलः । आरुह्य भद्रकाळ्या तं रथं सर्वायुधावृतम् ॥ ५
ब्रह्मणा कृतसारथ्यो विष्णो रुपरि निर्ययौ । तदानीं माधवो वीरं निजगाद वचो द्विजाः ॥ ६
शिवनिन्दारतस्यास्य युक्ता दक्षस्य तावकी । न हि वध्यास्सुरास्तत्र सर्वे निकटवर्तिनः ॥ ७
इति विष्णोर्वचः श्रुत्वा वीरभद्रो महाबलः । ये विनिन्दन्ति देवेशं महापापा महेश्वरम् ॥ ८

तद्गोष्ठ्यां निवसन्त्यन्ये ये च ते पापिनः स्मृताः । आज्ञामस्मीयां सर्वेषां विधत्ते वैदिकी श्रुतिः ॥ ९
तथैव कृतवानस्मि त्वां न मुञ्चामि माधव । इत्युक्तो माधवः कोपाद्भूतेषु निशितान् शरान् ॥ १०
ववर्ष उग्रमहाद्रावो युगपद्धर्ममेघवत् । तं दृष्ट्वा वीरभद्रोऽपि धनुरादाय निष्ठुरम् ॥ ११
उभया संयोऽत्र सहसा ववर्षास्त्राणि माधवे । पुनस्सहस्रं बाणानां निशितानां हरिः क्रुधा ॥ १२
मुमोच वीरभद्रेऽस्मिन् सर्वशत्रुविमर्दके । तान्बाणान्वीरभद्रोऽसौ छित्वात्यन्तपराक्रमः ॥ १३
बाणमेकं पुनर्विष्णोः शिथिले योजयच्छितम् । स्रवद्रुधिरवाहेन परिप्लुष्टो हरिस्तदा ॥ १४
पतित्वा भूतले क्षिप्रं मुमोह गतचेतनः । ससंभ्रमं समुत्थाय पुनर्नारायणो बली ॥ १५
ववर्ष सायकानुग्रान्वीरभद्रं प्रति क्रुधा । तांश्च सर्वान्स्वयं छित्वा कृत्वा किलिकिलारवम् ॥ १६
माहेयं सर्वशत्रुघ्नं सन्दधे मधुसूदने । बलेनानेन मधुभिन्मुमोह भृशमातुरः ॥ १७
समुत्थितः पुनर्मोहात् क्षणेन मधुसूदनम् । कुरु युद्धं मयेत्याह वीरभद्रो महाबलः ॥ १८
तस्य तद्वचनं श्रुत्वा विष्णुः कोपाकुलान्तरः । ववर्ष दैवतास्त्राणि शतशोऽथ सहस्रशः ॥ १९
तान्यच्छिनत्तदा वीरः प्रागभामरसायकैः । ततस्तु सन्दधे विष्णुर्ब्रह्मास्त्रमरिन्दमम् ॥ २०
तदप्यच्छिनदेकेन वीरभद्रः प्रतापवान् । पुनश्च सायकान् घोरान्माधवः प्राहिणोत् क्रुधा ॥ २१
तानेकेन शरेणायं छित्वा शार्ङ्गं धनुर्वरम् । चिच्छेद वीरभद्रोऽयं लीलयैव द्विजोत्तमाः ॥ २२
आविध्यद्धृदं द्वाभ्यां सायकाभ्यां पुनर्बली । ततस्तु माधवः कोपात्तार्क्ष्यं पञ्चत्वमागतम् ॥ २३
क्षमीश्चानेकरूपाणि स्वानि जग्राह शीघ्रतः । स तदा तानि रूपाणि माधवस्यातिमायिनः ॥ २४
ददाह चण्डमिहिरवह्निना क्षणमात्रतः । एक एव तदा विष्णुरेतस्मिन्नक्षुब्धबलम् ॥ २५
तत्याज सर्वशत्रुमुखोपरि वेगतः । अनेन महताऽभ्याशमागतं तन्महाप्रभम् ॥ २६
सगृहीत्पाणिना शीघ्रं लीलयाऽमितविक्रमः । ततो दण्डं समादाय कालदण्डमिवस्थितम् ॥ २७
संस्फाल्य महते तस्मिन् प्रयत्नेनाक्षिपद्धरिः । धूलीचकार तं वीरं स्वदण्डेनाभिताड्य च ॥ २८
पुनः किलिकिलारावं कृत्वा कोपाकुलाननः । चक्रमादाय वेगेन महान्तं भ्रामयन् हरिः ॥ २९
घातयिष्यंस्ततस्तूर्णं वाद्विक्षेपबलाश्रयात् । वीरभद्रस्याग्रमणमसिंहस्येव मदद्विपः ॥ ३०
समायान्तं महावेगाद्वीरभद्रोऽरिघातकः । स्तंभयामास हुंकृत्य ब्राह्मणानामधीश्वराः ॥ ३१
स्तम्भतस्त्वसौ हरिस्तूर्णं चित्रार्पित इवाचलः । वीरभद्रस्ततः किंवा कर्तुमेतमचिन्तयत् ॥ ३२
येन्दुवा ताडितुं वापि न च विधायते द्विजाः । तदाऽशरीरिणी वाणी श्रुता तत्र शिवाज्ञया ॥ ३३
कोपं संहर वीराद्य सर्वसंहारकारक । तां निशम्य शिवादैवतैर्वाचं निश्चित्य वीर्यवान् ॥ ३४
उपसंहृतवान्मन्युं स्वात्मन्येवामरेश्वराः । ततो धाता त्वयाप्रसादवत्कलातिशीघ्रतः ॥ ३५
प्रणनामाञ्जलिकरो दण्डवत्प्रणयेन तम् । ममापराधं देवेश क्षमस्व करुणाकर ॥ ३६
इति स्तुत्वा तदा वीरं प्रसन्नमकरोत् द्विजाः । पतत्स्येव समये विष्णुस्तममरेश्वरम् ॥ ३७
प्रणम्य दण्डवद्भक्त्या स्तुत्वा स्तोत्रशतैरपि । स्वागसो विनिवृत्त्यर्थं प्रार्थयामास भक्तिमान् ॥ ३८
वीरभद्र महासत्त्व शिवाज्ञापरिपालक । संसर्गोऽस्त्वस्य पापस्य शिवनिन्दारतस्य हि ॥ ३९
स्वोचितं फलमस्माभिः प्राप्तं मूढात्मभिः प्रभो । चराचराणि भूतानि भुवनानि शिवानि च ॥ ४०
ब्रह्माण्डान्यप्यशेषाणि भस्मानि तव वीक्षणात् । स्मितेन चाट्टहासेन निश्वासोच्छ्वासकैरपि ॥ ४१
तदस्माद्धु सुरेष्वीश तूलकल्पेषु देवप । लीलामात्रं विलसितं नात्र कार्या विचारणा ॥ ४२

कासि त्वं सर्वसंहर्ता क्वैते मशकास्सुराः । किं सेनया तव विभोरायुधैर्वा स्मितायुध ॥ ४३
त्वदधीनमिमाण्डं बहुना किं महाबल । शक्तिरसि शिवस्याद्य प्रकृत्याख्या जगत्प्रभोः ॥ ४४
प्राप्तं तस्मात्पुरा चक्रं वरमन्यच्च शंकरात् । शिवपूजामहिम्नैव विष्णुत्वं प्राप्तवानहम् ॥ ४५
महाबल महासत्त्व क्षमस्वागो ममाधुना । इत्युक्त्वा प्रणनामायं वीरभद्रं पुनः पुनः ॥ ४६
कृपाङ्के तदा वीरः प्रसन्नो माधवाय सः । तदन्तरे महादेवः प्रादुरासीद्वृषोपरि ॥
अंबया सह कल्याण्या नन्द्याद्यैश्च गणैस्सह ॥ ४७

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे चतुस्त्रिंशोऽध्यायः ॥

---

॥ अथ पञ्चत्रिंशोऽध्यायः ॥

दक्षादीनां उज्जीवनं तैः कृत स्तुतिश्च ॥

तं दृष्ट्वा वीरभद्रोऽसौ महादेवं जगद्गुरुम् । प्रणम्य परया भक्त्या स्तुत्वा स्तोत्रशतैरपि ॥ १
तस्थौ बद्धाञ्जलिपुटः पुरतोऽस्य महेशितुः । तस्थतुश्च तदा विष्णुब्रह्माणौ भयकंपितौ ॥ २
प्रणम्य सांबमीशानं सगणं परमेश्वरम् । दाक्षायणी तदा गौरी दृष्ट्वा देवान्मृतान् गतान् ॥ ३
एतौ बद्धाञ्जलिकरौ विधिनारायणावपि । यागस्यापि तथा ध्वंसं मृतं दक्षमपि द्विजाः ॥ ४
कृपामूर्तिं कृपायुक्ता देवं वीक्ष्य वचोऽब्रवीत् । स्वामिन्नज्ञानतो देवं त्वामविज्ञाय शङ्करम् ॥ ५
इमां दशामनुप्राप्ता दक्षसैन्यत्यन्तगर्विताः । मन्निमित्तादतस्तस्मात्सर्वानुज्जीवय प्रभो ॥ ६
इत्युक्त्वा सा महादेवी प्रणनाम महेश्वरम् । कृपामूर्तिर्वचस्तस्या हृदि कृत्वा महेश्वरः ॥ ७
वीरभद्रं समीक्ष्यैनं बद्धाञ्जलिपुटं पुरः । पुनस्सञ्जीवयाश्वेतान् वीरभद्र महाद्युते ॥ ८
इत्युक्तस्तु दयासिन्धुस्तदानीं ब्राह्मणोत्तमाः । ततश्शिवाज्ञां शिरसा वहन्वीरस्सुरानिमान् ॥ ९
समीक्ष्योज्जीवयामास कृपादृष्ट्या महाबलः । स्वापादिव तथोत्तस्थुस्सर्वे विनिद्रितास्सुराः ॥ १०
दक्षगोष्ठीनिवासोऽपि [illegible] [illegible] [illegible] स्मृतः । अथैते देवमीशानमंबिकासगणमव्ययम् ॥ ११
प्रणम्य दण्डवद्भूमौ भक्त्यात्र परया युताः । स्तुत्वा स्तोत्रैर्महादेवं वाचमूचुश्च ते द्विजाः ॥ १२
दयासिन्धो महादेव परार्थैकप्रयोजन । महापापरतास्सर्वे बहुकालफलप्रदात् ॥ १३
शिव दक्षस्य दुस्सङ्गसंभवादतिपापिनः । मोचिताश्शीघ्रकालेन वयं युगपदेव भो ॥ १४
कस्त्वां विना महादेव सुराणां मूढचेतसाम् । शरण्यश्शरणं लोकेश्वापदार्तिप्रभञ्जन ॥ १५
पुरा भागीरथीं पुण्यां शिरसा धृतवानसि । सर्वेषामेव देवानां रक्षार्थं पाणिपल्लवे ॥ १६
वह्निमप्यवहश्शंभो विषमप्यपिबः खलु । एवमादिभयेभ्यस्त्वमस्मान्प्ररक्षितवानसि ॥ १७
तस्मात्त्वमेव न स्त्राता भीतानां परमेश्वर । नमस्तेऽस्तु महादेव नमो मीढुष्टमाय ते ॥ १८
मुण्डिने जटिने तुभ्यं सर्वरक्षापरायण । एवमुक्त्वा तदा देवाः प्रणेमुर्भक्तवत्सलम् ॥ १९
तानेतानमरान् सर्वान् विष्णुब्रह्ममुखान्विभुः । निरीक्ष्य करुणादृष्ट्या मन्दस्मितमुखाम्बुजः ॥ २०
एतेभ्यः प्रेषयामास रक्षार्थं ब्राह्मणोत्तमाः । प्रेषितास्तु ततो देवा महादेवं त्रियम्बकम् ॥ २१
प्रणेमुर्दण्डवद्भक्त्या प्रीत्या च परया सह । स्रष्टा तदा महादेवं प्रणम्य प्रणतार्तिहम् ॥ २२
उज्जीवय महादेव दक्षमप्याश्रितार्तिहन् । स्वतन्त्रश्चासि सर्वेश सर्वभूतहितोद्यम ॥ २३

एवमभ्यर्थयद्देवं भक्तवश्यं कृपानिधिम् । तस्य तद्वचनं श्रुत्वा महादेवः पिनाकधृक् ॥ २४
वीरभद्रं समीपस्थमवलोक्यदीश्वरः । विज्ञायेङ्गितमीशस्य वीरभद्रश्शिवाज्ञया ॥ २५
मातुकंपं गणेशानं तद्देहानयनाय तम् । प्रेषयामास बलवांस्तदानीं ब्राह्मणोत्तमाः ॥ २६
शीघ्रमेव तमानीय मातुकंपस्समागतः । आजं शिरश्च दक्षस्य कबन्धे तस्य पापिनः ॥ २७
प्राणेन योजयामास शिवाज्ञापरिपालकः । ततो दक्षस्समुत्थाय स्वापादिव भयान्वितः ॥ २८
प्रणम्य वीरभद्रं तं स्मरन् पापमपि स्वकम् । तस्थे महत्या भीत्याग्र्यं बद्धाञ्जलिकरः पुरः ॥ २९
क्षिप्रेण च पुनश्शंभुं दृष्ट्वा सांबं वृषोपरि । प्रणनाम भयाविष्टः प्राञ्जलिः पुङ्गवर्षभाः ॥ ३०
वेपमानशरीरं तं वीक्ष्य शम्भुः कृपाकरः । मा भीर्भवतु ते दक्ष प्रसन्नं विद्धि मामिह ॥ ३१
इति शंभोर्वचश्श्रुत्वा दक्षश्शोकमुखावहम् । प्रणनाम पुनर्भक्त्या प्राञ्जलिर्ब्राह्मणोत्तमाः ॥ ३२
कृतार्थोऽस्मि महादेव दर्शनेन तव प्रभो । अकृत्वा त्वां देवदेवेशमवलंब्य सुरानिमान् ॥ ३३
फलञ्च भुक्तवानस्मि शीघ्रमेव तवाज्ञया । क्षमस्व मे महादेव मन्तुमेनं कृपानिधे ॥ ३४
नमो नमस्ते देवेश पुनर्भूयो नमो नमः । त्वदधीनमिदं शंभो जगदेतच्चराचरम् ॥ ३५
अतस्त्वद्विद्विषामाशां क्षमते कोऽतिवर्तितुम् । आज्ञाभंगात्तव स्वामिन्मया प्राप्तमिदं फलम् ॥ ३६
इति स्तुवति दक्षेऽस्मिन् बद्धाञ्जलिकरो द्विजाः । वीरभद्रं तदा गौरी वीक्ष्य प्रेमपरायणा ॥ ३७
पस्पर्श पाणिना पृष्ठे तुष्ट्या परमया युता । इत्यावस्य वराम्भूयो बहून् दाक्षायणीमुदा ॥ ३८
तदा विष्णुमुखान् देवान्वीक्ष्य प्राह महेश्वरः । एतस्यास्य पापस्य फलं दत्तं मया सुराः ॥ ३९
इति देववचश्श्रुत्वा तदानीं ते तु नाकिनः । प्रणम्य शम्भुं गौरीञ्च वीरभद्रं महाबलम् ॥ ४०
तस्थुः प्राञ्जलयस्सर्वे जयशब्दाभिभाषिणः । स्थानान्तरं महायज्ञशालायां ब्राह्मणोत्तमाः ॥ ४१
ततः प्रतस्थे भगवान् गौर्या सह महेश्वरः । वीरभद्रेण काल्या च पार्षदैस्सर्वैः परीवृतः ॥ ४२
नानावाद्यनिनदपूरिताखिलदिङ्मुखाः । प्राप कैलासमचलं पर्वतानामधीश्वरम् ॥ ४३
तत्र सिंहासने स्थित्वा गौर्या सार्कं महेश्वरः । वीरभद्रं ससैन्यं तं भद्रकाल्या पदंमति ॥ ४४
प्रेषयामास भगवान्विश्वात्मा लोकपूजितः । शिवस्याज्ञामयं श्रुत्वा शिरसा बलिनांवरः ॥ ४५
प्रणम्य सोममीशानं भद्रकाल्या रथे स्थितः । प्रतस्थे सहसा वीरैः स्वर्गैरपि परीवृतः ॥ ४६
मातुकंपाद्यगणपरकृतसाहाय्यकर्मवान् । तुष्ट्या परमया युक्तस्स्वां पुरीं प्राप भूसुराः ॥ ४७

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे पञ्चत्रिंशोऽध्यायः ॥

---

॥ अथ षट्त्रिंशोऽध्यायः ॥

## महाशिवरात्रौ ज्योतिर्लिङ्ग रूपेण आविर्भावः ॥

ततो दक्षं विधिः प्राह पुत्रं दुःखभरान्वितम् । महामोहेन दक्ष त्वं किं कार्यं कृतवानसि ॥ १
देवतानामृषीणांच ब्राह्मणानां महात्मनाम् । केवलं मृत्युरेवात्र त्वया संपादितः खलु ॥ २
तथापि नाशिता कीर्तिं भीरप्यन्ये त्वदाश्रिताः । विनिन्द्य सांबमीशानमिदं प्राप्तं फलं त्वया ॥ ३
न केवलं महामोहो यमूवात्मज ते शिवे । मायया पूर्वमीशस्य महामोहो ममाप्यभूत् ॥ ४
समागत्य तदा शंभुर्मां वत्स शिवस्स्वयम् । तत्त्वं पूजय देवेशं सर्वश्रेयोविधायिनम् ॥ ५

दक्षः —

मोहः कदा बभूवास्मिंस्तव शम्भौ कृपानिधौ । कथं ररक्ष भगवांस्तात त्वामेव मोहितम् ॥ ६
एतन्मे ब्रूहि वृत्तान्तं यथावृत्तं क्रमात् प्रभो । इति दक्षस्य वचनं समाकर्ण्य तदा विधिः ॥ ७
प्रोक्तमेव पुनर्वक्ष्ये पुत्र शृण्ववधानतः । इत्युक्त्वाऽयं महादेवं साक्षात्संसारभेषजम् ॥ ८
ध्यात्वा हृदब्जनिलये बद्धाञ्जलिकरोऽवदत् । चतुर्युगसहस्रान्तमहः प्रोक्तं ममात्मज ॥ ९
रात्रिश्च तावती ज्ञेया निद्रा तस्यां सदा भवेत् । नार्कस्तदा न चन्द्रादिग्रह नक्षत्रमण्डलम् ॥ १०
सत्यलोकावधि तदा जगदेतज्जलावृतम् । यत्र पुर्यां भवानी सा द्वात्रिंशद्धर्मचारिणी ॥ ११
कामाक्षीति जगत्ख्याता सा काञ्ची वाञ्छितार्थदा । विनिक्षिप्ते घटे यद्वद्विपरीततयांबुधौ ॥ १२
बहिरेव जलं भ्रान्तस्तद्वदेषा बहिर्जला । तदानीं वटवेस्यन्तं कैलासः पर्वतेश्वरः ॥ १३
न्यग्रोधाख्यतिलकं पर्णमेकं तस्याज्जलाशये । तस्योपरि हरिस्त्वेकशायित्वा विचचारह ॥ १४
शिशुरूपेण शयानं जलमध्ये भयंकरे । व्यतीत्य तां तदा विष्णुर्निशां सर्वविनाशिनीम् ॥ १५
वाराहं रूपमास्थाय जलमध्यगतां क्षितिम् । उत्थाप्य पूर्ववच्छीघ्रमास्थापयदयं सुत ॥ १६
यथापूर्वं प्रजाः सर्वा मयाप्युत्पादितास्तदा । शिवाज्ञया तदा पुत्र मम मोहोऽभवत्सुत ॥ १७
अहमेव जगत्कर्ता नान्यः कश्चन विद्यते । सुप्ते मयि जगत्सुप्तं प्रबुद्धे च प्रबुध्यते ॥ १८
देवाश्च दानवा यक्षाः स्थावरं जङ्गमं तथा । मदधीनं न मे कश्चित्कर्ता जगति विद्यते ॥ १९
अहमेव परं ब्रह्म योगिध्येयं सनातनम् । इत्येवं विनिष्क्रम्य सत्यलोकान्ममास्पदात् ॥ २०
मेरुमन्दरकैलासचमयालमुखादिषु । द्वीपेषु च समुद्रेषु नानालोकेषु गर्वितः ॥ २१
सञ्चरन्वीक्ष्य तत्रत्यान्यद्भुतानि क्रमादहम् । क्षीराब्धिं प्राप्तवानस्मि यत्र शेते हरिः स्वयम् ॥ २२
तत्र दृष्ट्वा हरिं हन्त मया भूमिर्यदुद्धृता । स्थापिता पूर्ववत्तस्मादहमेव जगत्पतिः ॥ २३
इति सञ्चिन्त्य मनसा शयानं योगितल्पके । आस्फाल्य वक्षोमध्ये तमबोधयमहं सुत ॥ २४
ततस्ससम्भ्रमं विष्णुस्समुत्थायावदत्क्रुधा । कस्त्वं ब्रूहीति तं वीक्ष्य प्रोक्तवानस्म्यहं ततः ॥ २५
सोऽपि मद्वचनं श्रुत्वा विद्धि मां जनकं तव । कर्तारमपि सर्वस्य प्रोवाचेदं क्रुधान्वितः ॥ २६
इदानीमपि किं निद्रावहि यद्विपरीततः । सर्वलोकस्य धातारं मामज्ञाय तवात्मजम् ॥ २७
मोहं त्यज पर तत्त्वं मां शरणाशु सुखीभव । इति ब्रुवाणं मां वीक्ष्य प्रोवाचायं पुनः क्रुधा ॥ २८
मन्नाभिकमलाद्ब्रह्मन् समुत्पन्नः पुराऽधम । विस्मृत्य तद्वृथानव विपरीतं वदत्यहो ॥ २९
मां विना मत्सुतस्यात्तव का जगदीशता (ज्ञप्तावत) । इति विष्णोर्वचश्श्रुत्वा पुनश्च प्रोक्तवानहम् ॥ ३०
समुत्पन्नोऽरणौ वह्निर्न तस्यात्मज उच्यते । तथा त्वत्तो मम पुरा प्रादुर्भावो मदिच्छया ॥ ३१
तादृश्यपि समुत्पत्तिस्तव मे क्वच विद्यते । त्वं मे पुत्रमतस्त्वं च प्रबोधय निरंकुशम् ॥ ३२
शापस्य पूर्वमृषिणा भृगुणा तव दुर्मते । यथाहि दशजन्मानि सृष्टानि च हतान्यहो ॥ ३३
स्पष्टमेव करोष्यद्य रक्ततां भजते तराम् । वदन्तमेवं मां वीक्ष्य पुनः प्राह जनार्दनः ॥ ३४
ममापि त्वं यदि भवान् सदा तर्हि शिवेन तत् । पञ्चमं यच्छिरश्छिन्नं सुजातयेतत्पुरो मम ॥ ३५
तस्मादिह जगत्कर्ता तव कर्ता विशेषतः । महामोहेन यत्किंचिदुक्तवानसि मत्पुरः ॥ ३६
ब्रुवत्येवं हरौ हसिन्नपाप्येव तदेरितम् । प्रवृत्तः कलहस्त्वेवमावयोर्वाग्मयस्तदा ॥ ३७
अदृष्टपूर्वमदृष्टपूर्वं भवतोर्मोहगौरवात् । पुनश्च समयं कृत्वा यो जयेत्परं युधि ॥ ३८

स कर्तेति महाविष्णवन्योन्यजयकांक्षिणौ । आयुधैर्विविधैर्युद्धं तुमुलं शीघ्रमाश्रितौ ॥ ३९
ततो नारायणः क्रुद्धो बाणं नारायणाभिधम् । मुमोच मध्यमं घोरं छेत्तुकामनया तदा ॥ ४०
छित्वा तं तेनबाणेन पुनर्ब्राह्मं हरौ क्रुधा । अप्रेषयमहं तेन चिच्छेदैतदरिन्दमः ॥ ४१
इति शस्त्रास्त्रकुशलौ छित्वा छित्वा पुनःपुनः । विधिनारायणावावां मदोन्मत्तौ गजाविव ॥ ४२
अयुध्याव महाघोरौ महावेगौ महाबलौ । पुनश्च नितरां क्रुद्धौ शिवास्त्रं सर्वघस्मरम् ॥ ४३
अनुधाव महाघोरं परनाशजयैषिणौ । आवाभ्यां प्रेषितं घोरं यदस्त्रं निस्सृतं यदा ॥ ४४
समुद्राश्चशोषितास्तेन पर्वतारेणुतां गताः । अस्फुटंश्च तदा भूमिश्चकम्पे सर्पमूर्धनि ॥ ४५
देवाश्च ऋषयो मर्त्या भीतास्सर्वेऽपि चुक्रुशुः । मृताश्च बहवः स्त्रियः केचिच्छिन्नाङ्गप्राणयः ॥ ४६
समाश्रयन् परे शीघ्रं कैलासमचलेश्वरम् । एवं दहति शैवास्त्रे लोकान्सर्वांस्तदा सुत ॥ ४७
नारदोऽथागमत्तत्र तदानीमात्मजो मम । प्रोवाच वचनं वीक्ष्य विधिनारायणावुभौ ॥ ४८
कर्तास्मीशमहात्मा युवयोः प्राणदायिनम् । किं युध्येथे वृथा मूढौ महामोहपरायणौ ॥ ४९
मास्तु युद्धमिदानीं वां ज्योतिर्लिङ्गी महेश्वरः । प्रादुर्भविष्यत्यचिराद्युवयोर्मोहनाशकः ॥ ५०
इत्युक्त्वा विरतास्सोऽयं यथामार्गं तपोनिधिः । गतेऽप्यस्मिन्नामुनिश्रेष्ठौ सहजात्स्मयमायायोः ॥ ५१
अभवत्तुमुलं घोरं युद्धदुर्मदयोर्मृधम् । तदन्ते भगवाञ्छम्भुराविरासीज्जगद्गुरुः ॥ ५२
लोकोपद्रवमाकर्ण्य ज्योतिर्लिङ्गतया शिवः । माघकृष्णचतुर्दश्यां मध्येरात्रमतुल्यभाः ॥ ५३
तल्लिङ्गज्योतिषि लिङ्गे तदस्त्रं लीनं तदात्मज । तदद्भुतमुभावावामपश्याव परस्परम् ॥ ५४
ऊर्ध्वदृष्टी तदा काचिद्वागविजृम्भे नभोऽन्तरे । हे हे देवौ हीनबलौ महामोहपरायणौ ॥ ५५
किं बलं युवयोर्मुक्त्वा महादेवबलं परम् । नास्ति नास्ति बलं सत्यमुच्यतेऽत्र मयाऽधुना ॥ ५६
न प्रपश्यति लिङ्गस्य युवयोर्भास्वरूपिणः । ऊर्ध्वभागमधोभागं न वै बलवतां वरः ॥ ५७
यावन्मेना निशम्यैतां वाचामित्थं तदात्मज । मुक्त्वा कोपं पुनर्मैत्रीमुपगताववस्मयमात्मनि ॥ ५८

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे षट्त्रिंशोऽध्यायः ॥

---

॥ अथ सप्तत्रिंशोऽध्यायः ॥

ज्योतिर्लिङ्गस्य अरुणाचलतेनाविर्भावः ॥

ततो विचिन्त्य तां वाणीमावामाप्तकुतूहलौ । पुरस्ताद्भास्वज्ज्योतिस्तद्दृष्ट्वालोक्य गर्विता ॥ १
अन्योन्याभिमुखौ तदूर्ध्वाधोमापवीक्षया । कृतप्रतिज्ञावन्योन्यं हंसक्रोडस्वरूपिणौ ॥ २
सहस्रयोजनोच्छ्रायौ महावेगबलान्वितौ । ऊर्ध्वं द्रष्टुमहं विष्णुरधोभागं गतावुभौ ॥ ३
यद्दूरं ततो गत्वा विष्णुर्भग्नमनोरथः । अत्यन्तश्रमदेहोऽयं तदात्यन्तक्षुधान्वितः ॥ ४
पुनरागमनेऽशक्तः परं गन्तुं तथैव च । असमर्थस्तदा वेधं तं च स्वक्रमयं सुत ॥ ५
सस्मार केवलं शम्भुं तदानीं रक्षकं परम् । ततश्शिवाज्ञया तस्य बलं किञ्चिदभूवद ॥ ६
निवृत्तस्सहसा सोऽथ भूतलं प्राप्य माधवः । अधोभागमदृष्ट्वाऽस्य ज्योतिषः परमस्य सः ॥ ७
वेपमानशरीरोऽयं तस्थे नत्वा पुरस्सुत । अहमप्यान्दावधि तदा सोऽहं हंसस्वरूपवान् ॥ ८
उपर्युपरि गताश्च स्वल्पसोऽतिदुःखितः । गन्तुमूर्ध्वमशक्तत्वाददृष्ट्वा ज्योतिषश्शिरः ॥ ९

भ्रमन्तितस्ततस्तूर्णं क्षणं तत्रावसं सुत । तदानीं ज्योतिषस्तस्य वामभागात्प्रतस्थिरे ॥ १०
सिद्धाः केचन योगीन्द्रा रुद्राक्षकृतभूषणाः । हंसोऽयमधुनात्यन्तमज्ञानेन परीवृत ॥ ११
इत ऊर्ध्वं पदं या चेद्गमिष्यति मरिष्यति (न संशय) । विष्णुरप्येतदज्ञात्वा ज्योतिश्शैव परात्परम् ॥ १२
अदृष्ट्वैतस्य महसो मूलभाग शुचान्वित । निवृत्तो नितरां खिन्न प्रणम्यास्ते भयान्वित ॥ १३
शिवस्यानुग्रहेणास्य महामूढस्य पक्षिण । प्राणास्तिष्ठन्त्यसन्देहो न चेन्मरणमेव हि ॥ १४
इति ब्रुवाणास्तेऽन्योन्य निर्ययुर्मत्पुरस्सुत । समाकर्ण्य वचस्तेषां मद्गमध्यात्तच्चेतन ॥ १५
गतमोहस्तथा शीघ्रं निवृत्तस्तन्महीतलम् । प्राप्य भीत्या महादेवं स्तुत्वा स्तोत्रैरनेकधा ॥ १६
अदर्शयं ततो विष्णुं तत्र बद्धाञ्जलिं भयात् । तदानीमावयो काचिदुत्पन्ना शाङ्कराज्ञया ॥ १७
पूजा कार्या महेशस्य ज्योतिष्यत्रेति शेमुषी । बुद्धैव भ्रान्तमायाख्या विष्णो मोहवशादिह ॥ १८
इत्युक्त्वाऽऽवां तदाऽन्योन्य पूजायां कृतनिश्चयौ । अपूजयाव देवेशं भक्त्या परमया सुत ॥ १९
आविरासीत्ततश्शम्भुर्ज्योतिर्मध्यादुमासख । जटाजूटतनुश्श्रीमान् चन्द्रार्धकृतशेखर । २०
शुद्धस्फटिकसंकाशस्त्रिनेत्रो नीलकन्धर । वराभयकरश्श्रीमान् परश्वेण सलक्कर ॥ २१
तं दृष्ट्वा देवमीशानं शङ्करं लोकशङ्करम् । प्रणम्य परया भक्त्या स्तुत्वा स्तोत्रैरनेकधा ॥ २२
आवयोरपराधोऽयं क्षन्तव्यश्शङ्कर त्वया । त्वं हि सर्वगुरुश्शम्भु सर्वलोकहितोद्यत ॥ २३
एवमभ्यर्थयावावां महादेवं त्रिशूलिनम् । स हि प्रसन्नो भगवान् चन्द्रचूडस्सुमङ्गल ॥ २४
प्रकल्प्य पूर्ववत्स्थानमावयोरस्वेच्छया सुत । प्रेषयामास विश्वात्मा ततोऽभावपि नौ शिव ॥ २५
ततोऽन्तर्धिमगात्तस्मिन्महति ज्योतिषि स्वयम् । तदेतदचलश्श्रीमाननलाख्यो महानभूत् ॥ २६
स प्रणम्यानलगिरिं ज्योतिर्लिङ्गस्वरूपिणम् । परित्यक्त महामोहावावामस्य कृपाबलात् ॥ २७
अत्रस्थायपदं प्राप्य सुखेनात्मज पूर्ववत् । मायहप्यचतुर्दशमनलाचलमद्भुतम् ॥ २८
ज्योतिर्लिङ्गाकृतिं प्राप्य महसो दग्धकिल्बिषा । संपूज्याभीप्सितं प्राप्य कृपया तस्य शूलिन ॥ २९
कृपया तस्य देवस्य ज्ञानं वेदागमोत्थितम् । लभन्त एकचित्ता ये तस्मिन्निन्यस्तमानसा ॥ ३०
शम्भो कृपा तवाप्यस्ति दाक्षायणीशो भवानिह । यतो बभूव विज्ञानं तव शाकरमात्मज ॥ ३१
शरणं प्राप्य देवेशं ख्यातिमव निरङ्कुशाम् । एवमुक्त्वा विधिस्तूर्णं देवैस्सह परीवृत ॥ ३२
पूजयित्वा पुरारातिं सपद प्रापवान् द्विजा । ततस्तु दक्षस्तरसा ब्रह्मणा प्रेरितस्स्वयम् ॥ ३३
काशीमयाप नगरीं सर्वपापप्रणाशिनीम् । लिङ्गं तत्र प्रतिष्ठाप्य स्वनाम्ना पुरविद्विष ॥ ३४
आगमोक्तेन मार्गेण दक्षेश्वरसमाह्वयम् । अपूजयदय भक्त्या सहस्राब्दान्तमात्मवान् ॥ ३५
प्रसन्ने च महादेवे प्रणम्य परया मुदा । तुष्टाव पुरत स्थित्वा दक्षश्शम्भोर्महेशितु ॥ ३६
वाञ्छितं किं वदाद्य त्वं दक्ष दास्याम्यहं तव । प्रसन्नं विद्धि मामत्र तव पूजाप्रभावत ॥ ३७
इति शम्भोर्वच श्रुत्वा दक्ष प्राह महेश्वरम् । न वाञ्छा वैष्णवे ब्राह्मे मम देव दयानिधे ॥ ३८
नाग्नेरिन्द्रस्य चान्यस्य पदे कालेन नश्वरे । गाणापत्यं तव स्वामिन् कैलासे पर्वतोत्तमे ॥ ३९
भवनद्वारि देवेश ममास्तु सततं शिव । इति श्रुत्वा महादेव तस्थे बद्धाञ्जलि पुर ॥ ४०
तथेत्युक्त्वा महादेव तत्रैवान्तरधीयत । दक्षस्तत प्राप्तवर कैलासं पर्वतोत्तमम् ॥ ४१
गत्वा तत्रातिशुद्धात्मा गाणापत्यमवाप्य हि । तुष्ट्या परमया युक्तस्तस्थे तत्र द्विजोत्तमा ॥ ४२

इति श्री स्कान्दे महापुराणे सूतसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे सप्तत्रिंशोऽध्यायः ॥

॥ अथ अष्टत्रिंशोऽध्यायः ॥

श्री कालाग्नि रुद्रस्थान निरूपणम् ॥

दक्षस्य यागे ये देवाः स्थिताः पूर्वं द्विजोत्तमाः । ते सर्वे कर्मशेषेण शूरपद्मेन बाधिताः ॥ १

ऋषयः — यदुक्तं भवता पूर्वं शूरपद्मो महासुरः । अष्टोत्तरसहस्राणामण्डानामधिपो महान् ॥ २

श्रुतवानस्य विस्तारं शुक्रेणोक्तं महाकथे । विस्तरेण पुनस्तत्त्वं वक्तुमर्हसि तापस ॥ ३

इति तेषां वचश्श्रुत्वा सामगानामधीश्वरः । प्राह तान्वीक्ष्य सकलान् ब्राह्मणान्वेदपारगान् ॥ ४

शृणुध्वं ब्राह्मणा यूयं सर्वे विगतकल्मषाः । अण्डोत्पत्तिमहीतत्त्वे कथितं परमेष्ठिना ॥ ५

शतकोटिप्रमाणेन योजनानां समुन्नतम् । संपुटद्वितयाकारं मध्ये सुषिरसंयुतम् ॥ ६

महीयाश्चार्धनिलयं वर्तते ज्योति केवलम् । स्थौल्यं भित्तेर्मितं कोटियोजनैरस्य वै द्विजाः ॥ ७

अधोभागे स्थिता भित्तिस्स्थूलाया कोटियोजनैः । उपर्यस्या महानास्ते रुद्रः कालाग्निसंज्ञितः ॥ ८

कोटियोजनमानेन दिव्ये गेहे समुन्नते । सिंहासनं महद्दिव्यं योजनानां सहस्रकैः ॥ ९

उन्नतं द्विसहस्रैश्च विशाले रत्नशोभितम् । तस्मिन्नास्ते सदा रुद्रैर्दशभिस्सहस्रकैः ॥ १०

तेषां परिजनै रुद्रै र्दशकोटिमितैरपि । परिवारसेव्यमानोऽयं खड्गखेटधनुश्शरान् ॥ ११

बिभर्ति सततं चास्य ज्वाला रुद्रस्य भीषणा । दशकोटिप्रमाणेन योजनानां समुन्नता ॥ १२

ज्वालाया ऊर्ध्वगो धूमो योजनैः पञ्चकोटिभिः । शरीरं दशसाहस्रैर्योजनैरुन्नतं प्रभोः ॥ १३

आविष्कुर्वन्नघोरोऽयं स्तूयमानोऽत्र राजते । अनन्तमहिमाधारः परमानन्दनिर्भरः ॥ १४

ध्यायमानो महादेवं शिवं परमकारणम् । अधोभित्तिं समारभ्य ब्रह्माण्डस्य द्विजोत्तमाः ॥ १५

धूमान्तो योजनैस्सप्तकोटिप्रमाणकैः । उपर्यस्य च धूमस्य नरकाणि वसन्ति हि ॥ १६

बाध्यन्ते पापिनो यत्र नित्यं यमकिङ्करैः । तानि कोटिभिरेकोनविंशद्भिर्योजनैस्तथा ॥ १७

कक्षैरष्टाभिश्चैव कल्पितानि शिवेन हि । एतेषामूर्ध्वभागे तु कूश्माण्डाख्यो विराजते ॥ १८

अनेककोटिगणपैस्तथा परिजनैरपि । सेव्यमानो महावीर्यो मुदा परमया युतः ॥ १९

कोटियोजनमेतस्य स्थानेन भुवनं द्विजाः । एतदूर्ध्वं नभोऽस्त्येव योजनैर्नवलक्षकैः ॥ २०

केवलं तस्य चाप्यूर्ध्वं पातालानि वसन्ति हि । सप्तैव तानि सहितैः त्रिलक्षैश्चाष्टलक्षकैः ॥ २१

एतेषामुपरि शेषमण्डलप्रमाणकम् । कनिष्ठस्त्वष्ट पातालमधमं वेदवित्तमाः ॥ २२

एतस्मिन्नसुरा नागा राक्षसानि वसन्ति हि । नवलक्षैरितोऽप्यूर्ध्वं योजनैर्भुवनं महत् ॥ २३

हाटकेशाख्यदेवस्य वसतिर्ब्राह्मणोत्तमाः । तस्मिन्शिवसखीशोऽयं नानारूपगणैस्सह ॥ २४

परिचर्यारतैर्दिव्यैः परितः परिसेवितः । पातालानामयं कर्ता पठितानां महान्विभुः ॥ २५

अस्यापि भुवनस्योर्ध्वमाकाशः केवलस्तथा । कोटियोजनमानेन विंशल्लक्षाधिकेन च ॥ २६

तदूर्ध्वं भूमिरष्टाभिर्दिग्गजैश्च महाद्रिभिः । शेषेण विधृताऽशीतिलक्षयोजनमानतः ॥ २७

सप्तद्वीपाचलैर्युक्ता वर्तते शंकराज्ञया । अण्डाधो भित्तिमारभ्य भूम्यन्तं ब्राह्मणोत्तमाः ॥ २८

पञ्चाशत्कोटि संख्यानि योजनानीति निश्चितम् । भूमेरुपरि विप्रेन्द्रा गणाः प्रेताश्च गुह्यकाः ॥ २९

वायवो दशसंख्याका मेघाः किंपुरुषास्तथा । गन्धर्वास्सिद्धदेवाश्च तथा विद्याधराह्वयाः ॥ ३०

यक्षा नागगणाश्च क्रमादुपरि संस्थिताः । एतेषामूर्ध्वगो भानुः पृथिव्या लक्षयोजनात् ॥ ३१

परिभ्रमति लोकांश्च भासयन्परमतेजसा । अत्र देवास्त्रयस्त्रिंशत्कोट्यो निवसन्ति हि ॥ ३२

[illegible] ऊर्ध्वं शशी लक्षयोजनेन चरत्ययम् । चन्द्रस्योपरि ऋक्षाणि सप्तर्षीणामपि द्विजाः ॥ ३३

बुधशुक्रारदेवेज्यसूर्यपुत्रा यथोत्तरम् । सञ्चरन्ति द्विलक्षैश्च प्रत्येकं योजने क्रमात् ॥ ३४
ऋषयस्सप्तर्षयस्तस्मात्तेषामुपरि लक्षतः । ध्रुवोऽपि लक्षाद्विप्रेन्द्रा ध्रुवतारः व्यवस्थितम् ॥ ३५
भुवर्लोकोऽयमाख्यातो भूमेरूर्ध्वं ध्रुवावधि । निवसन्त्यत्र मरुतस्तथा सप्तविधा अपि ॥ ३६
ऊर्ध्वं पञ्चाधिकाशीतिलक्षयोजनमस्य च । स्वर्लोकोऽत्र सुराधीशस्सुरैस्सर्वैर्विराजते ॥ ३७
अस्य चोर्ध्वं महर्लोको यावत्कोटिद्वयावधि । निवसन्त्यत्र मार्कण्ड प्रमुखा ऋषयो द्विजा ॥ ३८
एतस्याप्युपरि ज्ञेयो जनो (जन) लोकोऽष्टकोटिभिः । योजनैरत्र पितरो निवसन्ति शिवाज्ञया ॥ ३९
उपर्यस्य तपोलोको ज्ञेयो द्वादशकोटिभिः । वसन्ति यत्र भक्तिष्ठास्सनकाद्या महर्षयः ॥ ४०
ऊर्ध्वमस्यापि विप्रेन्द्राः सत्याख्यो लोक ईरितः । योजनानां षोडशभिः कोटिभिर्वर्ततेऽत्र च ॥ ४१
कुर्वाणस्सृष्टिमनिशं स्रष्टा निवसति स्वयम् । अस्योर्ध्वं ब्रह्मणोलोकत्रिभिर्योजनकोटिभिः ॥ ४२
यत्रास्ते पद्ममूर्तिस्स चतुरास्यो श्रियान्वितः । अस्योर्ध्वं विष्णुलोकोऽपि त्रिभिर्योजनकोटिभिः ॥ ४३
विराजते हरिर्यत्र रममाणश्श्रियाऽनिशम् । एतेषामपि सर्वेषामूर्ध्वं लोकश्शिवस्य हि ॥ ४४
चतुर्भिः कोटिभिः यातो योजनानां द्विजोत्तमाः । यत्र सर्वेश्वरश्शम्भुर्गौर्या प्रमथपैस्सह ॥ ४५
प्रकाशते स्वयंज्योतिः परमात्मा परात्परः । उपर्यण्डकटाहस्तिष्ठ प्रमाणं कोटियोजनम् ॥ ४६
योजनानि च पञ्चाशत्कोटिसंख्यान्यमूनि हि । भूमेरुपरि तिष्ठन्ति ब्रह्माण्डस्य द्विजोत्तमाः ॥ ४७

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे अष्टत्रिंशोऽध्यायः ॥

---

॥ अथ एकोनचत्वारिंशोऽध्यायः ॥

महामेरोः वर्णनम् ॥

शृणुध्वं ब्राह्मणश्रेष्ठाः सर्वे यूयमतन्द्रिताः । द्वीपानि सागरानद्रीन् कथयामि यथामति ॥ १
जम्बूद्वीपमिदं मध्ये पृथिव्याः लक्षयोजनम् । अस्यापि मध्ये पृथुलः कनकाद्रिर्मनोरमः ॥ २
भूमौ षोडशसाहस्रैः प्रविष्टो योजनैरयम् । समुन्नतस्तथैवोर्ध्वं सचतुर्भिरशीतिभिः ॥ ३
अथ षोडशसाहस्रो विशालो योजनैरयम् । द्वात्रिंशद्भिस्तथैवोर्ध्वं ब्राह्मणानामधीश्वराः ॥ ४
तिसृभिर्मेखलाभिश्च राजते गिरिराडयम् । ऊर्ध्वं या मेखला तस्यां शिखराणि वसन्ति हि ॥ ५
बहूनि तेषां मध्यस्थे शिखरे सुमनोहरे । पुरं विधातुः परमं गोपुराट्टालशोभितम् ॥ ६
मनोवतीति प्रथितं राजते काञ्चनध्वजम् । एवं विष्णोः पुरं रम्यं शिखरे पूर्वदिग्गते ॥ ७
वैकुण्ठाख्यं विचित्राढ्यं शोभते ब्राह्मणोत्तमाः । पुरमुत्तरपूर्वेऽस्मिञ्छिखरे सुमनोहरम् ॥ ८
ओजोवतीति प्रथितं शङ्करस्य परात्मनः । गोपुराट्टालवलभिप्राकारपरिमण्डितम् ॥ ९
एतेषामितरेष्वेषु शिखरेष्वष्टसु द्विजाः । दिगीशानां विचित्राणि पुराणि निवसन्ति हि ॥ १०
मन्दराद्रिर्मेरुमस्य पूर्वदिग्भागतः स्थितः । सहस्रयोजनोच्छ्रायः कदम्बोऽत्र विराजते ॥ ११
अरुणाख्यं सरो मेरोः पूर्वभागे महत्खलु । अत्रास्त्युद्यानमतुलं नाम्ना चैत्ररथाभिधम् ॥ १२
मागमार्गे मन्दराद्रेश्च माल्यवानचलोत्तमः । विशालजम्बुदग्धाधिं मेरोर्दिक्षु विराजते ॥ १३
मेरोर्दक्षिणभागे तु गन्धमादनसंज्ञकः । महान् हिरण्मयवर्णोऽस्य पतयक्षः गृधिणीसुराः ॥ १४
योजनैर्द्विसहस्रैश्च अद्भुतसमन्वितः । विराजते यतस्तस्माज्जम्बूद्वीपमिदं स्मृतम् ॥ १५

मानसाख्यं सरो मेरोर्दक्षिणस्यां दिशि द्विजाः । उद्यानमत्र महितं महावनसमाह्वयम् ॥ १६
एतस्य याम्यभागे च निषधाख्यो महाऽचलः । रक्तवर्णोऽयमस्यापि याम्ये स्वर्णप्रभोऽचलः ॥ १७
हेमकूटाख्योऽस्यापि याम्ये विप्रा हिमाचलः । विगाह्यांभोनिधिं पूर्वं तिष्ठन्त्येते त्रयोऽचलाः ॥ १८
निषधो हेमकूटश्च हिमवानपि भूसुराः । विपुलाख्योऽचलो मेरोः प्रत्यग्दिशि तु संस्थितः ॥ १९
सहस्रयोजनोऽप्यत्यस्तिष्ठत्यतिसमुन्नतः । असितोदं सरो मेरोः प्रत्यग्भागे महत् द्विजाः ॥ २०
उद्यानं राजतेऽप्यन्यन्महद्वैभ्राजमाह्वयम् । एतस्याद्रेर्महानन्यो गंधमादनपर्वतः ॥ २१
तप्तकाञ्चनसङ्काशः प्रत्यग्भागे विराजते । दक्षिणांभोनिधिं सम्यगयमद्रिर्विगाहते ॥ २२
शुभाशुभाख्योऽप्यन्योऽद्रिर्मेरोरुत्तरभागतः । फुल्लदाडिमपुष्पाभो राजते ब्राह्मणोत्तमाः ॥ २३
सहस्रयोजनोच्छ्रायो वटोऽप्यत्र महीरुहः । मेरोरुत्तरभागे तु दिव्यमन्यन्महत्सरः ॥ २४
कल्याणमाह्वयञ्चान्यदुद्यानं राजतेऽत्र च । शुभाशुभाचलस्योत्तरभागे नीलाभिधो गिरिः ॥ २५
एतस्योत्तरभागे च श्वेताख्यो गिरिरुत्तमः । तस्याप्युत्तरभागे च शृङ्गाद्रिश्चन्द्रकान्तिमान् ॥ २६
पश्चिमाम्भोनिधिं सर्वस्त्रयोऽपि व्याप्नुवन्ति हि । अमितः पर्वतैरेवं मेरुरास्ते समावृतः ॥ २७
मध्ये मेरोर्महादुर्गं रत्नमुत्तरत्याम्यगम् । मन्दराद्यास्तु चत्वारो मेरोरूर्ध्वं प्रमाणतः ॥ २८
विज्ञेया माल्यवान् स्थूलो दशसाहस्रयोजनैः । निषधाद्याख्ययो मेरोर्दक्षिणे द्विसहस्रकैः ॥ २९
स्थूलाः प्रत्यक्प्रदेशेऽपि गन्धमादनपर्वतः । योजनैर्दशसाहस्रैः स्थूलो ज्ञेयो द्विजोत्तमाः ॥ ३०
नीलाद्या गिरयस्सौक्ष्ये (स्थौल्ये) प्रत्येकं द्विसहस्रकैः । शृङ्गाचलाख्योर्मध्यं तु कुरुवर्षं प्रकीर्तितम् ॥ ३१
हिरण्यवर्षं विज्ञेयं शृङ्गश्वेताद्रिमध्यतः । श्वेतनीलान्तरं रम्यं वर्षं विप्राः प्रकीर्तितम् ॥ [illegible]
मध्यं माल्यवदंभोध्यो र्भद्राश्वाख्यं प्रसिद्धिमत् । मध्यं हिमाचलाब्ध्यो र्यद्रूपं तद्भारतामिधम् ॥ ३३
मध्य किंपुरुषाख्यं तद्धिमवद्धेमकूटयोः । हेमकूटाचलस्यापि निषधस्यान्तरं द्विजाः ॥ ३४
हरिवर्षमिति ख्यातं प्रत्यग्भागे तु भूसुराः । गन्धमादनवार्ध्योर्यदन्तरं केतुमालकम् ॥ ३५
इलावृताख्य वर्षं तु मेरोरेवावृतं स्मृतम् । वासिनः कुरुवर्षे ये नीलवर्णा गतव्यथाः ॥ ३६
सर्वे कल्पतरोद्भूतफलाद्याहारजीविनः । विप्राश्च सहजास्सर्वे यन्नेन्ते ते कुटुंबिनः ॥ ३७
त्रयोदशसहस्राब्दजीविनस्ते द्विजोत्तमाः । अत्र केचिन्महाभागाहिमकुन्दस्फटिकसन्निभाः ॥ ३८
तावद्वर्षाणि जीवन्तस्सुखेन निवसन्ति ते । हिरण्यवर्षे न्यग्रोधफलाहारास्सुवर्चसः ॥ ३९
सर्वे द्वादशसाहस्रवर्षाः कल्हारभासुराः । रम्यवर्षे जनास्सर्वे चन्द्रकान्तसमप्रभाः ॥ ४०
एकादशसहस्राब्दजीविनः खलु ते द्विजाः । त्रयोदशसहस्राब्दं भद्राश्वे जीविनो जनाः ॥ ४१
रक्तवर्णाश्च ते सर्वे सुकुमाराङ्गयष्टयः । वर्षेऽस्मिन् भारते नानाक्रिया नानाविधाशनाः ॥ ४२
युगानुकूलधानाश्च तथैव नियतायुषः । वर्षे किंपुरुषाख्ये च सर्वे स्वादुफलाशिनः ॥ ४३
तप्तकाञ्चनसंकाशा दशसाहस्रवर्षकाः । हरिवर्षे फलाहारा श्चन्द्रकान्तसमप्रभाः ॥ ४४
सहस्राणां दश तथा वर्षाणां जीविनो जनाः । केतुमालाख्यवर्षे तु कल्हारकुसुमप्रभाः ॥ ४५
सहस्राणां दश तथा वर्षाणां जीविनो जनाः । कैतकानि फलान्येते भुञ्जन्ते ब्राह्मणोत्तमाः ॥ ४६
इलावृताख्यवर्षे तु शुद्धस्फटिकसन्निभाः । सर्वेऽपीक्षुरसाहारा द्वादशाब्द सहस्रकाः ॥ ४७
जीवन्ति गतशोकास्ते ब्राह्मणानामधीश्वराः । निर्द्वन्द्वा निर्भया स्सर्वे वर्षेष्वष्टसु भूसुराः ॥ ४८
भारताख्ये तु वर्षेऽस्मिन् जराव्याधिसमन्विताः । शुभाशुभानि कर्माणि येऽस्मिन् (वसिन्) भारतवर्षके ॥
कुर्वन्त्येतेऽन्यवर्षेषु नरकेषु न (च) यान्ति हि । कर्मभूमिरियं तस्मात्फलभूमिरितः परा ॥ ५०

हिमवद्धेमकूटाख्योर्मध्ये कैलासपर्वत । राजते राजतैश्शृङ्गैर्नानारत्नविचित्रितै ॥ ४१
अत्र देव्या महादेव स्साकदेवैस्तपोधनै । विराजते स्तूयमान परमानन्दनिर्भर ॥ ४२
महारे सर्वभूताना विष्ण्वादीना च सोऽधिराट् । ब्रह्माण्डमाशु मिमिध वर्तते शङ्कराज्ञया ॥
श्वथ — द्वीपवर्षाधिप कोवा सूत ■ वर्णयाधन ॥ ४३

इति श्री स्कान्दे महापुराणे शङ्करसंहिताया शिवरहस्यखण्डे
दक्षकाण्डे एकोनचत्वारिंशोऽध्याय ॥

---

॥ अथ चत्वारिंशोऽध्याय ॥

जम्ब्वादि षड द्वीपाना निरूपणम् ॥

सूत — इति तेषा वचश्श्रुत्वा माहेतास्तापसेश्वरान् । स्वायम्भुवाख्यो यो धातु पुत्र प्रियव्रताह्वयम् ॥ १
लेभे तनूज परम सर्वेलक्षण संयुतम् । सप्तद्वीपा वसुमतीमशासीदयमीश्वर ॥ २
तस्यात्मजा ह्यभवन् सप्तलोकेषु विश्रुता । आग्नीध्रसंज्ञस्य पुत्रस्य जम्बूद्वीपमिद ददौ ॥ ३
अन्येषामात्मजानाञ्च द्वीपान्यन्यानि दत्तवान् । एतस्याप्य भवन् पुत्रा नव सर्वत्र विश्रुता । ४
तेषा विभज्य नवधा द्वीपमेतत् द्विजोत्तमा । प्रदत्तानि हि वर्षाणि तत्तन्नामान्यनुक्रमात् ॥ ५
कुरुर्हिरण्मयो रम्यो भद्राश्वो भरतस्तथा । तथा किंपुरुषश्चान्यो हरिश्चाप्यतुल पर ॥ ६
केतुमाल इलावृत विख्यातास्ते नवात्मजा । वर्षमेतञ्च विज्ञेय भारत भरतस्य हि ॥ ७
भरतस्य सुताश्चाष्टौ बभूवु कन्यया सह । विभज्य नवधा वर्ष भारत भरतोऽव्ययम् ॥ ८
अपत्येभ्यो ददौ धीमानष्टाभ्यामरिन्दम । तत्पुत्राणाञ्च ये देशास्ते वै म्लेच्छभुव स्मृता ॥ ९
तत्कुमार्यास्तु देशोऽय कुमारीखण्डसंज्ञक । सहस्रयोजनायामो निवसन्त्यत्र कर्मठा ॥ १०
अत्र भागीरथी पुण्या गौतमी यमुना तथा । सरस्वती कौशिकीच कावेरी नर्मदा तथा ॥ ११
कृष्णाख्यवा तुङ्गभद्रा कुशाभ क्षीरनद्यपि । पाञ्चाली गोमती शूरी शिवी पापविनाशिनी ॥ १२
भूतपावा शालवाही माण्डवी शिवा तथा । कावेरी चन्द्रभागाच सरयूर्वेणुपिङ्गला ॥ १३
सुवर्णमुखरीचान्या ताम्रपर्णीच कुण्डला । पिनाकिनी वेगवती तथा स्कन्दनदी शुभा ॥ १४
एवमाद्या पुण्यतमा प्रवहन्त्यत्र भूसुरा । गिरयस्सप्त विख्याता महेन्द्रमलयौ तथा ॥ १५
मानुष पारियात्रश्च शक्तिर्विन्ध्यश्च सह्यक । काशी काञ्चीमुखान्यत्र क्षेत्राणि स्थलान्यपि ॥ १६
अष्टोत्तरसहस्राणि शिवस्थानान्यपि द्विजा । अग्रहाराश्च बहवो वैदिकब्राह्मणालया ॥ १७
वैदिकेनोक्तमार्गेण स्वाचारानाचरन्ति ते । जम्बूद्वीपमिद प्रोक्त लक्षयोजनमानत ॥ १८
आवृत्य लवणाम्भोधिस्तल्लक्षप्रमाणत । लवणाम्भोधिमावृत्य शाकद्वीप स्मृत द्विजा ॥ १९
द्विलक्षयोजनायाममनेकाश्चर्यसंयुतम् । प्रियव्रता मजोऽस्यासी नाम्ना गोमेदक स्मृत ॥ २०
अत्राद्य तनयान् सप्त सप्तैतद्विभजच्च । तेभ्य प्रादाद्विरिभेदास्सप्तचात्र वसन्ति हि ॥ २१
सोमकस्सुमनाश्चन्द्रो दुन्दुभिश्च महागिरि । वभ्राजिनो नारदीयो गोमेदाख्यश्च भूधरा ॥ २२
नद्यश्च सप्तसंख्याका प्रवहन्ति सुपावना । शिवा विपाषा अमृता सुकृता मनुदत्तका ॥ [illegible]
सिद्धि कमाभिधाचान्या सर्वकामफलप्रदा । आवृत्य चैत क्षीराब्धिर्द्विलक्षेण विराजते ॥ [illegible]
क्षीरसोधि समावृत्य कुशद्वीप स्मृत द्विजा । चतुर्लक्षप्रमाणेन योजनानाञ्च वै स्मृतम् ॥ २५

प्रियव्रतात्मजोऽन्यो वपुष्माननधिपः खलु । उत्पाद्य तनयान्सप्त सप्तधैतद्विभज्य च ॥ २६
प्रादात्तेभ्यो यथान्यायं सर्वशास्त्रार्थवित्तमः । क्रोञ्चारूप्या मतिर्धूम्रा नेत्रा पापविमोचना ॥ २७
वृत्तिरित्यत्र परमा नद्यस्सप्त सुपावनाः । उष्णः कुमुदश्चैव कुमारो मेघदांलकौ ॥ २८
महिमा द्रोणकस्सप्त गिरयोऽप्यत्र भूभुजः । दध्यब्धिरेतदावृत्य चतुर्लक्षप्रमाणकः ॥ २९
एतस्याप्यधिपः क्रौञ्चद्वीपं प्रियव्रतात्मजः । ज्योतिष्मानस्य तनुजास्सप्त संस्थास्तु तत्पते ॥ ३०
तेषां प्रादाद्विभज्यैतत्सप्तधाऽत्र सरित्तमम् । कुशेशयो हरिश्चैव पुष्पावर्तश्च विद्रुमः ॥ ३१
हिमाद्रिर्द्युतिमांश्चैव मन्दरस्सप्तमेऽचलाः । शिवा विधूतपापाच, हिमा पूर्णा विनीलका ॥ ३२
तथाऽन्या शिल्पपापाचर्समा सप्तसरिद्वराः । मण्डलक्षप्रमाणेन योजनानामिदं द्विजाः ॥ ३३
घृताब्धिरेतदावृत्य साष्टलक्षप्रमाणकः । आवृत्य शाल्मलीद्वीपमेतत्षोडशलक्षकम् ॥ ३४
द्युतिः प्रियव्रतसुतस्सप्तैतद्विभज्य च । सप्तपुत्रान्समुत्पाद्य तेभ्यः प्रादाद्यथाक्रमम् ॥ ३५
तिमिरस्सुरभिश्चैव वामनश्च विरुद्धकः । सम्यक्तटोदुन्दुभिश्च पुण्डरीकोऽत्र सप्तमे ॥ ३६
कुमुदा करवी धात्री रामा पौण्डरिका तथा । मनोपमाच सन्ध्याह्वा नद्यस्सप्त सुपावनाः ॥ ३७
आवृत्य षोडशैतद्धि इक्ष्वब्धिर्लक्षकेणहि । द्वीपं गोमेदकं विप्रा द्वात्रिंशल्लक्षयोजनम् ॥ ३८
इध्मः (भव्यः) प्रियव्रतसुतस्सारस्तेतस्य मार्गतः । उत्पाद्य तनयान् सप्त तेषामेतद्विभज्य च ।
एतयात्र गिरयस्सप्तसंख्यायकल्पिताः ॥ ३९

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे चत्वारिंशोऽध्यायः ॥

---

॥ अथ एकचत्वारिंशोऽध्यायः ॥

पुष्करद्वीप वर्णनम् ॥

सिद्धकः क्रौञ्चश्चैव चलको ऽस्तोदयाचलौ । आंविवेक्षासिधाग्योऽपि रम्यकश्च महागिरि ॥ १
अघाती धेनुका पुण्या वरदा सुकुमारका । कुमारखल्पाचेसुरसा सप्त सरिद्वराः ॥ २
मध्वब्धिरेतदावृत्य द्वात्रिंशल्लक्षयोजनः । पुष्करद्वीपमावृत्य चैतद्वेपं द्विजोत्तमाः ॥ ३
योजनानामशुल्वाहिर्लक्षमानेन विस्तृतम् । प्रियव्रतात्मजस्तत्र सवनोऽधिपतिः खलु ॥ ४
संप्रभूयतुरत्यापि तनयौ द्वौ महाबली । तयोर्विभज्य तद्द्वीपं दत्त्वायाननमाययित् ॥ ५
पूर्वभाग महेन्द्रस्य पश्चो नीलपर्वतः । धातकेन्द्रीव माहेन्द्रस्तिमय घटेश्वराः ॥ ६
कुटिलाच शिवोंसिद्धे धरणी सुमनास्तथा । सिद्धिकाच कुमार्यन्या सप्तनद्यस्सुपावनाः ॥ ७
द्वीपेऽस्मिन्नचलोऽप्योऽपि पञ्चाशल्लक्षयोजनः । निवासस्त्वत्र दिक्पालास्तदापाशोभिविश्रुताः ॥ ८
योजनानामशुल्वहिर्देशोऽनावृत्यपार्थिवः (तिष्ठति) । एतद्द्वीपं समावृत्य स्वादूदो राजते खलु ॥ ९
द्वीपेष्वेतेषु गिरयस्सप्त सत्सुवापणे । प्राकारवल्लिराजन्ते समावृत्य पयोनिधीन् ॥ १०
आरभ्य मेरुं द्वीपानि सप्तसमुद्रान्ति सप्त च । सहस्राणाञ्च पञ्चाशल्लक्षाणाच्चाधिक तथा ॥ ११
दशद्वयेव समाप्ता मानमेतद्धि निश्चितम् । दशकोटिप्रमाणेन स्वर्णभूमिस्ततो द्विजाः ॥ १२
यमपार्श्वगिरिस्तांतु समावृत्य विराजते । स्थूलोऽयं पञ्चसाहस्रैर्योजनानां प्रतिश्रितम् ॥ १३
ततो महासमुद्रोऽपि सर्वविशोत्तरं शतम् । योजनानाञ्च लक्षाणि मेरुश्चापारयन् स्थितः ॥ १४

एकोनविंशल्लक्षञ्च चत्वारिंशत्सहस्रकम् । पञ्चविंशच्च कोटीनां तमोलोकस्ततो द्विजाः ॥ १५
अण्डस्य भित्तिः पूर्वोक्ता ज्ञेया सा कोटियोजना । पञ्चाशत्कोटि विस्तारो मेरोर्दक्षिण पार्श्वतः ॥ १६
पार्श्वेष्वन्येषु विज्ञेयं मानमेवं द्विजोत्तमाः । मेरोरुत्तरभागेऽस्यो महान् कैलास पर्वतः ॥ १७
ब्रह्माण्डभित्तिनिकटे श्रीमानत्र विराजते । तत्र शम्भुर्गणैर्भक्तैः स्तूयमानपदाम्बुजः ॥ १८
विराजते महादेव्या नित्यं मुदितमानसः । अण्डस्यास्य बहिर्भागे रुद्रास्तिष्ठन्ति रक्षकाः ॥ १९
यल्लक्षणं यत्प्रमाणमिदमण्डं मयोदितम् । तल्लक्षणप्रमाणैश्च बहून्यण्डानि भूसुराः ॥ २०

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे एकचत्वारिंशोऽध्यायः ॥

दक्षकाण्डस्समाप्तः ।

உ

ஸ்ரீராமஜெயம்.

श्री महागुरुभ्यो नमः ॥ अविघ्नमस्तु ॥ श्री विघ्नेश्वराय नमः ॥

श्री प्रणतार्तिहरायपरस्मैब्रह्मणेनमः ॥

# श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे

## ॥ उपदेशकाण्ड आरम्भः ॥



शिवम् ॥

परशिवो विजयते ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजं। प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥
विघ्नेश्वरं विश्ववन्द्यं विमलज्ञानबोधकम्। उपदेशकाण्डपूर्त्यर्थंमुमापुत्रं नमाम्यहम् ॥
सृष्टिस्थित्यन्तहेतूनां त्रिमूर्तीनां च हेतवे। श्रीमत्पञ्चावमेशाय परस्मैब्रह्मणे नमः ॥

॥ अथ प्रथमोऽध्यायः ॥

श्रीमहाकैलास निरूपणम् ॥

ऋषयः —

अस्ति मेरोदक्षभागे महान् कैलासपर्वतः। समीपतोऽन्यदमितेश्च भवतेति समीरितम् ॥ १
किं रूपोऽयमृषिश्रेष्ठ किं प्रमाणः किमुच्छ्रयः। एतत्सर्वं विशेषेण वक्तुमर्हसि तापस ॥ २

सूतः —

शृणुध्वं ब्राह्मणास्सर्वे गुह्याद्गुह्यतरं परम्। अस्तिमेरोर्दक्षभागे महान् कैलासपर्वतः ॥ ३
सोऽपरस्य सगणान्यस्य सभकरसेन्दुमौलिनः। संवासो योजनानाञ्च विंशत्कोटिभिरायतम् ॥ ४
श्रीमत्समेतद्द्विगुणमस्य ज्ञेयं द्विजोत्तमाः। नवरत्नमयं तस्य मध्ये शिखरमुत्तमम् ॥ ५
तत्रालय महेशस्य नानारत्नविचित्रितम्। प्राकारगोपुरश्चालवलभीभिर्विराजते ॥ ६
रत्नसिंहासने तत्र महाम्भोजमुखस्थितिः। प्रफुल्लकमलोल्लासपञ्चविंशन्मुखोज्वलः ॥ ७
धृतनानायुधो भास्वत्पञ्चाशत्करमण्डितः। कुन्दुरुकान्तयुगान्तमीद्दार्यविपुलश्चोज्वलः ॥ ८
विविधरत्नखचितभूषणैरपि भूषितः। अनेककोटिसूर्याभः परमानन्दविग्रहः ॥ ९
अपारतनुदर्भागान् स्वरूपलक्षणवर्जितः। यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ॥ १०
महासदाशिवस्सोऽयं राजते तत्र पर्वते। शक्तयः पञ्चविख्याता रुद्राश्च पदयस्तथा ॥ ११
सिद्धाश्च ऋषयस्सर्वे परितस्तमुपासते। सर्वैश्वर्ये संपदस्सर्वव्यापी सनातनः ॥ १२
सेवितः परिवारैश्च सनकार्यसमुदाने। आवृत्य रत्नशिखर मेतदन्यानपि द्विजाः ॥ [illegible]
एकादशातिरम्याणि सुवर्णरत्नमयान्यदो। मूर्तयः पञ्चधन्यास्ता दशाशोऽप्यदपि मूर्तयः ॥ १४
निवसन्ति महेशेता शिखरेषु द्विजोत्तमाः। एतान्यपि परीवृत्य चन्द्रकान्तानि भूसुराः ॥ १५
यथोत्तरोत्तरं तानि शिखराणि शिवस्य हि। अत्र विघ्नेश्वराद्याश्च मूर्तयोऽष्ट महेशितुः ॥ १६
शक्तयो [illegible] संख्याका रम्योरेव विभूतयः। एताश्च पञ्चविंशत्या मूर्तयोऽतिमनोहराः ॥ १७

मातृकाद्यैकपञ्चाशत्संख्याका निवसन्ति । एकोत्तरसहस्रञ्च शिखराण्यमितो द्विजाः ॥ १८
अग्निकान्तानि सर्वाणि तान्येतानि महेशितुः । अष्टोत्तरशतञ्चात्र ताण्डवेशस्य मूर्तयः ॥ १९
सप्तकोटिमहामन्त्राः प्रासादाख्यस्वरूपताम् । निवसन्ति महादेवं ध्यायन्तो हृदयाम्बुजे ॥ २०
एतेषामभितो विप्रा दशसाहस्रसंख्यया । तथैव चैकोत्तरया शिखराणि महान्ति हि ॥ २१
एतानि स्फटिकाभानि राजन्ते शङ्कराज्ञया । अत्र विघ्नेश्वरस्कन्दौ महाशास्ता च भैरवः ॥ २२
वसन्ति देवदेवस्य कुमाराः परया मुदा । नन्दिभृङ्गिमहाकाल प्रमुखाश्च गणाधिपाः ॥ २३
वृषेश्वरोऽपि धर्मात्मा कामधेनुरभीष्टदा । दुर्गाबालशकयक्षान्या भक्ताश्चण्डेश्वरादयः ॥ २४
तथाऽत्र मूर्तयः पञ्च नित्यं शिवपरायणाः । एतेषामभितो ज्ञेयं सहस्रैकोत्तरं द्विजाः ॥ २५
शिखराणि मनोज्ञानि रत्नकान्तीनि सन्ततम् । प्रत्यग्भागे स्थितेष्वत्र विष्णुः परमेश्वरम् ॥ २६
उपास्ते परं तत्त्वं ज्योतिर्लिङ्गाकृतिं शिवम् । निवृत्तेच्छाः पद्मासी मोक्षमेवाभिकाङ्क्षिणः ॥ २७
अथोदक् शिखरेष्वेवं विधातारो महेश्वरम् । भजन्तो मोक्षमिच्छन्तो निवृत्ताः परयाऽऽस्थया ॥ २८
प्राच्याः स्थितेषु शिखरेष्विन्द्राद्या लोकपालकाः । वृषारूढं महादेवं ध्यायन्तो निवसन्त्यमी ॥ २९
दक्षिणाशामुखं देवं दक्षिणामूर्तिमव्ययम् । शिखरेषु च याम्येषु ऋषयः संशितव्रताः ॥ ३०
ध्यायन्त्येकाग्रमनसा तत्त्वज्ञानाभिकाङ्क्षिणः । दशलक्ष तथैकाग्रं शिखराणि महीसुराः ॥ ३१
राजन्ते परितश्चैषां स्वर्णकान्तीनि तानि हि । शिखरेष्वेषु विप्रेन्द्रा भूतानामधिपाः स्मृताः ॥ ३२
दशायुतानि (दशायुधानि) रुद्राश्च सिद्धविद्याधरास्तथा । तथा नारदगन्धर्वा स्सुरभिश्च पयस्विनी ॥ ३३
चिन्तामणिः कल्पवृक्षश्शङ्खपद्मनिधी उभे । सुन्दर्यो रुद्रगणिका नानाश्चर्याण्यपि द्विजाः ॥ ३४
सामीप्यरूपां मुक्तिं च प्राप्तास्त्वत्र, वसन्ति हि । एतेषामभितोऽन्यानि शिखराणि द्विजोत्तमाः ॥ ३५
राजतान्येषु संख्या च कोटिरेकाधिका मता । एतेषु शिव सुधाद्विसहस्रमिता गजाः ॥ ३६
षडक्षाः प्रणवात्मानो निवसन्ति शिवाज्ञया । अश्वास्तथा वेदमया विमानानि रथास्तथा ॥ ३७
एकपादो द्विपादश्च त्रिपादो बहुपादकाः । अपादाश्चैकवदना द्व्यादिवदनाः परे ॥ ३८
तथा शतवदनाः केचिदेकद्वित्रिकरा द्विजाः । अकराश्चैकनयना द्व्यादिनयनाः परे ॥ ३९
अनेकनयनाश्चान्ये तथा विनयनाः परे । मनुष्यवदनाः केचित्पक्षिवक्त्राः परे द्विजाः ॥ ४०
गजाश्वसिंहशार्दूलगोमायुवदनाः परे । ऋक्षवानरमल्लूकतरक्षुवदनाः परे ॥ ४१
एते भूतगणास्सर्वे नानारूपादिशोभया । निवसन्ति समुत्सुकाः शिवेनात्र द्विजोत्तमाः ॥ ४२
दिव्यरामसहस्राणि दिव्यवीर्याण्यनेकशः । काननानि च भूरीणि नानाश्चर्याणि सर्वतः ॥ ४३
ऋषयो नाकिनः केचिन्निवसन्ति द्विजोत्तमाः । सालोक्यरूपां मुक्तिं ये प्रासादशङ्करपूजया ॥ ४४
भुक्त्वा तेऽपि महाभोगान्वसन्ति परया मुदा । अष्टदशोत्तरदशमेकादशसहस्रकम् ॥ ४५
तथैकादशलक्षञ्च कोटिरेका द्विजोत्तमाः । शिखराण्यमितास्संख्या स्सर्वेषामिति निश्चिताः ।
एवं विराजते शंभोर्महाकैलास पर्वतः ॥ ४६

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे प्रथमोऽध्यायः ॥

---

॥ अथ द्वितीयोऽध्यायः ॥

श्री महाकैलासे नन्दीश्वरादीनां स्थाननिरूपणम् ॥

स्वर्णभूमिरधोभागे तस्यैतस्य द्विजोत्तमाः । कोटियोजनमानेन परिवृत्य विराजते ॥ १
अत्र रुद्रसहस्राणि ऋषयश्च तपोधनाः । सुबहूनि च भूतानि भुक्त्वा भोगान्यथेप्सितान् ॥ २
वसन्ते शिवभक्तास्ते शिवध्यानपरायणाः । प्राकारः स्वर्णभूमिं तां काञ्चनो राजतेऽमितः ॥ ३
कोटियोजनमानेन विशालोऽस्य समुन्नतिः । द्विकोटिका समुद्दिष्टा द्वाराण्यष्टात्र भूसुराः ॥ ४
गोपुराण्यष्टसंख्यानि तेषु द्वारेषु चासते । कोटिभौमानि दिव्यानि नानारत्नमयानि हि ॥ ५
तत्र प्राचि हरिद्भागे गोपुरं यद्विराजते । तद्द्वारि स्वगणैस्सार्धं विघ्नेशस्तिष्ठति द्विजाः ॥ ६
वह्निदिग्गोपुरद्वारि वीरभद्रो गणैस्सह । वर्ततेऽयं महासत्वो ब्राह्मणानामधीश्वराः ॥ ७
याम्यदिग्गोपुरद्वारि नन्दिकेशो गणाग्रणीः । गणैः स्वकीयैस्तत्रास्ते वेत्रपाणिरयं द्विजाः ॥ ८
नैरृत्यां गोपुरद्वारि भैरवः स्वगणैस्सह । विराजते महासत्व दुष्टांकुशविधायकः ॥ ९
प्रत्यग्दिग्गोपुरद्वारि सुब्रह्मण्यशिवात्मजः । स्वसेनाभिरयं तत्र तिष्ठत्यंशो हृदिस्तत् ॥ १०
वायुदिग्गोपुरद्वारि दुर्गादेवी गणैस्सह । तिष्ठत्येषा महासत्वा शिवं ध्यात्वा द्विजोत्तमाः ॥ ११
उदग्दिग्गोपुरद्वारि महाकालो विराजते । देवं देवीं हृदि ध्यात्वा गणैस्साकमसौ महान् ॥ १२
ईशानगोपुरद्वारि महाशास्ता हरात्मजः । शास्त्यधर्मिशरीराणां दिवसान् संयहन् द्विजाः (जगत्)
एवमेते महाभागाः पालयन्त्यखिलं जगत् । अनेकशिवपरैरेवं महाकैलास पर्वतः ॥ १४
नानारत्नमयैर्दिव्यैः प्राकारेणापि संवृतः । नैनं पश्यन्ति पापिष्ठा राक्षसा दानवाः परे ॥ १५
महान्तरेषु प्रलयेष्वेधतेऽण्डोपरि द्विजाः । कैलासेऽस्मिन्महादेवः सर्वानुग्रह कारकः ॥ १६
अनुग्रहं करोत्येव सर्वेषामात्मनां द्विजाः । जम्बूद्वीपस्य कैलासे निग्रहानुग्रहावुभौ ॥ १७
विदधाति सदा शंभुः स्वेच्छया परमेश्वरः । ज्ञानरूपौ कैलासावुभावपि महीसुराः ॥ १८
स्मरणादेतयोः पाप सर्वेषाञ्च विनश्यति । शिवाश्रया पूतावेतौ न मह्यां पर्वते द्विजाः ॥ १९
ज्योतिर्मयौ विभानन्ति पुराणार्थविशारदाः । महासदाशिवश्शंभु र्महाकैलासपर्वते ॥ २०
रुद्रान्तैर्देवैश्च विष्णुपूर्वैर्गणैरपि । महात्मभिस्तपोनिष्ठैर्भक्तैर्नित्यं प्रपूजितः ॥ २१
सर्वैश्वर्यसम्पन्नो राजतेऽत्र महीसुराः । श्रीकण्ठाख्यो महादेवस्सर्वैर्देवैः परैरपि ॥ २२
जंबूद्वीपस्य कैलासे निग्रहानुग्रहावुभौ । करोति सर्वजीवानां स्वेच्छया ब्राह्मणोत्तमाः ॥ २३
भातीसदान्तःपन्था महादेवो महेश्वरः । एतयोरुभयोर्यस्मादतंते लोकरक्षकः ॥ २४
तस्मादथ महत्वाति पूर्णोऽस्ति भवान्वितः । ऊर्ध्वं ज्वलति यदिदं स्वर्गं रक्षति पूर्वदा ॥ २५
पृथिव्यादीनि भूतानि समर्यादानि भूसुराः । य इमं पठतेऽध्यायं शृणोति वा समाहितः ॥ २६
श्रावयेच्छिवभक्तान्वा तेषामीशः प्रसीदति । आयुरारोग्यमैश्वर्यमसौ विन्दति मानवः ॥ २७
शिष्याय भक्तियुक्ताय कृतज्ञाय प्रदर्शयेत् । यस्मै कस्मै न दातव्यं दर्शयेदिदमुत्तमम् ॥ २८
किमत्र बहुनोक्तेन गुह्याद्गुह्यतमं द्विजाः । उपमन्युरिदं श्रुत्वा व्याघ्रपादादधीश्वरात् ॥ २९
प्राप कैलासमतुलं भुक्त्वा भोगान्यथेप्सितान् । उपमन्योरिमं श्रुत्वा कृष्णः कैलासमाप्तवान् ॥ ३०
इत्याद्भुतचरित्रा साक्षाद्दृष्ट्वा पुरीं शिवात् । कैलासमगमद्धीमान् ब्राह्मणानामधीश्वराः ॥ ३१

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे द्वितीयोऽध्यायः ॥

॥ अथ तृतीयोऽध्यायः ॥

श्री स्कन्द वाहन मयूर कुक्कुट चरितम् ॥

ऋषयः —

शूरपद्मो महाघोरः पुरा जातो हि सानुजः । सिंहाननस्तारकोऽस्य कनिष्ठौ बलशालिनौ ॥ १
स विप्राः क्व गतावेताविति सूत महामते । बर्हिकुक्कुटयोर्देहौ शूरस्संगृह्य निर्गतः ॥ २
इत्युक्तं भवता सूत हेतुना केन तद्वद । सूतः — शृणुध्वमृषयस्सर्वे यूयमत्रावधानतः ॥ ३
कल्पे कस्मिन् पुरा स्वामी मयूरञ्चाश्मभूषणम् । अधिष्ठाय विनिर्गत्य लीलयासञ्चरज्जगत् ॥ ४
प्राप्य कैलासमतुलं पर्वतानामधीश्वरम् । अवरुह्य मयूरात्स्वाद्वाहनानामधीश्वरात् ॥ ५
गिरेस्थो मयूरं तं कुक्कुटं केतुरूपिणम् । संस्थाप्य पित्रोर्निकटमापार्य ब्राह्मणोत्तमाः ॥ ६
अवालोकयतामस्य तदा वृत्तिमुभावपि । ब्रह्मविष्णुमुखा देवाः सेवितुं परमेश्वरम् ॥ ७
समागता व्यवस्थाप्य वाहनान्यत्र ते तदा । परमेशान्तिकं पश्चाद्ययुस्सर्वे द्विजोत्तमाः ॥ ८
वाहनानि तदा तेषां मयूरं कुक्कुटं परम् । समणस्य स्थितानीह गर्वेणुकाम्लतारमभिः ॥ ९
शरवाऽवलेपं चत्वारि भूतान्येषां तदा द्विजाः । बोधयित्वा मयूरस्य कुक्कुटस्य महौजसः ॥ १०
तदा मिलित्वा तेऽन्योन्यं मन्युना च समन्विताः । अद्रावयन् महावेगात्सर्वलोकेषु तान्यहो ॥ ११
लुण्ठयित्वा विधेर्लोकं विष्णोर्लोकं सुरेशितुः । वाहनानि च सर्वाणि मारयामासु रक्रुधा ॥ १२
तत्र तत्र स्थितान् देवानन्यानपि विविधस्थितान् । हाहाकारोऽभवद्भीमस्तदा सर्वत्र भूसुराः ॥ १३
दार्ढ्यैर्धतानि भूतानि तत्तल्लोकान् समापुषः । निवृत्य मिलितानीह पूर्ववत्तानि शीघ्रतः ॥ १४
ततो विनिर्गतः स्कन्दः प्रेरितश्शंभुना पुनः । अनन्तकोटिभूतानि वर्तन्ते [illegible] लीलया ॥ १५
ताम्रचूडशिखण्डिभ्यां साकं तत्माखान् स्वकम् । ततो विष्णुमुखा देवा नत्वाऽऽशु परमेश्वरम् ॥ १६
यातानुज्ञा निवृत्तास्ते वाहनारोहणेच्छया । अदृष्ट्वा वाहनान्येते किमेतदिति विस्मिताः ॥ १७
समागतैस्तु जनैः तत्तल्लोकनिवासिभिः । बोधिता भूतचेष्टां ते वाहनानां मृतिं तथा ॥ १८
लोकानां लुंठनं चापि महादुःखसमन्विताः । समागत्य गुहं शीघ्रं प्रणम्य विनयानताः ॥ १९
ऊचिरे तद्विशेषेण वृत्तान्तमनुपूर्वशः । कैरसमाचरितं चेत्थं शीघ्रं वदत हे सुराः ॥ २०
एकशंका मम पुरा यूयमत्र महाशया । इति पृष्टा गुहेनैते विष्णुपूर्वास्सुरोत्तमाः ॥ २१
मयूरकुक्कुटाभ्यां ते साकं भूतानि देवप । शूरादयमेकं प्रथमं पश्चात्संक्षमतः परम् ॥ २२
तारकं सिंहवक्त्रं च तानि चत्वारि मन्युना । वाहनान्यस्मदीयानि हत्वा भूतेषु पूर्ववत् ॥ २३
वाहनस्य मयूरस्य कुक्कुटस्य शिखण्डिनः । वर्तन्ते देवसेनेश रक्ष रक्ष दयानिधे ॥ २४
इति तेषां वचश्श्रुत्वा तानि भूतानि षण्मुखः । समाहूय सुरेशानामपकारो यतः कृतः ॥ २५
तद्रूपमासुरे यैश्चे भवताय महाशया । शापापेतानि भूतानि चत्वार्येषं गुहस्तदा ॥ २६
ततो भीतानि भूतानि प्रणम्य स्कन्दमव्ययम् । आगसो विनिवृत्त्यर्थं प्रसार्य सुरनायक ॥ २७
एतया तदुचितामाज्ञामत्र रक्ष दयानिधे । इत्यश्लेषस्सुरं अत्र नाशाभिः स्वयंते भवान् ॥ २८
इत्युक्त्वा ते प्रणेमुस्तं भक्तवत्सलमव्ययम् । तानि भूतानि देवेशस्ततः प्राह कृपावशात् ॥ २९

युष्माकमासुरजन्म भवत्वद्य महाद्युताः । तत्र जन्मन्यहं युष्मान्नाशं कृत्वा कृपावशात् ॥ ३०
पुनः प्राचीनरूपञ्च प्रदास्यामि न संशयः । इत्युक्तमात्रे देवेन शूरपद्मास्यकद्वये तदा ॥ ३१
उभे भूते महाभीते प्रणम्य स्कन्दमव्ययम् । देवदेव दयासिन्धो रक्षावां परयामुदा ॥ ३२
अकुर्वाव तयोः घोरं बर्हिकुक्कुटरूपयोः । शापान्ते भविष्यावः कदाचेति सुरेश्वर ॥ ३३
तत्प्रसादेन भवता त्वासुरं जन्म भीषणम् । दत्तमस्मत्कृते मोक्षो भावि सर्वाधिपावयोः ॥ ३४
समाकर्ण्य तयोश्शूरपद्मयोर्वचनं गुहः । मन्दस्मितमुखोवाच सुकवान्यकमव्ययम् ॥ ३५
युवां प्रसिद्धो जगति शूरपद्मास्यकैकदा । महासुरो महाघोरो भवतं देवघातकः ॥ ३६
तत्र जन्मनि मैत्र्यावात् मोचितोऽयं यदा तदा । बर्हिकुक्कुटरूपं वां तदा भूयान्महाशया ॥ ३७
इत्युक्त्वा तानि भूतानि प्रेषयित्वाऽमरेश्वरः । अवलोक्य सुरान्सर्वानात्मपार्श्वस्थितान् भयात् ॥ ३९
पतैर्वा मारितास्सेना वाहनानि च हे सुराः । यथापूर्वमेतानि भवन्त्वद्य महाशया ॥ ३९
एवमेतान् कृपां कृत्वा प्रेषयित्वा स्वकं पुरम् । आरुह्य बर्हिणं रम्यं नानालङ्कारमण्डितम् ॥ ४०
स्वपुरं प्राप देवेशः क्षणादेव महीसुराः । भूतान्यमूनि चत्वारि काश्यपस्य महात्मनः ॥ ४१
सर्वभूमुखपाः पुत्रास्तदानीं ब्राह्मणोत्तमाः । तारकं सिंहवक्त्रं च यत्र स्कन्दो जघान तौ ॥ ४२
भूताकारेण कैलासं ययतुः पूर्ववद्द्विजाः । शूरपद्मस्तु देवेन हतमात्रेण दीप्यतः ॥ ४३
गृहीत्वा परमं रूपं बर्हिकुक्कुटयोर्द्विजाः । शुद्धं चकार देवस्य तदाप्यन्ते सुरेशितुः ॥ ४४
इति सम्यक्प्रवाऽभ्यधाम दक्षादीनां समुद्भवः । पुनरन्यद्द्विजश्रेष्ठाः श्रोतव्यं यदभीप्सितम् ॥ ४५

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे तृतीयोऽध्यायः ॥

---

॥ अथ चतुर्थोऽध्यायः ॥

शूरपद्मस्य स्कन्द वाहनत्व प्राप्ति ॥

ऋषयः—सुदृशा शूरपद्मस्य मथिताऽसुरीति या । माया सा जननी तस्य क गते ते उभे सुते ॥ १
तयोर्वृत्तान्तमस्माकं वद सूत तपोधन । सूतः — समाश्रिता यदा शूरं युद्धकाले जनन्यसौ ॥ २
दुष्कृता विनिर्ययौ माया भीता मन्दरपर्वतम् । तदैवाऽजामुखी प्राप्य शूरादिषु मृतेष्वपि ॥ ३
श्रीपर्वते गिरिश्रेष्ठ आगच्छाशु सुते परे । इत्युक्त्वा प्रययौ माया सुतामजमुखीं तदा ॥ ४
ततः कालजवाईलाद्शूरपद्मात्मजो सुताः । असुरेन्द्रस्त्रियश्चैव तौ यत्र पद्मयमायाऽभिरतो ॥ ५
श्रीपर्वते गिरिवरमागत्याजामुखी तदा । दृष्ट्वा समातरं मायामालोक्य यदुपालयत् ॥ ६
मयोपदत्तपुत्रं माया मास्तु ते दुःखमात्मजे । शूरपद्मस्तत्र जाता मयूरं कुक्कुटं वपुः ॥ ७
प्रदीयत महाविष्णुभ्यां वन्दितं पद्माश्रितः । गुहवाहनतैश्वर्यं मत्वन्य सदृशं परे ॥ ८
भूताकारेण कैलासे तौ सिंहमुखतारकौ । वर्तेते तत्र सन्तोषान्महदैश्वर्यं शालिनौ ॥ ९
इति माया वचश्श्रुत्वा पवच्छैनां तदात्मजा । मातरेते महापापाः कथमेषामियं गतिः ॥ १०
यदैतद्वृत्ततोऽप्यर्थं पृष्टवत्यै महामादपात् । माया – कस्मिन् कल्पे पुरा कश्चिच्छाकद्वीपे नृपोत्तमः
प्रभाकराख्यो धर्मात्मा सत्यधामनघस्तकः । बभूव तस्य नृपतेस्सुकुमारी सधर्मिणी ॥ १२
तस्यामुत्पादयामास यमलौ द्वौ सुतौ नृपः । पृथग्जातौ तथा चान्यौ चत्वारस्तु कुमारकाः ॥ १३

चकार च महीपालः पुत्राणाञ्च यथाक्रमम् । पितृमातृपितृभ्रातृनामानि प्रथितान्यथ ॥ १४
शूरपद्माख्यकौ पूर्वौ यमलौ प्रथितौ भुवि । सिंहतारकनामानावन्यावपि सुतावतः ॥ १५
राज्ये पुत्रान्व्यवस्थाप्य प्रभाकरमहीपतिः । प्रतस्थे भार्यया तप्तुं तपोवनमनुत्तमम् ॥ १६
शूराद्यो यथान्यायं राज्य चक्रुरतन्द्रिताः । तदा समागतोऽगस्त्यश्शूरपद्माख्ययोस्तयोः ॥ १७
अवदद्गुहमाहात्म्यं सर्वपापनिकृन्तनम् । सिंहतारकयोरेवं तृणबिन्दुस्तपोनिधिः ॥ १८
तथा बुधमयोगीव योगिनां प्रवरावुभौ । समागत्य क्रमेणैतौ सर्वलोकोपकारकौ ॥ १९
पुण्यं दुर्गामहाशास्त्रोर्माहात्म्यं तत्ववेदिनौ । तदा जगदतुस्सर्वं वत्से सम्यग्यथारुचि ॥ २०
ते इमे भूभृतश्श्रुत्वा ऋषीणां वचनं महत् । केनापि पुण्यपाकेन बभूवुर्भक्तिसंयुताः ॥ २१
शूरपद्माख्ययोर्भक्तिरुभयोष्षण्मुखेऽभवत् । सिंह तारकयोर्दुर्गा महाशास्त्रोरजायत ॥ २२
मयूररूपमादाय शूरो वोढुमियेष तम् । पद्मस्तु कुक्कुटाकारं गृहीत्वा षण्मुखस्य सः ॥ २३
केतुरूपस्तथा प्रीतिं कर्तुमैच्छन्महाबलः । सिंहतारकनामानौ सिंहदन्तिशरीरिणौ ॥ २४
तथा दुर्गामहाशास्त्रोर्वाहनत्वं समीयतुः । एवमेते महीपालास्तत्तद्वाहाभिकांक्षिणः ॥ २५
तेषां पदानि संवोढुं सर्वदा भक्तिसंयुताः । पुत्रेषु राज्यं निक्षिप्य तपस्तप्तुं प्रतस्थिरे ॥ २६
चत्वारिंशत्सहस्राणि तेपिरे ते तपो भृशम् । तदा देवा गिरिं सर्वे कैलासं परमेशितुः ॥ २७
सेवार्थं संगतास्स्वानि वाहनानि गिरेरधः । व्यवस्थाप्य स्वयं प्राप्ताः परमेशान्तिकं मुदा ॥ २८
तद्वाहनानि सर्वेषां ब्रह्मविष्णुमुखादिनाम् । मयूरं कुक्कुटं प्राप्य स्कन्दस्य परमेशितुः ॥ २९
दुर्गाया वाहनं सिंहं महाशास्तुर्गजं तथा । वीक्ष्य प्रोचुर्वचस्तानि गरुडादीनि वालिके ॥ ३०
भवत्पदाप्तये पुत्राः प्रभाकरमहीभृतः । तपश्चरन्ति सुमहत्पञ्चाग्न्यन्तरगा भृशम् ॥ ३१
इति तेषां वचः श्रुत्वा मयूरादीनि कोपतः । अस्मदीयपदप्राप्तिः कथमेषां भवेदिति ॥ ३२
समागत्य तपस्स्थानं निशाम्याग्नीन् बृहच्छिखान् । युष्माभिरेतत्सुमहत्किमर्थं तप्यते तपः ॥ ३३
इति पृष्टा महीपालाश्चत्वारो वह्निपूर्वकैः । जगदुर्वाञ्छितं तेषां वेपमानशरीरिणः ॥ ३४
यस्मात्पूर्वं पदान्येषामस्माकं वह्निपूर्विणाम् । इच्छथासन्मुखानाशु भूतानि भवताऽधुना ॥ ३५
शापयित्वैवं ययुः स्थाने वह्निपूर्वाणि शीघ्रतः । अनुसृत्य महीपालास्तत्स्थानं प्रापिरे तदा ॥ ३६
तत्सम्मुखा महादुःखात् स्तुत्वा वह्निमुखानि ते । भूतान्यमूनि चत्वारि वीक्ष्य वह्निमुखान्यतः ॥ ३७
प्रसन्नानि गिरं प्रोचुस्त्वत्रैव वसताधुना । युष्मादिष्टे भवत्यग्रे चिरकालेन सत्यतः ॥ ३८
इति तेषां वचश्श्रुत्वा भूतान्येतानि वालिके । अष्टावरण (मरण) मूलेषु मिलितान्यवसन्मुदा ॥ ३९
ततस्स्तुत्वा महादेवं प्रणम्य परमेश्वरम् । निवृत्ताः स्वानि वाहानि समादाय सुरान्विताः ॥
ययुः पदानि स्वान्याशु विष्णुब्रह्ममुखास्सुते ॥ ४०

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे चतुर्थोऽध्यायः ।

न स्वीचकार तां भिक्षां कृता भिक्षाऽमुना यतः । तदैनं तापसश्रेष्ठं दृष्ट्वा स्वं काममोहिता ॥ १९
निवृत्तेव क्वचित्कोणे स्थित्वा सुतमुपीश्वरम् । ज्ञात्वा गत्वा तदाग्याशामालिङ्गितवती तदा ॥ २०
प्रबुद्धे तु ऋषौ तस्मिन् पलायनमभिध्यता । वीथ्यां रथ्यास्थले कश्चिद्वटवृक्षो महोन्नतः ॥ २१
वर्तते बहुशाखस्य मूले मेषाश्च शिशिरे । तेषां मध्यं भयाविष्टा प्रविष्टा ननु दारिका ॥ २२
उत्थितस्तापसश्रेष्ठः शिष्यं धर्मगुप्ताह्वयं निजम् । वृत्तान्तमुक्त्वा तां पापां गृहीत्वाऽऽगच्छ मेऽन्तिकम् ॥
इति तं प्रेषयामास दुर्वासास्तापसां निधिः । धर्मगुप्तो विनिष्क्रम्य विलोक्य सदनाद्बहिः ॥ २४
अदृष्ट्वा त्वामपि प्राप्य न दृष्टेत्यवदन्नया । ऋषिरेव ततो ज्ञात्वा दृष्ट्वा ज्ञानाद्यया सुते ॥ २५
रथ्यायां वटवृक्षस्य मूले मेषसमूहगाम् । तत्र गत्वा मयाऽन्वीक्ष्य त्वं गुप्ता वर्तसेऽत्र किम् ॥ २६
वृक्षाग्रे व्योम्नि तिष्ठतु दुराचारे महाशया । शापितयाऽऽगच्छतु अथात् धर्मगुप्तैवमीदृशीम् ॥ २७
इत्युक्त्वा प्रेषयामास धर्मगुप्तं तपोधनः । स तथेति विनिर्गत्य दृष्ट्वा त्वामजमध्यगाम् ॥ २८
शशाप तत्क्षणेतायं वटवृक्षोपरि स्थिताम् । तस्यां रात्र्यां व्यतीतायां प्रातःकाले तपोधनः ॥ २९
समाप्य नियमान्सर्वान् ददर्शैनां वटे स्थिताम् । ददृशुश्च जनाः सर्वे विस्मयोत्फुल्लमानसाः ॥ ३०
पुण्डरीकस्य पत्न्येषा वटवृक्षोपरि स्थिता । किमेतदिति चाशंक्य वदन्तोऽन्योन्यमद्भुतम् ॥ ३१
पुण्डरीकस्तत्र स्थित्वा दृष्ट्वा स्तम्भयेत्य तपोनिधिम् । प्रणम्य विनयानम्रः प्रोवाच वचनं द्विजाः ॥ ३२
प्रेषितैषा मया स्वामिन् भिक्षां दातुं कुटुंबिनी । भवते तापसश्रेष्ठ नागता पुनरेव सा ॥ ३३
वर्तते वटवृक्षाग्रे सर्वेषां विस्मयावहा । फलं पापस्य कस्यैतद्वदैतदपि पृच्छय ॥ ३४
इति तस्य वचः श्रुत्वा ऋषिर्वृत्तान्तमीदृशम् । उक्त्वैषा शापिता तत्र मया पापैवमाहतम् ॥ ३५
पुण्डरीकस्ततः कोपाद्रूपिणा भवताऽधुना । अस्यतेवेदृशं कर्तुं स्त्रीषु पापरतास्वपि ॥ ३६
पापप्रकटने पाप तत्कर्तुर्हि भवेदिदम् । ३७

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे षष्ठोऽध्यायः ॥

---

॥ अथ सप्तमोऽध्यायः ॥

दुर्वासश्शापेन ब्राह्मणीत्वप्राप्तिः ॥

निशम्यास्य वचः कोपात्तापसो प्रत्युवाच तम् । किं वृथा तेऽभिमानोऽयं पत्न्येषेति विमूढधीः ॥ १
अनया मारिताः केचिद्ब्राह्मणा दुष्टशीलया । पक्वान्नं भक्तभक्ष्यं चकारैषा दुरात्मिका ॥ २
अनया पापबुद्ध्याऽन्ये बभूवुः पापिनो द्विजाः । तव पत्नी यदि भवेदियं पापा तदा भवान् ॥ ३
आहूय गच्छतु श्रीमान् तारयित्वा महीरुहात् । इति तस्य वचश्श्रुत्वा तापसाद्भयसो द्विजः ॥ ४
तदा वृक्षादियं किञ्चिदवरोहयती सुते । येनान्ये पुण्या पूषमनया हतमैथुनाः ॥ ५
अवरुक्षात्पतनाध्वेन महीरुहात्स्वयमहीरुहात् । इति प्राह ऋषिश्रेष्ठस्तत्क्षणात् वीक्ष्य मूसुरान् ॥ ६
पुण्डरीकोऽपि भूदेवस्तस्यां मोहपराक्रमम् । अनुमेने द्विजान्सर्वांनाह्वाने मदनातुरः ॥ ७
तद्दिव्यधाम्ना तयान्वाधे ये द्विजास्तत्र संगताः । ते सर्वे तामिमां पापामाह्वयामासुरन्मुखाः ॥ ८
तेषामाह्वानमात्रेण वृक्षमध्यमियं स्थिता । पुण्डरीकस्तत्क्षणात्कोपानलसमावृतः ॥ ९
कथं तिष्ठति सार्धेऽस्य समाहूता द्विजैरियम् । सर्वैरपि यदाद्य त्वं कारणं तापसाधुना ॥ १०

इत्युक्तवन्तं तं वीक्ष्य पुनः प्राह तपोधनः । इतोऽपि बहवस्सन्ति त्वद्धार्यापतयो द्विजाः ॥ ११
नागतास्ते दुराचारास्तत्र तत्र निवासिनः । इत्युक्त्वा वीक्ष्य तां पापां वृक्षमध्यनिवासिनीम् ॥ १२
त्वयाभिसारिता येऽन्ये तानुक्त्वोच्चैर्भटावितः । भवरुह्य गृहं गच्छ त्वं पापे नामतो द्विजान् ॥ १३
तथेति तद्वचः श्रुत्वा त्यक्तभीः कुलटावधूः । नामान्युक्त्वा द्विजानां सा प्रधानस्कन्धमाश्रिता ॥ १४
विस्मृता बहवस्सन्ति मत्संयुक्ता महीसुराः । वर्णिनोऽन्ये गृहस्थाश्च यतयोऽपि तपोधन ॥ १५
बभूवुर्व्रतभङ्गोऽभूदिति ते स्वच्छजीविनः । बलाद्धर्षणमात्रेण बहवो ब्राह्मणोत्तमाः ॥ १६
इत्युवाच पुनश्चैषा दुराचारा हि तापसम् । तच्छ्रुत्वा तापसश्रेष्ठः पुनश्च क्रोधविह्वलः ॥ १७
दुश्शीलां कुलटां पत्नीं पुण्डरीकोऽयमग्रजः । बाल्याऽपि नहि जग्राह भार्यामन्यां सुशीलिनीम् ॥ १८
उपेक्ष्य तदधे स्वामेनां न परित्यक्तवानयम् । त्वया कृतानि पापानि यानि क्रूराणि दुर्जने ॥ १९
फलप्रदानि तान्यस्य नात्र कार्या विचारणा । इत्यार्थैवं सुते वीक्ष्य स्वामृषिः पूर्वजन्मनि ॥ २०
समाकर्ण्य वचः पिशाच्याः पुण्डरीकस्ततोऽब्रवीत् । शैवस्त्वं वैष्णवानस्मान् कार्येयं कृतवानसि ॥ २१
आरोप्य पापं यत्किञ्चिद् द्वेषमात्रेण तापस । इति ब्रुवन्तं तं वीक्ष्य तापसः क्रोधविह्वलः ॥ २२
भगार्थे पापदक्षायामेतस्यां रक्तचाभ्यतः । भगचिह्नो भवाशु त्वं शिष्यैरेतैर्दुरात्मभिः ॥ २३
निन्द्यत्वं वैदिकं मार्गं कुशास्त्रासक्तमानसः । तद्वैर्भिर्ब्राह्मणैः पापैर्भवे भयपराङ्मुखः ॥ २४
आचार्यपत्नीगमनाद् दुरात्मानो द्विजाधमाः । भवन्तु पत्न्यो युष्माकं दुश्शीलास्त्वभिसारिकाः ॥ २५
शापितैवमृषिश्रेष्ठो वीक्ष्यैनां वटवृक्षगाम् । बलाद्धन्तुं यतोऽसांस्त्वं वचसीथ दुरात्मिके ॥ २६
आसुरीभव दीर्घास्यं महाघोरोरुवादिह । गूढासिसेव्यवृक्षे त्वं ततोऽधःगमुखीभव ॥ २७
गच्छाधमम पापिष्ठे वृक्षादस्मादधोमुखा । ग्रामग्रामे कपिवरे भीता त्वं वटवृक्षतः ॥ २८
भयसत्य क्षणेनैव विनयेन तपोधनम् । अश्रयोकवरी वाचं वेपमानाञ्जलिस्थिता ॥ २९
भर्तारं मम कोपेन तच्छिष्यान्मां च तापस । अपि त्वमेतादृशं कर्म कृतवानसि निष्ठुरात् ॥ ३०
तथापि मे त्वयि प्रायो कोपगन्धो न विद्यते । वर्तते प्रीतिरतुला रक्षैनां त्वमुनीश्वर ॥ ३१
येन केन प्रकारेण शरणागतवत्सल । इत्युक्त्वा प्रणनामैषा बहुवारं सुते भयात् ॥ ३२
ततो ऋषिवरस्तुष्टः कृपया वीक्ष्य तामिमाम् । स्वकृतानि दुराचारपरकानि क्षालितानि हि ॥ ३३
प्रकटीकरणायात्र नान्यथा चेष्टितं मया । तच्छ्रुत्वा कर्मशेषेण दैत्यजन्मनि निश्चिते ॥ ३४
स्वेच्छया स्वैरिणी सर्वान् पुरुषानतिमोहिता । रमित्वा प्राप्य मां काले कस्मिंश्चिदतिमोहिता ॥ ३५
कृत्वा संभोगमतुलसुखाय तनयावुभौ । महाशास्त्रगणस्पर्शाद्दग्ध्वा पापानि सुन्दरि ॥ ३६
श्रीपर्वतं नगश्रेष्ठं प्राप्य वैराग्यमुत्तमम् । ततः कालेन कैलासं गत्वा परमशोभनम् ॥ ३७
कृतगौरीसपर्यात्र मोक्षमेष्यस्यनुत्तमम् । इत्युवाच तपस्वी त्वां शिवभक्तवरस्सुते ॥ ३८
तथैव त्वं समुत्पन्ना दैत्यवंशे सुता मम । यथेच्छयेदृशं भोगं भुक्त्वा मदनमोहिता ॥ ३९
प्राप्तासि पर्वतश्रेष्ठं श्रीपर्वतमनुत्तमम् । तथैतत्कथितं तेऽद्य युष्मद्वृत्तं सुते मया ॥ ४०
इतः परं त्वं कैलासं प्राप्य गौरीसपर्यया । मोक्षमेष्यसि सन्देहो नास्त्यत्र त्वमिहात्मजे ॥ ४१

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे सप्तमोऽध्यायः ॥

---

॥ अथ अष्टमोऽध्याय ॥

महामुखीमातु मायाया पूर्वजन्म कथनम्॥

महामुखी — श्रुत मदीय वृत्तान्त भवत्या सम्यगीरितम् । तवपूर्व वदाद्याय श्रोतुमिच्छा ममाधुना ॥ १
इति पुत्रा वचश्श्रुत्वा माया प्राह गिरपुत्र । शृणु वत्से पुरा पत्नी दित्याख्याह तपस्विन ॥ २
काश्यपस्याभजन्पुत्रा भूयासो मम दानवा । तान्सर्वानमरा युद्धे मारयामासुरुल्बणम् ॥ ३
ततस्तस्मात्दु खाह पुत्रशोकेन कर्शिता । श्रीशैल पर्वतश्रेष्ठमनुप्रागत्य मन्युना ॥ ४
हनिष्ये तान्सुरान्सर्वानुत्पाद्य तनयान् परान् । कृतपर्वकस्यचिच्चैव पतित्वा पर्वतात् क्षितौ ॥ ५
मायात्वत्कृत्वाऽसुरे वंशे जातासि ननु पुत्रिके । शूरपद्ममुखान्दैत्यान् काश्यपात्तपसा परान् ॥ ६
जनयिष्याऽपरान् तत्सर्वान् पीडिताभ्वीक्ष्य मत्सुते । कृतहत्यातया त्या च पूर्वजन्मनि सुन्दरीम् ॥ ७
वीक्ष्य जातस्पृहा पुत्रीमजीजनमहो सुते । नगच्छामि पुनस्तस्य निकट पुत्रवाञ्छया ॥ ८
श्रीशैलेऽस्मिन् गिरिश्रेष्ठे शिवकेङ्कयकारिणी । कैलासं पर्वतश्रेष्ठमन्ते प्राप्य सुखान्विता ॥ ९
गौर्या परिचितिं कृत्वा मोक्षमेष्याम्यसंशयम् । श्रीशैलात्पर्वतश्रेष्ठात्पतित्वाह यदा सुते ॥ १०
त्यक्तप्राणा तदाऽस्य तनूपिंडं लब्धवान् । मत्पिता काश्यपस्तु दितिमन्या पुत्रस्यजाम् ॥ ११
विधाय त्वत्क्रमोद्वोऽय वर्तते पुनरात्मजे । कालत्रयपरिज्ञान शुक्रस्य कृपया मम ॥ १२
अस्ति तच्छोकमधुना यथावदनुपूर्वशः । तदेतज्ज्ञानरूपेया मातुर्वाक्य यथाक्रमात् ॥ [illegible]
समाकर्ण्याथ सन्तोषात्सापत्र जननी तदा । श्रीपर्वत गिरिश्रेष्ठे समाप्ता परमेशितुः ॥ १४
परिचर्यां विधायान्ते कैलास पर्वतोत्तमम् । प्राप्य तत्र श्रीगौर्या परिचर्यां विधाय सा ॥
मोक्षमाप समाशाशु पुनरावृत्ति दुर्लभम् ॥ १५
इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे अष्टमोऽध्याय ॥

---

॥ अथ नवमोऽध्याय ॥

विभूति महिमा निरूपणम्॥

ऋषय — यदुक्त भवता सूत पुराणार्थ विशारद । उपदेशमगस्त्याय कृतवानिभमूरिति ॥ १
किमस्योपदिदेशायमुमापुत्र कृपाबलात् । सङ्क्षेपतस्ताश्रेष्ठ श्रूयतामद्य नो मुने ॥ २
सूतः — शृणुध्वमृषयस्सर्वे यूय पुण्यवता वरा । माहात्म्य भस्मनः पुण्य रुद्राक्षस्याघनाशनम् ॥ ३
शिवनामोच्चारणस्य तथा शिवभक्तस्य च । शिवपुण्यस्य माहात्म्य द्रोहस्याकरण प्रभो ॥
(शिवद्रोहस्यपातकम्) ४
माहात्म्य शिवपूजायास्सर्वश्रुति समीरितम् । शिवनाम्ना महत्त्व च शिवयोगस्य वैभवम् ॥ ५
शिवज्ञानस्य माहात्म्यमेतत् सर्व द्विजोत्तमा । उपदिष्टमगस्त्याय स्कन्देनामित तेजसा ॥ ६
कथयिष्यामि तद्वोऽद्य यथावत्तत्कृपाबलात् । कल्पानुकल्पोपकल्पभेदैर्भस्म त्रिधामतम् ॥ ७
मननात्सर्वपाप (पापाना) त्राणाच्छिवकरम् (शिवेशितु) । भस्मेति समाख्यात मुक्तिमुक्तिफलप्रदम् ॥
यद्द धारयेद्भस्म मन्त्रित विधिपूर्वक । कांक्षितान्यस्य सिध्यन्ति नश्यन्ति दुरितान्यपि ॥ ९
यथा देवस्य माहात्म्य दुर्ज्ञेय पार्वतीपतेः । तथैव भस्मनः प्रोक्त वेदवेदाङ्गपारगो ॥ १०

सत्यं ज्ञानं दया श्रद्धा वह्निर्वायुर्जलं स्थलम् । व्योमादीनि च सर्वाणि भस्मान्येतानि वै द्विजाः ॥ ११
ब्रह्मविष्णुमुखैर्देवैर्ऋषिभिश्च तपोधनैः । ब्राह्मणैः क्षत्रियैर्वैश्यैश्शूद्रैरन्यैश्च संकरैः ॥ १२
स्त्रीभिश्च धार्यमेतद्वै भस्मास्यन्वं शिवप्रियम् । अष्टैश्वर्याणि सिध्यन्ति धारणादस्य मन्त्रतः ॥ १३
अत्रापि सिद्धयश्शंभौ भक्तिः परमकारणे । सर्वकष्टकरञ्चैतत्सर्वं सौभाग्यदं परम् ॥ १४
भूतप्रेतपिशाचाश्च राक्षसा दुर्जनाः परे । भस्मदर्शनमात्रेण त्रस्ता धावन्ति दूरतः ॥ १५
तथापस्मारकुष्ठाद्या नश्यन्ति व्याधयः क्षणात् । धार्यं भस्म सदा सद्भिस्त्रिपुण्ड्रोद्धूलनात्मना ॥ १६
उद्धूलनं त्रिपुण्ड्रं च मनसापि न लंघयेत् । श्रुत्या विधीयते यस्मात्तत्त्यागी पतितो भवेत् ॥ १७
उद्धूलने त्रिपुण्ड्रे च तन्माहात्म्य कथासु च । येषाम्न जायते श्रद्धा ते महापाप संयुताः ॥ १८
भस्मना सजलेनैव धारयेच्च त्रिपुण्ड्रकम् । उत्तमांगे ललाटे च गळे वक्षसि नासिके ॥ १९
उभयोः पार्श्वयोश्चैव भुजयोरुभयोस्तथा । बाहुमध्ये च करयोः पृष्ठे ककुदि भूसुराः ॥ २०
धृतं पञ्चदशस्थाने त्रिपुण्ड्रं येनकेनचा । स शिवस्सहरिर्ब्रह्मा स वन्द्योवापि पातकी ॥ २१
वर्णानामाश्रमाणाञ्च मन्त्रतोऽमन्त्रतोपि वा । त्रिपुण्ड्रोद्धूलनं प्रोक्तं आपालैरादरेण च ॥ २२
उद्धूलनं त्रिपुण्ड्रं च ज्ञानाङ्गत्वेन सादरम् । मामनन्ति मुनिश्रेष्ठा श्वेताश्वतरशाखिनः ॥ २३
उद्धूलनं त्रिपुण्ड्रं च मरणाज्ञाननाशनम् । आमनन्ति मुनिश्रेष्ठा अथर्वशिरसि स्थिताः ॥ २४
तथापपक्षान विच्छिद्य ज्ञानादेव तु केवलात् । अज्ञानस्य तु विनाशं याचकं खलु नेतरात् ॥ २५
येन पाशुपतं सम्यग्धृतमाचरितं द्विजाः । तस्मात् ज्ञानं विजायेत घनाज्ञान निवारकम् ॥ २६
उद्धूलनं त्रिपुण्ड्रञ्च मुमुक्षुस्सम्यगाचरेत् । समागते पुरा कस्मिन् प्रळये माधवस्तदा ॥ २७
वटपत्रे स्वयं शिश्ये समुद्रजलमध्यगे । तदानीं भगवानीशस्तत्रासाधवयी स्वयम् ॥ २८
महागुरुदयो यस्यासीदम्भोधिस्सुमहानपि । तं दृष्ट्वा पुरुषश्रेष्ठं हरं तं माधवस्तदा ॥ २९
को भवानिति पप्रच्छ मोहाविष्ट निजान्तरः । तदा तस्मै ददौ भस्म पुरुषोऽयं महान् द्विजाः ॥ ३०
गृहीत्वा तद्धरिर्धृत्वा ललाटेऽभवदह । तदानीमात्तविज्ञानस्स्वात्मानं स्मृतवानयम् ॥ ३१
ददर्श च महादेवं चन्द्रार्धकृतशेखरम् । युवानं पुरुषश्रेष्ठं त्रिणेत्रं कालकन्धरम् ॥ ३२
तं दृष्ट्वा देवमीशानं समुत्थायाशु माधवः । प्रणम्य दण्डवद्भूत्वा पप्रच्छागमनं प्रभोः ॥ ३३

शिवः —

स्रष्टारं सर्वलोकानां चतुर्मुखमहोऽस्म्यहम् । तस्य भार्या भवाभ्यय जनार्दन महाशया ॥ ३४
ममैव शक्तिस्त्वं विष्णो त्वत्तस्याप्तनिरये च । एवमुक्त्वा विधायैनं वशी सर्वेश्वरस्तदा ॥ ३५
रमयामास विश्वात्मा विश्वसंरक्षणोद्यमः । तदापतच्छिवस्याशु वीर्यं काञ्चनसन्निभम् ॥ ३६
तन्नाभिकमलाद्ब्रह्मा पञ्चास्योऽजनि भूसुराः । ससर्ज स प्रजास्सर्वास्सर्वेशस्याज्ञया प्रभुः ॥ ३७
सोऽहङ्कारवशात्पश्चाद्देवेशेनाम्बुजोद्भवः । निकृत्तैकशिरास्तस्मात्चतुर्मुख समाह्वयः ॥ ३८
भस्मधारणमात्रेण विष्णोरपि महीसुराः । विनष्टे हि घनाज्ञानं पुत्रोऽप्यासीच्चतुर्मुखः ॥ ३९
पुरा सर्वान् सुरान्पिपान् वीरभद्रो महाबलः । सर्पासुरेण घोरेण पद्ममेढासुरेण च ॥ ४०
पापेनान्यसुरेणापि मारितान् क्रूरकर्मभिः । भस्मनोज्जीवयामास वीरोऽयं प्राक्षिपत् द्विजाः ॥ ४१
भस्मावकुण्ठिततनोः वामदेवमहामुनेः । अङ्गेन सङ्गमात्रेण वचनानामपीश्वरः ॥ ४२
अनेकजन्म संसिद्ध महापातककञ्चुकः । भस्मब्रह्मराक्षसस्त्वं तथा मोक्षमवाप्तवान् ॥ ४३

द्राविडेषु द्विजः कश्चित् प्रथितः कुत्सिताशयः । सर्वस्त्रीनिरतः पापी सर्वत्राशी दुरात्मवान् ॥ ४४
मृतः कस्मिन् द्विजग्रामे कर्मणा स्वेन भूसुराः । आवध्य रज्जुं तत्पादे बहिर्निन्युर्जना इमम् ॥ ४५
तं पापं यमदूताश्च नरकं निन्युरञ्जसा । ललाटे तस्य वोर्द्धेढे वक्षस्यप्यग्रजन्मनः ॥ ४६
सारमेयस्समागत्य भक्षितुं तं द्विजाधमम् । चचार भस्मलिप्तास्मदेशोऽयं ब्राह्मणोत्तमाः ॥
तावत्सोऽयंद्विजश्शीघ्रं सद्गतिं प्राप्तवान् खलु ॥ ४७

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे नवमोऽध्यायः ॥

---

## ॥ अथ दशमोऽध्यायः ॥

### भुजबलाद्यराज्ञः विभूत्युपेक्षया कष्टप्राप्तिः ॥

अथाप्यन्यत्समाहात्म्यं प्रवक्ष्यामि द्विजोत्तमाः । शृणुध्वं सावधानेन यूयं सर्वे समाहिताः ॥ १
अस्ति चक्राधिपः कश्चित् राजा भुजबलाह्वयः । दानशौण्डस्सज्जनेष्टः प्रजापालनतत्परः ॥ २
स कदाचित्संक्रमणेरवेः पुण्यतिथौ नृपः । दातुं दानानि भूरीणि विप्रेभ्यो मतिमान् ददौ ॥ ३
तदा समागता विप्रा नानादेशनिवासिनः । सुशीलाख्यो द्विजश्रेष्ठो वैदर्भविषयादयम् ॥ ४
समागतस्समाकर्ण्य तस्य दानानि भूसुराः । दृष्ट्वा तं ब्राह्मणश्रेष्ठं सर्वे विप्राः प्रणम्य ते ॥ ५
सुशीलोऽयं सदाचारस्वाध्यायनिरतस्तथा । सर्वशास्त्रार्थतत्वज्ञस्सर्वेश्वरसमादरः ॥ ६
अस्मै देयं द्विजेन्द्राय दानं प्रथमतो नृप । दत्वैतस्य धनं किञ्चिदक्षयं फलमश्नुते ॥ ७
इत्यूचुर्ब्राह्मणास्सर्वे राजानं वीक्ष्य ते तदा । स तेषां वचनं श्रुत्वा तथेत्येनं द्विजोत्तमम् ॥ ८
आजुहाव कृतोद्योगो राजा भुजबलो महान् । द्विजः — धार्यं भस्म त्वया राजंस्त्रिपुण्ड्रोद्धूलनात्मना ॥
अन्यथा तव दानानि निष्फलानि महान्त्यपि । अधृत्वा भस्म यत्किञ्चित्कृतं कर्म महीपते ॥ १०
निष्फलं तद्भवत्येव नात्र कार्या विचारणा । इति विप्रवचश्श्रुत्वा राजा द्रव्यमदेन सः ॥ ११
प्रोवाच सोऽवलेपेन ब्राह्मणं तं द्विजोत्तमाः । धार्यं भस्म मया विप्र त्वदर्थं केन हेतुना ॥ १२
अधृत्वा भस्म दानेषु किं शक्तिर्नास्ति वा मम । धृत्वा भस्म प्रदातव्यं नियमः कोऽयमीदृशः ॥ १३
इति ब्रुवन्तं भूपालं पुनः प्राह महीसुरः । यस्य भस्मनि भूपाल बुद्धिस्तद्धारणेऽपि वा ॥ १४
न जायतेऽस्य पापस्य लक्ष्मीर्नश्यति च क्षणात् । दारिद्र्यं च भवेत्तस्य जायते व्याधयस्तथा ॥ १५
न्यूनान्यङ्गानि पापस्य भवेयुर्नात्र संशयः । पुत्रादयोऽस्य नश्यन्ति भार्यको च भवेदपि ॥ १६
तस्माद्धार्यं नृपश्रेष्ठ कर्मादौ भस्म पावनम् । प्रतिग्रहीतुस्तद्द्रव्यं वर्धते नैतदन्नृप ॥ १७
इति तस्य वचः श्रुत्वा विप्रस्य स महीपतिः । विहस्य वाचं प्रोवाच परिहासेन भूसुराः ॥ १८
पुण्यात्मनोऽपि मे विप्र कथं दारिद्र्यसंभवः । कथं पुत्रादिनाशोऽपि कथं देहेषु हीनता ॥ १९
दूरतो व्याधयस्तस्मात् यत्किञ्चित्प्रोच्यते त्वया । भवेयुरेते यदि वा तदा त्वां प्राप्य भूसुर ॥ २०
भस्मादाय च धृत्वैतद्दुरितानि निवर्तये । इदानीं त्वं गृहाणाशु दानं मद्धस्ततो द्विज ॥ २१
इति तस्य वचश्श्रुत्वा सापराधं महीसुरः । उत्थाय मास्तु मे दानं बाधकं नृप संप्रति ॥ २२
इत्युक्त्वा प्रययौ विप्रस्स्वं देशं ब्राह्मणोत्तमाः । कौतिस्म च तदा भूभृन्महिषीश्चपता यत ॥ २३
एवं कतिपये काले याते सोऽयं महीपतिः । व्याधिना महता क्रान्तस्तस्थौ वेश्मनि केवलम् ॥ २४

महामारीप्रकोपेन मृता सेना तदा यत । शत्रुणोच्चाटितस्तस्माद्भयात्स दुरात्मवान् ॥ २५
भीतस्तदा वनं प्राप भार्यया सह भीषणम् । तत्र जग्राह तद्भार्यां व्याधः कश्चिन्महाबलः ॥ २६
भार्ययापि परित्यक्तस्तदाऽयं दीनमानसः । चचार केवलः पापी क्षुत्पिपासासमन्वितः ॥ २७
भिक्षान्नं याचितुः कश्चिद्दत्तवान्नास्य पापिनः । यदा तदायं चौर्येण चकारोदरपोषणम् ॥ २८
एवं दिनेषु कतिषु नीतेष्वेतेन पापिना । कदाचिदेनं पापिष्ठं चोरयन्तं कचित् द्विजाः ॥ २९
दृष्ट्वा क्षणेन नगरपालकाऽऽबध्य रज्जुना । नीत्वा बहिः पुरस्यास्य पाणीपादौ च चिच्छिदुः ॥ ३०
क्षुत्पिपासाकुलोऽत्यन्तं पुनः कर्मवशेन सः । विदर्भाधिपतेः प्राप नगरं कुण्डिनं द्विजाः ॥ ३१
भिक्षावृत्त्यावसत्तत्र कृपणोऽत्यन्तमातुरः । एतस्मिन् समये विप्राः प्रिया याऽस्य दुरात्मनः ॥ ३२
गृहीता येन स व्याघ्रः शार्दूलेन हतो मृतः । सापि प्राप महापापा पुरं तत्कर्मशेषतः ॥ ३३
छिन्नहस्ता चौर्यवशादियञ्च क्षुत्समाकुला । आधिव्याधिसमाक्रान्तौ कृमिक्लिन्नव्रणावुभौ ॥ ३४
क्रोशन्तौ देहि देहीति भिक्षां चेरतुरत्र तौ । परस्परमभिज्ञाय परस्परमहाशयौ ॥ ३५
सुशीलस्य गृहद्वारे कदाचित्प्रापतुर्द्विजाः । क्रोशन्तौ तौ सुशीलोऽयं दृष्ट्वा दीनमना भृशम् ॥ ३६
युवां कौ कस्य पापस्य भुङ्क्थे फलमीदृशम् । इत्युवाच द्विजश्रेष्ठो महापापाविमौ द्विजाः ॥ ३७
राजा—दशार्णाधिपोऽहं प्रथितो नाम्ना भुजबलाह्वयः । केनापि घोरपापेन दशामेतामवाप्तवान् ॥ ३८
इति तस्य वचः श्रुत्वा द्विजोऽत्याश्चर्यसंयुतः । कृत्वाङ्गुलिं नासिकायां वीक्ष्य सत्वगमुं द्विजाः ॥ ३९
जानासि वा भवानद्य किं मां दृष्टवान् पुरा । इत्युवाच सुशीलोऽयं ब्राह्मणानामधीश्वरः ॥ ४०
राजा — न मे स्फुरति यत्किञ्चिद्दृष्टपूर्वमपि द्विज । क्षणे क्षणे मतिभ्रान्तिस्त्वामिन्नुज्जृम्भते मम ॥ ४१
द्विजः—धार्यं भस्म मया प्रोक्तं न श्रुतञ्च त्वया पुरा । दत्त्वा दानानि भूरीणि द्रव्यगर्वसगर्विणा ॥ ४२
निमन्त्रितोऽप्यहं दानं नाशिवायुक्तयाऽऽगमं पुनः । नूनं भस्मावमानेन प्राप्तेयं निष्ठुरा दशा ॥ ४३
श्रुत्वा सुशीलवचनं वृत्तं स्वप्रपदस्मरत् । प्रणनाम ततो राजा दण्डवत्पृथिवीतले ॥ ४४
आबद्धपाणिः प्रोवाच वचनं पृथिवीपतिः । समागतोऽसि विप्रेन्द्र दानं नाङ्गीकृतं त्वया ॥ ४५
मया च न धृतं भस्म भवदाज्ञाय लङ्घिता । दोषेणानेन विप्रेन्द्र घोरा प्राप्ता दशा ध्रुवम् ॥ ४६
तदद्य भवता स्वामिन्प्रक्षणीयो महापदः । दत्त्वा भस्मेति तं विप्रं प्रणनाम महीपतिः ॥ ४७
ततस्सुशीलः पुण्यात्मा भस्मादात्पतिपावनम् । धृत्वैतत्सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ ४८
ऐश्वर्यं लभते दीर्घं दारांश्चाप्यधिगच्छति । विपत्तिविक्षयं तद्व्याधिमोक्षं समाप्नुयात् ॥ ४९

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे दशमोऽध्यायः ॥

---

॥ अथ एकादशोऽध्यायः ॥

भुजबलराजः विभूतिधारणात् कष्टनिवृत्तिः ॥

इत्युक्त्वा प्रददौ तस्मै सुशीलोऽयं द्विजोत्तमः । तदादायादधौ भस्म स्वशरीरे सुपावनम् ॥ १
तत्क्षणात्संप्रभुस्तच्छिन्नपाण्यंघ्रयो द्विजाः । विनष्टा व्याधयस्सर्वे पूर्वाकारो बभूव हि ॥ २
ततस्स्वं रूपमालोक्य राजाश्चर्यसमन्वितः । प्रणम्य दण्डवद्भूमौ तस्थौ बद्धाञ्जलिः पुरः ॥ ३
तं दृष्ट्वाऽस्य वधूर्दिव्यवासाश्चाश्चर्यसंयुता । स्वभर्तारं विदित्वैनं भूपालं ब्राह्मणोत्तमः ॥ ४

भार्याऽहं ते महीपाल व्याधिग्रस्तकलेवरा । समादाय महर्षेस्तद्भस्म देहि सुपावनम् ॥ ५
धूर्वैतस्त्वीतशोकाऽहं भवाम्यद्य न संशयः । इति तस्या वचश्श्रुत्वा प्रत्युवाच नृपस्तु ताम् ॥ ६
दोषेण केन नासा ते विच्छिन्ना ब्रूहि तन्मम । पत्नी — निर्जगाम यदा दानं नास्त्वित्युक्त्वा द्विजोत्तम ॥ ७
तदाऽहमक्षुध दौष्ट्याद्रूप यौवन गर्विता । दुर्निमित्तमिदं विप्र तद् गृहीत्वा प्रतिग्रहम् ॥ ८
गच्छेत्यवोच वचनं परिहासान्नृपोत्तम । दोषेण तेन नासा मे छिन्नेय सत्यमीरितम् ॥ ९
इति तस्या वचश्श्रुत्वा राजा निश्चित्य तत्त्वतम् । प्रणम्य दण्डवद्भूक्त्वा ब्राह्मणानामधीश्वरम् ॥ १०
प्रियैषा मम विप्रेन्द्र तेन दोषेण सत्वत । छिन्ननासा सदाम्भेवा रक्ष त्वं करुणानिधे ॥ ११
इति ब्रुवन्त स विप्रो मास्तु भीतिरिति ब्रुवन् । ददौ भस्म समादाय क्षिपै देयमिति द्विजा ॥ १२
गृहीत्वा तन्नृपश्रेष्ठ प्रादात्पत्न्यै सुपावनम् । सा समादाय भक्त्या तत् सर्वाङ्गेष्वलेपयत् ॥ १३
तदानीं ववृधे नासा पूर्ववद्भस्म गौरवात् । व्याधयोऽपि गतास्सर्वे पूर्वरूपमगाद्दृतम् ॥ १४
तत प्रहृष्टमनसौ दम्पती तौ घृताञ्जली । प्रणम्य दण्डवद्भूक्त्वा स्तुत्वैनं तस्थतुर्द्विजा ॥ १५
एतस्मिन् समये विप्रा विदर्भविषयाधिप । विचित्ररथनामाथ प्रत्यैतद्भूपमानस ॥ १६
समागत्य द्रुतं विप्र प्रणम्य भुवि दण्डवत् । स्वामिन्मातुलपुत्रोऽयं रक्षित पृथिवीपति ॥ १७
कुशलागत इत्येव विचारोऽभून्महान्मम । भवत्कृपावशाद्दृष्ट इत्युक्त्वाऽय महीपति ॥ १८
परिरभ्य ददौ तस्मै पटान् भूषणमुज्ज्वलम् । तद्भार्यायाश्च वसन समीचीनमदात् द्विजा ॥ १९
उपचारवचोऽभ्युक्त्वा मिनाय स्वगृहं पुन । भोजयामास तौ तत्र दम्पती भक्ष्यभोजनै ॥ २०
संभाष्य बहुधान्योन्य उपचार पुरस्सरम् । प्रेषयामास पश्चात्तन्नगर प्रति भूमिप ॥ २१
तुरगमान् बहून् सुत्यान् भटानपि विधाय स । तत प्रतस्थे नृपतिर्महत्या सेनया युत ॥ २२
सुशीलस्य गृहं प्राप्य विवेकमनसस्तदा । प्रणम्य दण्डवद्भूक्त्वा भार्यया सह भूमिप ॥ २३
भगवन् भवता सत्यनामाभ्यां सुरक्षितौ । भवत्कृपावशादद्य स्वदेशं मास्थितोऽस्म्यहम् ॥ २४
यथा शत्रुजयिष्यामि देहि भस्म तथा मम । इत्युक्त्वा विनयानम्र नृपं वीक्ष्य द्विजोत्तमा ॥ २५
मास्तु भीतिर्नृप रिपोर्भस्मनोऽस्मान्महत्तरात् । इत्युक्त्वा भस्म संमन्त्र्य ददौ तस्मै द्विजोत्तम ॥ २६
तदादाय स्वके काले धृत्वा भस्म सुपावनम् । प्रणम्य त द्विजश्रेष्ठं लब्धानुज्ञ कृताञ्जलि ॥ २७
प्रतस्थे प्रीतिसंयुक्त सेनया च समन्वित । एतदागमनं श्रुत्वा पापी कश्चन राक्षस ॥ २८
हत्वाऽस्य शत्रून् स्ववशे कृत्वा देशं तदीयकम् । बाधयन्नित्यमत्यर्थं प्रजास्सर्वा दुरात्मवान् ॥ २९
निर्ययौ नगरादेनं हन्तुकाम कृपायुत । ततो दृष्ट्वा तु वदनं तस्य भस्मावकुण्ठितम् ॥ ३०
मुक्त्वा रक्षोवपुर्घोरं दिव्यं वपुरवाप्तवान् । भुजबल — दृष्ट्वा त देवमाश्चर्यात्कोऽभवानिति भूपति
वृत्तान्तं श्रोतुकामोऽयं पप्रच्छ द्विजपुङ्गवा । प्रोच्यते नृपतिश्रेष्ठ वृत्तान्तमनुपूर्वश ॥ ३२
इत्युक्तवा स समाहूय स्वयं नगरमुज्ज्वलम् । तत्र वेश्म महच्चारु नानारत्नविचित्रितम् ॥ ३३
प्रापयित्वैनमारोप्य सिंहासनमनुत्तमम् । सुमुहूर्ते सुलग्नेषु पट्टबन्धं च प्रसन्ना ॥ ३४
विधाय गीतवाद्यैश्चाकमङ्गलनिस्वनै । परिवृत पौरजनै परित परया मुदा ॥ ३५
शृणु राजन् प्रवक्ष्यामि चरित्रमवधानत । पश्चिमाशाधिप पूर्वं पश्चोऽहं महीपते ॥ ३६
पीडितो राक्षसै पापैरसुरैरभिमर्त्यै । पुरन्दरस्य निकटमगाम भयविह्वल ॥ ३७

तत्र वृत्तान्तममुना पृष्टोऽहमवदं किल । बाधन्ते राक्षसाः पापा दैत्याश्च जगद्द्विषः ॥ ३८
न शक्यते ममायासो गन्तुं तैरावृतो यतः । इत्युक्त्वेन्द्रस्य निकटमवसं तेन भूपते ॥ ३९
तदानीमागतस्तत्र कुम्भभूस्तपसांनिधिः । तं दृष्ट्वा देवराजासौ प्रणम्यार्घ्यादिपूजया ॥ ४०
पूजयित्वाऽऽसने स्थाप्य स्वयं तस्थौ तदाज्ञया । तस्मिन्नवसरे तत्र नारदोऽप्यागतः किल ॥ ४१
स्थित्वायमासने रम्ये पूजितस्तेन भूपते । युवां शृणुत मद्वाक्यं भूलोके किञ्चिदद्भुतम् ॥ ४२
दृष्ट्वा समागतश्चेमं युवयोरद्यमन्तिकम् । काश्मीरविषयाधीशो वज्रदेहीति विश्रुतः ॥ ४३
राजासौ जितसामन्तस्सुधर्माख्यं पुरोहितम् । विद्याहीनं समुद्वीक्ष्य जगाद वचनं तदा ॥ ४४
किं नाभ्यस्ता त्वया विद्या ब्राह्मणानामलंक्रिया । अनक्षरमुखं भाति श्मशानसदृशं तव ॥ ४५
इति भूपवचः श्रुत्वा पुनः प्राह पुरोहितः । अभ्यस्तापि मया विद्या केन दोषेण वा मम ॥ ४६
नायाति तस्माद्गोविन्दं समाराध्य जगत्प्रभुम् । प्राप्नुयामि ध्रुवं विद्यामित्युक्त्वा स महीसुरः ॥ ४७
आराधयामास हरिं वेदमन्त्रैरनेकधा । ततः प्रसन्नः प्रददौ विद्यां तस्मै हरिस्स्वयम् ॥ ४८
अन्तर्दधे पुनः क्षिप्रं हरिर्दत्वा वरं मुदा । लब्धविद्यस्तदैवायं सुधर्मः प्रीतिसंयुतः ॥ ४९
जगाम भूपनिकटं सर्वविद्वज्जनालयम् । राज्ञे निवेदयामास स्ववरप्राप्तिमादरात् ॥ ५०
ततस्तुष्टिमवाप्यायं वज्रदेही महीपतिः । ब्राह्मणान्मेळयित्वाथ चक्रे सभां सुशोभनम् ॥ ५१
चक्रे दानानि भूरीणि विद्वद्भ्यः परया मुदा । तदा सुधर्मस्स्वकौशल्या धर्षयामास पण्डितान् ॥ ५२
नास्य कश्चित्पुरो विद्वानुत्तरं दातुमीश्वरः । यथा तथायं पारुष्यात्पण्डितानवमानयत् ॥ ५३
तदा चतुर्मुखस्तत्र सर्वलोकपितामहः । वृद्धब्राह्मणवेषेण समुत्थायाब्रवीद्वचः ॥ ५४
विद्या हि विनयोपेता त्रिषु लोकेषु शस्यते । सा चेदविनयोपेता गर्ह्यते सकलैर्जनैः ॥ ५५
तस्मात्त्वं पण्डितोऽप्येतानवमंस्था हि पण्डितान् । न सोऽस्ति कश्चित्पुरुषो विद्वानात्ममतः क्षितौ ॥ ५६
इति तस्य वचश्श्रुत्वा कोपेनायं वचोऽब्रवीत् । तिष्ठ तूष्णीं न कर्तव्यं पाण्डित्यं भवताऽत्र वै ॥ ५७
विद्यया परिहीना ये विवादस्ते मूढबुद्धयः । सभ्या एते न संदेहस्तस्मात्त्वं मूढचेतनः ॥ ५८
किं जानासि वृथा मानी स्थविरः खलु केवलम् । इति निन्दावचश्श्रुत्वा विप्रवेषमसौ त्यजन् ॥ ५९
चतुर्भिर्वदनैस्तत्र लक्षितः कोपविह्वलः । बुद्धिरुक्ता मया ज्ञाता तव पण्डितमानिनः ॥ ६०
न जानाति भवान्किञ्चिद्विद्यालेशमदेन हि । मां च गर्हयति भ्रान्त्या कुत्सया मूढेन चेतसा ॥ ६१
तस्मात्तवास्तु जिह्वेयं न स्पन्दयतु पापिनः । शप्त्वैवमसौ क्षिप्रमत्रैवान्तरधीयत ॥ ६२

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे एकादशोऽध्यायः ॥

---

॥ अथ द्वादशोऽध्यायः ॥

श्री दधीचिवचसा ब्राह्मणयोः कष्ट निवृत्तिः ॥

तदैव स्तंभिता जिह्वा न चचालास्य पापिनः । केवलं मूकवत्तस्थौ तत्रैवास्थानमण्टपे ॥ १
दृष्ट्वैतदद्भुतं राजा किमेतदिति चिन्तयन् । विषादमाप नितरां तदानीं वज्रदन्नृपः ॥ २
पुनर्विशुद्धमनुजं सुधर्मस्य महीपतिः । इतःपरं किं कर्तव्यं विशुद्ध मतिमान् खलु ॥ ३

इति राजवचश्श्रुत्वा जगादवचनं द्विजः । आराध्य देवमधुना पुण्डरीकाक्षमादरात् ॥ ४
प्रापयामि यथापूर्वं वाचमस्याहृतं क्वचित् । इत्युक्त्वा पूजयामास ख्यातः विष्णुमनन्यधीः ॥ ५
तदाऽऽविरासीत्तस्याशु पुण्डरीकेक्षणः प्रियात् । प्रसीद भगवन्विष्णो भक्तानामभयप्रद ॥ ६
शापात्समुद्धराश्वेनं भवद्भक्तमजस्य भो । विशुद्धस्य वचश्श्रुत्वा प्राह विष्णुर्जगन्मयः ॥ ७
मत्तो यत्प्रसादेन लब्ध्वा विद्याममुना पुरा । युक्तं किं विदुषश्शिशान् दूषितुं परुषोक्तिभिः ॥ ८
विनयेन समोपेता विद्या सर्वत्र पूज्यते । विदुषामवमानेन शशापाऽज्ञः क्रुधा भृशम् ॥ ९
तस्मादेनं समुद्धर्तुं शापात्समाच्छक्नुवसे । इति विष्णोर्वचश्श्रुत्वा पुनर्वाचमुवाच सः ॥ १०
दासाः [illegible] वयं स्वामिंस्तव लोकगुरोस्ततः । क्षमस्व मन्तुमेनं त्वं शापादुद्धर शीघ्रतः ॥ ११
इति वाक्यं निशम्यास्य विष्णुस्सर्वजगन्मयः । पुनर्विद्या भवत्वा येऽद्विदुषो दूषयिष्यति ॥ १२
आलोच्य मनसा चैवं जगादवचनं तदा । किं वृथा क्रियते यत्नस्त्वयाऽस्यैऽत्र कर्मणि ॥ १३
शापान्मोचयितुं शक्तिर्नास्ति मे ब्रह्मणोऽधुना । इति ब्रुवन्तं गोविन्दं रुषा वीक्ष्याब्रवीद्द्विजः ॥ १४
त्रिशङ्कुमभितं पूर्वं विश्वामित्रोऽपि तापसः । त्रिदिवं प्रेषयामास स्वतपोगौरवादयम् ॥ १५
न ते दयाऽस्ति तन्मा त्वं स्वामिते पुरुषोत्तम । इति तस्य वचः क्रूरं श्रुत्वा कोपाकुलो हरिः ॥ १६
विनिन्दयसि मां मोहाद्यस्मात् त्वं मामनागतः । परिक्षीणो भवेत्युक्त्वा तिरोधानमथाश्रयत् ॥ १७
विशुद्धं विष्णुना शप्तं विज्ञाय स महीपतिः । विचारमाप चात्यर्थं किमेतदिति चात्मनि ॥ १८
विशुद्धोऽपि क्रमेणायं क्षयमापाद्विप्रणीषु । चिरः प्रक्षीणकाले तु राजा केदारमीश्वरम् ॥ १९
महोत्सवे महासेनस्सेवितुं प्राप भक्तितः । सुधर्मं तं विशुद्धं च समाहूय महेश्वरम् ॥ २०
दृष्ट्वा प्रणम्य भक्त्याशु स्तुत्वा स्तोत्रैरनेकशः । गोपुरद्वारमागत्य तस्थौ ताभ्यां महीपतिः ॥ २१
तदानीमृषयः केचित्प्रणम्य परमेश्वरम् । केदारनाथं सन्तोषाभिवृत्ताः प्रापुरत्र ते ॥ २२
प्रणम्य तानथ भूपालः पाण्युक्तौ प्रदर्शयन् । प्रार्थयामास युष्माभिर्मोचनीयाविति द्विजौ ॥ २३
ब्रह्मविष्ण्वोस्तु विज्ञाय शापं प्राप्ताविमौ द्विजौ । शापान्मोचयितुं चैतावशक्ताः पृथिवीपतिम् ॥ २४
आशीर्भिर्योजयित्वाशु स्वं स्वं स्थानमवापिरे । मोचकः कश्चिदस्तीति निश्वसन्पृथिवीपतिः ॥ २५
परिभ्रान्तिमवापार्य यत्र दुःखितमानसः । तदानीमागतस्तत्र दधीचिस्सह शिष्यकैः ॥ २६
केदारनाथं देवेशं संप्रणम्यात्र भक्तितः । तं दृष्ट्वा तपतां श्रेष्ठं राजा परमया मुदा ॥ २७
प्रणम्य प्रश्रयानम्रः प्रार्थयामास भक्तितः । रक्ष रक्ष द्विजावेतौ ब्रह्मविष्ण्वोर्महाशापे ॥ २८
शापं प्राप्तौ स्वकीयेन दोषेणास्मत्पुरोहितौ । इति राज्ञो वचश्श्रुत्वा ऋषिः परमया मुदा ॥ २९
भस्मादाय ददौ पूतं मन्त्रकं पापसन्ततेः । तदादाय नृपश्रेष्ठो क्षेपयामास विप्रयोः ॥ ३०
तदानीं ववृधे तस्य विशुद्धस्य वपुस्तताम् । सुधर्मस्यापि रसना समजायत पूर्ववत् ॥ ३१
तदेतदद्भुतं दृष्ट्वा सर्वेऽप्याश्चर्यमाययुः । भस्मावलेपनाच्छापान्मुक्तावेतौ द्विजावुभौ ॥ ३२
ब्रह्मविष्ण्वोरतो भस्ममहिमा केन गण्यते । वचरेही महीपालस्तदाश्चर्यं समन्वितः ॥ ३३
दधीचिं तपतां श्रेष्ठं प्रणनाम महीतले । तावुभौ भ्रातरौ विप्रौ प्रणम्य ऋषिसत्तमम् ॥ ३४
भवता रक्षितावावां माहात्म्याद्भस्मनो मुने । ज्ञायते भवता भस्म महिमा शङ्करेण वा ॥ ३५
इत्युक्त्वा दण्डवद्भूमौ नमन्तौ तं च भूमिपम् । आशीर्भिर्योजयित्वाश्वं स्वाश्रमं प्रययौमुदा ॥ ३६

तदाप्रभृति तौ विप्रौ भस्मोद्धूलितविग्रहौ । बभूवतुः परं श्रेयः कुम्भोद्भवपुरन्दरौ ॥ ३७
नारदस्य वचः श्रुत्वा तावुभौ ऋषिदेवपौ । आश्चर्याविष्टमनसौ भस्ममाहात्म्यमद्भुतम् ॥ ३८
भावयन्तौ शिवस्तुष्टौ तस्थतुः परया मुदा । सदाऽहं तत्र विमना यत्किञ्चिन्मनसा स्मरन् ॥ ३९
तिष्ठत्ययं कथामार्गे पुरन्दर सुरेश्वर । बाधन्ते राक्षसा मध्यं समुद्रस्य समाश्रिताः ॥ ४०
दैत्यैस्तो विनाशाय तेषां यत्नं कुरुष्व भो । जगादैवं तदाऽगस्त्यः कोपाकुलितमानसः ॥ ४१
किमुच्यते त्वया भ्रान्त प्रतिपच्यावयोर्वचः । माहात्म्ये वर्ण्यमाने तु भस्मनः पापहारिणः ॥ ४२
तिष्ठत्ययं कथामार्गे इत्यनाश्यतया यतः । तस्मात्तु पाप्मन सहसा राक्षसो भवदोषतः ॥ ४३
शापितश्चैवमगस्त्योऽयं समाहूय पुरन्दरम् । माहात्म्यश्रवणेनात्र भस्मनस्तर्जितेन सः ॥ ४४
प्रयासो राक्षसान्हन्तुं न कश्चिन्मघवन्निति । समुद्रतीरमासाद्य भस्माथर्वाभिमन्त्रितम् ॥ ४५
धृत्वा ललाटे करयोरालोड्य स महानृषिः । आजुहावांबुधिं पाणिं प्रसार्य महाऋषिः ॥ ४६
तदानीमागतोऽम्भोधिः करे नीहारबिन्दुवत् । प्राशयामास तं व्यास्य महादेवमृषीश्वरः ॥ ४७
ददर्शेन्द्रो ह्यसुरान् पाताळाश्रयानपि दुर्जनान् । एवमुक्त्वा ददौ भस्म सुरेशाय घटोद्भवः ॥ ४८
तदा बाणामरेशोऽपि धृत्वा सर्वशरीरके । राक्षसानसुरान्सर्वान् अघातयं महीपते ॥ ४९
ततः पयोधिं मुक्त्वाऽथ प्रतस्थे स्वाश्रमाय च । तदानीं मघवाञ्जीर्णं मामाहूय महीपते ॥ ५०
ऋषेरस्याशमानाय सान्त्वयन्नब्रवीद्वचः । न किञ्चिदपि जानाति मूढोऽयं तपतां वर ॥ ५१
एवमेनं कृपया स्वामिन्नित्युक्त्वा प्रणनाम हि । प्रसन्नः प्राह वचनमगस्त्यो वीक्ष्य मामपि ॥ ५२
भविष्यति महीपालः कश्चिद्भुजबलाह्वयः । दृष्ट्वाऽस्य भस्मतिलके रक्षोवपुरिदं मृतम् ॥ ५३
त्यक्त्वाऽयं शरीरं स्वं समेष्यति यथा पुरा । पश्चिमाशामनुप्राप्य पालयिष्यसि वै ध्रुवम् ॥ ५४
इत्युक्त्वा प्रययौ धीरं स्वाश्रमं प्रति तापसः । तथैवाहं समागत्य न्यवसं पत्तने स्वके ॥ ५५
रक्षोवपुस्तु प्राप्य घोरमत्यन्त गर्हितम् । दृष्ट्वा त्वत्तिलके भस्म प्राप्तवान्मामकं वपुः ॥ ५६
इत्युक्त्वा स्वमठादाशु जगाम बकपस्तदा । तदानीमागतास्सर्वे भटास्तस्य महाबलाः ॥ ५७
तैरयं स्वदिशं प्राप पश्चिमां तुष्टमानसः । स्वपदं प्राप तरसा भस्मसन्दर्शनाद् द्विजाः ॥ ५८
श्रुत्वा चरित्रमस्याशु राजा भुजबलस्तराम् । भस्मस्नानार्थसंयुक्तो भस्मन्यासकमानसः ॥ ५९
भस्मावलिप्तसर्वाङ्गो भस्मशय्यापरस्सदा । पुत्रमित्रकळत्रैश्च भुक्त्वा भोगान्यथेप्सितान् ॥ ६०
कैलासं प्राप देहान्ते मुदा परमया द्विजाः । य एतद्भस्ममाहात्म्यं शृणुयात्सावधानतः ॥ ६१
श्रावयेद्वा पठेद्वापि स याति परमां गतिम् । पुत्रकामो लभेत्पुत्रं धनकामो लभेद्धनम् ॥ ६२
विद्याकामः परां विद्यां मोक्षार्थी मोक्षमाप्नुयात् । स्वर्णस्तेय सुरापान ब्रह्महत्यादि पातकैः ॥ ६३
मुच्यते नात्र सन्देहो नियमाच्छ्रवणात् द्विजाः । बहुनोक्तेन किं विप्रा शृणुध्वं भाषितं मया ॥ ६४
ब्रह्महत्यादिपापानां प्रायश्चित्तमिदं स्मृतम् । सर्वोपनिषदां सारं साक्षात्सर्वेश्वरात्मकम् ॥
कृतार्था यूयमधुना वेदवेदाङ्गकोविदाः ॥ ६५

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे द्वादशोऽध्यायः ॥

---

॥ अथ त्रयोदशोऽध्यायः ॥

श्री रुद्राक्षधारणात् मर्कट कुक्कुटयोः राजमन्त्रिकुले जनिः ॥

अथ रुद्राक्षमाहात्म्यं वर्णयामि द्विजोत्तमाः । सर्वाघौघहरं पुण्यं पठतां शृण्वतामपि ॥ १
भक्तिहीनोऽथवा भक्तो मूर्खो मूर्खतरोऽपिवा । रुद्राक्षं धारयेद्यस्तु मुच्यते पातकैरयम् ॥ २
महाव्रतमिदं प्राहुर्मुनय स्तत्त्वदर्शिनः । रुद्राक्षधारणात्पुण्य केनवा सदृशं भवेत् ॥ ३
सहस्रं धारयेद्यस्तु रुद्राक्षाणां धृतव्रतः । सुरासुरैर्नमस्येऽयं यथारुद्रस्तथैवसः ॥ ४
अभावे तु सहस्रस्य बाह्वोः षोडश षोडश । एकं शिखायां करयोर्द्वादश द्वादश द्वयोः ॥ ५
द्वात्रिंशत्कण्ठदेशे तु प्रत्येकं कर्णयोश्च षट् । धारयेद्यस्तु रुद्राक्षान्रुद्रवत्पूज्यते हि सः ॥ ६
मुक्ताप्रवालस्फटिकरौप्यवैडूर्य काञ्चनैः । धारयेद्यस्तु रुद्राक्षान् स रुद्रो नात्र संशयः ॥ ७
केवलं वापि रुद्राक्षमुद्रमुद्रां बिभर्ति यः । तं न स्पृशन्ति पापानि तमांसीव विभावसुम् ॥ ८
रुद्राक्षमालया जप्तो मन्त्रोऽनन्तफलप्रदः । अरुद्राक्षजपः पुंसां तावन्मात्रफलप्रदः ॥ ९
यस्याङ्गे नास्ति रुद्राक्ष एकोऽपि बहुपुण्यदः । तस्य जन्मनिरर्थं स्यात्त्रिपुण्ड्ररहितं यथा ॥ १०
मूर्ध्नि विन्यस्य रुद्राक्षं यः स्नाति मतिमान्नरः । गङ्गास्नानफलं तस्य जायते नात्र संशयः ॥ ११
केवलं वापि रुद्राक्षाष्टदशमुद्रां बिभर्ति यः । तं न स्पृशन्ति पापानि बहुजन्मोद्भवानि च ॥ १२
पूजयेद्यस्तु रुद्राक्षं मुक्त्वा तोयाभिषेचनम् । यत्फलं लिङ्गपूजायां तदेवाप्नोति निश्चितम् ॥ १३
एकाननाः पञ्चमुखा स्तथैकादशाननाः । चतुर्दशमुखाः केचिद्रुद्राक्षा लोकपूजिताः ॥ १४
भक्त्यैतान्पूजयेन्मर्त्यो दरिद्रोऽपि श्रियं लभेत् । शृणुध्वमवधानेन पुण्याख्यानानि भूसुराः ॥ १५
नन्दिग्रामे पुरा काचिन्महानन्देति विश्रुता । बभूव वारवनिता सर्वावयवसुन्दरी ॥ १६
छत्रं पूर्णेन्दु सङ्काशं यानं स्वर्णविराजितम् । चामराणि सुदण्डानि पादुके च हिरण्मये ॥ १७
विचित्राण्यम्बराण्यस्याद्दास्याश्चन्द्रप्रभाभिभाः । गावो महिष्यश्शतशो दासाश्च बहुसम्पदः ॥ १८
गन्ध कुङ्कुम कर्पूर कस्तूरी लेपनासक्ता । भूषणानि वराणि कोटिसंख्याधिकं धनम् ॥ १९
शिवपूजारता नित्यं सत्यधर्म परायणा । सदाशिवकथासक्ता शिवनाम जपोत्सुका ॥ २०
शिवभक्तान् द्विजान् दृष्ट्वा प्रणमन्ती सदामुदा । विनोद हेतोस्सावेश्या नाट्यमण्डप मध्यगम् ॥ २१
रुद्राक्षभूषितं चैकं मर्कटं चैव कुक्कुटम् । करतालैश्च गीतैश्च सदा नर्तयति स्वयम् ॥ २२
पुनश्च विहसत्युच्चैस्सद्गीभिः परिहासिता । रुद्राक्षैः कृतकेयूर कर्णाभरण कुण्डलः ॥ २३
मर्कटशिशुवत्तस्याः पुरः नृत्यति बालवत् । शिखाग्रे बद्धरुद्राक्षः कुक्कुटः कपिना सह ॥ २४
चिरं नृत्यति नृत्यज्ञः पश्यतां विस्मयावहम् । कालेन निधनं प्रापितौ मर्कट कुक्कुटौ ॥ २५
भद्र सेनाख्य नृपतेः कार्दमाधिपवेदितुः । मर्कटस्तनयो जातो नाम्ना सुधर्मस्सभूपतिः ॥ २६
कुक्कुटस्तस्यमात्यस्य तारकाख्यसुतोऽभवत् । तावुभौ परमस्निग्धौ कुमारौ रूपसुन्दरौ ॥ २७
विद्याभ्यासरतौ बाल्ये सहक्रीडा प्रवर्तनौ । तावुभौ सर्वगात्रेषु रुद्राक्षकृतभूषणौ ॥ २८
हारकेयूर मकुटकुण्डलादि विभूषणम् । हेमरत्नमयं मुक्त्वा रुद्राक्षं दधतुश्च तौ ॥ २९
रुद्राक्षमालिनौ नित्यं रुद्राक्ष वलयोज्ज्वलौ । रुद्राक्षकण्ठाभरणौ सदा रुद्राक्षकुण्डलौ ॥ ३०

कुले महति सञ्जातौ तौ भुक्त्वा भोगमीप्सितम् । पूर्वाभ्यासेन रुद्राक्षे श्रद्धाभक्ति समन्वितौ ॥
कालेन शाम्भव प्राप्तौ पद परमशोभनम् ॥ ३१
इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे त्रयोदशोऽध्याय ॥

---

॥ अथ चतुर्दशोऽध्याय ॥

चित्रादाविर्भूतेन विष्णुना रुद्राक्ष महिमानुवर्णनम् ॥

पुरा पुष्करदेशस्य राजासीत्सौम्यनामधान् । सदा धर्मे निरतो नित्य वेदपारतिप्रिय ॥ १
तस्य भार्या वसुमती रूपयौवनशालिनी । राज्ञो वेश्याभिगमन स्वात्मन्यरतिमीक्ष्य सा ॥ २
दुःखाक्रान्तेन मनसा चिन्तामाप निरन्तरम् । भार्या पुरोहितस्येत्य ततस्तस्यमताश्रयाम् ॥ ३
विज्ञाप्य राज्ञो दुश्चेष्टा निजदुःखस्य कारणम् । स्वस्मिन्नभिरतिस्तस्य केनचा हेतुना भवेत् ॥ ४
इति पृच्छतीमेना सा पुन प्रत्यभाषत । रुद्राक्षधारण भद्रे सर्ववश्यकर परम् ॥ ५
सर्वपापहर नृणा सर्वव्याधिनिकृन्तनम् । भूतप्रेतपिशाचाद्या न च हिंसन्ति मानम् ॥ ६
न च दशन्ति सर्पाश्च धार्यते यै न वा यदा । इत्युक्त्वैक ददौ तस्या रुद्राक्ष सा सुपावनम् । ७
सा तदादाय विश्वासात्कण्ठदेशे बबन्ध हि । तस्याश्चाभ्यन्तरहृदयस्तद्राशौ स महीपति ॥ ८
प्रविश्य भवन तस्यास्तया प्रेम्णेऽति मोहित । एवमेव विशालाक्ष क्रीडयामास ता नृप । ९
तदा विचारकाभावात्सेना तस्य महीपते । हतस्ततस्तु दुद्राव शुश्रुवैव महातुरम् । १०
स पञ्चसहस्रा कश्चित्पुरोधाय पुर नृप । चतुरङ्गबलैस्साकं कृतकोलाहलारवै ॥ ११
श्रुत्वैतत्स महीपालस्सैनया चापशिक्षया । प्रत्यग्रहीत्समायान्त कृतकोलाहलारव ॥ १२
राज्ञोऽस्य सेना सा शीघ्रं दुद्रावैतज्जनतराम् । एकाकी प्राप नगर राजासायलिदधालय ॥ १३
प्राप्याशु भवन स्वस्य पत्न्यै सर्वं निवेद्य च । तस्यावस्थाविनिर्मुक्त स्वराज्ये दुःखितान्तर ॥ १४
तदाऽस्य महिषी प्राह राजान वीक्ष्य दुःखितम् । जयो भविष्यति क्षिप्र धृते रुद्राक्षभूषणे ॥ १५
अस्मिन्नर्थे न सन्देह कर्तव्यो भवता प्रभो । श्रोतव्यस्ते पुराणेषु कृपालोय पुरोहित ॥ १६
इति तस्या वचश्श्रुत्वा समाहूय पुरोहितम् । श्रुत्वा रुद्राक्षमाहात्म्य सर्वं दुःख निवारकम् ॥ १७
बभार स महीपालो रुद्राक्षाणा सहस्रकम् । वसुमत्यपि तद्भार्या दधौ तावत्सुपावनम् ॥ १८
तत प्रतस्थे युद्धाय सन्नद्धोऽथ महीपति । नियोज्य पत्नीं साम्राज्ये सेना स्वस्य यतो भवि ॥ १९
प्रविश्य तान् रिपून्हत्वा दध्मौ शङ्ख महारवम् । वध्वाऽस्य देश स्ववशे कृत्वा प्राप पुर स्वकम् ॥ २०
तत्र स्वभवन प्राप्य भार्यया सह भूमिप । माहात्म्य नितरामस्य वर्णयन् परयामुदा ॥ २१
स्वदेशस्थान् जनान् सर्वान् चक्रे रुद्राक्षधारिण । तस्यास्ता सुकुमारौ द्वौ कुमारौ सर्वलक्षणौ ॥ [illegible]
तत्रैकोऽति दयावयोऽस्य स्मृतस्तस्याविचारत्यया । बभूवतुस्तथा कन्ये सर्वलक्षण सयुते ॥ २३
आद्या सर्वकलाभाग्या स्मृता शिवाङ्गनाख्यया । एतयोरपि रुद्राक्ष बबन्धाथ महीपति ॥ २४
ब्रह्मनाथस्य तनुज कमलाक्षाह्वयो युवा । वसन् कच्छदेशेऽस्य विवाहार्थ कुमारिकाम् ॥ २५
ज्येष्ठा सर्वकलाख्या ता राज्ञोऽर्चितैव धर्मत । तद्राष्ट्रौ भवनकांक्षितावुभौ दपती गुतौ ॥ २६
तदानी कमलाक्षोऽस्य भूषणानि शिव करे । दत्वा स्वीयानि तस्याश्च पेटिकाया विधाय स ॥ २७
संयोगायाह्वयामास ता भार्या मदनातुर । न धार्यते त्वया पूत रुद्राक्ष वरभूषणम् ॥ २८

त्वन्मया सह सङ्गस्ते न युक्तः खलु सर्वदा । इति भार्यावचश्श्रुत्वा कमलाक्षो वचोऽब्रवीत् ॥ २९
धार्यते भूषणं दिव्यं नानारत्नविचित्रितम् । तस्मादस्य किमाधिक्यं रुद्राक्षस्य वरानने ॥ ३०
इति तस्य वचः श्रुत्वा भार्या वचनमब्रवीत् । नधार्यते महामोहाद्रुद्राक्षं परभूषणम् ॥ ३१
महापातकशेषेण दृशोऽयं न हि संशयः । न तेन सह वासो वा संयोगोपिहि युज्यते ॥ ३२
यस्मिन्नर्थे पुराणानि प्रमाणानि न संशयः । अथवा तव विश्वासः कस्मिन्वास्ति नरोत्तमे ॥ ३३
श्रोतव्यो मत्पुरस्सोऽयं सर्वशास्त्रार्थकोविदः । इति भार्यावचश्श्रुत्वा राजा प्राह पुनर्वचः ॥ ३४
इममर्थं यदिब्रूयात्संमतो मम पण्डितः । भविष्यामि तदा भार्या तवाहं पुरुषोऽपि सन् ॥ ३५
भविष्यसि त्वं पुरुषस्सत्यमुक्तं वरानने । लीलयैवं वचः प्राह भार्या वीक्ष्यायमग्रतः ॥ ३६
तस्य तद्वचनं श्रुत्वा तथेत्यङ्गीचकार सा । तस्यां रात्र्यां व्यतीतायां दंपती तौ समुत्थितौ ॥ ३७
कल्याणमण्टपं प्राप्तौ सर्वाभरणभूषितौ । तदानीमागतास्तत्र ब्राह्मणाः केचनोत्तमाः ॥ ३८
द्रष्टुं कल्याणमनयोर्भूपालाश्च समागताः । समागतानियं वीक्ष्य भर्तारमवदत्सुधीः ॥ ३९
संमतस्तव कोवास्मा तेषु विप्रेषु भूमिपः । रुद्राक्षस्य वरिष्ठत्वं प्रष्टुं तद्वक्तुमप्यहो ॥ ४०
इति तस्या वचश्श्रुत्वा स्मितपूर्वमभाषत । पतिः — कल्याणमण्टपे ह्यस्मिन् शेषशायी जनार्दनः ॥ ४१
चित्ररूपी चित्रकुड्ये प्रतिष्ठति वरानने । यद्येषोक्त यदि तदा त्वयोक्तं तत्तथा भवेत् ॥ ४२
उत्थाय सरसा स्थित्वा बद्धाञ्जलिपुटेन वै । इति भर्तुर्वचश्श्रुत्वा तथेत्युक्त्वा पुनश्च सा ॥ [illegible]
बद्धाञ्जलिपुटा विष्णुं चित्ररूपिणमाह हि । अस्ति चेन्महिमा विष्णो रुद्राक्षस्याघहारिणः ॥ ४४
रुद्राक्षधारिणां पाप कृतं पुण्यफलप्रदम् । कृतं च पुण्य पापाय येनारुद्राक्षधारिणा ॥ ४५
भवन्मतौ यदि हरे सत्यो वेदान्तसंमतः । सर्वा विरुद्धस्तमेवं, विश्वतत्त्व संमतः ॥ ४६
तथा यद्यधुना स्त्रीप्रमुत्वायास्माद्भुद्भुतः । स्थित्वा सुखासनं स्वामिन् यथातथ्यं दिशाश्रया ॥ ४७
इत्युक्तमात्रेण हरिः चित्ररूपी भयान्वितः । सत्यं लक्ष्मि त्वया प्रोक्तं सर्ववेदान्तसंमतम् ॥ ४८
माहात्म्यमस्य देवेशः केवलं वेद शङ्करः । जातेन यत्र कुत्रापि जातौ मर्त्येन शोभने ॥ ४९
धार्यते धार्यतं साक्षे रुद्राक्षं परभूषणम् । स एव धन्यः पूज्यश्च विप्रेऽहं तस्य सायनः ॥ ५०
बहुनोक्तेन किं साध्वि सर्वधार्यमिदं ध्रुवम् । इत्युक्त्वा वासुदेवोऽयं पुनर्दिशाश्रये यथा पुरा ॥ ५१
तदेतदद्भुतं दृष्ट्वा सर्वे तत्र जनाः स्थिताः । आश्चर्यमापुरत्यर्थं तस्यां विश्वासमाययुः ॥ ५२
कमलाक्षोऽपि राजायमाश्चर्येण समन्वितः । विचारमाप चात्यर्थं स्मृत्वा स्ववचनं हृदि ॥ ५३
तदानीं तं समावृत्य तस्या भृत्यवधूजनाः । राजंस्त्वमभवा शीघ्रं मुक्त्वा पुरुषलक्षणम् ॥ ५४
स्त्रीचिह्नैर्वस्त्रभूषाद्यैर्भव स्ववचनं स्मरन् । परिहासवचः श्रुत्वा नृपोऽयं व्रीडयानतः ॥ ५५
स्वयं भृत्यजनान् प्राह कथं वा पुरुषो भवेत् । तदानीमहमेतस्या भवेय वल्लभा वधूः ॥ ५६
इत्युक्तमात्रेण तदा पुरुषोऽभूदियं वधूः । कमलाक्षोऽपि सहसा स्त्रीत्वं प्राप दिशाश्रया ॥ [illegible]
कमलाक्षीति विख्याता तदारभ्येयमङ्गना । सोऽयं सर्वकलावल्लभाख्यया प्रथितो भुवि ॥ ५८
कमलाक्षी प्रणम्यैनं भर्तारं वीक्ष्य चाब्रवीत् । प्रयच्छ मम, रुद्राक्षं सर्वपापौघनाशनम् ॥ ५९
सर्ववेदान्तसंसिद्धं साक्षादीशात्मकं परम् । न ज्ञायतेऽस्य माहात्म्यं येनापि त्रिपथायनम् ॥ ६०
इत्थं भक्त्या समादाय दधौ साऽद्य मुदान्विता । तावुभौ दंपती सम्यग्भुक्त्वा भोगांश्च तस्थतुः ॥ ६१
कमलाक्षपिता योऽसौ पद्मनाभाह्वयो नृपः । केरली तं समुद्वीक्ष्य सौभाग्यवन्तं महीपतिम् ॥ ६२

मम पुत्रोऽगमत् सोऽयं कमलाक्षो महीपते । सुता तथापि संप्राप्ता पुत्रद्वयं सुशोभनम् ॥ ६३
अत्याश्चर्यमिदं दृष्टमनयोश्चरितं नृप । अस्ति मे तनयोऽप्यन्यो विबुधाख्यो महामतिः ॥ ६४
तस्य हे कन्यकामन्यां ख्याता चित्राङ्गनाख्यया । प्रयच्छ विधिना राजन् सर्वलक्षणसंयुताम् ॥ ६५
महानाथवचः श्रुत्वा सौम्यवान् पृथिवीपतिः । तथेति च ददौ कन्यां विबुधस्यात्मजां पराम् ॥ ६६
विबुधोऽपि विवाहेनां धृतरुद्राक्षभूषणाम् । मानयित्वा स्वकं देशं प्राप कल्याणवेषतः ॥ ६७
तत्र स्थित्वातु विपुलान् भोगांश्च बुभुजे तथा । सौम्यवान् महानाथोऽपि धृतरुद्राक्षभूषणौ ॥ ६८
कश्यपश्चौ च माहात्म्यं पुराणेषु प्रसिद्धिमत् । भुक्त्वा भोगांश्च विपुलान् दृष्ट्वा दृश्यञ्च शोभनम् ॥ ६९
अन्ते च परया प्रीत्या पुत्रपौत्रकलत्रकैः । श्रीमत्कैलासमतुलं प्रापतुर्ब्राह्मणोत्तमाः ॥ ७०

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे चतुर्दशोऽध्यायः ॥

---

॥ अथ पञ्चदशोऽध्यायः ॥

रुद्राक्षधारण महिमा मार्जारेण स्वर्गात् कल्पवृक्षानयनम् ॥

अथान्यदपि रुद्राक्षमाहात्म्यं पर्वयाम्यहम् । सिन्धुदेशे पुरं किंचिद्रुचकाख्यं सुशोभनम् ॥ १
तत्र कश्चिद्द्विजश्रेष्ठस्सुप्रदीपाख्यो महान् । रुद्राक्षमालाभरणो रुद्रे विन्यस्तमानसः ॥ २
पुत्राः पौत्रास्तदीया ये सर्वे रुद्राक्षभूषणाः । एवं वसन् सुप्रदीपो नियमञ्च चकार वै ॥ ३
रुद्राक्षधारिणामन्नं ह्यश्नाम्यहमनुत्तमम् । नैतरेषां महापापकलुषीकृतचेतसाम् ॥ ४
श्रुत्वाऽस्य नियमं कश्चिद्योगाङ्गाख्यो यतीश्वरः । योगमार्गैकनिरतस्सर्वशास्त्रार्थकोविदः ॥ ५
समागतः पुरं शीघ्रास्सर्वैर्बहुमतो जनैः । न धारयत्ययं पुण्यं रुद्राक्षं वरभूषणम् ॥ ६
तस्मादेनमसौ विप्रस्सुप्रदीपो महामतिः । नाङ्गीचकार भिक्षांच नोक्तवानस्य योगिनः ॥ ७
एवं दिनेषु कतिषु गतेष्वथ यतिः क्षुधा । गृहेषु भिक्षाव्याजेन तद्गृहद्वारमागतः ॥ ८
तमागतञ्च विज्ञाय सर्वे तद्गृहवासिनः । नाङ्गीकृत्य स्थितास्तूष्णीमजानन्त इवान्तरे ॥ ९
सुप्रदीपस्स्वयं पश्चाद्विनिर्गत्य गृहाद्बहिः । किमर्थमागतं गच्छ भिक्षा नास्ति गृहे मम ॥ १०
गृहेष्वन्येषु सर्वेषु भिक्षामट यथेच्छया । रुद्राक्षधारिणामन्नं नेतरेषां च मद्गृहे ॥ ११
न धार्यते त्वया विप्र रुद्राक्षं सर्वपापहम् । इति तस्य वचः श्रुत्वा गच्छ गच्छ पुरो मम ॥ १२
भिक्षा न दीयते तुभ्यमित्युवाच द्विजोत्तमः । एवं निशम्य वचनं सुप्रदीपस्य धीमतः ॥ १३
रुषा बभाषे वचनं परुषाक्षरसंयुतम् । निशम्य वचनं तस्य योगिनो निष्ठुरं तदा ॥ १४
सुप्रदीपात्मजाः क्रुद्धास्तमपृष्ट्वा दुराशयम् । तदीयेनैव दण्डेन निरस्यन् दूरतो द्विजाः ॥ १५
ततस्ससंभ्रमं क्रुद्धस्सन्यासी तत्पुराधिपम् । सालंकाख्यं समासाद्य सर्वमस्मै न्यवेदयत् ॥ १६
सालंकोऽपि नृपश्रेष्ठः श्रुत्वा तदनुपूर्वशः । स्वकीयै रानयामास सुप्रदीपं भटैस्तदा ॥ १७
सन्यासिनं समायान्तं भिक्षार्थं तव वेश्मनि । किमुच्चाटयितुं युक्तमदत्वा तं बलात्पुनः ॥ १८
परुषं वचनं चोक्तं स्वकीयैः पुत्रकैर्हतः । इति राज्ञो वचश्श्रुत्वा सुप्रदीपोऽब्रवीद्वचः ॥ १९
न सन्यासाश्रमो राजन्विना रुद्राक्षधारणम् । रुद्राक्षधारणं हार्दं सर्वस्यैवाश्रमस्य च ॥ २०

रुद्राक्षधारणेनैव मुक्तिर्ज्ञानाच्च केवलात् । इति वेदाश्च चत्वारो वदन्ति किल सादरम् ॥ २१
किञ्चास्ति नियमः कश्चिन्मम राजन्निमं शृणु । रुद्राक्षधारिणामद्य दास्याम्यहमनेनसाम् ॥ २२
स धन्यो मम राजेन्द्र योवा कोवाऽस्तु मानवः । स पूज्यस्तर्हि धर्मात्मा यथा देवो महेश्वरः ॥ २३
नेतरेषाञ्च ददमानामद्य दास्याम्यनुत्तमम् । न पूज्योऽयं महापापी वरीयानाश्रमेष्वपि ॥ २४
सुप्रतीपस्य वचनं श्रुत्वा राज्ञोऽस्य सन्निधौ । सन्यासी च पुनः कोपादिदं वचनमब्रवीत् ॥ २५
किं साध्यमस्ति रुद्राक्षधारणेन मम द्विज । किमायाति धृते तस्मिन्रुद्राक्षे तव भूसुर ॥ २६
गत्वाऽहमधुना शीघ्रं देवलोकमनुत्तमम् । पुष्पाणि योगमाहात्म्यात्कल्पवृक्षस्य आनये ॥ २७
यदि शक्तिस्तव भवेदेव रुद्राक्षधारणात् । तदा त्वयोक्तमखिलं सत्यमेव भविष्यति ॥ २८
इति तस्य वचश्श्रुत्वा योगिनोऽस्य महीसुरः । यदि गत्वा पुरं दैवं योगाभ्यासेन केवलम् ॥ २९
आनयिष्यसि पुष्पाणि त्वमाशु सुरशाखिनः । तदास्ति मद्गृहे कश्चिन्मार्जारशिशुरुज्ज्वलः ॥ ३०
देवलोकं समासाद्य पूजितस्सकलैस्सुरैः । सुशीघ्रं धृतरुद्राक्षः कल्पवृक्षं तु शोभनम् ॥ ३१
आनयिष्यति रुद्राक्षधारणेनैव सत्यतः । सुप्रतीपवचः श्रुत्वा यतिः कोपाकुलस्तदा ॥ ३२
एवं यदि भवेद्वाक्यं तव विप्र तदादितः । धन्यो मम भवान्विप्र भविता नात्र संशयः ॥ ३३
रुद्राक्षधारणं श्रेष्ठं तदा सर्वेषु कर्मसु । उक्त्वैवं योगमार्गस्थः पद्मपत्त्र[?] सकलेष्वपि ॥ ३४
प्राणानायम्य विधिना रामनिश्रयदुज्ज्वलः । गत्वा सुरपुरं शीघ्रात्कल्पवृक्षप्रसूनकम् ॥ [illegible]
समानीयागमन्मध्ये सभायां भूमिपाश्रितम् । ददौ प्रसूनं भूपस्य हस्ते तत्सुरशाखिनः ॥ ३६
दृष्ट्वा तदद्भुतं सर्वे महदाश्चर्यसंयुताः । तुष्टुवुस्तं नृपेन्द्राद्यास्सर्वे तत्र सभासदः ॥ ३७
एवं योगिनमानीय कल्पवृक्षप्रसूनकम् । समागतमयं दृष्ट्वा सुप्रतीपो महीसुरः ॥ ३८
स्वपुत्रं प्रेषयामास स्वगृहं प्रति बुद्धिमान् । मार्जारशिशुमानेतुं धृतरुद्राक्षभूषणम् ॥ ३९
स तु शीघ्रं गृहं गत्वा समाजिग्ये सभान्तरे । तं समादाय मार्जारं सुप्रतीपोऽब्रवीद्वचः ॥ ४०
रुद्राक्षमाहात्म्यात्प्रभावात्स्वर्लोकमद्भुतम् । मार्जारोऽयं देवतरुं समानेष्यति शीघ्रतः ॥ ४१
इत्युक्त्वा चाधिना[?] विमस्तमन्त्रतलेऽक्षिपत् । तदानीमागतं तत्र विमानमति शोभनम् ॥ ४२
पश्यन्तु तत्र सर्वेषु जनेष्वाश्चर्य संयुतः । स्वर्गलोकं ययौ शीघ्रं मार्जारोऽपि महीसुराः ॥ ४३
समायान्तं सुराधीशो विज्ञाय सहसा शची । प्रत्युद्गत्य समारुह्य गजमल्लं स्वसेनया ॥ ४४
अभ्यर्च्य गजात्पूर्णमर्घ्याद्यं प्राप्य तस्य च । भक्तिनम्रो विमानस्थं गजस्कन्धे विधाय च ॥ ४५
विज्ञायागमनं तस्य मनसा वृत्रहा सुधीः । आघ्राय च शिरस्तस्य नेत्रयोश्च विधाय च ॥ ४६
स्वीयैरमर्त्यैरेव समलङ्कृत्य बुद्धिमान् । विधाय पूजामत्यर्थं पुनस्तत्र सुरद्रुमम् ॥ ४७
सुप्रतीपवचस्तथा शिष्टाभ्यासे महात्मनः । उत्सवेन वृक्षमतुलं प्रेषयित्वा सुरेश्वरः ॥ ४८
वेदसिद्धाय देयं प्रेषयित्वाऽमुना सह । मार्जारं ▪ यथापूर्वं व्योमयाने विधाय च ॥ ४९
प्रणम्य परया प्रीत्या प्रेषयामास देवपः । इत्थं संप्रेषितस्तेन मार्जारोऽयं महत्तया ॥ ५०
आरुह्याशु विमानं तद् व्योममार्गमवाप्य[?] । क्षणेन तत्सभामध्ये प्राप तास्यां परिष्कृतः ॥ ५१
अवरुह्य विमानात्स्वादृष्यास्यादि द्विजन्मनः । प्रदक्षिणत्रयं कृत्वा प्रणम्य विनयेन च ॥ ५२
तस्थौ तस्याग्रतस्तस्यां सभायां ब्राह्मणोत्तमाः । भक्त्या प्रदक्षिणीकृत्य वेदसिद्धाद्यपोऽमरः ॥ ५३
प्रणम्य सुप्रतीपं तं जगादेन्द्र वचस्तदा । निष्कण्टकमहं स्वर्गं कृपया तव भूसुर[?] ॥ ५४

पालयामि सदा स्मृत्वा भवन्तं त्वां शिवप्रियम् । इति देवेन्द्रवचनमुपश्रुत्याऽथ पूजितोऽसुरः ॥ ५५
स्वर्गं तदनुमत्याशु विमानेनाथ सोऽमरः । कल्पद्रुमोऽपि तं चित्रं विधाय त्रिःप्रदक्षिणम् ॥
प्रणम्य परया भक्त्या तस्थे तस्याग्रतो द्विजाः ॥ ५६

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे पञ्चदशोऽध्यायः ॥

---

## ॥ अथ षोडशोऽध्यायः ॥

### श्री रुद्राक्षधारणमहिम्ना मार्जारशिशोः देवलोके इन्द्रसत्कारः ॥

इदं तदखिलं राजा विस्मयाविष्टमानसः । उत्थाय तरसा विप्रं प्रणम्य विनयेन च ॥ १
भयेन च समाविष्टो मार्जारं वीक्ष्य तं तदा । प्राप्तस्त्वया कथं स्वर्गस्तत्रेन्द्रेण च किं कृतम् ॥ २
किमुक्तं वचनं ब्रूहि मार्जार वद तत्त्वतः । इति राज्ञो वचश्श्रुत्वा क्षुमतीपतिरायं क्षणात् ॥ ३
स्वर्गलोकस्त्वया प्राप्तो दृष्टश्च सुरपुङ्गवः । पूजितस्तेन मार्जार शिशो तत्त्वं शिवाज्ञया ॥ ४
सुपत्याशु वचनाच्छक्तिं वद सर्वं सदुत्तरम् । इति ब्रुवति विप्रेन्द्रे तस्मिन्रुद्राक्षभूषणे ॥ ५
मार्जारोऽपि समुत्थाय बद्धाञ्जलिपुटोऽब्रवीत् । आरुह्य सुन्दरं दिव्यं विमानमहमुज्ज्वलम् ॥ ६
स्वर्गमापं सुरेशो मां दृष्ट्वा प्रत्यग्रहीन्मुदा । ततस्ससंभ्रमं दृष्ट्वा आगतस्य गजावद्रुतम् ॥ ७
पाणिभ्यां मां समालिङ्ग्य शिरस्याघ्राय भक्तितः । गजस्कन्धं समारोप्य भूषयन् भूषणैः स्वकैः ॥ ८
वृत्तान्तमखिलं ज्ञात्वा कल्पवृक्षामराङ्गभौ । भोजयित्वा मया सार्धं विधायापचितिं पराम् ॥ ९
प्रेषयामास मतिमान् भक्त्या परमया सह । तदानीं तस्य महिषी शची प्रोवाच देवपम् ॥ १०
मार्जारोऽयमिमां पूजां कथमर्हति देवप । कोऽयं समागतः कस्माद्देशादेतद्वद प्रभो ॥ ११
इति तस्या वचः श्रुत्वा सुरेशः प्राह तां पुनः । बिभर्त्ययं परं पुण्यं रुद्राक्षं रुद्रभूषणम् ॥ १२
[illegible] एव धन्यः पूज्योऽपि सर्वैर्देवैश्च मानुषैः । धार्यते येन रुद्राक्षे देहिना पावनं प्रिये ॥ १३
न ज्ञायते त्वया किंवा रुद्राक्षमहिमा प्रिये । अत्र पुण्यां कथां मत्तः शृणुष्वावहिता प्रिये ॥ १४
पूर्वेद्युश्शङ्करं प्राप्य प्रेतराट्सहकिङ्करैः । प्रणम्य परया भक्त्या मन्दरे चारुकन्दरे ॥ १५
नृपः प्रोवाच देवेश सत्यागमलमव्यय । धर्मः — [illegible] शंभो महादेव भक्तवात्सल विश्वप ॥ १६
त्वयैवेदं पुरा दत्तं पदं मम महेश्वर । क्रियते च मया पूजा भक्तानां तव पावनी ॥ १७
भवाब्धिपोते भगवंस्त्वयि ये विमुखा जनाः । पीड्यन्ते पापिनस्ते वै नरके दुःखसागरे ॥ १८
त्वया कृता च मर्यादा कुत्रचिद्वितथा भवेत् । धर्माधर्माश्रयौ मार्गौ कल्पितौ भवता प्रभो ॥ १९
सुखं धर्मफलं शंभो दुःखं पापफलं तथा । विनिर्मितं भगवता देवदेवेन शङ्कर ॥ २०
तद्धेतुस्स्वर्गनरकौ भवतैवहि कल्पितौ । तदत्र मामकैर्दूतैः पीडितं नरके भृशम् ॥ २१
महापापिनमासाद्य भवदीयगणाः प्रभो । दिव्यं विमानमारोप्य नानारत्नविचित्रितम् ॥ [illegible]
सन्ताड्य मामकान् दूतान् कैलासं निन्युरे बत । इति ब्रुवति कीनाशे भयाकुलितमानसे ॥ २३
प्राह गंभीरया वाचा भैरवस्तं शिवाग्रतः । किमस्य पुण्यं मतिमन्नस्ति कीनाश शोभनम् ॥ [illegible]
[illegible] जन्मनि सत्यं त्वं वदात्र शिवसन्निधौ । इति तस्य वचश्श्रुत्वा भैरवस्य स धर्मराट् ॥ २५
चित्रगुप्तं निजाभ्याशे स्थितं दक्षमवावदत् । चित्रगुप्तस्ततो देवं प्रणम्याञ्जलि हस्तवान् ॥ २६

जगाद भैरव वीक्ष्य प्रश्रयावनत पुर । प्रसीद देवदेवेश करुणाकर भैरव ॥ २७
देशे कलिङ्गसंज्ञे ऽस्ति पुर व्याघ्रामिध महत् । तत्रास्त्ययं महापापी जामिजाख्यो महाखल ॥ २८
जारजस्यास्य पापस्य जननी व्यभिचारिणी । जारौघवशात्पापामृतैषा किल दैवप ॥ २९
जारेण रक्षित पापी जनकेनैषदुष्षधी । कालेन यौवने प्राप्ते महाव्यामोहकारणे ॥ ३०
चौर्य कृत्वापि दुष्टात्मा कामबाणेन पीडित । दासीप्रभरतो नित्य सवयोभिश्च तादृशे ॥ ३१
द्रव्याभावात्पुन कस्मिन् दिवसे जनकञ्च तम् । जघान बतपापिष्ट कपटेन दुरात्मवान् ॥ ३२
मद्यपायी सदा तद्वन्मासभोज्यतिवञ्चक । स्तेय कुर्वन् दिने कस्मिन् दृष्टोऽय ग्रामपालकै ॥ ३३
ताडित पीडितो नित्य निहत पितृकानने । नकिञ्चिदस्य पापस्य पुण्यम् जन्मनि विद्यत ॥ ३४
दिनाम्यपिच चत्वारि मृतस्यास्य जगत्प्रभो । बाधितो नितरा दूतैस्त्वदीयैरय प्रभो ॥ ३५
सन्ताड्य तान् मृदा कृतान् भवदीया महेश्वर । मोचयित्वा दुरात्मान कैलास निन्यिरे प्रभो ॥ ३६
न किञ्चिदपि जानेऽह पुण्यमस्य दुरात्मन । इत्युक्त्वा विश्रुतोऽय तस्थे बद्धाञ्जलि पुर ॥ ३७
तमाह भैरवो वीक्ष्य विश्रुत स्मयन्निव । बाहुशाकस्य भूपस्य सुता सर्वाङ्गसुन्दरी ॥ ३८
सखौ गृहे स्वकीये सा हारवर्णि मनोहराम् । विधाय मल्लिकास्तस्या रुद्राक्षमोलमध्यगाम् ॥ ३९
गृहीत्वोद्वीय वा काक कश्चिद्वनमार्गत । अभ्यागतस्तदा छिन्ना हारयष्टिर्मनोहरा ॥ ४०
तदर तन्मध्यरुद्राक्षमेतस्य छिन्नमूर्धनि । पपात किल पुण्येन केनाप्यस्यासितावनम् ॥ ४१
निमग्न रुकसस्पर्शाच्चिद्रत्यापि चान्तक । तेन पुण्येन कैलास प्रापनानयमन्तक ॥ ४२
अहो रुद्राक्षमाहात्म्य मया वक्तु न शक्यते । स वेत्ति रुद्रो भगवान् भक्तरुद्रात्मको न वा ॥ ४३
तदेतत्सर्वमाकर्ण्य पौलादिकपितोऽभवद् (हर्षितामयान्) । तिष्ठते देहिनो यस्य देहे रुद्राक्षमुत्तमम् ॥ ४४
कैलासमेव यातीति किमाश्चर्यं शिवप्रियम् । अस्थि केशादि यस्याया मृताना बहुकालत ॥ ४५
पतित यदि हे शीघ्र कैलास यान्ति वै यम । तस्मादेतस्य कैलासप्राप्तिर्निबाधुर किल ॥ ४६
इति नन्दीशवचन श्रुत्वातौ भयकम्पितौ । विश्रुतयमौ नत्वा देवदेव विधायकम् ॥ ४७
विचिन्तयन्तौ माहात्म्य रुद्राक्षस्याघहारिण । प्रतस्थाते महेशस्य चाज्ञया स्वपद प्रति ॥ ४८
प्रस्थित [illegible] पुनरपि समाहूय महेश्वर । अद्यप्रभृति रुद्राक्षधारिणो मम यत्नमान् ॥ ४९
भारात् दृष्ट्वा यम भवाभ्रत्या ताम्यबला यत्र । दूताश्चापि विशेषा कर्तव्यः श्वामभावत ॥ ५०
ममप्राणाधिका भक्ता भस्मरुद्राक्षधारिण । न तान् प्रत्यधिकारस्ते सत्य सत्यमिहोच्यते ॥ ५१
इति शम्भोर्वचश्श्रुत्वा तथा कृत्वा मनस्ययम् । प्रणम्य परया भक्त्या निर्जगाम पद प्रति ॥ ५२
इत्थ्ंतदखिल शम्भोरसन्निधौ यतवान्सदे । ममात्यन्तमभूत्प्रीति प्रतिरुद्राक्षधारिणम् ॥ ५३
तन्मया यत्नभे पूजाकृतास्याञ्जुसुप्रस्तराम् । इति देवेशवचन श्रुत्वेन्द्राद्यपि विस्मिता ॥ ५४
मामादाय करायपा सा मूर्ध्न्याघ्राय नरेश्वर । कृत्वा स्वनेत्रयोर्भक्त्या प्रेषयामास भूमिप ॥ ५५

गदितमिति निशम्य तत्र वृत्त क्षितिनृपति पृष्ठदशकेन सत्यम् ।
मधिकमुपमियाय भक्तिमस्मिन्नधिगतविस्मयमानसो द्विजेन्द्र ॥ ५६

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे षोडशोऽध्याय ॥

॥ अथ सप्तदशोऽध्यायः ॥

श्रीरुद्राक्षधारणात् शान्तिकस्य भद्रकाल्यनुग्रहः ॥

ततः प्रणम्य राजाऽसौ सुप्रतीपं द्विजोत्तमम् । भक्त्या तस्यापि रुद्राक्षं ययाचे धर्तुमात्मवित् ॥ १
रक्ष मां शरणं प्राप्तं कृतमन्तुं द्विजोत्तम । कृतार्थोऽस्मि कृतार्थोऽस्मि दर्शनालापतस्तव ॥ २
इति ब्रुवति राजेन्द्रे सहसोत्थाय स व्रती । प्रणम्य परया प्रीत्या द्विजश्रेष्ठमुवाच ह ॥ ३
रुद्राक्षधारणात्त्वं वै रुद्रोऽस्यनघ केवलम् । क्षमस्व मत्कृतं मन्तुं दयार्द्रान्तर सर्वदा ॥ ४
न कुप्यन्ति महात्मानः कृतागस्स्वपि देहिषु । स्तुत्वैवमास्थितावेतौ बद्धाञ्जलिपुटावुभौ ॥ ५
सुप्रतीपो निशाम्यासौ स्थापयित्वाऽब्रवीत्कथाम् । देशे मरुसंज्ञेऽस्ति पुरं पद्मकराभिधम् ॥ ६
तत्रास्ते ब्राह्मणः कश्चित्सुगुप्ताख्यो महामतिः । तस्यासंस्तनयाः पञ्च ब्राह्मणस्य सुमेधसः ॥ ७
तेषामवरजः कश्चिच्छान्तिसंज्ञोऽस्ति पुण्यवान् । धूलिक्रीडां वितन्वानः कश्चिद्रुद्राक्षमाप्तवान् ॥ ८
तद्बद्ध्वा निजकण्ठेऽयं सर्वदा तिष्ठति व्रतिन् । न शृणोति वचः पित्रोर्भ्रातॄणां भ्रातृवत्सुधीः ॥ ९
दरिद्रोऽपि न याच्ञासु स्वेच्छया न प्रवर्तते । तद्भ्रातरोऽपि चत्वारः पितृभ्यां सहितायतिन् ॥ १०
याच्ञावृत्त्योदरं नित्यं पोषयन्ति स्वकीयकम् । न याति कुत्रचिद्गेहं मुक्त्वाऽयं ब्राह्मणोत्तमः ॥ ११
यवागुमात्रमप्येष पीत्वा दत्तं तु यत्र तैः । तिष्ठत्येवं चिरं कालं धृतरुद्राक्षभूषणः ॥ १२
द्विषन्त्येनमशृण्वन्तं वचनं भ्रातरस्तथा । तदानीं केरलाधीशो नृपः कश्चन तापसः ॥ १३
नारं बलिं भद्रकाल्याः प्रत्यब्दं विदधात्ययम् । तस्मिन् देशे नरं क्रेतुं लभ्यते न प्रयत्नतः ॥ १४
ततोऽयं प्रेषयामास मारके विषये भटान् । दत्त्वा बहूनि द्रव्याणि क्रेतुं नरमनिन्दितम् ॥ १५
विचार्याभ्यागतास्तेऽपि तत्र तत्र द्विजालये । क्रमेणास्य गृहं प्राप्य वृत्तान्तं सर्वमूचिरे ॥ १६
श्रुत्वैतद्द्रव्यमादाय ते पितृभ्रातरस्तदा । ददुरेनमिमे तेभ्यश्शान्तिकं शान्तमानसम् ॥ १७
स तेषामनुमत्यैतान् प्राप्य सन्तुष्टमानसः । केरलाधीशनगरे तस्थौ पौरोहिते गृहे ॥ १८
पुनर्बलिदिने स्नात्वा शान्तिको धृतभूषणः' । गन्धावलिप्तसर्वाङ्गश्शुश्राव पौरोहितं वचः ॥ १९
पुरोहितेन भवनं राज्ञः प्रापाविकृतधीः । दृष्ट्वैनं न तु राजापि बल्यर्थं निश्चितान्तरः ॥ २०
कालीभवनमापाद्य सार्धं तेनामुना द्रुतम् । संपूज्य तां तदा दिव्यैर्धूपैर्दीपैरनेकशः ॥ २१
पुष्पैर्नानाविधैर्भक्ष्यैर्भोज्यैर्माल्यैश्च शोभितैः । स्थाप्यैनं पुरतस्तस्थौ भद्रकाल्यास्स शान्तिकम् ॥ २२
दृष्ट्वैनं शान्तिकं काली धृतरुद्राक्षभूषणम् । भीता प्रणम्य मनसा सहसोत्थाय सा पुनः ॥ २३
दृष्ट्वा पुरोहितं कोपात्पपौ रक्तं दुरात्मनः । शान्तिकं तं समीक्ष्यैवं जगाद वचनं तदा ॥ २४
न समस्ते जगत्यस्मिन् ब्राह्मणानामधीश्वर । यतस्त्वया गले पूतं रुद्राक्षं धार्यते व्रतिन् ॥ २५
धन्योऽसि त्वं महासत्त्व स्थिरचित्त दृढव्रत । स त्वं रुद्रो न सन्देहस्संपूज्यश्च सुरोत्तमैः ॥ २६
वरं वरय पुण्यात्मन् वाञ्छितं ते ददाम्यहम् । इति काल्या वचः श्रुत्वा शान्तिकः प्राह तां तदा ॥ २७
यदि देयो वरो मह्यं मय्यपि प्रीतिरस्ति चेत् । अयं नरबलिर्मास्तु प्रत्यब्दं तव चेश्वरि ॥ २८
प्रयच्छ वाञ्छितं तस्मै राज्ञे सन्तुष्टमानसा । इति तस्य वचश्श्रुत्वा तथा दत्त्वा वरं च तम् ॥ २९
राजानं वीक्ष्य सा प्राह पुनर्वचनमीश्वरी । पूजयैनं नृप सदा रुद्राक्षवरभूषणम् ॥ ३०
रुद्रवद्वचनं चास्य श्रुत्वा स्थातुं त्वमर्हसि । तव कन्यां प्रयच्छाद्य पाणिग्रहणमार्गतः ॥ ३१
एवं स्थितं चेद्भवतस्सर्वाभीष्टं भविष्यति । यस्मादेनं पुरोधास्ते बल्यर्थमनयन्नृप ॥ ३२

दोषेणानेन निहतस्सन्निधौ तव सत्वत । मृतोऽस्य तनयोऽप्यस्य सुता भार्याऽप्यनिन्दिता ॥ ३३
दग्ध च गेह सुमहत् वह्निना धरणीपते । एव द्विषन्ति ये भ्रातृपितरस्तेऽतिपापिन ॥ ३४
चोरैरपहृतद्रव्या कुष्ठादिव्याधिपीडिता. । क्षुत्तृष्णापीडिता नित्य निराहारा निरालया ॥ ३५
अटन्ति देशाद्देशेते निमग्ना दु खसागरे । य एव धृतरुद्राक्ष पूजयन्ति महेश्वरम् ॥ ३६
ते दग्धकिल्बिषा नित्य मोदन्ते देववत्क्षितौ । इति फाल्ग्या वचश्श्रुत्वा राजाऽप्य प्रीतिसयुत ॥ ३७
विधिना ग्राहयामास पाणि दुहितुरुत्पलम् । भवनञ्च विधायास्य नानाश्लविचित्रितम् ॥ ३८
प्राद्राद्राज्ञा विनचैन (राजादिचिह्नच) स्ट्रेशवदपूजयत् । शान्तिकोऽप्येकरुद्राक्षधारणस्येदृश फलम् ॥ ३९
आलोक्य कण्ठबाहुसमणिबन्धशिरस्स्वपि । बभार किल रुद्राक्ष सहस्राधिकसंख्यया ॥ ४०
भार्यया सहितस्तस्थे मन्दिरे क्रीडयन्मुदा । श्रुत्वैतस्याखिल वृत्तमस्य ये पितृसोदरा ॥ ४१
मदीय इति निश्चित्य त देश प्रापुरञ्जसा । परित्यक्तद्विजाचारा मणाक्लिन्नशरीरिण ॥ ४२
तान् दृष्ट्वाऽप्य मुदा चेतमानयित्वाऽतिसुन्दरम् । स्नापयित्वाशु तैलेन दिव्य वस्त्र प्रदापय ॥ ४३
रुद्राक्षमालया सर्वाअभूषयदय प्रतिन् । तेऽपि रुद्राक्षमाहात्म्यात्स्यक्तकुष्ठादिरोगिण. ॥ ४४
दिव्याम्बरधरा नित्य दिव्याभरणभूषिता । भुक्त्वा भोगान् सुविपुलान् शान्तिकेनामुना सह ॥ ४५
कैलास प्रापुरतुल प्रीत्या परमया युता । अज्ञानतापि रुद्राक्ष मणिभ्रान्त्याऽमुना प्रतिन् ॥
धृतमस्य फल सम्यक् श्रुत किल महामते ॥ ४६
ज्ञात्वा ये शिवभूषण परतम सर्वापवर्गप्रद रुद्राक्ष विधिनाऽमुना निजतनौ सम्यक् सदा बिभ्रति ।
तेषा दग्धनिजैनसामिहफल जानाति कोवा सुधीस्स्वस्त्वा शङ्करमथिका गणपति सत्य मया कीर्तितम् ॥ ४७

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे सप्तदशोऽध्याय ॥

---

॥ अथ अष्टादशोऽध्याय ॥

सूर्यगुरु चरित वर्णनेन विभूतिरुद्राक्ष महिमानुवर्णनम् ॥

सुमतीपत्य वचन श्रुत्वाऽऽश्चर्यसमन्वित । सदाप्रभृति रुद्राक्ष धत्ते ह्यस्य भूषणम् ॥ १
दग्धाघौघो निज कर्म योग कृत्वा यतीश्वर । प्राप्याशु शिवयोगित्व शिवस्यैव प्रसादत ॥ २
मुक्तिमाप शिवज्ञानात्पुनरावृत्तिदुर्लभाम् । तत भाग्य राजापि रुद्राक्षाभरणोज्ज्वल ॥ ३
अनेककालमखिल राज्य कृत्वाऽरिवर्जितम् । भुक्त्वा च विपुलान् भोगान्मानुषानन्दसंयुत ॥ ४
पुत्रेषु राज्य निक्षिप्य शिवलोक ययौ द्विजा । सुमतीपोऽपि रुद्राक्षमाहात्म्यमनुवर्ण्य स ॥ ५
स्वगृह प्राप्य परया प्रीत्याऽनेकाब्दमुज्ज्वल । भुक्त्वा भोगान् बहुविधान् पुत्रै पौत्रैस्समन्वित ॥ ६
शिष्यै प्रशिष्यैस्सहितो बन्धुभिर्भार्यया च । दिव्य विमानमारुह्य देवस्त्रीभिर्विभूषितम् ॥ ७
देवदुन्दुभिनिर्घोषै पुष्पवृष्टिभिरुत्कटै । देवर्षीणा गणैश्चैव पार्षदै परिवीतवान् ॥ ८
इन्द्रेण प्रेषित कल्पवृक्षमाभरण तथा । उज्जयिन्या महाकालमहेशस्य प्रदाय च ॥ ९
मार्जारेणामुना साक शिवलोक ययौ मुदा । तत कालेन सायुज्यमवाप परमेशितु ॥ १०
ऋषय — वर्णित भवता सूत माहात्म्य भस्मन पुरा । रुद्राक्षस्यापि माहात्म्य वर्णित सर्वसंमतम् ॥ ११
भस्मधारणमात्रेण सर्वाभीष्ट भयत्यलम् । किमर्थ धार्यमेवचेत् रुद्राक्ष तापसेश्वर ॥ १२

एतं नस्संशयं छिन्धि पुराणार्थविशारद । अन्यो न त्वदृते छेत्ता संशयस्यास्ति पण्डित ॥ १३
भवादृशानां महतां सत्सु श्रोतृषु तापस । न वाच्यमस्ति परमं रहस्यमपि पावनम् ॥ १४
इति तेषां वचश्श्रुत्वा सूत पौराणिकोत्तम । प्राह गम्भीरया वाचा मन्दस्मितमुखाम्बुजः ॥ १५
श्रृणुध्वमृषयस्सर्वे यूयं विगतकिल्बिषाः । धृतश्च केवलं भस्म वारिणा स्वेदबिन्दुना ॥ १६
धृष्ट्या लाभेन सर्वदोज्ज्वलानामपि भूसुराः । पञ्चमात्र प्रमृष्टेन्द्रिय भवति देहिनाम् ॥ १७
भूतप्रेतपिशाचाश्च राक्षसव्यालतस्कराः । व्याघ्रसिंहादयो यस्मात्सर्वे मर्मभिदस्सदा ॥ १८
हिंसन्ति भस्मनाहीनमरुद्राक्षं महीसुराः । तस्माद्रुद्राक्षमनिशं कण्ठकर्णकरादिषु ॥ १९
भस्मना सह धर्तव्यं ह्यात्मनो हितमिच्छता । न चैतद्भस्मबहिःप्रापणाय वा जलादिभिः ॥ २०
भूतप्रेतपिशाचाश्च न च हिंसन्ति राक्षसाः । न दशन्ति च सर्पास्तं भस्मरुद्राक्षधारिणम् ॥ २१
धर्तव्यमेतत्सूत्रेण सौवर्णेनाथवा द्विजाः । राजतेन च ताम्रेण रुद्राक्षञ्च गलादिषु ॥ २२
यज्ञोपवीते वार्येव भस्मना सर्वदा द्विजाः । तस्मात्सर्वप्रयत्नेन भस्मरुद्राक्षभूषणः ॥ २३
न बिभेति च शत्रूणां यथा निर्भय एव च । अत्रेतिहासं परमं कथयामि महीसुराः ॥ २४
अस्ति कश्चिन्महीपालो देशे सवितृनामके । श्रीमत्स्वयंपुरे रम्ये सिन्धुसेनाह्वयो महान् ॥ २५
■ तु सिंहमिव भूप विन्ध्यदेशाधिपं रिपुम् । काकलास्यपुराधीशं युधि जित्वा महाबलः ॥ २६
द्रावयामास विप्रेन्द्रा महारण्ये ससेनया । न तु तत्र वने सिद्धश्चिर कालं यतम् पुनः ॥ २७
तपसाराध्य गोविन्दं सर्वशत्रुनिबर्हणम् । चक्रं सुमहदापाद्य शत्रुसंहारकारकम् ॥ २८
चक्रप्रदानसमये प्रसन्नो माधवस्तदा । पञ्चावृत्त्यैतद्युक्तं भवेच्छत्रुनिबर्हकम् ॥ २९
ततः परं मदभ्याशं समेष्यति महीपते । इत्युक्त्वान्तर्दधे देवः क्षणाद्धैतदद्भुतम् ॥ ३०
तल्लब्ध्वा महीपालो क्षणाज्जित्वाथ काननात् । सिन्धुसेनं ससैन्यं तमाहूय सहसा बली ॥ ३१
युद्धं कृत्वा पुनश्चक्रं योजयामास भीषणम् । तच्चक्रं सहसा सेनां हत्वा सर्वां विनैव तम् ॥ ३२
आजगाम पुनस्तस्य करं परमभीषणम् । एकाकी सिन्धुसेनोऽथ वनमाप्यातिभीषणम् ॥ ३३
तत्राश्रमं वसिष्ठस्य सञ्ज्ञात्वा प्राप भूसुराः । तत्र दृष्ट्वा महात्मानं वसिष्ठं गौतमं परम् ॥ ३४
कौशिकं नारदादींश्च महर्षीन् संप्रणम्य च । भो भो विप्रास्तपोधनाः कृपयस्सहितामताः ॥ ३५
ईशा सर्वेषु दृश्यन्ते मां जानन्तु मनीषिणः । सोऽहं पराजितो युद्धे शत्रुणा तुल्यतेजसा ॥ ३६
इदानीं शरणं प्राप्तो भवतां पुण्यगौरवात् । तदुपायेन केनापि विजयो मे भवेद्ध्रुवम् ॥ ३७
वदन्तु भगवन्तस्तं तमुपायमृषीश्वराः । इति तस्य वचश्श्रुत्वा सर्वे ते तापसोत्तमाः ॥ ३८
प्रोचुस्तस्य समालोच्य विजयोपायमुत्तमम् । धृत्वा ससेनया भस्म रुद्राक्षं च जयप्रदम् ॥ ३९
युद्धं कृतश्चेद्विजयो भविष्यति न संशयः । सेनाश्च भवतस्सर्वा भस्म रुद्राक्ष वर्जिता । ४०
निहताश्शत्रुणा राजन्नेकस्त्वमवशिष्टवान् । इति तेषां वचश्श्रुत्वा संशयाकुलितस्तदा ॥ ४१
राजा प्रोवाच वचनं प्रश्रयावनतो ऋषीन् । शत्रुणा प्रेषितं चक्रमिदानीं भोस्तपोधनाः ॥ ४२
हत्वाऽऽशु सेनां सकलां मुक्त्वा मां केन हेतुना । निवृत्तं निर्गतं भूयो भस्म रुद्राक्ष वर्जितम् ॥ ४३
सेनाश्च निहतास्सर्वा भस्म रुद्राक्ष हीनतः । इत्युक्त तापसश्रेष्ठा भवद्भिस्संशयस्तत ॥ ४४
इति तस्याकर्ण्यैको वचनं तपतां वरः । त्वया नृप धृतं भस्म रुद्राक्षं च जयप्रदम् ॥ ४५
हेतुना तेन चक्रं तन्मुक्त्वा त्वां निर्गतं ध्रुवम् । राजा — न धृतं भस्म रुद्राक्षं मयाऽप्यायोधनं कृतम् ॥ ४६

कस्तूरीचन्दनालिप्तो मुक्तादामविभूषितः । प्रवृत्तोऽहं मृधे नीलरत्नमुक्ताविभूषितः ॥ ४७
एतावदेव जानेऽहं केवलं तापसोत्तमाः । तथापि मुक्त्वा मां चक्रं दत्त्वा सेना विनिर्ययौ ॥ ४८
इति राज्ञो वचश्श्रुत्वा ऋषयस्संहितान्तराः । शोधय त्वमिहेदानीं मुक्तादामाश्मदामव ॥ ४९
इत्युक्त्वा मौक्तिकं दाम शोधयामासुरञ्जसा । तत्र दृष्ट्वैकरुद्राक्षमेतस्मै तमदर्शयन् ॥ ५०
दृष्ट्वैतद्विस्मयाविष्टो तस्थेऽसौ भयकंपितः । केनवृत्तमिदं भूप कुत आरभ्य धार्यते ॥ ५१
यद् त्वमेतदालोच्य यथार्थं नोऽद्य सन्निधौ । राजा — यदाहं युद्धसन्नद्धः प्रतस्थे त्वरया गृहात् ॥ ५२
तदा वणिकश्चैनेतदुपहारेण दत्तवान् । रणवेगेन धृत्वैतत्प्रवृत्तो रणमण्डले ॥ ५३
न शोधितश्च दामैतन्मौक्तिकं रणसंभ्रमात् । एतस्येति वचः श्रुत्वा ऋषयस्तेऽतिविस्मिताः ॥ ५४
माहात्म्यादस्य राजेन्द्र त्वं जीवितो नात्र संशयः । पराजितो मृतबलो हन्तुं चक्रे विनिर्गते । ५५
इतः परञ्च धृत्वा त्वं भस्म रुद्राक्षमुत्तमम् । बलैश्च भस्म रुद्राक्ष धारकैः परिवीतवान् ॥ ५६
विनिर्गतश्चेद्युद्धाय विजयो भविता ध्रुवम् । नान्योऽस्त्युपायो विजये भस्म रुद्राक्षयोः परः ॥ ५७
इति वाक्यं निशम्यैषां विनिश्चित्य तथेति सः । धृत्वा भस्म च रुद्राक्षं युद्धाय कृतनिश्चयः ॥ ५८
प्रतस्थे स्वयमेकाकी धनाद्धृत्वा धनुर्वरम् । तदानीं मिलितास्तस्य भटाः केचन सायुधाः ॥ ५९
तेषां भस्म च रुद्राक्षं दत्वाऽयं परमोद्यमः । सिंहस्य नगरं शीघ्रमरुरोध स्वबलैस्सह ॥ ६०
विनिर्गत्याशु सिंहोऽपि कलकोलाहलो बलैः । प्रेषयामास तच्चक्रं सर्वेषामुन्निबर्हणम् ॥ ६१
महारवेण तच्चक्रं प्राप्य तत्परसैन्यकम् । दृष्ट्वा तान् भस्म रुद्राक्ष धारिणो रुद्रतेजसः ॥ ६२
प्रणम्य परया भीत्या विधायैषां प्रदक्षिणम् । विनिर्ययौ पुनः पाणिं प्रयोक्तुस्तस्य भूभुजः ॥ ६३
दृष्ट्वैतत्सोऽतिविभ्रस्तः प्राप भयो नवं द्रुतम् । श्रुत्वाथैतस्य वृत्तान्तं सिंहः कालेन बुद्धिमान् ॥ ६४
तपश्चचार सुमहदुद्दिश्य वरुणं द्विजाः । प्रसन्ने यादसां पत्यौ वव्रे वरमुत्तमम् ॥ ६५
अपेक्षिता यदा वृष्टिर्मया यादसते प्रभो । तदैव शीघ्रतो भूयात्प्रसन्नो यदि सर्वदा ॥ ६६
तथेत्युक्त्वा जगामाशु वरुणस्स्वालयं प्रति । इति लब्धवरः सिंहः सिन्धुसेनं परेऽहनि ॥ ६७
माजुहाव रणायाथ कलकोलाहलारवः । प्रत्यग्रहीत्सिन्धुसेनस्तं सिंहं युद्धगर्वितम् ॥ ६८
तदा ससार वरुणं सिंहो मध्यन्दिनेऽपि सः । समाययौ महावेगाज्जलाकारतयाऽम्बुदः ॥ ६९
वृष्ट्या सेनाः परिक्लिन्ना उभयोरपि तास्तदा । सिन्धुसेनस्य सेनासु केवलं भस्मधारिणः ॥ ७०
ये भटास्ते महावृष्ट्या प्रभूतास्त्वविभूतयः । संयुक्तास्तु तदा सिंहबलमादाय भीषणम् ॥ ७१
युयोज सिन्धुसेनस्य सेनास्वतुलविक्रमः । तच्चक्रं सहसाऽऽक्रम्य सिन्धुसेनबलं महत् ॥ ७२
आवृत्य भस्मना हीना न रुद्राक्षान् भटान् बहून् । हत्वा मुक्त्वाशु रुद्राक्षधारिणोऽमुष्य भूमिपम् ॥ ७३
अधाव त्वरया हन्तुं सिंहस्याथ महौजसः । सिन्धुसेनोऽल्पसेनत्वाद्धृत रुद्राक्ष भूषणैः ॥ ७४
भटैः कैश्चित्सहैवाशु वनं प्राप सुदुःखितः । तत्र दृष्ट्वा ऋषीन्पूर्वान् वसिष्ठादीन्प्रणम्य सः ॥ ७५
धृतभस्मा स रुद्राक्षो भस्म रुद्राक्षधारिभिः । बलैर्युक्तस्समुदश्रुत्वा प्रविष्टो रणमण्डलम् ॥ ७६
चक्रं युयोज सेनासु सोऽस्मदीयासु तापसाः । तच्चक्रं सहसाऽऽक्रम्य त्वरया शत्रून्मदीयकान् ॥ ७७

मया सह मित्रतुरगमुपेत्य प्रतिययौ महत् । इत्युवाच कपीनेव समीक्ष्यातिभयान्विता ॥ ७८

इति कथितममी निशम्य राजा निजहृदयेषु विचिन्त्य तत्क्षणेन ।
भवयतमिमं बिभर्ति योऽङ्गे न स मृतिमेति परायुधैः क्षितीश ॥ ७९

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे अष्टादशोऽध्यायः ॥

---

॥ अथ एकोनविंशोऽध्यायः ॥

स सैन्यस्य सिन्धुसेनस्य विभूतिरुद्राक्षधारण महिमाख्यः ॥

इति तेषां वचश्श्रुत्वा पुनराह कपीनयम् । धृत्वा भस्म च रुद्राक्षं केचिद्दलावकुण्ठिता ॥ १
परे प्रवृत्ता युद्धाय ततो वृष्टिरभूत्तराम् । सदा वृष्ट्या परिक्लिन्नास्सेनास्ता उभयोरपि ॥ २
ततश्चक्रं मुमोचायं सिंहस्ताशुनिबर्हणम् । तेन घोरेण निहतास्सेना मम तपोधनाः ॥ ३
इति राज्ञो वचश्श्रुत्वा कथयत्तत्प्रकारणम् । ऊचुरूपं समीक्ष्यैते मनसालोच्य भूसुराः ॥ ४
येषां प्रवृष्टं क्षितिप भस्म वृष्ट्यातिपावनम् । त एव निहता युद्धे चक्रास्त्रेण विवर्जिताः ॥ ५
जीविनो भस्म रुद्राक्षधारिणो भवता सह । पुरा त्रिपुरदैत्यानां भस्म रुद्राक्षधारिणाम् ॥ ६
नासीद्भयं महद्वापोऽपि देवेभ्यो भूपते तदा । ब्रह्म विष्णुमुखा देवाश्चाभिचारेण कर्मणा ॥ ७
भूतान्युत्पाद्य भीमानि प्रेषयामासुरञ्जसा । तानि सर्वाणि तान् दृष्ट्वा भस्म रुद्राक्ष भूषणान् ॥ ८
निवृत्य सहसा जग्मुर्भीतभीतानि भूमिप । पुनश्च विमुखान् भस्म रुद्राक्षेषु विधाय तान् ॥ ९
ब्रह्म विष्णुमुखा देवा विहायैनानमारयन् । तस्मात्त्वमपि राजेन्द्र भस्म रुद्राक्ष भूषणैः ॥ १०
स्वभटैस्सहितो युद्धे शत्रून्द्रावय निर्भयः । धर्तव्यं भस्मना सार्धं रुद्राक्षं वरभूषणम् ॥ ११
केवलं भस्म वृष्ट्याद्यैः प्रमृष्टं भवति ध्रुवम् । रुद्राक्षस्यतु वृष्ट्याद्यैर्न प्रमोक्षो भवेन्नृप ॥ १२
मृतास्तव भटा यस्ते केवलं भस्मधारिणः । वृष्ट्या प्रमृष्टं तद्भस्म सहसा समुदीरितम् ॥ १३
इति तेषां वचश्श्रुत्वा राजा निश्चित मानसः । तथेति तान् प्रणम्याशु रुद्राक्षं भस्मना सह ॥ १४
धृत्वा भटानां रुद्राक्षं दत्वाऽयं भस्मना सह । भूतिभूषित सर्वाङ्गैस्सह रुद्राक्ष भूषणैः ॥ १५
विनिर्गत्य भटैस्सार्धं सर्वैरमित विक्रमः । आजुहावाशु तं सिंहं सिंहं शरभवत् द्विजाः ॥ १६
ततः प्रतस्थे युद्धाय सिंहश्चक्रायुधो महान् । तदाशु तुमुलं युद्धं बभूवहि तयोर्मिथः ॥ १७
ततश्चक्रं मुमोचायं सिंहः किलिकिलारवः । तच्चक्रं वीक्ष्य तान् सर्वान् भस्मरुद्राक्ष भूषणान् ॥ १८
प्रदक्षिणत्रयं कृत्वा प्रणम्य सहसा ययौ । ततः कोपेन ससार वरुणं निजतापहम् ॥ १९
वृष्टिश्चासीत्तदा स्थूला सेनयोरुभयोर्द्विजाः । भस्मानि तेषां लुप्तानि सिन्धुसेनानुयायिनाम् ॥ २०
तदन्वीक्ष्यायमधुनाचक्रं पुनरपि द्विजाः । अमुञ्चत भस्मतोऽप्येतान्रुद्राक्षवरभूषणान् ॥ २१
दृष्ट्वा भटान्ययौ नत्वा भीत्या चक्रं द्विजोत्तमाः । दृष्ट्वैतत्सहसा सिंहः पलायनमशिश्रयत् ॥ २२
वनं प्रति महाभीत्या ससेनो ब्राह्मणोत्तमाः । सिन्धुसेनोऽपि सहसा कृत्वा कोलाहलारवम् ॥ २३
गत्वाऽस्य नगरं धीरो देशं स्वीयं विधाय च । स्वदेशवर्तिनां भस्मरुद्राक्षाणि महामतिः ॥ २४
दत्वा तान् भस्मरुद्राक्षधारिणश्च विधाय सः । भस्मरुद्राक्षयोस्स्मृत्वा माहात्म्यमत्रसत्तमम् ॥ २५
चिरकालमुषित्वाऽत्र भोगान् भुक्त्वा सुपुष्कलान् । स्वदेशस्थजनैस्सर्वैः बन्धुभिस्स्वैरबन्धुभिः ॥ २६

याप कैलासमतुलं विमानमधिरुह्य सः । क्रमेण मोक्षं चापायं ब्राह्मणानामधीश्वरः ॥ २७
स तु सिद्धोऽपि वैराग्यद्वागद्वेषौ विहायच । धृत्वा भस्मच रुद्राक्षं जीवन्मुक्ततया भृशम् ॥ २८
स्थित्वा देहावसानेऽयं मोक्षमापातिदुर्लभम् । तस्मात्सदैव रुद्राक्षं धर्तव्यं भस्मना द्विजाः ॥ २९
रुद्रस्याक्षतया विप्रा रुद्राक्षमिति कीर्तितम् । रुद्राक्षधारके शंभुः परिपूर्णकटाक्षवान् ॥ ३०
रुद्राक्षधारकास्सर्वे रुद्राकाराः प्रकीर्तिताः । रुद्राक्षस्यास्य माहात्म्यं येऽभ्यस्यन्ति पठन्ति वा ॥ ३१
श्रावयन्ति नरास्तेवै साक्षाद्ब्रह्मस्वरूपिणः । आयुरारोग्यमैश्वर्यं पुत्रान् पौत्रानिहाप्यते ॥
अन्ते सायुज्य मोक्षंच लभन्ते नात्रसंशयः । ३२

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे एकोनविंशोऽध्यायः ॥

---

## ॥ अथ विंशोऽध्यायः ॥

श्री पञ्चाक्षरीजपपरया कलावत्या तद्भर्तुः दशारथस्य सकल पातक निवृत्तिः ॥

सूतः — भस्मरुद्राक्षयोर्विप्रा माहात्म्यं वर्णितं खलु । पञ्चाक्षरस्य माहात्म्यं शृणुध्वमथधामतः ॥ १
पञ्चाक्षरं महामन्त्रं पञ्चपातकनाशनम् । परस्य वाचकं लब्ध्वा सद्गुरोर्नियमाच्छुचिः ॥ २
जपत्यनुदिनं मर्त्यस्सधन्यो लोकपावनः । न तस्य पापगन्धोऽपि दर्शनात्पापहारिणः ॥ ३
न च भेदोऽस्य महतः परेण ब्रह्मणा सह । अत्रेतिहासं युष्माकं वर्णयामि महीसुराः ॥ ४
पापाद्विमुक्ता मुक्ताश्च यद्घोऽस्य मनोर्जपात् । अस्ति काशीपतिः कश्चिद्दशाराह्वयो नृपः ॥ ५
तस्यासीत्कन्यका काचित्कलासु निपुणामती । कलावतीति विख्याता बहुपुण्ययुताहि सा ॥ ६
काशीपतेर्गृहं प्राप कदाचिन्मुनिपुङ्गवः । दुर्वासा कृपया स्वस्या बहुपुण्यवतीति सा ॥ ७
उपादिशन्महामन्त्रं पञ्चाक्षरमुमापतेः । तदारभ्य शिवे भक्त्या सदा पञ्चाक्षरी रता ॥ ८
तां कन्यां प्रददौ पुण्यां वज्रबाहुर्महीपतिः । राज्ञे दाशारथाख्याय पाण्ड्यदेशेश्वराय च ॥ ९
स तामुद्वाह्य विधिना स्वदेशमनयद् द्विजाः । पञ्चाक्षरीजपपरां परतत्त्वविनिश्चयाम् ॥ १०
रात्रौ शयने राजा कामबाणेन पीडितः । आलिङ्गनोत्सुकः प्राह धर्मयुक्तं वचो द्विजाः ॥ ११
सा तस्यैङ्गितमाज्ञाय धीरधैर्यमवदद्विजाः । नास्ति पञ्चाक्षरी मन्त्रस्तव सर्वाघनाशकः ॥ १२
न निषिद्धपरित्यागो मधुमांसादिभोजिनः । नचान्यनारीविरतिः केवलं भोगिन (देहिन) स्तव ॥ [illegible]
तस्मात्त्वमधुना राजन्स्पर्शाय निस्पृहाम् । इति तस्या वचश्रुत्वा राजा मदनपीडितः ॥ १४
आलिङ्गनं तव भवेदिति लोलस्य मे प्रिये । न तिष्ठन्त्यसुनाप्राणा विनैवालिङ्गनं तव ॥ १५
तस्मादप्यान्प्रयच्छाशु दत्त्वैवालिंगनं त्वया । एवमुक्तेऽपि विमुखीं ज्ञात्वैतां मदनातुरः ॥ १६
सस्वजे तां बलाद्राजा प्रविष्ट इव तद्वपुः । दहत्यङ्गे तदा तस्या वह्निवद्धरणीपतिः ॥ १७
पपात दूरान्मुक्त्वैनां हादेत्युक्त्वाऽतिदुःखितः । किमेतदिति पप्रच्छ भार्यां वीक्ष्य महीपतिः ॥ १८

(कलावती):—

तव पञ्चाक्षरी विद्याप्रभावास्त्यघनाशकः । सद्गुरुं प्राप्य तां लब्ध्वा पञ्चान्मां स्पृशभूमिप ॥ १९
पञ्चाक्षरी परा या मे दहत्यङ्गं नयेन्नृप । इत्यमस्या वचश्रुत्वा राजासौ निश्चिताशयः । २०
परेतुस्तरसां श्रेष्ठं गर्गं प्राप्य तपोनिधिम् । उपदेशमवापायं श्रीमत्पञ्चाक्षरी मनोः ॥ २१

प्रविशत्याशु विद्यायां दीपाद्दीपमिव द्विजाः । निर्जग्मुः काकरूपेण महापातककोटयः ॥ २२
चित्तशुद्धिमवाप्याथ शुद्धदेही महीपतिः । अनुज्ञयाथ स्वगुरोर्भेजन प्रियमुज्ज्वलम् ॥ २३
भार्यया सह तद्गात्रिभारुण्यानुदिनं द्विजाः । क्रीडयित्वा महानन्दाद्भोगान् भुक्त्वा यथेच्छया ॥ २४
पुत्रानुत्पाद्य सुहृतश्चिरं कालं सुखी नृपः । अन्ते च भार्यया साकं कैलासं प्राप्य पावनम् ॥
[illegible] स्थित्वा चिरं कालं मोक्षं चाप द्विजोत्तमाः ॥ २५

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे विंशोऽध्यायः ॥

---

॥ अथ एकविंशोऽध्यायः ॥

तुरीयाश्रमतोऽपि गार्हस्थ्यस्य पञ्चाक्षरात् प्राशस्त्यम् ॥

सूत — देशोऽस्त्यवन्तिसंज्ञेऽस्ति मालवं नाम पुरं महत् । ब्राह्मणः कश्चनास्त्यत्र सुबुद्धाख्यो महामतिः ॥ १
तस्यात्मजो धर्मनामा चासीद्धर्मे दयापरः । तद्ग्रामे विपुलाख्योऽन्यो नियमस्त्वग्रजो महान् ॥ २
तस्यात्मजावुभावास्तां पितृवाक्यानुवर्तिनौ । चन्द्रसेनाह्वयो ज्येष्ठो भृगुश्चान्य इतापरः ॥ ३
धर्मश्च चन्द्रसेनश्च समवयस्कौ द्विजात्मजौ । उपनीतौ विधिवत्काले ब्रह्मचर्यं च चेरतुः ॥ ४
विद्याभ्यासरतौ नित्यं विनीतौ बुद्धिशालिनौ । शिवानन्दाह्वयं प्राप्य तापसौ यतिनां वरम् ॥ ५
शुश्रूषमाणौ यत्नेन निकटस्थास्य महात्मनः । सत्यधर्मभक्तिसंयुक्तौ सदाचारानुवर्तिनौ ॥ ६
तौ वीक्ष्य स यतिश्रेष्ठः करुणाविष्टमानसः । युवाभ्यां ब्रह्मचारिभ्यामाश्रमश्चरमो महान् ॥ ७
गृहीतव्यो विधानेन साक्षान्मोक्षैकसाधनम् । इत्युवाच यतिश्रेष्ठः अथ याचन्तावुभौ ॥ ८
निशम्य वचनं तस्य तापसौ ब्राह्मणौ तदा । स्वपित्रोर्निकटं प्राप्य वृत्तान्तं समपृच्छतु ॥ ९
तथेति विपुलो वाक्यं स्वसुतस्य निशम्य सः । चकारानुमतिं प्राप्य यतीशं सम्प्रणम्य तम् ॥ १०
अनुज्ञया पितुश्चैव चन्द्रसेनो महामतिः । तुरीयमाश्रमं प्राप विद्यानन्दयतीश्वरात् ॥ ११
स्वाश्रमानुगुणाचारः कामक्रोधादिवर्जितः । वशीकृतेन्द्रियश्चाथ कन्दमूलफलाशनः ॥ १२
गत्वाऽरण्यं सुदुष्प्रापं तस्थौ तत्र महायवान् । धर्मोऽपि पितरं प्राप्य सन्यासो मे मतः खलु ॥ १३
सर्वशास्त्रार्थतत्त्वज्ञाद्विद्यानन्दयतीश्वरात् । इत्युक्तवानिदं श्रुत्वा वचनं तत्पिता तदा ॥ १४
सुबुद्धः प्राह धर्मं तं दुःखाकुलितमानसः । पुत्रस्त्वमेकपक्षोऽसि वयसस्य महतो मम ॥ १५
नान्योरस्यतरस्त्वं मतिमन् न कन्यासाधपोषितः । पुत्रेषु भार्यां निक्षिप्य वलीपलितविग्रहः ॥ १६
प्रव्रजेद्ब्राह्मणो नोचेत्पतत्येव न संशयः । तस्मात्त्वमधुना विप्र न सन्यासार्थमोचितः ॥ १७
इत्युक्तं वचनं श्रुत्वा पित्रा धर्मस्तु दुःखितः । चिन्तयन्मनसा तस्थौ केवलं ब्राह्मणोत्तमाः ॥ १८
तदानीमागतस्तत्र भृगुर्वै वाक्पतिर्महान् । शिष्यैस्तु बहुभिः साकं तस्मिन् ग्रामे यतीश्वरः ॥ १९
तं दृष्ट्वा तनयाः श्रेष्ठं सुबुद्धः प्राह बुद्धिमान् । धर्मोऽयं मत्सुतः स्वामिन् ब्रह्मचर्याश्रमे वसन् ॥ २०
तुर्याश्रमं समन्वेतु प्रवृत्तो वारितो मया । नैतं विना मे कुलस्य सुतोऽन्यश्च तपोधन ॥ २१
पुत्रोऽयमेको मतिमान् ममाभूद्बहुकालतः । एतस्य बुद्धिरुचिता समुत्पाद्या त्वया यते ॥ २२
इति तस्य वचः श्रुत्वा भृगुश्च तपसां वरः । वीक्ष्य धर्मं निजाश्रमे वसन्तं प्राह सुस्वरा ॥ २३
गृहीतव्यस्त्वया धर्म गृहस्थाश्रम उत्तमः । न समास्तस्य सर्वेऽपि यतयस्तदुपजीविनः ॥ २४

कन्यां कनकसंपन्नामसमानर्षं गोत्रजाम् । उद्वाह्य स्वोचिताचारं कृत्वा त्वं स्थातुमर्हसि ॥ २५
न विलङ्घ्य पितुर्वाक्यं सर्वश्रेयोविधायकम् । भृगोरिति वचश्श्रुत्वा धर्मः प्राह पुनर्वचः ॥ २६
मत्सखा मत्समश्चापि चन्द्रसेनो महामतिः । तुरीयमाश्रमं प्राप सुमहत्फलमुत्तमम् ॥ २७
तस्याश्रममाप्यसिद्धितिरस्तथैवा चरमाश्रमे । इत्युक्तिमस्य संश्रुत्य तर्जयंस्तं भृगुस्तदा ॥ २८
स्थातव्यं भवता धर्म गृहस्थाश्रम उत्तमे । पञ्चाक्षरीं परां विद्यां लब्ध्वा त्वं नियमान्वितः ॥ २९
जपित्वाऽनुदिनं तिष्ठ स्वधर्ममनुपालयन् । चन्द्रसेनादपि फलं भविष्यति तवाधिकम् ॥ ३०
श्रीमत्पञ्चाक्षरीमन्त्रजपाद्यत्र केवलम् । इत्युक्त्वोपदिदेशास्य श्रीमत्पञ्चाक्षरीमनुम् ॥ ३१
विवाह्य कारयित्वाऽस्य पाणिसंग्राहमागतः । निर्जगाम पुनश्शीघ्रं स्वाश्रमं प्रति तापसः ॥ ३२
विवाह्य धर्मो मतिमान् श्रीमत्पञ्चाक्षरीपरः । क्रीडयित्वा तया सार्धं पुत्रानुत्पाद्य कालतः ॥ ३३
तस्थेऽत्र पत्न्या प्रीत्या चिरकालं गृहाश्रमी । ततः कालेन तं ग्रामं चन्द्रसेनो यतीश्वरः ॥ ३४
आगत्य धर्मं दृष्ट्वैव वाक्यमेवचशारयम् । स सन्यासाश्रमो धर्मे सर्वेषु परिवर्जितः ॥ ३५
आसक्तया गृही भूत्वा किं फलं लब्धवानसि । हा जन्म नष्टं मतिमन् गृहस्थस्य तवाधुना ॥ ३६
मत्साम्यस्य समो नास्ति सर्वसङ्गविवर्जनात् । लब्ध्वाऽह्याश्रममेवं तीर्थं लोकयोर्निधिम् ॥ ३७
कृतकृत्योऽस्मवं तस्मादाश्रमोऽयं महत्तरः । तपोबलान्मम पुरा यथाकारदशपूर्वकाः ॥ ३८
आकर्षयामि सकलानिन्द्रादीनमरान् च । इति तस्य वचश्श्रुत्वा धर्मोऽयं प्राह तं गृही ॥ ३९
न तु मत्र मम यत्किञ्चित् गृहस्थस्यापि सत्यतः । ममापीन्द्रमुखा देवा वशगास्सर्वदायो नहि ॥ ४०
इत्युक्तवन्तं तं वीक्ष्य चन्द्रसेनोऽब्रवीद्वचः । आकर्षयाम्यहं शक्रमधुना तपसा बलात् ॥ ४१
इत्युक्त्वेन्द्रं च सस्मार स्वर्गलोकनिवासिनम् । ततस्समागमी शक्रस्तत्रत्याश्च द्विजोत्तमाः ॥ ४२
तं दृष्ट्वाऽथ सहसा चन्द्रसेनो यतीश्वरः । पूजयित्वा प्रणम्यैनं पुनश्चाप्रेषयद्दिवम् ॥ ४३
ततः पञ्चाक्षरीं जपन् धर्मोऽप्य सुरनायकम् । सस्मार मतिमांस्तत्र पञ्चाक्षरमनोर्बलात् ॥ ४४
तदातीमागतस्तत्र शीघ्रं सुरवरो महान् । प्रदक्षिणं विधायास्य प्रणतिञ्चाकरोत् द्विजाः ॥ ४५
समाप्य स सहस्राक्षं प्रेषयामास देवपम् । दृष्ट्वैतच्चन्द्रसेनोऽथ विस्मयाविष्टमानसः ॥ ४६
मानय त्वमिहाद्याऽज सर्वलोकपितामहम् । इत्युवाच स तं धर्मं पुनश्चाथ मयान्वितः ॥ ४७
स तथेति च धातारं सस्मार गिरिशेश्वरम् । स्मृतमात्रेण धातापि समागत्य द्विजोत्तमम् ॥ ४८
प्रदक्षिणं विधायाशु समाप्य स्वपदं ययौ । चन्द्रसेन समीक्ष्याथ धर्मं प्राह महामतिः ॥ ४९
नानेनकल्पस्त्वयाऽऽप्तः विधिर्योगबलाद्यते । इत्युक्तिमस्य संश्रुत्य ससाराज्ञ तपोधनाः ॥ ५०
तथापि नागतस्तत्र स्मृतोऽपि स विधिर्यदा । तदा सर्वेऽपि [illegible] धर्मं द्विज पर्येत्यपूजयन् ॥ ५१
चन्द्रसेनस्समीक्ष्यैनं हर्षपुलकित मानसः । प्रणम्य धर्मं पप्रच्छ श्रुतोऽयं महिमा तव ॥ ५२
यदीनद्याश्रमोदारैस्सह धर्मवर्ता वर । निशम्यास्य वचो धर्मस्तस्य प्रोवाच तापुरः ॥ ५३
पञ्चाक्षरी महामन्त्रमहिमाऽस्य तपोधन । स सामोऽस्य च मन्त्रस्य मन्त्रोऽन्यस्त्वन्य सर्वथा ॥ ५४
माहात्म्यमस्य योऽवेत्ति श्रुत्वा देवं प्रणवम् । इति तस्य वचश्श्रुत्वा चन्द्रसेनोऽपि योगिराट् ॥ ५५
पञ्चाक्षरं महामन्त्रं सम्प्राप्य धर्मतो द्विजाः । अचिरात् स महामन्त्रप्रदोषात्प्रसन्नद्विज ॥ ५६
धर्मेण सार्धं पुण्यात्मा जीवन्मुक्ततया चिरम् । स्थित्वा क्षोणितले पश्चाच्छिवलोकमनुत्तमम् ॥ ५७

प्राप्य स्थित्वात्र विपुलान् भोगान् भुक्त्वा मुदान्वितः ।
कालेन शिवसायुज्यं धर्मेण सह चाप्तवान् ॥ ५८

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे एकविंशोऽध्यायः ॥

---

॥ अथ द्वाविंशोऽध्यायः ॥

पञ्चाक्षरमहिम्ना मृतानामप्युद्धारणम् ॥

कथयामि कथामन्यां श्रीमत्पञ्चाक्षरी मनोः । शृणुध्वमवधानेन ब्राह्मणानामधीश्वराः ॥ १
कौशिकाख्ये महादेशे पुरं विक्रमसंज्ञकम् । अस्ति तत्र द्विजः कश्चिन्मानदस्सर्ववञ्चकः ॥ २
सोऽयं विद्वेष्य विप्रेन्द्रं सूर्यशर्माभिधं परम् । युक्त्याऽयं वञ्चनामार्गैर्न शक्यो जेतुमार्जवात् ॥ ३
आलोच्य मनसा चैवं मानदस्तं प्रणम्य तम् । अद्यप्रभृत्यहं दासस्तव शुश्रूषणोद्यतः ॥ ४
अङ्गीकुरुष्व मामद्य शिष्यत्वेनैव केवलम् । इति तस्य वचश्श्रुत्वा तथेत्येनमुवाच सः ॥ ५
तदाप्रभृति विश्वासमेतस्मिन्नाप भूसुरः । रन्ध्रकालं समीक्ष्यार्थं मानदो वञ्चकस्स्थितः ॥ ६
पुनः कदाचित्पापात्मा सूर्यशर्माणमाह हि । स्थीयते सावधानेन रात्रावद्य गृहाद्बहिः ॥ ७
स्थातव्यं भवता चान्तर्गृहे निद्रां विहाय च । इत्युक्त्वा मानदस्तस्मै व्याघ्रमाहूय वञ्चकः ॥ ८
धनप्रदेशमात्राद् ग्रामस्थाय महीसुराः । ततस्तु मानदः पापी भार्यां तद्गृहाद्बहिः ॥ ९
नीत्वा चर्मैव वैयाघ्रमाच्छाद्यास्याशरीरतः । व्याघ्रोऽयमागतः क्रूर इत्युक्त्वाऽन्तर्गृहं तदा ॥ १०
प्राप्यैनं ज्ञापयित्वाशु धनुरादाय सुस्थिरम् । हत्वानेन गृहाद्बाह्ये गत्वाऽस्मै तमदर्शयत् ॥ ११
वीक्ष्यैनं सूर्यशर्माऽपि व्याघ्र एवेति निश्चयात् । मुमोच बाणं निशितमुपर्यस्य महाबलः ॥ १२
पपात तच्छराविद्धा भौरियं रुधिराप्लुता । महीतले ममाराशु हा द्विजानामधीश्वराः ॥ १३
संस्थाप्य तं पुनस्तत्र मानदः परवञ्चकः । ध्यानेन केनचित्पापी गृहस्यान्तरमाप्य सः ॥ १४
शेते यत्र गृहे भार्या सूर्यशर्मद्विजस्य सा । तत्र गत्वाऽऽब्रवदाह तामथ परवञ्चकः ॥ १५
॥ स्थातव्य त्वयाद्यत्र गेहे चोरभयं महत् । त्वत्पुत्रशयनागारे स्थातव्यमवधानतः ॥ १६
त्वद्गृहे भार्यया साकं त्वत्पुत्रः स्थातुमर्हति । भार्यया सहितः पुत्रस्सावधानेन तिष्ठतु ॥ १७
इत्युक्त्वा प्रेषयामास पुत्रवेश्मनि तामथ । सूर्यशर्मगृहे पुत्रं प्रापयामास भार्यया ॥ १८
तस्याप्युपदिदेशायं मानदः परवञ्चकः । आहूतो येन केनापि तिष्ठत्वं मौनतो गृहे ॥ १९
सहैव भार्यया विद्धीत्युक्त्वायं दुरात्मवान् । यत्रास्ते सूर्यशर्मापि तत्रागत्य महाखलः ॥ २०
आरक्षमागतः कश्चिद्गृहे तव दुरात्मवान् । तिष्ठत्यनेन भार्या ते दुष्टा नर्मविधाय सा ॥ २१
दृष्टैतदधुना शीघ्रं मयाप्यत्रागत सखे । तस्मात्त्वदुचिता शिक्षा कर्तव्या मानिना त्वया ॥ २२
इत्युक्त्वा सुदृढं खड्गं दत्त्वैनं गृहमानयत् । स तथैवेति विश्वासादाजुहाव निजस्त्रियम् ॥ २३
भार्यया सह तत्पुत्रश्श्रुत्वाऽप्यस्य गिरं तदा । तस्थेऽस्य बोधनान्मौनमास्थमरणो द्विजाः ॥ २४
तदासौ सूर्यशर्मा तु मित्रोक्ति गृहस्य सः । प्रविश्य खड्गमादाय जार एवेति निश्चयात् ॥ २५
समारयद्द्विज पुत्रं स्नुषामपि महीसुराः । रात्रौ तस्यां व्यतीतायां बहिर्गृहमचाप सः ॥ २६
तदा पुत्रगृहाद्भार्यां निर्ययौ प्रातरात्मनः । तां दृष्ट्वा सविचारेण त्वरया स्वगृहं ययौ ॥ २७

तत्र पुत्रं मृतं वीक्ष्य स्नुषया खड्गपाततः । शोकमोहसमाविष्टः पतित्वा भूतले धृत ॥ २८
उच्चैरुवाच दुःखेन पञ्चाक्षरमनुत्तमम् । पुनश्च धैर्यमास्थाय गेहान्निर्गत्य बाह्यतः ॥ २९
ददर्श शस्त्रनिहतां गामयं रुधिराप्लुताम् । दृष्ट्वैतामपि सोऽत्यन्तं दुःखाकुलितमानसः ॥ ३०
तदों नमश्शिवायेति जजाप परमं मनुम् । ततस्तु मानदश्शीघ्रं गत्वाऽयं ब्राह्मणान्तिकम् ॥ ३१
सूर्यशर्मा त्वतीतायां रात्रौ पुत्रं स्नुषामपि । गामप्येकां महाकोपादमारयदसौ द्विजाः ॥ ३२
तस्मादेनं महापापं बहिष्कृत्य द्विजाधमम् । उच्चाटयत विद्वांसो ग्रामादस्माद्दुराशयम् ॥ ३३
मानदस्य वचश्श्रुत्वा सर्वे तद्ग्रामवासिनः । दृष्ट्वैतत्कोपसंयुक्ता महापापभयादमी ॥ ३४
किं कृतं भवता सूर्यशर्मन् पापस्य कारिणा । त्वं गच्छास्माद्वनं ग्रामादधुना पापगौरवात् ॥ ३५
अन्यथाज्ञा भवेद्भूतं ब्राह्मणापशदाधुना । इति तेषां वचश्श्रुत्वा सूर्यशर्माऽब्रवीद्वचः ॥ ३६
कृतमेतन्मया विप्राः कर्म न ज्ञानतो विदि । अज्ञानेन कृतं पापमिदं सत्यं समीरितम् ॥ ३७
प्रातर्दृष्ट्वा मृतानेतान्मया पञ्चाक्षरी मनुः । अतस्तदधुना पापगन्धो नास्ति मम द्विजाः ॥ ३८
इत्थं निशम्य वचनं प्राहुरेवं द्विजाः पुनः । नास्ति पापं यदि तदा त्वया दत्तं तृणं वृषः ॥ ३९
भक्ति शीघ्रं समागत्य धर्मोऽयं प्रोच्यते यतः । इति तेषां वचः श्रुत्वा सूर्यशर्माब्रवीद्वचः ॥ ४०
चेतनोऽयं वृषोऽस्तीति मैनस्संशोधनं द्विजाः । किन्तु केदारनाथस्य प्राकारे ये वृषाः स्थिताः ॥ ४१
कृत्रिमास्ते समानस्य मया दत्तं तृणं यदि । भक्षयन्ति तदैवास्तु मम पापस्य शोधनम् ॥ ४२
इति तस्य वचश्श्रुत्वा तथेति ब्राह्मणास्तदा । प्रीत्या तस्थुस्समीक्ष्यैतदेनस्संशोधनं द्विजाः ॥ ४३
प्रेषयित्वा स्वमनुजांस्तृणान्यानीय भूसुराः । स्थाप्य केदारनाथस्य सन्निधौ तान्ययं पुनः ॥ ४४
पञ्चाञ्जलिपुटो भूत्वा शिवमन्त्रमनुस्मरन् । ये वृषा गोपुरे शंभोः प्राकारेचैव ये वृषाः ॥ ४५
चित्रेषु ये वृषास्सर्वे शिवध्यानपरायणाः । पञ्चाक्षरी यदा नित्यं परतत्वैकमानसाः ॥ ४६
हत्या समुद्भवो दोषो नास्ति मे यदि सर्वथा । पञ्चाक्षरीमहामन्त्रजपाद्य महौजसः ॥ ४७
तृणान्येतानि खादन्तु भवन्तस्ते समागताः । इत्युक्त्वाऽथ जजापाशु पञ्चाक्षरमनुत्तमम् ॥ ४८
तत्र तत्र स्थितास्सर्वे श्रुत्वैतद् वृषभास्तदा । अवरुह्य समभ्येत्य चखादुस्तानि सत्वराः ॥ ४९
विसृज्य गोमयञ्चाथ मदञ्चितस्तोऽर्ककैर्द्विजाः । वीक्ष्य तान् ब्राह्मणा एवं समागत्य प्रदक्षिणात् ॥ ५०
निवृत्य गावा स्वस्थाने क्षणात्तस्थुर्द्विजोत्तमाः । दृष्ट्वैतद् ब्राह्मणास्सर्वे भयाकुलितमानसाः ॥ ५१
प्रणम्यैनं महात्मानं मुञ्चास्मान्महैनसः । क्षमस्वास्माकमसार्कं महात्मन् ब्राह्मणोत्तम ॥ ५२
माहात्म्यं तव को वेत्ति मन्त्रस्य महतस्तथा । इति स्तुत्वा महात्मानं तस्थुस्तेऽञ्जलिपाणयः ॥ ५३
तदाऽस्य भार्या प्रोवाच साध्वी वचनमुत्तमम् । पञ्चाक्षरीजपादद्य तृणानि वृषभा अमी ॥ ५४
भक्षयन्तिस्म तत्स्वामिन् मदात्तनिहतं स्नुषाम् । उज्जीवयाशु गामेनां पञ्चाक्षरजपात्प्रभो ॥ ५५
निशम्यास्याः वचस्सर्वे तथेत्योचुर्द्विजा अमी । कोऽतिमानस्तवैतेषां पुनरुज्जीवने द्विज ॥ ५६
उज्जीवयाशु माहात्म्यान्मन्त्रस्यानघ तान् पुनः । इति तेषां वचश्श्रुत्वा पुनरप्येष भूसुरः ॥ ५७
पञ्चाक्षरीमहामन्त्रं पञ्चपातकनाशनम् । तज्जापकानां न पुनर्जनिरस्ति यदि ध्रुवम् ॥ ५८
तदा पुत्रमिदं व्यापादितोत्तिष्ठतु शीघ्रतः । इत्युक्त्वाऽञ्जलिरस्तोऽयं जजाप परमं मनुम् ॥ ५९
तदानीमुत्थितः पुत्रः स्नुषा गौरपि सा द्विजाः । दृष्ट्वैतदद्भुतं सर्वे ब्राह्मणास्तं महीसुरम् ॥ ६०
शिव एवेति निश्चित्य प्रणम्य मनसा सह । अनुज्ञया वपुस्सर्वे स्वगृहाणि महीसुराः ॥ ६१

सूर्यशर्मा पुनरयं जपन् पञ्चाक्षरीमनुम् । बहुकालं परानन्दाद्भुक्त्वा भोगान्यथेप्सितान् ॥ ६२
सदारसुतपश्वादि स्वजनैस्सहितः पुनः । देवर्षीणां गणैर्जुष्टं विमानमतिशोभनम् ॥ ६३
आरुह्य परया प्रीत्या देवदुन्दुभिनिस्वनैः । विकीर्यत्पुष्पवृष्ट्यौघैश्शिवलोकं ययौ द्विजाः ॥ ६४
तत्र स्थित्वा चिरं कालं प्रीत्या रुद्रगणैस्सह । सायुज्यं ब्राह्मणश्शंभोरवाप ब्राह्मणोत्तमाः ॥ ६५
य एतस्य विरोध्यासीन्मानदः परवञ्चकः । स तु भीत्याशु तं देशं मुक्त्वा देशान्तरं गतः ॥ ६६
निस्वो विधुरो नित्यमन्तस्ताप समन्वितः । कृमिक्लिन्नशरीरोऽयं व्याधिना महता हतः ॥ ६७
चिरकालं मृतः पापी नरकेऽद्यापि बाध्यते । तस्मात् द्विषन्ति ये मर्त्या मर्त्यं पञ्चाक्षरीपरम् ॥ ६८
महापातकसंयुक्तास्ते यान्ति नरकं ध्रुवम् । पञ्चाक्षरीपराणां ये सुहृदः पुण्यगौरवात् ॥ ६९
यान्ति ते परया प्रीत्या शिवलोकमनुत्तमम् । तस्मात्पञ्चाक्षरीमन्त्रः पञ्चपातकनाशनः ॥
जप्यो नित्यं प्रयत्नेन सर्वैरेव तपोधनाः ॥ ७०

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे द्वाविंशोऽध्यायः ॥

---

## ॥ अथ त्रयोविंशोऽध्यायः ॥

मद्यारतोपि शिवनाम उच्चारण वैभवात् महा पातकिनोपि कैलासप्राप्तिः ॥

पञ्चाक्षरस्य माहात्म्यं वर्णितं खलु भूसुराः । शिवनाम्नश्च माहात्म्यं शृणुध्वमवधानतः ॥ १
शिवः पशुपतिश्शंभुश्शङ्करश्चन्द्रशेखरः । मृत्युञ्जयो विरूपाक्षो नीलकण्ठो महेश्वरः ॥ २
भवो भर्गो महादेवो हरो रुद्र उमापतिः । एवमादीनि नामानि सन्ति दिव्यान्युमापतेः ॥ ३
तेषु चैकमनेकं वा यो जपत्यनिशं नरः । स एव धन्यः पुण्यात्मा वन्द्यश्च सकलैस्सुरैः ॥ ४
स भोगान् विपुलान् भुक्त्वा कैलासं प्राप्य भूसुराः । उषित्वाऽत्र चिरं कालं सायुज्यं ब्रह्मणः परम् ॥ ५
प्राप्नोति सत्यमेतद्वो वर्णितं ब्राह्मणोत्तमाः । ज्ञात्वा ये शिवनामानि वयिशाणुस्मरन्ति ते ॥ ६
शिवलोकं समासाद्य शिवसायुज्यमुत्तमम् । यान्तीत्येतत् द्विजश्रेष्ठा मयाख्यातमिदं ध्रुवम् ॥ ७
उच्चार्योनामशंभोश्शिवलोकमवापिरे । बहवस्तेषु युष्माकं कतिचिद्वर्णयामि तान् ॥ ८
देशे गौतमसंज्ञेऽस्ति कन्दुकाख्यं महत्पुरम् । तत्रास्ति कश्चिद्व्यालाख्यो ब्राह्मणः पापवर्जितः ॥ ९
तस्यासीत्तनयः कश्चिद्वीर्यवान् पापकर्मकृत् । मद्यपायी महामायी मांसमुख्यविक्रयी ॥ १०
मांसादिविक्रयी द्रव्यलोभाद्दोषदुराशयः । मुक्त्वाऽथ ब्राह्मणाचारं हीनाचाररतोऽवसत् ॥ ११
तस्यैवं वर्तमानस्य चिरकालं दुरात्मनः । समायथावन्त्यकालः क्षणादेव महीसुराः ॥ १२
पुत्रास्तदानीमेतस्य जयनाम्नामेत्य ते । अपृच्छुः केन दातव्यं कियदस्माभिरच्युत ॥ १३
उत्तमर्णश्च कस्ताते अधमर्णः कुतो यथा । इति तेषां वचश्श्रुत्वा मांसविक्रयणोद्भवम् ॥ १४
उक्त्वा द्रव्यं पुनर्मद्यविक्रयी तदृणं च सः । मद्यं कस्यचिदन्त्यस्य ऋणे शिवमिति ब्रुवन् ॥ १५
अत्यजत्प्राणमहस्तदानीं ब्राह्मणोत्तमाः । बद्धुं तदागतास्तूर्णं यमदूता भयानकाः ॥ १६
दुद्रुवुस्ते शिवगणास्तान् सन्ताड्य निजायुधैः । कालं संप्राप्य ते दूताः प्रोचुर्वृत्तान्तमञ्जसा ॥ १७
स तु निर्गत्य सहसा सेनया परिवारितः । अभ्याशमाययौ भीमो गणानां परमेशितुः ॥ १८
समायान्तं महाघोरं दृष्ट्वा ते शिवकिङ्कराः । सन्ताड्य तस्य तां सेनां द्रावयित्वा बलादमुम् ॥ १९

तदीयेनैव बध्वा तं पाशेन शिवकिङ्कराः । प्रधानपुरुषं ज्ञात्वा यमस्यैनं महाबलाः ॥ २०
श्रीमत्कैलासशैलस्य गुहां निन्युरघो द्रुतम् । दृष्टो यदि यमस्त्वेतैर्हन्यते नात्र संशयः ॥ २१
ज्ञात्वा प्रधानं तं काले प्राणान्तस्य दहुर्द्विजाः । बध्वा तं कुत्रचिद्वृक्षे विधायाश्वस्य पालकम् ॥ २२
स्वयमेते महात्मानो वीर्यवन्तं द्विजोत्तमम् । शिवलोकं समानीय तत्र देवस्य सन्निधौ ॥ २३
भुक्त्वा वपुर्निजायासमाप्तया परमेशितुः । सेवयित्वा महादेवं तस्थौ सारूप्यभागयम् ॥ २४
निशम्य कालवृत्तान्तं यमो दूतमुखैस्तदा । मनोवतीति विख्याते शिखरे मेरुपर्वते ॥ २५
समासीनं महादेवं सेवयित्वा गतो यमः । दुःखेन महताऽविष्टो विचाराक्रान्तमानसः ॥ २६
कैलासं त्वरया प्राप्य नन्दिकेशं व्यजिज्ञपत् । अथ नन्दी यमं प्राह मयाविदं समीक्ष्य सः ॥ २७
प्राणात्ययेऽप्ययं पुण्यात्मा शिवनाम सुपावनम् । जगाद तेन पुण्येन महता शिवरूपताम् ॥ २८
अवाप नात्र सन्देहः कर्तव्यो भवता यम । ज्ञानतोऽज्ञानतो वापि शिवनामाघहारकम् ॥ २९
ये वदन्ति महात्मानः प्राणापक्रमणे यम । न तान्प्रत्यधिकारस्ते शंभोराज्ञेदृशी खलु ॥ ३०
अर्थेष्वननुभूते स्यात्सन्देहः प्राणिनां यम । अनुभूतं त्वया पूर्वं नामोच्चारण वैभवम् ॥ ३१
किं विस्मृतं तदधुना त्वं स्मर्तुं पुनरर्हसि । पूर्वं किराते सुप्यापे महापापे मृते तदा ॥ ३२
चित्रगुप्तं समाहूय धर्माधर्मविचारणा । कृताहि भवता धर्मं मार्गनिष्ठेन सन्ततम् ॥ ३३
चित्रगुप्तस्ततोवाच विचार्य मनसा भृशम् । नैतस्य धर्मलेशोऽपि घातकस्यास्य देहिनाम् ॥ ३४
सोऽयं प्रतिदिनं प्रातरुत्थाय धनमग्यमः । हन्तिकाश्चिद्दुराचारः पथिकान् द्रव्यलोभतः ॥ ३५
तथा बध्वा परान् पापी नयत्यनुदिनं यम । परान् प्रहरति क्रुद्धो व्याधैर्बहुभिरावृतः ॥ ३६
आहरैनं हठं बध्वा प्रहरैनं कशैर्भृशम् । खड्गेन संहरैनमिति निष्ठुरभाषयम् ॥ ३७
मद्यपायी महापापी मांसभुक्च गर्वितः । बहुनाऽत्र किमुक्तेन नास्ति पुण्यं दुरात्मनः ॥ ३८
तदास्य शिक्षा कर्तव्या भवता यमकिङ्करैः । प्राणोत्क्रमणकालेऽपि प्रहराहरसंहर ॥ ३९
इत्युक्त्वा निजपुत्राणां जीवोपायं तु पृच्छताम् । ममाप्ययं महापापी सर्वदा सर्वघातकः ॥ ४०
इति तस्य वचः श्रुत्वा मनसा त्वं विचार्य च । नैनं प्रत्यधिकारोऽस्ति चित्रगुप्त महामते ॥ ४१
सारूप्यभाजनं शंभोरयं पुण्यविशेषतः । रे रे दूता दुरात्मानो मुच्यैनं गच्छताधुना ॥ ४२
धन्योऽयं मम पुण्यात्मा सर्वदा शंभुबुद्धितः । प्राणोत्क्रमणकालेऽयं प्रहराहर संहर ॥ ४३
इति -ब्रुवन्समाराद्य नामोच्चार्यं महेशितुः । इत्युक्त्वा त्वं महाभीत्या प्रणेमिथ तदा यम ॥ ४४
तदत्र भवता शंभोर्नामस्मरणवैभवम् । स्मर्तव्यं सावधानेन ध्यातव्यश्चाप्रमादिना ॥ ४५
तं व्याधं दिव्यमारोप्य विमानं शाङ्करा गणाः । श्रीमत्कैलासमचलं नीत्वा देवस्य सन्निधौ ॥ ४६
स्थापयित्वा यम गतास्तस्य दूताः पुरा खलु । इत्थं निशम्य वचनं शैलादेर्धर्मराडयम् ॥ ४७
मयाऽत्र महितं स्वामिन् गतं सेवार्थमीशितुः । नत्वाऽधिकारः कालोऽसौ न जानातीदृशं प्रभो ॥ ४८
नामोच्चारणमाहात्म्यं शङ्करस्य परात्मनः । तद्रक्ष भगवन् कालं बाध्यमानं स्वकैर्गणैः ॥ ४९
यमस्य वचनं श्रुत्वा नन्दी प्राह पुनर्यमम् । महाकालगणाः कालं बध्वा निन्युर्यमाधुना ॥ ५०
महाकालस्य निकटं गत्वा त्वं संप्रणम्य तम् । दत्त्वाऽस्य मदनुज्ञाञ्च कालं मोचय शीघ्रतः ॥ ५१
इत्युक्त्वा प्रेषयामास नन्दी तं समवर्तिनम् । स तथेति विनिर्गत्य महाकालं गणाधिपम् ॥ ५२
संप्राप्य भीत्या परया प्रणम्याञ्जलिपूर्वकम् । वृत्तान्तं निखिलं चोक्त्वा कालं मोचयितुं यमः ॥ ५३

गणाध्यक्षस्य वचन नन्दिकेशस्य चाब्रवीत् । निशम्यैत महाकालो यममेनश्चुकोप हि ॥ ५४
विस्मृत किं यम पुरा वृत्तमद्य दुराशय । एतावदस्य वचन निशम्याथ यमोऽवदत् ॥ ५५
न विस्मृत महाकाल पुरावृत्त मया प्रभो । इदानीमपि तिष्ठामि स्मृत्वैवैतद्गणाग्रणी ॥
इत्युवाच महाभीत्या ब्राह्मणानामधीश्वरा ॥ ५६

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे त्रयोविंशोऽध्याय ॥

---

॥ अथ चतुर्विंशोऽध्याय ॥

सङ्करजातीयस्य नामकीर्तनेन शङ्करनामोच्चारणस्य फलम् ॥

ऋषय —

महाकालेन किं वृत्त पुरा वृत्त तपोधन । न विस्मृतमिति प्राह यमस्तद्वक्तुमर्हसि ॥ १

सूत —

द्विजस्सौराष्ट्रदेशेऽस्ति तीव्रदाख्यो महाधन । तस्यासीत्तनय कश्चित्कौशिकाख्यो महाबल ॥ २
स्तेयी दुराशयो नित्य मधुमांसादि भोजन । लब्धरत्यनिश शूद्रैस्सवयोभिश्च तादृशै ॥ ३
स्नेह कृत्वाऽथमन्येन केनचित्पापकारिणा । चण्डालोचितमाहार भुङ्क्ते लज्जा विवर्जित ॥ ४
सोऽथ कदाचिच्चण्डालनारीं रूपेणशोभिताम् । वर्तयन्नया साक प्रस्थितश्छन्नवर्त्मना ॥ ५
दृष्ट्वैन तापसि पाप चण्डाल कोपविह्वल । यथा तथा दुराचार सन्ताड्य निजभार्यया ॥ ६
विच्छेद शेफ पापस्य खड्गेन निशितेन स । स दु खेन चिर काल स्थित्वा पश्चान्ममार ह ॥ ७
बद्ध्वा पुरेव विप्रेन्द्रा यमदूतास्तदा मृतम् । ततश्शिवगणाश्शीघ्र संप्राप्यैव तु कौशिकम् ॥ ८
दिव्य विमानमारोप्य कैलासे शिवसन्निधौ । स्थापयित्वा यमस्यैतान् दूतान् सन्ताड्य निर्ययु ॥ ९
तदैव यमदूतास्तु यम प्राप्याति दु खिता । वृत्तान्त कौशिकस्यैतदुक्त्वा तेषाञ्च ताडनम् ॥ १०
रुधिराप्लुत सर्वाङ्गा कटुदुर्गन्धवस्त्रका । श्रुत्वै तेषाञ्च वचन प्रतस्थे सहसा यम ॥ ११
शिवान्तिक समुद्दिश्य श्रीमत्कैलास पर्वते । स ददर्श महाकाल गणानामग्रणी यम ॥ १२
अधस्ताद्धवलेशस्य समासीन वरासने । त दृष्ट्वा कौशिकस्यैतद्वृत्तान्तमभिधाय स ॥ १३
पुनस्स्वकीयदूताना पीडामप्यवदत् द्विजा । श्रुत्वैतत्समहाकाल कोपेन महता युत ॥ १४
नैतस्य पापलेशोऽपि कौशिकस्य महात्मन । बाल्येऽस्य कीर्तयामास शम्भुनाम्ना द्विजोत्तम ॥ १५
स त शम्भुर्महात्माऽस्य त्रियम्बकवराह्वयम् । चकार नामकाले तद्धौ नाम महेशितु ॥ १६
एष स्वसुहृदा शम्भुस्सकेतेन महामति । चकार शम्भोर्नामानि पवित्राणि महामति ॥ १७
यस्मादय त्र्यम्बकाख्या दधौ पुण्या तु कौशिक । तस्मा देतस्य कैलास प्राप्ति स्सत्य मयेरितम् ॥ १८
महाकालवचश्श्रुत्वा वाप्येव मूढो यम पुन । नैतावताऽस्य पापस्य श्रीमत्कैलास पर्वते ॥ १९
सन्निधौ देवदेवस्य निवासस्सभविष्यति । इत्युक्तवोऽस्य वचन महाकालस्य धर्मराट् ॥ २०
प्रतस्थे स विहायाशु महादेवस्य सन्निधिम् । महाकालस्तदा कोपादेनमाहूय भूसुरा ॥ २१
उल्लङ्घयते मम वचन यथा यम दुरात्मवान् । इत्युक्त्वा ताडयामास निजदण्डेन वक्षसि ॥ २२

दण्डेन ताडितस्तस्य मूर्च्छामाप यमस्तदा । रुधिराप्लुत सर्वाङ्गो महापर्वत सन्निभः ॥ २३
तत्याज मूर्च्छां तां कालः क्षणेनायं यदा तदा । समाययौ विधाताऽत्र सेवां कृत्वा महेशितुः ॥ २४
वृत्तान्तमेतच्छ्रुत्वाऽसौ महाकालं प्रणम्य सः । क्षन्तव्योऽयं त्वया मन्तु र्यमस्य गणनायक ॥ २५
इत्युक्त्वा प्रार्थयामास बहुवारं द्विजोत्तमाः । अधुना कौशिकश्शंभोस्सन्निधौ वर्तते महान् ॥ २६
शिवस्य देवदेवस्य नाम्नां माहात्म्यमुत्तमम् । कोवेत्ति मुक्त्वा देवेशं नीलकण्ठमुमापतिम् ॥ २७
तस्मात्त्वमद्य प्रभृति माप्रमादी भवान्तक । इत्युक्त्वा मोचयित्वैनं जगाम स पितामहः ॥ २८
तस्य सद्वचनं श्रुत्वा मोचितोऽयं यमस्तदा । महाकालं प्रणम्याशु स्वपदं प्राप भूसुराः ॥ २९
तदेतद्भ्रमकेनोक्तं न विस्मृतमिति द्विजाः । इत्येवं सोऽन्तकः प्राह महाकालं प्रणम्य सः ॥ ३०
नवाधिकारी कालोऽयं न जानाति किमप्यतः । यद्बद्धस्त्वगणैस्स्वामिन्मोचितव्यस्त्वया प्रभो ॥ ३१
यथाऽहं कृपया पूर्वं मोचितो भवता प्रभो । अन्तकस्य वचश्श्रुत्वा महाकालो महाबलः ॥ ३२
प्रेषयित्वा गणं कञ्चिन्मोचयामास भूसुराः । महाकाल गणैर्मुक्तः कालस्संप्राप्य तं यमम् ॥ ३३
तदैतौ तं महाकालं प्रणम्य भयकंपितौ । प्रस्थितौ स्वपदायाशु प्राप्यानुमतिमस्य च ॥ ३४
मध्ये मार्गे यमं प्राह कालोऽयं तद्भटाधिपः । ममाधिकारो भवतो निकटे मास्तु संप्रति ॥ ३५
पश्याङ्गं रुधिराप्लुष्टं सर्वत्रैव व्रणाङ्कितम् । गच्छेदेतत्क्षणे प्राणो न मोक्षो यदि मे भवेत् ॥ ३६
इति कालस्य वचनं निशम्याह यमः पुनः । किमर्थं शांकरान् दृष्ट्वा गणांस्त्वं कालमूढधीः ॥ ३७
न त्यक्तवान् कौशिकं तं धर्मिष्ठं पापमेव वा । दृष्ट्वा शंभुगणाकारा मुक्त्वा तं च शिवप्रियम् ॥ ३८
वृत्तान्तमुक्तं यदि वोऽपथ्याचपुण्यितां क्रियाम् । नाहं करोमि वा काल फलं भुक्तमतस्त्वया ॥ ३९
पुरा ममाधिकारत्वादज्ञात्वा दाम्धर्ममयम् । कन्नुकाख्ये महादेशे कदलीपुरमद्भुतम् ॥ ४०
नन्दकः क्षत्रियस्तत्र तद्देशाधिपतिर्महान् । तस्यास्ति भार्या दुश्शीला दर्पाभात् कामदा नृणाम् ॥ ४१
रूपलावण्य संपन्ना कामदाख्या मदान्विता । सैषा नित्यं दुराचारा व्यभिचाररता भृशम् ॥ ४२
मुक्त्वा राजानमपरं पुरुषं यत्र कुत्र च । सुन्दरं रमते दृष्ट्वा स्वयमाहूय कामदा ॥ ४३
चण्डालमपि पापिष्ठा रमते मानवर्जिता । शूद्रं दुर्बुद्धिमाप्यैवं क्रीडयित्वाऽमुना सह ॥ ४४
दर्पी गर्भं पुनश्चैनं मुक्त्वा प्राप परं द्विजम् । वसुवेपीति विख्यातं पापदोषेण सा पुनः ॥ ४५
क्रीडयित्वाऽमुना पापा पूर्णगर्भाऽसूत्रसुतम् । वसुवेपी मृतः पापी चिरकालेन भूसुराः ॥ ४६
ततो निर्गत्य सा पश्चात्पुत्रं च शिशुं स्वकम् । शूद्रं तमाप दुर्बुद्धिं आप्कलं दुष्टधीरियम् ॥ ४७
*क्रीडयित्वा चिरं कालमनेनैषा दुरात्मना । महापापानि भूरीणि चचार किल कामदा ॥ ४८*
पुनर्नावं समारुह्य तेन साकं दुरात्मना । द्वीपान्तरं समभ्येतुं ययावंभोधिमध्यमम् ॥ ४९
वायुना ताडिता नौस्सा भिन्नांभोनिधि मध्यगा । तदा ममार पापिष्ठा तेन साकं पयोनिधौ ॥ ५०
यमदूतास्तदा पश्चात्तेनैनां नरकार्णवे । निपात्य कर्कशैर्घोरैरायसैस्तत्क्षणात् किल ॥ ५१
तदानीं शाङ्कराः काल समागत्य महाबलाः । सन्ताड्य स्वायुधैर्घोरैर्मोचयित्वैनमञ्जसा ॥ ५२
दिव्यं विमानमारोप्य ययुश्शिवपदं प्रति । तदा शिवगणान् दृष्ट्वा सोऽहं क्रोधसमन्वितः ॥ ५३
किमर्थमेनां पापिष्ठां पापामेनां च भो गणाः । दिव्यं विमानमारोप्य कुत्र वा नयथाधुना ॥ ५४
एवं कटुवचोऽवोचमधिकारो नवो यतः । श्रुत्वा मदीयवचनं ते सर्वे क्रोधविह्वलाः ॥ ५५
बध्वा मां दृढपाशेन संताड्य मुद्गरैर्दृढाः । अधस्ताद्बद्धवालस्य कोटरे कुत्रचिद् गृहे ॥ ५६

निपात्याधोमुखं भूतमेकमाहूय दुर्बलम् । दत्वा मदधिकारं मे तस्मै भूताय काल हा ॥ ५७
तं शूद्रमेनं पापिष्ठं निर्बुद्धिं द्विजसन्निधिम् । तस्थतुस्तत्र तावेतौ श्रीमत्कैलासपर्वते ॥ ५८
सेवार्थे चन्द्रचूडस्य विधिविष्णू समाहितौ । वृत्तान्तमेतत्प्रोवाच चित्रगुप्तो मखद्विषम् ॥ ५९
श्रुत्वा हरिस्तदा दुःखाद्ब्रह्मणा सहितः स्वयम् । प्रतस्थे बोधितुं शंभुं शिवलोकं प्रति द्रुतम् ॥ ६०
तत्र विघ्नेश्वरं दृष्ट्वा कैलासे तौ सुराधिपौ । ऊचतुस्तं प्रणम्याशु वृत्तान्तं मम मन्दतः ॥ ६१
श्रुत्वैतन्मम वृत्तान्तं ज्ञात्वा विघ्नेश्वरस्तदा । कोपेन महता युक्तः प्रोवाच वचनं द्विजाः ॥ ६२
सार्धं शिवगणैरेष प्रवृत्तः कलहाय हि । यमस्त्वनुचिता शिक्षा कृता तेऽस्य दुर्मतेः ॥ ६३
इति विघ्नेशवचनं निशम्यैतौ भयान्वितौ । क्षमस्व मन्तुमेनं त्वं सर्वविघ्नाधिप प्रभो ॥ ६४
न जानाति यमो मूढो नूनं सोऽयं दुराशयः । इत्युक्त्वा तौ गणाध्यक्षं नेमतुर्दण्डवत्क्षितौ ॥ ६५
ततः प्रसन्नः प्रोवाच भगवान् गणनायकः । वीरभद्रगणैरेष यमो नीतो महाबलैः ॥ ६६
चक्रवालगिरावास्ते संप्रत्यभ्येत्य शीघ्रतः । आनय त्वमिहेदानीं यमभेन सुदुःखिनम् ॥ ६७
अचलाख्यं ततो भूतमेवमुक्त्वा गणेश्वरः । प्रेषयामास भगवान् दयया काल केवलम् ॥ ६८
इति तस्य वचः श्रुत्वा भूतो निर्गत्य शीघ्रतः । आनयामास मां काल गणेशस्यान्तिकं द्रुतम् ॥ ६९
विघ्नेश्वरं प्रणम्याहं पाणिं बध्वाऽन्तिकेऽवसम् । तदा प्रोवाच भगवान्मां वीक्ष्यापहसन्निव ॥ ७०
त्वयैतौ पीडितौ पापबुध्या यम नचान्यथा । न च जानासि सुकृतं पुण्ययोरनयोर्यम ॥ ७१
दुर्बुद्धेरस्य शूद्रस्य वीर्यं गर्भे दधावियम् । पुत्रश्च विप्रं प्राप्यैषा वसुदेवेति महाविदम् ॥ ७२
असूत पुत्रं तद्गेहे कालपाकेन वै यम । ममार स यदा विप्रस्तदैषा तं शिशुं स्वकम् ॥ ७३
मुक्त्वा द्विजगृहे प्राप दुर्बुद्धिमियमन्तक । ववृधे विप्रगेहेऽसौ शिशुस्त्वस्याः सुतोऽन्तक ॥ ७४
तस्थे कृषिञ्च कुर्वाणो विप्रवेश्मनि शूद्रवत् । विप्रस्य वसुदेवस्य भार्याऽऽसीन्मानिनी यम ॥ ७५
सा तं द्विपञ्च पुत्रत्वात्करुणाय च शंकरम् । नाम चक्रेऽर्थवत्तस्य शूद्रपुत्रस्य सत्यवाक् ॥ ७६
वदन्ति तमिमं लोकास्तस्मात्प्रभृति शंकरम् । प्रसाद्य शंकराख्यां दधाव यानयोः सुतः ॥ ७७
तेन पुत्रेण महता कैलासप्राप्तिरेतयोः । शिवस्य देवदेवस्य नाम्नां सर्वाघहारिणाम् ॥ ७८
माहात्म्यं तत्त्वतो वेत्ति कोवा यम सुशोभनम् । ज्ञात्वा वै तु महादेव नाममाहात्म्यमुत्तमम् ॥ ७९
पुत्रानुवाच विधिना नाम चक्रुर्महेशितुः । तेषां फलं मया वक्तुं न शक्यं वर्षकोटिभिः ॥ ८०
इत्थं निशम्य वचनं विघ्नेशस्यामितौजसः । भयकम्पितसर्वाङ्गो गन्तुं समुत्थाय स्वकं तदा ॥ ८१
प्रणम्य दण्डवत्तमीशं भूतले काल भक्तितः । ममापराधो देवेश क्षन्तव्योऽयं गणेश्वर ॥ ८२
एवं संप्रार्थयन् भक्त्या दयालुं भक्तवत्सलम् । प्रार्थितो ब्रह्मविष्णुभ्यामेवमेव प्रणम्य सः ॥ ८३
मामाह वीक्ष्य कृपया क्षम्य नीतमनाययत् । इतः परं त्वं मतिमान् समीक्ष्य नामवैभवम् ॥
जगत्पतेर्महेशस्य तिष्ठस्वेतन्मयेरितम् ॥ ८४

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे चतुर्थोऽध्यायः ॥

## ॥ अथ पञ्चविंशोऽध्यायः ॥

### शिवनाममहिम्ना सान्दीपिनि मुनि पुत्रोज्जीवनम् ॥

एवमुक्त्वा गणाध्यक्षो मत्पदस्थ यथापुरा । दत्वा मां प्रेषयामास भूतमाहूय विश्वराट् ॥ १
ततोऽहं ब्रह्मविष्णुभ्यां प्रणम्य गणनायकम् । स्वपदं प्राप्य तिष्ठामि चाप्रमादेन सन्ततम् ॥ २
तदद्य भवता काल स्थातव्यं ह्यप्रमादिना । उच्चरन्तिच ये मर्त्याश्शिवनाम सुपावनम् ॥ ३
ज्ञानतोऽज्ञानतोवापि नास्ति तेषामघं ध्रुवम् । सत्यं सत्यं पुनस्सत्यमनुभूतं मयेरितम् ॥ ४
मोक्षेन्मम तवाप्येषामाज्ञा भवति शाङ्करी । मया प्रतिदिनं सेवा प्रतीक्ष्यावसरं विभोः ॥ ५
कर्तव्या ब्रह्मविष्णुभ्यां तथाप्यवसरो मम । अधिकारस्त्वया कार्यस्सावधानेन सन्ततम् ॥ ६
तस्मान्मम वचश्श्रुत्वा स्थातव्यं ह्यप्रमादिना । चिन्तन्ति ये महादेवनाम सर्वाघनाशनम् ॥ ७
मातरं पितरं दृष्ट्वा तस्य तं गच्छ दूरतः । तस्मात्सर्वप्रयत्नेन स्थातव्यं ह्यप्रमादिना ॥ [illegible]
इति कीनाशवचनं कालश्श्रुत्वा भयान्वितः । न शक्यते मया कर्तुमधिकारो महांस्तव ॥ ९
जायते भीतिरत्यन्तं समागुपदमीश्वर । इति कालस्य वचनं निशम्याह यमः पुनः ॥ १०
भीतिस्तव कुतोवाप्यास्त्वर्षे मद्गृहागतः । दृष्टमात्रेण सर्वेऽपि म्रियन्ति प्राणिनो ध्रुवम् ॥ ११
पुरा सान्दीपिनेः पुत्रो महाशीलो महामतिः । सत्कायच्युत गोविन्द मुकुन्दादीनि कीर्तयन् ॥ १२
नामानि विष्णोः पयसि शुद्धे कालावसरके । जग्राह कश्चिन्मकरस्तं पयोमध्यगतं बली ॥ १३
बुभुजे च क्षुधाविष्ट स्तमगाध्याशु दूरतः । तदा मृतमिमं बालं मम दूता महाबलाः ॥ १४
आनिन्युर्लोकमस्माकं विहायाद्रि हरिप्रियम् । तदा सान्दीपिनिश्श्रुत्वा मृतं पुत्रं महाह्रदे ॥ १५
शोकमोहसमाविष्टो मूढवद्विललाप हि । पुनः स्वशिष्यौ तौ कृष्णबलभद्रौ महाबलौ ॥ १६
वीक्ष्य प्रोवाच मतिमानाचार्यो दक्षिणां स्वकाम् । तत्प्रदत्तं मम सुतं यदि चेद्दातुमिच्छतः ॥ १७
दक्षिणा सेयमधुना परमा परमार्थतः । इति तस्य वचश्श्रुत्वा गुरोस्तौ बलशालिनौ ॥ १८
महाह्रदे पतित्वाशु हत्वा नक्रं च तं तदा । न ददर्श गुरोः पुत्रं दुःखाकुलितमानसौ ॥ १९
यमलोके विनिश्चित्य शीघ्रमाययतुः किल । आगत्य लोकमस्माकं तदा तौ प्रश्रयान्वितौ ॥ २०
स्तुत्वा मां मोचयित्वेनं गुरुपुत्रमिमौ पुनः । प्रापयामास निकटं गुरोस्सान्दीपनेरुभौ ॥ २१
ततस्सान्दीपिनेः पुत्रो मतिमान् भयविह्वलः । सङ्कीर्तितानि नामानि मुकुन्दस्य मयाऽनिशम् ॥ २२
तथापि यमदूता मां निन्युर्लोकं यमस्य हि । एवमालोच्य मनसा कालकालस्य शूलिनः ॥ २३
महादेवस्य भीमस्य ब्रह्मणः परमात्मनः । यानि नामानि दिव्यानि प्रथितानि जगत्त्रये ॥ [illegible]
कीर्तयंस्तानि पुण्यात्मा तीर्त्वा मृत्युभयं चिरम् । जपित्वा प्राप्य कैलासं शिवदूतैः परीवृतः ॥
स्थित्वाऽत्र सुचिरं कालं मोक्षमाप्स्यति दुर्लभम् ॥ २५

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे पञ्चविंशोऽध्यायः ॥

---

## ॥ अथ षड्विंशोऽध्यायः ॥

### शिवभक्त नामसीकरणेन चोरस्यापि कैलासगमनम् ॥

पुष्करायं पुरा विप्रं विष्णुभक्तं महामतिम् । यम दूतास्समभ्येत्य मल्लोकमनयन् किल ॥ १
तदा तं वीक्ष्य विद्वांसं दूतान् प्रत्यपदं वचः । अन्योऽस्ति पुष्करस्तत्र ग्रामे पापी दुराशयः ॥ २
आनेतव्यो भवद्भिस्तं मुक्त्वैनं धीतकिल्बिषम् । इति तद्वचनं श्रुत्वा मुक्त्वा तं ब्राह्मणोत्तमम् ॥ ३
मत्सकाशात्परं विप्रं पुष्करारव्यमिहानयन् । तदाप्रभृति पुण्योऽयं मनसाऽऽलोच्य बुद्धिमान् ॥ ४
जप्तानि दुरितघ्नानि मया सर्वाणि सन्ततम् । तथापि यमदूता मामनयन् स्वपुरं किल ॥ ५
एवं विचिन्त्य नामानि शिवस्य परमात्मनः । जजापानुक्षणं भक्त्या समस्ताघहराणि सः ॥ ६
जीवन्मुक्तस्तपुण्यात्मा शिवनामप्रभावतः । स्वच्छन्दं सञ्चरन्भूमावव्याहत मनोरथः ॥ ७
शिवलोकमनुप्राप्य सर्वैश्वर्यं समन्वितः । भुक्त्वाऽथविपुलान् भोगान्मोक्षञ्च प्राप्तवान् किल ॥ ८
यद्गुणार्कि पुराकाल रामं दशरथात्मजम् । दुष्टनिग्राहकं शिष्टपरिपालनतत्परम् ॥ ९
भवतारं परं विष्णोरहमेवायनं किल । तत्र विरमते केन हेतुना भवता मृषा ॥ १०
मुरशत्रु विवेचकं शंभुं मृत्युञ्जयमुमासखम् । कालातीतं महादेवं नीलग्रीवं कपालिनम् ॥ ११
तद्भक्तान् सर्वधालयान् सदाचार परायणान् । भयं भवति देवेभ्यस्तेभ्यो वा (ना) साकमन्तरे ॥ १२
महाक्षावर्सिनस्सर्वे विप्रेशो तत्प्रियानपि । सत्यं सत्यं पुनस्सत्यं मनुभूतं मयेरितम् ॥ १३
तदत्र भवता मुक्तभीतिलेशेन सन्ततम् । मत्सदीयोऽधिकारोऽसौ कर्तव्यः काल पूर्ववत् ॥ १४
शृणुष्वैकमना भूयः पुनर्वाक्यं ममाधुना । जपन्ति ये महादेव्या दिव्यनामानि सन्ततम् ॥ १५
विघ्नेश्वरस्य नामानि स्कन्दस्य च महात्मनः । भैरवस्याथ नामानि वीरभद्रस्य तान्यपि ॥ १६
महाशास्तुश्च नामानि नन्दीशस्य गणाग्रणेः । महाकालादि नामानि तथैवाश्वायुधस्य च ॥ १७
वृषभस्य च नामानि भक्तानां शङ्करस्य च । जपन्ति ये महात्मानो विश्वस्यपि निरन्तरम् ॥ १८
न तान्प्रत्यधिकारो नः पापवृत्तिविवर्जितान् । दृष्ट्वा तान् दूरतो भीत्या गच्छामि शिवयल्लभान् ॥ १९
तस्मात्त्वमपि तान् पुण्यान् दृष्टमात्रेण दूरतः । प्रणम्य गच्छ भीत्याशु प्रमादी भव मा पुनः ॥ २०
अत्रेतिहासं परमं शृणु त्वमवधानतः । पुराऽऽसीद् ब्राह्मणः कश्चिद्वारवीति रविप्रभः ॥ २१
मागधे विषये विद्वानपि पापवशात्पुनः । वेश्यासक्तवितिर्निलं स्तेयी पापी दुराशयः ॥ २२
महारण्यं प्रविश्यास्ते दिवा रात्रौ च पत्तनम् । प्रविश्य तस्करत्वेन ग्रामपालैरलक्षितः ॥ २३
चोरयन्तं पुनर्दृष्ट्वा कदाचिद् ग्रामपालकाः । हन्तुमेनं तदाऽऽजग्मुरतुदस्य महाजवात् ॥ [illegible]
तान् दृष्ट्वाऽयं भयाविष्टः प्राणसंरक्षणोद्यमः । अधावदतिवेगेन महारण्ये सुदूरतः ॥ २५
अनुदुद्राव तं कश्चिद् ग्रामपालो महाबलः । ताडयैनं सदा चोरं मारयेनमिति ध्रुवम् ॥ २६
धावन्तं तं समीक्ष्याशु सशब्दं भ्रान्तिसंयुतम् । महाबलो महासत्वो व्याघ्रः कश्चिद्गुहान्तरात् ॥ २७
निर्गत्य तु महाकोपात्सन्ताड्यामारयत्किल । व्याघ्रेण च हते क्रूरे ग्रामपाले महाबले ॥ २८
त्यक्तभीतिरयं देशं केरळं प्राप काल हा । चकार तत्र मतिमान् नाम तस्य नवं तदा ॥ २९
हत्वाऽद्य व्याघ्रपादेन ग्रामपालं वधोद्यमम् । रक्षितोऽस्मान्ममाधास्तु व्याघ्रपादाभिधेस्त्वयम् ॥ ३०
वेधाय नाम तस्यासिन्निति देशान्तरेऽवसत् । तदा प्रभृति तद्देश जनाश्चाजुहुवुस्तथा ॥ ३१
तमप्यनिशं व्याघ्रपादेत्युक्त्वा चचारह । सोऽयं पुनः कालवशान्ममार किल भूसुरः ॥ ३२

न तदा दूता मदीयाश्चागता खलु । तान् दूतान् सहसाऽभ्येत्य शिवदूता महाबला ॥ ३३
द्य स्वायुधैरेन पुनर्दिव्यविमानकम् । आरोप्य देवर्षिगणैरभितोवृतमुज्वलम् ॥ ३४
न्दुभिनिर्घोषैरचित पुष्पवृष्टिभि । एव नानोपचारेण निन्युश्शम्भोर्वसन्तिकम् ॥ ३५
। स कृपया शम्भु प्राहेन भक्तवत्सल । मद्भक्तस्य पर नाम व्याघ्रपादस्य यत्त्वया ॥ ३६
ज्ञानतो वापि तेन पुण्येन शोभन । चिरकालमुषित्वाऽत्र कैलासे सर्वसम्मते ॥ ३७
। च मम सायुज्य प्राप्तोपि हि न सशय । इत्युक्त्वा स्वान्तिके देवस्तमस्थापयदीश्वर ॥ ३८
रमपरे शम्भोरन्तिके नन्दिसमत । गत्वा प्रणम्य तस्थोऽह बद्धाञ्जलिपुटोऽग्रत ॥ ३९
ऽबोचञ्च वृत्तान्त शम्भुनाऽह दयालुना । ततस्तु शम्भुर्मां वीक्ष्य प्रोवाच वचन तदा ॥ ४०
नामानि ये मर्त्या विश्रुत्यपि अपन्तिवा । न तान् प्रत्यधिकारस्ते मया दत्त पुरा यम ॥ ४१
र तावका दूता किमेन घटमुखता । माद्य भविष्यति क्षिप्रादेव ज्ञात्वा कृत यदि ॥ ४२
। शम्भोर्वचश्श्रुत्वा भयाकुलितमानस । प्रणम्याऽह तदा शम्भुमवोच वचन भयात् ॥ ४३
ज्ञानतत्प्रभो कृत मन्तु कृपानिधे । क्षमस्व मय्यपि प्रीति कर्तव्या पूर्ववत्प्रभो ॥ ४४
ुकरा दण्डवल्लीला नमस्कार कृतो मया । प्रणमन्त तदा वीक्ष्य षण्मुखश्शङ्करात्मज ॥ ४५
ाच वचन धीर निवसञ्छम्भुसन्निधौ । स्वच्छया सञ्चरन्योगी सर्वतस्त्रिदिवमिव ॥ ४६
। दृष्ट्वा नारकिणो बाधितान्यमदूतकै । कथेदंवहरेत्याह तान्वीक्ष्य कृपयान्वित ॥ ४७
ा नारकिणामेषा हरशब्दे श्रुते सति । नानारत्नविचित्राणि विमानानि समाययु ॥ ४८
ह्य तानि ते सर्वे सपत्कुदा मुदान्विता । कैलासमापु परम यत्र देवो विराजते ॥ ४९
केषु च शून्येषु तदा त्व शम्भुसन्निधिम् । समागत्य महादेव प्रणम्य भयकम्पित ॥ ५०
ान्त प्रोच्यानेतच्चरणसमुद्भवम् । तदा त्वा वीक्ष्य देवेशश्शङ्कर करुणाकर ॥ ५१
तेषा यातना मृत्यो नरकेषु महत्स्वपि । येश्श्रुत नाम परम धृतमुच्चारित तु वा ॥ ५२
नतोऽज्ञानतोवापि प्रसङ्गादपि शोभन । देव्या मम गणेशस्य सुब्रह्मण्यस्य वा यम ॥ ५३
णामपि भक्ताना मुनमुच्चारित ध्रुवम् । नाम तेषामथ नास्ति नरकेष्वपि यातना ॥ ५४
सन्निवृत्ता यत्पूना नरकेभ्योऽभय ध्रुवम् । इत्युक्तवान् किलेशानमहाश्चन्द्रशेखर ॥ ५५
त किमागतोऽसि त्व मूढवदत्र शाङ्करम् । सन्निधिं देवदेवस्य गच्छ गच्छ दुरात्मवान् ॥ ५६
ति स्कन्दस्य वचन श्रुत्वाऽह भयविह्वल । प्रणम्य दण्डवद्भक्त्या तोषयित्वाशु षण्मुखम् ॥ ५७
दाखपाऽह मल्लोकमागतवानसि वै किल । तदद्य भवता काल श्रुता पुण्या कथा खलु ॥ ५८
त परत्र त्व शम्भोर्नाममाहात्म्य मुत्तमम् । तदीयानाच माहात्म्य स्मृत्वा मनसि सन्ततम् ॥ ५९
भावेन विना तिष्ठ पुनश्चात्र मे पदे । ये शम्भुभक्तनामानि शृण्वन्ति च पठन्ति वा ॥ ६०
तान् दृष्ट्वा दूरत काल गच्छगच्छ महाश्रया । इति वाक्य यमस्याय श्रुत्वा कालस्तदादित ॥ [illegible]
शिवस्य नाममाहात्म्य स्मृत्वा मनसि सन्ततम् । भक्तनाम्नाञ्च माहात्म्यममवादेन चावसत् ॥ ६२
तादृशाऽञ्छाङ्करस्तैतान् दृष्ट्वा गच्छति दूरत । तस्मान्नाम्नाञ्च महात्म्य कोवा जानाति तत्त्वत ॥ ६३
बात मयापि यत्किञ्चित्पुण्यस्य कथित द्विजा । यद्वच्छम्भुनामानि जपित्वा म्रियमाणिरे ॥ ६४
आयूंषि केचित्पूर्णानि पुत्रानपि तथा परे । अरोगत्व तथा चान्ये सरोगा बहुकालत ॥ ६५
जरावार्धक्यनिर्मुक्ता केचिद्यौवनशालिन । भूतप्रेत पिशाचेभ्यो विषाद्युग्रमृगादपि ॥ ६६

विभ्यति परे मर्त्या शंभुनाम प्रभावतः । केचिज्जितारयो युद्धे यान्ति सद्धि चापरे द्विजाः ॥ ६७
क्षितावपि सर्वाणि नामोच्चार्थं महेशितुः । प्रापुः केचन धर्मिष्ठा ब्राह्मणानामधीश्वराः ॥ ६८
धृत्वा भस्मरुद्राक्षं नामेशस्य जपन्ति ये । न वेद्मि तेषां माहात्म्यं साक्षादीश्वररूपिणाम् । ६९
पठन्ति महात्मानश्शृण्वन्ति श्रावयन्ति या । माहात्म्यं शंभुनाम्नां ते भुक्त्या भोगान् सु पुष्कलान् ॥
पुरारोग्यमैश्वर्यं पुत्रान्दारांश्चवाप्य हे । अन्ते च शिवसायुज्यं प्राप्नुवन्ति द्विजोत्तमाः ॥ ७१

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे षड्विंशोऽध्यायः ॥

---

॥ अथ सप्तविंशोऽध्यायः ॥

सोऽस्य सोमवारे महामाहात्म्यासेनापि कैलास प्राप्तिः ॥

शृणुध्वमृषयस्सर्वे वक्ष्ये शिवव्रतान्यपि । यदनुष्ठानमात्रेण सिध्यन्तीष्टानि देहिनाम् ॥ १
सोमवारव्रतं श्रेष्ठमाद्यमनमनुत्तमम् । उमामहेश्वराख्यं च्छिवरात्रिव्रतं परम् ॥ २
केदारव्रतमन्यच्च कल्याणाख्यं द्विजोत्तमाः । शूलव्रतं महापुण्यं वृषभाख्यं परं स्मृतम् ॥ ३
एतान्यष्टौ महादेवप्रियाणि प्रथितानि च । शुक्रवारव्रतं गौर्यास्सर्वलोकेषु विश्रुतम् ॥ ४
आश्वयुक्पूर्वफल्गुण्यां व्रतमन्यदुमाप्रियम् । नवम्यां तु व्रतं पुण्यं मासि चाश्वयुजे सिते ॥ ५
व्रतानि त्रीणि पार्वत्याः पुण्यान्येतानि भूसुराः । विघ्नेश्वरस्यापि व्रतं शुक्रवारे सुपावनम् ॥ ६
चतुर्थ्यां तु व्रतं पुण्यं प्रोष्ठपन्मासिके सिते । मार्गशीर्षे तथा मासि व्रतं षष्ठ्यां सुपावनम् ॥ ७
त्रीणीमानि गणेशस्य सर्वपापहराणि वै । षण्मुखस्य व्रतं पुण्यं शुक्रवारे द्विजोत्तमाः ॥ ८
कृत्तिकाख्यचतुर्थ्ये व्रतं परमपावनम् । स्कन्दषष्ठ्याख्यमपरं सर्वलोकेषु विश्रुतम् ॥ ९
एतानि त्रीणि भूदेवास्सर्वाभीष्टप्रदानि हि । भैरवस्यापि देवस्य भानुवारव्रतं महत् ॥ १०
तुलायां संस्थिते भानौ सेव्यतेषा महीसुराः । अनुष्ठेयं भरण्यां हि व्रतं सर्वाघनाशनम् ॥ ११
व्रतानि त्रीणि भूदेवा भैरवस्य महात्मनः । वासवे वीरभद्रस्य माङ्गले व्रतमद्भुतम् ॥ १२
सर्वाण्येतानि ये मर्त्याश्चरन्ति विधिनाऽथवा । इह भुक्त्वा चिरं कालं भोगांस्ते तु महौजसः ॥ १३
शिवलोकमनुप्राप्य ■■ स्थित्वा चिरं ततः । अन्ते च मोक्षमाप्नोति परं सत्यं मयेरितम् ॥ १४
वक्ष्येऽहं विविधैतेषां माहात्म्यमपि भूसुराः । सोमवारव्रतस्यादावनुष्ठानविधिं परम् ॥ १५
वक्ष्ये क्रमेण भूदेवाश्शृणुध्वमवधानतः । प्रथमं कृत्तिकामासे सोमवारे तु यत् स्मृतम् ॥ १६
तस्मिन्नुषसि चोत्थाय ध्यात्वा देवं त्र्यंबकम् । स्नात्वा शुद्धजले सन्ध्यां समाराध्य विधानतः ॥ १७
समाराध्य महादेवं सर्वकल्याणकारणम् । शिवभक्तान् स्त्रियस्साध्वीरर्चयित्वा शिवं शिवाम् ॥ १८
विभाव्य भोजयित्वाऽथ चैकभुक्तञ्चरेत् स्वयम् । शिवार्चना विहीनो यस्स्नात्वा पयसि निर्मले ॥ १९
नित्यकर्म विधायाथ गत्वा शंभ्वालयं शुभम् । अर्चयित्वाऽत्र देवेशं बिल्वपत्रैस्सुपिष्टैः ॥ २०
कारयित्वाऽभिषेकञ्च शुद्धैः पञ्चामृतादिभिः । निवेदयित्वा नैवेद्यैर्वित्तशाठ्यं विहाय च ॥ २१
ब्राह्मणान् भोजयित्वाऽथ शिवभक्तान् जितेन्द्रियान् । भुञ्जीयाद्व्रतधीर्वा उपवासमथाचरेत् ॥ २२
एवमागममार्गेण सोमवारव्रतं परम् । आचरेद्यस्तु मतिमान् सर्वपापैः प्रमुच्यते ॥ २३
इह भुक्त्वा चिरं भोगानन्ते कैलासमाप्नुयात् । सोमवारव्रतं पूर्वमनुष्ठाय पतिव्रता ॥ २४

गिलनी राजपुत्री पश्चिनौ द्वौ समागतौ । उमामहेश्वरौ ध्यात्वा दंपती रूपमास्थितौ ॥ २५
गमास भवत्येनौ दंपतीति विनिश्चिता । तद्भावनामावितौ तौ दंपतीव बभूवतुः ॥ २६
पास्य माहात्म्याधकाराध्यमीदृशम् । एवमादि वसिष्ठोऽपि ऋषीणां प्रवरो द्विजाः ॥ २७
तेतदनुष्ठाय प्राप भार्यामरुन्धतीम् । विभुः पूर्वमनुष्ठाय व्रतमेतन्महीपतिः ॥ २८
शोऽपि वरं पुत्रं रूपवानस्य वैभवात् । सोमशर्माप्यनुष्ठाय सोमवारव्रतोत्तमम् ॥ २९
र्थंशाय परमेश्वरस्य प्रसादतः । धन शत्रुर्महाराजदशाशुभिः परिपीडितः ॥ ३०
नेतदनुष्ठाय निष्प्रभवतो बभूवह । मृत्युमप्यपयत्पूर्वं कीचकाख्यो महीसुरः ॥ ३१
भ्यर्यमयात्पात्रविहिताध्यवः पुरुषर्षभः । वेदशाङ्गोऽपि महायुद्धिरनुष्ठाय व्रतोत्तमम् ॥ ३२
ग्लोकमवापार्थं ■ शरीरः प्रियान्वितः । धर्मकीर्त्याप्यनुष्ठाय मोक्षमाप महीसुरः ॥ ३३
शीलोऽप्यनुष्ठाय मोक्षमाप महीसुरः । व्रतमेतदनुष्ठाय पुत्रमिष्टफलप्रदम् ॥ ३४
वेहभोगानतुलान् कैलासं प्राप्य केवलः । तत्र स्थित्वा चिरं कालमपवर्गमवाप सः ॥ ३५
नेतद्विशाय सत्यसन्धात्मजः पुरा । महाखलो महापापी स्तेयी वेदांगतारतिः ॥ ३६
ादनामा पापिष्ठः स्वेयं कृत्वा दुरात्मवान् । वेश्यागृहं विवेशायं रन्तुं तां ब्राह्मणोत्तमाः ॥ ३७
। केचन सपद्मा ग्रामपालारमयायु । तानागतानयं ज्ञात्वा भीतः आपयमं द्रुतम् ॥ ३८
ऐत्तस्मिन्दिने चासीत्सोमवारस्य तद्दिनम् । न ह्यभ्यवानश्च दिवे विराटोऽयं वनं गतः ॥ ३९
दमूलफलाहारश्चचारास्मिन् वने द्विजाः । दष्टो महाभुजङ्गेन परेद्युरस समार हि ॥ ४०
धुं तमेनं सहसा यमदूतास्समागताः । तदानीं शिवदूतास्तमागत्य च महाबलाः ॥ ४१
र्षं विमानमारोप्य सन्ताड्य यमदूतकान् । प्रस्थितादिशिवलोकाय ब्राह्मणानामधीश्वराः ॥ ४२
दैव यमदूतास्तु याचितादिशवकिंकरैः । वृत्तान्तमेतत्सकलं यमायाशु न्यवेदयन् ॥ ४३
र्वेतद्विधी शीघ्रं यमो दूतमुखात्तदा । प्राप्यमाणं शिवगणान् प्रणस्य प्रश्रयान्वितः ॥ ४४
तमेनेन किं पुण्यं दुराचारेण सन्ततम् । दिव्यं विमानमारोप्य क्रियानयथ भोगणाः ॥ ४५
मया ज्ञायते पुण्यमेकं चास्य विचारितम् । पुण्यैरनेकैः प्राप्यो हि शिवलोको महात्मनाम् ॥ ४६
र्थं यमस्य वचनं श्रुत्वैते शांकरा गणाः । निराहारः कृतस्नानो गृहन्नायं सोमवासरे ॥ ४७
त्कन्दमूलफलाहारश्चचाराध्वमध्वगः । सोमवारव्रतं दैवात् पुण्यपाकेन केनचित् ॥ ४८
ज्ञानतापि संप्राप्तं यमेतेन व्रतोत्तमम् । सर्पदष्टो ममारायं वने तस्मिन् परेऽहनि ॥ ४९
न पुण्यप्रभावेन शिवलोकाय गच्छति । स्थित्वा तत्र चिरं काले मोक्षं च प्राप्स्यति ध्रुवम् ॥ ५०
माज्ञया देवदेवस्य महादेवस्य चागताः । वयं तस्य दुराचारेदं मुक्त्वा स्वं गन्तुमर्हसि ॥ ५१
इति तेषां वचश्श्रुत्वा यमोऽपि भयकंपितः । प्रणम्यैतांश्च तं पुण्यं स्वपद् प्राप भूसुराः ॥ ५२
शिवलोकमयं प्राप्य विराटोऽपि शिवप्रियः । सन्निधौ देवदेवस्य स्थित्वाऽनेकाब्दमुज्ज्वलः ॥ ५३
अन्ते च मोक्षं प्रापाय ब्राह्मणानामधीश्वराः । सोमोऽप्येतदनुष्ठाय सोमत्वं प्राप्य शङ्करात् ॥ ५४
प्रसन्नेच महादेवे प्रणम्य परया मुदा । सोमवारव्रतं नाम भवत्वेतन्मम प्रभो ॥ ५५
सोमवारव्रतञ्चैतच्चाचरन्ति महद्व्रतम् । ये तेषां कृतपुण्यानां भगवंस्त्वत्प्रसादतः ॥ ५६
भवन्तु वाञ्छितावीश मोक्षमन्ते भवत्वलम् । इति चन्द्रे वरं विप्रास्तदानीं चन्द्रमा अपि ॥ ५७
दत्वा शंभुर्वरं तस्मै सहसाऽन्तरधीयत । तस्माद् व्रतमिदं पुण्यं सोमवारे शिवप्रियम् ॥ ५८

चरन्ति येव्रतं तेषां सोमदक्षांशुकमासतः । प्रसन्नः प्रददेत्सर्वं सत्यमुक्तं द्विजोत्तमाः ॥ ५९
सोमवारव्रतस्यैतं माहात्म्यं शंकरप्रियम् । पठन्ति येच शृण्वन्ति श्रावयन्ति जनाद्विजाः ॥
तेऽत्र भुक्त्वा महाभोगानन्ते मोक्षमवाप्नुयुः ॥ ६०

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे सप्तविंशोऽध्यायः ॥

---

॥ अथ अष्टाविंशोऽध्यायः ॥

आर्द्रायांव्रतानुष्ठानेन श्रीनटराज प्रसादः ॥

आर्द्राव्रतञ्च वक्ष्येऽहं सर्वकल्याणकारणम् । आदित्ये चापगे ऋक्षं रौद्रं यत् प्रथितं भुवि ॥ १
तद्दिने प्रातरुत्थाय शुचिर्भूत्वा समाहितः । ध्यात्वा नटेशं हृदये समस्तापत्प्रणाशकम् ॥ २
बहिर्गृहाद्विनिर्गत्य स्नात्वा शुद्धोदके वरे । नित्यकर्म विधायाशु गत्वा शंभोर्वरालयम् ॥ ३
तत्राभिषेकं विधिना विधाय परमेशितुः । नानाविधञ्च नैवेद्यं विधायानन्तवैभवात् ॥ ४
आज्यैर्दीपान् पृथूंश्च सन्निधौ परिकल्प्य च । प्रणम्य देवदेवेशं शङ्करं परया मुदा ॥ ५
नटेशस्यापि विधिना विधायानन्तवैभवात् । अभिषेकञ्च नैवेद्यं दीपानारोपयेद् घृतैः ॥ ६
दर्शयित्वा महादेवं गृहं प्राप्य सुनिर्मलः । उपोष्य तद्दिनं विद्वान् परेद्युरुषसोदये ॥ ७
समुत्थाय शुचिर्भूत्वा ध्यात्वा देवं त्रियंबकम् । समाप्य नित्यकर्माणि शिवभक्ताञ्जितेन्द्रियान् ॥ ८
भोजयित्वा स्वयं पश्चाद्भुञ्जीयाद्बन्धुभिस्तथा । एवं कुर्याद्व्रतं रौद्रे नक्षत्रे परमेश्वरम् ॥ ९
चरन्ति ये महात्मानो व्रतमेतच्छिवप्रियम् । तेषां भुक्तिश्च मुक्तिश्च करस्था नात्र संशयः ॥ १०
व्रतमेतदनुष्ठाय मुञ्जकेशो महामुनिः । नृत्तं विलोक्य देवस्य नटेशस्य महात्मनः ॥ ११
विधूतकिल्बिषो विप्रा जीवन्मुक्तो बभूव हि । पतञ्जलिर्महायोगी कार्कोटोऽपि महोरगः ॥ १२
व्रतं रौद्रविधानेन विधाय परया मुदा । विलोक्य देवदेवस्य नृत्तं नृत्तेश्वरस्य तौ ॥ १३
नित्यायमापतुर्विप्रा जन्ममृत्युविवर्जितम् । व्याघ्रपादो महायोगी व्रतस्यास्य च वैभवात् ॥ १४
उपमन्युमुनिश्रेष्ठं लब्धवानात्मजं द्विजाः । नृत्तं विलोक्य देवस्य जीवन्मुक्तो बभूव हि ॥ १५
व्रतमेतदनुष्ठाय विपुलाख्यो द्विजोत्तमः । दिव्यं विमानमारुह्य सशरीरो दिवं ययौ ॥ १६
गत्वा कैलासमचलं तत्र दृष्ट्वा महेश्वरम् । प्रणम्य परया भक्त्या पुनर्गत्वा निजं गृहम् ॥ १७
स्थित्वाऽत्र विपुलान् भोगान् भुक्त्वा भार्यासमन्वितः । पुनर्विमानमारोप्य देवर्षीणां गणैर्वृतः ॥ १८
शिवलोकमनुप्राप्य सर्वैश्वर्यसमन्वितः । स्थित्वाऽत्र विपुलान् भोगानन्ते सायुज्यमाप्तवान् ॥ १९
एवमेतद्व्रतं पुण्यमधिष्ठाय परे द्विजाः । वाञ्छितान्यपि लब्ध्वान्ते मोक्षमापुर्द्विजोत्तमाः ॥ २०
अस्मिन्रुद्रतिथौ शंभुः परमानन्दनिर्भरः । सर्वेषामपि रक्षार्थं करोत्यानन्दताण्डवम् ॥
तस्माद्व्रतमिदं पुण्यं व्रतानामुत्तमं द्विजाः ॥ २१

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे अष्टाविंशोऽध्यायः ॥

---

॥ अथ एकोनत्रिंशोऽध्यायः ॥

सिन्धुसेनराज्ञः उमामहेश्वर व्रतानुष्ठानेन पुनाराज्यलाभः ॥

उमामहेश्वरं नाम व्रतं वक्ष्ये द्विजोत्तमाः । वृश्चिकं पूषणि प्राप्ते पूर्णमास्यामिदं व्रतम् ॥ १
तस्यां प्रातस्समुत्थाय शुचिर्भूत्वा समाहितः । स्नात्वा शुद्धजले नित्यकर्म सर्वं विधाय च ॥ २
सौवर्णं राजतं वाथ द्रव्यलोभविवर्जितः । विग्रहं देवदेवस्य विधायोमामहेश्वरम् ॥ ३
पूजयेद्भक्तिसंयुक्तः पूजाद्रव्यैरनेककैः । नैवेद्यं विविधं दद्याद्विभवस्यानुसारतः ॥ ४
प्रणम्य प्रार्थयित्वाऽथ व्रजेद्देवालयं प्रति । तत्राभिषेकं भक्तिमान् कारयेत्परमेशितुः ॥ ५
पञ्चामृतादिभिर्दिव्यैर्नैवेद्यञ्च समर्पयेत् । निवेदयित्वा तांबूलमुपचारांश्च कारयेत् ॥ ६
प्रणम्य प्रार्थयित्वाऽथ गृहं यायात् स्वकं सुधीः । दत्वा दानञ्च भक्तेभ्यो ब्राह्मणेभ्यो यथाक्रमम् ॥ ७
भुञ्ज्याद्भक्तैरेकवारमद्यात् स्वादुफलानि वा । पिष्टं वा तण्डुलोद्भूतमपूपं वा शिवप्रियैः ॥ ८
मयारसद्वैव भक्तिमान्व्रततया द्विजाः । नियमेनास्य महात्म्य शृणुयात्तदनन्तरम् ॥ ९
भक्ताय कलशे प्रतिमां दद्याच्चां शिवयोरिमे । एवमागममार्गेण ये चरन्ति व्रतं महत् ॥ १०
तेषामत्रातिदुर्लभा लक्ष्मीर्मुक्तिः परत्र च । एतद्व्रतमनुष्ठाय दुर्णयिस्तुर्महामुनिः ॥ ११
अचक्षुः प्राप परमं चक्षुः फुल्लाब्जसन्निभम् । विधवाऽपि व्रतं प्राप्य काचित्पुत्रमवाप सा ॥ १२
मायान्ते शिवलोकञ्च व्रतस्यास्य प्रभावतः । विष्णुः कृष्णावतारेऽसौ व्रतमेतद्विधिप्रियम् ॥ १३
मनुष्ठायाप सत्योपाद्भार्यया बहुपुत्रकान् । गायत्रीमपि सावित्रीं पुरा पद्मजसंभवः ॥ १४
लब्धवान् परया प्रीत्या व्रतस्यास्य प्रभावतः । शचीं लब्धवानिन्द्रः पुत्रमेतत्प्रभावतः ॥ १५
वसिष्ठोऽप्यग्निहोत्रार्थं कामधेनुमवाप्तवान् । शतानन्दमृषिश्रेष्ठं गौतमोऽपि महामुनिः ॥ १६
आत्मजं प्राप्तवानेतच्चरित्वा व्रतमद्भुतम् । व्रतमेतदनुष्ठाय जनकोऽपि महीपतिः ॥ १७
सुषुवे जानकीं सीतां साक्षाल्लक्ष्मीं द्विजोत्तमाः । व्रतमेतदनुष्ठाय चित्राङ्गोऽपि महीपतिः ॥ १८
स्वर्गलोकं समासाद्य देवेन्द्रेणापि पूजितः । उर्वश्या क्रीडयित्वाऽत्र सर्वाप्सरशोभया ॥ १९
कल्पद्रुमं गृहीत्वाथ पुनर्भूलोकमाप्य च । स्थित्वाऽत्र सुचिरं काले पुत्रानुत्पाद्य पण्डितान् ॥ २०
पट्टबन्धं विधायास्य सुमुहूर्ते द्विजैस्सह । आरुह्य मणिशोभाढ्यं विमानं काञ्चनं द्विजाः ॥ २१
श्रीमत्कैलासमचलं गत्वाऽत्र निवसच्चिरम् । पश्चाच्च प्राप्तवान्मोक्षं परस्य ब्रह्मणो द्विजाः ॥ २२
सुधर्माख्यः पुरा विप्रश्शास्त्रार्थज्ञानवर्जितः । नायाति शास्त्रमभ्यस्तमपि मन्दधियोऽस्य च ॥ २३
हसन्ति तमिमं केचिन्मन्दबुद्धिरितीर्ष्यया । तदा व्रतमिदं दिव्यमुमामाहेश्वरं परम् ॥ २४
चचार विधिना विप्रो भक्तियुक्तेन चेतसा । तदा सरस्वती शुद्धा सर्वविद्यास्वरूपिणी ॥ २५
उमायाः कृपया नित्यं चकारास्यास्यमध्यगा । तदानीमेव शास्त्रार्थास्सर्वेऽप्यस्यास्फुरद् द्विजाः ॥ २६
यथाऽस्य शास्त्रं स्फुरति न तथाऽन्यस्य भूसुराः । राजा तदैनमाहूय दानं बहुधनं ददौ ॥ २७
तदास्यावनतास्सर्वे जना विद्याप्रभावतः । विद्यादानं चकारायं बहूनाञ्च द्विजन्मनाम् ॥ २८
पुत्रान्विनीतानुत्पाद्य सर्वशास्त्रार्थकोविदान् । प्राप्यान्ते शिवलोकञ्च विमानेनातिराजता ॥ २९
तत्र गणाधिपत्यञ्च लब्धवानीश्वराज्ञया । सिन्धुसेनो महीपालश्शत्रुणा द्रावितो युधि ॥ ३०
मुक्त्वा स्वनगरं भीतो भार्यया प्रापवै वनम् । तत्रावसच्चिरं कालं कन्दमूलफलाशनः ॥ ३१
आगस्त्यं तपतां श्रेष्ठं ददर्शात्र समागतम् । प्रणम्य तं स्ववृत्तान्तमुक्तवाञ्श्रद्धयान्वितः ॥ ३२
तदा व्रतमिदं प्राह तस्मै स मुनिपुङ्गवः । चचार भार्यया सार्धं व्रतमेतदनुत्तमम् ॥ ३३

अनुष्ठिते व्रते तस्मिन् समाप्ते गुह्यकेश्वर । कुबेरोऽप्यागमद्यत्र शिवस्याज्ञावशात् द्विजा ॥ ३४
त्वद्राज्ये त्वां पुनस्स्थाप्य पट्टबन्धं विधाय च । निहत्य शत्रून् सकलान् पुनर्गच्छामि मत्पदम् ॥ ३५
शिवाज्ञयाहमधुना चागतोऽत्र महीपते । इत्युक्त्वैव समाहूय चतुरङ्गबलैस्सह ॥ ३६
गजस्कन्धं समारोप्य भार्यया पट्टभद्रया । रिपुमुच्चाटयित्वाशु नगरादस्य सर्वतः ॥ ३७
पट्टबन्धं चकारास्य राज्ञोऽस्य गुह्यकेश्वर । दत्वा धनानि भूरीणि चोक्त्वा संभाषणं मिथः ॥ ३८
स्वपदं प्राप परया प्रीत्यास्यानुमतो द्विजा । चिरकालमयं राजा भुक्त्वा भोगानथेच्छया ॥ ३९
कैलासगिरिमासाद्य मोक्षञ्च प्राप्तवान्मुदा । व्रतमेतच्चरिष्यन्ति ये वदन्ति मानुषाः ॥ ४०
शाङ्क्षितान्यपि लब्ध्वान्ते मोक्षमाप्नुर्द्विजोत्तमाः । माहात्म्यं ये व्रतस्यास्य शृण्वन्तिह पठन्ति च ॥
ते भुक्त्वा भोगमखिलं यान्ति ते च परां गतिम् ॥ ४१

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे एकोनत्रिंशोऽध्यायः ॥

---

॥ अथ त्रिंशोऽध्यायः ॥

चतुर्विध शिवरात्रि निरूपणम् ।

शिवरात्रिव्रतं वक्ष्ये सर्वकल्याणकारणम् । चतुर्विधमिदं विप्रा नित्यमासादिभेदतः ॥ १
चतुर्ष्वेपि शिवं यान्त्यभ्यर्च्यैतेषु सर्वदा । नित्यं निशेति विख्याता शिवरात्रिरियं द्विजाः ॥ २
सोमवारेण संयुक्ते दश मासेषु केषुचित् । शिवरात्रिरियं ख्याता योगजेति महाशुभा ॥ ३
मासेमासे द्वितीया या कृष्णपक्षचतुर्दशी । सा मासशिवरात्रीस्यात्साक्षान्मोक्षप्रदायिनी ॥ ४
तृतीया माघमासे या प्रथमा शुक्लपक्षगा । तदारभ्यैकभुक्तेन यावत्कृष्णत्रयोदशी ॥ ५
अङ्कुरच्य नियमैनैव स्थित्वा नित्यं समाहितः । परेद्यु प्रातरुत्थाय चतुर्दश्यां महेश्वरम् ॥ ६
अनन्तगुणकल्याणमपरिच्छिन्नवैभवम् । ज्वालामालासहस्राढ्यं महालिङ्गाकृतिं शिवम् ॥ ७
हृत्पद्ममध्यगं ध्यात्वा स्नात्वा पयसि निर्मले । अर्चयेल्लिङ्गमीशस्य रात्रौ यामेषु भूसुराः ॥ ८
शिवरात्रिरियं माघप्रथमादिरितीरिता । तुरीयामपि वक्ष्येऽहं शिवरात्रिं महीसुराः ॥ ९
माघकृष्णचतुर्दश्यां प्रातरुत्थाय शङ्करम् । ध्यात्वा हृत्पद्मनिलये स्नात्वा शुद्धोदके शुचिः ॥ १०
नित्यधर्मं विधायाथ रात्रौ यामेषु शङ्करम् । अर्चयेल्लिङ्गरूपस्य भुक्त्या निद्रां विवर्जयन् ॥ ११
एवं चतुर्विधा प्रोक्ता शिवरात्री शिवप्रिया । एतद्रात्रिषु शुद्धात्मा निर्निद्रश्शिवमर्चयेत् ॥ १२
स्नात्वा परेद्युस्सर्वाणि कर्माण्यपि विधाय च । नियमस्यैव सहितो भुञ्जीयात्स्वान् शुचिः ॥ १३
चतसृष्वपि विप्रेन्द्राः शिवरात्रिष्वरेत्तु यः । एका द्वे वाथ तिस्रो वा चतस्रो वा यथाबलम् ॥ १४
तस्य पुण्यं मया वक्तुं न शक्यं कल्पकोटिभिः । इह भुक्त्वा चिरं कालं भोगान् सेव्यानुसारतः ॥ १५
अन्ते च मोक्षं यातीति किमाश्चर्यं द्विजोत्तमाः । विष्णुरेतद्व्रतं पूर्वमनुष्ठाय विधानतः ॥ १६
विष्णुत्वं स्थापयित्वा महादेवप्रसादतः । प्राप्तवान् सर्वमाहात्म्यं ब्रह्माप्येवं प्रसादतः ॥ १७
चरित्वैतद्व्रतं पूर्वं मिन्द्रोऽपीन्द्रत्वमाप्तवान् । गणाधिपस्य संप्राप्ता देवाः केचिदनुष्ठिताः ॥ १८
यद्वा ये प्रयताः पूर्वमनुष्ठाय व्रतोत्तमम् । मोक्षमाप्नुर्द्विजश्रेष्ठाः पुनरावृत्तिवर्जितम् ॥ १९
धनाधिपत्वं धनदः प्राप्तवानस्य वैभवात् । संप्राप्तो वायुरप्येवं शक्तिं सर्वातिशायिनीम् ॥ २०

कल्मषपादः क्षोणीशस्त्वेतद्व्रतमाहृतम् । अनुष्ठाय विधानेन ब्रह्महत्यां विमुक्तवान् ॥ २१
शापान्मुक्तस्स्वकं देशं पुनर्लब्ध्वास्य वैभवात् । पट्टाभिषिक्तो भोगांश्च भुक्त्वा परमदुर्लभान् ॥ २२
मोक्षञ्च प्राप्तवानन्ते शिवस्यैव प्रसादतः । व्याधः कश्चित्पापमयाद् बिल्ववृक्षं समाश्रितः ॥ २३
शिवरात्रिं न जानाति निराहारो महावने । उच्छिद्य बिल्वपत्राणि पातयित्वा तरोरधः ॥ २४
तस्थे जाग्रतया रात्रौ वृक्षस्योपरि मुहुर्मुहुः । निराहारतयान्येद्युर्ममारायं विधेर्बलात् ॥ २५
शिवलोकमवापायं शिवरात्रिप्रभावतः । नीचनारी पुरा वृद्धा महाव्याधिवशं गता ॥ २६
शिवरात्रावलब्धान्ना तस्थेऽसावुपवासतः । उषित्वा रात्रिमेनां सा ममारोपाद्द्विजोत्तमाः ॥ २७
दिव्यं विमानमारुह्य दिव्यदेहमवाप्य च । शिवलोकं ययौ विप्राः शिवस्यैव प्रसादतः ॥ २८
शिवरात्र्यागमं वक्ष्ये शृणुध्वमवधानतः । पुरा नाहो न रात्रिश्च न सप्तार्णश्च केवलः ॥ २९
शिवस्तमसि संहारकाले महति चावसत् । एकोमा साक्षिणी तस्य चतुष्षष्टिकलान्विता ॥ ३०
हृत्पद्मनिलये शंभुं पूजयित्वाऽस्तवत् द्विजाः । संप्राप्तायां पुनस्सृष्टौ यथापूर्वं द्विजोत्तमाः ॥ ३१
तदा देवी महादेवं प्रणम्य करुणाकरम् । यस्माद्रात्रौ मया शंभो पूजितस्त्वं हृदंबुजे ॥ ३२
तस्मादेतासु भो देव चतसृष्वपि रात्रिषु । ये पूजयन्ति यामेषु भगवन्तं जगद्गुरुम् ॥ ३३
वाञ्छितानि भवन्त्वीश तेषां त्वत्कृपयाऽत्र च । मुक्तिर्भवतु देवेश परत्रापि जगत्पते ॥ ३४
शिवरात्रिव्रतञ्चैतच्छास्त्राम्नायगतं अक्षयम् । य आचरेद्व्रतं शम्भोः शिवरात्रिषु पुण्यवान् ॥ ३५
तस्याक्षयं फलं भूयात्सिध्यन्त्वीप्सितानि भो प्रभो । इति लब्ध्वा वरं देवी प्रसादादीश्वरात्स्वयम् ॥ ३६
चरित्वा व्रतमेतत्सा प्रथमं ब्राह्मणोत्तमाः । स्वयमस्वच्छहृद्राज्याशे परमानन्दनिर्भरा ॥ ३७
देवैस्स्कन्दपूर्वैश्च शिवपुत्रैर्गणेश्वरैः । नन्दि भृङ्गि महाकालप्रमुखैश्च महाबलम् ॥ ३८
चेरुस्तथा ब्रह्मविष्णू पुरा हरौ वरप्रदम् । ज्योतिर्लिङ्गात्मकेशंभोरद्युधान्तमद्भुतम् ॥ ३९
शिवरात्राविमौ शंभुं समाराध्यतां द्विजाः । ततः प्रसन्नो भगवान् प्रादुरासीत्तयोः पुरः ॥ ४०
तं दृष्ट्वा देवमीशानं स्तुत्वा स्तोत्रवरैरिमौ । प्रणम्य परया भक्त्या तस्थतुः प्रश्रयान्वितौ ॥ ४१
सोऽपि प्रसादमुभयोर्वरं दत्वाशु वाञ्छितम् । अन्तर्धिमाययौ शम्भुस्सच्चिदानन्दविग्रहः ॥ ४२
तस्मादेतस्य माहात्म्यं मया वक्तुं न शक्यते । न शक्यतेऽसमग्रत्वाद् व्यासेनापि द्विजोत्तमाः ॥ ४३
सनत्कुमारो योगीन्द्रो वक्तुं जानाति वा न वा । श्रुत्वैतद् व्रतमाहात्म्यं नन्दिकेशो महेश्वरात् ॥ ४४
परमानन्दकल्लोलपारावारो बभूव हि । यथा माहात्म्यमीशस्य मनोवाचामगोचरम् ॥ ४५
तथैतद्व्रतमाहात्म्यं मनोवाचामगोचरम् । य इमं पठतेऽध्यायं शृणोति शिवसंमतम् ॥ ४६
स भोगान् विपुलान् भुक्त्वा पुत्रानुत्पाद्य चास्तिकान् । अन्ते च प्राप्य कैलासं मुक्तिं याति द्विजोत्तमाः ॥ ४७

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे त्रिंशोऽध्यायः ॥

---

॥ अथ एकत्रिंशोऽध्यायः ॥

कन्यामासे अनुष्ठेय केदार व्रतम् ।

केदारव्रतमाहात्म्यं सर्वकल्याणकारणम् । वक्ष्ये शृणुध्वमृषयस्सावधानेन संयुताः ॥ १
मासे भाद्रपदे शुक्लपक्षेऽष्टम्यां व्रतं त्विदम् । आरभ्य विधिना विप्रा एकविंशद्दिनावधि ॥ २
अनुष्ठेयमुतै (मृते) तस्मिंस्तत्समाप्ति दिनेऽपि च । अनुष्ठाय विधानेन भुञ्जीयान्नियमान्वितः ॥ ३
आचरेद्य इमं मर्त्यस्सर्वाभीष्ट फलप्रदम् । स भुक्त्वा विपुलान् भोगानन्ते मोक्षं च गच्छति ॥ ४
व्रतमेतदनुष्ठाय पुरा गौरी महीसुराः । अर्धं प्रापवती शंभोश्शरीरस्यामितौजसः ॥ ५
विष्णुरेतदनुष्ठाय वैकुण्ठस्याधिकारिताम् । प्रापाक्षयांस्तथा ब्रह्मा हंसवाहनतामयात् ॥ ६
अपि शम्भून् पुरा दैत्यानष्टदिक्पालका द्विजाः । अनुष्ठाय व्रतमिदमसुरस्य प्रसादतः ॥ ७
कश्यपस्सत विप्रेन्द्रा व्रतमत्यन्तशोभनम् । चरित्वा ब्रह्मणश्शापान्मोक्षमापुस्तदैव ते ॥ ८
पुरा भाग्यवती काचित् तथा पुण्यवती परा । अनुष्ठाय व्रतमिदमैश्वर्यं प्रापतुर्द्विजाः ॥ ९
विशुद्धात्मा पुरा विप्रो व्रतमेतच्छिवप्रियम् । अनुष्ठायाप्तवान् पुत्राञ्छतसंख्याननुत्तमान् ॥ १०
इदं व्रतमनुष्ठाप्य तेषामपि महात्मनाम् । भुक्त्वा भोगानसौ विप्रस्तैस्साकं निजपुत्रकैः ॥ ११
शिवलोकमवाप्यान्ते मोक्षमापातिदुर्लभम् । यद्यदस्मिन् निबध्याथ व्रतमेतच्छिवप्रियम् ॥ १२
कामयन्तः पुरा मोक्षमनुष्ठाय द्विजोत्तमाः । तस्मात्पठन्ति शृण्वन्ति येऽध्यायमिदमुत्तमम् ॥
ते भुक्त्वा भोगमतुलं मोक्षं यान्ति शिवाज्ञया ॥ १३

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे एकत्रिंशोऽध्यायः ॥

---

॥ अथ द्वात्रिंशोऽध्यायः ॥

मीनमासे अनुष्ठेय कल्याण व्रतम् ।

सूतः —

कल्याणाख्यं व्रतं पुण्यं सर्वकल्याणकारणम् । वक्ष्येऽहं वेदविद्वेद्याश्शृणुध्वं गुप्तगौरवात् ॥ १
मीनेरवौ शुक्लपक्षे नक्षत्रेचोत्तरे शुभे । प्रातरेव समुत्थाय तद्दिने नियमान्वितः ॥ २
ध्यात्वा कल्याणवपुषौ पार्वतीपरमेश्वरौ । बहिर्गत्वा जले शुद्धे स्नात्वा नियमपूर्वकम् ॥ ३
नित्यकर्म विधायाथ पूजयेत्परमेश्वरम् । आत्मार्थनायकं देवं शिवपूजापरायणः ॥ ४
शिवपूजाविहीनोऽपि नित्यकर्मविधाय सः । काञ्चनेन विनिर्माय पार्वतीपरमेश्वरौ ॥ ५
कुंभं स्थाप्य विधानेन पूरयित्वा जलैश्शुभैः । अभिषेकविधानेन चाभिषिच्य सपद्गुदम् ॥ ६
विवाहविधिना शंभोः कल्याणञ्चाम्बेशितुः । साकं जनन्या जगतां कारयेन्मतिमान् द्विजाः ॥ ७
निवेदयित्वा नैवेद्यं नानाव्यञ्जनसंयुतम् । ब्राह्मणान् वेदविदुषश्शिवभक्तान् जितेन्द्रियान् ॥ ८
सभार्यानिह सहितान् दत्वा दानैश्च तोषयेत् । भोजयेच्च ततस्तांस्तु पायसैर्भक्ष्यभोज्यकैः ॥ ९
ततश्शिवालयं गत्वा देवं देवीं प्रणम्य च । दत्वोपहारं देवाय यथाशक्ति समुद्यमम् ॥ १०
प्रदक्षिणत्रयं कृत्वा प्रणम्य मनसा शिवम् । स्वगृहं प्राप्य तरसा शिवभक्तैर्द्विजोत्तमैः ॥ ११

भुञ्ज्याद्रात्रौ शिवं ध्यात्वा परमान्नं फलान्वितम् । दर्भेषु शयनं कुर्याद्रात्रावस्यां प्रतिद्विजाः ॥ १२
पुनः प्रातः समुत्थाय कृतकृत्यादिकक्रियः । दद्याद्देवस्य देव्याश्च प्रतिमे द्वे मनोहरे ॥ १३
विप्रयोरुभयोर्भक्त्या द्विजयोः शिवभक्तयोः । भुञ्ज्यादस्मिन्दिने भक्त्या पक्वान्नतया द्विजाः ॥ १४
कुर्यादेवं व्रतमिदं यस्तु सर्वाघनाशकम् । स भोगान्विपुलान् भुक्त्वा स्वेच्छया शङ्करप्रियः ॥ १५
प्राप्यान्ते पर्वतश्रेष्ठं कैलासं शङ्करालयम् । तत्र गत्वा चिरं भोगान्मोक्षं याति शिवाज्ञया ॥ १६
व्रतमेतदनुष्ठाय पुरा विष्णुर्जनार्दनः । भार्यामवाप परमां महालक्ष्मीं द्विजोत्तमाः ॥ १७
ब्रह्मा सरस्वतीं प्राप वृषारिश्च पुलोमजाम् । अश्विनीप्रमुखास्ताराः दशशीच प्राप्तवानतः ॥ १८
सप्तविंशति संख्याका भार्यास्तेन पुरा किल । सूर्योऽपि तेजसां राशिश्च्छायां प्राप प्रियां पराम् ॥ १९
लोपामुद्रामगस्त्योऽपि चरित्वैतद्व्रतं महत् । भार्यामवाप विप्रेन्द्रा ऋषीणां प्रवरः पुरा ॥ २०
विष्णोः कुमार्यावमृतवल्ली सौन्दर्यवल्लिके (सुन्दरवल्लयाख्यके परे) । पुराव्रतमिदं पुण्यं चरित्वास्य प्रभावतः ॥
स्कन्दप्रसादं लब्धैते पुनश्च स्वेच्छया जनिम् । संप्राप्य देवसेनाख्यां वल्ल्याख्यां क्रमादिमे ॥ २२
स्कन्दमेव पतिं लब्ध्वा देवसेना गुहं परम् । रेमाते तेन पत्या प्रीत्या ते ब्राह्मणोत्तमाः ॥ २३
व्रतमेतच्चरित्वाऽन्या वेदांगस्य महामुनेः । पुत्री सुकेशी (सुकेशा) लावण्यसिन्धुः धीतन्विकेश्वरम् ॥ २४
कैलासवासिनं शंभुगणानामग्रणीं परम् । भर्तारं प्राप्य देवस्त्रीगणैरासेव्यते स्वयम् ॥ २५
सत्यपूर्णाह्वयस्यास्तां महर्षेर्तनयोत्तमे । पूर्णा पुष्कलिकाख्ये ते पुरा पुण्यमिदं व्रतम् ॥ २६
चरित्वा कन्यके पत्न्यौ महाशास्तुर्बभूवतुः । रतिं प्राप प्रियां मारो व्रतस्यास्य प्रभावतः ॥ २७
सीता च जानकी रामं पतिमासादयत्पुरा । पुरा जांबवती कृष्णं पतिमासादयद्द्विजाः ॥ २८
सोमरत्नवती श्रेष्ठं चरित्वा व्रतमद्भुतम् । प्रह्लादः प्राप्य स्त्रियो रूपाद्यशुभलक्षण संयुताः ॥ २९
षड्योऽन्ये व्रतमिदं चरित्वा सर्वपापहम् । स्वभार्याभिश्च सहिता भुक्त्वा भोगान्यथेच्छया ॥ ३०
पुत्रांश्च लब्ध्वा परमान्ते कैलासमाप्य च । मोक्षमापुर्द्विजश्रेष्ठाः पुनरावृत्तिवर्जितम् ॥ ३१
भार्यार्थी लभते भार्यां सर्वलक्षण संयुताम् । व्रतमेतदनुष्ठाय स्वल्पकालेन भूसुराः ॥ ३२
कन्या तु लभते कामतुल्यं पतिमनिन्दितम् । चरित्वा दंपती पुत्रान् लेभाते व्रतमुत्तमम् ॥ ३३
कांक्षितान्यपि सर्वाणि लभन्तेऽस्य प्रभावतः । एतद्व्रतस्य माहात्म्यं किञ्चिदुक्तं मया द्विजाः ॥ ३४
न शक्यते मया वक्तुं माहात्म्यं चास्य कृत्स्नशः । पठन्ति ये इमं पुण्यमध्यायं संशितव्रताः ॥ ३५
शृण्वन्ति तेषां महतां भवेत् सर्वत्र वाञ्छितम् । अन्ते च शिवसायुज्यं लभन्ते नात्र संशयः ॥ ३६

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे द्वात्रिंशोऽध्यायः ॥

---

॥ अथ त्रयस्त्रिंशोऽध्यायः ॥

मकरमासानुष्ठेय शूलव्रतम् ॥

शूलव्रतञ्च वक्ष्येऽहं सर्वाभीष्टफलप्रदम् । मकरस्थे रवौ दर्शे प्रातरुत्थाय बुद्धिमान् ॥ १
ध्यात्वा हृदब्जनिलये धृतशूलमुमासखम् । सर्वकल्याणनिलयं चन्द्रशेखरमीश्वरम् ॥ २
बहिर्गत्वा कृतस्नानश्शिवतीर्थे शिवं स्मरन् । समाप्य सन्ध्याकर्मापि स्वगृह्योक्तप्रकारतः ॥ ३
विधाय विग्रहं शंभोर्धृतशूलमुमासखम् । काञ्चनेनाथ रौप्येण सर्वावयव सुन्दरम् ॥ ४

अभिषेकविधानेन कृत्वाभिषवणक्रियाम् । भक्ष्यं बहुविधं कृत्वा परमान्नसमन्वितम् ॥ ५
निवेदयेन्महेशाय भक्त्या सर्वेश्वराय च । दद्यान्मध्याह्नसमये दानं शक्त्यानुसारतः ॥ ६
शिवभक्ताय विप्राय धृतरुद्राक्षमालिने । ततश्शिवालयं गत्वा प्रदक्षिणविधानतः ॥ ७
दत्वा शिवाय यत्किञ्चित् प्रणम्य परमेश्वरम् । शिवभक्तैर्द्विजैस्साकमश्नीयादेकवारतः ॥ ८
स्थित्वा रात्रावनाहारः परेद्युः प्रातरुत्थितः । विधाय नित्यकर्माणि नित्यवद्ब्राह्मणोत्तमाः ॥ ९
दद्यात् स्वगुरवे शंभोर्विग्रहं तद्द्विजोत्तमाः । भुञ्जीयाच्च ततो भक्तैस्सहैव नियमान्वितः ॥ १०
अनुष्ठेयं व्रतमिदमेवमेव द्विजोत्तमाः । व्रतमेतद्विधानेन ये चरन्ति नरोत्तमाः ॥ ११
ते जित्वा सकलाञ्छत्रून्व्याधीनपि महत्तरान् । पूर्णानि लब्ध्वाचायूंषि पुत्रान्वंशाभिवर्धकान् ॥ १२
सर्वेश्च कांक्षितं लब्ध्वा भुक्त्वा भोगानखण्डितान् । अन्ते च शिवसायुज्यं यान्ति सत्यं मयेरितम् ॥ १३
व्रतमेतदनुष्ठाय विष्णुर्दैत्याधमं पुरा । कालनेम्याह्वयं घोरं जघान किल भूसुराः ॥ १४
पुरा परशुरामोऽपि जामदग्निर्महाबलः । कार्तवीर्यार्जुनं शूरं हतवानस्य वैभवात् ॥ १५
शिरोऽप्यधिहरेः पूर्वं शशामैतत्प्रभावतः । ब्रह्मणोऽप्युग्ररूपाधिपशाशामैतत्प्रभावतः ॥ १६
सुधर्मोऽप्यस्य माहात्म्यान्मृत्युमप्यजयत् द्विजाः । चरित्वैतद् व्रतं पुण्यं मेधाव्योऽपि महीपतिः ॥ १७
सहस्रसङ्ख्यान् संप्राप्य पुत्रान् पौत्रांश्च पण्डितान् । भुक्त्वा भोगांश्च विपुलान् कैलासं प्राप भूसुराः ॥ १८
चण्डोऽप्येवं चरित्वैतल्लब्ध्वाभीष्टं चिरं द्विजाः । कैलासं प्रापतुलं शङ्करस्य वरालयम् ॥ १९
तस्मादेतद्व्रतं येऽत्र चरन्ति विधिना द्विजाः । दूरतो याति दुरितं तेषां सत्यं मयेरितम् ॥ २०
ऐश्वर्यं याति परमामीश्वरस्य प्रसादतः । व्रतस्यैतस्य माहात्म्यं वीरभद्रो महाबलः ॥ २१
भानुकम्पाय महते गणानामधिपाय च । उक्तवानिति मे प्राह व्यासस्साक्षान्महीसुराः ॥ २२
ये पठन्त्यमुमध्यायं सर्वपापैकनाशनम् । तेषां मृत्युभयं नास्ति शृण्वतामपि भूसुराः ॥ २३

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे त्रयस्त्रिंशोऽध्यायः ॥

---

॥ अथ चतुस्त्रिंशोऽध्यायः ॥

वृषभमासे अनुष्ठेय वृषभव्रतम् ॥

शृणुध्वमृषयस्सर्वे वृषभव्रतमुत्तमम् । वृषभस्थे दिवानाथे शुक्लपक्षेऽष्टमीतिथौ ॥ १
प्रातरेव समुत्थाय महादेवं वृषोपरि । समासीनं सह ध्यात्वा देव्या चिद्रूपया शुचिः ॥ २
स्नात्वा जलचरे सन्ध्यामुपास्य नियमान्वितः । निर्माय विग्रहं शंभोः काञ्चनं राजतं मुदा ॥ ३
वृषोपरिस्थितं देव्या श्रीपार्वत्या सहातुलम् । पञ्चामृतादिभिर्दिव्यैरभिषिच्य विधानतः ॥ ४
निवेदयेच्च गुडान्नं पायसादि विशेषतः । विधिना पूजयित्वैव दद्यात् द्रव्यं च शक्तितः ॥ ५
विप्राय शिवभक्ताय सदाचाररताय च । ततश्शिवालयं गत्वा दद्याद्देवाय किञ्चन ॥ ६
प्रदक्षिणनमस्कारादि विधायानन्तरं मुदा । स्वगृहं प्राप्य मतिमान् शिवभक्तैर्द्विजोत्तमैः ॥ ७
फलैस्सूपगुडैस्समं घृतेन तु । गुडान्नं पायसान्नं वा भुञ्जीयाद्भिस्सह द्विजाः ॥ ८
सायं सन्ध्यां वन्दयित्वा नित्यकर्म समाप्य च । यामावधि पुराणं च शृणुयान्निशि भूसुराः ॥ ९
शुद्धतल्पे ततो निद्रामनुभूय सुखं द्विजाः । पुनः प्रातस्समुत्थाय परेद्युर्नियमान्वितः ॥ १०

नित्यकर्मविधानाय विप्राय शङ्करस्य तम् । शिवभक्ताय विदुषे दद्याद्विप्राय भक्तित ॥ ११
[illegible] व्रतमिदं ये तु चरन्ति मनुजोत्तमा । तेषामायुर्धनं विद्यावारोग्यञ्चाऽभूतय ॥ १२
सम्भवन्तीति चित्रं किं ब्राह्मणानामधीश्वरा । विष्णु पुरा व्रतमिदं चरित्वा विधिना द्विजा ॥ १३
ऐश्वर्यमाप परममीश्वरस्य प्रसादत । पक्षिराज च गरुड वाहन लब्धवान् द्विजा ॥ १४
इन्द्रोऽपि लब्धवान्विप्रा ऐरावतमनुत्तमम् । चरित्वैतद्व्रत वह्निरजमापाथवाहनम् ॥ १५
यमोऽपि महिष प्राप महाकाय द्विजोत्तमा । तथाच निर्ऋतिर्विप्रा नरवाहनमुज्वलम् ॥ १६
यादसा पतिरव्याप मकर वाहन परम् । कृष्णसार पुरा वायुर्लब्धवानस्य वैभवात् ॥ १७
कुबेर पुष्पक दिव्य विमान प्राप भूसुरा । पुरेशानोऽपि विप्रेन्द्रा वृषभ धर्मरूपिणम् ॥ १८
सप्ताश्वमेकचक्रञ्च रथ सूर्योऽपि लब्धवान् । विमान प्राप चन्द्रोऽपि नानारत्नविचित्रितम् ॥ १९
विश्वसेनाह्वयो राजा महाराष्ट्रजनेश्वर । वसिष्ठ तपसा श्रेष्ठ प्राप्याय विनयान्वित ॥ २०
अपृच्छदद्भुत किञ्चिद्दृतीतानागतादिकम् । तयावदद्वसिष्ठोऽपि त्रिकालज्ञानिना वर ॥ २१
तदा राजातिसंतुष्ट प्रणम्यैनमृषीश्वरम् । कया वा विद्यया ब्रह्मन्नेव त्व प्रोक्तवानसि ॥ २२
वदैतत्तव दासाय नमामि त्वा जगद्गुरुम् । इति तस्य वच श्रुत्वा राजोऽसौ मुनिपुङ्गव ॥ २३
नृपमाह्व व्रत पुण्यमनुष्ठितमनुत्तमम् । तत्प्रभावात् स्फुरती मे त्रिषु कालेषु वस्तु यत् ॥ २४
व्रतस्यैतस्य माहात्म्यात्सर्वाभीष्ट भविष्यति । इति विप्रस्य वचन निशम्य [illegible] महीपति ॥ २५
श्रद्धयैव च संयुक्तस्तव्रतमेतच्चचार हि । ततोऽस्य लब्धवाञ्ज्ञान त्रिकालज्ञानमद्भुतम् ॥ २६
भुक्त्वा भोगांश्च विपुलानन्ते कैलासमाप्तवान् । चरित्वैतद्व्रत ब्रह्मा त्रिकालज्ञानमाप्तवान् ॥ २७
सनन्दनोऽपि महीदेवाश्चरित्वा व्रतमद्भुतम् । अद्यापि सिद्धयो रम्यास्तत्प्रसाद्य गतिमाप [illegible] ॥ २८
विधूतारव्यो महीपाल पुरैतद्व्रतमद्भुतम् । अनुष्ठाय शरीरेण सप्तपाताललोककान् ॥ २९
ब्रह्मविष्ण्विन्द्रपूर्वाणा लोकेष्वपि चरन् सदा । अद्भुतान्यपि सर्वाणि तत्रस्थानि समीक्ष्य [illegible] ॥ ३०
स्वपुत्रेभ्यो व्रतमेव चरित्वा बहुकालत । कार्यसिद्धिमवाप्यान्ते शिवयोगित्वमाप्तवान् ॥ ३१
एव व्रतमिदं केचिच्चरित्वा पुण्यगौरवात् । काङ्क्षितान्यपि सर्वाणि लब्ध्वान्ते मोक्षमापिरे ॥ ३२
ये पठन्त्यनुभवाय शृण्वन्ति आश्चर्यान्विता । कैलास यान्ति परम ते तु नून द्विजोत्तमा ॥ ३३
[illegible] शिवव्रतान्यदौ कथितानि मया क्रमात् । अन्यान्यपि च वक्ष्येऽद्य शृणुध्व ब्राह्मणोत्तमा ॥ ३४

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे चतुस्त्रिंशोऽध्याय ॥

---

॥ अथ पञ्चत्रिंशोऽध्याय ॥

मेषमास शुक्रवारे अनुष्ठेय गौरीव्रतम् ॥

शुभदायक वक्ष्ये दैन्यादसर्वाघहारकम् । मेषगते रवौ शुक्लपक्षे शुक्रस्य वासरे ॥ १
प्रातरेव समुत्थाय ध्यात्वा गौरीं मनोहराम् । स्नात्वा शुद्धजले शुद्धो नित्यकर्म समाप्य च ॥ २
स्वात्मान मायया गौरीरूपमुज्ज्वलकान्ति च । शुद्धोदकै पूरयित्वा कुम्भमेक मनोहरम् ॥ ३
तत्रावाह्य महादेवीमर्चयेद् गन्धपुष्पकै । निवेदयित्वा नैवेद्य पायसाद्यन्नसंभवम् ॥ ४
मही सुमङ्गलीर्वापि कन्यावापि मनोहरा । मसकृद्राप्तसर्वाङ्गा गन्धपुष्पैस्समर्च्य च ॥ ५

दद्याद्दानं यथाशक्ति सान्त्वशुद्धान्तरो द्विजाः । शिवालयमनुप्राप्य तत्र देवीं प्रियव्रतम् ॥ ६
प्रदक्षिणविधानेन नमस्कृत्वा यथाविधि । दत्वा शक्त्यनुसारेण यत्किञ्चिद्भक्तिसंयुतः ॥ ७
व्रतं समाप्य नियमान्मध्याह्ने निशि वा द्विजाः । भुञ्जीयाद्द्वान् शुद्धैर्भक्तैरपि समन्वितः ॥ ८
फलान्यपूपं वा शुद्धमन्नमश्नेदुत । एवं यस्तनुते मर्त्यः शुक्रवारव्रतं महत् ॥ ९
तस्य प्रसन्ना श्रीगौरी सर्वाभीष्टं ददेद्ध्रुवम् । चरित्वैतद्व्रतं शुक्रशुभानिप्राप्य भूसुराः ॥ १०
स्वनाश्चैतद्व्रतं भूपादिति प्राप वरं महत् । एवं दत्वा वरं तस्मै दयावन्तर्धिमीश्वरी ॥ ११
महालक्ष्मीश्चरित्वैतल्लक्ष्मीत्व प्राप्तवत्यलम् । सर्वविद्याधिपत्यं च वाणीप्रापास्य वैभवात् ॥ १२
अनुष्ठाय महीपाला केचिद्राज्यमवापिरे । विद्या लक्ष्मीं द्विजाः केचित्पुत्रांश्च प्रापुरञ्जसा ॥ १३
वैश्याः केचन शूद्राश्च व्रतमेतदुमाप्रियम् । चरित्वा प्रापुरखिलमभीष्टं ब्राह्मणोत्तमाः ॥ १४
केचिद्व्रतमिदं कृत्वा भुक्त्वा भोगानखण्डितान् । ते ते सालोक्यसामीप्यसारूप्याण्याप्य भूसुराः ॥ १५
सायुज्यं प्रापुरतुलं पुनरावृत्तिवर्जितम् । द्वितीयं व्रतमीश्वर्याः प्रवक्ष्ये सर्वपापहम् ॥ १६
मासेष्वाश्वयुजे शुक्लपक्षेष्व यम (पूर्वोक्त) वासरे । अनुष्ठेयं व्रतमिदं गौर्याः प्रीतिकरं परम् ॥ १७
तस्मिन्दिने समुत्थाय नित्यकर्म समाप्य च । पूजयित्वा महादेवीं शुक्रवारप्रकारतः ॥ १८
दद्याद्दानं च भक्तेभ्यो यथाशक्ति समुद्भवम् । देवालयमनुप्राप्य देवं देवीं प्रणम्य च ॥ १९
दत्वा धनं यथाशक्ति गृहं प्राप्य स्वकीयकम् । मुद्गं शर्करया युक्तं दद्यात्क्षुधिताः शुभम् ॥ २०
भुञ्जयात्परेद्युर्दानं शिवभक्तैस्सहामलः । एतद्व्रतमनुष्ठाय पुरेन्द्राणी मनोरमा ॥ २१
प्राणनायकतामाप सुरेशस्य महीसुराः । उपादेव्यप्यनुष्ठाय व्रतमेतदुमाप्रियम् ॥ २२
भास्करस्य प्रिया भूत्वा तच्छरीरस्थकर्कशाम् । ववाधिज्ञ धारयामास ब्राह्मणानामधीश्वराः ॥ २३
बहवोऽन्ये चरित्वैतत्सद्गतिं प्रापिरे द्विजाः । व्रतं तवस्या वक्ष्येऽहं सर्वाभीष्टफलप्रदम् ॥ २४
आरभ्य प्रथमाश्विनस्य कुम्भे स्थाप्य महेश्वरीम् । शुक्लपक्षमेवैव नित्यमभ्यर्चयेच्छिवदाम् ॥ २५
नवम्यां प्रातरुत्थाय शुचिर्भूत्वा समाहितः । स्नात्वा पुष्पजले संध्यामभिवाद्य विधानतः ॥ २६
अर्चयित्वा महादेवीं भक्तवाञ्छार्थदायिनीम् । अर्चयित्वा स्त्रियस्तुष्टाः सर्वाभरणभूषिताः ॥ २७
ताभ्यो वस्त्राणि सूक्ष्माणि नवम्यां प्रददेद्वरः । भोजयेत्पायसान्नाद्यैस्सापूपैर्व्यञ्जनान्वितैः ॥ २८
स्वयं भुक्त्वा च मतिमान् भक्तैस्साकं द्विजोत्तमाः । परेद्युः प्रातरुत्थाय दशम्यां नियमान्वितः ॥ २९
नित्यधर्मं समाप्याथ दर्शयित्वा शिवालयम् (स्वकम्) । शिवभक्तैस्सह धीमान् भुञ्जीयाद्ब्राह्मणोत्तमाः ॥ ३०
एतद्व्रतं पुरा विष्णुश्चरित्वाऽजयदात्मनः । प्रापुस्तथान्ये विजयशक्तिं वीरासिद्धामपि ॥ ३१
विद्याशक्तिं भाग्यशक्तिं बलशक्तिं परामपि । लब्ध्वेह भुक्त्वा परमान् भोगानपि सुदुर्लभान् ॥ ३२
शिवलोकमनुप्राप्य शिवसायुज्यमापिरे । तस्मादिदं व्रतं पुण्यं ये चरन्ति नरोत्तमाः ॥ ३३
सर्वांश्च शचीन्नुप्राप्य ते यान्ति परमं पदम् । ये पठन्त्यमुमध्यायं व्रतमाहात्म्यमद्भुतम् ॥
शृण्वन्ति येषु वै सर्वे सद्गतिं यान्ति भूसुराः ॥ ३४

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे पञ्चत्रिंशोऽध्यायः ॥

---

## ॥ अथ षट्त्रिंशोऽध्यायः ॥

### वृषभमासे शुक्रवारे विनायक व्रतम्, विनायक चतुर्थी व्रतञ्च ॥

विघ्नेश्वरस्य वक्ष्येऽहं व्रतं परमपावनम् । वृषभस्थे दिवानाथे शुक्लपक्षे भृगोर्दिने ॥ १
प्रातरेव समुत्थाय शुचिर्भूत्वा समाहितः । नित्यकर्म समाप्याथ सौवर्णं राजतं तु वा ॥ २
ताम्रं गणेशं संपाद्य चावाह्याऽर्चयेद् द्विजाः । पुष्पैर्नानाविधैश्शुभ्रैः पत्रैरपि मनोहरैः ॥ ३
निवेदयेच्च देवाय मोदकादीन्मनोहरान् । शिवालयमनुप्राप्य तत्र विघ्नेश्वरं शिवम् ॥ ४
कृतप्रदक्षिणो कृत्वा यथाशक्ति धनं मुदा । नमस्कृत्य विधानेन गृहं प्राप्य स्वकीयकम् ॥ ५
दत्वा द्विजेभ्यो दानानि यथाशक्ति समुद्यमम् । दद्यात्फलमपूपं वा मुद्गमन्नमुत द्विजाः ॥ ६
स्नात्वा परेद्युः कर्माणि समाप्य विधिपूर्वकम् । विघ्नेशप्रतिमां दद्याद्विजयमस्ताय धीमते ॥ ७
महतीमाश्रितं पञ्चाद्विजयमकेश्वसमती । एवमेतद्व्रतं पुण्यमनुष्ठाय पुरा ऋषिः ॥ ८
धनिरस्सर्वशास्त्रज्ञो ह्यचलमस्तनुजो ययौ । ब्रह्मा ब्रह्मत्वमापास्य प्रभावाद्ब्राह्मणोत्तमाः ॥ ९
शङ्खपद्मनिधी प्राप्य कुबेरोऽस्य वैभवात् । देवा मनुष्या ऋषयः पुरैतद्व्रतमुत्तमम् ॥ १०
अनुष्ठाय प्रिया भूत्वा विघ्नेशस्यामितौजसः । शिवलोकमनुप्राप्य मोक्षमापुर्द्विजोत्तमाः ॥ ११
विनायकचतुर्थ्याञ्च विधिना यश्चरेद्व्रतम् । विनायकप्रियकरं सर्वपापहरं परम् ॥ १२
स भुक्त्वा विपुलान् भोगान्विघ्नेशस्य प्रसादतः । विघ्नेश्वरस्य लोकञ्च प्राप्नोति न च संशयः ॥ १३
विष्णुः पूर्वमनुष्ठाय चतुर्थीव्रतमद्भुतम् । विघ्नेशस्य प्रियो भूत्वा भुक्त्वा भोगानथात्मनः ॥ १४
पुण्डरीकनिभं नेत्रं लब्ध्वा गौर्याश्च शापतः । मुक्तो विष्णुत्वमापाशु पुनश्च ब्राह्मणोत्तमाः ॥ १५
पुरा महादयो देवा व्रतस्यास्य प्रभावतः । दृष्ट्वा विघ्नेश्वरं भक्त्या अथो भुक्तिसंयुताः ॥ १६
विनायकस्तदा नृत्तं चक्रे कुतूहलं द्विजाः । शशी तदद्भुतं नृत्तं चक्रे दृष्ट्वा स्मयन् स्वयम् ॥ १७
तं शशाप गणाधीशो हसन्तं तं हिमद्युतिम् । भवत्सिन्दिने कोऽपि नेक्षेत सुदिनद्युतिम् ॥ १८
योऽपश्योकयते मर्त्यः पापीयान् भवति ध्रुवम् । तस्मिन् दिने पुरा कृष्णश्चन्द्रं वीक्ष्य महीसुराः ॥ १९
महान्तमपि शापञ्च प्राप्तवान् जनगर्हितम् । तस्मादिदं व्रतं पुण्यं सर्वपापप्रणाशनम् ॥ २०
यश्चरेत्सगणेशस्य प्रियो भोगानखण्डितान् । भुक्त्वान्ते शिवसायुज्यं याति सत्यं मयेरितम् ॥ २१
विधानेन व्रतं षष्ठ्यां विघ्नेशस्याप्यद्भुतम् । बहवस्तद्व्रतिं प्रापुश्चरित्वा तत्प्रसादतः ॥ २२
विद्युन्माली पुरा राजा व्रतं षष्ठ्यां गणेशितुः । चरित्वा व्याधिना मुक्तो वज्रदेहमवाप्य च ॥ २३
तिलोत्तमां स्त्रियं लब्ध्वा क्रीडयित्वा तया सह । पुत्रमुत्पाद्य परमान् भुक्त्वा भोगान्यथेच्छया ॥ २४
कैलासं प्राप परमं सशरीरो मनोहरम् । विघ्नेश्वरप्रियो भूत्वा मोक्षमाप द्विजोत्तमाः ॥ २५
एवं व्रतमनुष्ठाय बहवो मोक्षमापिरे । विघ्नेश्वरव्रतान्येवं कथितानि मया द्विजाः ॥ २६
ये पठन्तीममध्यायं शृण्वन्ति श्रावयन्ति वा । ते भुक्त्वा भोगमतुलं मोक्षं यान्ति द्विजोत्तमाः ॥ २७

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे षट्त्रिंशोऽध्यायः ॥

---

॥ अथ सप्तत्रिंशोऽध्यायः ॥

सकलभोगमोक्षप्रदं स्कन्दषष्ठीव्रतादि ॥

अन्यद्व्रतं प्रवक्ष्यामि शृणुध्वमस्य वै द्विजाः । तुलाराशिं गते सूर्ये पूर्वस्मिन् भृगुवासरे ॥ १
समुत्थाय शुचिर्भूत्वा प्रातरेव षडाननम् । ध्यात्वा हृत्कमलनिलये नित्यकर्म समाप्य च ॥ २
व्रतञ्चरेद्विधानेन सर्वपापहरं परम् । कृत्तिकाव्रतमन्यच्च स्कन्दषष्ठीव्रतं परम् ॥ ३
व्रतानि त्रीणि ये मर्त्याश्चरन्त्यागममार्गतः । ते भुक्त्वा विपुलान् भोगानन्ते मोक्षं गुहाज्ञया ॥ ४
ब्रह्मविष्णवादयो देवाश्चरित्वैतानि भूसुराः । अघ्नन्दैत्यान्महाघोरान्सम्प्राप्तान्पुरा ॥ ५
कर्तृत्वञ्च दिशां प्रापुर्दिक्पाला पुनरच्युतः । मुचुकुन्दो महीपालश्शत्रून्जितवान् रणे पुरा ॥ ६
गणाधिपत्यं सम्प्राप चरित्वैतानि भूसुराः । नारदप्रमुखाः पूर्वं तापसानामधीश्वराः ॥ ७
नित्यत्वं प्रापुरतुलं पुनरावृत्तिदुर्लभम् । पुत्रानापुः पुत्रकामाः विद्दुषः ब्राह्मणोत्तमाः ॥ ८
ऐश्वर्यं ज्ञानयोगाश्च मोक्षञ्चापुः पुरा परे । त्रिष्वेतेषु व्रतेष्वेकं यश्चरेत्सुसमाहितः ॥ ९
स लब्ध्वा वाञ्छितं सर्वं शिवलोकमनुत्तमम् । प्राप्य मोक्षं व्रजत्यन्ते गुहस्यैव प्रसादतः ॥ १०
त्रीणि व्रतानि यो मर्त्यश्चरतिस्कन्दसम्मतम् । माहात्म्यं तस्य को वेत्ति गुहतुल्यस्य भूसुराः ॥ ११
य इमं पठतेऽध्यायं यश्शृणोति गुहप्रियम् । स भुक्त्वा विपुलान् भोगान्मोक्षं याति महीसुराः ॥ १२

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे सप्तत्रिंशोऽध्यायः ॥

॥ अथ अष्टत्रिंशोऽध्यायः ॥

यमयातना निवृत्तिपूर्वक कैलासप्रदं भैरव वीरभद्रयो व्रतम् ॥

त्रीणि व्रतानि वक्ष्येऽहं भैरवस्य महात्मनः । मकरस्थे रवौ भानोर्वारे प्राथमिके तथा ॥ १
चैत्राश्वयुक्शुक्लपक्षयोर्भरण्योरुभयोरपि । ब्राह्मे मुहूर्ते उत्थाय भैरवं मनसा स्मरन् ॥ २
समाप्य नित्यकर्माणि सौवर्णं राजतं तु वा । ताम्रजं विग्रहं वापि भैरवस्य महात्मनः ॥ ३
निर्माय पूजयित्वैनं पुष्पैर्नानाविधैरपि । निवेदयेच्च नैवेद्यं पायसापूपसंभवम् ॥ ४
प्रदक्षिणनमस्कारान् कृत्वा स्तोत्रपुरस्सरम् । दद्याच्च शिवभक्तेभ्यो दानं शक्त्यानुसारतः ॥ ५
शिवालयमनुप्राप्य तत्र देवं त्रियम्बकम् । भैरवञ्चापि देवेशं प्रदक्षिणविधानतः ॥ ६
नमस्कृत्वा ददेद्द्रव्यं यथाशक्ति समुद्यमम् । स्वगृहं प्राप्य मध्याह्ने शिवभक्तैस्समन्वितः ॥ ७
अथवा फलमपूपं वा भजनञ्चैकवारतः । पश्चात् प्रतिमां भक्त्या दद्याद्गुरवे भैरवीम् ॥ ८
एवं चरति यो मर्त्यो भैरवस्य व्रतान्यपि । स भुक्त्वा विपुलान् भोगान् स्वेच्छया ब्राह्मणोत्तमाः ९
शिवलोकमनुप्राप्य भैरवस्य कृपावशात् । अन्ते च मोक्षं याम्सीति किमाश्चर्यं द्विजोत्तमाः ॥ १०
व्रतमेतदनुष्ठाय पुरा सूर्यो महाप्रभः । भैरवं कवचं प्राप सूर्यकोटिसमप्रभम् ॥ ११
तस्माच्चरति यो मर्त्यो व्रतान्येतानि भूसुराः । स भुक्त्वा विपुलान् भोगानन्ते मोक्षञ्च विन्दति ॥ १२
अन्यद्व्रतं प्रवक्ष्यामि वीरभद्रस्य धीमतः । भौमवारे समुत्थाय प्रातरेव द्विजश्शुचिः ॥ १३
नित्यकर्माणि सर्वाणि समाप्य विधिपूर्वकम् । रौप्येण काञ्चनेनापि वीरभद्रं महाफलम् ॥ १४
विनिर्मायाभिषेकाद्यैरर्चयित्वा यथाविधि । निवेदयेच्च नैवेद्यं नानाभक्ष्यसमन्वितम् ॥ १५

शिवभक्ताय विदुषे दद्याद्दानञ्च शक्तितः । ततश्शिवालयं गत्वा प्रणम्य परमेश्वरम् ॥ १६
वीरभद्रञ्च मतिमान् प्रदक्षिणविधानतः । दत्त्वोपहारं यत्किञ्चिद् गृहं प्राप्य स्वकं पुनः ॥ १७
भुञ्जीयाच्छिवभक्तैश्च साकं मौनं महीसुराः । परेद्युः प्रतिमां दद्याच्छिवभक्ताय भक्तिमान् ॥ १८
एवमेतद्व्रतं यस्तु वीरभद्रस्य पावनम् । आचरेत्तस्य पुण्यस्य वीर्यं तेजश्च संपदः ॥ १९
चरित्वैतद्व्रतं ब्रह्मा शंभोस्सुतत्वमाप्तवान् । कल्पवृक्षं शचीं प्राप सुरेशोऽपि महीसुराः ॥ २०
ब्राह्मणा मुनयः पूर्वं शिवज्ञानमवापिरे । भूपालाश्च पुत्रान्पुरैश्वर्यं विजयं परम् ॥ २१
वैश्याश्शूद्राश्च यद्वच्चरित्वैतद्व्रतं महत् । पुत्रान् लब्ध्वा धनान् भोगान् भुक्त्वा मोक्षमवापिरे ॥ २२
तस्मादेतद्व्रतं ये च चरन्ति मनुजोत्तमाः । ते लब्ध्वा विजयं पुत्रान् वीरभद्र प्रसादतः ॥ २३
अन्तेच शाङ्करं धाम यान्ति सत्यं मयेरितम् । अध्यायं ये पठन्त्येतं शृण्वन्ति श्रावयन्ति वा ॥
ते भुक्त्वा भोगमतुलं यान्ति शम्भोः परं पदम् ॥ २४

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे अष्टत्रिंशोऽध्यायः ॥

---

## ॥ अथ एकोनचत्वारिंशोऽध्यायः ॥

### पशुपुण्यात् शिवपुण्यं श्रेष्ठम् ॥

एतानि सर्वाणि कथितानि मया द्विजाः । इदानीं शिवपुण्यानि शृणुध्वमवधानतः ॥ १
शिवस्य देवदेवस्य लिङ्गरूपस्य भूसुराः । तथैव शिववेराणामुमायाष्षण्मुखस्य च ॥ २
विघ्नेशस्य गणादीनां भक्तानामपि भूसुराः । सालोक्यादि पदवाप्तौ भक्तानां शङ्करेच्छया ॥ ३
प्राकाराट्टालवलभिप्रासादादीन्यनेकशः । आलयानि मनोज्ञानि विदध्याल्लोभवर्जितः ॥ ४
एताश्चभिर्मैन्द्रवत्याः ताम्रस्वर्णशिलादिभिः । प्रतिष्ठाञ्च विधानेन कारयेत्सति संभवे ॥ ५
अभिषेकमलङ्कारं स्रग्भिः कुर्याद्विधानतः । वस्त्राणि गन्धनैवेद्यमेतेषां परिकल्पयेत् ॥ ६
दीपान् प्रकल्पयेत् स्थूलानुपचारांश्च कारयेत् । गाश्च संपादयेद्भक्त्या यत्नात् भवि [illegible] कल्पयेत् ॥ ७
क्षेत्राणि दद्याद्विस्तनुप्रासादारामकानि च । वापी कूपतटाकांश्च वृक्षान्देवाय कल्पयेत् ॥ ८
वाहनानि रथादीनि कल्पयेत्परमेशितुः । उत्सवान् कारयेद्विद्वान् महाविभवविस्तरम् ॥ ९
आलयादीनि जीर्णानि पुनरेव समुद्धरेत् । प्रदक्षिणनमस्कारान् कुर्यान्नित्यमतन्द्रितः ॥ १०
एवमादीनि पुण्यानि शिवस्य परमात्मनः । कुर्यान्नित्यं प्रयत्नेन श्रेयसे भूसुरोत्तमाः ॥ ११
शिवार्चकाय गुरवे दद्यान्निर्माय मन्दिरम् । गृहोपकरणं धान्यं धनं दद्याद्यथाबलम् ॥ १२
स्वगुरुं प्रणमेत् दृष्ट्वा कुर्याच्चैव प्रदक्षिणम् । एवं समस्तकार्याणि नित्यं कुर्यादतन्द्रितः ॥ १३
गृहाणि शिवभक्तेभ्यो दद्यान्निर्माय भक्तिमान् । गृहोपकरणादीनि वस्त्राण्यपि च भूसुराः ॥ १४
तथा शिवपुराणानि भस्मरुद्राक्षकान्यपि । शिवलिङ्गानि पुण्यानि तथैवाभरणान्यपि ॥ १५
अन्नञ्च भक्तिमान्दद्याद्भक्तेभ्यो भूसुरोत्तमाः । पुरतो वीक्ष्य भक्तांश्च दृष्ट्वोत्तिष्ठेत भक्तिमान् ॥ १६
नमस्कुर्याच्च मतिमान् संभाष्य बहुमानतः । एवमादीनि कार्याणि शिवभक्तस्य निर्वहेत् ॥ १७
विदध्याच्च शिवाचार्यभक्तानां भक्तिमुज्ज्वलाम् । यत्तेषामपि कार्यस्य न विघ्नं मनसा स्मरेत् ॥ १८
वाचा च मनसा चैव शरीरेण धनेन वा । कुर्यात्साह्यमनिशं भक्तेभ्यः परया मुदा ॥ १९

शिवाय गुरवे चैव शिवपुण्यरताय च । एतानि शिवपुण्यानि स्मृतानि मुनिसत्तमैः ॥ २०
एतानि शिवपुण्यानि ये कुर्वन्ति नरोत्तमाः । ते भुक्त्वा विपुलान् भोगान् पुण्यात्मानो महीतले ॥ २१
पुत्रपौत्रसमृद्धास्ते भुक्त्वा भोगानखण्डितान् । काञ्चनेन विमानेन शिवलोकमवाप्यते ॥ २२
कल्पकोटिसहस्राणि मोदन्ते शिवसंमताः । अन्ते च शिवसायुज्यं प्राप्नुवन्ति न संशयः ॥ २३
इत्थं निशम्य वचनं सूतस्य मुनिसत्तमाः । अपृच्छन् संशयाविष्टा भक्तानां लक्षणं मुदा ॥ २४
शिवस्य लक्षणं पूर्वं गुरोरपि च लक्षणम् । इति तेषां वचः श्रुत्वा सूतः पौराणिकोत्तमः ॥ २५
प्रोवाच लक्षणं भूयो भक्तानां परमेशितुः । शिवभक्ता महात्मानस्सन्ति देवेषु केचन ॥ २६
दैत्येषु यातुधानेषु यक्षगन्धर्वभोगिषु । मुनीश्वरेषु मर्त्येषु ब्राह्मणेषु नृपेष्वपि ॥ २७
ऊरुजेष्वपि शूद्रेषु सङ्करेष्वपि सर्वशः । वर्णाश्रमव्यवस्थाच नैषां सन्ति मुनीश्वराः ॥ २८
केवलं शिवभक्तास्ते सर्वे माहेश्वराः स्मृताः । भक्तिवर्णाश्रमाः प्रोक्तास्सर्ववेदेषु संमताः ॥ २९
तेषां बाह्यानि चिह्नानि दश सन्ति मुनीश्वराः । तथ्यान्तराणि चोक्तानि दश सन्ति महात्मनः ॥ ३०
प्रथमं भस्मरुद्राक्षधारणं समुदीरितम् । द्वितीयं गुरुसेवाच शिवस्तोत्रं तृतीयकम् ॥ ३१
नामोच्चारणमीशस्य चतुर्थं परिपठ्यते । पञ्चमं देवदेवस्य पूजनं ब्राह्मणोत्तमाः ॥ ३२
शिवालयस्य पुण्यस्य दर्शनं षष्ठमीरितम् । तथा शिवपुराणानां श्रवणं सप्तमं द्विजाः ॥ ३३
नमस्कारं तु भक्तानामष्टमं कथितं खलु । नवमं शिवभक्तानां गृहे भोजनमीरितम् ॥ ३४
दानञ्च दशमं ज्ञेयं शिवभक्ते गुरावपि । एवं बाह्यानि चिह्नानि कथितानि दश द्विजाः ॥ ३५
आन्तराण्यपि चिह्नानि मनसः प्रथमो जपः । पूजा च मानसी ज्ञेया द्वितीया परमेशितुः ॥ ३६
साक्षात्कारस्तृतीयस्तु ब्रह्मणो ब्राह्मणोत्तमाः । इमानि त्रीणि चोक्तानि पुराविद्भिर्मुनीश्वरैः ॥ ३७
आन्तराण्यपि बाह्यानि येषां सन्ति यदा द्विजाः । तदा भावानि चिह्नानि संभवन्ति महात्मनाम् ॥ ३८
कण्ठे विकारः प्रथमो गद्गदाख्यश्शरीरजः । जिह्वास्पन्दो द्वितीयस्तु स्फुरणं चोष्ठयोरपि ॥ ३९
कंपनञ्च शरीरस्य चतुर्थं भक्तिलक्षणम् । रोमाञ्चः पञ्चमो ज्ञेयष्षष्ठः स्वेदोऽपि कीर्तितः ॥ ४०
स्खलनं सप्तमं ज्ञेयमष्टमं बाष्पनिर्गमः । रोदनं नवमं चिह्नं दशमं पादवन्दनम् ॥ ४१
एतानि दश चिह्नानि भावाभ्युक्तानि शूलिना । त्रिविधान्यपि चिह्नानि येषां सन्ति महात्मनाम् ॥ ४२
ते भक्तास्साक्षाद्रुद्रा ज्ञेयास्सर्वलोकैकपावनाः । अथवा शिवभक्ता ये भस्मरुद्राक्षधारिणः ॥ ४३
तेषु पूर्वोक्तचिह्नानि न ज्ञायन्ते यदा तदा । तान् दृष्ट्वा प्रणमेद्भक्त्या शिवभक्तान् शिवप्रियः ॥ ४४
ये वै शिवं गुरुं भक्तान् प्रणमन्ति स्तुवन्त्यपि । कांक्षितान्यपि सर्वाणि लभन्ते ते परया मुदा ॥ ४५
भुक्त्वा भोगान् सुविपुलान् पुत्रैः पौत्रैस्समन्वितः । अरोगा दृढगात्राश्च स्थित्वात्र बहुकालतः ॥ ४६
अन्ते विमानमारुह्य नानारत्नविचित्रितम् । सौरलोकस्थितैर्देवैश्चन्द्रलोकस्थितैरपि ॥ ४७
तथान्यैर्देवलोकस्थैर्दिक्पालैर्जगदीश्वरैः । ब्रह्मणा विष्णुना चापि तथैव ऋषिसत्तमैः ॥ ४८
एतैरन्यैश्च मङ्गलैरप्सरोयायिभिर्मुदा । देवदुन्दुभिनिर्घोषैः पुष्पवर्षैरितस्ततः ॥ ४९
नृत्यद्भिरप्सरोवृन्दैर्गायद्भिः किंनरैर्वृतः । दिव्यं शरीरं संप्राप्य शिवलोकं शिवप्रियम् ॥ ५०
गत्वाऽत्र सन्निधौ शंभोः स्थित्वा प्राप्य सरूपताम् । अन्तेच शिवसायुज्यं लभन्ते ब्राह्मणोत्तमाः ॥ ५१
तस्माच्च शिवपुण्यानां माहात्म्यं वर्णितुं मया । शक्यं यथा वै माहात्म्यं शङ्करस्य महात्मनः ॥ ५२
एवमेव पुरा देवी शिवपुण्यमनुत्तमम् । श्रुत्वा महेश्वराद्भक्त्या श्रीस्या परमयायुता ॥ ५३
सप्ताश्चर्येण संयुक्ता सहसोत्थाय चासनात् । प्रदक्षिणत्रयं कृत्वा प्रणम्य च महेश्वरम् ॥ ५४

भवत्रीरस्तुसिता वाक्यं प्रसन्नं वीक्ष्य शङ्करम् । अनेन शिवपुण्येन प्राणिनः परमेश्वर ॥ ४५
विदित्वा त्वां गतिं यान्तु तव सायुज्य रूपिणीम् । इत्युक्तशिवया देवः करुणारूपया पुरा ॥ ४६
ज्ञातुं न सुलभं लोकैमेव पुण्यमनुत्तमम् । पशुपुण्यानि सर्वाणि कृत्वा शुद्धान्तरात्मभिः ॥ ४७
एकोऽहं शिवपुण्यानि ज्ञातुं शक्यानि लेशतः । अन्येषां केवलानान्तु शिवपुण्यं कुतो भवेत् ॥ ४८
तस्मात्सर्वप्रयत्नेन पशुपुण्यमनेकशः । चरित्वा शिवपुण्येषु मनो भवति नान्यथा ॥ ४९
इत्युक्तं देवदेवेन देव्यै पूर्वं द्विजोत्तमाः । अथात्र वक्ष्ये युष्माकं कथां पुण्यां मनोरमाम् ॥ ५०

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे एकोनचत्वारिंशोऽध्यायः ॥

---

॥ अथ चत्वारिंशोऽध्यायः ॥

विश्वामित्र वसिष्ठादि मुनिशापात् शिवपुण्येन मोक्षणम् ॥

पुनश्च शिवपुण्यस्य माहात्म्यं वर्णयामि वः । शृण्वन्तु सावधानेन ब्राह्मणानामधीश्वराः ॥ १
अस्ति कश्चिन्महीपालः कोसलानामधीश्वरः । अथाद्दयश्चतस्रोऽस्य समजायन्त कन्यकाः ॥ २
रूपलावण्यसंपन्नास्सुकुमाराङ्गपल्लवाः । कल्याणमण्डपश्रेष्ठे तासां स मतिमान्नृपः ॥ ३
आनयामास तनयाप्राज्ञामति मनोहरान् । तस्युस्ते राजतनयास्समागत्यात्र मण्डपे ॥ ४
ततः प्रतस्थिरे ताश्च कन्यास्तान्राजपुत्रकान् । समुद्वीक्ष्यैवपुष्पः लेपतस्य अङ्कुः करालिमाः ॥ ५
प्रथमा निषधाधीशं महेन्द्रं पतिमाप हि । सानन्दं कंधुदेशेशं द्वितीया बालमत्पतिम् ॥ ६
पांचोजाधीशमपरं सुमालिं प्राप नायकम् । कोङ्कणेशं चतुर्थी च विशालाक्षमगात्पतिम् ॥ ७
एवमापुः पतीनेता बालास्स्वकन्ये विधाय च । कल्याणं कारयामास नानाविभव विस्तरम् ॥ ८
राजाऽसौ परया प्रीत्या बन्धुसंमानतत्परः । तेषां वराणां भूरीणि ददौ द्रव्याणि पार्थिवः ॥ ९
भूषणानि च वस्त्राणि कटकानि तथैव च । पुत्रीणामपि दत्त्वैवं बहुमानेन पार्थिवः ॥ १०
चतुरङ्गबलं तेषां परिकल्प्य सुबुद्धिमान् । कन्यकाभिश्च संयोज्य स्वदेशगमनायतान् ॥ ११
प्रेषयामास पुण्यात्मा प्रीत्या परमया सह । ततः प्रतस्थिरे राजकुमारास्ते सुसंयुताः ॥ १२
पथिः पुराद्विनिर्गत्य स्वदेशगमनाय ते । संभूय तस्थिरेऽन्योन्यं वार्तां कृत्वा महीसुराः ॥ १३
तदानीमागतस्तत्र विश्वामित्रो महानृषिः । आजुहाव महीपालसुतानेतान् स्वनामतः ॥ १४
तेतु वार्तावैर्यान्यासक्ते नान्यमानसाः । अश्रुत्वा वचनं तस्युस्तापसेशस्य भूसुराः ॥ १५
ततः कोपेन महता विश्वामित्रो महानृषिः । मुक्त्वा राजकुमारांस्तांश्चतस्रो राजकन्यकाः ॥ १६
शशाप तान् भटान् सर्वान् द्रव्याण्यपि वराण्यपि । भवन्तु भस्मसात्सद्य इति राज्ञां तपोनिधिः ॥ १७
ततः क्षणेन सर्वाणि भस्मभावमवापिरे । कुमारास्ताश्च तत्पत्न्यस्सर्वाश्च भयकंपिताः ॥ १८
अतस्तान् तापसश्रेष्ठस्समीक्ष्याह वचस्तदा । नालोकयत मां यूयं न कृतं कर्णयोर्वचः ॥ १९
तस्मच्छ्रुत घोरेऽस्मिन्नघभावं वने गताः । बाधिर्यं भवतामद्य भवतात्शापिनामिदं ॥ २०
ग्रामे पुरे वा युष्माकं न निवासो भवत्वलम् । भार्याभिस्सह संयोगो नैवास्तु नृपपुत्रकाः ॥ २१
निपतिष्यन्ति मूर्धानो भविष्यन्ति यदा तदा । शापित्वैवमृषिर्वगात् स्वाश्रमाय मुनीश्वराः ॥ २२
तथैव तच्छापवशात्ते सर्वे राजपुत्रकाः । चेरुरन्याश्च वधिरा वने तस्मिन् सुदुःखिताः ॥ २३

स्त्रीभिः प्रदर्शिता मार्गं कन्दमूलफलाशिनः । एवमेतेषु भूपेषु विचरत्सु वनेष्वथ ॥ २४
अगस्त्यस्तपतां वर्यस्तदानीमाययाविह । तं दृष्ट्वा तपतां श्रेष्ठं तास्त्रियो भर्तृभिस्सह ॥ २५
प्रणम्य भृशदुःखार्ताः स्ववृत्तान्तं व्यजिज्ञपन् । इतः परं कदाऽस्माकं शापान्मोक्षो भविष्यति ॥ २६
केनोपायेन तथ्यं त्वं वद कारुण्यवारिधे । शरणं त्वां प्रपन्नाःस्मो रक्षास्मांस्तापसेश्वर ॥ २७
इत्थं निशम्य वचनं तासां तेषां घटोद्भवः । कृपया केवलं प्राह तदुपायमृषीश्वरः ॥ २८
शिवपुण्यं यदि कृतं भवद्भिः सर्वपापहम् । शापमोक्षो भवेन्नूनमैश्वर्यं च भविष्यति ॥ २९
राज्यञ्च स्ववशे याति नात्र सन्देहकारणम् । अन्ते च शिवसायुज्यं भविष्यति यथेच्छया ॥ ३०
शिवपुण्यं विना नैव सद्गतिर्देहिनामिह । अत्रेतिहासं युष्माकं शृण्वतां कथयाम्यहम् ॥ ३१
कीचकाख्ये पुरे पूर्वं साधारणमहीपतिः । भार्ययाऽन्तःपुरे रम्ये तस्थौ क्रीडारतोऽनिशम् ॥ ३२
तदा वसिष्ठस्तपतां वरिष्ठोऽस्य गृहाङ्गणे । समागत्यावसत्तत्र घटिकाः काश्चिदात्मवान् ॥ ३३
विनिर्गत्य ततो राजा भार्यया सह तापसम् । प्रणम्य प्रश्रयानम्रस्तस्थौ बद्धाञ्जलिः पुरः ॥ ३४
तदा कोपेन तं प्रेक्ष्य राजानं प्राह तापसः । मयाऽऽगत्यात्र घटिका नीता द्वित्रिचतस्त्रकाः ॥ ३५
इयन्तं कालमन्वीक्ष्य गृहद्वारि स्थितोऽस्म्यहम् । न निर्गतोऽसि यस्मात्त्वं दर्पान्मूढ महीपते ॥ ३६
तद्वने चरता तेऽद्य भूयाद्भार्यासमस्य च । वसन्ति येऽत्र नगरे जनास्ते मृगपक्षिणः ॥ ३७
भवन्तु वचनं चैतद्दत्तं भूयाद्भयङ्करम् । शपित्वैवमृषिवरः स्वाश्रमायाशु निर्ययौ ॥ ३८
तथैव सर्वं सञ्जातं वसिष्ठस्य तपोबलात् । चचार व्याघ्ररूपेण वनेऽस्मिन् भार्यया नृपः ॥ ३९
तदानीमागतस्तत्र तृणबिन्दुर्महामुनिः । वृत्तान्तं सर्वमावेद्य पप्रच्छ स्वागतं नृपः ॥ ४०
सोऽपि कृपयावेतौ समुद्वीक्ष्य ऋषीश्वरः । शिवपुण्यं विचार्याशु सर्वदुःखविमोचकम् ॥ ४१
वनेऽस्मिन् विद्यते किं वा शिवस्थानं शिवप्रियम् । इति पप्रच्छ तं व्याघ्रं तापसानामधीश्वरः ॥ ४२
सोऽब्रवीदविदूरेण ब्रह्मेश्वरमनुत्तमम् । तच्छ्रुत्वा तपतां श्रेष्ठः पुनः प्राह समीक्ष्य तौ ॥ ४३
युवामत्र शिवस्थाने पूर्णं वर्षं कदापि । दूरीकृत्य सदा शंभोः कुरुतञ्च प्रदक्षिणम् ॥ ४४
प्रणम्य सांबमीशानं वसतञ्च शिवालये । स एव भगवानीशो युवां रक्षतु मा चिरम् ॥ ४५
इत्युक्त्वा स्वाश्रमावासं जगाम ऋषिसत्तमः । तस्य तद्वचनं श्रुत्वा तथैवैतौ चचेरतुः ॥ ४६
व्यतीयुरेतयोस्तत्र दिनान्येकादशासमाः । ततो वनमिदं भूयो नगरं समजायत ॥ ४७
जनाश्च मृगपक्षित्वं मुक्त्वा तत्वमवापिरे । भार्यया सह राजत्वं प्राप्तवान् सोऽपि भूपतिः ॥ ४८
राज्यञ्च चक्रे पत्न्या प्रीत्या पूर्ववदात्मवान् । शिवपुण्यप्रभावेन पूर्वरूपमिहागतम् ॥ ४९
एवं विचार्य चक्रेऽयं शिवपुण्यं सुविस्तरम् । देहान्ते सद्गतिं प्राप भार्यया सह भूमिपः ॥ ५०
तस्माद्यूयञ्च पुण्यानि शङ्करस्य महात्मनः । कृत्वा राज्यं घनं रूप भजतात्र शिवाज्ञया ॥ ५१
इति ब्रुवन्तं तं भूयः प्रणम्यैते सभार्यकाः । कथं कार्यं परं पुण्यं वदास्माकमृषीश्वर ॥ ५२
इत्युक्त्वा प्रणतिं चक्रुर्दण्डवत्तस्य पादयोः । तदानीमाययावत्र शिवविप्रः शिवप्रियः ॥ ५३
शंभुमप्यमृतेशानमपमाराधवत्सलम् । तं दृष्ट्वा तपतां श्रेष्ठः कुम्भभूराह सद्गुरुम् ॥ ५४
त्वं हि लोकगुरुः पुण्यगिरिसन्तानजो महान् । शिष्यानङ्गीकुरु क्षिप्रमेतानपि सुदुःखितान् ॥ ५५
भवताराधितं शंभुममृतेशमघौघहम् । सेवयित्वाऽस्य सविधे परिचर्यां च कारय ॥ ५६
यथा भवेयुरेते वै सुखिनो दुःखसागरात् । तथात्वं कृपया विद्वन् कुरु लोकगुरुर्यतः ॥ ५७
इत्युक्त्वा योजयित्वैन कैलासाय ययौ स्वयम् । ततोऽसौ तापसश्रेष्ठं प्रणम्यैते शिवद्विजम् ॥ ५८

[illegible] स कृपया विद्वन् प्रार्थयामासुरास्तिका । निशम्य वाक्यमेतेषां सोऽयं दुःखातुरोभृशम् ॥ ५९
मास्तु दुःख महाभागा युष्माकं शिवपुरीश्वरे । भक्तरक्षापरे नित्यं भक्तिगम्ये सनातने ॥ ६०
मुद्गलाख्य पुरा विप्र काश्यपस्य महात्मनः । शिष्योऽयं तस्य निकटे पठित्वा शास्त्रमास्थितः ॥ ६१
पठत्येकदिने तस्मिंस्तस्योपर्यपतज्जलम् । तदा शशाप तं कोपात् काश्यपस्तपसां वरः ॥ ६२
यस्मादुपरि मे भ्रान्त पपातास्य जलं तव । तेन त्वमाशु महिषो भूयाद्वर्षेण संयुतः ॥ ६३
तस्य तच्छापमात्रेण बभूव महिषाकृतिः । चचार नगराद्बाह्ये भक्षयंस्तृणसन्ततिम् ॥ ६४
तत्र शक्रेश्वरेशस्य प्राकारनिकटं गतः । परितस्तृणजालानि चचार त्रि प्रकारतः ॥ ६५
तृणं प्राकारभित्तौ यत्तत्सर्वेञ्च चचार सः । ध्वजदण्डं समागत्य सन्निधिञ्चावलोकयत् ॥ ६६
तदैव शापान्निर्मुक्त [illegible] रूपं प्राप सुन्दरम् । देवं प्रदक्षिणीकृत्य नमश्चक्रे पुनः पुनः ॥ ६७
तस्मै मनुजास्तस्य समीपयात्रयर्षमार्पिरे । शिवपुण्यस्य माहात्म्यं वर्णयन्तिस्म सन्ततम् ॥ ६८
यद्बलेन महिषः सञ्चरंस्तृणसन्ततिम् । दारुणं माहिषं रूपं मुक्त्वा स्वरूपमास्थितः ॥ ६९
तस्मात्पुण्यस्य माहात्म्यं कोवेत्ति परमेशितुः । इत्युक्त्वाऽन्योन्यमनिशं तस्थिरे मनुजोत्तमाः ॥ ७०
तस्माद्वयञ्च पुण्यानि करवाम महेशितुः । कानि पुण्यानि भगवन्ननुप्रेयानि शूलिनः ॥ ७१
तद्वदाश्र दयालिभ्यो पापिनां नो मुनीश्वर । इति तेषां वचः श्रुत्वा प्राहतान्कश्यपेश्वर ॥ ७२
चायार पुष्पायूपममृतेशं परात्परम् । सदा प्रदक्षिणीकृत्य भीणयध्वमतन्द्रिता ॥ ७३
एकाम्र शम्भुलिङ्गं समार्जय विलेपय । अभिषेकजलवान्या शम्भोरानयत प्रभो ॥ ७४
इतरान्यपुष्पाणि समानयत शूलिनः । कन्दमूलफलञ्चान्या नैवेद्यायामयन्त्विह ॥ ७५
इत्युक्त्वा प्रेरयित्वा तानानीयैतान् द्विजोत्तमाः । तस्मिन्दिने महादेवं पूजयामास भक्तितः ॥ ७६
परेद्युस्संसाधन तेषां समानीय ददौ स्वयम् । पूजयामास च शिवं नित्यं तेस्तैर्दिनानुदिन ॥ ७७
भक्त्यैते तस्थिरे वृक्षे निवेद्य फलमूलकम् । दिनान्येव पताभ्येयामेकविंशतिसङ्ख्यया ॥ ७८
ततो द्वाविंशतिदिने नेत्राण्येषां बभूविरे । श्रोत्राणि समजायन्त पूर्ववच्छूद्ररूपया ॥ ७९
माधुर्येण तु संयुक्ता प्रणर्येते महेश्वरम् । पुनः प्रदक्षिणञ्चक्रुर्दिवसान्तरे भक्तितः ॥ ८०
ततो भूतानि सर्वाणि चतुरङ्गबलान्यपि । स्वयभुः पदार्थांश्च यथापूर्वं शिवाज्ञया ॥ ८१
शिवभक्तयः पुरुषा पूर्ववद्वांयन ययुः । तदा शिवद्विज सर्वे ह्येतेर्मुभक्तिसंयुता ॥ ८२
कृपया तव विप्रेन्द्र मोक्ष प्राप्ता सनातनः । श्रुत्वैवमुच्चार स प्रोक्तवान् धीश्च तानयम् ॥ ८३
शिवपुण्य कृतं यस्मात्युष्माभिर्बलकिञ्चिदे । तत्प्रभावादिव बभु श्रोत्राण्याननं नचाय ॥ ८४
युष्मदीयाः पदार्थाश्च तत पवागता ध्रुवम् । ततो महर्षिभाग्याद्य मोक्षो नात्र विचारणा ॥ ८५
इतो यूयं स्वकं राज्यं कुरुत स्वच्छन्दया । शिवपुण्यं सदा कृत्वा निष्ठाभावप्रमादतः ॥ ८६
इति तस्य वचः श्रुत्वा गुरोरेते नृपात्मजा । प्रणम्य [illegible] गुरुं पश्चादमृतेशं परात्परम् ॥ ८७
भीशयामासुरेते तमभिषेकविधानतः । चतुरस्यच नैवेद्य भक्ष्यभोज्यादिभिर्भृशम् ॥ ८८
भित्वा यत्नं परितो महाद्वारायस्य तम् । गुरुवाक्या पुरश्चैक लाकधर्मीति विश्रुतम् ॥ ८९
निर्माय मतिमन्तस्ते मण्टपं गोपुरं तथा । स्वपुरसंयमयत्थ करयामसुरक्षता ॥ ९०
तेन सद्गुरवे दत्वा धनं भूरि नृपात्मजाः । राज्यं तदाज्ञया स्वीयं प्राप्यैतं पयामुदा ॥ ९१
निष्कण्टकं महाकल्पाम्बुद्दामो कृपायलात् । भूरीणि शिवपुण्यानि चक्रुस्तत्र स्वराज्यतः ॥ ९२
पुत्रानुत्पाद्य कालेन विनीतान् शास्त्रकोविदान् । भटवाच प्रभावन सोमिनन्दश्च तस्थिरे ॥ ९३

कदाचिद्राजतनयास्तस्थिरे कुत्रचिद्गृहे । तदानीमागतस्तत्र दुर्वासास्तपतां वरः ॥ ९४
तमागतममी दृष्ट्वा प्रणेमुर्भक्तिसंयुताः । केन पापेन भगवन्नस्माकं तपतां वर ॥ ९५
अन्धत्वं बधिरत्वञ्च संप्राप्तं तद्वदात्र नः । सर्वज्ञस्त्वं यतस्तस्माद्वक्तुमर्हसि तापस ॥ ९६
इति तेषां वचः श्रुत्वा क्षणं ध्यात्वा ऋषीश्वरः । प्राह तान्विनयानम्रान्वीक्ष्य शङ्करमेकिमान् ॥ ९७
पुरं यवनदेशेऽस्ति महदादित्यसंज्ञकम् । विप्रावसाह्वयः कश्चिद्वणिग्भूरिधनो महान् ॥ ९८
चत्वारस्तनयास्तस्य भवन्तस्संबभूविरे । सव्यापारपरा नित्यमासन्विध्युक्तमार्गतः ॥ ९९
तस्मिन् पुरे शिवस्थानमादित्येश्वरसंज्ञकम् । अस्ति तत्र पुमान् कश्चिच्छिवालयविनिर्मकः ॥ १००
स तु युष्मान् समभ्येत्य ययाचे द्रव्यमात्मवान् । शङ्करालयनिर्माणं कर्तुमभ्युद्यतः स्वयम् ॥ १०१
दास्याम इति तत्तस्मा उक्तवन्तस्तदा मुदा । श्वः श्वः श्व इति तं भक्तं व्यवर्तयतानिशम् ॥ १०२
तमपश्यथागतं भक्तं युष्मद्व्यापारगर्वतः । आहूता अपि तद्वाक्यं न वै शृणुथ गर्वतः ॥ १०३
युष्मानित्यनुसृत्यासौ स्थितोऽयं तस्ये शङ्करमंदिरे । ततो नावं समारुह्य यातद्वीपान्तरं प्रति ॥ १०४
यूयं तत्र मृतिं प्राप्ताः कालपाशेन यन्त्रिताः । यस्माद्दास्याम इत्युक्तं शिवपुण्याय वै धनम् ॥ १०५
तावता जगदीशस्य युष्माकं राजसूनवः । न दत्तं यद्धनं तस्मै न दृष्टो न श्रुतं वचः ॥ १०६
तेन युष्मत्कृतं सर्वं गतमान्ध्यञ्च सङ्गतम् । बाधिर्यं चागतं शंभोः प्रीणनेन पुनर्नृपाः ॥ १०७
संप्रबुध्य नेत्राणि श्रोत्राण्यपि यथा पुरा । राज्यञ्च सकलं युष्मद्वशे पूर्ववदेवहि ॥ १०८
इति तस्य वचः श्रुत्वा तापसस्य नृपात्मजाः । तथेति ते विनिश्चित्य दुर्वाससममुं मुनिम् ॥ १०९
प्रणम्य परया भक्त्या प्रेषयित्वाऽऽश्रमायतम् । पालयन्तो निजं देशं नीतिमार्गेण ते नृपाः ॥ ११०
शिवपुण्यानि भूरीणि तत्र तत्र विधाय च । चिरकालममी भोगान् भुक्त्वा निष्कण्टकं मुदा ॥
अन्ते विमानमारुह्य दिव्यं कैलासमापिरे ॥ १११

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे चत्वारिंशोऽध्यायः ॥

---

## ॥ अथ एकचत्वारिंशोऽध्यायः ॥

कुमारिकायाः अपि [illegible] शिवपुण्येन कैलासप्राप्तिः ॥

शंभुदेशे पुरं किञ्चिन्मायाख्यमतिसुन्दरम् । सद्बुद्धिरिति विख्यातस्तत्रास्ति पृथिवीपतिः ॥ १
तस्याऽऽसंस्तनयाश्चाष्टौ भीमाद्याः प्रथितौजसः । समभ्रापत कन्यैका सर्वलक्षणसंयुता ॥ २
विभज्य नवधा देशं पुत्रेभ्यो दुहितुर्ददौ । स्वयं प्राप्य वनं तत्र तपस्तप्त्वा सुदुश्चरम् ॥ ३
मोक्षमाप महादेवप्रसादान्मुनिपुङ्गवाः । कुमारास्तेऽच कन्या च राज्यञ्चक्रुररिन्दमाः ॥ ४
सा कुमारी विशेषेण सर्वधर्मरता सदा । तां द्रष्टुं धर्मनिरतां मुनयस्तत्र सुव्रताः ॥ ५
आजग्मुरष्टकाः वेश्म तस्याः परमशोभनम् । तत्र दृष्ट्वा कुमारीं तां सदा धर्मरतां पराम् ॥ ६
सन्तोष्य वाग्भिरर्घ्याभिः पृच्छन् कुशलं द्विजाः । कुशलं तव सत्कार्याच्छिवपुण्यं च सूयते ॥ ७
क्रियतेऽहर्निशं भद्रे सर्वे धर्मास्त्वया भृशम् । न तुल्या तव लोकेऽस्मिन् स्त्रीषु सर्वासु सर्वथा ॥ ८
इति तेषां वचः श्रुत्वा कुमारी प्राह तानिदम् । नैव जानामि पुण्यानि तापसानामधीश्वराः ॥ ९

पतिपुण्य चरमिति युष्माभिस्समुदीरितम् । कस्त्वैव पतिपुण्य के सद्गतिं प्रापुरुत्तमा ॥ १०
तच्छ्रोतु महती वाञ्छा वर्तते मम तापसा । इति तस्या वच श्रुत्वा तेषा मध्ये महातपा ॥ ११
गौतम प्राह पुण्यात्मा कथा परमपावनाम् । पुर पाञ्चालदेशेऽस्ति शोभनाख्य मनोहरम् ॥ १२
माधवाख्यो द्विजस्तत्र महानासीन्महीसुरा । तस्यासीत्तनया नाम्ना सुन्दरीति मनोरमा ॥ १३
सैषा करिपुरस्थस्य पुष्करस्य द्विजन्मन । भार्या भूत्वा मदैतन तस्थौ मन्तोपसंयुता ॥ १४
सैषा कर्मवशाद्धारी स्ववेश्मासन्नवेश्मनि । ब्राह्मण काञ्चनामासमन्वमभिचारिणी ॥ १५
तदेतद् ज्ञातवास्तस्या पति कालेन भूसुरा । वध्वैना ताडयामास कचकेनैव निष्ठुरम् ॥ १६
सा पतिं मारयामास कालेन विषदानत । सा पुनर्विधवा भूत्वा जारासक्तातिरागिणी ॥ १७
सञ्जातेष्वपि पुत्रेषु मारयामास तानपि । न पपातौपधेनापि गर्भस्रवेको यदा तदा ॥ १८
ज्ञात्वैना बान्धवास्सर्वे तत्यजुर्दुश्चारिणीम् । तैस्त्यक्ता सा पुन प्राप देशाद्देशान्तर प्रिया ॥ १९
एकवासुत तनय दशमेमासि सा पुन । मारयित्वा शिशु त च निर्घृणा विषदानत ॥ २०
पुनश्च जारासक्ता सा चिक्रीड व्यभिचारिणी । तांस्तांश्च विषदानेन मारयित्वाऽऽप तद्धनम् ॥ २१
पुनश्च धनिन कश्चिद् द्विज प्राप्त यदृच्छया । रराम बहुधनालुब्धा तस्मा अपि ददौ विषम् ॥ २२
तस्मिन् व्यर्थं विष सर्वं समजायत वै यदा । एकदा सा पुनर्विप्र तमाहूय वनान्तरे ॥ २३
क्रीडयित्वा च त सुप्त पाषाणेन जघान हि । जहार च धन तस्य सर्वं पापा यदृच्छया ॥ २४
ज्ञात्वाऽथ तस्या दौरात्म्य राजा प्रणिधिभिस्तदा । तस्यौ नासा च तस्याद्राक् छित्वा दूरीचकार ताम् ॥ २५
सा पुन पुरपैहिनस्त्रापाप्येश सङ्गता । कृत्वा निषिद्धकर्माणि शतशोऽप्यऽति सादरात् । २६
कदाचिदेको विप्र (प्र) स्ता छिन्नहस्तेन ताडयत् । ममार तत्क्षण साऽपि यमदूता यमान्तिकम् । २७
निन्युस्ता नरके घोरे पातयामासुराज्ञया । नरके पीड्यमाना ता शिवदूताश्शिवाज्ञया ॥ २८
समभ्येत्य महात्मना विमानमधिकप्रभम् । आरोप्य द्रावयित्वा तान्यमदूतांश्च निष्ठुरान् ॥ २९
निन्यु कैलासमचल यत्र शम्भुर्विराजते । तत्र देवाधिदेवस्य सन्निधौ न्यवसत्सुखम् ॥ ३०
साऽद्य ता शम्भुमावेष्याहसत्सीमन्तिनां द्विजा । सखीभिस्सा सम देव्यास्सन्तोषेण भृशस्थिता ॥ ३१
तदेतदखिल दूता यमस्य निकट गता । प्रोचुश्शिवगणै पीडा कल्पितामायुधैर्भृशम् ॥ ३२
श्रुत्वैतद्धर्मराजोऽपि चित्रगुप्त गणाग्रणीम् । किंपुण्यमस्या मतिमन्नालोक्य प्रोच्यतामिह ॥ ३३
इति तस्य वच श्रुत्वा चित्रगुप्तोऽब्रवीदिदम् । नैतस्या पुण्यलेशोऽपि विद्यते पापशेमुषी ॥ ३४
एवमाह यदा वीक्ष्य धर्मराज स धर्मवान् । तदानीमागतस्तत्र नारदस्तपसा धन ॥ ३५
त दृष्ट्वा सम्प्रणम्याशु पप्रच्छ मुनिपुङ्गवम् । कस्माद्देशात्त्वया प्राप्तो देशोऽय तपसा धन ॥ ३६
किं विचित्र त्वया दृष्ट श्रुत सर्वं वदाद्य मे । इति कालस्य वचन निशम्य स तु तापस ॥ ३७
कैलासात्पर्वतश्रेष्ठादागतोऽस्मि शिवालयात् । तत्र काचित् स्त्रिय दूतैस्त्वदीयै पीडिता भृशम् ॥ ३८
मोचयित्वा गता दूतादिशायस्य परमात्मन । सन्निधौ स्थापयित्वा ता मिथ प्रोचुश्च मण्डप ॥ ३९
कुर्वन्त्या मनिश पापमप्यस्या पुण्यगौरवात् । जन्मान्तरार्जिताधान पाषाणेन जघान तम् ॥ ४०
तदुद्दीत्वाऽश्म तत्रस्था शम्भोऽस्मुर्वरालयम् । तेन पुण्येन सा प्राप शिवसन्निधिमुज्ज्वलम् ॥ ४१
विधूय सर्वपापानि प्रीत्या परमया युता । इति तेषा वचश्श्रुत्वा ह्यागतोऽस्मि तवान्तिकम् ॥ ४२
इत्य निशम्य वचन नारदस्य स धर्मराट् । चित्रगुप्त समीक्ष्यैव तयेत्याह स धर्मराट् ॥ ४३

दुराचाराऽपि साऽज्ञानात्सत्पुण्या यदीदृशीम् । गतिं प्राप तत कृत्वा शिवपुण्यं शिवप्रियम् ॥ ४४
ज्ञात्वा चरन्ति ये मर्त्यास्तेषां पुण्यमनुत्तमम् । कोवेत्ति तत्वतश्शम्भु मुक्त्वा परमकारणम् ॥ ४५

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे एकचत्वारिंशोऽध्यायः ॥

---

॥ अथ द्विचत्वारिंशोऽध्यायः ॥

मदनेनापि शिवाराधनतः याठ चोरयोः कैलासप्राप्तिः ।

तत प्राह कुमारीं तामगिरा वीक्ष्य तापस । यद्वदेशोऽस्ति नृपालो महाशुक्लाह्वयो महान् ॥ १
स तु राजा वनं गत्वा मृगयामास वीर्यवान् । स जघान महान्कश्चिद्ब्राह्मणस्तत्ववतावर ॥ २
ततोऽस्य मन्त्री चोरैस्तु युद्धं कृत्वा ममार स । राजपत्नी पूर्णगर्भा तदा पुत्रमजीजनत् ॥ ३
ततस्सा पितृगेहाय गत्वा तत्रावसत् द्विजा । पुनः कालेन पुत्रेण साकमेयः शिवालयम् ॥ ४
विनिर्माय शिवञ्चापि प्रतिष्ठाप्य सनातन । पूजान्ते देवदेवेश प्रणम्य प्रीतिसंयुता ॥ ५
नित्यं स्वगृहमायाति भक्त्या परमया सह । सा कदाचित्सुतस्तस्याः पप्रच्छ पितरं स्वकम् ॥ ६
कुत्रेति सेवयित्वैका महादेवपरायणा । तदानीमाययावत्र चतुरङ्गबलैस्सह ॥ ७
महाधनस्य पितरमानयित्वा स्वयं मुदा । योजयित्वा सुतेनैव एकयाव पत्या मुदा ॥ ८
स्वदेशं कल्पयित्वाऽस्य पूर्णवदेवनायक । प्रेरयित्वा स्वकधाम ययौ कन्ये शिवाज्ञया ॥ ९
राजा स्वदेशं संप्राप्य पत्न्या पुत्रेण संयुत । कृत्वातु राज्यं स्ववशे चोरान् हत्वा बहूनपम् ॥ १०
घोरं चोरवरिष्ठं तं पाशा कारागृहे नृप । स्थापयित्वाऽस्य भवनं लुण्ठयित्वा महाक्रुधा ॥ ११
नित्यं स घातयामास चोरैरेव भटैरयम् । तमत्यासस्सकलाघोर दन्तुमृत्युर्नृपान्तिकम् । १२
गत्वा तेषां वचः श्रुत्वा वचेस्वाह महीपतिः । निष्कास्य शिरसं दुताशिशमस्य परमात्मन ॥ १३
दिव्यं विमानमारोप्य निन्यु कैलासपर्वतम् । वीक्ष्यैतद्विस्मयाविष्टो राजा तस्थे तदोन्मुख ॥ १४
तदानीमागतस्तत्र गर्गः पुण्यवतां वरः । तं प्रणम्य महीपालस्सर्वं तस्मै न्यवेदयत् । १५
स तु ध्यात्वा क्षणं तस्य पुण्यमाह त्रिकालवित् । पताकास्थित दृष्ट्वा समादायपृथु मधान् ॥ १६
शिवालयं निर्मिमाय दारुमध्ये विधाय तम् । तेन पुण्येन महता पापं सर्वं विधूय स ॥ १७
दिव्यं विमानमारुह्य प्राप्य कैलासमुत्तमम् । अन्ते च शिवसायुज्यं गमिष्यति च भूपते ॥ १८
तदाप्रभृति राजाऽसौ शिवपुण्यं शिवप्रियम् । विधाय सद्गतिं प्राप शिवस्यैव प्रसादतः ॥ १९
शिवपुण्यं चकाराय यस्माद्भूमिपतिर्महान् । तत्प्रभावात्समागत्य चतुरङ्गबलैस्सह ॥ २०
शक्रो बलानि भूरीणि खङ्ग रिपुबलापहम् । दत्वाऽस्य निर्ययौ स्वर्गं सहसा देवतैस्सह ॥ २१
पुनश्च राज्यं स्ववशे कृत्वा भूमिसुतावर । महताच प्रभावेन राज्यं कृत्वा शिवप्रियम् ॥ २२
शिवपुण्यानि सर्वाणि कृत्वान्ते मोक्षमाप्तवान् । यस्माच्छिवालयायासीद्दण्डो घोरस्य पापिन ॥ २३
तेन पुण्येन महता सोऽपि प्राप शिवालयम् । एवं कुमार्यै स ऋषि कथामेतामुवाच ह ॥ २४
तामाह तपसा धर्यो वसिष्ठोऽपि ऋषिर्महान् । गुञ्जापुरे द्विजः कश्चिच्चित्रपाह्वयो महान् ॥ २५

तस्यासीद्विदुघोनाम तनयः पापकर्मकृत् । तं पुरा नृपतिः कोपाद् बहिश्चक्रे दुराशयम् ॥ २६
निर्गत्य स वनं प्राप्य पथिकान् पापचेतनः । सन्ताड्य सञ्जहारायं तेषां द्रव्याणि कन्यके ॥ २७
इत्थं चचार कतिचिद्दिनानि सुदुरात्मवान् । तं कदाचिन्महीपालः प्रेषयित्वा स्वकान् भटान् ॥ २८
बद्ध्वाऽऽनीय गजस्याग्रे स्थापयामास वै रुषा । प्रेरितोऽपि गजस्तस्य न चिक्षेप शिरः क्षितौ ॥ २९
किन्तु प्रदक्षिणीकृत्य स्वस्कन्धे स्थापयच्च तम् । राजा तदेतदालोक्य विस्मयाकुलितान्तरः ॥ ३०
आरोपयद्गजश्रीमान् स्कन्धे पापिनमप्यमुम् । न जघान किमेतद्वा इति तस्थे तदोन्मुखः ॥ ३१
तदाह वीक्ष्य स गजः क्षितीशं विस्मयान्तरम् । बालोऽयं कारयामास भवनं परमेशितुः ॥ ३२
एकाश्मभिर्विनिर्माय सवयोभिश्च संयुतः । तेन पुण्येन महता महात्माऽयं दुरासदः ॥ ३३
न चैव शक्यते हन्तुं मयाऽपि ब्रह्मणापि वा । सर्वेषामपि पूज्योऽयं शिवपुण्यप्रभावतः ॥ ३४
गजस्यैवं वचः श्रुत्वा पुनराश्चर्यसंयुतः । मुमोच तं नृपश्रेष्ठो भक्त्या परमया युतः ॥ ३५
स तु देशान्तरं गत्वा सञ्चरन् बहुकालतः । समाययौ पुनरिमं देशं मार्गवशात्किल ॥ ३६
तं वीक्ष्य स नृपश्रेष्ठस्सन्तोषेण समन्वितः । दत्त्वा बहुधनं तस्मै शिवपुण्यस्य वैभवात् ॥ ३७
प्रेषयामास मतिमान् स्वेच्छया कन्यके नृपः । तदाप्रभृति मुक्त्वाऽयं स्तेयं सर्वजुगुप्सितम् ॥ ३८
भुक्त्वा यथेच्छया भोगानन्ते दिव्यं विमानकम् । आरुह्य परया प्रीत्या शिवलोकं जगाम हि ॥ ३९

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे द्विचत्वारिंशोऽध्यायः ॥

---

॥ अथ त्रिचत्वारिंशोऽध्यायः ॥

शिवालय धर्ममहिमा ॥

वीक्ष्य तां काश्यपो प्राह कथां पापप्रणाशिनीम् । वेदारण्याख्यनगरे राजा भोगाह्वनामकः ॥ १
स ममार महापापी कालेन परहिंसकः । निष्युक्तं कालपाशेन बध्वा दूता यमस्य वै ॥ २
निपात्य नरके घोरे ताडयामासुरुत्कृपा— । तं पापं नरके घोरे बाध्यमानं शिवाज्ञया ॥ ३
शिवदूतास्समागत्य विमानमतिसुन्दरम् । आरोप्य सहसा निन्युश्शिवस्य परमं पदम् ॥ ४
ततश्शिवगणान् दूता यमस्य त्वरयान्विताः । समभ्येत्यास्य पुण्यानि पप्रच्छुर्भयकंपिताः ॥ ५

शिवगणाः —

जनकाख्योऽस्य तनयश्शिलकणाभिर्महेश्वरम् । निर्माय क्रीडयामास बालत्वाद्यमदूतकाः ॥ ६
तेन पुण्यप्रभावेन पिता तस्यापमीदृशः । उत्तीर्य नरकाद्घोराच्छिवलोकमवाप हि ॥ ७
इति तेषां वचः श्रुत्वा यमदूता भयान्विताः । प्रापुर्निवृत्य स्वपदं तथेति कृतनिश्चयाः ॥ ८
अजानताऽपि पुत्रेण शिवपुण्यमघौघहम् । कुर्वता मोचितश्शीघ्रं नरकादतिघोरतः ॥ ९
शिवपुण्यस्य माहात्म्यं ज्ञात्वा ये तु चरन्ति वै । तत्पितृणां गतिं कोवा तत्त्वतो वेत्ति मानवः ॥ १०
एवमुक्त्वा ऋषिवरे स्थिते तूष्णीं तदा पुनः । जमदग्निरपि प्राह कथां पापप्रणाशिनीम् ॥ ११
अस्ति चन्द्रपुरे कश्चिद्विद्युदाख्यो महामतिः । मन्त्री तस्याभवन्पुत्रास्त्रयोऽतिबलशालिनः ॥ १२
तत्र पुत्रावुभौ पापौ दुराचारानुवर्तिनौ । दुराचाराह्वयः कश्चिद्दुर्गुणाख्यः परः स्मृतः ॥ १३
विधाय तस्य भवनाद् बहिर्मंडपमेककम् । स्थापयामास मतिमान्मन्त्री तौ तनयौ मुदा ॥ १४

शक्यते मया वक्तु शम्भो पुण्यमनुत्तमम् । इत्युवाच ऋषिश्रेष्ठ कन्यका वीक्ष्य ता द्विजा ॥ ४८
। ता भरद्वाज कथामाह परा स्वयम् । पुरा कश्चनगोपालो दृषद लिङ्गरूपिणम् ॥ ४९
ाप्य शिवलिङ्ग त कीडयामास बाल्यत । पुष्पाणि सर्वाण्याहृत्य पूजयत्यनिश मुदा ॥ ५०
न परिकल्प्यैव पक्व सर्वमनोहरम् । फलानि मृत्तिका सर्वामुपहार करोत्यलम् ॥ ५१
कीडयतस्तस्य भक्तिश्रद्ध महेश्वर । समीक्ष्य परया प्रीत्या कृपासयुक्तमानस ॥ ५२
स्य धन भूरि तस्मै प्रादान्महेश्वर । कल्पित लिङ्गभावेन रत्नलिङ्ग चकार तत् ॥ ५३
न तस्य महित दिव्यरत्नमय बभौ । एव विधाय देवेशा प्रादुरासीन्महेश्वर ॥ ५४
दृष्ट्वा भावमीशान प्रणनाम पुन पुन । एतत्सर्व समालोक्य राजानो विस्मय गता ॥ ५५
तुस्ते महादेव बद्धाञ्जलिपुटा अमी । गोपालबाल त सर्वे ऽप्ययथ्यामरा अपि ॥ ५६
ाकल्पासिसंतुष्टा प्रीत्या परमया सह । प्राप्नोषि श्रीकरत्वया त्वमित प्रभृति पुण्यत ॥ ५७
भविष्यति महाधन्यतोय इति श्रुत । तस्य पुत्रो हरिस्तद्वद्भविष्यति न संशय ॥ ५८
करवा मदंधे देवस्तत्रैव परमेश्वर । तत प्रीतिमवाप्याय भुक्त्वा भोगान्यथेच्छया ॥ ५९
। जगाम परम श्रीमत्कैलासपर्वतम् । तस्माद्धे शिवपुण्याना माहात्म्य सर्वपापहम् ॥ ६०
■ कुर्वन्ति विद्वासस्तेषा पुण्यस्य वैभवम् । शिव एव विजानाति सत्यमुक्त हि कन्यके । ६१
सप्तर्षिभि प्रोक्त शिवपुण्यमनुत्तमम् । श्रुत्वा परमया प्रीत्या प्रणम्यैतानृषीश्वरान् ॥ ६२
पे बद्धाञ्जलिका तेषामेवाग्रतस्तदा । आशीर्भिर्योजयित्वैता ते सर्वे तापसोत्तमा ॥ ६३
पुण्य शिवस्य त्वं सर्वदा वीतकिल्बिषा । कृपा भवतु देवस्य त्वयि शम्भोर्महात्मन ॥ ६४
युक्त्वा प्रययुस्सर्वे स्वाश्रमाय मुनीश्वरा । तत स्वदेश सा बाला पूजार्थं परिकल्प्य च ॥ ६५
पाल्याभि मूर्तिणि तत्र ■■ विधाय च । मण्डप गोपुर सौध वापीकूपतटाककान् ॥ ६६
घाय शम्भोर्देवस्य तत्तत्र स्थलेष्वपि । उत्सवान्विविधाश्चक्षयान् कारयामास भक्तित ॥ ६७
प्रसादमनुप्राप्य ससाररोगमूलक परम् । भुक्त्वा सुविपुलान् भोगान् शिवलोकमनुत्तमम् ॥ ६८
पान्ते परया प्रीत्या देवर्षिणा गणैर्वृता । वाद्यानामरवैस्तद्वत्पुष्पवर्षैश्च शोभिता ॥ ६९
तस्ये महादेवसन्निधौ परया मुदा । तत्र स्थित्वा चिर काल मोक्षमाप द्विजोत्तमा ॥ ७०

इति श्री स्कान्दे महापुराणे शकरसहितायां शिवरहस्यखण्डे
उपदेशकाण्डे त्रिचत्वारिंशोऽध्याय ॥

---

॥ अथ चतुश्चत्वारिंशोऽध्याय ॥

चोरस्यापि शिवानुग्रह लाभ ॥

वक्ष्ये वश्ये युष्माक शिवपुण्यस्य वैभवम् । यच्छ्रुत्वा सर्वपापानि मुच्यन्ते देहिनामिह ॥ १
र विराट (मारट्ट) देशोऽस्ति श्रीमन्ताख्य महत्तरम् । तत्रागरुसमृद्धिप्रसर्व शास्त्रार्थकोविद ॥ २
त्युनरसोमक भूपो वेदशासनतत्पर । गत्वाऽथ पुष्कर देश कदलीवनसङ्कुलम् ॥ ३
गोपयित्वा फलान्यानु कदलीना दुरात्मवान् । निर्ययौ वनमार्गेण स्थापयित्वा शिरस्यपि ॥ ४
दा तपालका दृष्ट्वा यत्नेन पापकर्मिणम् । आनयन् नृपनिकटमनेकनृपसङ्कुलम् । ५
दृष्ट्वा समहीपालदधुरचैतस्य च दुष्कृतिम् । छिन्धेदैक कर शास्त्र चोराणामनुशासन ॥ ६

सन्ताड्य सम्यक्तं पापं दूरतोऽद्रावयत्प्रभुः । पुनस्स्वकर्मणा पापी चौर्यबुद्धिरहर्निशम् ॥ ७
शृङ्गारवनमभ्येत्य राज्ञो मन्दिरतो बहिः । फलानि चोरयित्वाऽत्र कदलीनां दुराशयः ॥ ८
ययौ प्रतिदिनं तं तु दिने कस्मिंस्तु पालकाः । दृष्ट्वा बध्वा दृढं पापं राजसन्निधिमानयन् ॥ ९
स तु राजा तमाजघ्ने तस्कराणाञ्च तस्करम् । पादौ च जानुपर्यन्तं पाणिं हस्तावधि क्रुधा ॥ १०
छेदयित्वा यथा दण्डं मोचयामास वीर्यवान् । अपरेद्युर्ममाराऽयं तद्बाधापीडितो भृशम् ॥ ११
निन्युस्तं यमदूतास्तु यमस्यान्तिकमञ्जसा । विचार्य स तु तत्पापं धर्मराजो दयानिधिः ॥ १२
दूतान् स्वकीयान् संप्रेक्ष्य प्राहस्म वचनं तदा । करोत्ययं सदा पापं बुद्धिपूर्वंतथा खलः ॥ १३
कदाचिदयमाविश्य भूपस्य कदलीवनम् । गत्वाऽत्र कदलीकाण्डे फलवृन्दमुपाहरत् ॥ १४
चौर्येण स विनिर्गत्य पुनर्मार्गमगात्खलः । तं दृष्ट्वा पुरपालास्तु दूरतोऽद्रावयत्क्रुधा ॥ १५
फलवृन्दमसौ स्वकरात् भीत्या धावन्महाखलः । हाटकेशाख्य देवस्य शम्भोरमिततेजसः ॥ १६
आलये परमे पुण्यैः पूर्वजन्मान्तरार्जितैः । दृष्ट्वा प्रातरिदं सर्वं कदलीफलजालकम् ॥ १७
द्वारे व्यक्षिपत् सोऽपि दृष्टो संघोऽस्ति महान् । अभिषेकाय देवस्य पराऽर्थस्याख्य च ॥ १८
चक्रिरे ते फलैस्तस्योऽभिषेकक्रियां तदा । तेनास्य सर्वपापानि गतानि विलयं भटाः ॥ १९
धार्यं देवदेवस्य पदं प्रति महाभटाः । इत्युक्त्वा प्रेषयामास समस्तान् स्वभटान् पुनः ॥ २०
तस्यात्मा शिरसाऽऽदाय ते भटा मुमुचुश्च तम् । तदानीमात्मबोधोऽयं समुत्तस्थे यथास्वपन् ॥ २१
उत्थितस्तत्क्षणात् वृत्तान्तं सकलं स्विदम् । तच्छ्रुत्वा भूपमुख्यास्ते जनाश्चाश्चर्यमापिरे ॥ २२
तदानीमेव तत्राशु शिवदूताश्शिवाज्ञया । दिव्यं विमानमानीय पश्यत्स्वेषु समागताः ॥ २३
आरोपयित्वा तं प्रापुश्शिवस्य परमं पदम् । सन्निधौ देवदेवस्य स्थित्वाऽयं बहुकालतः ॥
भवाप्नोत् च सायुज्यं पुनरावृत्तिदुर्लभम् ॥ २५

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे चतुश्चत्वारिंशोऽध्यायः ॥

---

॥ अथ पञ्चचत्वारिंशोऽध्यायः ॥
शिवतटाक पुष्पारामादीनां फलमहिमा ॥

पुनरन्यां कथां विप्रास्सं शृणुध्वमतन्द्रिताः । पुरा केचिन्महात्मानो ऋषयस्संशितव्रताः ॥ १
तस्थुस्तत्र्या तपस्तीर्थे गन्धमादनपर्वते । तदानीमागतस्तत्र कण्वोनाम महानृषिः ॥ २
तं दृष्ट्वा तापसश्रेष्ठास्ते सर्वे परया मुदा । प्रणम्य चासने रम्ये स्थापयित्वा यथाविधि ॥ ३
कुतस्समागतश्चाद्य त्वया कण्व महामुने । किंवा दृष्टं त्वयाऽऽश्चर्यं वक्तुमर्हसि तापस ॥ ४
इति तेषां वचश्श्रुत्वा प्राहैतान् स महामुनिः । महालोकान्नया प्राप्तो देशोऽयं ब्राह्मणोत्तमाः ॥ ५
तत्र दृष्टं मयाऽऽश्चर्यं तच्छृणुध्वमतन्द्रिताः । मालवाख्ये महादेशे कल्याणाख्यं पुरं महत् ॥ ६
भार्गवो वैश्यवर्यात्र वणिजौ प्रथितावसौ । महाशठौ महापापौ सर्वदा वञ्चनोद्यतौ ॥ ७
दिवा वणिग्भिर्मिलितौ वाणिज्यं कुरुतस्तथा । रात्रौ तु वणिजः पुष्टा (दृष्ट्वा) नाहूय स्वस्ववेश्मनि ॥ ८
मदकाढ्यं प्रदर्श्यैतान् दत्वा वञ्चनया खलु । तेषां द्रव्याणि सर्वाणि अहरतां दुष्टमानसौ ॥ ९

वनप्रदेशवासस्त्वाश्रपथिकानपि सङ्गतान् । रात्रौ हत्वा तदीयानि द्रव्याण्यपि च जह्रतुः ॥ १०
प्रातर्वणिग्भिर्मिलितौ तिष्ठतो नगरेऽन्वहम् । एतत्स्थानां पापानां संख्या नैवोपलभ्यते ॥ ११
कदाचिदेतौ पापिष्ठौ कृत्वा सङ्केतमात्मना । वणिजस्सङ्गतान् दृष्ट्वा गोप्याः कस्या गृहे निशि ॥ १२
धनिनो द्रव्यलोभाच्चौ निद्रां संशोध्य वञ्चकौ । मोदकौषधमेतेषामुपरि स्थाप्य शीघ्रतः ॥ १३
द्रव्याण्याहृत्य पापिष्ठौ गोपीवेश्मस्थितान्यथ । ययतुर्दूरतोऽरण्ये शून्ये शंभोर्वरालये ॥ १४
तत्राज्यं तद्गृहे लब्धं चौर्येणैतौ दुराशयौ । संयोज्य दशया दीपं तत्र कृत्वा दयान्विता ॥ १५
विभज्य तद्धनं सर्वं यथांशेन दुराशयौ । ययतुर्मार्गमालोक्य नगरं प्रति तौ पुनः ॥ १६
तदैव रात्रिर्गलिता सूर्ये प्रागुदये सति । प्रातर्विबुद्धा गोपालाश्चुक्रुशुर्गतमोहकाः ॥ १७
तेषां तदारवं श्रुत्वा ग्रामपालास्त्वरान्विताः । प्रतस्थिरे पदरूपका धृतनानाविधायुधाः ॥ १८
विलोक्य मार्गं सहसा दृष्टौ तौ वणिजात्मजौ । आबध्य रज्जुभिस्तूर्णमानीय च नृपान्तिकम् ॥ १९
मुमुचुस्ते महासमर्थं वृत्तान्तं च व्यजिज्ञपन् । तच्छ्रुत्वा सहसा भूपश्छेदयामास तच्छिरः ॥ २०
तदाशमीमेव ते शंभोर्दूता दिव्यं विमानकम् । आनीयारोप्य तावेतौ शिवलोकं ययुर्मुदा ॥ २१
तत्र देवाधिदेवस्य तस्यतु निकटे मुदा । चौर्यप्राप्तेन चाज्येन निकटे शङ्करस्य यत् ॥ २२
आरोपितो धृतो दीपो ह्यमूभ्यां सर्वपापहः । तेन पुण्येन विप्रेन्द्रा विधूयाखिलमप्यघम् ॥ २३
संप्राप्तौ देवदेवस्य सन्निधिं दुर्लभान्तराम् । तच्छ्रुत्वा ते महात्मानस्सर्वेऽपि यमिनां वराः ॥ २४
आश्चर्यमापिरेऽत्यर्थं शिवपुण्यस्य वैभवैः । इति कण्वेन कथितामृषिणा तां कथामिमाम् ॥ २५
श्रुत्वाऽथ वामदेवोऽपि महर्षिः प्राह तत्कथाम् । देशे कुलण्डसंज्ञेऽस्ति कपित्थाख्यं महत्पुरम् ॥ २६
तत्र कश्चिच्चतुर्थोऽस्ति कण्टकाख्यो महाखलः । स तु चौर्यरतो नित्यं ग्रामेषु नगरेष्वपि ॥ २७
तत्राचिरचौर्यसंप्राप्तं धनं भूरि दुराशयः । मत्स्येश्वरस्य पुरतस्तटाके गतपाथसि ॥ २८
तद्धमध्ये जुगोपायं खनित्वा चोरमार्गतः । गत्वा यथेच्छया पापी परेद्युस्तत्र चागतः ॥ २९
महता तत्स्थलं दुःखात्तत्रतत्र च कर्दमम् । तीरे दूरीस्वकारयं संशोध्यथ पुनः पुनः ॥ ३०
ततो लब्ध्वा धनं पङ्के कुत्रचित्सुव्यवस्थितम् । भुक्त्वा चिरमनेनायं भोगान् सुविपुलान् हती ॥ ३१
ममार तं महात्मानं शिवदूताश्शिवप्रियम् । दिव्यं विमानमारोप्य शिवलोकञ्च निन्यिरे ॥ ३२
दृष्ट्वाऽहं शिवदूतांस्तान् कोऽयं सुकृतिनांवरः । अपृच्छमूचुस्ते दूताश्शिवस्य परमात्मनः ॥ ३३
अयं शिवतटाकस्य पङ्कान् दूरीचकार हि । तेन पुण्यप्रभावेन शिवलोकमवाप्तवान् ॥ ३४
तदर्थमेव लोकोऽपि मण्डितः कैतुपूर्वकैः । इति तेषां वचः श्रुत्वा शिवपुण्यस्य वैभवम् ॥ ३५
स्तुत्वैव मनसा विप्राः प्राप्तवानस्मि चाववै । एवमुक्तां कथां श्रुत्वा वामदेवमहर्षिणा ॥ ३६
सदा (दाता) नन्दोऽब्रवीदन्यामाश्चर्यां पापनाशिनीम् । ककुदाख्यं पुरं रम्यमस्ति कांचीमदेशगम् ॥ ३७
शोभनाख्योऽवसत्तत्र ब्राह्मणोऽतिदरिद्रवान् । जीवनाय स उपादानभृत्यैवानुदिनं द्विजाः ॥ ३८
तदन्यकाले तद्ग्रामे प्रजायां नियमत्ययम् । तत्र मार्गवशात् प्राप्ता मुकुन्देशार्चका द्विजाः ॥ ३९
आमर्दगोलपुण्याख्य गिरिशन्ताववजाः खलु । वर्षत्यब्दे महावाते वृष्टिधारा निरन्तरे ॥ ४०
तदानीं तान् समुद्वीक्ष्य शोभनस्सहसोत्थितः । नायाति किं समभ्यर्थ्येमेवं निवसतोऽनिशम् ॥ ४१
इति तस्य वचः श्रुत्वा प्राह कश्चिद्धिजद्विजः । शिवार्चकोऽहं सर्वस्य गुरुरित्येव विश्रुतः ॥ ४२
शिवधर्मोति मामाहुस्सर्वेऽप्यत्र निवासिनः । निशम्यैतद्वचोऽस्माकं कृतार्थो भव पण्डित ॥ ४३

इति तस्य वचश्श्रुत्वा समुत्थाय कृताञ्जलिः । कृपया तव विप्रेन्द्र कृतार्थोऽस्मि न संशयः ॥ ४४
त्वद्वाक्यश्रवणेनैव चेहामुत्र सुखं भवेत् । इत्युक्त्वा प्रणमन्तं तं पुनः प्राह शिवद्विजः ॥ ४५
पुष्पारामं महेशस्य पूजितस्य मयाऽनिशम् । निर्माय तत्र पुष्पाणि गृहीत्वाऽर्चितुमीश्वरम् ॥ ४६
आनयस्व विशुद्धात्मा चाद्यप्रभृति मद्गिरा । तस्मिन्दिने तवायाति सुखं शंभोः कृपाबलात् ॥ ४७
तथेति स वद्विर्गत्वा पुष्पाराममकल्पयत् । ततः प्रसूने सञ्जाते प्रवृत्तोपचितौ द्विजाः ॥ ४८
तदानीमागतस्तत्र स्वयमिन्द्रस्सुराधिपः । दत्वा द्विजाय पीयूषं तुष्ट्या परमया युतः ॥ ४९
उवाच वचनं रम्यं ब्राह्मणं वीक्ष्य तं सुरः । इह भुक्त्वा चिरं भोगान् मम लोकं सुरालयम् ॥ ५०
आगच्छाग्रेति तुष्ट्या त्वमित्युक्त्वाऽसौ कृतेऽमुना । यथामिन्द्रः पुनः स्वर्गं सहसा पूजितोऽमुना ॥ ५१
ततो द्विजोऽयं पुष्पाणि शुद्धहस्ते ददौ शुचिः । आदाय तानि पुण्यात्मा चार्चयामास शङ्करम् ॥ ५२
पतितानि यदा तानि शिवमूर्ध्नि सुपावने । तदा प्रसन्नो भगवान्वीक्ष्यैवं प्राह भूसुरम् ॥ ५३
स्वयं पुष्पवनं रम्यमारोप्य परया मुदा । स्वयं गृहीत्वा पुष्पाणि यस्मान्मे दत्तवानसि ॥ ५४
तान्यहं परया प्रीत्या मूर्ध्न्यङ्गीकरोम्यहम् । तेन पुण्यप्रभावेन भुक्त्वा भोगानिहातुलम् ॥ ५५
अन्तेच स्वयमिन्द्रत्वं संप्राप्य परया मुदा । तत्र देवैश्च सकलैः पूजितः प्रत्यहं मुदा ॥ ५६
शिवलोकमनुप्राप्य सर्वैश्वर्यसमन्वितम् । भुक्त्वाऽत्रापि परान् भोगान्मुक्तो भवसि निश्चयम् ॥ ५७
इत्युक्त्वा धनदं वीक्ष्य निकटे परिवर्तिनम् । एतस्य वचनं श्रुत्वा दत्वाऽस्य च धनं बहु ॥ ५८
शृण्वंस्त्वनुक्तिमनिशं तिष्ठचेति महेश्वरः । इत्युक्त्वाऽन्तर्दधे शीघ्रं सर्वैश्च गणनायकैः ॥ ५९
ततोऽयं शोभनोऽप्येत्य शिवधर्मिणमात्मवान् । प्रणम्य परया भक्त्या प्रोवाच वचनं मुदा ॥ ६०
तव दर्शनमात्रेण ममैतत्सकलं गुरो । समागतं न सन्देहः कृतार्थं विद्धि मां गुरो ॥ ६१
पुष्पारामप्रभावेन महेशोऽपि प्रसेदिवान् । इत्युक्त्वाऽस्यानुमत्यायं भुक्त्वा भोगानखण्डितान् ६२
देवेन्द्रत्वं ततः प्राप्य तत्र भुक्त्वा चिरं सुखम् । अन्तेच शिवसालोक्यं प्राप्यात्रापि चिरं वसन् ॥
सायुज्यं प्राप्तवान् पश्चात्परस्य ब्रह्मणो द्विजाः ॥ ६३

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे पञ्चचत्वारिंशोऽध्यायः ॥

---

## ॥ अथ षट्चत्वारिंशोऽध्यायः ॥

अज्ञानतः कृतानामपि शिवधर्माणां क्रमेण फलनिरूपणम् ॥

एवमुक्तवा सदानन्दो कथां पापप्रणाशिनीम् । विरराम कथां प्राह चात्रिः परमतापसः ॥ १
पुराऽभूत्कुणोत्तिणां देशे सर्वैजिष्णुतामान् नृपः । तस्यासंस्तनयाः पापात्मानस्तमेकोत्तरं खलु ॥ २
न एकः पुण्यवांस्तेषु सर्वधर्मपरायणः । ते शतं तनया ब्रह्महत्या चौर्यमसञ्चयकम् ॥ ३
कृत्वा तु क्रूरकर्माणो वर्तन्ते हिंसकाश्च ताम् । मद्यपानरता नित्यं मांसभोजनतत्पराः ॥ ४
परस्त्रीगमनोत्कण्ठ सर्वदा परवञ्चकाः । भक्षयेनान् दुराचारानिति राजाऽब्रवीदपि ॥ ५
महाराक्षसनामानं राक्षसं प्रोक्तवानलम् । सोऽपि तान् राक्षसः पापान् भक्षितुं कुत्सिताकरः ॥ ६
उत्पीड्य पादान् हस्तांश्च वक्षिणांचोद्धिमक्षिपत् । निपेतुस्ते तदा काश्यां केदारेऽपि सुपावने ॥ ७
श्रीपर्वते महाशैले दर्शनान्मुक्तिदायके । श्रीमद्दक्षिणकैलासे शिवलोकप्रदे शुभे ॥ ८

न शशाक च तामेव समुत्थापयितुं यदा । तदायमेता देवायेत्युक्त्वा तस्मै ययौ मुदा ॥ ४४
गाश्चान्याश्चोरयित्वाथ विक्रीय नगरेऽवसत् । चोरयित्वाथमधुना तव वीरोद्धिते गृहे ॥ ४५
युष्मत्कमेवापाय वञ्चित पालकैस्त । या गौरवेन पुण्येन शिवायेति विसर्जिता ॥ ४६
ता कीलकीलिता पादे तस्यास्ता पोष्य शम्भवे । शूलमुद्राङ्किता कृत्वा मुमुक्षुश्च महीपते ॥ ४७
तत्क्षीरमधुना शम्भोरभिषेकाय चाभवत् । तेन पुण्यप्रभावेन चास्मिन् सर्वं त्वदीयकम् ॥ ४८
शासन व्यर्थता प्राप शिवपुण्यमहो परम् । इत पर त्वयाप्येष पूज्यो नूनं महानयम् ॥ ४९
न च हिंसन्ति सर्पास्त राक्षसाश्च पिशाचका । भुक्त्वा भोगानयं चान्ते शिवलोके निरामये ॥ ५०
गोरोचना ब्रह्मकल्पानामेकैकस्य सहस्रकम् । स्थित्वा पुनश्च सायुज्य यास्येव परमात्मन ॥ ५१
इति तस्य वच श्रुत्वा राजा विस्मितमानस । त चोरं स्वासने स्थाप्य दत्त्वा भूरिधन नृप ॥ ५२
एव भार्या विधायास्य पर भोगमवस्थयत् । भयलोकयतिस्वैव शुक भूयो महीपति ॥ ५३
अधीन वीक्षमाण स शुक प्राह कथा पुन । अहं पुरा महालक्ष्म्या करमाश्रितवान् नृप ॥ [illegible]
विष्णुलोके सदा क्रीडे विष्णुना समलङ्कृते । तदेन्द्राणी महालक्ष्मीं प्रीणयित्वा सपर्यया ॥ ५५
मामवाप्तवती राजन्मयि प्रीता सुरप्रिया । तदा प्राह वचो विष्णु समदान्वीक्ष्य भूपते ॥ ५६
अलङ्कुर्वन्तु नितरामिन्द्राणीं मामक पदम् । इति विष्णुवचश्श्रुत्वा रमा पप्रच्छ माधवम् ॥ ५७
को विशेषोऽयमधुना विशेषालङ्कृते प्रभो । इति पृष्टवतीं वीक्ष्य प्रिया विष्णुरुवाच ह ॥ ५८
सुपार्श्वविषये कश्चिच्छ्रेयस्करपुरे वसन् । कपिलाख्यो द्विजाभासस्तदा चौर्येण जीवति ॥ ५९
चोरयित्वा गृहस्थस्य गामेकां सुदुराशयः । दुग्ध्वा पीत्वा तदीयञ्च क्षीरं तस्थौ स्वके गृहे ॥ ६०
श्रुत्वा तदेतद्वृत्तान्त यजमानस्समाययौ । तदागम समाकर्ण्य गामेनां सुदुरात्मवान् ॥ ६१
परग्रामे गृहस्थस्य कस्यचिद्वेश्मनि स्वयम् । तदा बद्ध्वाऽवसत्तत्र तमसैव प्रियेऽत्र [illegible] ॥ ६२
वपित्वा तां निशां [illegible] प्रातर्गां चोदयन्ययौ । तदा मार्गे समायान्त यजमानसमीक्ष्य तम् ॥ ६३
गां गृहीत्वा दुरात्मानं राज्ञे प्रोवाच तस्करम् । तदाऽस्य च महीपाल पातयामास लोचने ॥ ६४
तद्दुःखेन ममाराध्य दुरात्मा सर्वपक्षग । तमेनं शम्भुगणपार्श्वसमारोप्य मनोरमे ॥ ६५
विमानं शिवलोकञ्च नयन्त्यद्य परात्परम् । तस्य मार्गवशाल्लोको मण्डनीयो ममाधुना ॥ ६६
यदा पापरतस्यापि तस्य पुण्यं शृणु प्रिये । यजमानमियाद्रात्रौ परग्रामे निधाय गाम् ॥ ६७
तत्रापि च गृहस्थस्य कस्यचिद्वेश्मनि स्थित । गृहस्थश्शिवभक्तोऽयं दुग्ध्वा क्षीरं तदीयकम् ॥ ६८
पपावभ्यानुमत्यादि महात्मा सर्वपावन । तेन पुण्याग्निना दग्धान्येनांस्यस्य प्रियेऽधुना ॥ ६९
अत एवास्य लोकोऽपि शिवस्य परमात्मन । इति विष्णोर्वचश्श्रुत्वा शिवपुण्यं रमा तदा ॥ ७०
सर्वातिशयमेवैतज्ज्ञे भूपाल सा पुन । इति राजा समाकर्ण्य शुकस्य वचनं मुदा ॥ ७१
शिवपुण्यस्य माहात्म्यं ज्ञात्वा सम्यग् द्विजोत्तमा । शुकञ्च प्रेषयित्वाऽन्त स्वयं भक्तिसमन्वित ॥ ७२
कृत्वा शिवस्य पुण्यानि शिवलोकमवाप हि । पुनरन्यां कथां वक्ष्ये शृणुध्वं ब्राह्मणोत्तमा ॥ ७३
सुमतेर्मत्स्य देशस्य राज्ञोऽभूत्तनयो महान् । स पञ्चवार्षिक श्रीमान् मतातोऽतिरघनामत ॥ ७४
स तु केकयदेशस्य राज्ञः पुत्रीं तु मेनकाम् । विवाह्य विधिना राजस्तया क्रीडां चकार हि ॥ ७५
गृह एव सखीवर्गं दृष्ट्वा धूलयादिना द्विजा । तदाऽस्य आसीत्सरणममूकेनापि हेतुना ॥ ७६
तदा मतिरभूत्तस्य सेवार्थं परमेष्ठिनु । पित्रे निवेदयामास सेवितुं परमेश्वरम् ॥ ७७

प्रतस्थे प्रियया साकमनुमत्या पितुस्तदा । हरीशाख्यमासाद्य तत्पुरस्थ सुशोभनम् ॥ ७८

तत्रेश्वर प्रणम्याथ भक्तियुक्तेन चेतसा । वेदधर्मिणमासाद्य तत्र देवालयाधिपम् ॥ ७९

विप्र वेदविदा श्रेष्ठ प्रणम्योवाच सुस्मितम् । जानासि किं महात्मस्त्व मामिहागतमात्मन ॥ ८०

इति तस्य वच श्रुत्वा प्राहेदं स च भूसुर । जानाम्येव महाराज कुमार मारसप्रभम् ॥ ८१

कोवा राजकुमार त्वा न जानाति जनेश्वर । प्रत्युवाच पुनाराजकुमारे विप्रपुङ्गवम् ॥ ८२

केवलोऽपि जनो वेत्ति चास्मिञ्जन्मनि मा द्विज । प्राग्भवे मा यदाज त्व यदि जानासि पण्डित ॥ ८३

इति तस्य वच श्रुत्वा पुन प्राह महीसुर । कोवा प्राग्भववृत्तान्त जानातीश्वरवत्नृप ॥ ८४

इति श्रुत्वा [illegible] प्राह पुनर्वीक्ष्य नृपात्मज । श्रूयतामधुनैवेन प्रोच्यते प्राग्जनिर्मम ॥ ८५

विक्रमाख्ये पुरे गौडविषयेऽर्जीवनोमम । ब्राह्मणोऽह मृतौ मातापितरौ बाल्य एव मे ॥ ८६

तदानीं पोषकाभावाच्छूद्रधा परिवर्धित । मृता स्वापि मदीयेन दुरितेनैव भूसुर ॥ ८७

तदा जालेन मीनानि गृहीत्वानुदिन वली । विक्रीय जीवितो नित्य मृगया प्राप्य वै मृगान् ॥ ८८

विक्रीय मधुमांसादींश्चण्ड लैरपि [illegible] । अस्मिन् पुरे समाप्येव हीनवृत्त्या महीसुर ॥ ८९

तदापणे स्थ दृष्टस्य ताम्बूल कैरुमागत । तदानीं निर्गत कश्चिद्दिव्यालङ्कारशृङ्खला गज ॥ ९०

त दृष्ट्वा वुद्बुद्दसत्वें तत्रस्थास्तत्र तत्र च । तदा त्वमपि दूरेण दुद्राविथ महाभयात् ॥ ९१

त संभ्रमवशात्काचस्तव हस्तात्पपात हि । बहुधा स विसृष्टोऽपि न दृष्ट खलु तावक ॥ ९२

काचाभावाद्विचारोऽभूत्तव ताम्बूलक प्रति । विक्रीयाह तदा मधमागत पुरतस्तदा ॥ ९३

दृष्ट्वा तदानीं मा काच पृष्टवास्त्व महापणे । भूयात्स्वयतस्तव क्षिपाद् गृहाणेथ महीसुर ॥ ९४

तदाह त्वा समुद्वीक्ष्य भविष्यामि नृपो यदि । तदानीं दीयते काचस्तव तस्य मयेरितम् ॥ ९५

इति श्रुत्वा मा वीक्ष्य परिहासेन केवलम् । को भारस्तव भूपत्वमिति विप्रोक्तवानसि ॥ ९६

तदान्तिके समासीता मम भार्याब्रवीदिव । भविष्यति महीपालो एषय मामक पति ॥ ९७

तदानीमहमेतस्य महिषीस्यामुतान्यथा एवमादिवचश्चोक्त्वा दत्वा काच यथाबलम् ॥ ९८

गतोऽस्मि [illegible] भूयेव चण्डालभगिनी तदा । तदा पिशाचयोमायुर्दद्यान् मा तया सह ॥ ९९

ततो मृतोऽह प्राक्तनात्स्मात्तत्र पश्चान्मृता खलु । काचदान प्रभावेन शिवपुण्याय ते तदा ॥ १००

राजाह मत्स्यदेशस्य बभूव खलु भूसुर । साऽपि केकयदेशेशपुत्री भूत्वा मम प्रिया ॥ १०१

मामेव पतिमापैषा भद्रावयपरिपालिनी । त्वत्समागमपुण्येन तदानी भूसुरोत्तम ॥ १०२

जातिस्मृतिरभूदस्या प्राग्जन्मस्फुरणात्मिका । तदुक्ता भवते ब्रह्मन् प्राग्भवोत्पत्तिरा मम ॥ १०३

इदानीं शम्भुपूजार्थे यद्यद्द्रव्यमपेक्षितम् । तदादाय महात्मस्त्व कृतार्थं कुरु मामिह ॥ १०४

एवमुक्त्वा प्रणम्यैन भार्यया सह भूमिप । दत्वा द्रव्याणि भूरीणि पुनस्तस्मै शिवात्मने ॥ १०५

गत्वाऽसु स्वगृह पित्रोर्वृत्तान्त प्राह तथ्यवत् । तच्छ्रुत्वा पितरौ तस्य तौ विस्मयमापतु ॥ १०६

स तु कालेन पुत्राश्च समुत्साद्य महायशा । शिवपुण्यानि भूरीणि कुर्वन्स्त्यमतन्द्रित ॥ १०७

शासन् सन् [illegible] बहु देशान् निष्कण्टकमरिंदम । महती श्रियमासाद्य महानासीत्स भूमिप ॥ १०८

तत्रे द्रोऽपि समासाद्य [illegible] दृष्ट्वा धरणीपतिम् । दत्वा कनकमालाश्च रत्न चिन्तामणि तथा ॥ १०९

संभाष्य त महात्मान वाचा मधुरया तदा । स्वलोक प्राप्तवानिन्द्र पश्चात्तस्यानुमोदनात् ॥ ११०

एव भुक्त्वा चिर काल पुत्रानुत्पाद्य पण्डितान् । पुत्रेषु राज्य निक्षिप्य प्रिया साकमरिन्दम ॥ १११

आरुह्य रत्नशोभाढ्यं विमानमति सुन्दरम् । शिवलोकमनुप्राप्य शिवस्यैव प्रभावतः ॥
मोक्षं च प्राप्तवान् पश्चात्परस्य ब्रह्मणो द्विजाः ॥ ११२

इति श्रीस्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे षट्चत्वारिंशोऽध्यायः ॥

---

॥ अथ सप्तचत्वारिंशोऽध्यायः ॥

शिवपुराण लेखनाय अशक्तोऽपि पुस्तकदानेन कैलास प्राप्तिः ॥

अथान्यां च प्रवक्ष्यामि कथां सर्वाघहारिणीम् । यच्छ्रुत्वा सर्वकामांश्च मोक्षञ्चाप्नुयुर्नरोत्तमाः ॥ १
पुरा स्वर्गमगाद्योगी वृषभाख्यो महानृषिः । जयन्तस्तं महात्मानं सुरेशतनयस्तथा ॥ २
समुत्थाय प्रणम्याशु प्रीणयित्वाऽर्घ्यपूर्वकैः । संस्थाप्य चासने रम्ये स्वयं बद्धाञ्जलिः स्थितः ॥ ३
तं वीक्ष्य प्राह योगीशः पिता कुत्र गतस्तव । इति तस्य वचश्श्रुत्वा जयन्तः प्राह तापसम् ॥ ४
विकर्तनं पार्थिवञ्च कृताक्षांभोः पापात्मनः । आरोपयित्वातिमहद्विमानमतिसुन्दरम् ॥ ५
शिवलोकं समायान्ति सम्प्रति प्रस्थितोऽमलः । तद्दर्शनार्थं मघवाश्रियैर्यौ तत्पुरोऽधुना ॥ ६
इति ब्रुवति माहेन्द्रे जयन्ते वचनं तदा । समागतश्शचीनाथस्तत्रैवाशु महायशाः ॥ ७
समागतमृषिर्दृष्ट्वा क्व गतोऽसीत्यभाषत । स तु प्राह प्रणम्यैनं शक्रो वृषभयोगिनम् ॥ ८
विकर्तनं पार्थिवञ्च शिवदूताश्शिवप्रियाः । शिवलोकं नयन्त्यद्य तद्दर्शने महोत्सवः ॥ ९
समागतस्तदर्थं वै गतोऽस्मि तपतांवर । अन्यथा त्वयि योगीशे साक्षादीशस्वरूपके ॥ १०
समागत्य स्थितेऽप्यत्र नोपेक्षा क्रियते मया । इत्युक्तवन्तं देवेशं योगीशः पुनराह हि ॥ ११
किं कृतं पुण्यमित्युक्तमेताभ्यां शिवदूतकैः । तदेतद्वद देवेन्द्र यथा तेऽद्य श्रुतं त्वया ॥ १२
इति तस्य वचः श्रुत्वा देवेन्द्रः प्राह तापसम् । कर्णकुब्जप्रदेशो यत्पुरं वीरहृन्नामकम् ॥ [illegible]
[illegible] राज्ञः कुमारोऽयं विकर्तो मन्त्रिणः परः । अक्षक्रीडारतौ नित्यं पितृवाक्यमतीत्य [illegible] ॥ १४
तावुभौ नगरं मुक्त्वा तद्रम्यं देशमापतुः । तथापि धूतमार्गैकनिरतौ दुष्टसंयुतौ ॥ १५
बहुहत्याकारिणौ नित्यमशेषजनवञ्चकौ । चोरैरनेकैस्संयुक्तौ चक्रतुर्धर्षणं भयम् ॥ १६
तदा कामपुरं रम्यमनेकाढ्यनिषेवितम् । लुण्ठयामासतुः पापौ बहुभिस्तस्करैर्युतौ ॥ १७
तदा सर्वेऽप्यमी चोरा गृहीत्वाऽशु पदार्थकान् । निर्ययुर्नगरात्तस्मात् पद्भिर्मार्गार्ति दुःखिताः ॥ १८
कश्चित्तण्डुलभारार्तः पेटिकामितरो वहन् । यतौ निर्ययतुर्दूरं पुरस्यास्य बहिः स्थले ॥ १९
क्षुधान्वितमिमं भारमवतीर्यातिदुःखितौ । क्षणं विश्राम्य तौ पश्चात्तमुद्वोढुमियेषतुः ॥ २०
मार्गानुवन्तौ तौ दृष्ट्वा पथिकं ब्राह्मणं तदा । शिरस्यारोपयैतं त्वमावयोरिति चोचतुः ॥ २१
इत्युक्त्वा पेटिकां मुक्त्वा शोधयामासतुस्तदा । तत्रैकं पुस्तकं रम्यमनक्षरमदृश्यत ॥ २२
तच्छिराकृत्य तौ पेटीं छादयित्वा यथा पुरा । शिरस्यारोपसमये ब्राह्मणः किञ्चिदुक्तवान् ॥ २३
क्षुधितोऽहं स्वयजानद्विजभक्तो महीसुरः । रुद्राक्षधारको नित्यं शिवलिङ्गार्चने रतः ॥ २४
भस्मोद्धूलितसर्वाङ्गस्सदाचारपरायणः । मह्यं तण्डुलदानेन तवाक्षय्यफलं भवेत् ॥ २५
इति तस्य वचः श्रुत्वा पार्थिवः प्राह तं पुनः । भूमौ निपतितानेतान् गृहीत्वा व्रज तण्डुलान् २६

न दास्यामि पुनश्चान्यांस्तण्डुलान् गच्छ मा चिरम् । विफलोऽपि प्राहैनं शिरस्यारोप्य पेटिकाम् ॥ २७
गृहाण पुस्तकञ्चैनदनक्षरमिहात्मवान् । इत्युक्त्वा ययतुर्देशं परमेतौ दुराशयौ ॥ २८
मत्तक्रीडारतौ नित्यं स्त्रियमेकां सुरूपिणीम् । उभावपि महापापौ क्रीडयामासतुस्तदा ॥ २९
तस्माद्वैषम्यमापन्नौ परस्परमिमावुभौ । अन्योन्यशस्त्रघातेन ममृतुश्च दुराशयौ ॥ ३०
शिवभक्तो द्विजस्सोऽपं तण्डुलांस्तच्च पुस्तकम् । गृहीत्वा स्वगृहं प्राप्य पक्त्वा तण्डुलकानमून् ॥ ३१
बुभुजे पुस्तके शैवपुराणानि विलिख्यसौ । पपाठानुदिनं भक्तान्मेळयित्वा च बहूनपि ॥ ३२
तेन पुण्यप्रभावेन शिवदूताधिराजया । आरोप्यातिमहच्चित्रं विमानमतिसुन्दरम् ॥ ३३
नृत्यद्भिस्स्वरसम्पन्नैर्गायद्भिः किन्नरैरपि । देवदुन्दुभिनिर्घोषैश्शिवलोकञ्च निन्यिरे ॥ ३४
तत्र देवाधिदेवस्य सन्निधौ तस्थतुर्मुदा । तौ दृष्ट्वाऽहं ततो देवं शङ्करं लोकशङ्करम् ॥ ३५
प्रणम्य ताभ्यां भक्ताभ्यां विस्मितोऽस्मि समागतः । तत्र तौ शिवसारूप्यं लब्ध्वा ब्रह्मादिसेवितौ ॥ ३६
स्वरूपमाप्तौ सुखेनैव तिष्ठतश्शङ्कराज्ञया । इत्युक्त्वा शिवपुण्यस्य माहात्म्यं केन सुमहन् (सुमहत्) ॥ ३७
श्रावते तावदत्रैवं वामदेवोऽब्रवीत् द्विजाः । पुनश्च वामदेवोऽसौ कथामेकां जगाद हि ॥ ३८
शैवं लोकमहं गत्वा परमाकाशमव्ययम् । तत्र दृष्ट्वा महादेवं साम्बं सगणमव्ययम् ॥ ३९
अनुभूय सुखं तेन ब्रह्मणा वै विपश्चिता । विसृष्टस्तेन कामाप्तौ कामरूपस्तु सञ्चरन् ॥ ४०
महामखमहश्शाद्वो द्वार गच्छन्विनिर्गतः । क्रमेणावरुह्य भूमिं लोकान् लोकानधो अधः ॥ ४१
भूमौ कुटकदेशस्य सौभाग्यमतिनाशकम् । अद्राक्षं तत्र सौभाग्यपुरमस्ति यथार्थवत् ॥ ४२
अतिघण्टाह्वयोऽत्रास्ति सकण्ठस्त्वमिना द्विजाः । क्रीडन् स बाल्ये वृद्धे राजवीथ्यामनारतम् ॥ ४३
कदाचिदेकं रुद्राक्षमदात्तस्मै बहुपुण्यदम् । तं प्रादाच्छिवभक्तस्य पुत्राय निजरातये ॥ ४४
स तं गृहीत्वा रुद्राक्षं गृहमभ्येत्य सादरम् । स्वपित्रे धृतरुद्राक्षमालालङ्कृतमूर्तये ॥ ४५
दर्शयित्वाभ्यनुज्ञातः कण्ठदेशे तमादधत् । अतिघण्टो द्विजोऽप्येष वृद्धत्वं कालपाकतः ॥ ४६
कालधर्मं गतो लोके अनामा दुरतिक्रमम् । दिव्यं विमानमारोप्य तं गणाश्शिवसंमताः ॥ ४७
शिवभक्ताय रुद्राक्षो दत्तो बाल्ये स्वमेन वै । तेन पुण्येन महता जितो लोकश्शिवस्य तु ॥ ४८
कैलासमथानिन्युश्शिवलोकमनामयम् । तत्र तत्र पथि ब्रह्मविष्णुपूर्वैस्सुरेश्वरैः ॥ ४९
संभावितो विमानेन भासयन् स दिशो दश । अतिघण्टोऽतिवेगेन शिवलोकमगादिति ॥ ५०

महेन्द्राय महायोगी वामदेवोऽब्रवीद्वचः (सूपमो ऋषिसत्तमः)।
शिवपुण्यस्य माहात्म्यं पश्येति च सविस्मयः ॥ ५१
कैलासमचलं प्राप क्षणात् स्वर्गतिर्वशी । श्रुतं मुनीश्वरैरत्र शिवपुण्यमतन्द्रितैः ॥
भवद्भिर्भाग्यवच्छ्रेष्ठैः किं भूयः श्रोतुमिच्छथ ॥ ५२

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे सप्तचत्वारिंशोऽध्यायः ॥

प्रोचुः प्राञ्जलयस्सर्वे प्रश्रयेण तपोधनम् । भगवन् जन्मसाफल्यं जातमद्य महामुने ॥ ३१
निरीक्षिता वयं हि त्वत्कृपया करुणात्मनः । वयं दारिद्र्यनिहता दरिद्रतनया यतः ॥ ३२
मस्माकमपि वै वाञ्छा भिन्ना कर्मानुसारिणी । अस्माभिरपि वाञ्छेयं प्राप्यते केन वै प्रभो ॥ ३३
वदेदानीमुपायं तत्त्वदन्तेवासिनामिह । इति पृष्टेषु तेष्वेवं प्रत्येकं पृष्टवान् यती ॥ ३४
तत्राग्रे प्रथमः प्राह ज्येष्ठो ज्येष्ठोऽहमप्यहं पुनः । वयमष्टौ समुत्पन्ना भ्रातरश्श्रुतिपारगाः ॥ ३५
कदा विवाह्य वै कन्यां सुखीस्यामितिमेमतिः । एकस्य बहुपुत्राणां पितास्यामिति वै मतिः ॥ ३६
अन्योऽसौ व्याधितोऽत्यर्थं व्याधिशान्तिमभीप्सति । विद्यामन्योतिमहतीं संपदन्येनवाञ्छ्यते ॥ ३७
योगी स्यामिति चैवान्यो योगिनस्त्वत्कृपा बलात् । अन्योऽसौ स्वशरीरेण शिवलोकमभीप्सति ॥ ३८
विलक्षवाञ्छा वाञ्छस्य भूलोके मुनिसत्तमाः । अस्माकमीदृशी वाञ्छा चित्तेषु परिवर्तते ॥ ३९
न शक्नुमो वयं प्राप्तुं वाञ्छां प्रत्येकमात्मभिः । तदुपायं वदेदानीं येन वाञ्छितमाप्नुमः ॥ ४०
श्रुत्वैतदखिलं तेषामभीष्टं स यतीश्वरः । विमृश्य मनसा भूयस्तानुवाच कृताञ्जलीन् ॥ ४१
यूयमष्टौ समुत्पन्ना ब्राह्मणाद्वेदपारगात् । कुरुध्वं शिवपुण्यानि शिवारामादिकान्यतः ॥ ४२
अचिरात्तेन पुण्येन प्राप्नुथमद्य वाञ्छितम् । तमाहुस्त्वं ते सर्वे वयं तन्नैवशंगताः ॥ ४३
अत एवहि जीवामो भुक्तिमात्रेण सांप्रतम् । क्षणश्चापि न शक्तास्सञ्चेतुं ब्रह्मन् कृतः पुनः ॥ ४४
कार्याणि पुण्यकर्माणि धनहीना इमे यतः । तस्मात्तत्सादृशोपायं कृपया वद नः प्रभो ॥ ४५
इति श्रुत्वा वचस्तेषां पुनः प्राह जितेन्द्रियः । यूयं शिवपुराणानि शृणुध्वं ब्राह्मणात्मजाः ॥ ४६
सादरं तेन पुण्यानि कृतान्येव न संशयः । यो वेद पठतु लोके स तद्विष्फलं लभेत् ॥ ४७
इत्युक्ते तेन सन्तुष्टास्सप्रश्रयममी पुनः । इदमप्यहि नश्चार्यं लभ्यमुक्त महामुने ॥ ४८
किन्तु शक्ता वयं नैव पठते दातुमप्यणु । ईदृशेभ्यः कथं पुराणानि क ईदृशः ॥ ४९
किं कुर्मोऽद्य महाभाग कथमेतद्भविष्यति । जितेन्द्रियः — इतो विदूरे नगरत्रमस्तोऽस्ति पुत्रकाः ॥ ५०
नाम्ना त्र्यपिपुरं तत्र कलिजित् द्विजसत्तमाः । ब्राह्मणाश्शिवभक्ताश्च सकलश्रुतिपारगाः ॥ ५१
वसन्ति ब्राह्मणास्तत्र ये ते सर्वेऽपि तादृशाः । तेषामेव सदाभ्यासे श्रोत्रियाणां महात्मनाम् ॥ ५२
सदा शिवपुराणानि कलिजित्पठति स्वयम् । धनाढ्यो बहुभाग्यश्च सर्वदा शिवपूजकः ॥ ५३
स तु नैव गृह्णाति कदाचापि शिवाश्रमी । ददाति शिवभक्तेभ्यो भोजनानि मुदान्वितः ॥ ५४
यूयं शिवपुराणानि शृणुध्वं तन्मुखाच्छ्रुतम् । इति तस्य वचश्श्रुत्वा सर्वे ते ब्रह्मचारिणः ॥ ५५
तं नमस्कृत्य सहसा निसृष्टास्तेनवै पुरा । त्र्यपिपुरं प्राप्य प्रणम्य कलिजिद्द्विजम् ॥ ५६
तदन्तेवासिनो भूत्वा वसन्तिस्म यथासुखम् । शतशिवपुराणानि पठतो द्विजसत्तमात् ॥ ५७
श्रोतृभिस्सह तत्रस्थैस्तैस्सर्वैर्ब्राह्मणैस्सह । श्रद्धया सहिता भूत्वा नित्य कलिजितोमुखात् ॥ ५८
शुश्रुवुर्हृष्टमनसो लब्धस्वामीष्टसिद्धयः । शिवापदानश्रवणाद्धर्षगद्गदकन्धराः ॥ ५९
ध्यायन्तश्शिवमेवैकमनसो मुनिबालकाः । नियमेनतु संकल्प्य मासमेकमतन्द्रिताः ॥ ६०
सर्वे कलिजितं भक्त्या पूजयन्तो दिवानिशम् । तेषांतु दुरितं सर्वं जन्मान्तरशतार्जितम् ॥ ६१
प्रक्षीणमभवत् क्षिप्रं कृष्णपक्षौषधीशवत् । पुण्यराशिस्समृद्धोऽभूत्पूर्वपक्षशशाङ्कवत् ॥ ६२
दुरितक्षयपुण्याभ्यां स्वस्वामीष्टञ्च लेभिरे । व्याधितो व्याधितोमुक्तः स्वर्णकान्तिरभूत् क्षणात् ॥ ६३
स्त्रीकामस्यापि पुत्रस्य ग्रामणीस्तत्पुरे धनी । विद्वांस्तद्वशस्तस्यैव चाभवन् कन्यकाश्शुभाः ॥ ६४
वव्रिरे तं पतित्वेन पित्राच प्रतिपादिताः । वैवाह्यं च धनं तत्र तस्मै तेन द्विजन्मना ॥ ६५

स सर्वं धनमादाय तामिस्सार्धं कृतार्थधीः । शंसञ्छिवपुराणानां श्रवणं फलमुत्तमम् ॥ ६६
पुरं प्राप्य सुखं तत्र मुमुदे चिरमद्भुतम् । अन्यस्यापि ददौ राजा धनं पुत्रार्थिनो बहु ॥ ६७
स तेनोद्वाह्य वनितां तस्यां पुत्रान् शुभान् बहून् । शीघ्रमुत्पादयामास पुराणश्रवणादहो ॥ ६८
विद्याकामोऽपि तनयस्तेषां मध्ये द्विजन्मनाम् । अवाप सर्वविद्यासु कौशल्यं कृपयेशितुः ॥ ६९
प्रससादास्य वाग्देवी स्वयमेव सरस्वती । राज्यैश्वर्यार्थिनोऽन्यस्य तनयस्य द्विजन्मनः ॥ ७०
ममार राज्याधिपतिः कश्चिद्राजा महत्तरः । अपुत्रतनयोऽत्यर्थं विषयोऽस्याप्यकंपत ॥ ७१
तदन्तरेऽस्य सचिवैर्धर्ममेभो महागजः । तमिमं ब्राह्मणसुतं सिंहासनमुपानयत् ॥ ७२
स तेन लब्धराज्योऽथ भुङ्क्तेसैश्वर्यमुत्तमम् । योगसिद्धिपरस्यापि सिद्धो योगश्शुभप्रदः ॥ ७३
स तेन सिद्धकायस्सन् स्वैरचारी बभूव ह । अङ्गुल्यग्रनिपातेन भूमेस्सर्वत्र कंपनम् ॥ ७४
परकायप्रवेशादिसिद्धयोऽस्याप्युपागमन् । यस्य साक्षाच्छरीरेण शिवलोकसमागमे ॥ ७५
जगाम तेन पुण्येन शिवलोकमनामयम् । सशरीरस्सुखं प्राप तत्र मोक्षमनन्तरम् ॥ ७६
एते शिवपुराणानां श्रवणेन द्विजात्मजाः । प्रपेदिरे ते सामीप्यं ब्रह्मभूयमनन्तरम् ॥ ७७
तस्माच्छिवपुराणानि श्रोतव्यानि मुमुक्षुभिः । एवमन्ये च बहवो लोके शिवपुराणतः ॥ ७८
श्रवणेन परां सिद्धिं प्राप्तास्सुखमयन्ततः । तत्प्रयाता महात्मानः प्रापिरे गतिमुत्तमम् ॥ ७९
श्रुत्वा शिवपुराणानि पशवः पक्षिणो मृगाः । प्रापुस्सहसा सर्वे शिवलोकमनामयम् ॥ ८०
सावर्णीश्रुतिर्विधा यद्येवमिति श्रुतम् । युष्माभिरपि सर्वत्र नात्र कार्या विचारणा ॥ ८१
यस्मिञ्छिवपुराणानि देशे विप्राः पठन्ति ये । तत्रस्थास्तृणगुल्माद्याः शिवलोकमवाप्नुयुः ॥ ८२
इतीश्वरेण कथितं देव्यै पुरेण सादरम् । तस्माच्छिवपुराणानि ये शृण्वन्ति पठन्ति च ॥ ८३
किमु वक्तव्यमेतेषां गतिरस्ति परेति च । भक्त्या शिवपुराणानि यत्र यत्र पठन्ति ये ॥ ८४
शृण्वन्ति च सदा मर्त्या भक्तिभावेन चेतसा । तत्र तत्र शिवस्साक्षात्सान्निध्यं कुरुतेतया ॥ ८५
कर्णे शिवपुराणानां श्रोतृणां परमेश्वरः । सपर्वेषा सदैवास्ते नात्र कार्या विचारणा ॥ ८६
पठतामपि जिह्वाग्रे पार्वतीशः प्रसन्नधीः । वसत्येव सदाकालं जगत्त्रयकृताश्रयः ॥ ८७
मर्त्या शिवपुराणानि शृण्वन्तमपि वा सकृत् । पठन्तमपि संपूज्य सामीप्यमवाप्नुयुः ॥ ८८
भक्त्या शिवपुराणानां वक्तारं द्विजसत्तमाः । श्रोतारमपि वा लोके योऽप्यर्चयेत्तयोः कृती ॥ ८९
तेन देवाश्च मुनयस्तर्पिता नात्र संशयः । ये ये शिवपुराणानि पठते शृण्वतेऽपि वा ॥ ९०
कन्याशतं प्रयच्छन्ति भूदानमपि वा च गाम् । हिरण्यं वस्त्रमन्यद्वा भूषणानि मुदान्विताः ॥ ९१
तेन पुण्येन सहसा शैवं पदमवाप्नुयुः । यानि यानि तु वै तेभ्यो मुदा दत्तानि भूतले ॥ ९२
तानि तानि शिवायैव दत्तान्येव न संशयः । ये लिखन्ति पुराणानि शिवस्य परमात्मनः ॥ ९३
पुस्तके फलके वापि भक्तिश्रद्धासमन्विताः । यावन्ति चाक्षराणि स्युः पत्रे पत्रे द्विजोत्तमाः ॥ ९४
एकैकस्याक्षरस्यैककल्पं शिवपुरे वसेत् । लिखित्वा ये पुराणानि पठते ब्राह्मणाय ते ॥ ९५
शिवभक्ताय दद्यैव कुलकोटिं समुद्धरेत् । इह भोगानसौ भुक्त्वा पुत्रपौत्रसमन्वितः ॥ ९६
काञ्चनेन विमानेन प्राप्ते शिवपुरं व्रजेत् । भक्त्या शिवपुराणानि प्रतिगृह्णाति ये द्विजाः ॥ ९७
ते स्वयत्नेन वै भोगान् भुक्त्वा निर्धूतकल्मषाः । व्योमयानेन दिव्येन शतनागायुतेन ते ॥ ९८
शिवलोकमनुप्राप्य मोदन्ते शिवसन्निधौ । ये शिवायतने विप्राश्श्रद्धया परया सह ॥ ९९

त्वा शिवपुराणार्थं सरस्वत्यालयं शुभम् । वितानाद्यैरलंकृत्य सुधालेपनपूर्वकम् ॥ १००
त्र तानि प्रतिष्ठाप्य गीतवादित्रमङ्गलैः । प्रत्यहं धूपदीपाद्यैर्नैवेद्यैः पूजयन्ति ते ॥ १०१
वाप्य कोटिलिङ्गानां प्रतिष्ठाफलमुत्तमम् । भुक्त्वा भूमण्डले भोगान् देवासुरसुदुर्लभान् ॥ १०२
काश्चनेन विमानेन किंकिणीजालमालिना । सिद्धविद्याधरादीनां लोकानभ्येत्य वै क्रमात् ॥ १०३
त्र तत्र महाभोगान् भुक्त्वा संभाविताश्च तैः । इन्द्रादिलोकपालैश्च प्रजानांपतिभिः क्रमात् ॥ १०४
ताहृताश्च ततः पश्चात् ब्राह्ममासाद्य वै पदम् । परार्धकालपर्यन्तं तत्र तेनापि सत्कृताः ॥ १०५
वैकुण्ठभवने पश्चान्महाविष्णुसमाश्रितम् । उषित्वा वैष्णवान् भोगाननुभूय चिरं द्विजाः ॥ १०६
स्य चाप्यायुपामन्ते स्कन्दलोकमनन्तरम् । उमालोकश्च गोलोकं क्रमेणाभ्येत्य कालतः ॥ १०७
शिवलोकमनुप्राप्य मोदन्ते शिवसंनिधौ । तस्माच्छिवपुराणानि श्रोतव्यानि द्विजोत्तमाः ॥ १०८
लिखश्च पठितव्यानि पुस्तकेषु विलिख्य च । दातव्यानि द्विजाग्रियेभ्यश्शिवभक्तेभ्य आदरात् ॥ १०९
तैरेव प्रतिगृह्यासु पठितव्यानि सन्ततम् । भक्त्या पुराणानि पठन्ति न पठन्ति च (पाठयन्ति पठन्तिवा) ॥ ११०
शृण्वन्ति च न शृण्वन्ति (श्रावयन्ति) ते वै निरयगामिनः । सदाशिव पुराणानि शिवभक्तैर्मुदायुतैः ॥ १११
पठितव्यानि भक्त्या वै श्रोतव्यानि पुनः पुनः । मलं शङ्करभक्तानामन्यशास्त्रावलंबनैः ॥ ११२
भगवत्याश्च माहात्म्य पद्यश्रवणेन किम् । न पठन्ति पुराणानि न शृण्वन्ति च ये द्विजाः ॥ ११३
शिवभक्ता अपि च ते शिवद्रोहीसमाः स्मृताः । ये शृण्वन्तीदमाख्यानं श्रद्धयाश्च पठन्ति वै ॥ ११४
तेषां सर्वपुराणानां पठतां फलमीरितम् । एतस्याख्यानमात्रस्याप्यर्थज्ञो ब्राह्मणोत्तमाः ॥ ११५
शिवभक्तोऽप्यथान्यो वा सर्वस्माल्लोकपावनः । स एव सर्वतीर्थेषु स्नातो यज्ञेषु दीक्षितः ॥ ११६
शिवभक्तोऽप्यथान्यो वा सर्वस्माल्लोकपावनः । शिवस्यविष्णोर्देवानां ब्रह्मणश्चापि वा प्रियः ॥ ११७
सर्वलोकप्रियश्चैव सर्वलोकाधिपश्च वै । शिवस्यविष्णोर्देवानां ब्रह्मणश्चापि वा प्रियः ॥ ११७
तस्मादेव मुनीश्वराः प्रतिदिनं शैवानि भक्त्या परं श्रेयः प्राप्तिपथानि कर्णपुटकैर्युक्तैः पुराणान्यहो ।
पेयान्येव विमुक्तये नरवरैर्भक्तैरयत्नेन ते मुक्तिं यान्ति शिवेन सारूप्यमथवा सायुज्यमन्ते ध्रुवम् ॥ ११८

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे अष्टचत्वारिंशोऽध्यायः ॥

---

॥ अथ एकोनपञ्चाशोऽध्यायः ॥

शिवद्रव्यापहारिणां पुत्राणामपि राज्ञा वधः ॥

ऋषयः —

कथितानि त्वया सर्वाण्यस्माभिश्च श्रुतानि च । कृतार्थाः स्म वयं सूत त्वया वै नात्र संशयः ॥ १
शिवद्रोहस्तु संप्रोक्तस्त्वया सूत प्रसङ्गतः । शिवद्रोहस्तु कोवात्र वर्णयस्व यथातथम् ॥ २
यस्य नास्ति प्रतीकारः प्रायश्चित्तशतैरपि । पृष्टः कोवा शिवद्रोह इति सूतो महर्षिभिः ॥ ३
प्राह तान् सकलान्वीक्ष्य सर्वशास्त्रार्थकोविदः । शिवस्य च शिवायाश्च सुब्रह्मण्यविनायकयोः ॥ ४
गुरुभक्तगणानाश्च द्रव्याण्येषां द्विजोत्तमाः । द्रव्याण्युपेक्षया प्रज्ञाहीनमसत्यकादिना ॥ ५
विनाशयेद्यो मूढात्मा शिवद्रोही स ईरितः । उपेक्षा नाम सा प्रोक्ता येषां ह्रियते धनम् ॥ ६
तद्विलोक्याप्यतिष्ठेद्यस्तस्य प्रोक्ता मनीषिभिः । प्रज्ञाहीनमिदं प्रोक्तं ह्रियमाणं परैरदः ॥ ७
यो वै विचारयेन्मूढो न सम्यक्तस्य पापिनः । एतेषां परिचर्यायामलसत्वापि तत्स्मृतम् ॥ ८
एषामपहरेद्देवस्य स्वय भक्षणमीरितम् । एवं धनं धान्यजातं वस्त्रमामरणं तथा ॥ ९

आलयं भवनं क्षेत्रं वृक्षानारामकानपि । वापीकूपतटाकांश्च पदार्थानेवमादिकान् ॥ १०
स्वयं विनाशयेद्यो वै विनाशकमतोऽथ वा । विनाशकान्तेवासश्च विनाशकनिरीक्षणम् ॥ ११
श्रवणश्च तथा तस्य स्पर्शनं पापिनस्तथा । तद्वाक्यपालनं तद्वच्छिवद्रोहाः प्रकीर्तिताः ॥ १२
एतान् यद्यपि शंभ्वादीञ्छिवस्थानान्यपि द्विजाः । वेदान् विभूतिं रुद्राक्षमागमानपि शाङ्करान् ॥ १३
तथा शिवपुराणानि शिवसंबन्धकान् परान् । विनिन्दयति मूढात्मा शिवद्रोही स ईरितः ॥ १४
विनिन्दकस्य निकटे वर्तते श्रवणं तथा । वीक्षणं स्पर्शनं तस्य तेन संभाषणं तथा ॥ १५
तद्वाक्यश्रवणं तद्वच्छिवद्रोहस्स ईरितः । एताञ्शिवेशाने पथ्यां तीर्थे पुण्यवनेऽपि च ॥ १६
अन्येषु शिवसंबन्धस्थलेष्वथ विरोधिषु । उच्छिष्टं यः करोत्यत्र शिवद्रोही स ईरितः ॥ १७
कुर्वतस्तदुच्छिष्टं वीक्षणे स्पर्शने तथा । तेन संभाषणश्चैव शिवद्रोहास्समीरिताः ॥ १८
एवमादि शिवद्रोहं कृत्वा केचन पापिनः । प्राप्येह भव (भय) दुःखानि यान्त्यन्ते यमकिङ्करैः ॥ १९
अत्रापि नरकेष्वेतान् वक्ष्ये कांश्चन भूसुराः । यज्ञेशाधिपः कश्चित् कीलकाख्यो महीपतिः ॥ २०
राजगिरीयाख्यं सोऽयं नगरं शास्ति भूपतिः । तस्यासंस्तनयाश्शूराः पापजित्प्रमुखा द्विजाः ॥ २१
पापजिच्छूरजिच्चैव वीरजित्योरजित्तथा । चत्वारस्ते समुद्दिप्तास्सर्वयुद्धविशारदाः ॥ २२
तपसा तोषयित्वैते श्रीरुद्रमरिमर्दनम् । बलं प्राप्य परं सर्वशत्रुसंहरणक्षमम् ॥ २३
जित्वा दिशश्च सकला राजसूयं महाक्रतुम् । चक्रुर्यैर्विपसंभारैश्चत्वारोऽपि महाबलाः ॥ २४
पितृवाक्य मज्जवैव नित्यं तिष्ठन्ति पण्डिताः । कीलकोऽपि तदा तेषां पिता गोकर्णकं ययौ ॥ २५
शिवरात्रौ महादेवं सेवितुं परमेश्वरम् । शिवरात्रिव्रतं कृत्वा तत्रासौ ध्यवसत्सुधीः ॥ २६
षण्मासान्नियमेनैव ध्यात्वा सांबं त्रियंबकम् । ततः स्वदेशं संप्राप्य मर्त्यैरतिबलैरयम् ॥ २७
चत्वारस्तनयास्तस्य पितुरग्रे प्रतस्थिरे । तैः प्राप भवनं रम्यं सर्वतोपारदैस्सह ॥ २८
[illegible] सिंहासने स्थित्वा प्रेरयित्वा भटान् स्वकान् । स्वपुत्रान् प्रेषयित्वाऽयं स्वस्वधेद्म [illegible] भूपतिः ॥ २९
अन्तः पुरं स्वयं गन्तुमिच्छैव मतिमानयम् । तथा तत्पुरमध्यस्थं शिवराजगिरीश्वरम् ॥ ३०
ये पूजयन्ति विप्रेन्द्रास्तैर्यादिशिवविभाविताः । आत्मपुत्रैस्ते नृपं द्रष्टुं शिवपूजापरायणम् ॥ ३१
तदा यवन्ध तानाजा शिवविप्रान् समागतान् । स्वागतं वो महादेवपूजासंसक्तचेतसाम् ॥ ३२
पूजा चलति किं शंभोः पूर्ववन्न्यूनवर्जितम् । एवं क्षितिभुजा पृष्टा अवदंस्ते शिवद्विजाः ॥ ३३
त्वत्प्रभावात्सत्येव पूजा न्यूनविवर्जिता । प्रसन्नो नितरां शंभुः पूर्ववद्राज ते किल ॥ ३४
पुत्रैस्तव शिवद्रोहः कृतः खलु महीपते । इति तेषां वचः श्रुत्वा पुनः प्राह महीपतिः ॥ ३५
कोवा द्रोहः कृतस्तैस्तु शिवस्य परमात्मनः । स्वकशक्त्या वक्तव्य भवन्तः पारमेश्वराः ॥ ३६
इति राज्ञो वचश्श्रुत्वा ते प्रोचुर्वचनं तदा । वीरजितस्य पुत्रोऽप्यभिषिक्तानां शतद्वयम् ॥ ३७
तृतीया स्वपुदैशस्य सकाशाडम्बकभृतम् । विक्रयश्च तदास्मभिर्विशवद्रोहो भवेदिति ॥ ३८
तच्छ्रुत्वा वचो हार्षिदक्षिकारी द्रुतमवान् । कथं विचिन्त्य प्रमुखास्तत्क्रियानिरता नृपि ॥ ३९
राजद्रव्यमिदं सर्वं राजा वेदप्रति स्वयम् । तदा कोपा भवेद्दोष इति चोचुर्दुराशयाः ॥ ४०
एवमुक्त्वैव ते पापा दृष्टा मन्यन् खलु । तदेमानुसृत्यैव गताः स्तो धरणीपते ॥ ४१
अथोपाभेतदखिलं वृत्तं वीरजितस्तदा । सोऽयमश्चकार चोपेसां पुत्रस्ते प्रेरको यतः ॥ ४२
तदा दुःखेन संयुक्ता निर्गताः स यथातथम् । पापाविशुद्धिरस्माकमस्मात्केन भवेदिति ॥ ४३
द्रवूणामपुत्रायेयमिति चिन्ता बभूवद्धि । घोरजिच्छाहरं वृत्तं द्रुममेकं समुद्यतम् ॥ ४४

ञिवा चकार दुर्बुद्धिर्यागशाला मनोहराम् । तदानीं त प्रति प्रोक्तमस्माभिर्वंचन सुधा ॥ ४५
छेत्तव्योऽय त्वया वृक्षो न शिवालयमण्डप. । महान्दोषो भवेन्नून समतानामिहाधुना ॥ ४६
इत्थ निशम्य वचनमस्माक धोरजित्पुन. । क्रियते यागशाला हि कोदोषस्ते न वा भवेत् ॥ ४७
इत्युक्त्वा प्रेषयामास चास्मानुल्लङ्घ्य मद्वचः । पूर्वैद्युः प्रेषितश्शूरजिता कृष्णस्तु तावकः ॥ ४८
शिवारामप्रसूनानि निनायास्मै भटः स्वयम् । आदाय तानि पापात्मा चचार सह भार्यया ॥ ४९
तदा कृते निषेधेऽपि न च शुश्राव पापवान् । मस्मिन्दिनेऽपि पुष्पाणि चाहृत्य स ययौ गृहम् ॥ ५०
एवमेभिस्त्रिभिर्द्रोह शिवस्य परमात्मनः । कृत समीक्ष्य पुण्यात्मा शिवकार्यविधायकः ॥ ५१
वीरसेनो विरक्तोऽय प्राणांस्तत्याज भूपते । पोषकश्शिववृक्षाणा मार्ताण्डोऽपि ममार हि ॥ ५२
विक्रमाख्यो जहौ प्राणान् सदाशिवपरायणः ॥ ५३
तथा पुष्पघन यस्तु विचारयति केसरी ।
अथ प्राणान् परित्यक्तु शिवद्रोहतया नृप ॥ ५४
एव प्राणान्महात्मानस्त्रयस्तत्यजुरुज्ज्वला ।
महाकुमारास्तेऽस्याश्रमाणस्यैवावच वत । एतच्छ्रुत्वा वचो राजा चकार श्रोत्रयो. करौ ॥ ५५
पापजिन्नाम तनय समाहूय महीपति । आनयामास तान् पुत्रास्तेन त्रीनपि तान् भटान् ॥ ५६
परित्यर्यरतान् पापाञ्छ्रसाल पुरत स्वयम् । एवमाज्ञा विधायैषा राजा प्राप्येश्वरालयम् ॥ ५७
पूजागृह यागशाला भित्त्वा वृक्षान्मपीठकाः । चकार शाङ्कर धाम परम नूतन महत् ॥ ५८
तस्य कोशगृहद्वारमुद्घाट्याथ च वत्सनम् । नरसर्वं वहसानीय मुण्डमालां मनोहराम् ॥ ५९
किरीटमन्याभरण चकार स महीपतिः । ममिषेकञ्च नैवेद्य कारयामास वै महत् ॥ ६०
तमलङ्कारयामास भूषणैस्तैर्महेश्वरम् । कारयेन विधृति पश्चाच्छिवद्रोहस्य भूपतिः ॥ ६१
शिवकार्याय ये वेह सत्यजुर्जीतकिल्बिषा । विनिष्कृतिर्भवेत्तेषा केन वेति विचिन्तयन् ॥ ६२
प्राणत्यागं विना नैव निष्कृतिश्च भवेदिति । विचार्यैवैव मनसा वह्निकुण्डे महानलम् ॥ ६३
प्रज्वाल्य निश्चयितवाऽय कर पापजितस्तथा । भार्यया रक्तवस्त्राश्च गृहीत्वा करमात्मवान् ॥ ६४
पपात भावयन्तश्शिवमेव परात्परम् । तदा शीतोऽभवद्वह्निर्जलयन्तस्य निश्चयात् ॥ ६५
ये तत्यजुश्शिवद्रोह दृष्ट्वा प्राणान्महायशा । वीरसेनश्च मार्ताण्डस्तथा विक्रमकेसरी ॥ ६६
तान् ददर्शाशु पुरतश्शङ्करात्समुत्थितान् । तदा पपात वृष्टिश्च पौष्पी देवकरच्युता ॥ ६७
देवदुन्दुभयो नेदुर्जितांशुभिर्महारवाः । तदा प्रसेदिवाञ्छम्भुर्वृष कैलाससन्निभम् ॥ ६८
आरुह्य चाद्रिजाक्रान्तो वृतो नानाविधैर्गणैः । प्राह गम्भीरया वाचा राजान पीड्य शङ्कर ॥ ६९
अहो तव मति. पुण्या सर्वलोकातिशायिनी । त्वत्समो नास्ति लोकेऽस्मिन्नपि भक्तिश्च तेऽतुला ॥ ७०
तस्मान्निष्कण्टक राज्य कृत्वा कालमनेककम् । पुत्रान्विनीतानुत्पाद्य कृत्वा पुण्य मदीयकम् ॥ ७१
भुक्त्वा भोगाश्च विपुलानन्ते प्राप्नुहि मत्पदम् । इत्युक्त्वा त महादेवस्तत्रैवान्तरधीयत ॥ ७२
प्रसेदिवांस्ततो विष्णुः प्रसन्ने च महेश्वरे । ददौ विमानमेतस्मै सभार्याय महात्मने ॥ ७३
ततः प्रसन्नश्शक्रोऽस्य पुत्रस्य गजमुत्तमम् । दत्वा पापजिदाख्यस्य कीर्तयन्वचनैरमुम् ॥ ७४
आशीर्भि योजयित्वाशु स्वर्लोक प्राप्तवान् हरि. । एव देवैर्वृतस्समन्तोपेष गृह गतः ॥ ७५
पुनर्विनीतानुत्पाद्य पुत्रान्धर्मार्थकोविदान् ॥
पुत्रेण भार्यया सार्कं भुक्त्वा भोगानखण्डितान् ।
शिवपुण्यानि भूरीणि कृत्वाऽन्ते मोक्षमाप्तवान् ॥ ७६

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे एकोनपञ्चाशोऽध्याय. ॥

॥ अथ पञ्चाशोऽध्यायः ॥

देवालयस्थित कदलीफलापहारात् नरकादि दुःखप्राप्तिः ॥

शिवालयभीकार्यार्थमिष्टकाश्च तथा सुधाः । संपादिता इष्टद्रोही प्रायश्चित्तविवर्जितः ॥ १
शिवालयार्थमानीता इष्टकाश्च सुधायपि । समादिदेशानयेति धीरजिद्राजनन्दनः ॥ २
तासां यो हारको हारिर्नाम वीरजितो भटः । आनीता यैश्च भृत्यैस्ता भटास्तेपीह भूतले ॥ ३
दण्डितास्तस्य पर्वसे परत्र च कृतागसः । नीता यमभटैश्शीघ्रमतिघोरे निपातिताः ॥ ४
अद्याप्यनुभवन्त्येव घोरास्तास्ताश्च यातनाः । शिवारामतरुच्छेदशिवद्रोहस्य भूयसः ॥ ५
छेदनार्थं कृतादेशो घोरजिद्राजनन्दनः । अधिकारी विक्रमाख्यश्छेत्तारश्शतपूर्वकाः ॥ ६
तेपीह निगृहीताश्च नरकेच निपातिताः । यमदूतैर्महाघोरैरतिघोरे महत्तरे ॥ ७
अद्यापि यातनाभिस्ते पीड्यन्ते बहुधा भटैः । उद्यानपुष्पहरणमहाद्रोहस्य शूलिनः ॥ ८
शूरजिन्नृपतिस्तस्य भार्या च कुसुमान्यथ । भटैरानीय पुष्पाणि दधतुर्निशि तावुभौ ॥ ९
तौ तयोरधिकारीच तीक्ष्णाश्यस्तद्भटाश्च ते । अद्यापि पीडितास्सर्वे यमदूतैः परत्र च ॥ १०
बहुधा पीडितास्तीव्रे निरयेच निपातिताः । अद्यापि यातनास्तीव्रा भुञ्जते दारितकुक्षितैः ॥ ११
एते सर्वे दुरात्मानः कल्पकोटिशतादपि । पारं न निरयांबोधेः प्राप्नुवन्ति कदाचन ॥ १२
सर्वेषामपि पापानां प्रायश्चित्तं श्रुतौ स्मृतौ । निर्दिष्टं हि पुराणैश्च मुनिभिश्च महत्तरैः ॥ १३
शिवद्रोहस्य चैकस्य प्रायश्चित्तं मुनीश्वरैः । महत्तरैर्न निर्दिष्टं शास्त्रे वेदेऽपि वा क्वचित् ॥ १४
शिवद्रोहीह घोरेषु नरकेषु च यातनाः । अनुभूयैव कल्पानामनन्तानि निरन्तरम् ॥ १५
तत्रैव पच्यते कष्टं हा हा द्रोहस्य वैभवम् । ये हरन्तीह देवस्य फलानि कदलीतरोः ॥ १६
तेषां वदिष्ये कथां सर्वे शृणुध्वं सावधानतः । मद्रदेशे महीपालो विपाशा नाम नामतः ॥ १७
सत्यसन्धो महाधीरस्सर्वायुधविशारदः । धर्मेण रक्षतस्तस्य पृथिवीं पृथिवीपतेः ॥ १८
कदाचिन्नारदः प्राप सभामिन्द्रीमिवाङ्गिराः । तमागतमृषिं दृष्ट्वा सहसोत्थाय भूपतिः ॥ १९
प्रणम्य परया भक्त्या ददावासनमुत्तमम् । उपविष्टं मुनिं प्राह प्राञ्जलिर्विनयान्वितः ॥ २०
स्वागतं ब्रह्मपुत्राय महते भवतेऽधुना । वयं कृतार्था भगवन् दर्शनेन तव प्रभो ॥ २१
तथापि ते मुखांभोजाद्गिरं शुश्रूषुरादरात् । आज्ञापय महायोगिन् प्रसीद करवाणि किम् ॥ २२
समागतं त्वयेदानीं कुतः कार्यमिहास्ति किम् । इति ब्रुवन्तं राजानं नारदः प्रत्यभाषत ॥ २३
नान्यदस्ति महीपाल त्वया संभाषणादृते । किन्तु त्वयाथ सन्देशं वक्तुकामस्समागतः ॥ २४
ऐन्द्रीं सभां सुधर्माख्यामध्यास्ते जनकस्तव । भवन्तं मन्मुखेनाह पुण्यकृत्यं कृतीनृप ॥ २५
कुरु पुण्यमहोरात्रं पुण्येन स्वर्गतिर्नृणाम् । उक्त्वेति नारदो भूपमथ तस्य पुरोहितम् ॥ २६
अन्तिकस्थं समालोक्य प्रोवाच ब्रह्मवित्तम । पुरोधास्त्वं महीभर्तुस्त्वत्पितुश्शृणु भाषितम् ॥ २७
[illegible] यमभटैर्बाध्यमानो वचोऽब्रवीत् । मामालोक्य महीं यान्तं प्रणम्य स कृताञ्जलिः ॥ २८
मुने राज्ञो विपाशुस्त्वं यास्यसि यदि तत्सदः । तत्र मे तनयो [illegible]स्तस्य राज्ञः पुरोहितः ॥ २९
भजिताख्यो विनीतात्मा वर्तते तेन सत्कृतः । तस्मै कथय सन्देशं मदुक्तं मुनिसत्तम ॥ ३०
श्रुण्वन्तमित्थं बाल त्वमपृच्छमनन्यधीः । ददामि तव पुत्राय यद्धकरणमाहृतः ॥ ३१
अहं तत्र गमिष्यामि विपाशुः पृथिवीपतेः । सभां तत्रापि ते पुत्रं दृष्ट्वा ब्रूयां त्वयेरितम् ॥ ३२
इति ब्रुवन्तं मामाह पिता तव सुदुःखितः । भयोत्कोशस्वरूपेण धनानि प्रतिगृह्णता ॥ ३३

गृहीतानि पुनर्लोभात् पुण्यछेदोऽपि नादृतः । पुत्रोऽपि हृदयं मेऽद्येत्यमुं नाचिन्तयत्तदा ॥ ३४
धनानि तानि सर्वाणि बहून्यपि गृहान्तरे । स्थूणमूले विनिक्षिप्य नान्यस्मै प्रोक्तवानहम् ॥ ३५
इदं कृतमिदं कार्यमिति चिन्ताकुलन्तु माम् । गृहीत्वा सहसा निन्युर्यमदूता यमान्तिकम् ॥ ३६
बाधन्ते मां दिवारात्रं यमदूता भयङ्कराः । तदद्यास्तु नमस्तुभ्यं तद्गृहीत्वा धनं बहु ॥ ३७
पुत्रपुण्यं कुरुष्वेति वदशीघ्रं तु मा चिरम् । भूदानं कन्यकादानं गोदानानि बहून्यपि ॥ ३८
तिलधान्यादि दानानि दद्स्वेति वद प्रभो । पुनश्च गङ्गाप्रभृतिनदीतीरेषु पुत्रक ॥ ३९
सहस्रभोजनं कुर्याद्ब्राह्मणेभ्यो मुदान्वितः । सघृतं ससितापूपं सूपव्यञ्जनपूरितम् ॥ ४०
येन तेनाप्यहं तीर्थदानतः स्वर्गमाप्नुयाम् । तथाद्य नारदमुने कथयस्व नमस्तव ॥ ४१
मयेति पित्रा ते प्रोक्त तत्कुरुष्व यथामनः । इति राजानमपि तं पुरोहितसुतं मुनिः ॥ ४२
उक्त्वा जगाम त्रिदिवं सद्यः स्वैरगतिस्तदा । विधाता राजशार्दूलस्सोऽपि तस्य पुरोहितः ॥ ४३
अग्रमनुविलपं भूयो भूयः स्मृत्वा मुनेर्वचः । चक्रतुस्तौ मतिं पुण्ये स्वपितृर्मोक्षगौरवात् ॥ ४४
अजितः स्वगृहस्थूणमूलादुद्धृत्य तद्धनम् । राज्ञापि च पुनर्दत्तं पुण्यार्थं भूरि तद्धनम् ॥ ४५
अजितस्तत्सर्वमेवैतद्गृहीत्वा त्वरयान्वितः । गङ्गादीनां नदीनाञ्च तीरेषु ■ पुरेषु च ॥ ४६
पुण्यक्षेत्रेषु सर्वेषु काशीकाञ्चीपुरादिषु । भोजयामास वै नित्यं ब्राह्मणानां सहस्रकम् ॥ ४७
दीनान्धकृपणानाथदरिद्राणां यथेप्सितम् । भूदानानि च गोदानान्ययुतानि ददौ मुदा ॥ ४८
कोटिकन्याप्रदानानि ब्राह्मणेभ्यो ददौ कृती । मार्गे मार्गे प्रपां कृत्वा जलदानमकारयत् ॥ ४९
पुष्पारामाणि भूरीणि रोपयामास तद्धनैः । समुद्रगनदीमार्गेषु तडागानपि भूरिशः ॥ ५०
खात्वा खात्वा च तत्रापि रोपयामास वै द्रुमान् । एकस्मिंस्तीर्थतीरेऽसावेकस्मिन्दिवसेऽजितः ॥ ५१
यदकार सकृत्पुण्यं तेनैव सुकृतेन वै । तत्पिता तेन पुण्येन नरकात्त्रिदिवं गतः ॥ ५२
दिव्यं विमानमारुह्य दिव्यस्त्रीशतसंकुलम् । अनुभूय चिरं कालं स्वर्गभोगमनुत्तमम् ॥ ५३
शेषेषु दिवसेष्वेषु यानि पुण्यान्यकारयत् । तेनोत्तरोत्तरं स्वर्गे पिता लेभेऽधिकं सुखम् ॥ ५४
एवं नदीनां तीरेषु कृत्वा पुण्यान्यसौ चिरम् । कालेन नर्मदां प्राप्य विन्ध्यपादे महत्तराम् ॥ ५५
स्नात्वा सन्तर्प्य देवर्षीन् कृतसन्ध्याविधिर्द्विजाः । दानान्यपि च दत्वाऽत्र ब्राह्मणानाञ्च भोजनम् ॥ ५६
एकस्मिन्दिवसे तत्र ब्राह्मणानाञ्च भोजनम् । प्रवर्तयत्यजिते तस्मिन् घृतसूपफलैस्सह ॥ ५७
नालमासीत् द्विजाग्र्याणां केषां चित्कदलीफलम् । ततस्सर्वेषु भुञ्जत्सु सूर्वो तिष्ठत्सु वै तदा ॥ ५८
अजितो दुःखितो भूत्वा समाहूय पुरोहितम् । शीघ्रं विप्रवरेदानीं कदलीफलमानय ॥ ५९
दातं नालमभूत्सद्यो यत्र कुत्रापि माचिरम् । उक्तवन्तमुवाचेदमत्रेदानीं सुदुर्लभम् ॥ ६०
अन्यग्रामात्तदानीतं श्वः परश्वो भविष्यति । भोक्तव्यं ब्राह्मणैरत्र नियमोऽत्र कथं भवेत् ॥ ६१
विन्ध्याटव्यां विशेषेण येषां नालमभूत्फलम् । तेभ्यः प्रयच्छ द्विगुणं श्वः परश्वो विशङ्कया ॥ ६२
इति वादिनि वै तस्मिन्नजितस्य पुरोहिते । अजितस्तं पुनः प्राह कण्ठे निक्षिप्य वै करम् ॥ ६३
अवश्य व्रतभङ्गो मे न भवेयेन केनचा । तथा कुरु ममाभीष्ट पुरोहित नमोऽस्तु ते ॥ ६४
इत्युक्ते तेन वै तस्मिंश्चिन्तामतिमहीयसीम् । अवाप्तवन्तं परममाधिनाच्च समन्वितम् ॥ ६५
अन्तिकस्थो द्विजः प्राह पुरोहितमिदं वचः । पश्यात्र पश्चिमे भागे वृक्षषण्डसमाकुलम् ॥ ६६
भीमेश्वरमिदं स्थानं भीमेश्वरसमाह्वयम् । अनेककदलीषण्डैरलङ्कृतमिदं पुरम् ॥ ६७

तत्र वै शतनिष्कस्याप्यस्त्येव कदलीफलम् । सुतीर्थाख्ये पत्तनेवं लब्ध्वा स पुरोहितः ॥ ६८
स्वभृत्यान् प्रेषयामास दत्त्वा बहुपणं मुदा । गत्वा तत्रेश्वरस्थाने तदीयाः पुरुषास्तदा ॥ ६९
पणार्थं पूजकानेते पप्रच्छुः कदलीफलम् । पूजका नोऽद्य नैवालं देवायाश्च परमेशितुः ॥ ७०
नैव दद्मः फलं यूयं गच्छतेत्यवदन्रुषा । ततस्ते सहसाभ्येत्य फलार्थं ये समागताः ॥ ७१
राजाधिकारिसविधे पणान् दत्त्वा फलार्थिनः । तेन साकं समागत्य पुरुषानिदमब्रुवन् ॥ ७२
विद्यन्ते चोऽत्र कदलीफलानि सुबहून्यहो । इत्युक्त्वोपरि संस्थाप्य पणान्राजोपसेवकाः ॥ ७३
एकस्मिन् कदलीवृन्दे यावन्ति फलितानि हि । तान्यादाय महाप्रीत्या ब्राह्मणेभ्यः फलान्यदुः ॥ ७४
यावता नालमभवद् ब्राह्मणानामशङ्कितम् । पुरोहितोऽधिकारी च मृत्ताश्वस्थया च तौ ॥ ७५
यावदीशार्पिका राज्ञे न दद्युस्तत्रान्विताः । तावद्धृत्वाऽद्य वै राज्ञे पूर्वमाचख्यतुर्भयात् ॥ ७६
अजितस्तु श्रुत्वाऽन्नप्रदानस्य वैभवम् । अजितोऽथमातिप्रीत्या तीर्थे तीर्थे च सर्वदा ॥ ७७
अन्नदानपरोऽत्यर्थं स्वर्णदानपरश्च वै । मृष्टान्नं ब्राह्मणेभ्यो हि प्रयच्छति फलीतराम् ॥ ७८
तद्वर्षमथ पूर्ववद्भीमेश्वरशिवालये । शतन्दद्मपणान् दत्त्वा विक्रीतं कदलीफलम् ॥ ७९
भुञ्जते स्म द्विजास्सम्यक् पूर्ववन्नर्मदातटे । तदुपश्रुत्य राजापि सन्तोषेण पुरोहितम् ॥ ८०
अधिकारिणमप्याशु प्रेषयामास पूर्ववत् । अजितस्यापि सुप्रीतो ददौ प्रियमुपायनम् ॥ ८१
तौ गृहीत्वा जग्मतुश्च राज्ञा दत्तमुपायनम् । गतयोस्तु ततः पश्चाद्भीमेशालयपूजकाः ॥ ८२
राजानमेत्य तत्कर्म समाचख्युश्शुचाकुलाः । राजन् कदाचिदपि वा शंभोस्तु कदलीफलम् ॥ ८३
अभिषेकश्च नैवेद्यमपवित्रं भवेदिति । अस्माभिर्नैव विक्रीतमभिषेकनिवेदने ॥ ८४
यथा भीमेशितुर्विघ्नो न भवेत्तत्तथाकुरु । अवमत्याद्य सन्नर्वाजितस्य पुरोहितः ॥ ८५
सहाधिकारिणाऽभ्येत्य दत्त्वा द्रम्मपणान् बलात् । छित्वा गुच्छं स्वहस्ताभ्यां अगमत् पृथिवीपते ॥ ८६
इयतापि च कालेन न दृष्टं पुनरीदृशम् । शिवद्रोहमजानानौ निन्यतुः कदलीफलम् ॥ ८७
श्रुत्वापि राजा तद्वाक्यं तूष्णीमास्ते सवन्निव । दत्ताः किल पणास्तेन देवाय क्रयतो धनम् ॥ ८८
दत्तः पणो नैवमिति प्रेषयामास तान्नृपः । तमेव वादिनं भूपं निन्दन्तो मनसाऽर्चकाः ॥ ८९
अथमेव शिवद्रोही न तावदिति शुचान्विताः । जग्मुर्भीमेश्वराभ्याशं राजाऽपि भवनान्तरम् ॥ ९०
राजाऽपहारिणस्सर्वान्मुमोचयदशङ्कितः । तेन पापेन महता पितरं तस्य भूभुजः ॥ ९१
नरके पातयामासुरिन्द्रलोकात्सुदारुणे । सोऽपि राजा तदारभ्य पीडितो राजयक्ष्मणा ॥ ९२
अन्तरेऽप्युदितादेथ ममार पृथिवीपतिः । पातितस्सोऽपि नरके यमदूतैर्भयंकरैः ॥ ९३
सामन्तेन हृतं तस्य राज्यञ्च नगरञ्च तत् । पुरोहितश्च सहसा नेत्रे उत्पाद्य वै दृशा ॥ ९४
देशाद्विवासयामास सोऽपि बभ्राम भूतलम् । नेत्रव्रणेन तेनैव ममार विजने क्वचित् ॥ ९५
तत्रापि नरके घोरे पातयामासुरञ्जसा । यदा शिवालयाद्धृतं शिवार्थं कदलीफलम् ॥ ९६
तदानीमेव जनको निरये पातितः पुनः । क्रमेण मरणं प्राप्तमजितस्य पुरोहितम् ॥ ९७
तस्यापि पितरं घोरे निरये पातयन् क्षणात् । येनेदं ब्राह्मणेनोक्तं तदानीं कदलीफलम् ॥ ९८
भीमेश्वरालयेऽस्तीति सोऽपि पञ्चत्वमागतः । सान्वयः पतितो घोरे रौरवेऽतिभयङ्करे ॥ ९९
राजाधिकारी मृतोऽपि सर्पदष्टो ममार हि । पातितश्चापि निरये शासनेन यमस्य वै ॥ १००
फलानि तानि यैर्विप्रैर्भक्षितानि महात्मभिः । तेषां महोदरव्याधिरासीत्कष्टं द्विजन्मनाम् ॥ १०१
महागदेन तेनैव पञ्चत्वञ्च प्रपेदिरे । सान्वयाश्च महाघोरे नरके पातिताः क्षणात् ॥ १०२

कदळीफलगुच्छस्य चोत्ता हस्तेव केसरी । ब्राह्मणस्सोऽपि हस्तायपिळकाभिमर्दोर्हतः ॥ १०३
निरये सान्वयोघोरे यमदूतैर्निपातितः । इत्थं राजापुरोधाश्च तदीयश्च पुरोहितः ॥ १०४
राज्ञोऽधिकारी भृत्याश्चवक्ता भोक्तार एव ते । छेत्तारश्च सान्वयास्सर्वे नरके युगकोटिषु ॥
यथाप्यनुभवन्त्येव यातना न हि निष्कृतिः ॥ १०५

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे पञ्चाशोऽध्यायः ॥

---

॥ अथ एकपञ्चाशोऽध्यायः ॥

शिवभृत्यपहारात् नरकादिबहुविध दुःख प्राप्तिः ॥

। दुर्गतिं यान्ति यामत्र शिवद्विषामथ मानवाः ॥ १
शृणुध्वमृषयो भूयश्शिवद्रोहापहारिणः । शृङ्खलेऽस्ति महीभागे भूषकाख्यं महत्पुरम् ॥ २
विप्रास्तत्परिहाराय शृणुध्वमवधानतः । शान्तो वसुधनी विद्वांस्तस्य पुत्रास्त्रयोऽभवन् ॥ ३
तत्रास्ति सविता नाम ब्राह्मणो वेदपारगः । हरीश्वरस्य तत्रास्ति स्थानं शम्भोरुमापतेः ॥ ४
तेषां ज्येष्ठो महाभागो धार्मिको विनयान्वितः । सेवार्थं द्विजश्रेष्ठो विरक्तोऽभूद्दिनान्तरे ॥ ५
तस्मै देवाय वै धीमान् भागमेकमदात्स्वयम् । तत्र चक्रे तपो रम्यं ध्यायञ्छिवपदाम्बुजम् ॥ ६
सत्यज्ञानमधन भूरि ययौ बदरिकाश्रमम् । ततस्तस्य पिताप्येत्य हरोच विलपन्मुदा ॥ ७
तत्क्षेत्रमञ्जसा कर्यन्छिवक्षेत्रदिदृक्षया । निर्गतश्च गृहाद्भूयो यतान्तरमगात्स्वयम् ॥ ८
पुत्रो मे चित्तसम्भ्रान्तमना यत्किञ्चिदाचरत् । धर्मशास्त्रमपश्य वा दत्त भ्रान्तेन सूनुना ॥ ९
किं यात्यनुवश्या दत्तमस्माकं यदताधुना । भ्रान्तेन चास्वतन्त्रेण दत्त नैतद्बुधैस्स्मृतौ ॥ १०
परिहार्यमिदं किं वा कर्योद्योगस्तु कीदृशः । तेन दत्तमदत्त तदित्येव यदुपाऽहरत् ॥ ११
नैव [illegible] वृथा भ्रान्ता गच्छतेत्यवदन्नृपा । राज्ञे निवेदयामासुरन्योन्यमविवादिनः ॥ १२
तेषां तेन तदान्योन्य कलहस्तु महानभूत् । न निवर्तेत चि(त्र)पत्र कन्यायस्य [illegible] सहायः ॥ १३
विमृश्य राजा स जिम दत्त देवाय तत्पुनः । तदारभ्यैव तत्क्षेत्र शिवक्षेत्रममूत्पुनः ॥ १४
शिवमन्यद्धल भुक्त्वा गच्छ दुःखमसंपत् । पुनस्सद् ब्राह्मणः क्षेत्र जहार कलहान्तरे ॥ [illegible]
तस्मिन्नाजनि यं नष्टे कलहे समुपस्थिते । स तु नीतिपरो राजा धर्मेणापालयन्महीम् ॥ १६
सामन्तराजा तद्राज्य जहार बलवान्तदा । सोऽपि राजा समाहूय धान्य भूपोप्यदापयत् ॥ १७
पुनश्च देशाधिपतस्तस्मै राज्ञे न्यवेदयन् । सर्वस्यापि तस्यैतदपराधस्य दापयत् ॥ १८
गतभोगसमुद्भवधान्यान्यपि च दापयत् । दुःखितस्सोऽपि विप्रोऽपि देशाद्देशान्तर भ्रमन् ॥ १९
पुनश्च [illegible] स्वविषयादिराज्यादयन्नृपा । तस्मै निवेदयामास स्ववृत्तान्तमथान्यथा ॥ २०
समाप्य मगधं देशमद्राक्षीत्तस्य भूपतिम् । यदाप्रभृति विप्रेन्द्र मत्यर्थे मासमान्तरम् ॥ २१
न राजा तद्द्विज माभैर्माभैर्विभेति भाषयन् । तस्मिन्क्षिति स्थिते तत्र तस्य राज्ञः पुरोहितः ॥ २२
समभ्येत्य कृताशीराय मद्य तिष्ठ पुरे सुखम् । भवन्त किमुपादत्त राजा मुक्त्योपपातकम् ॥ २३
विज्ञानाश्रयस्तु तं प्राह शिवद्रोहितमो भवान् । अविचार्य शिवद्रोही यश्च स उच्यते बुधैः ॥ २४
शिवद्रोहिणमायान्त हन्यादेवाविचारयन् । त्वां हन्मि नोपेदधुना स्यात्तस्य मर्दनम् ॥ २५
त्वया हतशिवद्रोहपातकस्त्व द्विजाधम ।

त्याज्या मयाऽसवोऽद्येति कस्यचित्पृथिवीपतेः । पुरुषस्य करात् खड्गमादायाच्छिनच्छिरः ॥ २६
तच्छ्रुत्वाऽस्मै चुकोपाशु राजा मौर्ख्यात्पुरोधसे । तस्यापि क्रोधताम्राक्षः पुरोधाश्शिर आच्छिनत् ॥ २७
शिवद्रोही स विप्रश्च राजा च निहतौ क्षणात् । पुरोहितेन किमिति सशस्त्रा नृपसेवकाः ॥ २८
छेत्तुं प्रहर्तुमुद्युक्तास्ताडितुश्च कृपाणिताः । अन्योन्यञ्चाच्छिदन् सर्वे प्रजह्रुश्च परस्परम् ॥ २९
ताडयामासुरन्योन्यं दैवेन हतबुद्धयः । एतत्सर्वं समालोक्य सुमित्रो राजनन्दनः ॥ ३०
पुरोहितं समभ्येत्य प्रणम्य स कृताञ्जलिः । भो भो विप्रान्त भगवन् भवता किमिदं कृतम् ॥ ३१
किमर्थं संहृतो विप्रो देशान्तरसमागतः । राजा च संहृतः क्षिप्रं ब्राह्मणेन त्वयाऽधुना ॥ ३२
निमित्तमत्र किं ब्रह्मन् वद मह्यं हि पृच्छते । कथं होते भटा ब्रह्मन्नन्योन्यं निधनं गताः ॥ ३३
त्वमेव साक्षादीशान इति मे निश्चिता मतिः । वद ब्रह्मन्यथातत्त्वं सत्यमाराद्धि साधवः ॥ ३४
विश्रान्तोऽथ पुनश्शान्तः प्रोवाच नृपनन्दनम् । अयं देशान्तराद्विप्रश्शिवक्षेत्रापहारकः ॥ ३५
असंभाष्यो जनैर्दुष्टो मानितः पृथिवीभुजा । संहृतस्तत्क्षणादेवमासतापि शांकितम् ॥ ३६
तत्साहाय्यरतो राजा क्षेपसे संहृतो मया । ईशाभावबशादेते चान्योन्यं निहता भटाः ॥ ३७
श्रुत्वैतदखिलं पुत्रो राज्ञः प्रोवाच तं पुनः । भीतभीतः प्रणम्यैवं कृताञ्जलिपुटः स्थवन् ॥ ३८
साधु साधु त्वया विद्वन् संहृतः परमेशितुः । क्षेत्रापहारी लोकेऽस्मिन्नातताथी न संशयः ॥ ३९
तत्साहाय्यरतो राजा तद्गृहाश्च स्वयं हताः । इदानीं मम विज्ञप्तिं कर्णे कृत्वा विधीयताम् ॥ ४०
एते हतीनराः श्रिममत्स्कूयोऽभिवृद्धये । निगृहीता न सन्देहस्त्वयमुक्तं द्विजाधुना ॥ ४१
किञ्चि मेऽध शिरो महान् सजीवाश्चान्नियमे भटाः । अपराधं क्षमस्वाद्य प्रसीद द्विजपुङ्गव ॥ [illegible]
पुनराह द्विजो राजकुमारं प्रहसन्निव । त्वं राजपुत्र कुशलबुद्धिरेव न संशयः ॥ ४३
पितुः कृतापराधस्य कान्त्योत्थानं न सांप्रतम् । अनाताँ पुनरुत्थानं साधु प्रार्थितवानसि ॥ ४४
भटानिति पुनश्चासूत्थकार शिवतेजसा । अन्योन्यं प्रहरन्तोऽपि तत्क्षणेन निवारिताः ॥ ४५
दृष्ट्वैतदखिलं राजकुमारः सपुरोहितम् । सविस्मयस्तदा भूयः प्रणनाम पुनः पुनः ॥ ४६
तदैव सहसा तत्र पुष्पवृष्टिर्दिव्यच्युता । देवदुन्दुभयो नेदुर्दिवि संकुलनिस्वनाः ॥ ४७
प्रादिरासनमभोदेशाद्गणेन्द्रादिशिवसमताः । सविमानास्समभ्येत्य प्रोचुस्ते तं पुरोहितम् ॥ ४८
एतमस महाबुद्धे कृतकृत्योऽसि भूसुर । आरुह्येदं विमानाद्यप्रयायाहि शिवमन्दिरम् ॥ [illegible]
नन्दीश्वरसमादेशाच्छ्रीमत्कैलासपर्वतम् । इति तेतं समारोप्य विमाने सर्वगामिकम् ॥ [illegible]
सपुत्रपौत्रललितं सबन्धुसखिसंमतम् । भ्राजमानं स्ववपुषा निन्युः कैलासमुत्तमम् । [illegible]
सपुत्रदारं सचिवान्नम विप्रो द्विजाधमः । अपहृत्य शिवक्षेत्रमिदं चासीथ निर्धनः ॥ [illegible]
विनेशुस्तस्य पुत्राश्च भार्या दुहितरः स्नुषाः । स्वयञ्च निर्धनो भूत्वा देशाद्देशान्तरं गतः ॥ ५[illegible]
तथापि ब्रह्मनिहतो ब्राह्मणेन विशेषतः । यमदूतैरतिक्रूरैर्निरयेषु निपातितः ॥ [illegible]
अनेककल्पपर्यन्तमद्यापि न निवर्तते । राजा च तस्य चाकस्मात्साहाय्यनिरतो हतः ॥ [illegible]
निरयेषु च दा तस्मान्नतिवोऽसाधुसङ्गमः । सर्वेषामेव जन्तूनां हेतुरत्रैव से ध्रुवम् ॥
मद्यापि राजा निस्तीर्णो निरयाग्नेव भूसुराः ॥ ५६

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे एकत्रिंशोऽध्यायः ॥

## ॥ अथ द्विपञ्चाशोऽध्यायः ॥

### यमेन युधिष्ठिरं प्रति शिवद्रव्यापहारि नरक प्रदर्शनम् ॥

अतःपरं प्रवक्ष्यामि मुनयो द्विजसत्तमाः । पशूञ्छिन्दन्ति ये लोके हरन्ति मनुजाधमाः ॥ १
ते यान्ति यां गतिं मूढास्तदीयां वच्म्यहं कथाम् । पाण्डुपुत्रो महाराजो युधिष्ठिरसमाह्वयः ॥ २
सत्यसन्धो महाभागो धर्मपुत्रः प्रतापवान् । शत्रूञ्जित्वा भ्रातृभिस्सर्वैर्दुर्योधनपुरोगमान् ॥ ३
अवतीर्य महीभारमनन्तमहिमास्पदः । अन्ते जगाम स दिवं सशरीरः प्रतापवान् ॥ ४
मध्येमार्गं दिवः प्राप्य पितरं धर्ममात्मनः । प्रणम्य तस्थिवांस्तत्र धर्मराजेन पूजितः ॥ ५
चित्रगुप्तादयस्तत्र धर्माधर्मविचारकाः । इत्थं सुरसदोमध्ये यमं प्राञ्जलयो द्विजाः ॥ ६
अजातशत्रुर्भगवत्सतीव सुकृती कृती । दिव्यं प्रयातस्सुरसैर्दुरापमकृतात्मभिः ॥ ७
पुराऽनेन नरेन्द्रेण शत्रून् संहरता रणे । असत्यमुक्तमेकं हि निर्व्याजेन महीभृता ॥ ८
तत्पापशान्तये देव नरकानेष पश्यतु । तथेति तद्वचः श्रुत्वा यमोऽसैन महीक्षिता ॥ ९
सह पातालमभ्येत्य दर्शयामास वै क्रमात् । नरकान्यातनास्सर्वांस्तत्रत्यानां दुरात्मनाम् ॥ १०
तत्रानलाख्यनरके मुखान्यात्तनतानतान् । विलोक्य सहसा भीतो धर्ममालोक्य धर्मराट् ॥ ११
पप्रच्छ प्राञ्जलिस्तिष्ठन्नेभिरेभस्तु किं कृतम् । एतद्ब्रूहि भगवन् पृच्छते मह्यमीश्वर ॥ १२
इति पृष्टो यमः प्राह पुत्रमालोक्य निर्दिशन् । शिवद्रोहपरा ह्येते शृणुष्व सावधानतः ॥ १३
कुशस्थले महीभागे देशेऽस्ति वसुधापुरम् । तत्र कश्चिद्द्विजश्रेष्ठः पुण्यराशिरनिन्दितः ॥ १४
विप्रो मणिरिति ख्यातस्तमिन्द्रः स्वर्गमानयत् । एकं तस्मै ददौ दिव्यं भूषणं प्रीतिमानसः ॥ १५
रत्नाभरणं शिवप्रियं निष्कसहस्रकम् । अच्युते तत्समादाय कृतपुण्यसमन्वितः ॥ १६
भूलोके स्थापयेत्याशु विसृज्य पुनश्च तम् । तथेति भूमिमासाद्य पुनःपुण्यं चकार सः ॥ १७
कदाचित्सकलान् धर्मान्मत्वा इति एत द्विजाग्रणीः । गोदानानि सहस्राणि ददौ प्रीतमना द्विजः ॥ १८
सर्वेषां सहस्रेषु वसन्तेश्वरशूलिनः । एका गौस्सप्रजा तामिस्तामपि प्रददौ द्विजः ॥ १९
पक्षोत्तरसहस्रं तद्वस्तु शुभेति हृष्टधीः । अभ्येत्य शुकुलस्तस्मै शिवालयसमर्पकाः ॥ २०
सुस्वर्गी देवदेवस्य वसन्तेश्वरशूलिनः । आकृष्टोऽपि च दत्तोऽपि तासैयमवद्य द्विजः ॥ २१
महेन्द्रेण धनं दत्तं विभूषणसमुद्भवम् । वसन्तेशेन च पुनर्गौरियं दानहेतवे ॥ २२
गच्छसीति च तानुक्त्वा ॥ मुमोच तदा च गाम् । सर्वकाः शिवमनसोऽपराधे सर्वे न्यवेदयन् ॥ २३
॥ विचारितमेतेन राज्ञापि विमुखेन वै । तन्मन्त्री निकटे तिष्ठन्राजानं प्रत्यभाषत ॥ २४
राजन् किमिति नोपेक्षा कार्या दैवशत्रुं प्रति । असाध्यमयं दण्ड्यो हि शिवद्रोहविचारतः ॥ २५
राज्ञा तमाह देवेन्द्रप्रियोऽसौ द्विजसत्तमः । असाध्येव दण्ड्योऽसौ येनकेनच गच्छतु ॥ २६
मन्त्री :— शिवद्रोहीदृशे राज्ञि न स्थातव्यं मयाऽधुना । उक्त्वैवं निर्जगामाशु वनं प्रकृतिपुङ्गवः ॥ २७
आलयापिहतास्सर्वे विनिन्द्य पृथिवीपतिम् । शिवद्रोहभयेनेति जग्मुः स्वं स्वं निकेतनम् ॥ २८
एवं गते बहुतिथे विशालो राजपुङ्गवः । सुवीरमाह्वयामास वनं कोपेन संभ्रितम् ॥ २९
आहूतेऽपि विशालेन सुवीरो नागतो भयात् । सुवीरस्तु कालेन निर्धनत्वमपद्यत ॥ ३०
चिरमधिन्तां परो प्राप कुटुंबभरणाय वै । देवेन्द्रस्तु विदित्वैतत्सुवीरस्य मनोगतम् ॥ ३१
प्रेषयामास सुरभिं कामधेनुं सुराधिपः । सुवीरस्य कुटुंबं त्वं रक्ष धेनो यशस्विनि ॥ ३२

धने वसति पुण्यात्मा विप्रहीनोऽथ सर्वदे । तदाज्ञां शिरसा धृत्वा कामधेनुस्त्वरान्विता ॥ ३३
धनं धीरमनुप्राप्य तत्कुटुंबं यथार्थवै । भक्ष्याद्यैर्भूरिदं धेनुर्वने कामदुगुत्तमा ॥ ३४
सुधीरेतिष्ठति सुखं कुटुंबेन वनान्तरे । विशालः कुपितोऽत्यर्थं वनं प्राप ससैनिकः ॥ ३५
बलात्कारेण तं सद्यो गृहीतुं वनवासिनम् । मध्येमार्गं महीपालमपरेद्युर्वने द्विपः ॥ ३६
त्वरयाभ्येत्य हस्तिस्त्र मदेन छिन्नशृङ्खलः । हाहेति विलपन्तस्तत्सैनिका नगरं प्रति ॥ ३७
निवृत्तास्तत्क्षणादेव निहते तत्र राजनि । अभिषिक्तश्चित्रसेनो राज्ये तत्सूनुरुत्तमा ॥ ३८
सुधीरमभित्रवं महत्स्तमश्रावयदरण्यतः । सुधीरः पुनराहेदं रामासं द्रुतवन्मतः ॥ ३९
स तु विप्रमणिर्द्वोही शिवस्य यदि दर्शितः । मामाभिध्येत्भ्रमरीहृत्रिर्तिस्वैरत्यचोदयत् ॥ ४०
तदानीमेव भूपालकुमारः कुशलाय वै । आहूय तं विप्रमणिमतीव पदवाहनम् ॥ ४१
चोरोऽसि विप्र [illegible] त्वं शिवधेनुमपाहरः । प्रासादात् द्विजन्मने यस्त्वं चोर पतासि भूसुर ॥ ४२
चोरो मुञ्चति वै दोषं निगृहीतोऽनु पापकम् । (चोरदोषं भजेद्राजा निगृहीतो न पापमिति वचनात्)
इत्यसौ निगृहीतश्च कुमारेण महाश्रिया ॥ ४३
लब्धतुष्टोऽथ महामिन्द्रः प्रादुर्भूय तदैव तु । गृहीत्वाऽऽभरणं तेन तु सुधीराय ददौ मुदा ॥ ४४
पुष्पवृष्टिः पपाताशु सुरेन्द्रपुरुषाहता । गते महेन्द्रे सहसा देवलोकं यथापुरा ॥ ४५
गोप्रतिग्रहकर्तारं कच्छदेशकृतालयम् । वसुनामानमवनीपतिपुत्रः प्रतापवान् ॥ ४६
शिवालयपशुस्तेयमिति ज्ञात्वापि दुष्टधीः । कृत्वा प्रतिग्रहं देशाद्देशान्तरसमागतम् ॥ [illegible]
तद्देशेशाश्रकातस्य पुत्रैर्विदिताणसम् । स राजा तत्र तां गाश्च सहसा मित्रसेवकैः ॥ ४८
आनयामास सहसा सभर्तुः स्वात्मशुद्धये । गां देवाय पुनर्दत्त्वा तस्यैनेभे द्विजन्मनः ॥ ४९
अयाच्य विषयात् तस्मात्पुनस्ते प्रैष्यलक्षणात् । सोऽपि कालेन निधनं प्राप विप्रो विलोचनः ॥ ५०
दाता प्रतिग्रहीता च राजा चोपेक्षकस्तयोः । नीताः यमभटैर्भीमैरसिलेते निपातिताः ॥ ५१
मनलाख्याभिधे घोरे नरके कालमक्षयम् । तेषां वंशोद्भवाश्चापि युधिष्ठिर निपातिताः ॥ [illegible]
श्रुत्वेति वाक्यं स्वपितुर्धर्मपुत्रोऽतिविस्मितः । अनुज्ञया पितुः प्राप त्रिदिवं व्योमयानतः ॥ ५३
सूतः — उक्तं मयाऽत्र हरमाहात्म्योद्देशस्य यां गतिम् । अपहर्ता गृहीता च तटस्थस्तदुपेक्षकः ।
तदीयाख्यानमधुना किं भूयः श्रोतुमिच्छथ ॥ [illegible]

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे द्विपञ्चाशत्तमोऽध्यायः ॥

---

॥ अथ त्रिपञ्चाशत्तमोऽध्यायः ॥

देवद्रव्यापहारिणः अग्निज्वालायुत नरककुम्भे पतनम् ॥

अतःपरं प्रवक्ष्यामि वृत्तां नृपमुद्रिताम् । एतां नृपश्री जातीं हरस्य शृणुताधुना ॥ १
पुरा चतुर्मुखो देवो दिदृक्षुरखिलं जगत् । आरुह्य हंसं सुश्वेतं चचार परया मुदा ॥ २
प्राप्य संयमिनीं कालाधरकान्तयलोकयत् । तन्मध्ये कतिचिद्दृष्ट्वा निरयान् पद्मसंभवः ॥ ३

अतः परं न गन्तव्यमित्यवोचत्स्ववाहनम् । इमे दुरात्मनिलया नावलोक्या मया इति ॥ ४
ततो हंसस्तमाहेत्थं किमेते नरका प्रभो । नैवावलोकिता देव त्वया किं चात्र कारणम् ॥ ५
ब्रह्माह तं शिवद्रोहनिरतावासभूमय । एते नैवावलोक्यास्स्युर्निवृत्ताविति तौ तदा ॥ ६
नरकाणां च तेषां तु मध्ये ज्वलितपावके । यज्ञस्तम्भे निषण्णेन पुरुषेण कृतं स्मर ॥ ७
अथापि [illegible] पप्रच्छ किमेतेन कृतावेति । ब्रह्मा शृण्वस्य वृत्तान्तमिति प्रोवाच तत्कथाम् ॥ ८
सौराष्ट्रदेशे नगरी सौराख्या विदिता शुभा । वैश्यस्तत्र सुदत्ताख्यो धार्मिको धनवान् कृती ॥ ९
महाश्रमेण वाणिज्यं करोति बहुधा सदा । भद्रकालीपदाम्भोजसपर्यानिरतोऽन्वहम् ॥ १०
विश्वासस्सर्वदेशेषु सर्वभूतदयापर । सांयात्रिकी सौकमाय सुखेनार्थमभ्यगात् ॥ ११
द्वीपान्तरात्समायाय बहुकालमतन्द्रित । निवृत्तोऽर्णवमध्ये तु वायुना निहतप्लव ॥ १२
दध्यौ सुदत्तो मनसा भद्रकालीमनन्यधी । तदानीमेव तद्भक्त्या भद्रकाली महार्णवात् ॥ १३
तं सा ससैन्यं सधनं प्रापयामास तद्गृहम् । दृष्टैवदखिलं सर्वं सुवृत्तं तमपूजयत् ॥ १४
कदाचित्तस्य कल्याणे प्रवृत्ते नागरा जना । तद्गृहं प्राप्यमुमुदुर्भुञ्जानास्सत्कृता घनैः ॥ १५
तदा विटाश्च गणिकाश्चोल्बणा वन्दिनस्तथा । सौरेश्वरालयस्याश्च नरानार्यश्च संहता ॥ १६
सर्वेऽपि प्रेषितास्तेन सत्कारमतोऽन्तरे । सौरेश्वरालये काचिद्रमणी नृपचेटिका ॥ १७
तां दृष्ट्वा मोहितो वैश्यस्तस्या रूपेण कामुक । स्वगृहे स्थाप्य तां तन्वीं तयारात्रौ च संगत ॥ १८
प्रातस्तां गन्तुमिच्छन्तीं शिवायतनकर्मणे । संमार्जनकरीं भूपश्चेटीमन्यामचोदयत् ॥ १९
[illegible] चेटीं प्रेषयामास समार्जनपटीयसीम् । तां दृष्ट्वाऽधिकृतास्सर्वे वैश्यचेटीं विना तथा ॥ २०
अपृच्छन्वैश्यमाहूय मुञ्च त्वं नृपचेटिताम् । किमन्यचातया चेट्या सर्वैषाहीं शिवालये ॥ २१
पृष्टवानपि तेनैव नामुञ्चन्मदगर्वित । स ऊचे नृपतीं मुञ्च नाहं चेटी तवालये ॥ २२
तथा स्वपत्नी स्वपार्श्वात्प्राप्य पार्श्वं गमिष्यति । यमसेवेति लोकेऽपि सापि चेटी तथा न किम् ॥ २३
तथापि नेच्छता मोक्तुं राज्ञे प्रोचुरधिकृताधिपा । राजा मन्त्रिणमाहूय मोचयेति जगाद ताम् ॥ २४
मन्त्री वैश्यस्तु धनवान् भद्रकालीप्रियोद्यमम् । न निग्राह्य कथं मोच्या नृपतीनृपसत्तम ॥ २५
राजा कोपेन स प्राह काळीकास्याच्छिनत्तु ह । मन्त्रिकेतुकेपि सचिवो नैच्छत्क्रोत्या नृपस्तदा ॥ २६
स्वयं निर्गत्य भवनाद्देवद्वारि सहैनिक । मुञ्चेति विप्रहोयुक्तो वैश्यश्च सहसा रुषा ॥ [illegible]
तदा ससार वै काळीं वैश्य स्वामीष्टदेवताम् । सा सन्निधाय तं प्राह [illegible] द्रोही परमेशितु ॥ २८
तस्या तमेव राजानमथ प्रोवाच काल्यमुम् । वैश्यो द्रोही महेशस्य पात्रते निग्रहस्य हि ॥ २९
यथेष्ट शिक्षयैन त्वमित्युक्त्वान्तर्धानमास्थिता । ततो राजाऽस्य सर्वस्वमादाय नृपमीं [illegible] ॥ ३०
प्रेषयामास सहसा शिवायतनकर्मणे । सा स्नात्वा [illegible] यथापूर्वं संमार्जनरताऽभवत् ॥ ३१
ततो वैश्यं पुनः राजा मारयित्वाऽस्य योषित । कृतवान् नृपमीं मुदा चक्रे सौरेश्वरालये ॥ ३२
संमार्जनकरीं शीघ्रं [illegible] पापविनिवृत्तये । मन्त्रिणश्चापि साहाय्यकारिण द्रोहिणोऽच्छिनत् ॥ [illegible]
[illegible] तु वैश्योऽत्रैव यज्ञस्तम्भे बद्धोऽनलान्तरे । असहिष्णुर्दाहनाला भृशं रोदिति दुःखित ॥ ३४
तस्माय शुश्रुवे घोरो रवोऽस्माभिर्महास्वन । अन्यत्रापि च शब्दोऽयं मन्त्रिणो नृपतेरयम् ॥ ३५
साहाय्येनापि तस्यास्य निर्धूमाङ्गारमध्यग । तदिमे नरका घोरा नास्माभिर्वीक्षिता खग ॥ ३६

शतानन्दोऽप्यमधुना नन्दीशं प्रमुमुक्षतः । नरके पच्यमानांस्तान्नताभ्यामपि भो वद ॥
श्रोतव्यमद्भुतमिदमिति तौ तं शिलादजम् । स्वामीत्यमिति तं तस्मै विज्ञाप्यानुमतौ स्थितौ ॥
ततः प्रोवाच भगवान्नन्दीशंकरवल्लभः । नन्दिकेश्वरः — विदर्भदेशे राजाऽभूद्विश्वसेनोऽस्ति नीतिमान् ॥
सर्वशास्त्रार्थकुशलो धनुर्वेदस्य पारगः । कदाचिन्मृगयासक्तश्श्रान्तो विपिनमण्डले ॥
सिद्धेश्वरेश्वरस्थानमण्डपं प्राप्यसत्वरम् । शिल्पेधिरूढशयनस्तत्रैव शिवसन्निधौ ॥
श्रान्तसुप्तोऽथ राजाने दक्षिणः परिचारकः । तस्याङ्गमर्दनकरः पादसंवाहकस्सदा ॥
तैलार्थं पणमादाय पुरं चचार सर्वतः । जंबीरस्य फलं चापि नैव लेभे पुरे तदा ॥
शिवालयं समभ्येत्य तैलं दीपार्थमागतम् । अभिषेकार्थकलशानि जंबीरस्य फलानि च ॥
कुडुपद्वयतैलञ्च चत्वारि च फलानि च । बलादादाय दक्षोऽथाङ्गमर्दनमाचरत् ॥
आपयित्वा नृपं श्रान्तं स्नानधर्मानकारयत् । तदादीत्येव संभाव्य शिवालयविहस्तथा ॥
राजानं श्रुतवृत्तान्तमकुर्वन्भयवेपिताः । राजा श्रुताश्रुतवचाश्चो जगाम नगरं स्वकम् ॥
तूष्णीमेव च कालेन ममार पृथिवीपतिः । विनिन्द्य पृथिवीनाथं जगुरीशाधिकारिणः ॥
राजानमपि तं पापं तदानीतनधर्मराट् । दूतैः स्वैस्सहसाऽऽनीय सर्वेषु निरयेष्वपि ॥
संपीड्य विविधाऽतिमहत्कालमथ महानके । निक्षिप्य तं तैलघटे यमोऽप्ययत्नतोऽनिशम् ॥
संपीडयति हा कष्टमेकस्यैतादृशो पचे । दक्षोऽप्यनलकुण्डेषु पच्यते हायनान् बहून् ॥
मध्ये स्वमेकैकानयोर्ब्रह्मणो विष्णवो गताः । कुतोऽन्ये वह्निनिवहा ब्रह्मणोऽह्नि चतुर्दश ॥
अनयोर्धर्मसंभूताः पच्यन्तेऽत्रैव यातनाः । आख्यामतः परेयापि कालो नेयोऽक्षयो महान् ॥
इति नन्दीश्वरात्छ्रुत्वा शतानन्दोऽति हृष्टधीः । पप्रच्छ पुनरेवैनं शिवस्वर्णापहारिणः ॥
यां गतिं प्राप्नुवन्त्येते तां कथां भगवन्वद ॥ ५५

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे चतुःपञ्चाशोऽध्यायः ॥

---

## ॥ अथ पञ्चपञ्चाशोऽध्यायः ॥

अज्ञानतः शिवस्वर्णयज्ञोपवीतापहरणात् सपरिवारस्य रोमनरकादि प्राप्तिः ॥

शतानन्दः —

येनाश्रुता कथाह्येषा शिवतैलापहारिणः । येभ्योऽन्यत्रापि निरयेष्वन्ये पापास्तु भुञ्जते ॥
यातनास्तैः कृतं किं वा कर्मभूमौ दुरात्मभिः । येषां द्वारेषु नचहु द्रवः स्वर्णस्य पूर्यते ॥
खण्डशश्च शरीराणि छिद्यन्ते यमकिङ्करैः ।
नन्दिकेश्वरः — कलिङ्गदेशे राजाऽभूच्चन्द्राङ्गो नाम वीर्यवान् ॥ २
वीरमाङ्कनामास्य जज्ञे पुत्रो महारथः । तस्मिन्निधाय वै भारं राज्यस्य पृथिवीपतिः ॥
तोषयित्वाशु तपसा ब्रह्माणं परमेष्ठिनम् । ब्रह्मलोकं जगामाशु पुनरावृत्तिदुर्लभम् ॥
तस्मिन्प्रशासति तत्पुत्रे दानधर्मरतेऽवनीम् । यज्ञेश्वराभिधः कश्चित्कदाचिद् ब्राह्मणः स्वयम् ॥
गच्छन् सकाशं वै राज्ञो दानार्थी क्षुत्पिपासितः । उपायनार्थं जग्राह मालामेकां शिवालयात् ॥
सोमेश्वराभिधेशाननिलयात्कुसुमोज्ज्वलाम् । तामिमर्पित्स्रजं राज्ञः कण्ठे निक्षिप्य साशिषम् ॥

प्रतिगृह्य जगामासाद्दानं यज्ञेश्वरो द्विजः । तदा स्रजाऽस्य देवस्य स्वर्णयज्ञोपवीतकम् ॥ ९
अज्ञात्वा पूजकैस्त्यक्तं गृहीतं तेन च स्रजा । राज्ञः कण्ठे च निक्षिप्तं पश्चादन्वेषितं च तैः ॥ १०
यज्ञेश्वरोऽपि वै पृष्टः स्वर्णयज्ञोपवीतकम् । इदं राज्ञो मया क्षिप्तं स्रजा कण्ठे स पृच्छ्यताम् ॥ ११
ते त्वमेवेति तं प्राहुस्त्वत्तु यूयमिति ब्रुवन् । जगाम भवनं तूष्णीं राज्ञः स्नेहबलेन सः ॥ १२
शिवाधिकारिणोऽभ्येत्य तमपृच्छन्नृपं स्रजा । यज्ञोपवीतमानीतं सौवर्णं ब्राह्मणेन ते ॥ १३
दीयतां नृपशार्दूल सोमेशस्य मनोहरम् । पृष्टेऽपि तूष्णीमास्तेऽसौ राजा मौर्ख्येन (तेजसा) चेतसा ॥ १४
तदानीं तस्य च गुरुरामर्दनगिरेर्गुरोः । वंश्यः कारणनामासौ शिवद्विजकुलोद्भवः ॥ १५
यज्ञोपवीतं देवस्य सौवर्णं दीयतां पुनः । महतोऽपि शिवद्रव्यं मूलं दोषस्य हि श्रुतम् ॥ १६
कामरूपे पुरा देशे राज्ञः पुत्रो वसुशिशुः । खेलञ्छिवालये बाल्ये दृष्टवान् पणमेककम् ॥ १७
ददौ हस्ते पितुस्तञ्च त्वरयैत्य गृहान्तरम् । उक्तवान् पणमेकञ्च दृष्टोऽयं खेलता मया ॥ १८
शिवालये क्वचित्तात पणं रक्ष मयार्जितम् । तदानीं तमनुप्राप्य पृष्टवन्तः शिवाश्रिताः ॥ १९
शिवालयस्थितं वस्तु शिवस्यैव प्रदीयताम् । इति पृष्टोऽपि राजा नवैच्छद्दातुं सुतार्जितम् ॥ २०
परिपूर्णस्य देवस्य शिवस्य किमनेन वै । इति सम्प्रेक्ष्य तान् सर्वान् पणं कोशे न्यवेशयत् ॥ २१
तस्यामेव तु वै रात्र्यां सर्वं राज्ञो गृहं महत् । द्रव्यञ्च चोरितं चोरैस्तदा नृपतिर्मृतः ॥ २२
भयेन नृपपुत्रं तं सामन्तोऽभ्येत्य चाच्छिनत् । इत्थं राजा पुत्रोऽपि शिवद्रव्यापहारतः ॥ २३
निहतो नरकेऽद्यापि पीड्यते इति शुश्रुम । पुराणश्रवणे काले पुराणज्ञेन भाषितम् ॥ २४
तदीशस्योपवीतं तत्सौवर्णं देहि पार्थिव । उक्तोऽपि गुरुणा राजा तूष्णीमास्ते विशङ्कितः ॥ २५
पुरोधसे मन्त्रिणे च शैवद्रव्याधिकारिणः । उदासीनायमूर्ता तौ तस्मिन् काले विधेर्बलात् ॥ २६
पुनः पुनस्ते पृच्छन्तः शिवभक्तेऽधिकतो रुषा । अस्य यज्ञोपवीतञ्च सौवर्णं परमेशितुः ॥ २७
आनयेदीश्वरं देयं यथापूर्वं शिवद्विजाः । यज्ञेश्वराभिधो विप्रो यातो महादरिद्रताम् ॥ २८
कालेन ■ मृतो मन्त्री पुरोधाश्च हतः क्षणात् । मृतोऽन्ते सोऽपि वै राजा दुष्कर्मा समजायत ॥ २९
तेनैव कुष्ठरत्यासौ राजा स (चिर्) क्रिमिणा हतः । तामेतामिरवेश्वेवे महागुरो यमकिङ्कराः ॥ ३०
अपराधस्य कालपाकेन निष्ठुरतरा वै मुने । तानध्वगंसमावारव्ये निरयेषु निपातिताः ॥ ३१
निस्तीर्णनरकाः सन्ते कदाचिदपि वै मुने । [illegible] पिता पुण्यैर्महालोकं गतः पुरा ॥ ३२
सोऽपि पापेन पुत्रस्य नरकेषु निपातितः । श्रुत्वैतदखिलं योगी शतानन्दो महातपाः ॥ ३३
भीतभीतस्तदा प्रष्टुमास्ते सांब स्मरन् हरम् । पुनश्च समुपागेदं नन्दी शङ्करवल्लभः ॥ ३४
एतेषां नरकात्पातो ये पश्यन्तेऽतिपापिनः । तेषां चरितं वक्ष्यामि शृणुष्वैकमना द्विजः ॥ ३५

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे पञ्चपञ्चाशोऽध्यायः ॥

---

॥ अथ षट्पञ्चाशोऽध्यायः ॥

शिवपूजक द्रव्यापहारात् दुर्गतिप्राप्तिः ॥

सूतः — अतः परं प्रवक्ष्यामि गुरुद्रव्यापहारिणः । यो यति प्राप्नुवन्त्येने तां कथां शृणु साम्प्रतम् ॥ १
नन्दीश्वरः पुनः प्राह शतानन्दं तदा मुनिम् । शृण्वतोऽत्र समीपे महाविष्णोर्दिशाहृतः ॥ २

शतानन्द महाप्राज्ञ गुरुद्रव्यापहारिणः । एतेषां नरकाभ्यासे पच्यन्ते कालमक्षयम् ॥ ३
गौडदेशे महीभागे पुरी गौडीति विश्रुता । पद्मपालाभिधस्तत्र सार्थवाहो वणिक्पतिः ॥ ४
पुण्यवानतिसंपन्नस्सूर्यपूजापरायणः । प्रत्यहं पूजनं कुर्वन् कृत्वा वेदिं मृदा शुभाम् ॥ ५
नमस्करोति देवाय सविशेषमर्घ्यं सुलक्षैः । मृदाकृतां समुद्धृत्य वेदिं पूर्वस्थितां पुनः ॥ ६
इष्टकाभिस्समनिर्मातुमियेष वणिगादरात् । तत्पुरेऽन्विष्यता तेन कुत्रापि वणिजेष्टकाः ॥ ७
लेभिरे नैव सर्वेषु पत्तनाद्यतिविषयोच सः । तत्र गौडेश्वरस्यैव पूजकस्य महात्मनः ॥ ८
सद्गौडगिरिसंस्थानसमुद्भूतस्य वै सदा । तत्पुरुषाख्यस्य गुरोर्मठे शैवद्विजस्य वै ॥ ९
देवपूजालयं कर्तुं तेन सम्पादितेष्टकाः । श्रुत्वा प्रसन्नो वैश्यः पप्रच्छ पुरुषेण ताः ॥ १०
यदा नैच्छत्सवै दातुं पणाश्च प्रेषिताः पुनः । ततोऽपि नैच्छत्सगुरुर्यणिक्त प्राप्य पृच्छताम् ॥ ११
प्रत्यायमतः पुनस्तोऽपि शोचन् स्वगृहमाययौ । प्रत्यायमतः स्वयं प्राप्तोऽप्यहमित्यन्वचिन्तयत् ॥ १२
एतस्मिन् समये राज्ञो वैद्यस्सौभरिराख्यया । वैश्यस्य निकटं प्राप स्वस्तस्य क्रियापरः ॥ १३
पणार्थी तेन स वणिक्प्रोवाच बहुधा शुचम् । इष्टका. प्रार्थिता विद्वन् गुरोस्तत्पुरुषाभिधात् ॥ १४
न लब्धाश्च ततो मान्यो भग्नो मे भिषगुत्तम । तेन खेदयता प्राप्तः कुत्राप्येवमभूत्समे ॥ १५
स वैद्यस्तमाश्वास्य स्वयं यातोऽन्तिकं गुरोः । समिष्टकास्ततः पप्रच्छ वणिगर्थे भिषक्पतिः ॥ १६
प्रत्याख्यातस्तेनापि मत्सरग्रस्तमानसः । आश्वास्य वणिजं वैद्य श्व प्रातः पश्य मे बलम् ॥ १७
समीक्ष्य नाशयाम्येव व्यर्थेमेव गुरोर्गृहात् । प्रतिज्ञाय गतो वैद्य. पश्चयो राजवेश्मनि ॥ १८
गजस्य गद उत्पन्नो महाराजप्रियस्य वै । आहूय हस्तिपं वैद्यो हस्ती रोगेण पीड्यते ॥ १९
विनश्यति न सन्देहश्चिकित्सा न कृता यदि । वचनं मम सत्वरं चेष्टकास्समुपानय ॥ २०
चूर्णितास्तास्तथान्यैश्च मिश्रितैरौषधान्तरैः । कृतैस्तु पोट्टलैर्हस्ती सुखरोगो भवान्यथा ॥ २१
इष्टकाश्च गुरोर्गेहे पुरुषाख्यस्य सन्ति वै । अद्यैवानय रात्र्यां त्वं सद्यो हस्ती सुखी भवेत् ॥ २२
इति तस्य वचः श्रुत्वा हस्तिपो मनुजैस्सह । गुरोर्गेहादिष्टकास्ता नीत्वा चूर्णान्यकारयत् ॥ २३
वैद्योऽपि चार्ययैः कश्चित्तच्चूर्णेऽपि तत्क्षणम् । अचिकित्सद्गजं रात्र्यां स्वयं एव ममार सः ॥ २४
प्रातःकाले गजं दृष्ट्वा मृतं प्रोवाच हस्तिपः । चिकित्सितश्च बहुधा रात्र्यां सौभरिणा नृप ॥ २५
श्रुत्वा राजा गजं मृतं विषादातिविलापी. । प्रातस्तत्पुरुषोऽभ्येत्य सुकोशासौ हतेष्टकः ॥ २६
पूर्वेद्युः पृष्टवान्वैश्यस्तोऽपि मां सौभरिर्भिषक् । मया सम्पादिता देवगृहार्थं ता नृपोत्तम ॥ २७
न दत्त मत्सरेणैव तेन सर्वा विनाशिता. । श्रुतवृत्तान्त इत्येव राजा सम्यक्विचार्य सः ॥ २८
घातयान् स शिवद्रोहकारणेन हतो गज. । ततो हस्तिपतिं शुद्धशिरश्छेदमकारयत् ॥ २९
तदीयाश्चापि पुरुषाश्राजा तत्पापशान्तये । वैद्यमाहूय सर्वस्वमादायास्य तदा रुषा ॥ ३०
चिच्छेद च शिरस्तस्य सद्य एव नृपोत्तम । पृष्टवान्वैद्यमाहूय किं कृत भवतेत्ययम् ॥ ३१
सौभरि. प्राह महता प्रयत्नेन चिकित्सित. । तथापि नैव शान्तोऽस्य गदस्सद्यो हतो गज. ॥ ३२
तमाह नृपशार्दूलस्त्वं गुरुद्रोहमाचर. । इष्टकापहृता तेन पञ्चत्वमगमद्गज ॥ ३३
त्वाञ्चाद्य सूदयिष्यामीत्येव वदति भूभुजि । मन्त्री तमाह नृपतिं भवान् पूर्वं गदार्दितः ॥ ३४
तदाश्विनौ समभ्येत्य चिकित्सा चक्रतुस्तव । ताभ्यां पुनश्चाभिहित जिगमिषुया दिवं प्रति ॥ ३५
इमञ्च सौभरिं प्रेक्ष्य भिषये तव भूपते । येषां व्याधिसमुत्पत्तिस्तेषामावामिम द्विजम् ॥ ३६
अभिग्राप चिकित्साय एवमुक्त्वा दिव गतौ । अनेन कारणेनैव नैव शास्यो भिषग्वरः ॥ ३७

अनेनच कृता यत्र चिकित्सा व्याधिते जने । तत्र कोऽपि मृतो नैव गजमेक विना नृप ॥ ३८
निगृहीतो यदि ह्येषस्तदा कोवा चिकित्सक । इति मन्त्रिवच श्रुत्वा पुन प्राह नृपश्च तम् ॥ ३९
यद्यसौ निगृहीतस्स्यादीश्वरोऽस्ति चिकित्सक । स एव प्रथमो वैद्यो भिषगित्येव हि श्रुति ॥ ४०
त्वमेवैन दुरात्मान मन्त्रिश्छिक्षय माचिरम् । अविचार्य शिवद्रोही मन्त्रिणा शिक्षितो भिषक् ॥ ४१
इष्टकाभिस्ततो राजा सौवर्णाभिर्गुरो पदे । समाभ्य प्रार्थयामास क्षमस्वागो ममाधुना ॥ ४२
प्रणनाम गुरु भक्त्या राजा प्रीतस्तदा गुरु । राजाप्युच्छिष्टचोच्छिष्टेत्येव वादिनि वै गुरौ ॥ ४३
पुष्पवृष्टिरभूत्तत्र देवदुन्दुभिनिस्स्वनै । तदैव महाविष्णु तमूचतुर्नृपसत्तमम् ॥ ४४
भवाञ्शोलिवरो राजाज्ञावाभ्यामिष्यतेऽत्र च । ततस्तौ प्रार्थयद्राजा नेच्छे मेऽन्यो वर प्रभू ॥ ४५
मम देशो गतो मास्तु जनेष्वपि कदाचन । अयमेव वरो महामस्त्वेवमिति चोचतु ॥ ४६
अन्तर्हितौत्र तौ देवौ राजानुज्ञाप्य वै गुरुम् । चकार राज्य धर्मेण बहुकालमतन्द्रित ॥ ४७
तद्राज्यस्यापि तत्रैव दुर्भिक्षो विपयोऽभवत् । यैरिष्टकाहृता पापैस्ते सर्वे निरय गता ॥ ४८
पाच्यन्तेऽद्यापि ते सर्वे तेषा नैवतु निष्कृति । पूर्वोक्तनिरयाणाश्च निकटे भूपते द्विज ॥ ४९
वदेतेषामिति प्राह शतानन्द शिलादज । श्रुत्वा शिलादजात्सर्व शतानन्दो भयार्दित ॥
तदानीमभवत्तूष्णीं पुनश्शम्भुमचिन्तयत् ॥ ५०

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे षट्पञ्चाशोऽध्याय ॥

---

॥ अथ सप्तपञ्चाशोऽध्याय ॥

शिवभक्तस्य वस्त्रापहारात् दुर्गति प्राप्ति ॥

शिवभक्तधन हृत्वा दूषयित्वा ■ तान्पुन । तद्दोषान्नरके घोरे पतितानां दुरात्मनाम् ॥ १
कथा प्रवक्ष्ये विप्रेन्द्राश्शृणुध्वमवधानत । सिन्धुदेशाधिप कश्चिच्छङ्करनामा महीपति ॥ २
लालानन्दपुर शास्ति सर्वैर्लक्षविचित्रितम् । उपास्य स महाराजश्शङ्कु नृसिहमुग्रान्तकम् ॥ ३
लब्ध्वाम्यङ्गमतुल सर्वशत्रुनिबर्हणम् । जित्वारातींस्ततस्सर्वान्प्राज्य चक्रे भय विना ॥ ४
तदा जितेषु रिपुषु मधुनामा महीपति । असुरेन्द्र महासत्वमुपास्य चिरकालत ॥ ५
मेलयित्वाऽसुरान् कांश्चिन्महाबलपराक्रमान् । रुरोध चास्य नगर महासाल महाधनम् ॥ ६
तदात्यन्तमवापाथ विचार कर्तुमुपति । विजयार्थो वसत्यस्य निकटे भटपुङ्गव ॥ ७
वस्तु प्राप्य कर मूपमब्रवीद्वचन तदा । मास्तु भीतिर्महाराज विजये मयि तिष्ठति ॥ ८
उपास्यते मया नित्य नृसिंहस्सर्वशत्रुहा । तत्प्रसादान्ममाजक स्यात् शक्नोति मानव ॥ ९
इत्युक्त्वा निर्ययौ शीघ्र योद्धुमेन महाबलम् । सस्मार नारसिंहञ्च सर्वशत्रुनिबर्हणम् ॥ १०
आविरासीत्सभगवान्नारायणेन सर्वचित । क्षणात्तानसुरान् सर्वांश्चाताद घननिस्स्वन ॥ ११
मधुञ्च त महासत्व बुभुजे स हरिस्तदा । एव हत्वा रिपून् सर्वान् क्षणादन्तरधीयत ॥ १२
दृष्ट्वैतदद्भुत राजा विजय समट कर । पूजयामास नितरा देवतुष्ट्या तदादित ॥ [illegible]
तस्याश्मजरदारनामा चक्रे दौष्ट्य तदा भृशम् । सोऽप्य कस्मिन्दिने वैश्यस्याग्रमने लालसस्तराम् ॥ १४
तद्ग्रामवासी धर्मात्मशूद्रो यस्य रत्नसदा । भवसिद्धास्सर्वापयत्तस्यां सत्योऽप्यनर्पदो ॥ १५

धर्मस्य वस्त्रं वेश्यायां ज्ञात्वा वेश्यास्तमव्ययम् । स्वयं धृत्वा ययौ तूर्णी दुष्टशूद्रो धनस्तराम् ॥ १६
न ददौ प्रार्थितस्तेन बहुधापि दुरात्मवान् । प्राहैतद्विजयस्यायं शूद्रेणाञ्च तत्पितुः ॥ १७
सोऽप्युपेक्षां चकारायं विजयो मूढचेतनः । तदा कोपाकुलो धर्मो भूतिरुद्राक्षधारकः ॥ १८
राजानं करुणावानं प्राप्यैतच्च जगाद ह । ध्रियते च मया नित्यं भस्म सर्वाघनाशनम् ॥ १९
रुद्राक्षाणि च भूरीणि ध्रियन्तेऽहर्निशं मया । तन्मदीयं महान् नृप वस्त्रं शूद्रहृतं कलिन् ॥ २०
आदाय दातुं पुण्यात्मञ्छिवभक्तो यतोऽर्हति । शिवभक्तधनं केन चापहर्तुञ्च शक्यते ॥ २१
तस्य तद्वचनं श्रुत्वा तथेत्युक्त्वा महीपतिः । विजयं तं तदाहूय राजा प्राह वचः कटु ॥ २२
शिवभक्तस्य वसनं पुत्रेण हृतमात्मनः । दापयैतन्महामूढ नोपेक्षां कर्तुमर्हसि ॥ २३
इति राज्ञो वचः श्रुत्वा नृपं प्राह पुनर्वचः । शिवभक्तो नचैवायं दासीगन्ता निरन्तरम् ॥ २४
कथमस्य भक्तिर्देवेशे शङ्करे सकलात्मनाम् । कथं वा भस्मरुद्राक्षधारणेन शिवप्रियः ॥ २५
इति तस्य वचः श्रुत्वा नृपः प्राह पुनर्वचः । न पूज्यते शिला किं वा लिङ्गमात्रेण कल्पिता ॥ २६
न नमस्क्रियते सर्वैर्यद्वद्दिदेवतैरपि । तद्वद्विभूतिरुद्राक्षधारणेनैव केवलम् ॥ २७
पूज्यते मनुजैस्सर्वैः कायवाङ्मनसैरपि । योषा कोषा मर्त्तस्तस्मात्त्वया जवनमीदृशम् ॥ २८
प्रयच्छ वस्त्रमादाय पुत्रहस्तात्त्वयाधुना । इति कोपाकुलो राजा समाह वचनं कटु ॥ २९
पुनश्च प्राह वचनं विकृत्यैवं दुराशयम् । त्वमेव त्वत्सुतं दुष्टं भर्त्संयन् कटुवाक्यैः ॥ ३०
न दापयसि मूढात्मन् वातवानहमत्यतः । न दापयसि तस्मात्त्वं गच्छ गच्छ ममान्तिकात् ॥ ३१
इत्युक्त्वा प्रेषयित्वैवं भर्त्संयन्वचनैर्नृपः । तत्सुतं शूद्रामानमाहूय कोपविह्वलः ॥ ३२
त्वया दुरात्मन् वसनं शिवभक्तस्य वै हृतम् । शिवद्रोही ततस्त्वं तु वध्य एवाविचारतः ॥ ३३
अविचार्यं शिवद्रोही वध्य इत्युच्यते बुधैः । इत्युक्त्वा स्वस्य पुरतश्चासीनं महीपतिः ॥ ३४
अन्यथा तु शिवद्रोहो मम चेति विचारयन् । तद् दृष्ट्वा तत्पिता दुःखाद्विजयः कोपितान्तरः ॥ ३५
धर्मं नृपान्तिकासीनमवमत्य दुरात्मवान् । निर्ययौ स्वगृहं वाक्यैर्दूषयन्बीजवैरसुम् ॥ ३६
तच्छ्रुत्वा च महीपालः कोपाकुलितमानसः । पुत्रं ज्ञात्वा शिवद्रोहनिरतं दुष्टचेतसम् ॥ ३७
वाग्रूपं करोत्येष महापापी दुराशयः । पुत्रश्शिवभक्तस्य ममेदानीं भयं विना ॥ ३८
तस्माद्वध्यश्च पापिष्ठो वध्य एवाऽविचारतः । विचार्य मनसा चैवमानयामास तं गृहात् ॥ ३९
अवरुध्य गृहे तत्र महाधनमनुत्तमम् । ततस्समागतस्सोऽयं कोपेन महता पुनः ॥ ४०
राज्ञो निकटमागत्य नृसिंहं मनसा स्मरन् । तदाविरासील्लहसा नृसिंहः कोपविह्वलः ॥ ४१
महाक्ष्वेलरवैश्चैवैर्बधिरीकृतदिङ्मुखः । तमेव भर्त्संयन् पापं विजयं दुष्टमानसम् ॥ ४२
निन्दयामासिथ यतश्शिवभक्तं शिवप्रियम् । तस्मात्त्वामधुना पापिन् हनिष्यामि न संशयः ॥ ४३
इत्युक्त्वा तं गृहीत्वाशु पाणिभ्यां स हरिस्तदा । नृपस्य पुरतः स्थाप्य चोत्पाट्यैनममारयत् ॥ ४४
ततः प्राह नृपं वीक्ष्य नारसिंहो महाबलः । शिवद्रोहं विना राज्यं निष्कण्टकमरिन्दम ॥ ४५
शाधि न्यायेन मार्गेण शासयन्द्रोहिणस्तथा । यदा मां स्मरसि क्षिप्रमागत्य तवान्तिकम् ॥ ४६
संहरिष्यामि शत्रूंस्ते दास्यामि च तवेप्सितम् । निहतश्शङ्करद्रोही मया मत्कोऽपि मामकः ॥ ४७
पालयञ्छिवभक्तांश्च सुखेन वस भूपते । इत्युक्त्वान्तर्दधे शीघ्रं नृसिंहस्तत्र भूसुराः ॥ ४८
ततः स्वभवनं प्राप्य राजा दुःखसमन्वितः । धर्मं तं बहुभिर्वस्त्रैः प्रीणयित्वा धनैरपि ॥ ४९
प्रेषयामास पुष्पात्मा दत्वा वस्त्रं तदीयकम् । तेन दोषेण विजयं दूरं तत्सुतमप्यहो ॥ ५०

नरकेऽस्मिन्महाघोरे पीडयन्त्यधुना भटाः । श्रुत्वाऽस्य चरितं घोरं शतानन्दो महामुनिः ॥ ५१
पुनरस्मिन्महाघोरे पीडितान् पापकर्मिणः । पप्रच्छ नन्दिनं साक्षात्सर्वेशं करुणाकरम् ॥ ५२

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे सप्तपञ्चाशोऽध्यायः ॥

---

॥ अथ अष्टपञ्चाशोऽध्यायः ॥

शिवनिन्दकादीनां नरक प्राप्तिः ॥

अतः परं प्रवक्ष्यामि शिवनिन्दारतात्मनाम् । भस्मनिन्दापराणाञ्च गुरुनिन्दारतात्मनाम् ॥ १
रुद्राक्षनिन्दकानाञ्च रुद्रभक्तापकारिणाम् । तेषां वक्ष्याम्यहं घोरनरकेष्वपि यातनाम् ॥ २
शृण्वन्तु परिहाराय मुनयस्संशितव्रताः । ओलकाख्ये महादेशे पुरमस्ति तदाख्यया ॥ ३
ओलकाख्यं पुरं तत्र राजा परमधार्मिकः । कलाधर इति ख्यातः कलाधर इवापरः ॥ ४
विप्रक्षिप्रोक्षणप्रेष्ठैस्सह कालं नयन्नसौ । धर्मेण पालयामास पृथिवीं पृथिवीपतिः ॥ ५
तस्मिन् कदाचिदास्थानमण्टपस्थो महात्मभिः । कविभिः पण्डितैर्विप्रैर्योगिभिर्यतिभिश्च वै ॥ ६
कथाप्रसङ्गे संवृत्ते कश्योऽभ्यस्य द्विजन्मनाम् । तत्र कश्चित्पाशुपतभारत्याख्यो यतीश्वरः ॥ ७
राजानं वीक्ष्य हृष्टात्मा कलाधरमभाषत । शृणु राजन् परं श्रेयश्श्रेयसां सकलात्मनाम् ॥ ८
शिव एव सदोपास्यो ज्ञेयो ध्येयश्च मुक्तये । स एव हि परं ब्रह्म तत्त्वञ्च परमं नृप ॥ ९
परञ्ज्योतिः परधाम शिव एव परायणम् । कारणं कारणानाञ्च दैवतानाञ्च दैवतम् ॥ १०
प्रणमन्तीह ये देवं ते कृतार्था नचेतरे । तेषामेव परा मुक्तिर्भोगस्तेषां महात्मनाम् ॥ ११
अष्टैश्वर्यप्रसिद्धिश्च सार्वभौमत्वमद्भुतम् । स्वर्गाधिपत्यं ब्रह्मत्वं विष्णुत्वं चापि भूपते ॥ १२
तदानीमपरो वासुदेवभारतिसंज्ञया । असहिष्णुश्शिवाधिक्यं महाराजानमाब्रवीत् ॥ १३
शिवोऽसौ तामसो रुद्रश्चर्मास्थिशवभस्मभृत् । श्मशाननिलयोऽत्यर्थं भूतप्रमथसंवृतः ॥ १४
सदा भोगरतो लोके स नु किं ब्रह्म भूपते । मुमुक्षुशरणोऽत्यर्थं भोगमोक्षप्रदश्च किम् ॥ १५
इति निन्दापरे वासुदेवभारति मुण्डिनि । कर्णौ पिधाय वै पाशुपतभारतियोगिराट् ॥ १६
मत्वात्वा शिवमाहात्म्यमुक्तमेतेन भिक्षुणा । तत्तत्संहारकरणानां विष्णूनां ब्रह्मणामपि ॥ १७
तेषामस्थीनि भस्मानि कपालानि महेश्वरः । भविष्यद्वर्तमानानां स्वाश्रयार्थं प्रबोधयन् ॥ १८
अनित्यत्वञ्च वै तेषां धत्तेमुग्धेन्दुशेखरः । शवानां शयनं प्रोक्तं श्मशानमिति सूरिभिः ॥ १९
सर्वेषां सर्वसंहारे श्मशानं परिकीर्तितम् । तत्रैक एव वै रुद्रो नृत्यत्यंबिकया सह ॥ २०
अतः श्मशाननिलयः प्रोक्तस्संहारकृद्विभुः । अज्ञात्वा शिवमाहात्म्यं लोके याति पराभवम् ॥ २१
इत्युक्त्वा पुनरादेनं शिवभक्तो यतीश्वरः । भवाञ्छापहतः पूर्वं ब्रह्मणो नात्र संशयः ॥ २२
एकदण्डास्त्रिदण्डाश्च ये च भक्ता हरे तथा । ते वै पाषण्डिनस्सन्तु दर्शनापरकप्रदाः ॥ २३
तस्य त्वं प्रथमं पात्रं शापस्य परिमोहितः । कथ्यसे त्वमपत्र त्वं भस्मरुद्राक्षवर्जितः ॥ २४
त्वया संभाषणे दोषो महानस्ति न संशयः । पुरा दक्षेण संभाष्य देवाश्च ऋषयोऽमलाः ॥ २५
जाताश्शिवद्रुहस्सर्वे दण्डिताश्च महौजसः । यस्य कण्ठे न भस्माङ्गे नास्ति रुद्राक्षमालिका ॥ २६

तं ब्राह्मणमपि प्राज्ञो वर्जयेच्छ्वपचं यथा । तस्मात्त्वद्दर्शने दोषो महान् संभाषणेऽपि च ॥ २७
तदानीमत्र सदसि ब्राह्मणो ब्रह्मकेसरी । संवीक्ष्य तं पाशुपतभारतिं प्राह मोहितः ॥ २८
किं भस्मनाधृतेन स्याद्रुद्राक्षतरुसंभवैः । बीजैर्धृतैर्विमुक्तिस्स्याद्विनाज्ञानं नृपेरितम् ॥ २९
लिप्तेन भस्मना किं स्याद्धृतैर्बीजैस्तरूद्भवैः । एतादृशानि वाक्यानि राजस्थाने वदेश्च किम् ॥ ३०
तत्राह योगी पाशुपतभारतिर्यतिसत्तमः । वेदागमपुराणानि श्रुतानि ब्रह्मबन्धुना ॥ ३१
नैव ते नैवमुक्तानि ज्ञानिनोऽज्ञानिनोऽपि वा । पापिष्ठस्यापि वै मुक्तिर्भस्मरुद्राक्षधारिणः ॥ ३२
इति सर्वत्र वेदेषु पुराणेष्वागमेष्वपि । यद्घुष्यमस्यते लोके सर्वैरपि महात्मभिः ॥ ३३
तापसैश्च धृतं भस्म तथा रुद्राक्षमालिका । शिवेन सदृशा लोके भस्मरुद्राक्षधारिणः ॥ ३४
पापिष्ठा अपि ते पूतास्तदन्ये पापिनः स्मृताः । एवमुक्तेऽपि वै ब्रह्मकेसरी ब्राह्मणाधमः ॥ ३५
पुनरेव कुतर्कोक्तिं प्रोवाच सदसीदृशीम् । ततो दृष्ट्वा पाशुपतभारतिर्भूपतिं तदा ॥ ३६
महात्मभिः कृते शास्त्रमसद्धे पृथिवीपते । एताभ्यां तु कुतर्कोक्तिरुच्यते तव सन्निधौ ॥ ३७
तमाह तस्य वै शिष्यस्त्वं सन्यासी गुरोऽधुना । किं फलं कलहेनात्र गच्छावावामितोऽधुना ॥ ३८
उक्ते पुनः पाशुपतभारतिश्शिष्यमब्रवीत् । शिवद्रोहितमावेतौ द्वेषेणाभ्याञ्च नः किमु ॥ ३९
हानिः केति तदा प्राह शिष्यः किं चात्र नः फलम् । गच्छतां नरकं स्वर्गं गच्छावावां प्रभोऽधुना ॥ ४०
वदन्तमेवं सन्यासी सोऽन्योऽपि शिवसंमतः । अधुनैवञ्च कथिते क्षेममार्गा नृपाङ्गणे ॥ ४१
उचितं नैव गमनमुत्तरादुत्तरं ध्रुवे । इत्युक्ते सति वै शिष्यो दुरात्मातीव कोपनः ॥ ४२
भगवन्नत्र तिष्ठ त्वं गच्छामीति विनिर्गतः । तं ब्रह्मकेसरी प्राह शिष्येणैव तथोत्तरम् ॥ ४३
इत्थं विनिर्गतश्चैव तव को मार्गदर्शकः । नेत्रे गते मतिश्चापि गता तव यतीश्वर ॥ ४४
तदानीं तत्र दमशान्ताख्यो ब्राह्मणोत्तमः । शिष्योऽहमस्य तिष्ठामि वर्धयिष्यामि पद्धतिम् ॥ ४५
दुरात्मा गच्छतु शिवद्रोही शिष्यो न चास्य सः । अहं शिष्योऽस्मि ते ब्रह्मंस्त्वं वै साक्षाच्छिवः स्मृतः ॥ ४६
शुश्रूषां ते करिष्यामि प्रत्यहं ज्ञानचक्षुषः । अधीतवेदशास्त्रोऽहं भस्मरुद्राक्षधार्यहम् ॥ ४७
योग्योऽस्मि तव शिष्यत्वे परिगृह्णातु मां भवान् । इत्यन्तिकस्थं पाशुपतभारतिर्ब्राह्मणं तदा ॥ ४८
कराभ्याञ्च स्पृशन्भक्तं जग्राह च करं तदा । शिवभक्तस्य पुत्रस्त्वं शिवभक्तो विशेषतः ॥ ४९
इति शंसति तं तत्र यतीशेऽनन्तरे द्विजः । भद्रास्यः प्राह सन्यासी न त्वं जातास्यमुं शृणु ॥ ५०
वेदपारमितो विप्रो बालकोऽसि यतीश्वर । त्वमित्युक्ते पुनश्चाह भूतिरुद्राक्षधारिणः ॥ ५१
शुद्धास्सर्वेऽत्र पूतास्ते तेषां दोषो न विद्यते । शिवभक्तस्य वै निन्दा त्वयात्र क्रियते द्विज ॥ ५२
राजानं प्रेक्ष्य पाशुपतभारतिः प्राह तं तदा । शिवनिन्दापरं वासुदेवभारतिमद्य वै ॥ ५३
ब्रह्मकेसरिणं भस्मरुद्राक्षाणाञ्च निन्दकम् । शिष्यं मम गुरुद्रोहरतं चक्षुसमाह्वयम् ॥ ५४
निस्पृहं शिवभक्तस्य मद्वाक्यं नृपसत्तम । शिक्षयाशु महीपाल चतुरस्त्वं न चेदहम् ॥ ५५
शिक्षामि किं यदेदागमिति वादिनि योगिनि । अब्रवीत्तं महीपालः प्रज्ञाचक्षुषमानमन् ॥ ५६
त्वमद्दिशाद्य वै स्वामिन् लब्धचक्षुः क्षणेन वै । शिक्षयैतानिति शिवं सर्वे पश्यामहे वयम् ॥ ५७
उक्ते क्षणे पाशुपतभारतिश्शिवपदद्रुमः । त्वमद्दिशा लब्धचक्षुः कोपेन महता वृतः ॥ ५८
बधैतेषाञ्चतुर्णां तु मूर्धसु दानवः क्षणात् । पतन्तु पश्यतो राज्ञः पुरस्तादशपद्यती ॥ ५९
हतास्तेऽशनिपातेन चत्वारोऽपि क्षणेन वै । पुनश्चाह स सन्यासी राजानं भीतमास्थितम् ॥ ६०

भवताऽङ्गीकृता राजन् शिवद्रोहपरा जनाः । यतस्ते मद्गिरा नैव शिक्षिताश्च महैनसः ॥ ६१
ततो मम तु शापेन खरो भव नृपाधुना । भीतभीतोऽथ नृपतिः प्रणम्य यतिसत्तमम् ॥ ६२
कृताञ्जलिपुटो मूर्ध्नि न्यस्य तत्पदयुगं यतिम् । अज्ञानादनुष्ठितं स्वामिन् क्षमस्वागो ममेदृशम् ॥ ६३
प्रणिपातावधिः क्रोधो महतामिति हि श्रुतिः । तमाह क्रोधताम्राक्षः पुनस्सन्न्यासिपुङ्गवः ॥ ६४
प्रायश्चित्तं श्रुतौ दृष्टं स्मृतावपि महैनसाम् । शिवद्रोहप्रसक्तस्य न कुत्रापि च निष्कृतिः ॥ ६५
मया किमिह कर्तव्यमदृष्टस्त्वीदृशं तव । भवतो मोचनं नास्ति नृप जन्मनि जन्मनि ॥ ६६
इत्युक्त्वा निर्जगामाशु तदा पाशुपतो यतिः । तथैव तस्य शापेन राजा पापेन तेन वै ॥ ६७
गार्दभीं योनिमापन्नश्चारोऽशनिना हतः । महारमस्तु कृताह्नो नैव जीर्यति कुत्रचित् ॥ ६८
यमदूतैश्च ते भूपश्चचारोऽशनिना हताः । अष्टाविंशति कोटीषु नरकेषु निपातिताः ॥ ६९
अधोमुखोर्ध्वपादास्ते बाध्यन्ते दण्डपाणिभिः । श्रोत्राक्षिनासिकास्येषु चरद्भिः क्रिमिणां कुलैः ॥ ७०
सततं दुष्यमाणाश्च विकृष्यामा निरन्तरम् । पारं न लभते तेषां कल्पकोटिशतेष्वपि ॥ ७१

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे अष्टपञ्चाशोऽध्यायः ॥

---

## ॥ अथ एकोनषष्टितमोऽध्यायः ॥

### देवालयादिषु मधुदिकरणेन नरक प्राप्तिः ॥

अतः परं प्रवक्ष्यामि पुलस्त्यां कथां द्विजाः । शृणुध्वं श्रद्धया यूयं सम्मुखान्मुनिपुङ्गवाः ॥ १
कलिङ्गेऽस्ति महीभागे कटकाख्यं महापुरम् । तत्र राज्ञः कुमारोऽभूद्विरागो नाम वीर्यवान् ॥ २
सुलक्षो मन्त्रिपुत्रस्तु सुनन्दाख्यः पुरोधसः । मुकुन्दो द्वारपालस्य चत्वारोऽन्योन्यरागतः ॥ ३
सर्वेऽपि समकाले ते सर्वविद्यासु शिक्षिताः । स्वकर्मनिरता नित्यं दानधर्मकृतोद्यमाः ॥ ४
तीर्थयात्रामतिस्तेषां कदाचिदुदभूत् द्विजाः । पितृभिश्च कृतानुज्ञास्संगृह्य च धनं बहु ॥ ५
कटकादन्तिके ग्रामं प्रापुस्ते सुपुराभिधम् । तत्रैकस्यालये शंभोरसुरेश्वरमहेशितुः ॥ ६
तां रात्रिं वस्तुकामास्ते समालोच्य परस्परम् । तां रात्रिं न्यवसद्राजकुमारो मन्त्रिनन्दनः ॥ ७
भिक्षागिरेर्मठेवासं चकार शिवयोगिनः । पुरोहितसुतश्चापि सुनन्दोऽपि मुदान्वितः ॥ ८
विदुषाख्यस्य भक्तस्य शिवस्य न्यवसद्गृहे । द्वाःस्थपुत्रस्तदाग्रामे निवासमकरोत्स्वयम् ॥ ९
भुक्त्वा ब्राह्मणगेहेषु नीत्वा ताञ्च निशां पुनः । अन्येद्युरपरग्रामं प्रस्थिताः क्वाप्य एव ते ॥ १०
मध्येमार्गं मुनिश्रेष्ठं गौतमं ददृशुश्च ते । चत्वारोऽपि च तं दृष्ट्वा प्रणम्य विनयान्विताः ॥ ११
आचख्युर्निजवृत्तान्तं तीर्थयात्राकृतं तथा । तानालोक्य मुनिः प्राह न युष्माकं भविष्यति ॥ १२
तीर्थयात्रा यतो यूयमद्य क्षीणायुषो ध्रुवम् । अथात्रापि शिवद्रोहो युष्माभिर्विहितैः कृतः ॥ १३

सायङ्कालेऽत्र युष्माकं चतुर्णां पञ्चता ध्रुवम् । श्रुत्वाऽपृच्छन् मुनेऽस्माभिर्दिशाचक्रो हो ऽत्र कः कृतः ॥ १४
यद् येन स्वयं पातमयुर्गौतम देशिक । गौतमः — शृणु राजकुमारात्र पूर्वेद्युर्देवमन्दिरे ॥ १५
त्वया निस्सारिताः केशा दूषिता सन्निधिश्च तैः । मन्त्रिपुत्रेणाच मठे तांबूलष्ठीवनं कृतम् ॥ १६
पुरोहितसुतेनापि शिवमठगृहे कृतम् । गण्डूषं तामयाक्रान्तं पादेन शिवयोगिना ॥ १७
अयं कृतं शिवारामे द्वाःस्थपुत्रेण मोदतः । उद्यानं दूषितं तेन शिङ्घाणष्ठीवनेनच ॥ १८
समस्तोऽपि कृतं सर्वैः पूर्वमुन्मिलितेरितम् । किमनेनेति जग्मुस्ते नमस्कृत्य मुनीश्वरम् ॥ १९
तस्मिन्नेव क्षणे राजपुत्रस्यामृच्छिरोव्यथा । मन्त्रिपुत्रो गले रुद्धो मृत्युनेव गदेन वै ॥ २०
पुरोहितसुतस्यापि रसना गलिता बहिः । द्वाःस्थपुत्रस्य नासाग्रात्स्रवात रुधिरं बहु ॥ २१
मृतास्सर्वे क्षणेनैव नरकेषु निपातिताः । राजपुत्रस्य शिरसि सीसद्रवमथाकिरन् ॥ २२
खण्डशश्च शिरश्छित्वा सिषिचुस्तानियात्यया । एवमादिभिरन्यैश्च पीड्यन्ते यमकिङ्करैः ॥ २३
ताम्रद्रवश्च जिह्वायां ततमापूरितं पुनः । गण्डूषणं कृतं येन तस्य दन्तास्समुद्धृताः ॥ २४
नासिकायाश्च नाराचास्तान्यस्यापि निपातिताः । एवमादिभिरन्यैश्च यथार्हं यातनाशतैः ॥ २५
पीड्यन्तेस्म सदाकालमहोकष्टं हि दुष्कृतम् । एतेषां पूर्वजाश्चापि पितृमातृपितामहाः ॥ २६
इदानीमपि नैतेषां निष्कृतिर्नैकालयात् । एवमेवमनेकेऽपि सन्तितेऽपीदृशीं दशाम् ॥ २७
मापुरेव न सन्देहः सकृदेमापि पापिनः । श्रुत्वैतच्चन्द्रिनस्तस्माच्छतानन्दो मुनीश्वरः ॥ २८
प्रणम्योवाच भो नन्दिन् श्रुत्वैतच्चरितं मम । शरीरं कंपतेऽत्यर्थं मनश्चापि द्रवत्यथ ॥ २९
देवाश्च विष्णुप्रमुखा एवमेतद्वचोचिरे । तानुवाच ततो नन्दी ममाप्येवं तु वः किमु ॥ ३०
एतादृशानां पापानां प्रायश्चित्तं हि दुर्लभम् । शिवस्येति तदा प्राप सर्वैरेतैर्दिशयान्तिकम् ॥ ३१
तत्र देवञ्च देवीञ्च प्रणम्य परया मुदा । स्तुतिञ्चकार सोऽप्येवं ब्रह्मविष्ण्वादयोऽपि च ॥ ३२
शतानन्दोऽपि स मुनिः प्रणनाम शिवं शिवाम् । शतानन्दमथालोक्य शिवदर्शितांशुभूषणः ॥ ३३
भवता मुनिशार्दूल यद्वक्तव्यमस्ति तत् । श्रुतं किल मुखादेव नन्दिनः प्रमथेश्वरात् ॥ ३४
इति पृष्टस्तमीशानं शतानन्दो मुनीश्वरः । श्रुतमेव मया सर्वं त्वन्मुखादिव नन्दिनः ॥ ३५
एवमेवं कृतानुज्ञो निर्जगाम शिवान्तिकात् । ब्रह्मविष्ण्वादयो देवा विसृष्टाश्च पिनाकिना ॥ ३६
नन्दीचापि कृतानुज्ञो द्वारदेशञ्जगाम वै । तत्र तेनाभ्यनुज्ञाता ब्रह्मविष्ण्वादयस्सुराः ॥ ३७
शतानन्दोऽपि भगवान् स्वं स्वं प्रापुरथालयम् । इति सूतान्मुनिवराच्छ्रुत्वाद्भुतकथामिमाम् ॥
प्रशशंसुस्तदा सूतं पुनःपुनरतन्द्रिताः ॥ ३८

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे एकोनषष्टितमोऽध्यायः ॥

---

॥ अथ षष्टितमोऽध्यायः ॥

अज्ञानकृत शिवापचारस्यापि नरकानुभवः ॥

ऋषयः — अज्ञानतः कृतं राजतनयाद्यैः किलाधुना । महान्त्येतत्फलं भुक्तं विचित्रनरकेषु किम् ॥ १
महात्मभिश्च विद्वद्भिश्शिवभक्तैः कृतं यदि । अज्ञानात्कर्म यत्किञ्चिदपकारात्मकं मनाक् ॥ २
तस्याप्यनुभवो दुस्सहतोवा भवता वद । नरकेषु कदाचिदपि सूत सर्वज्ञ सुव्रत ॥ ३

सूतः — ज्ञानादज्ञानतो वापि भक्तैरपि महात्मभिः । अपचारात्मकं कर्म यत्समाचरितं शिवे ॥ ४
तस्यैवानुभवो दृष्टो नान्यस्य पशुकर्मणः । सोमशर्मा पुरा विप्रश्शिवशर्मा च भूसुरः ॥ ५
तावुभौ सुमहात्मानौ सर्वज्ञौ च दृढव्रतौ । एकदा देवसेवार्थं गतौ देवालयं प्रति ॥ ६
तत्र दृष्ट्वा लिङ्गमूर्तिं शिवं त्रिदशनायकम् । प्रदक्षिणं तदा शंभोश्चक्राते ब्राह्मणावुभौ ॥ ७
तदानीं पुनरेकेन दीपश्शान्तोऽल्पवायुना । न दृष्टस्तेन सोऽन्येन दृष्टो नोक्तश्च तं प्रति ॥ ८
स्वयं वा न चकारास्य पुनर्दीपसमुद्भवम् । निर्गतौ च यथापूर्वं कालेन विलयं गतौ ॥ ९
ताभ्यां [illegible] यातनाः प्राप्तास्तास्ता वर्णितुं न च । पुनश्च पुण्यशर्माख्यश्शिवभक्तश्शिवालये ॥ १०
नाशोन्मुखं पुनर्दीपं यथापूर्वं चकार सः । अकृत्वा तं यथाप्रेतु तैलं किञ्चित्ससत्त्ववै ॥ ११
तेनापि नरके घोरे यातनास्सेहिरे चिरम् । अनन्तरं सारमेयस्सञ्जातो बहुधा चिरम् ॥ १२
तथा सुमतिसंज्ञोऽपि शिवयोगी जितेन्द्रियः । शिवार्थं प्रतिगृह्णाति भिक्षामन्यद्धनं बहु ॥ १३
ददाति तद्धनं सर्वं शिवपूजादिकर्मसु । नालिकेरान् गृहीत्वार्थं तज्जलैः परमेशितुः ॥ १४
कारयित्वाभिषेकं तैरस्ति तत्सारमान्तरम् । तेनास्य नरके घोरे यातना समभूयत ॥ १५
स्कन्दालये घृतेनान्यो वैश्यो भक्त्या दिने दिने । दीपानुद्दीप्य बहुधा कुर्वन् देवं प्रदक्षिणम् ॥ १६
तत्रान्नशाकं सुबहु विधिवत्प्रत्यहं स्वयम् । तेनापि नरके तीव्रे यातनास्सेहिरे भृशम् ॥ १७
यज्ञदत्ताभिधः कश्चिद्वयविरो योगिपुङ्गवः । देवालयं महत्पुण्यं भिन्नितं पापिनाऽग्निके ॥ १८
तत्रस्थितं पदैस्तेन रुधिरेणापि संयुताः । अनुभूता पुराऽमहा यक्षवृन्देन यातनाः ॥ १९
वैयद्दीक्षोऽस्ति क्वचासौ भारद्वाजो मुनीश्वराः । निद्रापरं शिवाभ्याशे पादेनाकलितो यतिः ॥ २०
विलङ्घ्य दर्शयित्वा तं पापिनं परमेश्वरम् । अगाम तेन पापेन तीव्राः पीडाश्च सेहिरे ॥ २१
तस्मात्खिलेन्द्रियैश्चापि योगिभिश्च महात्मभिः । ज्ञानिभिश्च शिवद्रोहो नानुष्ठेयः कदाचन ॥ २२
शिवालये तदा शंभोरपचारः कृतो यदि । अनुभूय फलं पश्चादन्ते मुक्तिश्च तादृशाम् ॥ २३
शिवद्रोहरतो वै तस्मात्प्रमोक्तव्यो विजानता । शिवद्रोहपराणां तु समीपे च न संवसेत् ॥ २४
इति सूतात्समाकर्ण्य मुनयस्संशितव्रताः । विस्मयं परमं गत्वा भयेनाथ चकंपिरे ॥ २५
परिहृत्य शिवद्रोहं तपांसि सफलानि न । कथा श्रुता यदेतेषां पापिनां श्रवणेन नः ॥ २६
प्रायश्चित्तं तदेतस्य शिवपञ्चाक्षरस्मृतिः । दध्युश्च हृदयांभोजे देव्या सह पिनाकिनम् ॥ २७
सूतोऽपि वक्ता चैतेषां तत्पापविनिवृत्तये । दध्यौ शिवमुमाकान्तं वदन् पञ्चाक्षरीं मुदा ॥ २८
भावतेऽतिशयहृदयधैर्यमेव तु सन्निधौ । पुनस्तु पूजामाहात्म्यमपृच्छंस्तं मुनीश्वराः ॥ २९

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे षष्टितमोऽध्यायः ॥

---

॥ अथ एकषष्टितमोऽध्यायः ॥

बिन्दुनादात्मकस्य लिङ्गस्य पूजामहिमा ॥

सूतः — अतः परं प्रवक्ष्यामि पूजामाहात्म्यमीशितुः । यच्छ्रुत्वा मनुजस्सद्यो मुक्तिमार्गं गमिष्यति ॥ १
पूर्वकल्पे महादेवः स्वाद्यन्ते जगत्पतिः । संहृत्य सकलं विश्वं स्वात्मनोऽव्यतिरेकियत् ॥ २

शक्त्या तु परया विप्रा ननर्तैको निशां सकाम् । दर्शयन्तो यथापूर्वं सृजेयमिति शङ्करः ॥ ३
प्रज्ञा तस्मादभूच्छंभोः पुराणी मुनिसत्तमाः । असृजत्स यथापूर्वं प्रपञ्चान्यपि च लीलया ॥ ४
सङ्कल्पमात्रेण तदा ससर्ज सकलं शिवः । तिस्रो मूर्तीः स्वात्मनैव सृष्टिस्थित्यन्तहेतवे ॥ ५
सप्राकृतवपुश्शीलाग्रुद्रानपि गणानपि । देवांश्च ऋषिभिस्सार्धं पितॄनपि नरानपि ॥ ६
अन्यांश्च जगतां नाथः स्थावरं जङ्गमं जगत् । रुद्रान्मातृगणांश्चैव प्रमथान् प्रमथाधिपान् ॥ ७
भूतानि भूतपैरेवं देवासुरमहोरगान् । ऋषीन् पितृगणान्देवो लीलया सकलञ्जगत् ॥ ८
उच्चावचानि भूतानि तथा शक्त्या जगत्पतिः । विष्ण्वादीनां महर्षीणां केषाञ्चिदधिकारिणाम् ॥ ९
वेदागमपुराणानि शास्त्राणि विविधान्यपि । अध्यापयामास गुरुः स्थितान्यात्मनि लीलया ॥ १०
शशास तान् पुनर्देवो विष्ण्वादीनमरप्रभुः । मां पूजयत वै देवा भक्त्या भावपुरस्सरम् ॥ ११
भावानुरूपफलदः प्रतिज्ञा [illegible] मया कृता । ततोऽधिकारं युष्माकं कल्पयामि हरे विधे ॥ १२
ततस्साञ्जलिहस्तास्ते प्रणम्य प्रभमूचिरे । परिपूर्णोऽसि भगवन् पुरुहूत पुरुष्टुत ॥ १३
धृतो वेदागमेष्वीश कथं पूज्यो हि नो वद । केनाकारेण वै देवः सर्वरूपः स्मृतः प्रभो ॥ १४
विश्वरूपाय वै देव वेदो वदति भो नमः । कथं कं विग्रहं तेषु केन संपूज्य शङ्कर ॥ १५
भवाम ते प्रसादस्य पात्रभूता जगत्पते । ईश्वरः — यस्यां कस्यांश्च वै मूर्तौ पूजितोऽप्यह भावतः ॥ १६
प्रसन्नो वाञ्छितं दद्यां यस्य कस्यापि वा सुराः । किन्तु लिङ्गार्चकानान्तु शीघ्रमेवाऽस्म्यभीष्टदः ॥ १७
लिङ्गमूर्तौ सदाकाङ्क्षे विना मन्त्रादिसत्क्रियाम् । प्रसन्नो भवाम्येव भक्तिभाजां विमुक्तये ॥ १८

देवाः —

किं लिङ्गं भवता यथार्थं केन लिङ्गी त्वमव्ययः । कथं वा लिङ्गसंज्ञास्य वद विस्तरतो विभो ॥ १९
ईश्वरः — अव्यक्तं लिङ्गमाख्यातमनन्तमजरं ध्रुवम् । गुणत्रयं तदेवाहं सृजत्यवति हन्ति च ॥ २०
तदेव मम लिङ्गन्तु तस्य रूपं चतुर्विधम् । परो बिन्दुः परो नादस्तत्परो बिन्दुनादकौ ॥ २१
उपर्यधो भागलिङ्गाख्यपारोऽपि सुरेश्वराः । अपरो बिन्दुनादौ स्यात्तदूर्ध्वमपरो ध्वनिः ॥ २२
तदूर्ध्वं परबिन्दुस्स्यात्परमाद्तत्पूर्वकः । प्रणवो वेदिरस्यायं नादो लिङ्गाकृतिस्सुराः ॥ २३
बिन्दुनादमये तस्मिन् लिङ्गे सन्निहितस्सदा । तस्माल्लिङ्गार्चकानान्तु सद्यः प्रीतोऽस्म्यभीष्टदः ॥ २४
तस्मिन् लिङ्गेऽव्ययं पूर्णकलया सर्वथा सुराः । जगच्च सकलं तस्मिन् तिलेतैलमिव स्थितम् ॥ २५
प्रलये लीनमत्रैव सृष्टौ सृष्टञ्च तेन तत् । तत्स्वरूपं पुनर्लोके लिङ्गवेद्यात्मकं विदुः ॥ २६
तस्मात्सवेदिके लिङ्गे लिङ्ग्यहं संस्थितस्सदा । सवेदिकमिदं लिङ्गं रत्नकाञ्चनराजतैः ॥ २७
शिलाभिर्दारुभिर्मृद्भिर्गन्धपारदपूर्वकैः । सलक्षणं विधायैव पूजयध्वमतन्द्रिताः ॥ २८
वेदागमोक्तविधिना सर्वकालमतन्द्रिताः । पूजां कुर्वन्ति ये नित्यं मुक्तिभाजो भवन्ति ते ॥ २९
दानानि बहवो यज्ञास्तपांसीन्द्रियनिग्रहः । सर्वं लिङ्गार्चनस्यैव कोट्यंशेनापि नो समाः ॥ ३०
तस्माल्लिङ्गार्चकानां तु नैव जन्म न संसृतिः । तस्यां तु लिङ्गमूर्तौ मां सदाशिववपुर्धरम् ॥ ३१
भावपूतेन मनसा पूजयन्तु जगत्त्रये । ब्रह्माण्डेषु च सर्वत्र तत्र तत्राप्यहं सुराः ॥ ३२
लिङ्गमूर्तिमधिष्ठाय पूज्यो वेदोक्तवर्त्मना । केदारे च तथा काश्यां श्रीगिरौ सर्वसिद्धिदे ॥ ३३
श्रीमद्दक्षिणकैलासे वटारण्ये महत्तरे । काञ्चीपुरेऽरुणाद्रौ च श्रीमद्वृद्धाचले तथा ॥ ३४
चिदंबरे कुम्भघोणे मध्यार्जुनमहालये । ममास्त्वमनोभीष्टवसतौ कमलालये ॥ ३५

हालास्ये च महास्थाने सेतौ रामेश्वराभिधौ । स्थानेषु चैवमादौ च प्रचण्डं लिङ्गरूपकम् ॥ [illegible]
निवसामि सदाकालमुमया सह हे सुराः । तस्मान्मां लिङ्गमूर्तिस्थं पूजयत्वखिलं जगत् ॥ ३७
यूयञ्चेत्यभिधायैवं तिरोऽभूज्जगतां पतिः । तत्र तत्राष्टदेशेषु पुरुहूतः पुरुष्टुतः ॥ ३८
पूज्यमानस्सदा सर्वैः पञ्चकृत्यरतस्सदा । चिक्रीडगणपैस्सार्धं देवीस्कन्दविनायकैः ॥ ३९
कैलासे च तथा तत्र महाकैलासपर्वते । मन्दरे च महामेरौ चक्रवाळगिरौ तथा ॥ ४०
शिवलोके च सान्निध्यं तत्र तत्राप्यनुग्रहम् । कुर्वन् सर्वात्मनामीशः स्थितः स्थाणुर्जगन्मयः ॥ ४१
ततो विष्णुमुखा देवा ऋषयश्च तपोधनाः । स्वसामीप्यप्रसिध्यर्थं कृत्वा लिङ्गं सवेदिकम् ॥ ४२
स्थानेषु च नदीतीरे पर्वताग्रेषु सादरम् । उपचारैस्समभ्यर्च्य षोडशैरमथा शिवम् ॥
एवं प्रापुर्यथाहं ते प्रसादादीश्वरेश्वरात् ॥ [illegible]

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे एकषष्टितमोऽध्यायः ॥

---

॥ अथ द्विषष्टितमोऽध्यायः ॥

काश्यादि क्षेत्रेषु विष्ण्वादिदेवकृत शिवाराधनं ॥

ऋषयः — केषु स्थानेषु देवेशमाराधयन्सुरर्षयः । विविच्य वद विस्तारात्सूत नो निखिलं क्रमात् ॥ १
सूतः — शृणुध्वमृषयस्सर्वे क्रमशो वच्मि सुव्रताः । तदा विष्णुरमेयात्मा शङ्करप्रियकिङ्करः ॥ २
काशीं प्राप्याविमुक्ताख्यामेकवर्षायुतं ततः । कुर्वंस्तपो महद्घोरं लिङ्गमूर्तिं सदाशिवम् ॥ ३
भक्त्या संपूज्य देवेशात् प्राप्तवाम्बरमुत्तमम् । प्रसादात् पार्वतीशानात् वैष्णवं पदमुत्तमम् ॥ ४
सर्वरक्षाधिकारित्वे चाभिषिक्तो यथाविधि । शङ्खं चक्रं गदां खड्गं शार्ङ्गाद्यान्यायुधान्यपि ॥ ५
महालक्ष्मीपतित्वञ्च पीताम्बरमद्भुतम् । एवं पद्मरथाधीशं ददौ सर्वं सदाशिवः ॥ ६
जगद्रक्षेति चाज्ञप्तो देवदेवेन शूलिना । तदादि च तथा विष्णुश्शिवलोकादधः स्थिते ॥ ७
लोके स्थितो रक्षणार्थो जगत्त्रयमतन्द्रितः । छत्रे रत्नमये तद्वच्चामरे मणिदण्डके ॥ ८
दिव्यस्त्रीभिस्सुरस्त्रीभिस्सेव्यमानस्तु पार्श्वतः । समुवास महाविष्णुर्विष्णुलोकः स्मृतस्तु सः ॥ ९
सेव्यमानस्तु तत्रैव ब्रह्माद्यैस्सुरयोगिभिः । दुष्टानां निग्रहं कुर्वन् शिष्टानामपि रक्षणम् ॥ १०
महदैश्वर्यसंपन्नो भवसत्कमलापतिः । काञ्चीस्थानमनुप्राप्य ब्रह्मा संपूज्य शूलिनम् ॥ ११
शैले लिङ्गमिषि(?)च्येशं वरं प्राप सुदुर्लभम् । अधिकारञ्च वै सृष्टेरभिषेकपुरस्सरम् ॥ १२
सरस्वतीपतित्वञ्च लेभे हंसञ्च वाहनम् । छत्रञ्चन्द्रसमं शुभ्रं चामरद्वयमेव च ॥ १३
विष्णुलोकादधोभागे देवर्षिगणपूजितः । उवास लोकं यमय महता वैभवेन वै ॥ १४
ब्रह्मलोकस्स विख्यातो नाम्ना तस्यैव सुव्रताः । इति लेभे वरं शंभोर्ब्रह्मा लिङ्गार्चनाबलात् ॥ १५
इन्द्रश्श्रीपर्वतं प्राप्य पूजयामास भावतः । भवं भवानीसहितं प्रसादाप वरान्बहून् ॥ १६
स्वर्गाधिपत्यं देवानामाधिपत्याभिषेचनः । पुलोमजापतित्वञ्च गजमैरावताभिधम् ॥ १७
उच्चैःश्रवसमश्वेशं वज्रञ्चायुधमद्भुतम् । द्रुमांश्च कल्पकान्धेनुः कामदाश्च महायशाः ॥ १८
चिन्तामणिं तथा रत्नमुर्वश्याप्सरस्त्रियः । प्राच्यां दिशोऽधिपत्यञ्च प्रसन्नाशाप शङ्करात् ॥ १९

तथैव स्वर्गलोकस्थो भुञ्जन् दिव्यसुखं मुहुः । अमृतास्वादनं कुर्वन्तिष्ठत्यद्यापि वज्रभृत् ॥ २०
मरुणाद्रौ तथैवाग्निरभिषिच्य सदाशिवम् । अनेकविप्रवर्यैस्सार्धं संपूज्याप वरानयम् ॥ २१
अग्नीनामाधिपत्यञ्च दक्षिणाप्राच्यधीशताम् । कृताभिषेको देवेन छागं वाहनमुत्तमम् ॥ २२
आयुधानि च शक्त्यादि स्वाहाञ्च दयितां शुभाम् । तथैवेशाज्ञया ह्येष दक्षिणाप्राग्दिगीश्वरः ॥ २३
अग्नीनामधिपो ह्येष तिष्ठत्येवाग्निरद्भुतः । केदारारण्ये महाक्षेत्रे यमोऽपि यमिनां वरः ॥ २४
प्रसाद्य देवदेवेशं प्रापाभीष्टमयं वरान् । दक्षिणाशापतित्वञ्च महिषं वाहनोत्तमम् ॥ २५
कालदण्डाद्यायुधानि सर्वेषामात्मनां पुनः । समवर्तितया नीत्वा पुण्यापुण्ये विचार्य च ॥ २६
पुण्येन स्वर्गतिं तेषां पापेन नरके स्थितिम् । यातनाश्चापि नरके तत्तत्पापानुरूपतः ॥ २७
अन्यानपि महाभागान्मध्यस्थान्महितौजसः । चित्रगुप्तञ्च कार्यस्थं चकारास्य शिवः स्वयम् ॥ २८
तथापि धर्मराड्भोगी संयमिन्यां शिवाज्ञया । मनुपूर्णाभिधां लक्ष्मीमास्तेऽद्यापि प्रतापवान् ॥ २९
गोकर्णे च शिवस्थाने निर्ऋतिः परमेश्वरम् । समभ्यर्च्य ततः प्राप प्रसन्नाज्जगतीपतेः ॥ ३०
दक्षिणापरदिक्पालभावञ्च विधिपूर्वकम् । यक्षतां फलशाहत्वं खड्गाद्यायुधोत्तमम् ॥ ३१
अभिषिक्तश्चाधिपत्ये रक्षसामपि सर्वशः । अद्याप्यनुभवत्यस्ते दत्तां देवेन संपदम् ॥ ३२
जम्बारण्ये समभ्यर्च्य प्रचेताः परमेश्वरम् । प्रापार्णवाधिपत्यञ्च यादसामप्यपामपि ॥ ३३
वाहनञ्चापि मकरमभिषेकपुरस्सरम् । पश्चिमाशाधिपत्यञ्च पाशाद्यायुधमुत्तमम् ॥ ३४
तथैव लब्ध्वा तत्सर्वं महता प्राभवेन सः । वर्ततेऽद्यापि सन्तुष्टो महातेजाः प्रतापवान् ॥ ३५
वायुर्दक्षिणकैलासे कालहस्तिमहापुरे । समभ्यर्च्य महादेवमुपचारैरनन्यधीः ॥ ३६
परमाप महेशानात् प्रसन्नादीश्वरेश्वरात् । पश्चिमोत्तरदिक्पालत्वे चाभिषिक्तः प्रतापवान् ॥ ३७
वायूनामाधिपत्यञ्च ध्वजाद्यायुधपूर्वकैः । मृगञ्च वाहनं लेभे सोऽद्याप्यप्रतिमो भुवि ॥ ३८
सिद्धेश्वराभिधे सिद्धवटे संपूज्य शङ्करम् । कुबेरः परया भक्त्या वरानाप महेश्वरात् ॥ ३९
उत्तराशापतित्वञ्च यक्षभद्रो बभूव च । निधीनाञ्च धनानाञ्च पतित्वं चापि पुष्पकम् ॥ ४०
विमानमपि देवेशाद्यक्षेशत्वञ्च वाहनम् । नरं प्रतापसंयुक्तो वर्ततेऽद्यापि तत्कृपा ॥ ४१
ईशानोऽपि महादेवं कमलालयवासिनम् । संपूज्य पत्रपुष्पाद्युपचारैरनेकधा ॥ ४२
प्रसन्नेन तदा पृष्टः काऽपेक्षेति पिनाकिना । प्रणम्य वरयामास वरग्रामाननन्यधीः ॥ ४३
समानानि च नामानि समानवपुरायुधम् । समानमपि चिह्नं यद्यदस्ति शिवस्य तु ॥ ४४
वृषञ्च वाहनं तद्वत् प्रागुदीचीदिगीशताम् । एतत्सर्वमसौ लेभे संप्राप्येशं स्वयं वशी ॥ [illegible]
अन्तेऽधिकारस्य पुनस्सायुज्यं परमेश्वरः । दत्त्वाऽन्तर्धानमापेशस्सोऽप्यद्यापि प्रतापवान् ॥ ४६
काञ्च्यामेव पुरा सूर्यः कमलैरीश्वरेश्वरम् । अभ्यर्च्यानन्यया भक्त्या प्रसन्नादाप्तवान्वरम् ॥ ४७
ऋग्यजुस्सामवेदानां मण्डले वसतिस्सदा । तद्वच्च रथं लेभे सप्ताश्वपरिमण्डितम् ॥ ४८
ग्रहाणामाधिपत्यञ्च ज्योतिश्चक्रस्य सर्वतः (चक्रस्य सर्वदा) । कृताभिषेको देवेन दिनानामधिपोऽभवत् ४९
कुम्भघोणमनुप्राप्य चन्द्रश्शङ्करवल्लभः । भक्त्याऽभ्यर्च्य महादेवं तत्र (पत्रैः) मुक्तामयैश्शुभैः ५०
परमाप शिवात् शीताक्षेशत्वमद्भुतम् । हिमांशुत्वं द्विजेशत्वमोषधीशत्वमेव च ॥ ५१
विभूषणत्वमीशस्य सुदुर्लभमवाप सः । प्रत्यहं तावुभौ मेरोः प्रदक्षिणपरौ मुदा ॥ ५२
शिवालयस्य सततं ग्रहैरन्यैश्शिवप्रियैः । सौमो बुधो गुरुश्शुक्रशनिश्चैतेच पञ्चच ॥ ५३

मध्यार्जुने च हालास्ये शैलौ श्वेतवने (वटवने) मुदा । वेदारण्ये च पञ्चैते पञ्चस्वपि पिनाकिनम् ॥ ५४
प्रसाद्य परया भक्त्या प्रसन्नाः प्रापिरे वरान् । ऊर्ध्वमण्डलतस्सोमसूर्ययोरुपरि स्थितिम् ॥ ५५
आधिपत्यञ्च सुमहल्लोकानां सुखदुःखयोः । सर्वैरपि च पूज्यार्थं सर्वोपद्रवशान्तये ॥ ५६
देवासुराणामाचार्यौ गुरुशुक्रौ कृतौ तदा । ईश्वरेणैव देवेन प्रसन्नेन मुनीश्वराः ॥ ५७
तथापि ऋषयः पूर्वे देवदेवं सभापतिम् । चिदम्बरे समभ्यर्च्य मध्ये दभ्रसदः प्रभुम् ॥ ५८
अवापुर्वरमीशानाद् ग्रहाणामुपरिस्थितिम् । पुनर्देहान्तरे मुक्तिं मुमुदुः प्राप्य ते परम् ॥ ५९
सर्वशास्त्रार्थविज्ञानकुशलाश्च तदाज्ञया । वसिष्ठाद्या महात्मानस्तेऽद्यापि महितौजसः ॥ ६०

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे द्विषष्टितमोऽध्यायः ॥

---

॥ अथ त्रिषष्टितमोऽध्यायः ॥

काश्यादिषु मुक्त्यादिक्रियार्चनम् ॥

सूतः — ध्रुव औत्तानपादिस्तु काश्यां विश्वेश्वरं शिवम् । समभ्यर्च्य महेशानात् प्रसन्नाद्वासवाम्बरम् ॥ १
नक्षत्रमुनिमुख्यानां मण्डलोर्ध्वस्थितिं पराम् । मेधीभूतो ग्रहाणाञ्च भ्रामयन्नेव तान्मुदा ॥ २
सर्वोपरि कलाधारस्थितिख्यात्याध्यक्षंभ्रमन् । कुम्भयोने पुरा शेषस्सर्वेषां भोगिनां वरः ॥ ३
प्रसाद्य परमेशानं भुवो भारं बभार वै । महाप्रतापसंयुक्तो वहतेऽद्याप्ययं धराम् ॥ ४
एवं स्थानेषु सर्वेषु भूम्यां पर्वतमूर्धसु । नदीनाञ्चैव तीरेषु देवाश्च मुनयोऽसुराः ॥ ५
सिद्धाश्च गरुडा यक्षा विद्याधरमहोरगाः । किन्नराश्च मुनिश्रेष्ठास्तथा किंपुरुषादयः ॥ ६
मनुष्याश्च महादेवं भक्त्याराध्य सदाशिवम् । स्वं स्वं पदमनुप्राप्य सुखिनो मुदमापिरे ॥ ७
नागानां गरुडानाञ्च गन्धर्वोरगरक्षसाम् । किन्नराणां मनुष्याणां किंपुरुषाणाञ्च सर्वशः ॥ ८
ग्रामपुरीश्वरास्ते ते ह्याधिपत्यमकुण्ठितम् । मेघानामधिपाश्चान्ये दिग्गजा शेष केचन ॥ ९
अष्टौ च ये महानागास्तथापि च महीधराः । ये येऽधिपाः स्थिता येषां ते ते देवप्रसादतः ॥ १०
लब्धाधिपत्या विज्ञेया नान्यथा मुनिसत्तमाः । तस्माच्छ्रेयोर्थिभिस्सर्वैः स्वात्मनो मनुजोत्तमैः ॥ ११
शिवपूजा सदा कार्या भुक्तिमुक्तिफलप्रदा । शिवपूजाप्रभावेन केचित्सिद्धा बभूविरे ॥ १२
तथापि सिद्धविख्याता योगिनः कपिलादयः । अनेके लोककर्तारो ह्यनेके नित्यतां गताः ॥ १३
शिवलोकं ययुः केचित्सालोक्यमपरे जनाः । सामीप्यमपि सारूप्यं सायुज्यमपि सूरयः ॥ १४
देवासुरमनुष्येषु शिवपूजाप्रभावतः । अधिकैश्वर्यसंपन्ना विख्याता भुवनत्रये ॥ १५
केचिदैश्वर्यलाभेन मुक्ता मोहवशं गताः । क्षणः पुनश्च संसाराच्छिवं पूर्ववदापिरे ॥ १६
जयार्थिनश्च बहवस्समभ्यर्च्य जगत्पतिम् । विजित्य शत्रून् संग्रामे शशासुः पृथिवीं पुनः ॥ १७
बलार्थिनश्च बहवो बलं सुबहु लेभिरे । पुत्रान् पुत्रार्थिनोऽन्येपि दारानपि मनोहरान् ॥ १८
पशुकामः पशूनश्वानश्वकामाश्च लेभिरे । सौभाग्यं कान्तिमद्रूपं स्थाम सत्यं पराक्रमम् ॥ १९
अरिसिद्धिञ्च जगत्यस्मिन् सर्वामिष्टञ्च लेभिरे । अर्थेष्वेतेष्वनेकेषु सेतिहासेषु कार्त्स्न्यतः ॥
संग्रहेण कथा भाग्या वर्ण्यन्ते शृणुताधुना ॥ २०

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे त्रिषष्टितमोऽध्यायः ॥

---

॥ अथ चतुष्षष्टितमोऽध्यायः ॥

भृगुमहर्षिणा विष्णवे शापदानम् ॥

सूतः — विष्णुः पुरा पुरारातिमाराध्य पुरुषं परम् । कपिशापसमुद्भूतविनिपाताननेकशः ॥ १
निर्धूयाभीष्टपुत्रश्रीराज्यलाभमवाप्तवान् । तेषु कांश्चिदितीहासान् महापुण्यान्वदामि वः ॥ २
एकदा कलहे वृत्ते ब्रह्मविष्ण्वोः परस्परम् । कर्ताऽहं जगतां न त्वमहं न त्वमिति क्रुधा ॥ ३
तयोरहङ्कृतेश्शान्तिं कुर्वन् सर्वेश्वरेश्वरः । उत्पाद्य भैरवं तेन मण्डलस्थं स्वयं दधे ॥ ४
नखाग्रेण विधेस्तस्य पञ्चमं मूर्धमूर्धगम् । ऊर्ध्वैकफलं पद्मकोमलं लीलयेश्वरः ॥ ५
संछिद्य तत्कपालेन भैरवेण धृतेन च । विष्णोरहङ्कृतेश्शान्तिं रक्तभिक्षाछलेन वै ॥ ६
विभोर्दिदिक्षन् भिक्षार्थं प्रेषयामास भैरवम् । विष्णुश्शिरां ललाटात्प्रविच्छिद्य रक्तं निजं ददौ ॥ ७
रक्तस्य विरहान्मूर्छामवाप पुरुषोत्तमः । पुनश्च भैरवेन्द्रस्य करस्पर्शेन निर्व्यथः ॥ ८
मूर्छां विहाय सहसा लब्धसंज्ञः पुनर्हरिः । अहंकारः कृतोऽस्माभिरिशासितास्तेन वैधयम् ॥ ९
तत्पापविनिवृत्त्यर्थं शिवपूजां प्रकुर्महे । मध्यार्जुनं समासाद्य समभ्यर्च्य जगद्गुरुम् ॥ १०
मेने कृतार्थमात्मानं पूतं सर्वेश्वरार्चनात् । कृपया देवदेवस्य प्रसन्नस्य पिनाकिनः ॥ ११
विष्णुलोकं यथापूर्वं जगाम गरुडेन सः । पुनश्चान्यैकदा विष्णुरहङ्कारमदोद्धतः ॥ १२
ब्रह्मणा स्पर्धमानोऽस्म्यधीश्वरोऽहमिति क्रुधा । महालिङ्गाकृतेर्मूलमदृष्ट्वा पुनरुत्थितः ॥ १३
प्रणवस्य च वेदानामश्रुण्वन्वचनं हितम् । तत्पापविनिवृत्त्यर्थमरुणाचलमाश्रितः ॥ १४
तत्रेश्वरं समाराध्य प्रसादेनास्य वै विभोः । अपराधविमुक्तात्मा जगाम भवनं स्वकम् ॥ १५
पुनश्चान्यकरोद्विष्णुरेकदाऽसुरनिग्रहम् । पराजये तु देवानां देवासुरमहाहवे ॥ १६
तदानीं तुमुले युद्धे विष्णुना सुदिता भृशम् । भृग्वाश्रमं समासाद्य भृगुपत्नीं तपस्विनीम् ॥ १७
प्रार्थ्य शरणमासेदुरसुरा हरिनिर्जिताः । तदाश्रममपि प्राप विष्णुश्चक्रधरः स्वयम् ॥ १८
संहरन्नसुरांस्तत्र भृगुपत्न्या निवारितः । नैवाश्रमः प्रवेष्टव्यस्त्वयाऽसन्निहिते मुनौ ॥ १९
मदाश्रिता न हन्तव्या दितिजा मनुपालकाः । मया दत्ताभयास्सर्वे मामाहिंसीर्जनार्दन ॥ २०
दुष्टानामप्ययोगनिष्ठे जगतामिति हि क्रुधा । चक्रेण संहरन् देव्याश्छिन्देदेव शिरस्तदा ॥ २१
तेषामभयदां पापां भृगुपत्न्या जनार्दनः । निर्गते च ततस्तस्मिन्नाश्रमान्मधुसूदने ॥ २२
ददर्श भृगुरभ्येत्य दैत्यैस्सहनिजां प्रियाम् । निकृत्तशिरसं शापदष्ट्वा विलप्य माधवम् ॥ २३
चुकोप हरयेऽत्यर्थं हत्वा दैत्यैः स्त्रिया अपि । अपापद्विष्णुरमरो जन्मान्यस्तस्य कोटिशः ॥ २४
तत्र [illegible] स्त्रियाश्चापि वियोगोऽस्त्विति दुःखदः । जगत्यस्यैव ये भक्तास्सन्तु पापपिशुनास्तु ते ॥ २५
शप्त्वैवमात्मनः पत्नीं सन्धायोज्जीव्य विद्यया । मृतसञ्जीविनीत्येव सिद्धया परमेश्वरात् ॥ २६
ततो विष्णुरमाकर्ण्य भीतभीतोऽसुरार्दनः । तच्छापविनिवृत्त्यर्थं काञ्चीमभ्येत्य कामदाम् ॥ २७
संपूज्य देवदेवेशं दृष्ट्वा देवं कृपोपरि । प्रणम्याभ्यर्थयच्छापमोक्षं भीतेन चेतसा ॥ २८
मद्भक्तैरकृतं विष्णो तैः कर्तव्यं तदन्यथा । अहं न पारयाम्येव प्रतिज्ञैषा मया कृता ॥ २९
इति केशवमाभाष्य हरिकेशः स्वयं शिवः । भृगुमाह महादेवः स्वभूतमाश्रितं मुनिम् ॥ ३०
विमोचय हरिं शापात् भृगो यद्बुजविपदात् । मदर्चनारतं (भक्तं) विद्धि भक्तश्च मुनिसत्तम ॥ ३१
दशास्तु जन्म तद्विष्णोरेकांशस्तत्र जन्मनि । स्त्रिया वियुक्तोऽतिचिरं दुःखी भवतु नान्यतः ॥ ३२

मदाज्ञया कुरुष्वेदं मद्भक्तानां त्वमग्रणीः । तथास्त्विति मुनिः प्राह प्रणम्य परमेश्वरम् ॥ ३३
तदा पुनरुमाकान्तं रमाकान्तः प्रणम्य तम् । प्रार्थयामास भगवन् दशस्वपि च जन्मसु ॥ ३४
ममाज्ञाननिवृत्त्यर्थं निग्रहानुग्रहौ कुरु । त्वमेव देवदेवेश दयालो भक्तवत्सल ॥ ३५
तदुपश्रुत्य भगवानस्त्वित्यन्तर्धिमाययौ । नारायणोऽपि भगवान् स्वमेवाश्रममाश्रयत् ॥ ३६
पुनश्चाप्येकदा विष्णुर्वेदोद्धरणकर्मणे । शाफरीं योनिमासाद्य संहरिष्यन् स तस्करम् ॥ ३७
वेदानां सोमकं दैत्यं विनिगृह्य च लीलया । वेदांश्च वेधसे दत्त्वा यथापूर्वं जनार्दनः ॥ ३८
अहङ्कारेण तेनैव चार्णवानां च भेदनम् । कुर्वन् सर्वान् समाकृष्य भक्षयामास माधवः ॥ ३९
ततो भीता विरिञ्च्याद्याः शङ्करं लोकशङ्करम् । कैलासवासिनं देवं प्रीणयित्वा व्यजिज्ञपन् ॥ ४०
देवेनापि समादिष्टः शास्ता योगी तदाज्ञया । कैवर्ततां समासाद्य माधवं मत्स्यरूपिणम् । ४१
विनिगृह्याक्षियुगलं कुहविम्बमविवमम् । नखाग्रेण समादाय शिखाग्रे विनिवेशयन् ॥ ४२
निधायैनं नमस्कृत्य तस्थौ योगी कृताञ्जलिः । तदा ब्रह्मादयो देवा महादेवं समार्थयन् ॥ ४३
वयं मत्स्येन देवेश पीडिता भृशमीश्वर । सोऽयं विनिगृहीतश्च जगतां हितकाम्यया ॥ ४४
तस्याक्ष्याक्षियुगं श्वेतरुधारस्याभरणे मणिः । इति संप्रार्थितो देवैस्तदक्षियुगलं मणिम् ॥ ४५
दधार मुण्डमालायां यथाविधिरमात्मनः । गतमोहः पुनर्विष्णुर्ध्यात्वा देवं जनार्दनः ॥ ४६
शिवपूजाप्रभावेन पूर्वं सोमकमर्दनम् । मोहेनैव ततः पश्चाज्जगन्ति तमसावृता ॥ ४७
शासितोऽसि जगन्नाथ कृतार्थोऽसि ततः कृतः । एतद्रागोऽभिवृत्त्यर्थं पूजयिष्यामि शङ्करम् ॥ ४८
इति काञ्चीपुरीं प्राप्य पूजयामास तत्र तम् । मत्स्यरूपाय वै तस्मै प्रससाद पिनाकधृक् ॥ ४९
वरेण च्छन्दयामास मत्स्यरूपं जगत्पतिः । कृतोपरश्च तेनापि निग्रहोऽयमनुग्रहः ॥ ५०
ममास्तु देवकृपया मत्स्यरूपं तु मां जनाः । ये यजन्ति जगत्यस्मिंस्तेषामिष्टप्रदो भव ॥ ५१
कृपया तव देवेश वरदोऽस्मि महेश्वर । भवच्चरितमायस्त्वं तितिक्ष जगदीश्वर ॥ ५२
इतीशोऽभिहितः पूर्वं विष्णुना मत्स्यरूपिणा । दत्त्वाऽन्तर्धानमगमल्लोकानां हितकाम्यया ॥ ५३
विष्णुश्च वैष्णवीं लोकमायामापालयत्स्वकम् । पुनश्च विष्णुरन्यस्मिन्युगे कूर्मत्वमेत्य वै ॥ ५४
मन्थानं मन्दरं कृत्वा योक्त्रं कृत्वा च वासुकिम् । देवासुरगणैस्सार्धं ममन्थ क्षीरसागरम् ॥ ५५
अमृतं च समासाद्य तेन गर्वेण मोहितः । सुरान् संक्षोभयामास सागरैस्सह कच्छपः ॥ ५६
ततो देवासुरास्सर्वे देवं गत्वा व्यजिज्ञपन् । तदानीं देवदेवोऽसौ विघ्नराजमरिन्दमम् ॥ ५७
तन्निग्रहार्थमादेशे देवानां हितकाम्यया । शुण्डाग्रेण तदा कूर्ममादाय गणनायकः ॥ ५८
सम्यगुत्थानितं कृत्वा संपीड्यास्यैव कर्परम् । देवेष्वपि च पश्यत्सु शिवाग्रे सन्न्यवेशयत् ॥ ५९
तदानीमीश्वरो देवान् समालोक्येदमब्रवीत् । अनेन कच्छपास्थ्ना मे किं भाति वदताधुना ॥ ६०
ततोऽब्रुवन् प्रणम्येशं ब्रह्मादिविबुधेश्वराः । करमस्त्वमनेनास्यान्विक्रमेण महेश्वर ॥ ६१
तस्यैव ज्ञापकार्थेन तथाऽस्तु विभूषणम् । कूर्मास्थि मुण्डमालायां नायकत्वमुपैत्विदम् ॥ ६२
विष्णोरपीदं दृष्ट्वा तु नाहङ्कारो भवेत्पुनः । विज्ञापितस्सुरैरेवं विश्वेशोऽधारयदस्थि तत् ॥ ६३
विष्णुश्च गतसंमोहो त्र्यम्बकार्चाविधेर्बलात् । भवानीसंगमूर्ताय सनाकपतिवन्दितः ॥ ६४
एकदा पीडितो देवा हिरण्याक्षेण वैरिणा । विष्णुं शरणमभ्येत्य समाचख्युस्ततो भयम् ॥ ६५
तदा तु तेषामभयमसुरारिस्सुराग्रणीः । वाराहं रूपमासाद्य प्रज्वलन्नासापुटाम्बरः ॥ ६६
हिरण्याक्षमसौ हत्वा महाम्भस्युज्जहार गाम् । तेन गर्वेण स हरिरर्णवानां च भेदनम् ॥ ६७

सतातं भूधराणाञ्च चकार सुमहद्वपुः । दृष्ट्वा तं तादृशं विष्णुं देवास्सब्रह्मकास्तदा ॥ ६८
न्यजिज्ञपन्महेशाय वराहाद्भयमागतम् । ततो देवादिदेवोऽपि वराहस्यास्य निग्रहे ॥ ६९
सुलक्षण्यं शिशुं पुत्रं सन्दिदेशात्मनः प्रभुः । तदाज्ञया कुमारोऽपि वराहं पर्वताकृतिम् ॥ ७०
जग्राह शृङ्गे हस्ताभ्यां परिभ्राम्य च लीलया । संहृत्य शृङ्गमस्यैकं निदधे सन्निधौ विभोः ॥ ७१
कपर्दगतचन्द्रांशं द्वितीयमिव शङ्करः । दधावाभरणत्वेन देवानामपि पश्यताम् ॥ ७२
अङ्कमारोप्य तं पुत्रं लालयामास हृष्टधीः । ब्रह्मादयोऽथ विबुधा नमस्कृत्य यथायथम् ॥ ७३
अगुर्देवं तदा विष्णुर्वीतमोहस्समुत्थितः । पुनश्च पूर्ववद्देवं समाराध्याप निर्वृतिम् ॥ ७४
एकदाथ पुनर्विष्णुर्हिरण्यं दानवेश्वरम् । संहरिष्यन् समभ्यर्च्य शिवं लब्धवरोबली ॥ ७५
नृसिंहवपुरास्थाय वक्षो भित्वा नखैः पुनः । पपौ क्रोधेन तद्रक्तं संहत्यासुरसैनिकान् ॥ ७६
महानादेन तेनैव सर्वान् संहर्तुमुद्यतः । ततो देवा भयाविष्टाश्शरणं प्रापुरीश्वरम् ॥ ७७
वीरभद्रं तदा देवस्तन्निदेशास्य निग्रहे । शारभं रूपमास्थाय वीरभद्रः प्रतापवान् ॥ ७८
गृहीत्वा नारसिंहं तं द्विधाकृत्वात्मलीलया । भित्वा त्वचमतिस्वच्छामुपायनमुपाहरत् ॥ ७९
तदाप्रभृति देवोऽपि नारसिंहाम्बरोऽभवत् । सोऽपि देवं समाराध्य विगतैना बभूव ह ॥ ८०
एकदा पुनरेवैव बलिनिग्रहमाचरन् । बभूव काश्यपसुतो वामनो मधुसूदनः ॥ ८१
ईश्वरात्तवरोऽभ्येत्य यागशालामयाचत । पदत्रयमितां भूमिमात्मनः स्थितये पुनः ॥ ८२
प्रतिगृह्य ततो भूमिमेकेनैव पदा दिवम् । विक्रम्यान्यपदालाभाद्बलिं कारागृहान्तरे ॥ ८३
निवेश्य राज्यं भूयोऽपि देवेन्द्राय त्रिविक्रमः । दत्वाऽण्डमेतदखिलं स्वाज्ञया संवर्धयत्प्रभुः ॥ ८४
ततो देवैर्महादेवो ज्ञात्वा वृत्तान्तमस्य तु । भैरवं संदिदेशास्य निग्रहे भैरवाकृतिम् ॥ ८५
सोऽपि तं त्वरयाऽभ्येत्य ब्रह्माण्डान्तमच्युतम् । प्रहृत्योरसि दण्डेन निपात्योत्कृत्य च त्वचम् ॥ ८६
भास्वत्कञ्चुकरूपेण दधावानीलकोमलम् । तस्यास्थ्यपि महद्दीर्घं कङ्कालाख्यं दधौ करे ॥ ८७
ततो जग्मुर्निराबाधास्तदा सर्वे सुरा दिवम् । उपेन्द्रोऽपि महादेवं समाराध्य यथापुरम् ॥ ८८
शान्तापराधस्सम्भूज्जगाम च यथागतम् । एवं दशावतारेषु निगृहीतः पिनाकिना ॥
पश्चात्तदनुगृहीतश्च वक्ष्ये शृण्वन्तु तत्कथाम् ॥ ८९

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे चतुष्षष्टितमोऽध्यायः ॥

---

॥ अथ पञ्चषष्टितमोऽध्यायः ॥

भृगुशापानुसारेण विष्णोः दशावताराप्तिः ॥

सूतः — जामदग्न्योऽथ रामोऽभूद्भगवान् पुरुषोत्तमः । भृगुशापेन तेनैव रेणुकायाञ्च तत्प्रियाम् ॥ १
तञ्चकार पिता रामं नाम्ना रूपादनिन्दितम् । उपनीतश्च कालेन रामः पित्रा महर्षिणा ॥ २
शुश्रूषणपरो नित्यं श्रद्धयाऽनन्यमानसः । केनापि कारणेनैव कदाचित्पितृचोदितः ॥ ३
रामो मातुः शिरश्छेदं रेणुकायाश्चकार ह । ततः प्रीतेन मनसा रामः प्रोक्तो महर्षिणा ॥ ४
[illegible] शुश्रूषया प्रीतं मां विद्धि वत्साधुना । वरान्यो यो वरोऽभीष्टस्तं तं सर्वं ददामि ते ॥ ५
इति रामोऽथ वः श्रुत्वा पितुर्वव्रे वरानिमान् । मातुः पूर्ववदुत्थानं परं वव्रे स भादितः ॥ ६

पितुः कोपपरित्यागं कोपनस्याधिकं मुनेः । स्वस्यापि शिवपूजायां श्रद्धावत्त्वमनारतम् ॥ ७
वरत्रयं तदा रामो लब्ध्वात्मपितुरन्तिकात् । वनमाप तपश्चर्तुं शिवपूजापरायणः ॥ ८
तस्मिन् गतेऽर्जुनो याचत्यकृतकोपं मुनीश्वरम् । कृतवीर्यसुतो धेनुं कामोपपदभूषिताम् ॥ ९
प्रत्याख्यातो यदा राजा मुनिना कृतवीर्यजः । कोपेनास्य शिरश्छेदं कृत्वा माहिष्मतीमगात् ॥ १०
जमदग्निप्रिया साऽपि रेणुकाग्निं विवेश ह । महत्यैव तदा वृष्ट्या शशामाग्निश्चितागतः ॥ ११
सा पुनर्दग्धवसना रेणुका ऋषिमानिनी । दुःखेन महताक्रान्ता लज्जया च वराङ्गना ॥ १२
निम्बपत्रैस्समाच्छाद्य मलावृतनितंबकौ । चण्डालभूमिमासाद्य कञ्चित्कालमुवास ह ॥ १३
तत्र पोताभिधः कश्चिन्मातङ्गावध्याय कामिनी । ररक्षतुस्तां पिशाचैरभितस्तां सुशातुराम् ॥ १४
एतत्सर्वमशेषेण श्रुत्वा रामो यतव्रतः । ईशादाराधनात्पुण्यात्संप्राप्य च परश्वधम् ॥ १५
क्षत्रियाणां वधे यद्यावलम्बस्तु बभूव ह । कार्तवीर्यार्जुनं हत्वा क्षत्रियानपरानपि ॥ १६
मत्सुजैव ततस्तेषां शिवापाञ्जलिमासदोत् । शीतेन विन्दुसरसि श्रद्धया पितुरारमतः ॥ १७
मातरं च समासाद्य चक्रुणस्थां प्रणम्य ताम् । ग्रामाद्बहिस्तया सार्धं कञ्चित्कालं निनाय सः ॥ १८
शुश्रूषया च सन्तोष्य मातरं तादृशीं पुनः । वीरहत्यां निवृत्त्यर्थं तपश्चीरमुपाश्रय सः ॥ १९
काश्यपाय महीं दत्त्वा सर्वां वीर्यार्जितामिमाम् । वैकुण्ठभवनं प्राप्य केरळामपुनर (पुनःकेरळम्) द्रुतम् २०
पुरा दशरथो राजा पुत्रकामो महेश्वरम् । अयजत्पुत्रकामेष्ट्या वसिष्ठाद्यैश्च तापसैः ॥ २१
ततो महेश्वरस्याज्ञावशेन मधुसूदनः । रामो दाशरथिर्जज्ञे कौसल्यायां नृपप्रियाम् ॥ २२
सीतया पितृवाक्येन लक्ष्मणेन वनंगतः । तत्र सीतां राक्षसेन्द्रो रावणो जनकात्मजाम् ॥ २३
जहार वञ्चयित्वा तं रामं तत्र सलक्ष्मणम् । तद्वियोगाग्निसंतप्तो रामो लक्ष्मणसंयुतः ॥ २४
अगस्त्यमुनिमासाद्य रुरोद भृशदुःखितः । अगस्त्येनोपदिष्टोऽसौ रक्षसां निधनं प्रति ॥ २५
शिवमभ्यर्च्य लब्धास्त्रो बद्ध्वा सेतुं बलीमुखैः । रावणं सगणं संख्ये विनिहत्य हरियूथपैः ॥ २६
सीतां वैश्वानरे शुद्धामयोध्यामनयत्प्रियाम् । तत्र पट्टाभिषिक्तोऽसौ चक्रे राज्यमकण्टकम् ॥ २७
लोकापवादभीत्यैव पुनस्सीतां वनेऽत्यजत् । तस्यां भूमौ विलीनायां शुशोच भृशमातुरः ॥ २८
अश्वमेधेन देवेशं रामोऽभ्यर्च्य महेश्वरम् । सरय्वां तनुमुत्सृज्य भ्रातृभिस्सह राघवः ॥ २९
क्षीराब्धिमासाद्य स्वं स्थानं पूर्ववदच्युतः । अवतारस्तु पुरा स्त्रीदुःखमह ईरितः ॥ ३०
तमसाच्च वृतो यस्मादवेदात्मानमात्मना । द्वापरे च युगेऽप्यस्मिन् स पद्मपुरुषोत्तमः ॥ ३१
वसुदेवसुतो जज्ञे रोहिण्यां रामनामकः । तत्र रक्षोगणं हत्वा कृत्वा कार्यं महत्पुनः ॥ ३२
आराध्य च महादेवमम्बिकासहितं प्रभुम् । योगमार्गरतो रामो वैकुण्ठं प्राप्तवान् बली ॥ ३३
पुनश्च वसुदेवस्य देवक्यां कृष्णरूपधृत् । जज्ञे विष्णुरमेयात्मा भृगुशापनियन्त्रितः ॥ ३४
तत्राभ्यर्च्य सुराधीशं शिवं शत्रून् जयन्पुनः । उपमन्युं समासाद्य विधिना तेन दीक्षितः ॥ ३५
शैवमुख्यतमोऽत्यर्थं भक्त्याऽऽराध्य च शङ्करम् । भूभारमपनीयाथ विष्णुलोकं जगाम ह ॥ ३६
पुनश्चापि कलेरन्ते कलिजा दुष्प्रजाः स्वयम् । संहरिष्यन् हयग्रीवो जातो विष्णुरधोक्षजः ॥ ३७
तत्र संपूज्य देवेशं लिङ्गमूर्तौ सदाशिवम् । कृपया तस्य निर्जित्य म्लेच्छजातानसज्जनान् ॥ ३८
विष्णुरूपं यथापूर्वं लब्ध्वाऽऽस्पदमाप सः । एवं दशावतारेषु निगृहीतश्च पञ्चसु ॥ ३९
शिवेनानुगृहीतश्च शापान्मुक्तो भृगोरिति । एतेऽवताराः कल्पेषु बहुधा वर्णिता द्विजैः ॥ ४०
वैष्णवेषु पुराणेषु निग्रहोनैव वर्णितः । देहत्यागेन तस्यैव सूचितोऽनुग्रहो (निग्रहो) द्विजाः ॥

निगृहीतः कुमारेण वीरभद्रादिभिर्गणैः । सूचितस्स तु मत्स्याब्धिकूर्मास्थिक्रोडशृङ्गकैः ॥ ४२
सिंहचर्मशिरोमुण्डत्रिविक्रममहास्थिभिः । शिवांगाकल्पमध्यस्थैः पुराणश्रुतिचोदितैः ॥ ४३
ततो देवा हरिब्रह्मप्रमुखाः परमेश्वरम् । दृष्ट्वा भीतेन मनसा त्यक्त्वाऽहंकारमात्मनः ॥ ४४
कर्मसु स्वेषु वर्तन्त इति वेदविदो विदुः । एकदा विष्णुभवनं पुरोपेन्द्रस्समाययौ ॥ ४५
स्वमेव मूर्तिभेदस्थं प्रद्युम्नादिवदच्युतः । मिथः संभाषणं कृत्वा कञ्चित्कालमवस्थितः ॥ ४६
एतस्मिन् समये कण्वः काश्यपस्य सुतो महान् । वैकुण्ठभवनं प्राप विष्णुसंभाषणोत्सुकः ॥ ४७
ते दृष्ट्वा तौ समायान्तं शिवभक्तं दृढव्रतम् । न प्रत्युत्थानमकृता मासनं प्रददतुश्च तौ ॥ ४८
मर्यादाञ्चाप्यवसतामासातां मौनमुद्रया । तौ तदा तादृशौ दृष्ट्वा चुकोप मुनिसत्तमः ॥ ४९
यस्मात्त्वमपि शिवस्येष्टमभाषा तूष्णीं बभूविथ । विष्णोऽतस्त्वमनेकानि जन्मानि भजमद्गिरा ॥ ५०
मूकश्च तत्र सर्वेश दत्तशापो मयाऽधवे । इयञ्च लक्ष्मीस्त्वत्पार्श्वेस्थिता मृगवद्भवे ॥ ५१
मच्छापात्त्व मृगी भूयादुपेन्द्रोऽप्यथमीदृशः । कैरातीं योनिमासाद्य काननेष्वसतां चिरम् ॥ ५२
तव भक्ताश्च लोकेऽस्मिन् सन्तु ते शिवनिन्दकाः । भस्मरुद्राक्षनिन्दाश्च कुर्वन्तु मतिमोहिताः ॥ ५३
इति शप्त्वा गते तस्मिन् कण्वे निजमथाश्रमम् । विष्णुश्शापभयात्तस्य कमलालयमेत्य च ॥ ५४
तत्राराध्य महादेवमभीप्सयदनन्यधीः । ततः प्रीतो महादेवः कण्वमाहूय तापसम् ॥ ५५
एकजन्मानुभोक्तारं चक्रे शापस्य माधवम् । महालक्ष्मीं मृगाकारामेकजन्मैव शङ्करः ॥ ५६
उपेन्द्रस्यापि जन्मैकं कैरातमकरोच्छिवः । तेन विष्णुश्शिवमुनिस्सञ्जातः कण्वशापतः ॥ ५७
लक्ष्मीश्चापि मृगी जाता कानने मुनिशापतः । उपेन्द्राद्याश्च कैरातीं योनिमापेदिरे तदा ॥ ५८
मृगी तं सा मुनिं मूकं दृष्ट्वा गर्भवती ह्यभूत् । सूत्वा सा कन्यकां दृष्ट्वा मृगीत्यक्त्वा पलायत ॥ ५९
किरातोऽसौ वने कन्यामादायायाद्य पक्कणम् । कुमाराय ददौ कन्यां शबरो वल्लिनामकाम् ॥ ६०
ततश्शापाद्विनिर्मुक्तावुभौ जग्मुर्यथागतम् । कदाचित्कलहे वृत्ते महाक्षुपदधीचयोः ॥ ६१
क्षुपस्यैव तु साहाय्यं कर्तुकामो जनार्दनः । दधीचाश्रममासाद्य ब्राह्मणच्छद्मसंवृतः ॥ ६२
ययाचे ब्राह्मणश्रेष्ठः क्षत्रियो मुनिसत्तमः । यदेवमेकदा विद्वन्माहात्म्येन मतस्तव ॥ ६३
इति श्रुत्वा दधीचोऽपि ज्ञात्वा पूर्वं हरेर्वचः । नाहं चक्राऽस्त्रसत्वस्य जाने त्वाञ्च जनार्दन ॥ ६४
न बिभेमि विशेषेण क्षत्रियादहमच्युत । ततः क्रुद्धो भुजाभ्यामस्त्रं तस्मिन्नाप्ययासृजत् ॥ ६५
तमर्थं भक्षयामास त्रिशूलं दर्भसंभवम् । ततः क्रुद्धो महाविष्णुर्विश्वरूपमदर्शयत् ॥ ६६
तद्विश्वरूपं स मुनिस्संस्तम्भ्यात्मन्यदर्शयत् । तच्चक्रं ससृजांसे विष्णुः कोपादमर्दितः ॥ ६७
चक्रं तदस्थिसंस्पृष्टं कुण्ठितारं बभूव ह । देवानामपि सर्वेषां विष्णुसाहाय्यकारिणाम् ॥ ६८
आसन्निषुकुण्ठिताश्चापि तस्मिन्नेव मुनीश्वरे । एतस्मिन्नन्तरे ब्रह्मा विष्णुं देवांश्च सायुधान् ॥ ६९
न्यवारयत्ततो युद्धात्सांप्रतमिति ब्रुवन् । तस्मिन्नुपरते युद्धे शशाप मुनिरच्युतम् ॥ ७०
देवांश्च [illegible] एवं ते यूयं वीरेण मर्दिताः । रुद्रकोपसमुत्थेन विष्णुना सह माचिरम् ॥ ७१
विष्णुभक्ताश्च ये भूम्यां सन्तु पाषण्डमाश्रिताः । शिवनिन्दापरा नित्यं वस्तुतश्च नराधमाः ॥ ७२

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे पञ्चषष्टितमोऽध्यायः ॥

॥ अथ षट्षष्टितमोऽध्यायः ॥

शिवपूजामहिमानुवर्णनम् ॥

सूतः —

ततो विष्णुर्भयाविष्टः स्वात्मानं निन्दयन् हृदा । कथं किमर्थमेतेन कलहस्समपद्यत ॥ १
फलं वाऽत्र मयाऽऽप्तं किं शापस्त्वाप्तोऽनिवारितः । तद्दोषपरिहाराय शरणं यामि शङ्करम् ॥ २
इति सञ्चिन्त्य मनसा चिदंबरमथासदत् । तत्राराध्य महादेवं श्रीमदभ्रसभाङ्गणे ॥ ३
तत्प्रसादेन निर्मुक्तपापस्सद्योऽभ्यवर्तत । गन्धमादनमासाद्य कदाचिद्विष्णुरव्ययम् ॥ ४
समाराध्य महादेवं वरद्वयमयाचत । मामङ्गीकुरु देवेश वाहनत्वशरत्वयोः ॥ ५
सचिरात्पुरहाऽथ तं चक्रे दाहेतु त्रिपुरां पुराम् । वाहनत्वे शरत्वे च कल्पयामास माधवम् ॥ ६
नृपेन्द्रो भगवान्विष्णुस्तस्मादाराध्य हेतिराट् । मैनाके च पुरा शैले विष्णुराराध्य शङ्करम् ॥ ७
प्रसन्नं प्रार्थयामास वरं वरसदकदम् । कृताञ्जलिपुटो भूत्वा प्रणम्य विनयान्वितः ॥ ८
उवाच देवदेवेशं नरकाख्यो महासुरः । तपसाऽऽराध्य लोकेशं वरं वव्रेऽसुराग्रणीः ॥ ९
यच्छिवाख्यं वस्तु परमवाङ्मनसगोचरम् । मायामयेन देवेन सहैकीभूय संयुगे ॥ १०
मया युद्धं यत्क्रोऽभ्यादस्तु तत्र वधो मम । जित्वा देवानहं सर्वलोकाध्यक्षो जगत्पते ॥ ११
भूयासमिति लब्ध्वैवं नरको भूमिसंभवः । त्रैलोक्यमनुभुक्त्वाऽथ देवान् सर्वान् विजित्य च ॥ १२
अहं तेन विभो युद्धे नरकेन पराजितः । शम्भो बलेन महता वाराणसेकविकालिम् ॥ १३
मत्वेऽर्थवं द्वारकायां वसतिः क्रियते मया । तद्भीत्या पुत्रमित्राद्यैस्त्यक्त्वा तु मधुरां पुरीम् ॥ १४
न समागेष्यति सदा पर्वतानां गुहासु च । त्वं देवदेव सर्वेषामवाङ्मनसगोचरः ॥ १५
मयि स्थिरैक्यभावेन माहेयं संहरासुरं । इति प्रणम्य देवेशं साञ्जलिः पुरतः स्थितः ॥ १६
प्रार्थितस्त्वेवमीशानः प्राह भूयो जनार्दनम् । अहं ते दक्षिणे पार्श्वे स्थास्यामि मधुसूदन ॥ १७
देवानामुपकाराय वीर्यं दास्यामि तेऽनघ । इति लब्ध्वा वरं शंभोः विष्णुः कृष्णवपुर्धरः ॥ १८
बलेन महता युक्तो युद्धाय नरकासुरम् । आजुहाव महाबाहुरावनेयमरिन्दमः ॥ १९
ततोऽभूद्युद्धमतुलमुभयोरपि सेनयोः । ततस्सर्वेश्वरो विष्णावाविवेशासुरान्तकृत् ॥ २०
दक्षिणश्चापि तत्पार्श्वमास्थितः परमेश्वरः । क्षणेनैव ततो विष्णुश्चिच्छेदाऽस्य शिरस्तदा ॥ २१
सोऽपि देवेन महता विष्णुनिघ्नेन संहतः । तत्प्रसादवाप मुक्तिं वै तद्देहेच लयं गतः ॥ २२
गाणापत्यमसौ लेभे स्वान्ते दृष्ट्वा सदाशिवम् । सर्वेऽपि विस्मिता भूत्वा तस्थुर्युद्धदिदृक्षवः ॥ २३
ईश्वरोऽपि च कैलासं विष्णुं त्यक्त्वाऽप भूधरम् । कृष्णोऽपि तं प्रणम्येशं द्वारकामाप हृष्टधीः ॥ २४
भूत्वा सुरा निर्भयाश्च देवलोकमगुर्मुदा । पुनः कदाचिल्लक्ष्मीकान्तो न्यमोधयन्त ईश्वरम् ॥ २५
आराध्यास्माद्वरं वव्रे प्रसन्नात्पार्वतीपतेः । त्वया रन्तुमपेक्षेशाधुना भूत्वा स्मरप्रदम् ॥ २६
देयो वरो ममाधीश प्रसन्नो यदि शङ्कर । इत्येवमीश्वरस्तस्मै वरमन्तर्धिमाययौ ॥ २७
ततस्तु कारणादेषममृतं क्षीरसागरात् । गृहीतमसुरैर्विष्णुर्मोहिन्याकारमास्थितः ॥ २८
तेनासुरान्मोहयित्वा पाययित्वामृतं सुरान् । ऊर्ध्वरेतसमीशानमपि मोहमुपानयत् ॥ २९
रममाणो महेशेन मोहिन्याकारमास्थितः । लेभेच पुत्रं शास्तारं कामारेरपीश्वरात् ॥ ३०
कल्पान्तरे पुनः कस्मिन् ब्रह्मण्युपरते हरिः । परान्तकाले स्त्रीभूत्वा विष्णुरीदृं वरं नयत् ॥ ३१

अरमच्च ततो ब्रह्मा त्रिष्णावुद्रमवत्पुरा । तद्विष्णुशिवपूजायामाहात्म्यात्किल शूलिनः ॥ ३२
दयितेति श्रुतो लोके पूजा सर्वस्य कामधुक् । केदारमेकदाऽभ्येत्य दुर्वासा मुनिसत्तमः ॥ ३३
शिवपूजापरो भूत्वा तत्रोवास महातपाः । तदानीमीश्वरं द्रष्टुं केदारस्थाननायकम् ॥ ३४
संप्राप्याह्य गरुडं वैकुण्ठाद्विहगध्वजः । तत्राराध्य महादेवं पीत्वा तत्रोदकं हरिः ॥ ३५
पिपासुः स्वं पुनर्लोकमारुह्य विनतासुतम् । तत्र पूजापरं दृष्ट्वा दूरे दुर्वाससं मुनिम् ॥ ३६
समीपं तस्य संप्राप्य समालोक्य च पूजनम् । जगाम च पुनर्लोकं नमस्कृत्य तु तं तदा ॥ ३७
अर्च्यमानश्च देवेशमनमन् प्रययौ हरिः । स्वं लोकश्च समासाद्य स्थिते तस्मिन्मधुद्विषि ॥ ३८
समाप्य पूजां दुर्वासास्समीपं प्राप चक्रिणः । मदापन्य महाविष्णुमतिमन्युर्मुनीश्वरः ॥ ३९
यन्मयार्चितमीशानं लिङ्गमूर्तिं जनार्दन । अप्रणम्य गतोऽसि त्वं केदारे समदूषितः ॥ ४०
ततस्त्वाद्य पापस्य गरुडो वाहनं तव । गतजीवो भवत्वद्य शीघ्रं सेऽस्तु सुमुदगा ॥ ४१
तथाङ्गञ्च रुधिरं भैरवेण हतं भवेत् । शूलाग्रेणैव निर्भिण्णे ललाटे मधुसूदन ॥ ४२
भक्ताश्च ते शिवद्रोहपरा भूयासुरन्वहम् । इति शप्त्वा गते तस्मिन्दुर्वाससि मुनीश्वरः ॥ ४३
श्रीकालहस्तिमासाद्य शिवमानर्च केशवः । तस्मै प्रसन्नो भगवानंबया सह शङ्करः ॥ ४४
तच्छापस्य प्रतीकारं प्राह देवः पिनाकधृक् । हत्वाशु भैरवो रक्तं स्वां पुनर्जीवयत्ययम् ॥ ४५
लक्ष्मीश्च मथनेऽम्भोधेरवाप्स्यति तवानघ । गरुडोऽपि च संभूय पुनश्चामृतमाहरन् ॥ ४६
निपुणश्च चिरं युद्धे भूयाद्गुयोऽपि वाहनम् । तथैव भैरवो विष्णुरक्तमादाय शूलतः ॥ ४७
पुनरुज्जीवयामास भक्तं भक्तार्तिभञ्जनः । लक्ष्मीश्चाम्भोधिसंभूता गरुडः काश्यपात्मजः ॥ ४८
लक्ष्मीर्विष्णुं पुनः प्राप निबुध्य गरुडोऽपि तम् । विष्णोः पूजाबलेनैव शापमुक्तिर्नचान्यथा ॥ ४९
हरात्पूजासमं भोगमोक्षद नैव विद्यते । एकदा च सुरास्सर्वे पूर्वदेवैरुपद्रुताः ॥ ५०
विष्णुं शरणमभ्येत्य भीतभीता व्यजिज्ञपन् । भगवन्नसुराक्रान्तमाधिपत्यञ्च वैबुधम् ॥ ५१
त्र्यक्षेश्वरेण चास्माकं रक्षणे विनियोजितः । दुष्टानां शिक्षणे शिष्टरक्षणे च विशेषतः ॥ ५२
अतस्त्वं शाधि देवानामवनायासुराधमान् । इति श्रुत्वा हरिस्तेषां पुनः प्राहावलोक्य तान् ॥ ५३
मया युद्धेन हन्तव्या असुरा मायुधश्च मे । चक्रं दधीचिवज्रास्थिकुण्ठितारं बभूव तत् ॥ ५४
तमूचुरमरा भूयश्चक्रमीशेन निर्मितम् । अलब्धरथयार्थं यत्नवर्यं भव यत्नवान् ॥ ५५
विष्णुस्तमाशु मन्वानः काञ्चीमासाद्य वाञ्छितम् । लब्धुकामोऽर्चयामास कमलैरन्वहं शिवम् ॥ ५६
सहस्रैस्तत्र चैकोने कदाचिन्नेत्रमात्मनः । पद्मप्रतिनिधिं चक्रे विष्णोस्तुष्टोऽस्य शङ्करः ॥ ५७
चक्रं सुदर्शनं प्रादात्सहस्रादित्यसन्निभम् । पुत्राय तं वरेशश्चन्दयामास तुष्टितः ॥ ५८
सोऽपि दधे धरे पद्मसदृशं नेत्रमात्मनः । पद्माक्ष इति विख्यातिः स्तुवतांश्च तथा च नाम् ॥ ५९
त्वमेव सकलानिष्टान् प्रयच्छ परमेश्वर । इति सर्वेश्वरादिष्टानवाप्य पुरुषोत्तमः ॥ ६०
संहृत्य दितिजान् सर्वाल्लोकेषात्राच्युतः । भूयोऽसुरार्दितान् देवानरक्षच्च जगत्त्रयम् ॥ ६१
तदाप्रभृति पद्माक्षं विदुस्सर्वे मुनीश्वराः । श्वेतकल्पे च पुरा विष्णुः कदाचित्पुत्रवाञ्छया ॥ ६२
समाराध्य भावेन शंभुमेकमनन्यधीः । दत्ते शिवेन पुत्रेऽस्मै कुपिताऽभ्यर्चिता शिवा ॥ ६३
तव पुत्रो हरे रुद्रकोपाद्भस्मो भवेत् क्षणात् । मां विनेदं यदभ्यर्च्य लब्धवानसि पुत्रकम् ॥ ६४
शप्तो विष्णुरुमादेव्या पुनश्शंभुं सहोमया । स्कन्देन सहितं भक्त्या समाराध्याभ्यतोषयत् ॥ ६५
उमा प्रसन्ना प्राहेदमीशानाशिवचोदिता । वरेण लप्स्यते पुत्रो नष्टश्शापेन वै मम ॥ ६६

पुनश्चेशाज्ञया तेऽस्तु लब्धदेहान्तरोऽच्युत । इत्येवं परमेशेन देवी चान्तर्धिमाययौ ॥ ६७
तथाच विष्णुः प्राप्तो वै पुत्रं कामं रतिप्रियम् । चिदंशश्च पुनः कामपिशाचाळीकाक्षिवह्निना ॥ ६८
उत्पादितस्तु देवेन देवानाञ्च प्रियेच्छया । तस्मात्पूजा पुत्रलाभहेतुश्चैवं समीरिता ॥
सर्वाभीष्टप्रदा चैव सत्यमुक्तं न संशयः ॥ ६९

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे षट्षष्टितमोऽध्यायः ॥

---

॥ अथ सप्तषष्टितमोऽध्यायः ॥

श्रीशिवंप्रति श्रीविष्णुना स्वीय भवतार लिङ्गधारण प्रार्थना ॥

सूतः – पुनः कदाचिदपराद्धो मायापुर्यां महेश्वरम् । संपूज्य निर्जितो दैत्यैरतिमायाविशारदैः ॥ १
प्रसन्नमीश्वरं [illegible] प्रोवाच मधुसूदनः । कालनेमिमुखा देव दैत्या मायाविनो भृशम् ॥ २
तानहत्वाऽस्मि समरे विजेतुमतिमायिनः । तेषां माया ममेशान मायया निर्जिता भवेत् ॥ ३
प्रसीद तादृशं देहि वरं वरमदद्य । इति लब्ध्वा वरं विष्णुर्मायी जातस्तदादि सः ॥ ४
छलव्याख्यानमपुरावक्षेपक्षममारभ्यः । सर्वहारासुरान् सद्भ्ये मुरारिरमरारिहा ॥ ५
एकदा च पुरा काश्यां कमलापतिरीश्वरम् । प्रीतश्चक्रेऽर्चयाऽस्त्यर्थे ययौ वरमनुत्तमम् ॥ ६
मदीयान्यङ्गजानीश धृतानि भवताऽङ्गके । ममाहङ्कारशान्त्यर्थं ब्रह्मादीनामपीश्वर ॥ ७
तथापि चाधिकारोत्थमदेन मम मानसम् । अहङ्कारसमाविष्टं कदाचिद्भवतीश्वर ॥ ८
(तथापि चाधिकारोत्थमदेन मम मानसाम् । अहङ्कारसमाविष्टः कदाचिद्भवतीश्वरेत्यपि पाठः ॥)
इतः परं प्रसन्नोऽसि यस्य कस्यापि चेत् प्रभो । ममाङ्गास्थीनि संधार्य भूषणत्वेन सन्ततम् ॥ ९
प्रसन्नो भव सर्वेषां गवेशाम्बे जगद्गुरो । नामानीमानि ते सन्तु विष्णुकन्धरपातनः ॥ १०
मात्स्याक्षिसूत्र कूर्मास्थिसमलंकृतविग्रहः । क्रोडश्रृङ्गधरो नारसिंहचर्माम्बरोऽपि च ॥ ११
त्रिविक्रमास्थिदण्डी च भव भूतपतेऽधुना । एभिर्नामभिरीश त्वां ये स्तुवन्ति नरोत्तमाः ॥ १२
तेषामिष्टप्रदो भूया भव मय्यनुकंपया । इति दत्वा वरं शंभुस्तत्रान्तर्हितोऽभवत् ॥ १३
तदादि [illegible] महादेवमेभिर्नामभिरीश्वरम् । स्तुवन्तोऽभीष्टमासाद्य मुक्तिभाजो भवन्ति ते ॥ १४
विष्णोरपि प्रियास्तेतु देवानामपि वल्लभाः । विष्णुश्च मुक्ताहङ्कारोऽभवद्भक्तेषु चास्य वै ॥ १५
भक्तियुक्तोऽधिकं लोके बभूवानन्दनिर्भरः । इतीश्वरे हरं विष्णुः कदाप्याराध्य भूसुराः ॥ १६
वरं लब्ध्वा महेशानात् प्रसादाटनेऽस्यतु । परदं मङ्गलं सत्यमवाप्य चिराय निर्वृतिम् ॥ १७
एकदा च पुरा विष्णुः श्वेतारण्येश्वरं शिवम् । वरं वव्रे प्रभुं साम्बं प्रणम्य परया मुदा ॥ १८
त्वया देव विनोदार्थं सृज्यते निखिलं जगत् । बहूनि मे व्यतीतानि जन्मानि परमेश्वर ॥ १९
इतः परं ममापीश भूयान्मुक्तिः परा त्वयि । ततः प्रोवाच तं विष्णुं प्रसन्नः परमेश्वरः ॥ २०
प्रवृत्ते सर्वसंहारे प्राणिनां मधुसूदन । परान्तकाले संप्राप्ते त्वाञ्च संहृत्य लीलया ॥ २१
तवास्थिभस्मचर्मादिभूषितो मुक्तिदोऽस्म्यहम् । परानन्दश्च भूयाश्च कृत्वा ते परया मुदा ॥ २२

सोढ्वा सर्वापराधांस्ते मासे षण्मन्वन्तरे पुनः । सारूप्यं ते प्रदास्यामि ततस्सायुज्यमुत्तमम् ॥ २३
वरं दत्त्वैवमीशोऽस्मै प्रसन्नोऽन्तरधीयत । तथैवाद्याप्यभक्तायैरलंकृततनुर्दिवः ॥ २४
सर्वांश्चैवानुगृह्णाति सायुज्यमपि विष्णवे । तस्माल्लोके महेशस्य पूजया पुरुषोत्तमः ॥ २५
रक्षिताऽभूत्समृद्धात्मा मायावी पुत्रवान् हरिः । बली च सर्वदेवेभ्यस्तत्प्रसादादधिकोऽपि सः ॥ २६
शापमुक्तिश्च तस्यैव पूजया परमेशितुः । एवं विष्णुकृताशेषपूजासु कतिचित् क्वचित् ॥ २७
प्रोक्ता मयाऽद्य सर्वेषु न ईशे वर्णितुं भुवि । शृण्वतामपि चैतासां सर्वाभीष्टप्रदासु वै ॥ २८
ब्रह्मणाच कृताशेषपूजासु कतिचिद्ब्रुवे । शृण्वन्तु मुनयस्सर्वे सावधानेन चेतसा ॥ २९
इति सूतस्समालोक्य महर्षीन् प्राह हर्षितः ॥ ३०

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे सप्तषष्टितमोऽध्यायः ॥

---

॥ अथ अष्टषष्टितमोऽध्यायः ॥

ब्रह्मणा श्रीमहेश्वरमाराध्य तस्माद्बहुविध वरप्राप्तिः ॥

सूतः — श्रीकाशीनगरे पूर्वं ब्रह्मा देवं त्रियम्बकम् । तोषयामास तपसा तीव्रेण परमेश्वरम् ॥ १
पूजया च प्रसन्नोऽस्य शङ्करस्सम्प्रबोधकः । वरं वरय भद्रं ते प्रयच्छामि तवेप्सितम् ॥ २
इति शंभोर्वचः श्रुत्वा धाता प्रश्रयणान्वितः । स्वामिन्नयमितः पूर्वं वैरेण महात्मना ॥ ३
महद्भुताख्यचित्तस्य निकृन्ते कल्लेन वै । महत्यथापि मां प्रीतिस्तव एव सदाप्रभो ॥ ४
नितान्तं चपलं चित्तं सर्वतः परिधावति । न शक्यते मया स्रष्टुं जगत्सर्वं यथापुरम् ॥ ५
प्रयच्छ तां महादेव शक्तिं स्रष्टुं जगत्प्रभो । इति वाक्यवचः श्रुत्वा तथा दत्त्वा वरं प्रभुः ॥ ६
अन्तर्दधे महादेवस्तत्रैवांबिकया सह । लब्ध्वा वरममुं धाता मयं स्वकृपयातिदुर्लभम् ॥ ७
स्थैर्यं च प्राप्य मनसा महादेवमनुस्मरन् । ससर्ज सकलं विश्वं यथापूर्वं निरन्तरम् ॥ ८
तुष्ट्या परमया युक्तस्तदा प्रभृति विश्वसृक् । एवं स्थिते विधिः पश्यन्नप्सरसां गणान् ॥ ९
तिलोत्तमां विशालाक्षीं सर्वावयवपेशलाम् । स्पृष्ट्वाऽथ तां नितरां सक्तो बभूवाज्ञानमोहितः ॥ १०
तत्संभोगरतिस्तां च प्रार्थयामास भूरिशः । तदा सा त्वं पिता ब्रह्मन् जगतो मे विशेषतः ॥ ११
अयुक्ता प्रवृत्तिस्त्वामिन्यथा तव जगत्प्रभो । इत्युक्त्वैवं सा दूरं दुद्रावैषा भयान्विता ॥ १२
एवं शंभुगणाः द्रावयन्तं विधिं तदा । स्वयं ते द्रावयामासुः पलायन्ते सुदूरतः ॥ १३
तदा प्राप गिरिं वेधास्सुपार्श्वाख्यं मनोहरम् । तत्र गूढं चकारायं शिवपूजां मनोरमाम् ॥ १४
पूजया तस्य देवेशः प्रादुरासीन्महेश्वरः । तं दृष्ट्वा देवमीशानं प्रणनाम पुनःपुनः ॥ १५
सोऽब्रवीदुच्यतां वेधः कांक्षितं मनसि स्थितम् । इति शंभोर्वचः श्रुत्वा विधिः प्राह पुनश्शिवम् ॥ १६
त्वन्मायामोहितश्शंभो कामबाणेन पीडितः । तिलोत्तमामहं दृष्ट्वा तत्संभोगोत्सुको भृशम् ॥ १७
मद्भवं दूरतो दृष्ट्वा शिवदूतान्महौजसः । द्रुतगत्या गुहामस्य प्राप्तवानस्मि शंकर ॥ १८
तद्भुत्या भीतिरधुना वर्तते नितरां मयि । यदि प्रसन्नो भगवान्मह्यं भक्ताय भोः पितः ॥ १९
यदि देयो वरस्तत्स्त्रीमायैषा अहार्यलम् । विश्वाधिकोऽसि भगवन्नूर्ध्वरेता इति श्रुतः ॥ २०

ऊर्ध्वरेतं विरूपाक्षं भगवन्तमुमापतिम् । भजन्ति ये महात्मानः कामस्तान्नहि बाधते ॥ २१
तस्मादितः परं शम्भो मायैषा मा बहात्वलम् । सावित्री याच गायत्री याचान्यापि सरस्वती ॥ २२
तिस्र एव स्त्रियो नित्यं तामिस्तु रतिर्मम । तदन्यासु प्रभो मास्तु प्रीतिर्मे त्वत्कृपाबलात् ॥ २३
तिलोत्तमाभिद्रवणजन्यपापं विनश्यतु । इति ब्रह्मवचः श्रुत्वा तथेत्याह महेश्वरः ॥ २४
अन्तर्दधे च देवेशस्तत्रैवाविकया सह । इति लब्ध्वा वरं शम्भोर्ब्रह्मा प्राप निजं पदम् ॥ २५
तत्रावसज्जगत्स्रष्टा क्रीडयंस्ताभिरप्यलम् । त्यक्तान्यनारीमायोऽसौ शिवमेव हृदि स्मरन् ॥ २६
मुक्ताखिलाघसंघश्च शिवध्यानप्रभावतः । ■ कदाचित्सरस्वत्या क्रीडयन् बहुकालतः ॥ २७
ससर्ज दैत्यान् पापिष्ठान् जगद्द्रोहरतान् भृशम् । अथानतान् स्वयं कोपादात्मजातानपि प्रभुः ॥ २८
तद्दोषस्य विनाशाय पूजयामास शङ्करम् । श्रीकालहस्तिनगरे सर्वपापनिकृन्तने ॥ २९
त्यक्त्वा ततः स्वकं दोषं सरस्वत्या समन्वितः । विशुद्धात्मा ययौ प्रीत्या ब्रह्मलोकं सनातनम् ॥ ३०
■ कदाचित्पुनरशम्भुं प्रणम्य रजताचले । ब्रह्मलोकाभिगमने ययौ बद्धाञ्जलिर्विधिः ॥ ३१
क्रीडन्तं पुरतः स्कन्दं कुमारं पुष्करस्रजम् । जानन्नपि ययौ तूष्णीमजानन्निव गर्वतः ॥ ३२
तं दृष्ट्वा तादृशं स्कन्दस्तमाहूय विधिं तदा । पप्रच्छ प्रणवस्यार्थं कोवेदेति निजलीलया ॥ ३३
अवक्तुमर्थं तं कोपादन्यथा स विधिं तदा । मुष्ट्या सन्ताड्य शिरसि कारागेहमपातयत् ॥ ३४
स्वयं ससर्ज निखिलं जगत्पूर्ववदेव सः । विधातुस्त्वथ वृत्तान्तं श्रुत्वा शम्भुः स्वयं गिरौ ॥ ३५
मोचयामास तं स्कन्दं प्रीणयित्वा महेश्वरः । ततः प्रणम्य स पुनः स्कन्दं सान्त्वाञ्चितप्रियम् ॥ ३६
विमुक्तस्तेन परया प्रीत्या काञ्चीपुरीं शुभाम् । संप्राप्य तत्र चैकाम्रनाथं साक्षात्कृपार्णवम् ॥ ३७
संपूज्य तत्र लिङ्गं च स्वनाम्ना स्थाप्य भक्तिमान् । मुक्तवान् सहतं दोषं तत्प्रभावात्तदाऽब्जभूः ॥ ३८
चकार साधिकारश्च यथापूर्वं पदे स्थितः । पुनर्विचिन्तयन् किञ्चित्पूजयामास शङ्करम् ॥ ३९
श्रीकाद्रिं समनुप्राप्य भक्त्या परमया विधिः । तत्राविरासीद्भगवांस्तस्मै प्रीतस्तदीश्वरः ॥ ४०
वरं वरय भद्रं ते यत्ते मनसि वर्तते । इति शम्भोर्वचः श्रुत्वा धाता बद्धाञ्जलिः पुरः ॥ ४१
भवन्नृत्तावलोकाय विष्णुनाऽऽराधितः पुरा । प्रसन्नो प्रददौ तस्मै पटहित्वं निजान्तिके ॥ ४२
मयाऽस्त्वद्य भगवन्मां तु नृत्ताभिकाङ्क्षिणम् । रक्ष नृत्तावलोकाय तालित्वं परिकल्पय ॥ ४३
■ यथा तावक नृत्तं ■ शक्तोऽहं निरीक्षितुम् । गणेभ्यो यत्रहस्तेभ्यो भयं भवति मे महत् ॥ ४४
इति धातुर्वचः श्रुत्वा तथेति जगदीश्वरः । दत्त्वाऽस्य तालं सुमहत्तत्रैवान्तर्दधे स्वयम् ॥ ४५
तदाप्रभृति वेधाश्च वादयंस्तालवाद्यकम् । दृष्ट्वा नृत्तं नटेशस्य तस्थौ प्रीत्या समन्वितः ॥ ■
तथा ब्रह्मा ब्रह्मलोके पूजयामास शङ्करम् । तस्मै प्रसन्नो भगवान् विधिमूचे सिताशनः ॥ ४७
तवेप्सितं प्रदास्यामि वद ब्रह्मन्निहाधुना । दयाविरूढं देवेशं भगवन्तमुमाधवम् ॥ ४८
सेवितुं मम भो शम्भो वाञ्छाऽद्य हृदि वर्तते । न शक्यते च सर्वाभिः सेवितुं त्वां महेश्वर ॥ ४९
ताडयन्ति च नन्दीशप्रमुखा वेत्रपाणयः । सारथ्यं तव देवेश रथस्य परिकल्पय ॥ ५०
इति ब्रह्मवचः श्रुत्वा वरं दत्त्वा महेश्वरः । अन्तर्दधे क्षणादेव तत्रैव परमेश्वरः ॥ ५१
तदाप्रभृति धाताऽपि रथसारथ्यमाप्तवान् । चोदयामास वेदाश्वान् प्रस्थानसमये प्रभोः ॥ ५२
पुरा कैलासशिखरे पूजयित्वा महेश्वरम् । प्रसन्ने च महादेवे प्रार्थयामास वै विधिः ॥ ५३
दिक्षु लोकाश्च सकलास्त्वत्प्रसादान्महेश्वर । विलोकितुमलं मे शक्तिर्विभर्तुमुपरेऽपि च ॥ ५४

पुनश्चापानमार्गेण तथा निस्सारणाय च । इति प्रार्थ्य महादेवं प्राप्य तदनुगुत्तमम् ॥ ५५
विरोध्य विष्णुं लोकैस्तं निष्ठेदानुपुरा विधिः । ततस्तैः प्रार्थितो लोकैर्मुमोचापानमार्गतः ॥ ५६
विष्णुं लोकान्यथापूर्वं ससर्जाम्बुजासनात् । ऊर्ध्वभागं महेशस्य महालिङ्गस्वरूपिणः ॥ ५७
दृष्टवानहमस्मीति प्राहोक्तं विष्णवे पुरा । तद्दोषपरिहाराय विधिर्विश्वेश्वरं शिवम् ॥ ५८
पुष्पैश्चणाचले पूर्वं पूजयामास भक्तितः । पूतात्मा पूजया शंभोस्तस्मात्पापाद्विमोचनात् ॥ ५९
अरुणाचलसंनिधिशिले यथापूर्वमतन्द्रितः । श्रीपर्वते पुरा धाता शिवपूजां चकार हि ॥ ६०
तदा प्रसन्नं देवेशं शिवं परमकारणम् । प्रार्थयामास च विधिः प्रणम्य भुवि दण्डवत् ॥ ६१
स्वामिन्मदासनं पद्मं वाहनं हंसमेव च । दक्षयागे पुरा दग्ध्वा यदी भवति तापकः ॥ ६२
गणास्ताण्डवेन पुष्पुदुंदुभेनाशौ महेश्वर । तन्मह्यमासनं पद्मं हंसं वाहनमीश्वर ॥ ६३
परिकल्पय विश्वेश प्रणतोऽस्मि तवाधुना । तथेति तद्वरं शंभुस्तस्मै ददौ स्वयम्भुवे ॥ ६४
अन्तर्हितोऽभवत् क्षिप्रं विधिरप्यवसत्सुखी । ब्रह्मलोकमनुप्राप्य देवैस्सह पितामहः ॥ ६५
पुनश्च विधिराराध्य देवमाद्यमहेश्वरम् । श्रुतिधुर्यां ततो लब्ध्वा वेदान् साक्षान्महेश्वरात् ॥ ६६
तदुक्तं धर्मं संभाव्य ससर्ज च चराचरम् । पुरा कदाचित्पुनर्ब्रह्मा लोकपितामहः ॥ ६७
हेमकूटमनुप्राप्य तत्र लिङ्गे महेश्वरम् । अर्चयामास विधिवत्पितृत्वावाप्तिमव्ययम् ॥ ६८
ब्रह्मा प्रसन्नमालोक्य पितरं प्रार्थयत्पतिम् । यथे वरमिदं ब्रह्मा जन्मगृह्यमवार्थितः ॥ ६९
परान्तकाले भगवन् जगदेतच्चराचरम् । संहृत्य विष्णुना सार्धं विष्णौ दृष्टा दयानिधे ॥ ७०
तद्देहास्थिमयानि कपालानि कचानपि । धृत्वा विमृश्यपरेण करोषि किल ताण्डवम् ॥ ७१
तद्वत्स्थिर्ममापीश परान्ते समुपस्थिते । देहं चरममेवं त्वं संहृत्य पुष्कलीलया ॥ ७२
मद्देहास्थिमयानि कपालानि कचानपि । धृत्वैवास्वं शंभो नृत्यं कुरु दयानिधे ॥ ७३
तेनैव च कृतार्थोऽस्मि न पुनर्जन्म मे ततः । ब्रह्मैवमध्यानमपेक्ष्य भवल्लोकमवाप्तिजम् ॥ ७४
कस्य भूयोऽस्ति जन्मेश त्वद्भासकरसमाः । त्वच्छास्थिकलापानां वाहयामस्थि मस्तया ॥ ७५
यस्य कस्यापि वा मुक्तिः किमस्ति तव देहगम् । विश्वातियमतस्यैवं तथास्थितिति तिरोदधे ॥ ७६
सम्मुह्यमानसो ब्रह्मा स्थितः कालं समीक्ष्य च । तथैव तस्य वै शंभुः परान्ते समुपस्थिते ॥ ७७
विधिं संहृत्य हरिणा तदस्थिकलिविभूषणः । ननर्त परमं भावं स्वात्मन्यद्यात्मनः स्मरन् ॥ ७८
अनुगृह्यैवमीशानो ब्रह्माणं तं स्वमोचयत् । एवं ब्रह्मा समाराध्य प्राप्तवान् वरान् शिवात् ॥
अनुग्राह्यमेतस्य को वेत्ति मया यत्किञ्चिदीरितम् ॥ ७९

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे अष्टषष्टितमोऽध्यायः ॥

## ॥ अथ एकोनसप्ततितमोऽध्यायः ॥

### इन्द्रसूर्यचन्द्राणां श्रीमहेश्वराराधनेन पापनिवृत्तिद्वारा बहुविध अनुग्रह प्राप्तिः ॥

सूतः — अतः परं महेन्द्रेण शिवपूजा यथा यदा । कृता स्वामीष्टमुद्दिश्य वर्ण्यन्ते तास्तु काश्चन ॥ १
बलं निहन्तुकामस्तु पुरा शक्रः प्रतापवान् । कालहस्तीशमाराध्य संप्राप्य वरमुत्तमम् ॥ २
संहत्य च बलं दैत्यं युद्धे तद्दोषशान्तये । तमाराध्य पुनस्तत्र कृतार्थोऽभूच्छचीपतिः ॥ ३
पुनः कदाचिच्छापेन दुर्वाससस्तैव वज्रिणः । ऐरावते हयश्रेष्ठे चिन्तितार्थप्रदे मणौ ॥ ४
कल्पवृक्षेषु सर्वेषु सुरभ्यां च च्युतेषु च । स्वर्गादंभोधिमध्ये तु भीतभीतश्शचीपतिः ॥ ५
दारिद्र्यदुःखसन्तप्तः श्रीमद्वृद्धाचलेश्वरम् । समाराध्य ततः प्राप्य ह्यपरं तच्च पूर्ववत् ॥ ६
पुनश्चैरावतश्चाश्वमुच्चैश्श्रवसमंबुधेः । कल्पकानपि वृक्षांश्च कामधेनुश्च सर्वदा ॥ ७
चिन्तामणिं तथा देवश्रियं पूर्ववदाप सः । पुनः कदाचिदिन्द्रस्य गौतमस्यैव शापतः ॥ ८
सहस्रयोन्याक्रान्तायां सर्वाङ्गेष्वपि लज्जया । काश्यां विश्वेशमाराध्य सहस्राक्षो बभूव सः ॥ ९
एकदा तु महेन्द्रस्य पादस्पर्शो मुनीश्वराः । अशपन् केवलमुं ते देहोऽस्माभ्यो भवेदिति ॥ १०
तेन शापेन सोऽप्यक्षयदेही भूत्वाऽतिदुःखितः । नीत्वाऽनेकं ततः कालं केदारे परमेश्वरम् ॥ ११
समाराध्य ततः प्राप्य पौर्विकं देहमात्मनः । स्वर्गाधिपत्यमपि तद्युतं शंभोरनुग्रहात् ॥ १२
पुत्रार्थं च पुरा शम्भुं काञ्च्यामाराध्य वृत्रहा । जयन्तं प्राप्य तनयं पुत्री हृष्टमनाह्यभूत् ॥ १३
कमलाक्षपनस्पेस्य कदाचिन्मघवान् पुनः । समाराध्याप देवेशं मेघं वाहनमात्मनः ॥ १४
अथैः अथसमथ्यश्च कृपया परमेशितुः । पुण्डरीकपुरे पुण्ये पूजयित्वा महेश्वरम् ॥ १५
पुरा शतक्रतुः प्राप नाणापत्यमनुत्तमम् । श्रीमच्छैलासमन्तेऽपि प्राप्तयाऽच्छङ्करप्रियः ॥ १६
तथा मरुत्वानपरः पूजयित्वा पुरुष्टुतम् । पुण्येऽरुणाचलक्षेत्रे शचीमाप प्रियाम् पराम् ॥ १७
रंभादिदेवगणिकाक्रीडमाप मनोरमाम् । एवं संपूज्य देवेशं फलं बहु शतक्रतुः ॥ १८
प्राप्तवांस्तत्र कतिचिद्दीरिता न मयाऽखिलम् । एवं सुरैः कृतां पूजां वक्ष्येऽन्यैरपि शूलिनः ॥ १९
पुराऽर्कः कश्चिदीशानं शिवक्षेत्रेषु पूजयन् । शरीरे स्वशरीरस्य यत्र कुत्सितमप्यलम् ॥ २०
त्यक्त्वा प्राप परं रूपं दिव्यमीश्वरवल्लभः । प्राणाभ्यो भानुमान्क्षेत्रे भद्रेणोऽरपाहिते पुरा ॥ २१
वृद्धाद्रौ महादेवं पूजयित्वा पुरुष्टुतम् । तथाऽत्र यागे भग्नांश्च दन्तान् प्राप परो रविः ॥ २२
तस्मात् दोषमपरस्मविता पूजयञ्छिवम् । रतिजन्तुपिपल्याश्च ज्ञातभावेन वै पुरा ॥ २३
छायार्थभोगजाद्दोषान्मोक्षमापापरो रविः । आदित्या एवमपरे स्वस्वदोषान्व्यपोह्य च ॥ २४
प्रापिरे च निजं कामं रूपञ्च वपुषस्तथा । चन्द्रोऽपि सांबमीशानं समाराध्य पुरातनम् ॥ २५
दक्षस्य शापान्मोक्षञ्च संप्राप्य तदनन्तरम् । वीरभद्रपदाघातशरीरस्य रुजं जहौ ॥ २६
एवं बहूनि चन्द्रोऽपि दुरितानि जहौ मुदा । संप्राप ससुखं सर्वं पूजया शङ्करस्य वै ॥ २७
दिशामधीशास्सर्वेऽपि पूजया परमेशितुः । संप्राप्य पुत्रानैश्वर्यं वाञ्छितं सकलं तथा ॥ २८
संप्रापुस्त्यक्तदुरितास्सर्वेश्वरकृपाबलात् । तथाष्टौ वसवः पूजां देवदेवस्य शूलिनः ॥ २९

कृत्वा स्नानमवापुस्ते वाञ्छितं त्यक्तकिल्बिषाः । तथैव चाश्विनौ देवौ पूजयन्तौ महेश्वरम् ॥ ३०
विशुद्धौ सर्वपापेभ्यः प्रापतुर्निजमीप्सितम् । रुद्राश्चैकादश तथा महात्मानो महेश्वरम् ॥ ३१
पूजयन्तोऽखिलं प्रापुर्वाञ्छितं त्यक्तकिल्बिषाः । ऋषयस्सप्तसङ्ख्याकास्तमभ्यर्च्य महेश्वरम् ॥
संप्रापुस्सकलं कामं विशुद्धा वीतकिल्बिषाः ॥ ३२

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे एकोनसप्ततितमोऽध्यायः ॥

---

॥ अथ सप्ततितमोऽध्यायः ॥

त्रिपुरासुरतपश्चरणं विष्णुनारदाभ्यां बुद्धवेषग्रहणञ्च ॥

सूतः — उत्तानपादसंभूतो ध्रुवो नाम नृपात्मजः । ग्रहाश्च नव सूर्याद्यास्सप्तविंशतितारकाः ॥ १
मेषाद्या राशयो योगा विष्कम्भाद्याश्च भूसुराः । करणानि च सप्तापि शकुनादिस्थितान्यपि ॥ २
विद्याधराश्च गन्धर्वा गरुडोरगराक्षसाः । यक्षास्सिद्धा गुह्यकाश्च तथा किंपुरुषादयः ॥ ३
किन्नराश्च पिशाचाश्च दैत्याः प्रह्लादपूर्वकाः । मनुष्याः पशवश्चैव पक्षिणो वृक्षपूर्वकाः ॥ ४
स्थावरा जङ्गमाश्चान्ये येचान्ये जीवजन्तवः । पर्वताश्च समुद्राश्च गङ्गाद्यास्सरितस्तथा ॥ ५
महर्षयो वसिष्ठाद्या नारदाद्यास्सुरर्षयः । ब्रह्माण्डानि च सर्वाणि सर्वदावरणैस्सह ॥ ६
अभ्यर्च्य देवदेवेशं लिङ्गमूर्तिं सनातनम् । स्वं स्व पदञ्च संप्राप्य तत्सामीप्यमवाप्य च ॥ ७
दुरितानि च निर्धूय परां निर्वृतिमापिरे । प्रत्येकं देवमाराध्य जाताभीष्टा मयेरिताः ॥ ८
अतः परं प्रवक्ष्यामि संपूज्याभ्यर्च्य शङ्करम् । येऽर्जितानि च निर्धूय सामीप्यानि च लेभिरे ॥ ९
तानहं संप्रवक्ष्यामि श्रूयतामवधानतः । पुरा पुराणि त्रीण्यासन्मयोद्रजतकाञ्चनैः ॥ १०
तानि भूमौ नभोमध्ये निवसन्ति त्रिविष्टपे । तेषु तारकसंभूतास्त्रयः श्रेष्ठा महासुराः ॥ ११
विद्युन्माली तारकाक्षः कमलाक्षश्च वीर्यवान् । षट्षष्टिकोटिसङ्ख्याकैरसुरैर्निवसन्ति ते ॥ १२
बाधयन्तश्च लोकांस्त्रीन् सुरान्निर्जित्य लीलया । तपश्चक्रुश्च ते पूर्वमुद्दिश्य चतुराननम् ॥ १३
आस्थाय घोरशिवममात्मनित्यत्वकाङ्क्षया । तपसैवाशु निर्दग्धं त्रैलोक्यं सचराचरम् ॥ १४
ततः प्रादुरभूद् ब्रह्मा तेषामग्रे सनातनः । हंसारूढोऽमरेन्द्राद्यैः परिवारितसन्निधिः ॥ १५
अर्चयित्वा तु तं देवमसुरा वव्रिरे वरम् । अस्माकममराधीश देहि नित्यत्वमञ्जसा ॥ १६
कृपया देवदेव त्वं चतुर्मुख नमस्तव । तानुवाच ततो ब्रह्मा यदि नित्यत्वमस्ति नः ॥ १७
ततो दातुं वयं शक्ता असुरेन्द्रसुतोत्तमाः । नाविद्यमानं शक्तोऽसि दातुं दातापि दानवाः ॥ १८
अहञ्च नैव नित्योऽस्मि विष्णुश्चान्येऽपि सत्तमाः । अनित्या एव ये ■ च विबुधाश्च विना शिवम् ॥ १९
नित्य एको जगत्यस्मिन्मृत्युञ्जय उदाहृतः । तस्मादन्यं वरं यूयं वृणुध्वं मत्सुरेतराः ॥ २०
इति वाक्यं विधेः श्रुत्वा संमन्त्र्य ■ परस्परम् । वव्रिरे अभिपत्येनं नित्यत्वसदृशं वरम् ॥ २१
अस्माकं त्रीणि देवेश भ्रातॄणां नगराणि च । भूम्यन्तरिक्षस्वर्गेषु स्वर्णदुर्वर्णलोहकैः ॥ २२
तान्येवाब्दसहस्रान्ते संयोगं प्राप्नुवन्तु च । क्षणमात्रं तदानीं यो न द्वितीयः श्रुतौ श्रुतः ॥ २३
तेनैकेन शरेणैव संहतश्चेत्पुरत्रयम् । ततो मृत्युरथास्माकं वरमस्त्वद्य देहि नः ॥ २४
ऐश्वर्यञ्चाणिमाद्यैश्चासदृशं पुनः । असुराणाञ्च सर्वेषामावासास्सन्तु नः पुरीः ॥ २५

स्वेच्छानुरूपसञ्चारा पुराणा सन्तु न प्रभो । इति दत्त्वा तु तत्सर्वं ब्रह्मलोकं गते विधौ ॥ २६
यत्र यत्रासुरा लीना देवभीत्या तत क्षणात् । सर्वे ते युयुवुस्तान्वास्तारकेयान् समीहिरे ॥ २७
दनुस्तेऽथ कन्या सा मानोपायनपाणय । स्वदु स्वस्र निषेधैभ्यस्सुखमापुस्सुरेतरा ॥ २८
ततस्तु मायानिपुणो मयस्तैस्तु स्मृत क्षणात् । सम्भूय तैश्च सम्मन्त्र्य सन्तोषेण महीयसा ॥ २९
निर्ममे नगरीस्तेषामयोरजतकाञ्चनैः । गृहास्तु नवरत्नाढ्यान् गोपुराणि महान्ति च ॥ ३०
वीथीश्च विविधास्तत्र मणितोरणमण्डिता । ते समालोक्य नगरीस्तिस्रो दैत्यैस्तैस्सह ॥ ३१
दाशस्तुश्च मय भूयस्सन्तोषमतुलं गता । पप्रच्छुस्तमनश्चापि तमेवैते हिताहितम् ॥ ३२
स तानुवाच हृष्टात्मा विद्युन्मालिपुरोगमान् । युष्माभिश्च यतो लब्धो निस्त्वत्वसहशोऽसुरा ॥ ३३
एक एव सुरश्रेष्ठो यायेनैतेन भृत्युद । सहस्रवत्सरस्यान्ते इतीद बुद्धिकौशलम् ॥ [illegible]
अस्मिन्नर्थेऽत्र शृण्वन्तु मयोक्तन्तु सुरेतरा । देवश्रेष्ठ स्मृतो लोके वेदेषु परमेश्वर ॥ [illegible]
क्षितेषु स्थिरधन्वेति सघामाच जगत्पति । मपादस्सहमानश्च भक्तो भक्तजनेषु स ॥ ३६
लिङ्गमुधश्च वेदेषु सर्वत्र परिपठ्यते । तस्य पूजा सदा कार्या नियमेनाखिलात्मभि ॥ ३७
उपसर्गा क्षय यान्ति शत्रवो व्याधयो ग्रहा । मन प्रसन्नता याति पूज्यमाने महेश्वरे ॥ ३८
युष्माभिरर्चनीयोऽसौ रुद्रो बन्धुजनैस्सह । लिङ्गमूर्तौ सदाकाल त्र्यम्बक पुष्टिवर्धन ॥ ३९
तस्मिन् सपूज्यमानेषु शङ्करे लोकशङ्करे । युष्माक हिंसका येषु हिंसितास्स्युश्च तेन ते ॥ ४०
स शिवस्सर्वजन्तूना भुक्तिमुक्तिफलप्रद । तमाराध्य तमेवैनमर्चयित्वा दिनेदिने ॥ ४१
लिङ्गमूर्तौ जगन्नाथ भक्तिभावेन सुव्रता । ऐश्वर्यमसुरा नित्य प्राप्स्युत सपर्यया ॥ ४२
विजयश्च सदाकाल युष्मत्करतले स्थित । तथैव ते प्रतिश्रुत्य वचन तस्य चोमिति ॥ [illegible]
ययाचिरे च लिङ्गानि मयमैशानि तेऽसुरा । प्रत्येक स च लिङ्गानि कल्पयामास वै क्षणात् ॥ [illegible]
गृहे गृहेऽर्चयामासुरसुरा भस्मभूषिता । रुद्राक्षाभरणैर्युक्ताश्शान्ता दान्ता जितक्रुध ॥ ४५
इति तस्य वच श्रुत्वा चक्रुर्दैत्या गृहे गृहे । विद्युन्माली तारकाक्ष कमलाक्षश्च ते त्रय ॥ ४६
लिङ्गानि प्रतिगृह्यास्मात् स्वोचितानि मुदा युता । प्रत्येकमर्चयामासुर्महाविभवविस्तरम् ॥ ४७
सर्वे स्वाध्यायनिरतास्तपसा दग्धकिल्बिषा । भस्मरुद्राक्षसम्पन्नतपसो विजितेन्द्रिया ॥ ४८
प्रथमर्चयता तेषामासन्नैश्वर्यवृद्धय । लोके वेदप्रसिद्धाश्च शिवपूजारतात्मनाम् ॥ ४९
तत्र कल्पवृक्षाश्च गृहारामभवाश्च ते । तेषा गोष्ठस्थिता गावो मनिदृश्य कामधेनव ॥ ५०
चिन्तामणिशिलास्तेषा प्राङ्गणेषु प्रतिष्ठिता । एतन्माहात्म्यमेवैतेषामर्चता शिवम् ॥ ५१
नियमश्चैव शाङ्गधारस्तानिधिं [illegible] चक्रिरे । गायन्तश्च हसन्तश्च नृत्यन्तश्चासुरोत्तमा ॥ ५२
नित्योत्सव मभूत्तेषा नित्यश्रीर्नित्यमङ्गलम् । रथनागतुरङ्गाद्यै खेलन्तिस्मासुरेश्वरा ॥ ५३
आरामेषु विचित्रेषु वापीषु च सरस्वपि । नदीनदेषु सर्वत्र क्रीडन्तो निन्यिरे समा ॥ ५४
अमृतान्धोभिरनिशमादृतात्मक्रिया भृशम् । रमन्तेस्म सपत्नीकास्सुरवन्दीभिरादृता ॥ ५५
ते पुरैस्सह यथेच्छा तत्र तत्र च रेमिरे । मण्डले च सहस्रांशोश्शीतांशो ऋक्षमण्डले ॥ ५६
ब्रह्मलोके विष्णुलोके भूलोके चान्तरिक्षके । सुरेन्द्रलोके दिक्पाललोके सर्वत्र रेमिरे ॥ ५७
य एतेषामधोभागे स्युजनाश्च तता पुन । प्रतिमार्गेण ते सर्वे विनेशुर्भयपीडिता ॥ ५८
स्वकलोकास्तदा विष्णुमुख्याद्या देवसत्तमा । महामेरुगिरिं प्राप्य मन्त्रयित्वा परस्परम् ॥ ५९
कथमेतेऽत्र वध्यास्स्युरस्माभिर्वरगर्विता । तानुवाच ततो विष्णुस्तेऽर्चयन्त्यसुरा शिवम् ॥ ६०

लिङ्गार्चनपरा लोके न शक्या जेतुमात्मभिः । पतिव्रताश्च वै तेषां स्त्रियश्च पतिदेवताः ॥ ६१
तस्मादजेयतां प्राप्ता असुरा बलवत्तराः । तमूचुरमरास्सर्वे भक्तिहीनास्सुरद्विषः ॥ ६२
यद्यस्य वचनात्सद्यः कुर्वन्त्येते शिवार्चनम् । भक्तिहीनार्चनं शंभोरतिप्रीतिकरं नहि ॥ ६३
एवं देवं समाराध्य सर्वे चापि सदाशिवम् । तेनैश्वर्यासंभूतैर्जेष्याम इति ताः पुनः ॥ ६४
तानुवाच हरिस्तेषां न जानीध्वे वचन सुराः । एकैकैवेषुणा नाशो नान्यथा यागसंभवैः ॥ ६५
उपसद्भूतभूतैश्च जयध्वे [illegible] मृषा सुराः । तस्माद्भूतेषु चैवं तद्भूतैर्यागोद्भवैर्वयम् ॥ ६६
निरुध्य पीडयिष्यामः पुरेषु यदि शासयान् । तेषु तेषु च लोकेषु वयं स्थातुं क्षमास्ततः ॥ ६७
इति संमन्त्र्य ते सर्वे देवा विष्णुपुरोगमाः । वेदान् सर्वान् समाहूय देवैस्सार्धं जनार्दनः ॥ ६८
उपसद्भिस्तदाऽत्यौषीत् व्याघ्रशीर्षं जपन्नदम् । तदा भूतानि कोटिशस्तुमंत्राज्जित पलभाजि च ॥ ६९
तानि चाज्ञापयामासुस्तंभक्षयत ताः पुरः । असुरैस्सह भूतानि गच्छतेति तदा सुराः ॥ ७०
तानि संप्रेष्य भूतानि पुरेषु पुरवासिनः । भूतिरुद्राक्षदीक्षाढ्यान् शिवपूजापरायणान् ॥ ७१
असुरानविलोक्यैषा नालक्षेतुं क्षमाण्यहो । केवलं पुनरुद्यानमभ्येत्य कपिलसुवत् ॥ ७२
फलानि भक्षयामासुः पनसाम्रभवानि ते । असुरास्तानि दृष्ट्वा ते जघ्नुर्लोष्टैश्च दण्डकैः ॥ ७३
ततश्चान्योन्यमभयदं भूतसुरद्विषाम् । विभेयुस्तानि भूतानि महान्त्यपि शिवाज्ञया ॥ ७४
असुरास्ते पुनस्तेषां देवदेवाशिषीदृशीम् । संप्राप्य देवलोकेषु लुण्ठनञ्चक्रिरे भृशम् ॥ ७५
[illegible] तत्र स्थितान् देवान् समाक्रम्य बलाधिकाः । ततस्ते तत्र ये देवाः प्रहृता असुरैर्भृशम् ॥ ७६
शीघ्रं मेरुं समासाद्य चाधष्युर्देवसन्निधौ । ततश्च भृशदुःखार्ता विबुधा मेरुगह्वरे ॥ ७७
तस्थुरन्येऽसुराः प्रीत्या पुरेषु न्यवसंस्तदा । पुनश्च देवा वृत्तान्तं ब्रह्मविष्णुपुरोगमाः ॥ ७८
विज्ञापनं महेशाय कर्तुं कैलासमाययुः । प्रणम्य द्वारि देवस्य द्वारपालान् जनार्दनः ॥ ७९
अपृच्छद्विबुधैस्सार्धं देवान्तरमोदरात् । नायं योऽवसरो देवा गच्छतेति च ते गणाः ॥ ८०
तदुपश्रुत्य विबुधा नास्माकं गतिरन्यथा । स्थास्यामोऽवसरं यावत्तावदत्रैव सन्निधौ ॥ ८१
मन्त्रयित्वेति चाक्रोशुरुच्चैर्हर हर प्रभो । शङ्करेश महेशान शिवेति परमेश्वर ॥ ८२
चुक्रुशुस्ते तदोत्थाय बाहू दीनस्वराक्षरम् । क्रोशतस्तान् हरिब्रह्मप्रमुखान् गणपुङ्गवाः ॥ ८३
अताडयन् भृशं दण्डैर्हस्तो द्वाःस्थसंमताः । ते ताड्यमानास्त्रिदशा विलीनास्समवेतो दिशम् ॥ ८४
शापैस्सहस्रमासैर्दुर्मानसं महदद्भुतम् । तत्र देवा हरिं प्रोचुः कथं कार्यं भविष्यति ॥ ८५
कथं विज्ञापनं कर्तुं शक्यास्मो देवसन्निधौ । स्थातुं नो न सहन्तेऽत्र द्वारपाला महौजसः ॥ ८६
तानुवाच हरिर्ब्रह्मप्रमुखानाकुलान् सुरान् । अस्मानत्र समासीनांस्तूष्णीं न प्रहरन्ति ते ॥ ८७
आक्रोशतोऽस्मानालोक्य प्रहरन्त्येव तादृशाः । आक्रोशतः प्रभुद्वारि द्वाःस्था नैव सहिष्णवः ॥ ८८
एतद्वचस्तु ते देवास्सत्यं संभाव्य वैष्णवम् । मासं यन्तस्तदाऽन्योन्यं पश्यन्तश्च पुनर्हरिम् ॥ ८९
अतः परं कथं वा स्याद्वोऽस्माकं मतिं वद । तानुवाच हरिर्यूयमेव सर्वे विचक्षणाः ॥ ९०
एवं बुद्धिं [illegible] चेदानीं मम किञ्चन रोचते । ततश्चिरं ते प्रत्येकं स्वं स्वं संयोचिरे मतम् ॥ ९१
निश्चित्य च पुनः प्रोचुस्तदस्यच्युतमाशु ते । असुराः शिवपूजायां निरता भूतिभूषणाः ॥ ९२
रुद्राक्षमालाभरणा लिङ्गार्चनपरायणाः । स्वाध्यायनिरतास्सर्वे वैतानाग्निसमिन्धकाः ॥ ९३
पतिव्रताः स्त्रियस्तेषां विशेषेण जनार्दन । नैव शक्या निहन्तुं ते येषां भार्याः पतिव्रताः ॥ ९४

शिवभक्ताश्च ये लोके भूतिरुद्राक्षभूषणाः । किन्तु विष्णो त्वया शक्त्या मायया दितिसंभवाः ॥ ९५
त्यक्तलिङ्गार्चनाश्चेत्सुरशिवपक्षान् संहरिष्यति । लोचनेऽम्युदाऽस्माकं घातय भवति ध्रुवम् ॥ ९६
इति ब्रुवत्सु देवेषु तानुवाच पुनर्हरिः । अहं यतिष्ये निद्राऽस्त्यानुयुक्तमिदं मम ॥ ९७
यूयञ्च मद्गिरा देवं यजध्वं तपसा शिवम् । संहरिष्यति तान् देवस्सर्वथा परमेश्वरः ॥ ९८
इति नारदमाहूय मायी त्रिपुरमाप सः । तत्र बुद्धः स्वयं जज्ञे विष्णुर्दितिपोऽस्य नारदः ॥ ९९
मोहयामासतुश्चोभावसुराणां कुलं क्षणात् । मायामयेन शास्त्रेण वाचा मधुरया च तौ ॥ १००
वेषेण च विचित्रेण भोजनाद्यैश्च तादृशैः । पतिव्रतानां स्त्रीणाञ्च नानामायाविचक्षणौ ॥ १०१
दर्शयित्वाथ रत्नानि दिव्यान्याभरणानि च । पातिव्रत्यञ्च नार्यां तौ नाशयामासतुर्गिरा ॥ १०२

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे सप्ततितमोऽध्यायः ॥

---

॥ अथ एकसप्ततितमोऽध्यायः ॥

बुद्धवेषधारिभ्यां विष्णुनारदाभ्यां असुराणां प्रलोभः ॥

सूतः — तौ दृष्ट्वा तादृशौ पूर्वदेवा मायाविमोहिताः । तयोस्त्वत्यद्भुतशीता बभूवुर्गतचेतनाः ॥ १
अन्तेवासिनमस्यैते नारदं सुरशात्रवः । दृढः पप्रच्छुराहूय कोऽसौ कस्मादिहागतः ॥ २
अस्मद्ग्रामपदादद्य किमागमनकारणम् । स तानुवाच बुद्धोऽयं (स्वयं) लोकालोकोऽस्य (लोकस्य) धाम भूः ॥ ३
भुवनालोकनप्रीत्या सञ्चरत्येकदा इति । यत्र स्वचित्तं रमते तत्र तिष्ठत्ययं वशी ॥ ४
तत्र स्थित्वाऽऽत्मविद्याया माहात्म्यं दर्शयत्यसौ । उपदिष्टास्तु येऽनेन ते सर्वेऽभीष्टमाप्नुयुः ॥ ५
श्रुत्वा चैवम् तदार्थे परियार्योपतस्थिरे । तेषामभीष्टजातञ्च मायी दत्त्वा व्यमोहयत् ॥ ६
विचित्रवस्त्राभरणधनधान्यपशुक्षमाः । तस्मादहमपत्समुद्भूताः पशून्यादाय गच्छतः ॥ ७
दृष्ट्वा दृष्ट्वा जनास्त्वेते समपश्चावृत्य तस्थिरे । तेषामपि मनोऽभीष्टं बुद्धाचार्यो ददौ मुदा ॥ ८
पुनश्च नारदं दैत्या रहस्याहूय सादरम् । पप्रच्छ शिष्यभूतानामेषे किं सिद्धयोऽद्भुताः ॥ ९
भवन्ति वा न वा यैवमिति पृच्छत्सु तेष्वसौ । नारदः प्रत्युवाचैनानहं शिष्येषु मूढधीः ॥ १०
ममापि सिद्धयस्सन्ति यास्ताः पश्यत तत्क्षणम् । कमण्डलोर्गृहीत्वांभस्ससार मनसा वशी ॥ ११
तत्र ब्रह्मा च विष्णुश्च सर्वेचैव स्थितास्सुराः । संबभूवुस्तदाऽऽश्चर्यं प्रणेमुस्तेच सादरम् ॥ १२
ब्रह्मादीन् क्षणमात्रेण ह्यवाचान्तर्हितान् सुरान् । असुरेभ्योऽमृतं भूरि ददौ स्वयमिहागतम् ॥ १३
पुनश्च यन्मनोऽभीष्टं ददौ शिष्योऽस्य नारदः । पुनश्च बुद्धिं दैत्यानां मोहयामास मायया ॥ १४
अप्रार्थयंस्तदा चास्य शिष्यभावं दितेस्सुताः । नारदस्तु तत्सर्वं विज्ञाप्य गुरवे मुदा ॥ १५
शिष्यांस्तान् कारयामास बहुशः प्रार्थयन् गुरुम् । दीक्षयामास तानेनान् अधस्त्यक्तशिवार्चनान् ॥ १६
तेषामुपदिदेशासौ मायैव भवताद्गुरुः । अहं बुद्धोऽस्मि वै नाम्ना अप्राज्ञ तु जपोऽस्तु वः ॥ १७
मदर्चनैव युष्माकमभीष्टफलसिद्धिदा । इह लोके यत् दृष्टं तदेवामुत्र यत्मृषा ॥ १८
शिवपूजा न वै कार्या न धार्यास्तु विभूतयः । न च रुद्राक्षबीजानि मिथ्या वेदगिरोऽखिलाः ॥ १९

कुमारं नृत्यमानं तं पश्य पुत्रवतां वर । इति देवीगिराऽऽश्रुत्य नृत्यमानपुरः सकृत् ॥ ५५
करताळतश्शंभुर्नृत्य बालेयुवाचह । ततो लीलालयो बालो ननर्तोऽसि शूलिनः ॥ ५६
नृत्येति सर्वाधिपतेर्गिरा सर्वं ननर्त तत् । जगज्जगत्पतेराज्ञा केन लङ्घ्या जगत्त्रये ॥ ५७
देवाश्च विष्णुप्रमुखा नृत्यन्तिस्म तदान्तराः । तोषितौ पितरौ पुत्रं समालिङ्ग्य परस्परम् ॥ ५८
आघ्राय मूर्ध्नि हस्ताभ्यामादायास्मोरसा शिवः । पुत्रमन्तःपुरं देव्या विवेश परया मुदा ॥ ५९
ततस्समग्रका देवास्सनारायणकास्तथा । शिवाः परस्परं प्रोचुरधुना क्षतिनोऽसुराः ॥ ६०
दृष्ट्वापि सर्वलोकेशो नः कार्यं न स्मापितम् । चर व्रतं पाशुपतं देवप्रोक्तञ्च कुर्महे ॥ ६१
इति चक्रुस्समाराध्य शिवं पाशुपतं व्रतम् । श्रद्धया परया देवा विरजाभस्मभूषिताः ॥ ६२
ततश्चित्तेऽध्यायैंस्तैः परात्मा भक्ततोषितः । नन्दिनं गणप्रेष्ठमादिदेश जगद्गुरुः ॥ ६३
तिस्रः पुरोऽस्य संहर्तुं साधनं नैव विद्यते । देवेभ्यः कल्पयाशु त्वं रथं सशरकार्मुकम् ॥ ६४
संग्रामसाधनं सर्वं संपादयिष्यति । तथेति निर्गतो नन्दी सर्वं शंभुवचोऽब्रवीत् ॥ ६५
सुरानाह्लादयन्वाचा पुनश्शुद्धान्तमासदत् । शैलादौ निर्गते देवाश्शंभोस्संग्रामसाधनम् ॥ ६६
रथञ्च सारथिञ्चाश्वान् शराश्च धनुर्महत् । चक्रुरत्या तु रुचिरं तत्र संमन्त्र्य परस्परम् ॥ ६७
ईश्वराहौ महाश्चापो मेरुरेवात्र काञ्चनः । सर्पराजोऽत्र मौर्वीति वाडवाग्निशिरा केशवान् ॥ ६८
पद्मानीकफलानि चतुर्वेदा महत्तरान् । अधिष्ठानञ्च विन्ध्याद्रिमाश्रयं केसराञ्चलम् ॥ ६९
भूलोकमासनं तस्य रथस्य सुमहीयसः । आकाशोऽस्यावकाशोऽभूच्चक्रे च शशिभास्करौ ॥ ७०
रथ्या वेदा ऋग्यजुस्सामाथर्वाद्योऽश्वकाः । वसिष्ठाद्या मुनिश्रेष्ठाः स्वस्तिवाचनतत्पराः ॥ ७१
पक्षिणः किन्नरा यक्षास्सिद्धाः किंपुरुषाः परे । गन्धर्वा गरुडाद्याश्च चारणाद्याः फणीश्वराः ॥ ७२
शैला अष्टौ महानागास्समुद्रा मेघपङ्क्तयः । वितानञ्चापि रत्नानि भूषणान्यस्य तेऽभवन् ॥ ७३
मन्त्राः कला वेदयश्च निघण्टुसंपदोऽस्य तु । यज्ञाः कर्माणि धर्माश्च कालाः कल्पाश्च कीलकाः ॥ ७४
दिनानि प्राणसंयमा योगाश्च करणानि च । क्षणाः मुहूर्ताः काष्ठाश्च रथकीला महत्तराः ॥ ७५
निर्मितस्स्यन्दनस्त्वेवं तस्याभूत्सारथिर्विधिः । प्रणवोऽस्य कशा कल्पा रथवेदाश्वतोदका ॥ ७६
क्षीराब्धिनिलयो विष्णुश्शरस्यैव तु तेजनम् । वैकुण्ठनिलयश्शार्ङ्गी शिवस्यानुचरो महान् ॥ ७७
मेरौ मनोयती ब्रह्मा सारथिः प्रणवः कशा । सत्यलोकाधिपो ब्रह्मा शिवस्य परिचारकः ॥ ७८
देवाश्च सैनिकास्सर्वे शक्राद्याः पृतनाधिपाः । तपस्विनो योगिनश्च बभूवुः स्वस्तिवाचकाः ॥ ७९
तदा विष्णुरथासाद्य कैलासं नन्दिनोऽन्तिकम् । व्यजिज्ञपच्च वृत्तान्तमिममर्थं प्रणम्य च ॥ ८०
नन्दी च समये देवं प्रणम्योवाच साञ्जलिः । श्रुतविज्ञप्तिरीशोऽथ देव्या सह दयानिधिः ॥ ८१
वृषभारुह्य शुभ्रेतं रथान्तिकमुपासदत् । दृष्ट्वा स्तुवंस्तदा सर्वे देवा विष्णुपुरोगमाः ॥ ८२
संस्तोत्रमुदितो देवो वृषादुत्तीर्य सात्मजः । आदाय सशरश्चापं स्यन्दने निदधे पदम् ॥ ८३
तस्मिन् कुर्वति देवेशे पदं लोकमयो रथः । भारासहः पपाताथ तदा पटपटध्वनिः ॥ ८४
विष्णुस्समग्रका देवास्सनारायणकास्तदा । नारायणो महायोगी वृषो भूत्वा दधौ रथम् ॥ ८५
सोऽतिभारभराक्रान्तश्शिथिलाङ्गः पपात ह । वमन्रुधिरमास्येन शिवं भीतोऽस्तुवद्धरिः ॥ ८६
ब्रह्मादयोऽपि देवेशमस्तुवन्नूर्ध्वबाहवः । ततः कृपानिधिश्शम्भुर्भीताद्विष्णोर्बलं ददौ ॥ ८७
क्षणेन ककुदा देवरथं दध्रे वृषो महान् । यथापूर्वं रथस्त्वासीदाज्ञया परमेशितुः ॥ ८८

सन्तुष्टमनसश्चैव शम्भोस्ते तदाऽर्चयन् । आलोक्य तेषामाह्लादमाकुलश्च दलभृत् ॥ ६
स्मितभीषणकाराशु विलोक्य गिरिजामुखम् । आन्दोलयन्महाविष्णुप्रमुखानमरानयम् ॥ ७
निघ्नन् मेरुधनुष्कोटिमन्दमाशिरसादरं । पुत्रथ तदा तेषामपाङ्गैर्व्यलोकयत् ॥ ८
॥ च दृष्टासमभूतस्त्वानुकम्पतेजसि । पतत्क्षात्तु पुरो ह्यसमेत्राविव मन्मथ ॥ ९
तदा देवकराम्दोलशालितास्सुरपुङ्गवा । चाम्बमिश्राशिगोविन्दा मनसा सुरयोधित ॥ १०
स्मितश्लाघा पुरो दृष्ट्वा प्रार्थयन् स्वात्ममोक्षणम् । तथेति मेरुकोदण्डं सज्यं कृत्वा त्वनादरम् ॥ ११
नादयन्नद्रिमहिमयीमङ्गुल्यग्रेण वामया । शरासनेऽत्यामारोप्य शरमास्ते पुरान्तकम् ॥ १२
तच्छरानपि स्मिताग्निश्चाहत्ता त्रिपुरं क्षणात् । स्मिताग्निकणसङ्घधवपुश्चत्रिदशारय ॥ १३
पूर्वं बुद्धगिरस्तत्र शिवपूजापरा यत । गाणपत्यात्मयोगित्वं प्रापिरे सर्वं एव ते ॥ १४
शम्भोः पार्श्वे तदा तिष्ठन् प्रमथैश्चाभिनन्दिता । ये मोह नैव संप्राप्ताः पुरतस्तेऽसुरसत्तमा ॥ १५
अपरित्यक्तरुद्राक्षविभूतिशिवपूजना । पुरेषु दह्यमानेषु स्वगृहैरपि ते यथा (सदा) ॥ १६
अग्निमध्येऽपि ये तस्मात्तदन्तरुज्ज्वलन्त ईश्वरम् । यच भाग्यवशात्तात बुद्धमायाविमोहिता ॥ १७
यदि स्याम्नो यथैवैते भविष्यामो न संशय । ॥ काल निर्मिपदे शम्भो शिवेति परिकीर्त्य ते ॥ १८
ततस्तु शिवमभ्येत्य च प्राञ्जलयोऽस्तुवन् । सर्वेश्वरं नमन्तश्च सर्वे हृष्टतनूरुहा ॥ १९
तथस्थ्यशङ्करो भक्तांस्तानुवाच स्मयन् प्रभु । अतीव यूयं मद्भक्ता आयुष्मन्तो भवास्विम ॥ २०
असुरा किमु घोऽभीप्र वृत दाताऽस्म्यहन्न तत् । वविरे भुवनीशे ते एव वरमनुत्तमम् ॥ २१
पय कैलासशिखरे भवद्द्वारि दयानिधे । द्वारपाला भविष्यामस्तुदान्तस्यादिनायक (युगान्ते स्वान्तनायक)
एव प्रार्थयतस्तांस्तु द्वाःस्थानीशश्चकार ह । स दुर्लभस्त्वीदृशो हि वरो लोकेऽखिलात्मनाम् ॥ २३
दयालाश्च द देवमीशो ह्यन्तर्हिते पुन । तेऽथ विष्णुमुखा देवास्समयश्चक्रिरे तदा ॥ २४
अद्यप्रभृति लोकेऽस्मिन् सदेवासुरमानुषा । लिङ्गार्चनं न कुर्वन्ति ये देवा मुनयोऽपि वा ॥ २५
मनुजाश्चिह्नगण्यर्गा ये वा के वा नराधमा । भस्मरुद्राक्षरहिता पञ्चाक्षरवर्जिता ॥ २६
भस्मगात्राश्च तेऽस्माभिरपि धर्मरता भृशम् । संभाष्याश्च सर्वथा श्रौतस्मार्तादि कर्मणा ॥ २७
पतैरनाक प्रकुर्वन्ति हेया नैवतु निष्कृति । सत्यमेव मृषा नैतदिति शपथा सदा सुरा ॥ २८
तत्रैव सुचिरं कालं स्थित्वा लिङ्गार्चनं परम् । कृत्वा पुनश्चापन्तास्ते सर्वे जग्मुर्यथागतम् ॥ २९
स्वं स्वं लोकं समासाद्य चार्चयामासुरीश्वरम् । पूजयन्तोऽसुरा नित्यं शिवश्रद्धाबुद्धिपूर्वकम् ॥ ३०
अनया च चिरं कालं पश्चात्स्वकीयशिवार्चना । शिवेनैव हताश्चात्र सायुज्यमाप सुव्रत । ३१
अत्यन्तशिवमार्गा ये भूयस्ते द्वारपालका । शङ्करस्यालये साक्षात्कैलासे तेऽभवन् द्विजा ॥ ३२
एवं सभूय विबुधैर्विजयाय सुरद्विषाम् । अभ्यर्च्य विष्णुप्रमुखैरस्यो निर्जिताद्धि तैः ॥
तस्मात्सर्वप्रयत्नेन पूजा कार्या शिवस्य तु ॥ ३३

इत्थं सम्भूय देवैः परमशिवपदाभ्यर्चनालब्धसौख्यैर्वीर्यं सौन्दर्यं जय श्रीर्विविधमपि वरं भोगमोक्षौ च लब्धौ । तस्मान्मर्त्यैरमर्त्यैरसुरमुनिगणैरिसिद्धगन्धर्वमुख्यैर्भक्त्या लिङ्गशिवार्चा विधिवदनुदिनं श्रद्धानैर्विधेया ॥ ३४

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे द्विसप्ततितमोऽध्याय ॥

॥ अथ त्रिसप्ततितमोऽध्यायः ॥

अन्धकासुर भयात् देवानां स्त्रीवेष धारणम् ॥

सूतः — पुनश्चाहं प्रवक्ष्यामि संभूयाश्चर्यशूलिनम् । देवैर्यदिष्टं संप्राप्तं यच्चत्कथयामि वः ॥ १
पुराऽभूदन्धको नाम्ना दैत्येयो लोककण्टकः । तपसा महता प्राप्तबलवीर्यपराक्रमः ॥ २
त्रिजगत्पीडितं तेन निर्जिताश्च सुरा युधि । निर्जिता विबुधा ब्रह्मविष्ण्वाद्या रणमूर्धनि ॥ ३
स्त्रीवेषधारिणस्तेऽथ न तु पुंरूपमास्थिताः । धृतस्त्रीवेषमायाश्च चेरुर्देवा दिशो दश ॥ ४
पुरशाकारविबुधानन्धकारागृहान्तरे । पुनश्च वनिताकपात् स हलेस न चासुरः ॥ ५
ते पीड्यमाना दैत्येन स्त्रीवेषा अपि सन्ततम् । मन्दरं प्राप्य ते सर्वे महादेवमियं गिरिम् ॥ ६
तत्र देवं नमस्कृत्य हरिब्रह्मादयस्सुराः । तदाज्ञया भवं देवीमप्रीतां परिचारकाः ॥ ७
तत्राप्यनुपदं देवानन्धको गिरिमासदत् । तं मन्दरगतं देवाः स्त्रीवेषा विष्णुपूर्वकाः ॥ ८
दृष्ट्वा शिवमहेशाय दौरात्म्यञ्चास्य कृत्स्नशः । ततो देवो महादेवः करुणामृतवारिधिः ॥ ९
देवानां रक्षणार्थाय भैरवेशमचोदयत् । विनिग्रहाय दैत्यानां सगणो निर्जगाम सः ॥ १०
तयोर्युद्धमभूत्तत्र सेनयो रुद्रदैत्ययोः । विनाशमगमद्दैत्यसेना भैरवसेनया ॥ ११
ये ये दैत्या हता रौद्रैस्तांस्तान् भृगुसुतस्तदा । मृत्युञ्जयेन मन्त्रेण अजीव च पुनः पुनः ॥ १२
पुनरुज्जीवयामास तदद्भुतमिवाभवत् । शुक्रमाकृष्य सहसा भक्षयामास शङ्करः ॥ १३
ततो हताऽऽसुरी सेना गणैर्भैरवैः क्षणात् । भैरवोऽपि ततः क्रुद्धस्त्वन्धकमहासुरम् ॥ १४
शूलप्रोतं विधायाशु शिवसन्निधिमभ्यगात् । शिवेनालोकितो दैत्यश्शूलप्रोतोऽपि तत्क्षणम् ॥ १५
निवृत्तमन्यु सकलं कर्मजातं तदाऽऽसुरम् । लेभमानस्स शूलाग्रे देवं तुष्टाव हृष्टधीः ॥ १६
तत्स्तोत्रमुदितो देवस्तं वरेण समायुनक् । वव्रे सोऽपि वरं दैत्यो गाणपत्यमनुत्तमम् ॥ १७
ततो देवोऽपि दैत्याय गाणपत्यं प्रसन्नधीः । शुक्रश्च प्रस्तपीतोऽन्तस्ततस्सर्जोद्वारान्तरात् ॥ १८
शुक्रोऽप्यवध्यं तद्देशानां ममण्डलमथाविशत् । ततोविष्णुमुखा देवास्समाराध्याम्बया शिवम् ॥ १९
स्त्रीरूपं परित्यज्य यथा स्वं तदाऽऽश्रयम् । असुरोऽप्यन्धकः पापी त्रिलोकपान्ते त्रिशूलिनम् ॥
गाणापत्यममर्त्यानामपि दुर्लभमाप सः ॥ २०

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे त्रिसप्ततितमोऽध्यायः ॥

---

॥ अथ चतुस्सप्ततितमोऽध्यायः ॥

श्री शिवेन मर्मसंहारायाः देव्या भण्डासुर वधश्च ॥

सूतः — एकदा पुनरीशानः प्रियया गिरिकन्यया । अन्तरङ्गगणैर्देवैश्च शृङ्ग स्वनमाश्रितः ॥ १
तत्र शृङ्गारविपिने देव्या दत्तकरद्वयः । गुल्मान् लताद्रुमांश्चारामान् पुष्पगुच्छशोभिनः ॥ २
सार्धं ददर्श तान् देव्या शनैस्तद्दर्शनैश्चितान् । मध्ये तत्र वटं दृष्ट्वा महाविटपमद्भुतम् ॥ ३
तन्मूलवेदिकामध्यमाससाद सहोमया । मध्यासीमास्तत्र दिव्यासनमासनम् ॥ ४

देवीन्यग्रोधमालोक्य देवदेवश्च सस्मिता । प्राह वृक्षो महानेवं न दृष्टो यत्र कुत्रचित् ॥ ५
तामाह यद्वदीमेवमितोऽप्येष युगान्तिमे । ब्रह्मणः प्रलये प्राप्ते महानेतच्छताधिकः ॥ ६
भविष्यति तथा पर्णमेकमस्यार्णवांभसि । पतिष्यति महाविष्णुस्तत्र शेतेऽर्भकाकृतिः ॥ ७
ब्रह्मोत्पत्तिनिमित्तं मां स्मरिष्यति जनार्दनः । हिरण्यगर्भं तेनाहं जनयिष्यामि तन्मुखात् ॥ ८
अजस्य नाभावप्येकं समर्पितमिति श्रुतिः । जगत्सृष्टिरियं पश्चाद्यथापूर्वं प्रवर्तते ॥ ९
उद्यानपालकान् देवः क्रोधिसंनिहितान् सह । आहूय वापिकामध्यादानयिष्यथ पक्षिणौ ॥ १०
कौचिदित्याह मुग्धेन्दुशेखरस्तानुमासखः । ते हंसं शुकमेकञ्च गृहीत्वा जग्मुरञ्जसा ॥ ११
तौ पक्षिणौ प्रणम्येशं समातस्थतुरग्रतः । आलोक्य तौ तु विश्वात्मा पप्रच्छ शिवया सह ॥ १२
कतिप्रन्तौ द्विजौ कालं किं किं कृत्वा विनेष्यथः । सांबे पृच्छति तत्रैवं शुकः प्रोवाच हृष्टधीः ॥ [illegible]
कृतमालतटोद्यानेषा कूपेन स्थीयते मया । अत्रैव भवदुद्याने सततं भाग्यशालिना ॥ १४
हंसोऽपि पुनराहेदं प्रणम्य स कृताञ्जलिः । ब्रह्मविष्ण्वोश्च लोकेषु दिव्यकालाश्च सञ्चरन् ॥ १५
भूरिपुण्यवशाद्देव तवोद्यानमिहागतः । वापीमध्येऽत्र पीयूषसमम्भः पिबन् सदा ॥ १६
यज्ञयास्तव जटाजूटनिलयायाश्च साम्प्रतम् । गङ्गायाश्चांभसो नित्यं माहात्म्यं निवसाऽवहम् ॥ १७
ब्रुवन्तमिति तं हंसं शुकञ्च जगतां पिता । गच्छतामिति चोक्त्वा तौ विससर्ज तदास्पदम् ॥ १८
ततो देवी शुभं क्रुद्धा समुत्थाय तदाऽन्तरात् । ईशमुक्त्वा तवलीति हंसस्य वचनात्कथम् ॥ १९
प्रीतिस्तव शुभे हास्यलाघु साध्वति निर्गता । गत्वा दूरं क्वचिल्लीना भूमौ पांसून् समुह्य सा ॥ [illegible]
चकार पुत्तलिं साथ सजीवां पुनरुत्थिता । तदन्तरे महादेवः कुपिताञ्जगदम्बिकाम् ॥ २१
सान्त्वयित्वा समानीय जगामान्तःपुरं प्रभुः । यैः पांसुभिरुमादेव्या कृता पुत्तलिका तदा ॥ २२
ते मन्मथस्य दग्धस्य देहभस्मचयास्ततः । गुर्गुणः पुरुषाकारो कैलासस्य समीपगाः ॥ २३
तं दमेन्द्राद्यमुद्वीक्ष्य रवं भण्डो (भण्डो) नामतोऽसुरः । गच्छतु त्वया नाम स्वातन्त्र्यं सुरद्रुहा ॥ २४
निराकुरिति कोपेन स भण्डो निर्गतोऽसुरः । भण्डासुरस्तपस्तेपे भीमं कुर्वन् पशोःपतिम् ॥ २५
सुयोधमतिघोराणं वर्षाणामयुतायुतम् । शक्रो [illegible] देवेन्द्रहरिब्रह्मादयस्सुराः ॥ २६
संहरिष्ये ततस्तेषां वीर्याणि कथयेत्तितुः । चिरंदेवस्ते न मां वीर्यं भक्षयन्तं हृदिस्थितम् ॥ २७
यथाथे परमिदमेवं देवदेवं त्रियंबकम् । प्रीतस्तत्तपसा देवस्तस्मै सर्वं ददौ वरम् ॥ २८
भण्डासुरो लब्धवरो भक्षयन्वीर्यमात्मनाम् । ब्रह्मविष्ण्विन्द्रमुख्यानां देवानामपि सर्वशः ॥ २९
नष्टवीर्यास्सुरास्सेन्द्राः ससपत्न्यां विनाधिपाः । किमेतदिति निर्विण्णा जज्ञिरे न तु तं सुराः ॥ ३०
इच्छन्तोऽस्य प्रतीकारमीशार्चानिरताभृशम् । ब्रह्मा हरिर्हरिश्चान्ये हरितामधिपाश्च ते ॥ ३१
लिङ्गे षोडशमिदं वस्तुपचारैरुपाचरन् । कैलासगिरिमभ्येत्य पश्चादभ्यर्थयञ्छिवम् ॥ ३२
निर्वीर्या देव सञ्जाता न जानीमोऽस्य कारणम् । ईश्वरः — तानुवाच हरिब्रह्मप्रमुखानिति भाविनः ३३
एवं भण्डासुरो युष्मद्वीर्यमाद्याच्छ्रतोगतः । तदर्थं सर्वसंहारयापः कार्यो मया यदि ॥ ३४
अमराणामनुमतिस्त्वन्यथा नैव शक्यते । मदनुग्रहवशात्सौ हुतेष्वखिलदेहिषु ॥ ३५
आज्ञयाऽनन्तरं शक्तिर्मामकापि जनिष्यति । भण्डासुरञ्च संहृत्य युष्मांश्च जनयिष्यति ॥ ३६
यथापूर्वं क्षणेनैव सत्यमुक्तं सुरा मया । तदोमिति वचः प्रोचुः श्रुतदेवगिरस्सुराः ॥ ३७
निश्शक्तिहस्तपादास्ते नितरां विमुखाः स्त्रियाम् । इतीश्वरे विसृष्टेषु गतेषु विबुधेष्वथ ॥ ३८
क्षणमिशेव महादेवो जुहाव समिधस्सुरान् । मुनीन् पितृगणानन्यान् गन्धर्वोरगराक्षसान् ॥ ३९

मनुष्यान् पक्षिणोगांश्च जगत्स्थावरजङ्गमम् । महाप्राज्ञो प्रसन्नात्मा दीक्षितः स्वयंभुवा ॥ ४०
हुते निश्शेषमखिले स्थावरेऽपिच जङ्गमे । ससिध्याग्नौ समुत्पन्नौ शक्तिरूपैस्त्रिभिस्तदा ॥ ४१
विप्राणां पुण्यविशिखानिक्षुचापं सृणिं धनम् । प्रणनाम महादेवं शक्तिरसंप्राप्य पादयोः ॥ ४२
ध्वजिवच्च किं कार्यं शाधि मां सर्वभूतप । तामाह प्रुवतीमेवं शक्तिमान् गिरिजापतिः ॥ ४३
भण्डासुरं महाघोरं भक्षकं शुक्रमात्मनाम् । संहरतु महाशाके रक्षार्थमखिलात्मनाम् ॥ ४४
विससर्ज तदा साऽपि ससिव्ङ्करमथैककम् । विमुञ्चन्ती सञ्जहार प्राणांस्तस्य तदाज्ञया ॥ ४५
घातेनैकेन सहसा हते भण्डासुरे तदा । भनन्तरं दयासिन्धुश्शक्तिं तामादिदेश ह ॥ ४६
भण्डक्षये त्वया सृष्टे ब्रह्मविष्णुमहेश्वरान् । महालक्ष्मीमंबिकांच वाणीं देवीं सरस्वतीम् ॥ ४७
तांस्तैस्संयोज्य तत्पत्नीस्तच्छिरस्थाल्यान् क्रमात् । कारयेति शिवाज्ञां तां वदन्ती शिरसेश्वरी ॥ ४८
तथैव वीर् समुत्पाद्य तच्छक्तीरपि तादृशीः । सृष्टिरक्षालयगुणान् कारयामास तैस्त्रिभिः ॥ ४९
देवदेवं समाराध्य सत्त्वाहङ्कारयोदिताः । सृष्ट्यादि सर्वकर्माणि कुर्वन्ति सावधेव ते ॥ ५०
रुद्रमूर्तेश्च तत्राम तच्चिह्नं तस्य चेदिनम् । सदाशिवस्य यत्राय नालयोर्विद्यते भिदा ॥ ५१
सर्वेषां तामधिष्ठाय वदाशीर्ष सर्वं शिवः । भासापयति वेदान्तवल्योर्भालोकय सादरम् ॥ ५२
महमेव हरस्सोऽहं नानयोर्विद्यते भिदा । मनुष्यास्येति देवस्तानन्तर्धानं ययौ शिवः ॥ ५३
तेऽपि तत्पूजया लब्धमहाभोगास्त्रयस्सुराः । कुर्वन्ति सततं सृष्टिस्थितिनाशान् पृथक् पृथक् ॥ ५४
तदादि शिवपूजाया महिम्ना संभृतश्रियः । भुञ्जन्तो विपुलान् भोगान् ब्राह्मानपि च वैष्णवान् ॥ ५५
रौद्रांश्च पदसंभूतानीश्वराज्ञासमुद्भवान् । शैवश्च परमानन्दमयमपूर्वलपश्च ते ॥ ५६
भण्डासुरदिशायस्याश्च निहतदिशयया पुनः । प्राप्य रुद्रगणेन्द्रत्वं दुष्प्रापममरैरपि ॥ ५७
भास्तेऽद्यापि गणैस्सार्धं सन्निधौ परमेशयोः । भग्निकुण्डसमुद्भूता वेदसंघांशसंमता ॥ ५८
त्रिपुरेति समाख्याता पुष्पबाणेक्षुकार्मुका । सेयमीशं समाराध्य शिवया सह सन्तता ॥ ५९

इत्थं भण्डासुरार्थं जगदिदमखिलं ब्रह्मविष्ण्वग्रपूर्वान्
रौद्रे यागे शिवोऽयं समिध इव च तान् स्रोतसदो च हुत्वा ।
शक्त्या भण्डासुरेन्द्रं त्रिपुरवनितया घातयित्वा महत्या
विश्वं देव्या तयाऽन्यान् सकलमपि सुरान् स्रष्टयामास भूयः ॥ ६०

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे चतुस्सप्ततितमोऽध्यायः ॥

---

॥ अथ पञ्चसप्ततितमोऽध्यायः ॥

श्री केदारेश्वर प्रसादेन श्रीदुर्गया महिषासुर वधः ।

पुरा सुरा हरिब्रह्म प्रमुखा अधिपा दिशाम् । महिषेणासुरेन्द्रेण तथा श्यामासुरेण च ॥ १
चिरं विप्रलब्धास्त्यक्तस्वलोकास्समेत्य ते । केदारे देवमीशानं पूजयामासुरञ्जसा ॥ २

ततः प्रसन्नो भगवांस्तेषामाविर्बभूव ह । नमस्कृत्य तदा तस्मै प्रोवाच मधुसूदनः ॥ ३
शिरस्यञ्जलिमाधाय विनयेन समन्वितः । मम देव रजोमोहाद्ब्रह्मणश्च पुराऽभवत् ॥ ४
कलहेन महद्युद्धमभूद्रोमहर्षणम् । ब्रह्मा क्रोधान्मदुपरि ससर्ज महिषासुरम् ॥ ५
अहं व्याघ्रासुरं तस्मिन्नसृजं क्रोधमूर्च्छितः । आवाभ्यां तपस्तप्तं त्वत्प्रीतिजनकं महत् ॥ ६
तेन पुण्येन महता तौ सृष्टौ बलवत्तरौ । तौ नियुध्य चिरं कालमन्योन्याशक्यनिग्रहौ ॥ ७
व्याघ्रोऽप्यधावद्ब्रह्माणं महिषो मां महेश्वर । ततश्च विबुधान् सर्वानसुरौ च न्यवधावताम् ॥ ८
इदानीमधिकं ताभ्यां पीड्यते जगतां त्रयम् । वयं देव तयोरग्रे स्थातुमेव न शक्नुमः ॥ ९
तौ निगृह्यासुरौ दुष्टौ रक्षास्मान् दयानिधे । इति विज्ञापितो देवस्सर्वेशो मधुविद्विषा ॥ १०
सस्मितं गिरिजावदनमवलोक्य जगत्पतिः । दुर्गामुत्पाद्य सहसा स्वाज्ञया परमेश्वरः ॥ ११
सिंहं तस्यै ददौ यानमतिभीमपराक्रमम् । आयुधानि शिवान्यस्यै अष्टादश ददौ मुदा ॥ १२
अनुगृह्य च तामाशु कृपापूर्णेन चक्षुषा । आज्ञापयत्तयोरीशो निग्रहाय सुरद्रुहोः ॥ १३
साऽऽरूढा सिंहमतुलं सर्वायुधविशारदा । व्याघ्रं संहृत्य सहसा जगतामभयाय सा ॥ १४
महिषस्य शिरश्छेदं चकार विच्छिन्ने पुनः । तच्छिरः पुरतस्तस्याः पुनः पुनरदृश्यत ॥ १५
तदाक्रम्य पदैकेन शूलाग्रेण जघान च । तत्पदस्पर्शमात्रेण शान्तोऽस्य महिषासुरः ॥ १६
तामस्तुवन्महामायां महिषासुरमर्दिनीम् । प्रीताऽस्मै सा ददौ शिवं मानापत्यं सुरद्रुहे ॥ १७
सन्निधौ परमेशस्य चालक्ष्य महिषाय सा । पुनश्च सन्निधिं प्राप्य शिवयोरनुवर्तिनी ॥ १८
तावाराध्य तदा लिङ्गे तपोऽप्यकरोन्मुदा । दत्वाश्वते निरातङ्का देव दर्वी प्रणम्य च ॥
दुर्गाश्चस्य समचितादापुस्सर्वे तदास्पदम् ॥ १९

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे पञ्चसप्ततितमोऽध्यायः ॥

---

॥ अथ षट्सप्ततितमोऽध्यायः ॥

दुर्गया रक्तबीजादि वधः शिवेन काल्या सह नर्तनञ्च ॥

सूत — स्वर्गे कदाचिद्देवेन्द्रो भोगान् भुञ्जन्निवेदितान् । न दृष्ट्वा तत्रकश्यपसत्रमापुरसंशितव्रताः ॥ १
नानाप्रकारान् स सत्कृत्य महेन्द्रो मुनिसत्तमान् । अहं धन्योऽस्मि मुनयो यूयमत्र यदागताः ॥ २
आसकामो विशेषेण युष्मात्सम्प्रार्थये वरान् । देवा मनुष्याः पितरस्ते वयं सर्वदाश्रिताः ॥ ३
असुरा राक्षसाश्चैव पिशाचाश्च तपोधनाः । सदावरसनिबुसास्तदसाश्च रिपवोऽसुराः ॥ ४
अस्मद्बाधारता नित्यं यूयं तच्छान्तये स्थिताः । तस्मादिक्षमरावत्यां यूयं प्रत्येकमास्थिताः ॥ ५
अग्निं निधाय कुण्डेषु रक्षोघ्नं मखेन वै । यजध्वं प्रत्यहं देव नियमेन निरन्तरम् ॥ ६
मत्प्रीत्यर्थं मुनिश्रेष्ठास्सर्वे यूयं महत्तराः । ब्रुवन्तमेव देवेन्द्रं प्रयूचुस्सर्वे ते द्विजाः ॥ ७
वयं स्वकर्मानुष्ठानं स्वकर्त्वाश्चैव निरन्तरम् । कथं वत्स्यामहे देव मघवन्निति तेऽब्रुवन् ॥ ८
ब्रुवतस्तानितीन्द्रोऽपि प्रणिपत्य कृताञ्जलिः । मदर्थे यूयमत्रैव यजध्वं तापसत्तमाः ॥ ९
युष्माकं यानिना किं वानुष्ठानं भूत सत्तमाः । इत्यर्थितं महेन्द्रस्य शक्नुवन्तो निरासितुम् ॥ १०
चक्रुस्तथा ते विदर्शि प्रतिष्ठाप्य यथाविधि । रक्षोघ्नं यज्ञमतुलं महेन्द्रप्रीतिमिच्छया ॥ ११

तात्पर्यं प्रीतमनसो यक्षिरसन्तोपलाञ्छनाः । कुर्वन्तु यज्ञं रक्षोघ्नं तेषु सत्सु योगिषु ॥ १२
समुत्तस्थुर्महाघोरा असुरास्सप्त सत्तम । एकासुरोऽत्र प्रथमो रक्तबीजाक्षको ऽपरः ॥ १३
अन्ये तु पञ्चविख्याता पञ्चरावणसंज्ञया । एते सप्त विनिर्गत्य कुण्डेभ्यो ऋषिसत्तमान् ॥ १४
दृष्ट्वाऽऽत्मनो धावमानानन्वधावन्महासुराः । पलायतस्तान् सन्त्यज्य महर्षीन् सप्त चासुराः ॥ १५
इन्द्रलोकमनुप्राप्य चेन्द्रादीनपि धावतः । प्रसह्य वज्रिणो मूर्ध्नि लुण्ठयाञ्चक्रिरे पुरम् ॥ १६
ब्रह्मलोकमनुप्राप्य विष्णुलोकञ्च तेऽसुराः । तांस्तान् प्रहृत्य सहसाऽपजह्रुस्तत्पुराणि च ॥ १७
हिंसितुं समनुक्रान्ताः प्राणिनो निखिलानपि । ससर्पयो महेन्द्राद्या ब्रह्मा विष्णुश्च लोकपाः ॥ १८
अपूजयन् महादेवं तेषां शान्तिमभीप्सवः । ततः कैलासशिखरं संप्राप्य जगदीश्वरम् ॥ १९
व्यजिज्ञपन् संप्रणम्य चेष्टितं तं निशाटिनाम् । तानाह च महादेवः स्वयमेव दयानिधिः ॥ २०
इन्द्रः स्वात्मोपभोगार्थं महर्षीनुपाहृतान् । यज्ञात्कोप रक्षोघ्नं यज्ञं कर्तुं न्ययुङ्क्त हि ॥ २१
विपरीतस्तस्यैव फलस्तुष्यस्तमपद्यत । उपद्रुताय महेन्द्रविष्ण्वादीनामजायत ॥ २२
इति श्रुत्वा महादेवो जहास करुणानिधिः । ततो देवीसमीपस्था दुर्गादिव्यसुरार्दिनी ॥ २३
तामाह महिषस्याप्रघातिनीं जगतां पिता । अयि रक्तासुरं दुर्गे रक्तबीजाक्षमेव च ॥ २४
पञ्चापि रावणान् कृत्वा जहि शीघ्रं मदाज्ञया । इति कुण्डोदरश्चापि पञ्चरावणनिग्रहे ॥ २५
न्ययुङ्क्त तौ विनिर्गत्य दुर्गाकुण्डोदरावुभौ । अयातः समरे रक्तं रक्तबीजाक्षसंयिका ॥ २६
कालीमुत्पाद्य तज्जिह्वामयराङ्कुमास्थिता । एकासुरञ्च संहृत्य रक्तबीजाक्षमेव च ॥ २७
तयो रुधिरसंसिक्तां सद्योऽपि महत्तराः । समुत्तिष्ठेयुरेतस्मात्कारणात्कालिजिह्वया ॥ २८
रक्तानि संहृतान्येवमसुरौ संहृतौ तथा । ततः काली च तद्रक्तपानादेव मदाकुला ॥ २९
सर्वसंहरणे यत्ता चुक्रुशुः प्राणिनोऽखिलाः । ततः प्राण्युपकाराय तद्दर्पशमनाय च ॥ ३०
तथा ननर्त देवेशस्तद्द्रुतमिवाभवत् । निर्जिता ताण्डवे काली देवेन विगतत्रपा ॥ ३१
निर्जिता दुर्गया साकमाश्रिता सर्वमङ्गला । कुण्डोदरोऽपि पञ्चापि रावणान्महतोऽसुरान् ॥ ३२
निर्जित्य भक्षयित्वा तान् सांबमीशं समाश्रितः । ब्रह्मा च विष्णुर्देवेन्द्रस्तथापि स्वपदस्थिराः ॥ ३३
देवदेवाज्ञया प्राप्य स्वं लोकं मोदमापुयन् । एवमेवासुराक्रान्तास्त्रिदशास्ते यदा यदा ॥ ३४
तदा तदेशमाराध्य संभूय सुखिनोऽभवन् । पृथक् पृथक्समाराध्य यद्भक्तिः पुरोदिता ॥ ३५
संभूय देवमाराध्य सिद्धिः प्रोक्ता मयाऽधुना । इतीदं सर्वमाख्यातं पूजामाहात्म्यमुत्तमम् ॥ ३६
इदं शृणुयुर्लिखं श्रावयन्ति पठन्ति च । विलिख्य पुस्तके नित्यमर्चयन्ति च सादरम् ॥ ३७
तेऽभीष्टमैहिकं सर्वमासाद्य विगतापदः । पुत्रपौत्रस्नुषाभ्रातृपितृमातृसुहृद्गणैः ॥ ३८
आमाद्युद्धिताः पुत्रबन्धुवर्गैश्च सन्ततम् । दृष्ट्वा इष्टानि सर्वाणि चाचरिष्या मुदान्विताः ॥
तथैवाचरणीयानि चान्ते निर्वृतिमाप्नुयुः ॥ ३९
सफलमेतदिदं परमेशितुश्चरणपङ्कजयोः परिचर्यया ।
हरिपितामहयज्ञिपदाप्तयो मुनिवराः प्रभवन्ति समृद्धयः ॥ ४०

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे षट्सप्ततितमोऽध्यायः ॥

---

॥ अथ सप्तसप्ततितमोऽध्यायः ॥

व्यासस्यापि शिवोत्कर्षपरिज्ञानं व्यासस्य विष्ण्वादिभिः शिवमहिम प्रबोधनम् ॥

पुरा ब्रह्मात्मजाः पुण्यास्सनकश्च सनन्दनः । सनातनश्च भगवान् सनत्पूर्वकुमारकः ॥ १
चत्वारो ऋषयश्शंभोः पूजां पुण्यां विधाय ते । प्रसादेन ततो वेदान् शिवेनाध्यापिताः खलु ॥ २
आगमांश्च पुराणानि सेतिहासानि सुव्रताः । शिवार्चनपरा नित्यं शिवयोगेन पावनाः ॥ ३
शिवज्ञानाग्निना दग्धमहापातकसञ्चयाः । जीवन्मुक्ता बभूवुस्ते परमानन्दनिर्भराः ॥ ४
व्यासः पुरा महादेवं विश्वरक्षाकरं परम् । पूजयित्वा ततो वेदान् पुराणानि मुनीश्वराः (चतुर्दश) ॥ ५
ज्ञात्वा सत्वरजादैनान् शिष्याणां च तपस्विनाम् । परतत्त्वं महादेवं ज्ञातवांस्तत्त्वतो बुधः ॥ ६
ऐश्वर्यमदमोहेन विद्यागर्वेण मायया । ईश्वरस्य तदा शिष्यानृषीनपि च वीक्ष्य सः ॥ ७
नारायणं परं तत्त्वं परं ब्रह्म सनातनम् । अनाद्याविद्यया शंभोर्मोहितः परमेशितुः ॥ ८
तदोक्तुस्तापसास्सर्वे शिष्यास्तस्य विचारिताः । इयन्तं कालमीशानं परं ब्रह्म सनातनम् ॥ ९
वदतामपि विप्रेन्द्र तद्विरुद्धमिहोच्यते । वेदान्तानां पुराणानां विरुद्धार्थं ब्रवीषि किम् ॥ १०
इति पृष्टोऽपि तैर्व्यासः पुनः प्राह द्विजानिमान् । विष्णुरेव परं ब्रह्म नान्यः कश्चन विद्यते ॥ ११
तूष्णीमुक्तं मया पूर्वं यत्किञ्चित्तत्तदा द्विजाः । तदिदानीं परं ब्रह्म ज्ञातुमर्हथ माधवम् ॥ १२
इति तस्य वचः श्रुत्वा विरुद्धार्थं द्विजोत्तमाः । संशयाविष्टमनसः पुनः प्रोचुस्तपोधनम् ॥ १३
वेदैः पुराणैर्विश्वेशो वेद्य एको महेश्वरः । इत्युक्तं भवता पूर्वममोहेनैव भूरिशः ॥ १४
तद्विरुद्धं वदस्यद्य मोहितो माययेशितुः । न प्रमाणमिदं तस्माद्वचनं तव सत्यतः ॥ १५
इति तेषां वचः श्रुण्वन् पुनर्व्यासस्तपोधनः । सत्यं ब्रवीमि विप्रेन्द्रा युष्माकं सन्निधावहम् ॥ १६
विष्णुरेव परं तत्त्वं परं ब्रह्म सनातनम् । ततस्ते ऋषयश्शिष्याः शृण्वन्तोऽस्य गिरं तदा ॥ १७
यदि सत्यं ब्रवीष्यद्य तर्हि काशीं परां पुरीम् । गत्वाऽत्र सत्यतो ब्रूहि भुजमुद्धृत्य तापस ॥ १८
तदा प्रमाणं वचनं भवेत्तव न संशयः । इति तेषां वचः श्रुत्वा तथेत्युक्त्वा स तापसः ॥ १९
काशीं प्राप्य महापापप्रशोधनपटीयसीम् । तत्र विश्वेशसविधे भुजमुद्धृत्य निर्भयः ॥ २०
नारायणः परंब्रह्म परमात्मा परात्परः । परं तत्त्वं परञ्ज्योतिरित्युद्धृत्य भुजमुद्यते ॥ २१
सत्यं सत्यं पुनस्सत्यं सत्यमत्रोच्यतेऽधुना । इति ब्रुवति मोहेन व्यासे तस्मिन्द्विजाग्रके ॥ २२
स्तम्भौ भुजौ तदा व्योम्नि न च जिह्वा चचाल ह । केवलं दारुवत्तस्थे निश्चेष्टस्स च तापसः ॥ २३
तद्दृष्ट्वा ऋषयस्सर्वे तच्छिष्याश्च भयान्विताः । अहो मोहस्य माहात्म्यं यदयं वदतां वरः ॥ २४
व्यस्तवान् सकलान् वेदान् पुराणानि च सर्वदा । तथाऽपि विपरीतार्थं वदत्यत्र भयं विना ॥ २५
तदस्य स्तंभितौ बाहू वाग्बन्धोऽपि बभूव ह । असत्यवादी व्यासोऽपि शिवमायाविमोहितः ॥ २६
तदस्य शिक्षा देवेन कृता खलु दुरत्यया । इति सर्वेऽपि तच्छिष्या ऋषयो भयकंपिताः ॥ २७
चक्रुः स्तोत्रं महेशस्य बद्धाञ्जलिकराः पुनः । तत्राविरासीद्भगवांस्तत्रैव मधुसूदनः ॥ २८
व्यासं स्तब्धकरं वीक्ष्य विस्मयाकुलितान्तरः । अहो तव मतिः कुत्र गता व्यासाधुना ऋषे ॥ २९
शिवं विश्वाधिकं शान्तं सच्चिदानन्दरूपिणम् । योगिध्येयमुमाकान्तं मम भर्तारमव्ययम् ॥ ३०
सर्ववेदान्तसर्वस्वं सर्वाधिकमनुत्तमम् । मुक्त्वा मां मायया तस्य प्रोक्तवानधिकं यत ॥ ३१
ततो न तव मार्गं हि द्रोहः किन्तु ममापि हि । सत्यं सत्यं पुनस्सत्यमुद्धृत्य भुजमुच्यते ॥ ३२

शिव एव परं तत्त्वं विश्वस्मादधिकः परः । अहं सर्वजगत्कर्ता मम कर्ता महेश्वर ॥ ३३
तस्य देवादिदेवस्य कर्ता कोऽपि न विद्यते । स एव सकलानीशश्शास्ति सर्वेश्वरेश्वर ॥ ३४
तत्प्रसादाद्विनिर्मोक्षस्सर्वेषां सम्भवेद्ध्रुवम् । इत्युक्त्वा ऋषिभिस्साकं तुष्टाव परमेश्वरम् ॥ ३५
जय शम्भो महादेव सच्चिदानन्दविग्रह । नमस्तेऽस्तु महादेव परात्परतराय च ॥ ३६
विश्वाधिकाय महते नमो महेश्वराय ते । नमस्ते सर्वकर्त्रेऽस्तु पुनर्भूयो नमोनम. ॥ ३७
एवं स्तुवति देवेशं हरौ साकमृषीश्वरैः । गतमोहस्तदा व्यासो भयाकुलितमानस ॥ ३८
विश्वाधिको महादेव परतस्त्र परात्पर. । सर्वेषामपि लोकानां शास्ता सद्गुणमावृत. ॥ ३९
तदाज्ञया जगत्सर्वं सृजते पूर्ववद्विधि । नारायणोऽपि भगवानाज्ञया पालयत्यत ॥ ४०
यस्य पूजाप्रभावेन ब्रह्मा ब्रह्मत्वमाप्तवान् । विष्णुश्च स्वपदं प्राप पूजया यस्य शूलिन ॥ ४१
नमस्तस्मै महेशाय मायातीताय शम्भवे । इति तुष्टाव देवेशं व्यासश्शम्भुं तपोधन ॥ ४२
यदा प्रादुरभूत्तस्य लावण्यमय ईश्वर. । तदार्भां वीक्ष्य स नन्दी व्यास बाहुपल्लभ ॥ ४३
त्वया कृत महामोहात् परब्रह्मणि शङ्करे । नीलग्रीवे विरूपाक्षे सच्चिदानन्दविग्रहे ॥ ४४
विश्वाधिके विश्वरूपे महाग्रासे महात्मनि । त्रिपुरघ्ने ब्रह्मविष्ण्वादिदेवैरतिमियन्त्रिते ॥ ४५
पूर्वैव मम दुर्बुद्धे विष्णुरेवेति भाषता । स्थापितौ यतो बाहू निश्चलौ त्वया तत. ॥ ४६
पश्य शम्भु विरूपाक्ष प्रसन्न तव चाग्रत. । अनेकब्रह्मविष्ण्वादिकपालालङ्कृताकृतिम् ॥ ४७
अप्रतर्क्यमनिर्देश्यमनन्तमहिमास्पदम् । दृष्ट्वा व्यासस्तदीय साध्वसोत्पुष्पत्ताम्यमराज् ॥ ४८
प्रणम्य दण्डवद्भूमौ समुत्थाय कृताञ्जलि. । सम्भ्रमतो मेऽपराधोऽभवद्भयामेन विजृम्भित ॥ ४९
महादेव महादेव महादेव दयानिधे । भवानेव भवानेव भवानेव गतिर्मम ॥ ५०
एवं स्तुवति देवेशं व्यासे तस्मिन् कृताञ्जलौ । सर्वेशस्तद्धास्तसुमुखसर्वेश गणनायके ॥ ५१
ततो दृष्ट्वा महादेवं विष्णुस्सर्वेऽपि तापसा । व्यासदितिघ्याश्च ते सर्वे दुर्दैवप्रकितावच ॥ ५२
व्यासं तं वीक्ष्य स्मिता सकौशितविग्रहम् । [illegible] वर न कर्तव्यमीदृगाकार्यं त्वयाऽनघ ॥ ५३
शिवमेवापरं तत्त्व बुद्धि विना भवम् । इत्युक्त्वाऽन्तर्दधे विष्णुर्बुद्धिं व्यासाय सुव्रत ॥ ५४
व्यासश्च तपस्सर्वे सम्प्राप्यामताविदे । विचिन्त्य मनसा पश्चाच्छिवदर्शी स च तापस. ॥ ५५
काशीं प्राप सन्निवेश्य कलिदोषविवर्जिताम् । तत्र सम्पूज्य विधिना प्रतिष्ठाप्य महेश्वरम् ॥ ५६
गुरुस्थाऽशेषश्च दुरित मोह शम्भो कृपाबलात् । निर्मल प्राप सन्तोष शिवज्ञानसमन्वित. ॥ ५७

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे सप्तसप्ततितमोऽध्याय ॥

---

॥ अथ अष्टसप्ततितमोऽध्याय ॥
उपमन्युप्रणीता श्रीतातिधिराजानुग्रह ॥

पुरा वसिष्ठ पुत्रार्था पूजयित्वा पुरन्दरम् । प्रसन्नात्प्राप्य धात्रीं च कामधेनुप्रदायिनीम् ॥ १
सर्वविद्यापरिज्ञान प्राप्यानन्यसमस्सुधी. । सर्वेष्वपि धेनुस्त्व प्राप्तवान् पूजया प्रभो ॥ २
पराशरश्शक्तिसुतो वसिष्ठस्य च पौत्रक । शिवपूजारतो नित्यं दिने कस्मिन् समागतम् ॥ ३

विधवां वीक्ष्य दुःखेन पप्रच्छ पितरं तदा । मातः पिता मम गतः क्वेति रहसि स्वयम् ॥ ४
तस्य तद्वचनं श्रुत्वा तन्माता दुःखितान्तरा । निहतस्ते पिता पुत्र राक्षसेन दुरात्मना ॥ ५
तत एव हि संप्राप्तं वैधव्यमधुना मम । अत्र निष्कृतिः कार्या त्वया यत्नेन पुत्रक ॥ ६
इति तस्या वचः श्रुत्वा दुःखाकुलितमानसः । राक्षसं हन्तुकामोऽयं शिवपूजाञ्चकार हि ॥ ७
ततः प्रसन्नो भगवान् पूजया तुष्टमानसः । तस्मै वरांश्च दत्वाऽशु तत्रैवान्तर्दधे प्रभुः ॥ ८
ततो ददर्श पितरं मृतमभ्यस्य धारया । चकार च ततो यागं विनाशाय च रक्षसाम् ॥ ९
ततश्शिवाज्ञया पेतुः वह्निकुण्डेऽत्र राक्षसाः । प्रभुः केवल दग्धाश्च शिवमन्त्रप्रभावतः ॥ १०
दृष्ट्वैतत्तापसास्सर्वे वसिष्ठश्च महामतिः । शक्तिं संप्रीणयामासुस्तत्कोपप्रशमाय वै ॥ ११
मुक्त्वा कोपं ततश्शक्तिर्वेदांश्चैवागमानपि । पुराणानि च सर्वाणि लब्ध्वाऽयं तत्त्वतो द्विजाः ॥ १२
याज्ञश्च कल्पयित्वाऽयं किञ्चित्सन्तोषसंयुतः । निलयं प्राप कृपया शंभोस्सोऽयं महीसुराः ॥ १३
पूजयित्वा पुरा शम्भुं विश्वामित्रोऽपि तापसः । सृष्टिञ्चकार प्रतिमांस्त्रिशङ्कुञ्च ररक्ष हि ॥ १४
लब्ध्वा वरान् महादेवात्सप्तर्षिष्वेकतामगात् । व्याघ्रपादोऽपि पुण्यात्मा महर्षिरयमीश्वरम् ॥ १५
पूजयित्वा पुरारातिं तत्प्रसादादद्भुतं परम् । लब्धवान् देवदेवस्य ददर्श नटनं महत् ॥ १६
नित्यत्वं प्राप देवेशकृपया स मुनीश्वरः । व्याघ्रपादात्मजः पूर्वमुपमन्युर्महामतिः ॥ १७
क्षीरं ययाचे बाल्येऽसौ मातरं स्वगृहे स्थिताम् । सा ददौ कृत्रिमं क्षीरं पिष्टमिश्रजलेन वै ॥ १८
तत्पीत्वा विरसत्वाच्च रुरोद भृशदुःखितः । नेदं क्षीरं जलं मातरित्युक्त्वा याचयन्मुहुः ॥ १९
ततस्सा दुःखदुःखेन रुदन्तं वीक्ष्य चात्मजम् । नास्ति पुत्र गृहेऽस्माकं क्षीरं स्वादु मनोहरम् ॥ २०
वसिष्ठस्तव पुण्यात्मा मातुलश्शङ्करप्रियः । शिवपूजारतो नित्यं वेदवेदान्तपारगः ॥ २१
लब्धवान् पूजया शंभोः कामधेनुं पयस्विनीम् । पीत्वा त्वं तद्गृहे क्षीरं कामधेनुसमुद्भवम् ॥ २२
वाञ्छस्यत्रापि बालत्वात्क्षीरं व्यर्थतयाऽऽत्मज । अप्रसन्ने विरूपाक्षे कुतः क्षीरेण भोजनम् ॥ २३
विशेषेण दरिद्रस्य तव क्षीरं कुतो भवेत् । अत्र पूजा कर्तव्या त्वया क्षीरार्थिनाऽऽत्मज ॥ २४
विश्वाधिकस्य सततं योगिध्येयस्य शूलिनः । पूजया लभ्यते सर्वं वाञ्छितं मनुजैः प्रभोः ॥ २५
इति मातुर्वचश्श्रुत्वा तथेति मुनिपोतकः । किञ्चिद्धृदयं मत्वा रहःस्थानं सुशोभनम् ॥ २६
भूतिभूषितसर्वाङ्गो रुद्राक्षवरभूषणः । ध्यायन्नेकमनाश्शंभुं कृतनिश्चितमानसः ॥ २७
पूजयामास देवेशं पुराणं पुरुषं प्रभुम् । ततः प्रसन्नो भगवांस्तस्मै मघवदाकृतिः ॥ २८
तं दृष्ट्वा मघवन्तं स कोपाकुलितमानसः । त्वं गच्छ पुरतो मेऽद्य यत्र कुत्रापि वृत्रहन् ॥ २९
न सर्यते भवानद्य मया पूजारतेन वै । पूजाविघ्नं यदि भवेन्महादेवस्य शूलिनः ॥ ३०
शापेऽहं त्वामिति तदा चुकोप शपितुं सुरम् । तस्य तद्वीक्ष्य चित्तस्य स्थैर्यं शक्तिमपीश्वरः ॥ ३१
प्रादुरासीत्क्षणेनैव वृषोपरि सहोमया । तं दृष्ट्वा सांबमीशानं प्रणम्य भुवि दण्डवत् ॥ ३२
उत्थाय सहसा भक्त्या ननर्तानन्दनिर्भरः । मान्योऽस्म्यनुगृहीतोऽस्मि चाहमद्य महेश्वर ॥ ३३
त्वद्दर्शनेन देवेश काङ्क्षितं फलितं मम । इति तस्य वचः श्रुत्वा महेशस्तापसप्रियः ॥ ३४
क्षीरार्थिने ददौ तस्मै क्षीरसागरमीश्वरः । सर्ववेदान्तविज्ञानं पुराणानां तथैव च ॥ ३५
शास्त्राणामपि सर्वेषां तव तत्वं स्फुरत्वलम् । अविनश्वरता भूयाच्च तापसपुत्रक ॥ ३६
इति दत्वा वरानम्बानीश्वरोऽन्तरधात्क्षणात् । लब्ध्वा वरं तथा शंभोरुपमन्युश्शिवप्रियः ॥ ३७

पूजयित्वा महादेवं गौतमोऽपि महामुनिः । शिवव्रतानि सर्वाणि चरच्छङ्करवल्लभः ॥ ३८
सर्वविद्यापरिज्ञानं सम्यक्प्राप्य प्रभोर्वशी । नित्यत्वं प्राप्य परया प्रीत्या तस्थे शिवप्रियः ॥ ३९
सदा (शता) नन्दोऽपि योगीन्द्रस्सच्चिदानन्दविग्रहम् । संपूज्य परया भक्त्या साक्षात्सांबं महेश्वरम् ॥ ४०
सञ्चरन् सर्वलोकेषु भुवनेष्वपि सन्ततम् । तत्र तत्रच वृत्तान्तं सम्यग्ज्ञात्वा तपोधनः ॥ ४१
शंभवेऽनुदिनं सर्वं विज्ञाप्य (समर्थ्य) परया मुदा । कैलासवासिने कृत्वा प्रणामञ्च यथाविधि ॥ ४२
परमानन्दकल्लोलपारावारो बभूव सः । मृकण्डुरपि संपूज्य महादेवं महामुनिः ॥ ४३
सर्वविद्यासु निपुणं मार्कण्डेयमवाप्तवान् । प्रसिद्धिं तेन नितरां संपाद्य भुवनेष्वपि ॥ ४४
सत्यलोके निवसति सदा परमया मुदा । मृकण्डोश्च सुतो श्रीमान्मार्कण्डेयो महामुनिः ॥ ४५
मृकण्डुनायं देवेशाद्यदा लब्धो महातपाः । तदा षोडशवर्षोऽस्य कल्पितश्शंभुना मुनिः ॥ ४६
तस्य षोडशवर्षाणि व्यतीयुस्तु पूर्वशः । दिनद्वयावशिष्टानि मार्कण्डेयस्य भूसुराः ॥ ४७
पितरौ मृत्युमालोक्य तदा रुरुदतुर्भृशम् । श्रुत्वा तयोश्च वचनं सनिमित्तं मृकण्डुजः ॥ ४८
मृत्युञ्जयं विरूपाक्षं धावहीरे पिनाकिनम् । पूजयामास पुण्यात्मा तदैकाग्रमना भृशम् ॥ ४९
तदासीदन्तकश्शीघ्रं तत्रागत्य मृकण्डुजम् । आमुदाय शिवैर्वाक्यैर्विलोकाय भूसुराः ॥ ५०
शिवपूजारतस्यास्य ब्राह्मणस्य यमं यदा । तदा तं च महाक्रोधाद्दीपयन् भीषणाकृतिः ॥ ५१
आश्लिष्य भीत्या देवेशं लिङ्गरूपस्थितं मुनिः । आचकर्षेव पाशेन बध्वा वैवस्वतो यदा ॥ ५२
तदाविरासीद्भगवोल्लसल्लिङ्गान्महेश्वरः । ददर्श च महादेवं कालकालं पिनाकिनम् ॥ ५३
नीलकण्ठं विरूपाक्षं जटामकुटमण्डितम् । तुष्टाव परया प्रीत्या मार्कण्डेयो महामुनिः ॥ ५४
नमस्ते कालकालाय विरूपाक्षाय शूलिने । विश्वाधिकाय विश्वाय परात्परतराय ते ॥ ५५
कपर्दिने कराळाय काळीनृत्तप्रियाय ते । उग्राय सर्वभक्षाय भीमाय महते नमः ॥ ५६
शिपिविष्टे नमस्तुभ्य क्षपद्वीराय ते नमः । इति स्तुतिं महादेवश्श्रुत्वा तस्य महात्मनः ॥ ५७
प्रसन्नः प्राह विश्वात्मा मार्कण्डेयं महामुनिम् । पूजया ते प्रसन्नोऽहं मार्कण्डेय महामुने ॥ ५८
भूयास्तु तव वर्षाणि षोडशैव सदा मुने । कांक्षितान्यपि सर्वाणि तव सिध्यन्ति माचिरम् ॥ ५९
इति दत्वा वरं तस्मै तत्रैवान्तरधात्प्रभुः । सोऽपि संप्राप्य नित्यत्वं मार्कण्डेयो महामुनिः ॥ ६०
स्वगृहं प्राप्य परया प्रीत्या पित्रोस्तदाऽवसत् । अनन्यसदृशो लोके शिवशास्त्रविशारदः ॥
शिवागमार्थविज्ञानसंपन्नोऽद्यापि वर्तते । ६१

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे अष्टसप्ततितमोऽध्यायः ॥

---

॥ अथ एकोनाशीतितमोऽध्यायः ॥

क्षुपराजप्रति दधीचिमहर्षिणा शिवोत्कर्षप्रदर्शनम् ॥

अगस्त्यः पूजया शम्भोस्तापसानामधीश्वरः । जहार दर्पं विन्ध्यस्य महाद्रेस्तापसेश्वरः ॥ १
प्राशयामास अंभोधिं महोर्मिसमाकुलम् । तथा चेल्वलवातापी दुरात्मानावशिक्षयत् ॥ २
द्राविडाख्यां तथा भाषां निर्ममे कृपया प्रभोः । सर्वशास्त्रपरिज्ञानं सम्यक्प्राप तपोधनः ॥ ३
ताण्डवं देवदेवस्य ददर्श परमं द्विजाः । ददर्श शंभोः कल्याणं पार्वत्या सह पावनम् ॥ ४

सर्वलोकाभिगमनं स्वेच्छया प्राप क्षुपकम् । शिवयोगं तदा स्कन्दादुपदेशमवाप्तवान् ॥ ५
सर्वलोकसुपूज्यत्वं ब्रह्मण्यातिमवाप्तवान् । दधीचिरपि पुण्यात्मा क्षुपेन सह भूभुजा ॥ ६
तेन सख्यमवापायं ब्राह्मण एव तपोधनः । कदाचिदेतौ कलहञ्चक्रतुर्विप्रभूभुजौ ॥ ७
राजा राजबलं श्रेष्ठमाह विप्रः स्वकं बलम् । एवं बहुप्रकारेण भासे वादे तयोर्द्विजाः ॥ ८
ताडयामास राजानमधिक्षिप्यादिनं क्रुधा । तदानीं स महीपालो वज्रमादाय भीषणम् ॥ ९
जघान विप्रं कोपेन दुष्टात्मा दुष्टचेतनः । तदा तत्याज स प्राणान्वज्रघातेन तापसः ॥ १०
हाहाकारो महानासीत्तत्रस्थानां भयावहः । तदा समागतः शीघ्रं शुक्रस्तस्य पितामहः ॥ ११
तच्छरीरं द्विधाभूतमेकीकृत्य [illegible] भार्गवः । जीवयामास मतिमान्विद्यया स्वस्य भूसुराः ॥ १२
तं वीक्ष्य जीवितं शुक्रः पौत्रं प्राह हितं वचः । अद्यप्रभृति पूजाथ त्वया कार्या महेशितुः ॥ [illegible]
पूजया देवदेवस्य तव सर्वं भविष्यति । पूजा पुण्यप्रदा पुंसां पूजा मोक्षप्रदा प्रभोः ॥ १४
पूजया स्वपदं प्राप ब्रह्मा विष्णुश्च वैष्णवम् । इन्द्रो यमस्तथेशानः कुबेराद्यास्सुरेश्वराः ॥ १५
तदर्चय महेशानं मृत्युञ्जयमुमासखम् । उपसर्गाः क्षयं यान्ति शत्रवो व्याधयो ग्रहाः ॥ १६
मनः प्रसन्नतां याति पूज्यमाने महेश्वरे । इत्युक्त्वा भार्गवस्तस्मा उपदिश्य बहून्मनून् ॥ १७
निर्ययौ स्वेच्छया शीघ्रं ब्राह्मणानामधीश्वरः । ततो दधीचिः पुण्यात्मा पूजयञ्छङ्करं शिवम् ॥ १८
वज्रास्थित्वमवध्यत्वमोऽदार्यमभयन्तथा । प्रसन्नाद्देवदेवेशादवाप मुनिपुङ्गवः ॥ १९
पुनस्त्वागत्य तरसा क्षुपस्यान्तिकमेत्य सः । ताडयामास पादेन क्षुपं तं दुष्टचेतनम् ॥ २०
तदा कोपाकुलो राजा वज्रमादाय भीषणम् । वक्षोमध्ये जघानास्य दधीचेश्च महाबलः ॥ २१
धूलीबभूव तद्वज्रं तत्रैव पतनाद् द्विजाः । विहस्य तं क्षुपं प्राह दधीचिस्तु महातपाः ॥ २२
न बिभेमि महीपाल तव वज्रायुधादपि । गणयामि न चेशानं त्वत्कर्तारमच्युतम् ॥ २३
दधीचेर्वचनं श्रुत्वा पुनः कोपाकुलो भृशम् । विष्णुमुद्दिश्य सुमहत्तपश्चक्रे दुरासदम् ॥ २४
तस्य चैवन्तपस्तीव्रं प्रादुरासीद्धरिस्स्वयम् । तं प्रणम्याशु वृत्तान्तं तस्मै प्रोवाच भूमिपः ॥ २५
तच्छ्रुत्वा स हरिस्तेन दधीचेराश्रमं ययौ । तत्र दृष्ट्वा ऋषिवरं संप्रणम्य परया मुदा ॥ २६
महर्षे तापसश्रेष्ठ याचे वरमनुत्तमम् । एवं शृणुम यो दोषस्तत्रापैत ममास्तु सः ॥ २७
इत्युक्तिं माधवस्यायं नाङ्गीचक्रे यदा तदा । हरिः कोपाकुलस्तस्मिंश्चक्रं तत्याज भीषणम् ॥ २८
तस्मिन्निपाततश्चक्रं क्षणात्कुण्ठी बभूव ह । तस्मिन्मायी हरिश्चक्रे सोऽपि मायामनेकधा ॥ २९
दूरीचकार तां सर्वां मायया स्वस्य भूसुराः । पुनश्च मायामेतस्मिन् क्रोधोऽपि चक्रे ऋषीश्वरे ॥ ३०
पुनर्दर्भं समादाय तस्मिंश्च प्रैषयद् ऋषिः । तत्क्षणान्मारयामास सेनास्तस्य मधुद्विषः ॥ ३१
एकाकी स स्वयं तस्थे तदानीं हरिरप्यहो । तदा समाययौ तत्र ब्रह्मा ब्रह्मविदां वरः ॥ ३२
दधीचिं तपसां श्रेष्ठं तुष्टाव परया मुदा । दधीचिरपि कोपेन विष्णुं वीक्ष्य पुरःस्थितम् ॥ ३३
छित्त्वा तव शिरो विष्णो वीरभद्रो महाबलः । भक्तास्तव महामीर्ष्याः परमेश्वरदूषकाः ॥ [illegible]
पतन्तु निरये घोरे पाञ्चरात्रावलंबिनः । शप्त्वैवं मुनौ विष्णुं ब्रह्मा प्रोवाच मायुमान् ॥ ३५
भक्तैश्शिवस्य कलहः पतिष्यत्यात्मनोपरि । विजयश्च न ते भूयादपराधी परं हरे ॥ ३६
तस्माद्गच्छेति सहसा परमेष्ठी जनार्दनम् । प्रणम्य व्यावर्त्य ब्रह्मा सान्त्वयित्वा जगाम ह ॥ ३७
गतवत्यब्जजे लोकं स्वं नारायणके तदा । क्षुपस्तदा तदालोक्य दधीचस्याथ विस्मितः ॥ ३८
तमेव शरणं प्राप क्षमस्वेति पुनः पुनः । सखा त्वं ब्राह्मणश्रेष्ठ पूर्ववद्य पिता मम ॥ ३९

माता च महितो भ्राता त्वं सर्वमसि भो द्विज । अपराधं क्षमस्वेति याचमानमुवाच सः ॥ ५०
क्षान्तं मयाऽधुना राजन् क्षमासारा हि साधवः । कोपस्य मादृशानां हि प्रणिपातः प्रतिक्रिया ॥ ५१
ब्राह्मणा बलिनो राजन्यदस्मात्कं कुलप्रभुः । महाब्राह्मण ईशानो विष्णुः क्षत्राधिपः स्मृतः ॥ ५२
विप्राणामधिपतिर्ब्रह्मा तस्मात् त्रीन् ब्राह्मणादयः । यजन्ते यद्यतिक्रम्य पापिनः पतिताश्च ते ॥ ५३
आराधय हरिं तस्मात्त्वं ब्रह्मवत्सलः । ब्रह्मतेजोबलं राजक्षात्रं वैश्यधर्मभवम् ॥ ५४
सर्वेषामधिको यस्माद्गुणवान् ब्राह्मणद्विजः । स यस्य देवता सोऽपि ब्राह्मणो महतो महान् ॥ ५५
तस्माद्दिवे दिवे कुर्याद्ब्राह्मणेभ्यो नमस्सदा । न कीर्तयेत्सदा तेषामश्लीलं यदि बुद्धिमान् ॥ ५६
ध्यायेन पृथिवीं शाधि सुखं त्वं राजसत्तम । अनुज्ञाप्य दधीचिस्तमित्येवं पृथिवीपतिम् ॥ ५७
पुनश्च शिवपूजायां निरतो निलयं गतः । ध्यायन्नेव महादेवं निनायानेहसां शतम् ॥ ५८

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे एकोनाशीतितमोऽध्यायः ॥

---

॥ अथ अशीतितमोऽध्यायः ॥

बाणासुरस्य पूर्वजन्म कथनम् ॥

सुदर्शनः पुरा विप्रशिवपूजाबलेन वै । आतिथ्येनाजयन्मृत्युं नित्यत्वमपि लब्धवान् ॥ १
कैलासे चान्यलोकेषु कामचारोऽस्य वै मुनेः । भृगुश्चापि ऋषिः पूर्वं दुर्वासाः कण्व एव च ॥ २
आपस्तम्बो जैमिनिश्च सौभरिस्तापसां वरः । तृणबिन्दुर्वामदेवो ऋषभो योगिसत्तमः ॥ ३
शुकोऽत्रिश्च पुलस्त्यश्च बहवोऽन्येऽपि तापसाः । समाराध्य महादेवं लिङ्गमूर्तिं सनातनम् ॥ ४
भक्त्या परमया युक्ता मृत्युं निर्जित्य कालजम् । नित्यत्वमपि संप्राप्य बभूवुः कामचारिणः ॥ ५
तत्र तत्र च लोकेषु सत्कृताश्च तदीश्वरैः । भुञ्जानास्तैर्महाभोगानमृतत्वञ्च लेभिरे ॥ ६
तेष्वप्येवाक्षतास्ते ते सुरासुरनमस्कृताः । विहरन्ति यथाकामं विरिञ्च्यादिपदेषु ते ॥ ७
मनुष्येष्वप्येके हि महादेवार्चनापराः । संप्राप्य महदैश्वर्यं सिद्धीरपि च सर्वशः ॥ ८
अवाप्ताखिलकामास्ते कामचारा जगत्त्रये । अनन्तरञ्च ते मुक्तिमापुरमितौजसः ॥ ९
पिपीलिकादिहस्त्यन्तजीवेष्वपि बहवश्च ये । तिर्यक्ष्वपि शिवं सांबमभ्यर्च्य पशवो भुवि ॥ १०
महतीं प्रापिरे पूर्वमिति सर्वत्र विश्रुतम् । तस्माद्विवेकिनामेतत्कर्तव्यं पृथिवीभुजाम् । ११
ब्राह्मणानां विशेषेण क्षत्रियाणां विशेषतः । सूतः — इतीदं सर्वमाख्यातं भक्त्या सम्पूज्य शङ्करम् ॥ १२
संप्राप्तसिद्धयो ये वै मया ते वर्णिता द्विजाः । अबुद्धिपूर्वमभ्यर्च्य शिवं त्रिदशनायकम् ॥ १३
पैरातं - फलमेतेषु पर्यन्ते केचनाधुना । देशोऽस्ति मागधे विप्रा मागधाख्यं पुरं महत् ॥ १४
तत्र चक्राङ्कितो नाम ब्राह्मणो विषयोन्मुखः । तस्याभूत्तरुणस्त्वस्य तनयो विनयोज्झितः ॥ १५
स तु वेश्यापरो नित्यं ब्रह्मबन्धुरहर्निशम् । मद्यविक्रयिणीसक्तः कदाचिदपमुत्स्ययः ॥ १६
तया सह दिवारात्रं रेमे मधुपश्च (धूर्त) वा । कदाचित्स तया सार्धं रात्रौ शृङ्गारकानने ॥ १७
अवचित्य सुपुष्पाणि दधौ मूर्ध्नि तया सह । इत्येवं सत्यहं मूर्खश्चौर्येण सुमनो हरन् ॥ १८
उद्यानपालकैर्दृष्टः प्रहृतश्च तदा च तैः । अतःपरं नागमिष्य इति चोक्त्वा निरासितः ॥ १९

पुनश्चैवैकदा रात्रौ रेमे तत्र तया सह । प्रचूचुरत्स पुष्पाणि मद्यभाण्डे निधाय च ॥ २०
रेमे रात्रौ तया सार्कं पुष्पारण्ये द्विजाधमः । निद्रामितस्र तया तत्र रात्र्यन्ते रतिलालसः ॥ २१
रतिश्रमवशाक्रान्ताभ्यां विवशाभ्यां वनान्तरे । प्रभातमपि न ज्ञातमुदितेऽपि विवस्वति ॥ २२
तदानीं तत्र राजापि प्रापोद्यानदिदृक्षया । उद्यानपालकाश्चापि पूर्वमेव समागताः ॥ २३
ददृशुस्तं द्विजं धूर्तं निद्रापरवशं तदा । मद्यभाण्डगतान्यत्र पुष्पाणि सुरभीणि च ॥ २४
राजानमागतं ज्ञात्वा भीत्या ते सुमनोभरम् । तौ च निद्रावशौ बध्वा हस्तपादौ बहिर्वनम् ॥ २५
विक्षिप्य सविधं राज्ञः प्रापुस्तेऽरण्यरक्षकाः । राजा सर्वं समालोक्य शृङ्गारवनमात्मनः ॥ २६
दृष्ट्वा लिङ्गञ्च पप्रच्छ पुष्पच्छन्नं समृण्मयम् । किमिदं केन वै कॢप्तं सुमनांस्यपचिन्वता ॥ २७
अरण्यमेतत्सर्वेण हतपुष्पं विलोकितम् । तदिदं सर्वमत्रैव निक्षिप्तं केन सांप्रतम् ॥ २८
इति कोपेन पृच्छन्तं प्रोचुरुद्यानपालकाः । अस्मदन्यस्य कस्यापि न प्रवेशोऽस्ति वै वने ॥ २९
मनुष्यस्य निशामध्ये न वयं विद्म चेष्टितम् । केनापि दैवतांशेन पुष्पाणि परिचिन्वता ॥ ३०
आराधितस्त्वयो लिङ्गे न वयं देव विद्महे । राजा प्रोवाच तानित्थं प्रत्यहं यात्र एवथा ॥ ३१
सत्यं वदत नोचेद्वश्छेत्स्यामि चरणौ करौ । त ऊचुरत्र दृष्टोऽयं न कदाचिदपीदृशः ॥ ३२
ध्यायामहे परे देव विस्मयोऽयं महत्तरः । तदानीं सविधे राज्ञो ये केचन महत्तराः ॥ ३३
त ऊचुर्योगिनो यत्र सुपुष्पाणि महीतले । तत्र ते स्वैरगतयः कुर्वन्ति शिवपूजनम् ॥ ३४
तस्मादस्माकमेवेदं श्रेयो लिङ्गार्चनं महत् । इति तेषां वचः श्रुत्वा जगाम पृथिवीपतिः ॥ ३५
तेनापि चात्र ज्ञाताः स्म इति मत्वा वनं गताः । तदानीमेव तौ धूर्तावन्योन्यं मुक्तबन्धनौ ॥ ३६
स्वगृहं प्राप्य भूयोऽपि पीत्वा मद्य तदागलम् । मदेन आगमतुर्मुदौ वनं पुनरमङ्गलम् ॥ ३७
अचिन्वातां च पुष्पाणि तौ दृष्टोद्यानपालकाः । बध्वा दृढतरं कोपात्तौ निन्यू राजसन्निधिम् ॥ ३८
कोपेन महता राजा तयोर्वै धूर्तवर्ययोः । हस्तपादौ तदैकस्य चान्यस्याः नासिकाकुचौ ॥ ३९
सञ्छेद्य प्रेषयामास निर्विशङ्को महीपतिः । पर्यटित्वा ततश्चैतौ कालेन निधनं गतौ ॥ ४०
शिवलिङ्गे पदेताभ्यां मृण्मयेऽभ्युद्धृतानि वै । अर्चितानि सुपुष्पाणि मद्यभाण्डस्थितान्यपि ॥ ४१
निष्पापो तेन सञ्जातो सोऽयं बाणासुरोऽभवत् । तत्पत्नी सैव सञ्जाता सुमतीका मनोरमा ॥ ४२
प्रत्यहं नर्मदातीरे पूर्ववासनयाऽसुरः । शिवपूजां चकारायं शिवलिङ्गानि साधयन् । ४३
सद्यस्ततः प्रसन्नोऽसौ शिवश्शीतांशुभूषणः । ददावधिकमैश्वर्यं बलं राज्यं तदाऽसुरम् ॥ ४४
स पुनः प्रत्यहं गत्वा कैलासे शिवमन्दिरम् । तत्र देवं समाराध्य स्वगृहं याति नित्यशः ॥ ४५
कदाचिदसुरो बाणो न दृष्ट्वाऽवसरं विभोः । प्रविवेश ततो द्वाःस्थः कोपेन महताऽन्वितः ॥ ४६
उत्थाय भूतवच्छीघ्रं तमुद्धृत्यच लीलया । चिक्षेप चक्रवाळान्ते पपातच महासुरः ॥ ४७
पुनश्चोत्थाय मूर्छान्ते स्वगृहं प्राप्य विस्मितः । शिवमभ्यर्च्य विधिवत् प्रार्थयामास सर्वदम् ॥ ४८
प्रादुर्भूतश्च तं प्राह भगवान् किमपेक्षसे । वरं वरय तत्सर्वं ददामीत्यवदच्छिवः ॥ ४९
सोऽपि वव्रे वरं देवं मया हर हरीश्वर । तव सेवा सदा कार्या सकुटुंबस्य विश्वप ॥ ५०
प्रवेशसमये द्वाःस्था न सहन्ते महाबलाः । तस्मान्मम महादेव द्वारि सांबसपुत्रकः ॥ ५१
स्वगणो निवसेरित्थं शक्यते सेवितुं मया । अयमेव वरो देव देहीमं जगतां पितः ॥ ५२
ददावितीदृशमपि वरं देवः सदाशिव । सोऽपि लब्धवरो द्वारि निर्माय भवनं महत् ॥ ५३

देवस्यापि च देव्याश्च सुतयोरपि चोभयोः । तत्र सांबं सहसुतं संस्थाप्य श्रद्धया सह ॥ ५४
प्रत्यहं परिचर्यायां निरतोऽसुरसत्तमः । निर्जित्य विबुधान् सेन्द्रान् सनारायणकान् बली ॥ ५५
त्रैलोक्यं वशमानिन्ये निष्प्रतिरथो बली । कदाचिदुद्वहन् बाहू रणकण्डूपरौ बली ॥ ५६
शिवं प्रणम्य प्रोवाच भगवन्ममथा युधि । योद्धुमस्ति बली विष्णुस्त्रिशद्वार विनिर्जितः ॥ ५७
परिचारं महेन्द्रोऽपि न कोऽपि युधि मत्समः । रणकण्डूपरवशौ बाहू मे त्रिपुरान्तक ॥ ५८
तस्माद्युध्यस्व देवेश पाण्डवेन यथा पुरा । मया सह महादेव तेन शान्तिश्च नान्यथा ॥ ५९
इति श्रुत्वाऽस्य विशांसि विहस्योवाच चेश्वरः । अवतीर्णो हरिर्वृष्णिकुले मद्भक्तिभावितः ॥ ६०
स तु दर्पं तवैवाशु हनिष्यति न संशयः । यदस्यैव शिवे प्राह स तु बाणासुरो मदी ॥ ६१
सोऽपि वृष्णिवरोपीश जितोऽप्यादशया युधि । न पायुरपि मेऽन्येन सोढुं शक्यो महेश्वर ॥ ६२
तमाह पूर्ववच्चैव क्षेतुं शक्यस्त्वयाऽसुर । इदानीं मम भक्ताद्बाहुपमन्योर्महात्मनः ॥ ६३
शिवदीक्षाऽस्य निर्मुक्ता शिवागमविशारदात् । भस्मधारी च सततं वीर्यवान् भस्मसंयुतः ॥ ६४
यतोऽचिरात्तवमदं हरिष्यति न संशयः । इतीश्वरवचश्श्रुत्वा तूष्णीमास्ते महासुरः ॥ ६५
ततः कदाचित्कृष्णस्य पौत्रं बाणासुरात्मजा । अनिरुद्धमुषा निन्ये स्वगृहे स्वमन्दिरम् ॥ ६६
अभिरक्षिता स कृष्णेन यापि बाणपुरी शुभा । अग्निप्राकारसंवीता मरुताऽपि सुदुर्गमा ॥ ६७
तस्मिन्नासेदुषि पुरीं ससैन्ये दैत्यसद्भुजः । विघ्नेशो गुहसहितो भवयोर्ज्यैस्सुपूजितः ॥ ६८
सप्रमथगणश्च देवीत्र कृष्णेनाक्लिष्टकर्मणा । निर्भूतयुद्धसन्नाहाः हतास्ते सहसा तत ॥ ६९
ईशो युद्धमायाते तस्थावर्चे जनार्दनः । तमाह स्वार्चनायस्त बाणदौवारिकः शिवः ॥ ७०
मया युध्यस्व वार्ष्णेय बाणहास्त्येन साम्प्रतम् । इति ब्रुवन्तमीशानं प्रदुधाव यदूद्वहः ॥ ७१
[illegible] पतिसंगतामीश जगदस्यहमव्यय । शिव विश्वाधिकस्य हि यतोऽहं यदरादसि ॥ ७२
मायी भवानहं माया आत्मरीरोऽसि च श्रुतः । अहं धनुश्च शरं विमर्दीव जगत्प्रभो ॥ ७३
सोजीवास्त्यत्रनैवास्ति सर्वभूतविमर्दकात् । योऽत्रमानस्त्वया युद्धे भवेत्वयं यथा स्मरः ॥ ७४
अपि ते नानुकम्पाऽस्ति यद्येवं (यद्यस्येव) जयेश माम् । पुनस्तमाह भूतेशो मयाऽनुज्ञात यथ हि ॥ ७५
युध्यस्व निर्विशङ्कस्त्वं नारायण यथोचया । मया निगृह्य मत्प्रोक्ता अन्यथानुगतो यथौ ॥ ७६
त्वमपीह मम प्रीत्यै युधि क्रीडस्व माधव । प्रगृह्येति धनुस्तस्य पिनाकं प्रमथाधिपः ॥ ७७
माधवश्चापि महावीरो विष्णुश्च निशितेस्सरैः । ईशश्चमाच यदुराडपि शार्ङ्गं धनुः स्वकम् ॥ ७८
सज्जं कृत्वा हरीशौ च तत्र समराङ्गणे । तत्कार्मुकमुमुक्षुराः पुष्पिताग्रशराशिशाः ॥ ७९
पेतुः पादांबुजद्वंद्वे परमेशस्य तत्क्षणम् । युध्यतोरिति चान्योऽन्यं विश्वविश्वेशयोस्तयोः ॥ ८०
बाणासुरसमसैन्यो द्राग्यदुसैन्यममायत् । कृष्णोऽपीशं नमस्कृत्य तदा बाणमयोधयत् ॥ ८१
तयोरभवद्युद्धं तुमुलं रोमहर्षणम् । ततो बाणं विनिर्जित्य कृष्णो वृष्णिकुलोद्भवः ॥ ८२
तस्य बाहुसहस्रं च कदलीकाण्डलाघवम् । चिच्छेद चक्रमादाय तदद्भुतमभूत्किल ॥ ८३
तदन्तरे वृषारूढो महादेवस्सहोमया । बाहुत्रासीत्प्रमोदमये तयोः कलहशान्तये ॥ ८४
आलोक्य चेममीशानो मुञ्च बाहुचतुष्टयम् । त्वमिवास्यापि मम परिचर्यारतोऽव्ययम् ॥ ८५
तस्मादभयमनेनास्तु तव कृष्ण महीपते । बाणञ्च परमेशान- प्रहसन्नाह विश्वपः ॥ ८६
तवासुर करे कण्डूरधुना विनिवारिता । समूलमपि बाहूनां सहस्रमपि छेदितुम् ॥ ८७
चत्वारि दोर्षि मुक्तानि महादेवेन पुरारिणा । ईश्वरस्यैव वचसा पुत्रौ पौत्रायथ क्षणात् ॥ ८८

प्रावादृगुणस्य लघुकस्य कन्याणमकरोन्महत् । उद्वाह्य पुत्रीं पौत्राय कृष्णो बाणस्य सेनया ॥ ८९
पौत्रेणच तदा प्रीत्या प्रस्थितो द्वारकां प्रति । बाणासुरः परिभवं महान्तमपि तं तदा ॥ ९०
सापराधमयं ज्ञात्वा मन्दाक्षानतकन्धरः । पुनश्च नर्मदामेत्य पूजयामास शूलिनम् ॥ ९१
पूजया तस्य सन्तुष्टः पुनः शीतांशुभूषणः । वरेण च्छन्दयामास वव्रे सोऽपि महद्वरम् ॥ ९२
अहमेको गणेन्द्राणां मध्ये भूत्वा गणः प्रभो । नृत्यारंभे अभवाथ मृदुवादनतत्परः ॥ ९३
प्रष्टुमिच्छामि देवेश दुर्दीनं परमुत्तमम् । लिङ्गानि नर्मदायां यानि संपूजितानि च ॥ ९४
ममैव नाम्ना लोके स्युर्बाणलिङ्गानि भो विभो । बाणलिङ्गार्चकानां तु नैवचास्तु पुनर्भवः ॥ ९५
तेषां त्वं देव सर्वेषां सर्वाभीष्टप्रदो भव । तथैवास्त्विति तं देवस्तत्रैवान्तरधीयत ॥ ९६
बाणासुरो ह्यहरहं कुर्वन्नृत्यस्य शूलिनः । गाणापत्यपदं प्राप्य सशरीरः प्रमोदते ॥ ९७

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे अशीतितमोऽध्यायः ॥

---

॥ अथ एकाशीतितमोऽध्यायः ॥

शिवाराधनेन मन्मथस्य प्राप्तिः ॥

पुरा पर्वरथे देशे विप्रो भगवतीपुरे । सुपर्णस्तस्य पुत्रोऽभूद्विप्रो नाम नामतः ॥ १
स तु दुर्मार्गनिरतस्स्वैरीरतिलालसः । यत्र यत्र च यै जाता या या रूपगुणान्विता ॥ २
तां तां वै से धनं दत्वा तस्यै तस्यै यथेप्सितम् । चौर्येणापि दुरात्माऽसौ संपादयति वै धनम् ॥ ३
कदाचित्ताकिकपुरे गृहे सङ्कर्षणस्य सः । प्रचुरस्तनं रात्रौ तं वै सङ्कर्षणो द्विजः ॥ ४
पप्रच्छ च गृहीत्वा तं किमेवं कृतवानसि । पृच्छन्तमिति तं प्राह सङ्कर्षणमचिन्तकः ॥ ५
मयेयं धनमासाद्य [illegible] लोके वराङ्गना । तस्यै दत्वा धनं सर्वं रम्यते द्विज सन्ततम् ॥ ६
इति तस्य वचः श्रुत्वा सत्यं सङ्कर्षणो द्विजः । प्रोवाच चैवं किमिति भ्रष्टो भवसि दुर्मते ॥ ७
इतोऽसि किं महापापी ब्राह्मणोऽसि सुदुर्मते । ब्राह्मण्यमीदृशो भूयः कुतस्ते पापिनो भवेत् ॥ ८
आराधय महादेवं सर्वपापनिवृत्तये । तस्मिन् संपूजिते कामः क्रोधो मोहश्च ते ध्रुवम् ॥ ९
एतादृशस्तौ वाञ्छा विलयं याति ते क्षणात् । तेनाह शिक्षितस्त्वेवं [illegible] शिवः कादृशीदृशः ॥ १०
यद्विधेव ममेशार्चा सास्तु जन्मनि जन्मनि । साचेदुक्ता त्वया भोक्ष्ये तथैवोपदिश द्विज ॥ [illegible]
श्रुत्वा विप्रस्य तद्वाक्यं तदा सङ्कर्षणो द्विजः । यथाकुच तदानीं त्वं तासां कुचयुगं त्यज ॥ १२
अचिन्तार्च्यं च लिङ्गं तत्संभाव्य समये हृदा । शिवश्च ध्यायमानस्त्वयुक्तस्त्वेति विससर्ज तम् ॥ १३
तथेति तद्विसृष्टोऽसौ तस्यां रात्र्यां द्विजाधमः । एकां विप्रस्त्रियं लेभे कुलटां स्वैरिणीमसौ ॥ १४
रममाणस्स तां रात्र्यां तस्याः पीनौ पयोधरौ । दृष्ट्वा हृष्टमना भूत्वा सङ्कर्षणवचः स्मरन् ॥ १५
संभाव्य शिवलिङ्गं तौ समये रमयंश्च ताम् । रत्यर्थं संभृतेनैव चन्दनेन विलिप्य तौ ॥ १६
सुमनांसि च सर्वाणि तयोश्चिक्षेप लीलया । भक्ष्याणि च समोज्यानि फलानि विविधानि च ॥ १७
नैवेद्यं कल्पयामास स्तनयोर्लिङ्गरूपिणोः । संभोगसमये तस्मिन् मूर्ध्नि कृत्वाऽञ्जलिं मुदा ॥ १८
प्रार्थयामास धूर्तोऽयं महादेव स्तनेश्वर । प्रसादं रमणी रम्या रूपलावण्यपेशला ॥ १९

लेभे तस्याः स्तनौ च त्वामर्चयामि दिनेदिने । संप्रार्थ्यैव तया सोऽयं भक्षयामास तान्यपि ॥ २०
भक्ष्याणि च फलान्याशु यमसेव द्विजाधमः । तांबूलानि च साऽपृच्छद्विलिखा स्वैरिणी च तम् ॥ २१
रे रे धूर्त दुराचार किमिदं तव चेष्टितम् । लिङ्गं कृत्वा स्तनौ मेऽद्य समभ्यर्च्य च सादरम् ॥ २२
प्रार्थसे प्रत्यहं स्वेच्छयथाऽधेति वा वद । शुकन्सीमिति तामाह धूर्तोऽसौ शृणु सुन्दरि ॥ २३
इमावत्युन्नतपीनौ ते स्तनौ वृत्तौ समुन्नतौ । एतादृशावहरहर्लभेयमिति वाञ्छया ॥ २४
शिवमर्चितवानस्मि भुक्तिमुक्तिफलप्रदम् । श्रुत्वेति चान्योऽन्य रमतोः क्षणदा क्षणात् ॥ २५
ययौ समुदिते सूर्ये अगमतुस्तौ यथासुखम् । ॥ पुनर्विपिनं प्राप धान्यानां धनमाहरत् ॥ २६
दयाभिमाच्य संवीतो ममार च क्षणान्तरे । स्तनलिङ्गार्चनेनास्य सर्वपापं विनाशितम् ॥ २७
पुण्यराशिश्च संप्राप्तस्तेन पुण्येन स द्विजः । विष्णोश्चित्ते समुत्पन्नश्चित्तजस्तेन विश्रुतः ॥ २८
विष्णुजातश्च विख्यातः पूर्ववासनयाऽपि च । शिवपूजामसौ कर्तुं काशीमाशु जगाम सः ॥ २९
तत्र लिङ्गं प्रतिष्ठाप्य स्वनाम्ना चित्तजो महत् । श्रद्धयाऽऽराध्य देवेशं प्रार्थयामास शूलिनम् ॥ ३०
ततः प्रसन्नो भगवान् प्रादुर्भूय दयानिधिः । स तं मकरराजध्वजमिति च चकार सः ॥ ३१
शुकमत्स्यध्वजाकाराश्च दक्षिणं मारुतं रथम् । चन्द्रं छत्रं घटं शंभुस्तस्मै राज्यपरिच्छदम् ॥ ३२
कामिमद्याह्लकं रूपं रतीमपि सुमध्यमाम् । षष्ठीश्चापि च चार्वङ्गीः कार्मुकं चेक्षुसंभवम् ॥ ३३
पुष्पाणि पञ्चबाणांश्च संभाव्यैवं दयानिधिः । अन्तर्धायं ययौ शंभुरद्भुतं पश्यत द्विजाः ॥ ३४
एवं लब्धवरः कामराजोऽसौ रतिसंयुतः । भूम्यन्तरिक्षस्वर्गेषु चचार बहुलीलया ॥ ३५
मोहयामास सकलान् जन्तून् लोकमनोहरः । त्रैलोक्यं निर्जितं तेन पुष्पैः पञ्चभिराशुगैः ॥ ३६
अहो पश्यतु विप्रेन्द्राः शिवपूजाफलं महत् । अनादरेण विधिनाप्याराध्यैवमभूत् सः ॥ ३७
कामराजपदं लोके किं पुनर्विधिनार्चताम् । स कामराजो देवेशं देवसद्मन्यथोदितः ॥ ३८
सुरेतरसमं पश्यन्शूलपाणिं त्रिलोचनम् । मुमोच कुसुमैर्बाणैः रत्या सह महेश्वरम् ॥ ३९
निरीक्षितश्च देवेन भस्मसादभवत्क्षणात् । रतिर्बहुविलप्याथ समाराध्य च शङ्करम् ॥ ४०
लेभे पतिं तमेवेह पूर्ववद् द्विजसत्तमाः । इदानीमपि ये लोके देवदेवं त्रियंबकम् ॥ ४१
अप्यविधिसामान्यं पश्यन्ति मनसा सकृत् । तेऽपि नश्यन्ति सहसा यथा रतिपतिस्तथा ॥ ४२

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे एकाशीतितमोऽध्यायः ॥

---

॥ अथ द्व्यशीतितमोऽध्यायः ॥

घोरस्य शिवार्पणोच्चारणेन कैलासप्राप्तिः ॥

सूतः — अस्ति मालवदेशेषु वैणवं पुरमाख्यया । कलुषात्मकः कश्चिद् ब्राह्मणश्रीविवर्जितः ॥ १
दुरात्मा सर्वभक्षोऽसौ सर्वस्त्रीरतिलालसः । पण्डेषु च कश्चिद्विचण्डालीरतिलालसः ॥ २
स तया सह चण्डाल्या दिवारात्रमविश्रमम् । वर्तते निर्भयो नित्यं चौर्यार्जितधनाशनः ॥ ३
एकदा स तु वै रात्रौ कुसुमं पुष्पमाहृतम् । जहार पेटिकान्तस्थं तया पेटिकया सह ॥ ४
गृहस्य पुष्पं रात्रौ महाघ्नर्षुपेटी तथा । आदाय पुष्पं चण्डाल्या तरसा प्रासरत् गृहम् ॥ ५
मध्येमार्गं पेटिकायाः पतितं भूतले क्वचित् । आलोक्य पुष्पमेकं तच्छिवायेति गिरा वदन् ॥ ६

स तया रमयामास पुष्पालंकृतकेशया । तदेतन्नृपतिः श्रुत्वा पुरुषादतिकोपनः ॥ ७
भटैरानीय पश्चात्तं पतितं ब्राह्मणाधमम् । प्रहृत्य काराभवने निगळाद्यैर्न्यवेशयत् ॥ ८
स तु तत्रैव कालेन गतासुर्ब्राह्मणाधमः । यमदूता महाघोरा निन्युरेनं यमान्तिकम् ॥ ९
तदन्तरे गणाधीशा यमदूतान् प्रहृत्य च । विमानमेनमारोप्य निन्युश्शिवपुरं महत् ॥ १०
यमदूतास्तमभ्येत्य यमायास्य न्यवेदयन् । वृत्तान्तमेतदखिलं यमोऽपि परया रुषा ॥ ११
चित्रगुप्तं सभामध्ये पप्रच्छास्यैव कारणम् । जगाद चित्रगुप्तोऽपि सभामध्ये विमृश्य सः ॥ १२
अनेन च कृतं पापं मया वक्तुं न शक्यते । ब्रह्मणा विष्णुना चापि वर्षकोटिशतैरपि ॥ १३
किं त्वनेनैकदा पुष्पं राजभृत्यात्सपेटिकम् । गृहीत्वा धावतोऽत्रैकं पतितं भूमिदूषितम् ॥ १४
शिवायार्पितमित्येवं प्राप्य चाशु वदन् गतः । तदस्ति पुण्यं सुमहदस्य मूर्खस्य भो विभो ॥ १५
तेनास्य सुकृतेनैव नाशितो पापसञ्चयः । नीतश्च गणपैरेवं शैवं लोकमनामयम् ॥ १६
सर्वैस्तु पूज्यमानोऽसौ यत्र गत्वा न शोचति । श्रुत्वेति धर्मराजोऽयं चित्रगुप्तं पुनः पुनः ॥ १७
प्रशशंस मुदा तस्मिन् सभामध्ये प्रसन्नधीः । ईशपूजा जगत्यस्मिन् दुर्लभ्यो न कस्य वा ॥ १८
शिवपूजां प्रकुर्वन्ति ये नरा भुवनत्रये । तेषां महात्मनां केन महिमा वर्णितुं क्षमः ॥ १९
बहुधैवं गिरा शंसन् दूतान् प्रोवाच तान्पुनः । दृष्ट्वा शिवार्चकान्यूयं तेषामपि सखीनपि ॥ २०
तेषां शुश्रूषणपरानपि दूरे प्रणम्य च । गच्छताशु ततो दूता यदस्माकं सुखार्थिनः ॥ २१
सूतः — तस्मात्पूजा सदा कार्या शंभोर्मोक्षफलप्रदा । भोगप्रदा च सर्वेषां पुरुषार्थसुधानिधिः ॥ २२
देवैश्चापि मुनिश्रेष्ठा वा सर्वार्तिहराविभोः । सवेदिकेऽर्चिते लिङ्गे तावुभौ सम्यगर्चितौ ॥ २३
देवी साऽपि सदाकालं करोति शिवपूजनम् । तत्सुतौ स्कन्दविघ्नेशौ शिवपूजापरौ सदा ॥ २४
भैरवोऽपि महाशास्ता महाकालोऽपि तत्सुतः । शिवपूजापरास्तेऽपि सदाकालमतन्द्रिताः ॥ २५
नन्दीश्वरोऽपि शैलादिस्सोमनन्दी शिवप्रियः । गणनायकाश्च ते सर्वे शिवपूजापरायणाः ॥ २६
वीरभद्रो महातेजास्तथैव रुद्रगणा अपि । अर्चयन्ति सदाकालं लिङ्गमूर्तिं सनातनम् ॥ २७
तस्मात्सर्वैरनुष्ठेया शिवपूजाऽखिलेश्वरा । शिवपूजा हि पापानां निष्कृतिः परमा मता ॥ २८
ब्रह्महत्यासहस्राणि भ्रूणहत्यायुतान्यपि । नाशमायान्ति सर्वाणि पापानि सुबहून्यपि ॥ २९
समीहिताश्च सर्वेषां पूजा हेतुर्महत्तरा । सुपुत्रकामा ये मर्त्याः पत्नीपशुधनेच्छवः ॥ ३०
तेऽर्चयन्तु सदाकालं लिङ्गमूर्तिं महेश्वरम् । पूजया भुक्तिमाप्नोति पूजया मुक्तिमाप्नुयात् ॥ ३१
पूजया योगसिद्धिश्च पूजया सकलं द्विजाः । पूजा ज्ञानप्रदा शैवी पूजा सर्वप्रदा मता ॥ ३२
पूजाया महिमाऽस्माभिर्नैवशक्यस्तु वर्णितुम् । इति सूते वदत्यत्र ऋषयश्शौनकादयः ॥ ३३
अपृच्छन्मुनयस्सूतं विनयेनच सादरम् । येन संपूजितो देवश्शीघ्रमेव प्रसीदति ॥ ३४
तद्वदाद्य महाभाग सर्वज्ञोऽसि मतश्च नः । इति पृष्टश्चिरं ध्यात्वा सूतः प्रोवाच सुप्रधीः ॥ ३५
नाराचितशिवो नाम्नां सहस्रेण मुनीश्वराः । शीघ्रमेवातिसन्तुष्टो ददाति फलमीप्सितम् । ३६
श्रुत्वेति ते तमवदन्तानि नामानि नो वद । यैरर्चितो महादेवश्शीघ्रमेव प्रसीदति ॥ ३७

इति मुनिगणमध्ये सूतपुत्रोऽमितात्मा त्रिपुररिपुपदाब्जं सादरं संप्रणम्य ।
स्वगुरुमपि मुनीन्द्रं सत्यवत्यास्तनूजं हृदि शिवमभिचिन्त्य प्राह नाम्नां सहस्रम् ॥ ३८

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे द्वात्रिंशत्तमोऽध्यायः ॥

तथा रावणनिष्पेष्टा भैरवोत्पादकोऽप्ययम् । दक्षयज्ञविनाशी च त्रिपुरत्रयशिक्षकः ॥ ६६
सिन्दूरपत्रधारी च मन्दारस्रगलंकृतः । निर्वीर्यो भावनातीतस्तथा भूतगणेश्वरः ॥ ६७
विष्णुब्रह्मध्यपादी च सर्वोपादानकारणम् । निमित्तकारणं सर्वसहकार्यपि कथ्यते ॥ ६८
तारब्रह्मासकरच्छेत्ता शूलप्रोतहरिस्तथा । भेदाभेदौ वेदवल्लीकण्ठच्छेत्तादि कथ्यते ॥ ६९
पञ्चब्रह्मस्वरूपी च भेदाभेदोभयात्मवान् । अच्छस्फटिकसंकाशो ब्रह्मभस्मावलेपनः ॥ ७०
निर्दग्धविष्णुभस्माङ्गरागो पिङ्गजटाधरः । चण्डार्पितप्रमादश्च धाता धातुविवर्जितः ॥ ७१
कलातीतः कलभश्च चापस्त्यकुसुमप्रियः । मधुकल्पोपकल्पौ च संकल्पश्छेददुन्दुभिः ॥ ७२
विकल्पो विष्णुदुर्बलपादो मृत्युञ्जयः स्मृतः । विष्णुरूपशालभटमो विष्णुकेशोपवीतवान् ॥ ७३
ब्रह्मश्मशानमदनः पञ्चरावणघातकः । सर्पाधीशाम्बरस्कन्ददमलासुरघातकः ॥ ७४
महिषासुरसंहर्ता शालीदूर्वावतंसकः । देवपिनद्धदैत्येशो राक्षसेशो धनेश्वरः ॥ ७५
चराचरेशोऽनुचरो मूर्तिस्कन्दस्वरूपिणौ । एकद्वित्रिचतुःपञ्चजानिनो विक्रमाश्रमः ॥ ७६
ब्रह्मविष्णुकपालास्त्रजयकिंकिणिकांचिकः । संहारकाट्टहासोऽपि सर्वसंहारकः स्मृतः ॥ ७७
सर्वसंहारनेत्राग्निसुविकदाप्मलोयुतः । संहारकश्च त्रिशूलोऽपि रक्ताकल्पाणिपादवान् ॥ ७८
भृङ्गिनाट्यप्रियशङ्खपद्मनिध्योरधीश्वरः । कर्पासरो भक्तचिन्तितार्थदो भक्तवत्सलः ॥ ७९
भक्तापराधसोढा च विकीर्णजट ईरितः । जटामकुटधारी च विशारदोऽपि कथ्यते ॥ ८०
अपस्मारीकृताविद्यापृष्ठांघ्रिः स्थौल्यवर्जितः । युवा नित्ययुवा वृद्धो नित्यवृद्धोऽपि कथ्यते ॥ ८१
शफयुतपादी शक्तियुक्तस्सत्यासत्योऽपि कथ्यते । विष्णूत्पादक महद्गह्वरसत्यासत्यश्च ईरितः ॥ ८२
मूलाधारस्तथा स्वाधिष्ठानश्च मणिपूरकः । अनाहतो विशुद्धश्च तथा ब्रह्मबिल स्मृतः ॥ ८३
परामयकरद्वारास्त्वपिता तारकमारकः । सालोक्यदश्च सामीप्यदायी सारूप्यदः स्मृतः ॥ ८४
सायुज्यमुक्तिदस्तद्वद्ब्रह्मरिकम्पपादुकः । निकृत्तब्रह्ममूर्धा च शाकिनीडाकिनीश्वरः ॥ ८५
योगिनीमोहिनीनाथो दुर्गानाथोऽपि कथ्यते । यक्षो यक्षेश्वरो यक्षविर्भुग्यज्ञनां प्रियः ॥ ८६
विष्णुशापापहर्ता च चन्द्रशापापहारकः । इन्द्रशापापहर्ता च वेदागमपुराणकृत् ॥ ८७
विष्णुब्रह्मोपदेष्टा च स्कन्दोमादेशिकोऽप्ययम् । विघ्नेशस्योपदेष्टा च नन्दिकेशगुरुस्तथा ॥ ८८
तथा ऋषिगुरुस्तद्वद्गुरुर्दशदिगीश्वरः । दधीचिवरदश्चैव ज्ञानयज्ञोपवीतवान् ॥ ८९
ब्रह्मविष्णुशिरोमुण्डकन्तुकः परमेश्वरः । ज्ञानक्रियायोगचर्याशिखोरगकुण्डली ॥ ९०
महाताण्डप्रियो विष्णुपट्टश्रीतिरप्ययम् । अन्धकासुरापहर्ता च कङ्कपत्रधरोऽप्ययम् ॥ ९१
तन्त्रचापधरतस्कन्दर्कपुष्पप्रियोऽप्ययम् । विष्णवास्त्यमुक्तवीर्योऽपि दैत्यप्रकृततापहः ॥ ९२
ज्ञानांबरो ज्ञानभूपो विष्णुशङ्खप्रियोऽप्ययम् । विष्णुद्रवविमुक्तात्मवीर्यश्चैव परात्परः ॥ ९३
महेश्वरश्चेश्वरोऽपि लिङ्गोद्भवसुखासनौ । उमास्कन्दचन्द्रचूडश्चार्धनारीश्वरः स्मृतः ॥ ९४
सोमास्कन्दस्तथा चक्रप्रसादी च त्रिमूर्तिकः । अर्धाङ्गविष्णुश्च तथा दक्षिणामूर्तिरव्ययः ॥ ९५
भिक्षाटनश्च कङ्कालः कामारिः कालशासनः । जलन्धरारिस्त्रिपुरहन्ता च विषभक्षणः ॥ ९६
कल्याणसुन्दराख्यमूर्ती च त्रिपादपि । एकपादो भैरवश्च वृषारूढस्सदानटः ॥ ९७
गङ्गाधरश्चपञ्चविंशतिस्त्वमप्ययमीरितः । तथा साक्षात् भेदमूर्तिरष्टशताद्वयः ॥ ९८
अष्टोत्तरशत ताळरागनृत्तैकपण्डितः । सहस्राख्यस्सहस्राक्षस्सहस्रभुज ईरितः ॥ ९९
सहस्रपादस्तन्मूर्तिरनन्तमुख ईरितः । अनन्तनामापि तथा चानन्तभुतिरप्ययम् ॥ १००

अनन्तनयनस्तद्वदनन्तप्राणमण्डितः । अनन्तरूपश्च तद्वदनन्तैश्वर्यवान् स्मृतः ॥ १०१
अनन्तशक्तिरूपश्चानन्तज्ञानवानयम् । अनन्तानन्दसन्दोह अनन्तौदार्यवानयम् ॥ १०२
तथैव पृथिवीमूर्तिः पृथिवीशोऽपि कथ्यते । पृथिवीधारकस्तद्वत्पृथिव्यान्तर ईरितः ॥ १०३
पृथिव्यतीतश्च तथा पार्थिवाण्डाभिमान्ययम् । तदण्डपुरुषहृदयकमलोऽपि निगद्यते ॥ १०४
तदण्डभुवनेशानः तच्छक्तिधरणात्मकः । आधारशक्त्यधिष्ठानानन्तः कालाग्निरप्ययम् ॥ १०५
कालाग्निरुद्रभुवनपतिरप्ययमीरितः । अनन्तश्च तथेशश्च शङ्करः पद्मपिङ्गलौ ॥ १०६
कालश्च जलजश्चैव क्रोधोऽतिबल ईरितः । घनदश्चातिकूष्माण्डभुवनेशोऽपि कथ्यते ॥ १०७
कूष्माण्डश्च सप्तपाताळनायकोऽपि निगद्यते । पाताळान्तोऽपि चेशानो पलातिपलनाशुभौ ॥ १०८
बलविकरणश्चायं बलेशोऽपि बलेश्वरः । बलाध्यक्षश्च बलधान्हाटकेशोऽपि कथ्यते ॥ १०९
तथा तद्भुवनेशानस्तथैवाष्टगजेश्वरः । अष्टनागेश्वरस्तद्वद्भूलोकेशोऽपि कथ्यते ॥ ११०
मेर्वीशो मेरुशिखरराजोऽप्यनिपतिस्तथा । त्रिपथकश्चाष्टकुलपर्वतेशोऽपि कथ्यते ॥ १११
मानसोत्तरगिरिस्तद्वद्धिमवेशोऽपि निगद्यते । सर्वलोकश्चलोकालगिरिराजविरामकः ॥ ११२
धर्मो विविधधामा च वासुपालश्च कथ्यते । तथा कनकरोमा च पर्जन्यः केतुमानपि ॥ ११३
विरोचनो हरिच्छायो रक्तच्छायश्च कथ्यते । महान्धकारनाथोऽपि अण्डभित्तीश्वरोऽप्ययम् ॥ ११४
प्राचीपतीश्वरौ दक्षिणप्राचीशोऽपि गद्यते । अग्नीश्वरो दक्षिणश्च दिगीशो यमराडपि ॥ ११५
दक्षिणाशापतिस्तद्वन्निर्ऋतीशोऽपि कथ्यते । पश्चिमाशापतिस्तद्वद्वरुणेशोऽपि कथ्यते ॥ ११६
तथोत्तरपश्चिमेशोऽपि वाय्वीशोऽपि तथोच्यते । तथैवोत्तरदिङ्नाथः कुबेरेशोऽपि चोच्यते ॥ ११७
तथैवोत्तरपूर्वेश ईशानेशोऽपि कथ्यते । कैलासशिखरीनाथः श्रीकण्ठपरमेश्वरः ॥ ११८
महाकैलासनाथोऽपि महासदाशिवः स्मृतः । भुवर्लोकेश संभूतसूर्यमण्डलनायकः ॥ ११९
प्रकाशरुद्रो यश्चन्द्रमण्डलेशोऽपि कथ्यते । तथा चन्द्रमहादेवो नक्षत्राणामधीश्वरः ॥ १२०
स्वर्लोकेश गन्धर्वगान्धर्वेशावुभावपि । सिद्धविद्याधरेशोऽयं किन्नरेशोऽपि कथ्यते ॥ १२१
यक्षचारणनाथोऽपि स्वर्लोकेशोऽपि स स्मृतः । भीमश्चैव महर्लोकनाथश्चैव महाभवः ॥ १२२
जनलोकेश्वरो धातपादो जनवर्जितः । अतिपिङ्गल आश्चर्यो भौतिकश्च ध्रुवोऽप्ययम् ॥ १२३
तपोलोकेश्वरस्तस्मो महादेवोऽपि स स्मृतः । सत्यलोकेश्वरस्तद्वत् प्रधानेशोऽपि चोच्यते ॥ १२४
विष्णुलोकेशविष्ण्वीशौ शिवलोकः परश्शिवः । अण्डान्तेशो ह्यण्डधारिपरब्रह्मेश्वरोऽप्ययम् ॥ १२५
श्वेतश्च वायुवेगोऽपि सुपात्रश्च स्मृतोऽप्ययम् । विद्याख्यामकस्तद्वत्कालाग्निश्च स्मृतोऽप्ययम् ॥ १२६
महासहारकस्तद्वन्महाकालोऽपि कथ्यते । महानिर्ऋतिरप्येव महाचण्ड इत्यपि ॥ १२७
वीरभद्रो महांस्तद्वच्छतभद्रोऽपि कथ्यते । भद्रकालीवीरभद्रौ कमण्डलुधरोऽप्ययम् ॥ १२८
अन्भुवनेशोऽपि तथा लक्ष्मीनाथोऽपि कथ्यते । सरस्वतीशो देवेशः प्रमादेशोऽपि कथ्यते ॥ १२९
तथैव डिण्डीवल्मीकनाथौ पुष्करनायकः । मण्डीग्रामाररभूतेशो विनायकमहेश्वरः ॥ १३०
तेजोमण्डलनाथोऽपि तेजोमण्डलमूर्तिपः । तेजोमण्डलविश्वेशशिखाभिरपि कथ्यते ॥ १३१
वायुमण्डलमूर्तिश्च वायुमण्डलधारकः । वायुमण्डलनाथश्च वायुमण्डलरक्षकः ॥ १३२
महावायुसुवेगोऽयमाकाशमण्डलेश्वरः । आकाशमण्डलधरस्तन्मूर्तिरपि संस्मृतः ॥ १३३
आकाशमण्डलातीतस्तन्मण्डलभुवाधिपः । महाब्रह्म तन्मात्रमण्डलेशश्च संस्मृतः ॥ १३४
तन्मात्रमण्डलपतिर्महाशर्वमहाभवौ । महापशुपतिश्चापि महाभीमो महाहरः ॥ १३५

कर्मेन्द्रियमण्डलेशस्तन्मण्डलभुव पति । क्रियासरस्वतीनाथ क्रिया (श्रिया) लक्ष्मीपतिस्तथा ॥ १३६
निर्येन्द्रिय क्रियामिश्र क्रियाख्यपतिः पतौ । ज्ञानेन्द्रियमण्डलेशो तन्मण्डलभुवानप ॥ १३७
भूमिदेवदिशाधेशश्च वरुणोऽपि च वह्निप । वातेशो विविधाविष्टमण्डलेशाधुमावपि ॥ १३८
विषयमण्डलभुवनेशो गन्धर्वेन्द्रादिलेश्वरः । प्रासादवलमद्रश्च सूक्ष्मेशो मानवेश्वर ॥ १३९
अन्त करणमण्डलेशो बुद्धिचित्तमन पतिः । अहङ्कारेश्वरश्चापि गुणमण्डलनायक ॥ १४०
एवंतत्त्वामसगुणपतिस्तद्भुवनाधिप । एकवीर कृतान्तश्च सन्यासी सर्वशङ्कर ॥ १४१
पुरुषगुणानुमहदरससाक्षीकगुणाधिप । कार्तिकश्च भुवनेश कृतश्च कृतमेरुः ॥ १४२
ब्रह्मा श्रीकण्ठदेवोऽस्य सराजसगुणेश्वर । राजसगुणभुवनेशो बलाध्यक्षश्च कथ्यते ॥ १४३
गुणाध्यक्षो महाशान्तो महाशिपुरघातकः । सर्वरूपी निमेषश्च उन्मेष इति कथ्यते ॥ १४४
प्रकृतीमण्डलेशोऽस्य तन्मण्डलभुवानप । शुभरामशुभर्माप्रमशुभोप्रशुभमधशुभाद्यर्थशुभैकवीरः ॥ १४५
प्रचण्डपुरुषशुभगम्यजसिरहितहरीशमानमण्डलेशा । मायमण्डलभुवनेश अप्रतिष्ठप्रतिष्ठक ॥ १४६
रूपाक्षमनोऽमनमहावीरस्वरूपका । कल्याणपद्मवीरश्च पशमेघादिचेतन ॥ १४७
इशो नियतिमण्डलेशो नियतिमण्डलभुवानपः । वासुदेवश्च यतीच विघातामनगि स्मृत ॥ १४८
कलविकरणश्चैव कलविकरणस्तथा । बलप्रमथनश्चैव सर्वभूतदमश्च ■ ॥ १४९
विद्यामण्डलेशो विद्यामण्डलभुवनप । महादेवो महाज्योतिर्महादेवेश इत्यपि ॥ १५०
कलामण्डलेशश्च कलामण्डलभुवनप । विशुद्धश्च प्रबुद्धश्च शुद्धश्चैव स्मृतश्च च ॥ १५१
शुचिवर्णप्रकाशश्च महोल्लोलश्च कीर्तित । मायातत्त्वीश्वरो मायभुवनेशस्तथापि मान् ॥ १५२
विद्यातनो विश्वबीजो ज्योतीरूपश्च गोपति । त्रिकालश्चापत्तोऽव अनन्तेशश्च संस्मृत ॥ १५३
शुद्धविद्येशशुद्धश्च विद्याभुवननायक । वामेशानर्वज्येष्ठेशौ रौद्रीकालेश्वराबुभौ ॥ १५४
कलविकरणीशश्च कलविकरणीश्वर । बलप्रमथिनीशोऽपि सर्वभूतदमेश्वरः ॥ १५५
मनोन्मनेशस्तत्वेशस्तथैव भुवनेश्वरः । महामहेश्वरस्सदाशिवतत्वेश्वराबुभौ ॥ १५६
सदाशिवभुवनेशो ज्ञानवैराग्यनायकः । ऐश्वर्येशश्च धर्मेशस्सदाशिव इति स्मृतः ॥ १५७
अनुग्रहसदाशिवोऽस्यैव अनुग्रहेश्वरोऽव्ययम् । शक्तितत्वेश्वरश्शक्तिभुवनेशोऽपि कथ्यते ॥ १५८
बिन्दुमूर्तिरनन्तोऽपिमहामन्त्रेश्वरोऽव्ययम् । निवृत्तीश प्रतिष्ठेशो विद्येशश्शान्तिनायक ॥ १५९
शान्त्यतीतेश्वरस्तद्वर्पमन्त्रेश्वरोऽव्ययम् । सुशान्तीशश्च तथा शिवाध्ययमनाक्षयः ॥ १६०
मोक्षनीपश्च तथा मोक्षातीतस्तनायक । सुषमेष्विरोधीशी इन्धनिरोधेश्वर ॥ १६१
रौद्रीशानयोपेशी तमोपद इति स्मृत । नादान्तयेश्वरस्तद्भुवाद्यपभुवनेश्वरः ॥ १६२
इन्धिकेशो दीपिकेशो मोचिकेशश्च संस्मृतः । ऊर्ध्वगामिनीशोऽपि इशानायोऽपि कथ्यते ॥ १६३
सुपुरेश पिङ्गलेशो महाकर्मेश्वरोऽव्ययम् । महाकर्मरूपीशः पश्वर्थीनेश्वरो व्ययम् ॥ १६४
अमृतेशश्च शक्तीशस्सुमेशश्च सुसूक्ष्मः । मूलेशश्च भूमेशोऽपि व्यापिनीशोऽपि कथ्यते ॥ १६५
परनादेश्वरो व्योम व्योमरूपीव कथ्यते । अनाश्रितोऽप्यनन्तश्च अनाद्यश्च मुनीश्वरः ॥ १६६
उन्मनीशो मन्त्रमूर्तिर्मन्त्रेशो मन्त्रनायक । मन्त्रातीत पदामूर्ति पदेशः पदनायकः ॥ १६७
पदातीतोऽक्षरनाथ अक्षरेशोऽक्षरायपः । अक्षरातीतश्च तथा ओङ्कारनाथ कथ्यते ॥ १६८
ओङ्कारेशश्च तथा ओङ्कारनायक ईरितः । पराशक्तिपतिस्सदाशिवादिशक्तिपतिश्च च ॥ १६९
इच्छाशक्तिपतिश्चैव ज्ञानशक्तिपतिश्च च । क्रियाशक्तिपतिश्चदिव्यवाद्यश्च ईरितः ॥ १७०

अमूर्तिसादाख्यश्चैव मूर्तिसादाख्य ईरितः । कर्तृसादाख्यश्च तथा कर्मसादाख्य ईरितः ॥ १७१
सर्वस्रष्टा सर्वरक्षाकारकस्सर्वसंहारकः । तिरोभावकश्चैव सर्वानुग्राहकस्तथा ॥ १७२
निरञ्जनो चञ्चलश्च विमलोनल ईरितः । सच्चिदानन्दरूपीच विष्णुचक्रप्रसादकः ॥ १७३
सर्वव्यापी तथाद्वैतविशिष्टाद्वैतकावुभौ । परिपूर्णो लिङ्गरूपी महालिङ्गस्वरूपवान् ॥ १७४
श्रीसूतः — एवमाख्यातमधुना युष्माकं ब्राह्मणोत्तमाः । अष्टोत्तरसहस्राणि नामानि गिरिजापतेः ॥ १७५
यः पठेच्छृणुनामानि पवित्राणि महामतिः । शृणुयाद्वापि भक्त्या स रुद्र एव न संशयः ॥ १७६
सधन्यस्सकुलीनश्च सपूज्यश्च महेश्वरः । तस्यैव महालक्ष्मीस्तस्यैव सरस्वती ॥ १७७
स शक्रानपि संग्रामे विजेष्यति रुद्रवत् । पुत्रार्थी पुत्रमाप्नोति धनार्थीच महद्धनम् ॥ १७८
आरोग्यकामस्त्वारोग्यमवाप्स्यति द्विजोत्तम । शिखायां धारयेद्योऽसौ लिखित्वा पुस्तकेसदा ॥ १७९
राजद्वारेषु सदसि च वशीकुरुते जनान् । नच हिंसन्ति सर्पाद्या राक्षसा न पिशाचकाः ॥
किंपुनर्ब्राह्मणश्रेष्ठास्सर्वान्कामान् लभेद्ध्रुवम् ॥ १८०

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे त्र्यशीतितमोऽध्यायः ॥

---

॥ अथ चतुरशीतितमोऽध्यायः ॥

विष्ण्वादि देवानामपि शिव सहस्रनामार्चनेन बहुविध फलप्राप्तिः ॥

सहस्रनामभिर्देवं समाराध्याधिकापत्तिम् । सद्यः प्राप्तफलानांतु मध्ये कांश्चिद्ब्रवीमिवः ॥ १
पुरा नारायणस्साक्षात् श्रीभूमिरमणोऽच्युतः । वृन्दायां मोहितोऽत्यर्थं पत्न्यां कामशरार्दितः ॥ २
जलन्धरासुरस्यासौ जारमार्गेण तां चिरम् । अरमयासुरस्तस्मिन् काले देवेन शूलिना ॥ ३
निहतश्च तदा तस्यां प्रविष्टायां हुताशनम् । दुःखेन महताऽत्यर्थं सम्भ्रान्त हृदयो हरिः ॥ ४
तद्भस्मधूसरोऽत्यर्थं नितरां चिरमास्थितः । तदथा तत्र तुलसी लतारूपधारिणी ॥ ५
तांश्चैव रमयामास तद्गुण्याद्धोक्षजोऽनिशम् । तदासौ वैष्णवे लोके शुद्धान्तनिलये शुभे ॥ ६
श्रीभूमिदयिते तस्य कोपमूहतुरुत्तमा । रूक्षतुश्च अपयोर्निमाथां देव्यौ विहायच ॥ ७
परस्त्रीसक्तहृदयः कथमास्तीत्यतः पुमान् । अथवाऽस्य स्वभावोऽयमतीव रतिलालसः ॥ ८
द्वापरान्तावतारेऽस्मात्सावाभीरवनितारतः । चतुर्दशस्वपि लोकेषु राजस्त्रीष्वाश्च सत्स्वपि ॥ ९
पुनश्च त्रिदशमत्यन्तां तुलसीं रमतेऽधुना । एतया सह सभातरुमधीपश्चाद्ययोरयम् ॥ १०
इत्यन्तःपुरमुत्सृज्य कमलालयमापतु । सहस्रनामभिश्शंभु सहस्रकमलैरुभे ॥ ११
प्रार्थयामासतुः प्रीतमर्चनाभिरच्युताः । ततः प्रसन्नो भगवांस्तयोः प्रादुरभूत्पुरः ॥ १२
वृण्वाथाञ्च वरं भद्रं युवामस्तु भूमियौ । भुक्तेति गिरमीशस्य वयाते ते महीरमे ॥ १३
विष्णुर्वृन्दागतप्राणस्तुलसीसङ्गमप्रियः । अवयोरेतु सविपममरारिनिषूदनः ॥ १४
इति प्रणम्य ते देव्यौ स्तुत्वा तस्थतुरग्रतः । तथेति ते समादिश्य सोमोऽन्तर्धानमाप सः ॥ १५

तयोरेकाऽथ दुग्धाब्धिमन्या कल्याणभूधरम् । लक्ष्मीं स्वपितरं प्राप्य तत्रैवास गृहान्तरे ॥ १६
भूधरे भूमिदामेरौ गृहान्तरगृहान्तरे । सेव्यमाने परिजनैस्ते नारायणवल्लभे ॥ १७
मद्गृहान्तःपुरे ते द्राग् ज्ञात्वा सर्वज्ञ केशवः । एतयोरसविधं प्राप्य सविधं समधादयत् ॥ १८
सान्त्वयन् बहुधा पत्न्यौ चाटुवाक्यविशारदः । तथापि ते वशं नास्य प्राप्ते प्रणयविग्रहात् ॥ १९
प्रत्याख्यानञ्च चक्राते प्रार्थितस्य मधुद्विषः । एवं व्यवसितं धर्म्यं चेन्मानिन्यौ युवयोरहम् ॥ २०
नैव मोक्ष्यामि सविधमिति काशीमथागमत् । तत्राराध्य महादेवं सहस्रैरेव नामभिः ॥ २१
लेभे वरं ततः प्रीतान्मेरुक्षीरार्णवान्तरे । समयज्ञात्मनो वस्तुं पुरद्वयमरिन्दमः ॥ २२
तयोरात्मनि चात्यन्तः प्रीतिरस्तु रमाभुवोः । इति लब्धवरो लक्ष्म्याः सविधे कृतपत्तनः ॥ २३
तया चिरसुचिराऽभ्यो रमया मुक्तकोपया । नरस्त्रालयस्यैव भाले वैकुण्ठमित्ययम् ॥ २४
पुरं विधाय भूदेव्या सह प्रीतिमवाप्य सः । श्रीभूमिचरितमिदं सहस्रनामार्चनाबलात् ॥ २५
क्षीरार्णवे महामेरौ पुरद्वयमभून्महत् । वैकुण्ठाख्ये मेरुशृङ्गे विष्णुलोके महत्तरे ॥ २६
श्वेतद्वीपे क्षीरसिन्धौ भिघातमानं विधाय सः । श्रीभूमिसहितः श्रीमानुवास परया मुदा ॥ २७
पुनः कदाचिद्वैकुण्ठे चक्रार्थी चन्द्रशेखरम् । सहस्रनामभिर्देवं संपूज्य कमलैर्हरम् ॥ २८
सहस्रादित्यसंकाशं चक्रमाप सुदुर्लभम् । मधुञ्च कैटभं पूर्वं स्वकर्णोत्थविरोद्भवौ ॥ २९
नियुध्य कैतवेनैतौ जिह्मितस्वात्मसंभवौ । तद्दोषपरिहारार्थं सहस्रैर्नामभिः शिवम् ॥ ३०
काञ्चीसमीपे संपूज्य सद्यो मुक्ताघसञ्चयः । तत्र तीर्थञ्च संस्थाप्य तत्तीरे शेषगाऽप्यभूत् ॥ ३१

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे चतुरशीतितमोऽध्यायः ॥

---

॥ अथ पञ्चाशीतितमोऽध्यायः ॥

रामप्रभृतिलिङ्ग चतुष्टयानां महिमानु वर्णनम् ॥

गोकर्णे चार्णवाभ्याशे पुरा पद्मसमुद्भवः । सहस्रनामार्चनया सारूप्यं प्राप शूलिनः ॥ १
सहस्राक्षः पुरा देवं सहस्रकमलैर्हरम् । सहस्रनामभिश्शम्भुं समाराध्य शचीसखः ॥ २
स्वर्गं मघवतीं प्राप संपदं स्वपदञ्च सः । एवमन्ये समाराध्य सहस्रैर्नामभिश्शिवम् ॥ ३
श्रीमिमिष्टं समासाद्य सुखिनश्च सदाऽभवन् । तस्मादष्टसहस्रेण नाम्नामष्टशतेन वा ॥ ४
चतुर्विंशतिभिर्नाम्ना तथा द्वादशभिस्तथा । पत्रैरपि च पुष्पैर्वा तण्डुलैः परमेश्वरम् ॥ ५
श्रद्धाभक्तियुतैः पुंभिस्समाराध्योऽव्ययः प्रभुः । प्रयच्छति च सर्वेषां सर्वाभीष्टं दयानिधिः ॥ ६
अन्तर्यागरतैर्वापि कार्यो यागो महत्तरः । आवश्यको बहिर्यागो धर्मकामार्थमुक्तये ॥ ७
बाह्यपूजोपकरणं यथा देवस्य चोदितम् । तथैव मनसा सर्वं कल्प्यमानःकरोति ॥ ८
इच्छाविहारनैवेद्यसिद्धवासिते समर्पितम् । इच्छया साधितञ्चापि शिवमिष्टं प्रयच्छति ॥ ९
सर्वथापि च पूजेयं मानसी फलदा मता । न कालनियमस्तत्र न देशस्य स्थलस्य वा ॥ १०
स्वचित्तकाशता यत्र तत्रान्तर्यजनं भवेत् । एवमाराध्य देवेशं ब्रह्मा ऽतिरोऽभिरक्षया शिवम् ॥ ११
पञ्चविंशदिमासाद्य विमुक्ता भयबन्धनात् । एवं देवा अपत्यशिन पूजिताऽवशिलाममिः ॥ १२

लिङ्गानि बहुधा लोके सन्ति शम्भोर्जगद्गुरो । स्वयम्भूतानि लिङ्गानि देवतास्थापितानि च ॥ १३
प्रतिष्ठितानि मुनिभिर्मनुष्यैरपि सत्तमे । दैत्यैरपि महाभागैर्गन्धर्वोरगराक्षसैः ॥ १४
पर्वताग्रे नदीतीरे काननेषु सरित्स्वपि । समुद्रतीरे लिङ्गानि सन्ति पूर्वस्य धूर्जटेः ॥ १५
तेषु लिङ्गेषु सान्निध्य विशेषोऽस्ति जगद्गुरो । स्वयमेव समुद्भूत स्वायम्भुवमुदाहृतम् ॥ १६
दिव्यानि विष्णुब्रह्मादिदेववृन्दार्चितानि च । ब्रह्मर्षिभिर्वसिष्ठाद्यैर्नारदाद्यैस्सुरर्षिभिः ॥ १७
आर्षाणि चार्चितानीह लिङ्गानि गुरुयोगिभिः । मनुष्यस्थापितानि स्युर्मानुषाणि चतुर्ष्वपि ॥ १८
देव्या सह महादेवस्सान्निध्य कुरुते सदा । ईशो वृष [illegible] स्थाणुर्देवि तिष्ठति यद्यपि ॥ १९
तेन पूर्णमिदं सर्वं पुरुषेण महात्मना । तथापि लिङ्गभेदेषु सान्निध्यस्य विशेषतः ॥ २०
विभोर्विलाससञ्चारो मनुष्यस्थापितेष्वपि । आर्षेष्वपि च लिङ्गेषु पद्भ्यां तिष्ठति लीलया ॥ २१
आसीन इव लिङ्गेषु देवतास्थापितेषु च । स्वायम्भुवेषु लिङ्गेषु शयान इव शङ्कर ॥ २२
अन्येष्वपि च लिङ्गेषु यथेच्छं क्रीडति प्रभुः । चतुर्ष्वपि च लिङ्गेषु प्रभुः स्वायम्भुवादिषु ॥ २३
इत्थंप्रकार देवेश क्रीडतीत्युपपद्यते । शेते आस्ते तिष्ठतीशस्सञ्चरत्यपि लीलया ॥ २४
यदुक्तमिह तस्यैवमुपमानं ब्रवीमि च । यत्र राजा स्वभवने कुत्रचित्सञ्चरञ्जनान् ॥ २५
काश्चित्सत्करोतीह विनिगृह्णाति काश्चन । पुनश्च तिष्ठन् सेवेह कुत्रचिद्भवनान्तरे ॥ २६
संभाषयति कांश्चेह नसंभाषयतीह च । आसीन कुत्रचित्स्थाने स एव जगतीपतिः ॥ २७
इष्टानिष्टानि केषांचित्करोति विकरोति च । शयान कुत्रचिद्वापि राजा सञ्चारभूमिषु ॥ २८
अलङ्कृता विराजन्ते ततोऽपि समलङ्कृता । यत्र तिष्ठति पादाभ्यामासीनो यत्र वा पुनः ॥ २९
ततोऽप्यलङ्कृता भान्ति यत्र शेते ततोऽधिकम् । एवमेवात्र लिङ्गेषु शम्भो स्वायम्भुवादिषु ॥ ३०
अलङ्कारविशेषोऽस्ति सान्निध्यस्तु विशेषतः । तत्र स्वायम्भुवे लिङ्गे सर्वानुग्रह आत्मनाम् ॥ ३१
सर्वेष्वपि च लिङ्गेषु तारतम्यक्रमेण च । एकेन राजदृष्टान्तमुक्तमस्मिन्महेश्वरे ॥ ३२
नन्दीश्वरस्य शयनमासनञ्च स्थितिर्गतिः । औपचारिकमेवास्य कल्प्यते लिङ्गभेदतः ॥ ३३
भक्त्या तस्मान्महादेवं यस्मिन् कस्मिंश्च शाङ्करे । स्वायम्भुवे च दैवे च मौनीन्द्रे मानुषेऽपि वा ॥ ३४
पुष्पैर्धूपैश्च वा पत्रैः पूजयेदिष्टसिद्धये । भक्त्या यत् श्रद्धया स्वर्के यजतामीश्वरेश्वरम् ॥ ३५
प्रपञ्चय्यखिलान्निष्ठानेतत्सम्यङ्मयेरितम् । वेदागमोक्तविधिना गुर्वनुग्रहचोदनात् ॥ ३६
अर्चनीयश्शिवो लिङ्गे स्वात्मनो हितमिच्छता । इति ब्रुवन्त मुनयस्सूत पप्रच्छुरुत्सुकाः । ३७
गुरुरेव हरिर्ब्रह्मा गुरुरेव हरश्च सः । गुरुरेव पिता माता भ्राता च गुरुरीश्वरः ॥ ३८
इति ब्रुवन्ति वै सर्वे तत्त्वज्ञदर्शी ब्रवीष्यहो । आश्रयात्त गुरोः कार्या शिवपूजा समाहिता ॥ ३९
गुरवः के समाख्यातास्तान् ब्रूहि मान् हितान् गुरून् । केषां चिद्गुरवस्सन्ति ते [illegible] गुरवस्सुव्रता ॥ ४०

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे पञ्चाशीतितमोऽध्यायः ॥

## ॥ अथ षडशीतितमोऽध्यायः ॥

### श्रीशिवेन आचार्य चतुष्टय रूपग्रहणम् ॥

हन्त वः कथयिष्यामि गुरून् भुवनपावनान् । देवानां गुरवस्सन्ति गन्धर्वोरगरक्षसाम् ॥ १
महात्मनां गणेन्द्राणां वीराणामपि योगिनाम् । मनुष्याणां विशेषेण ऋषीणाञ्च महात्मनाम् ॥ २
ब्राह्मणानां विशेषेण क्षत्रियाणां विशामपि । शूद्राणामपि सर्वेषां संकराणांच सर्वशः ॥ ३
तस्माल्लब्ध्वा गुरोरेषां पूजा कार्याऽविकल्पतः । पुरा देवं समासीनं कैलासे पर्वतोत्तमे ॥ ४
देवी गिरीन्द्रजा नन्दी ब्रह्मा च भगवान् हरिः । ऋषयश्च महात्मानः सत्यव्रत परायणाः ॥
प्रणम्य परया भक्त्या प्रार्थयन्तिस्म सादरम् ॥ ५
प्रतिसर्गं वचूतानां ब्रह्मणां शास्त्रविस्तरम् । उपदेष्टा त्वमेवेश कालावच्छेदवर्तिनाम् ॥ ६
कालावच्छेदयुक्तानां गुरूणां त्वं गुरुर्विभुः । आगमार्थानिहास्मभ्यमुपदेष्टुं त्वमर्हसि ॥ ७
भवामः कृपया देव कृतार्था जगतीपते । इति संप्रार्थितश्शम्भुस्सनन्दीशपूर्वकैः ॥ ८
उवाच च तदा शंभुरासनात्तम पर्वते । पुष्पगिर्याख्यश्टङ्गेऽस्ति गृहं सर्वमनोहरम् ॥ ९
तत्रास्थाय वपुश्चापुराचार्यस्यातिपेशलम् । देवीदैमातुरस्कन्दब्रह्मादिभैरवभूतपान् ॥ १०
वीरभद्रादिगणपान् वेदागमशिरांसि च । अध्यापयामास विभुः परमाचार्यमूर्तिमान् ॥ ११
श्रामर्दनगिरिरिति श्टङ्गमन्यन्मदन्तरम् । तत्राचार्यवपुर्धृत्वा नन्दिकेश्वरपूर्वकान् ॥ १२
महाकालं तथा सोमनन्दिनं प्रमथान् गणान् । वेदागमार्थानखिलान्विभुराचार्यमूर्तिमान् ॥ [illegible]
अन्यच्छृङ्गं महद्वोळगिरिनामाथ विश्रुतम् । आश्रित्य गौर्वीं मूर्तिं हरिब्रह्मसुरेश्वरान् ॥ १४
अध्यापयामास विभुस्त्वागमार्थाननेकशः । भिक्षाचार्येऽखिलशृङ्गे श्रुत आचार्यविग्रहः ॥ १५
सनकादिमुनीन्द्रेभ्यो वेदाभ्यासांगमानदात् । चतुर्ष्वपि च शृङ्गेषु चतस्रो मूर्तयः श्रुताः ॥ १६
ताभ्यः पश्चान्मुनिश्रेष्ठा बहवोनुचकल्पिरे । पुनः कालेषु गच्छत्सु द्वापरान्तेषु च क्वचित् ॥ १७
शासनेष्वागमार्थेषु वैदिकेष्वपि कल्पशः । शिवानुमत्या शिष्यास्ते चतुर्गिरिनिवासिनः ॥ १८
आचार्यस्याथ यच्छिष्यः पुष्पगिर्याश्रयस्तु च । आमर्दवगिरेश्शिष्यस्तथा गोळगिरिप्रभोः ॥ १९
भिक्षाचार्याश्रयस्यान्तेवासीन सह शिष्यकैः । अवतीर्य भुवं सर्वे तत्तत्सन्तानसहिताः ॥ २०
सदाऽस्मनोऽनुगृह्णन्ति कांश्च यांश्च (येषां) भवेत ते । सहस्य दीक्षया शैव वेदागमसमर्पया ॥ २१
चर्या क्रिया योगशास्त्रैरनुगृह्यात्मयोगिनाम् । उत्पाद्य तत्तत्सन्तानगुरून् सर्वीरनेकशः ॥ २२
स्वस्ववेदागमार्थवान् कृत्वा स्वात्मसमानिमान् । आचार्यैरेवोऽपि शिष्यैस्तांस्तत्तत्सन्तानमागताः ॥ २३
पुनः कैलासमचलं गन्तारस्तेच देशिकाः । तासन्ततीया गुरवः पारंपर्यक्रमेण ते ॥ २४
अस्मिन् लोकेऽनुगृह्णन्ति सर्वान् पकालयात्मनः । तस्माद्गुरुरहिंसो ज्ञेयो मूर्तिमानागमार्थवित् ॥ २५
तदनुग्रहतः पूजा शंभोस्सदा फलप्रदा । तदनुग्रहतो विद्यास्सर्वाःसिद्धयन्ति नान्यथा ॥ २६
तदनुग्रहहीनानां विद्यास्सर्वा विनिष्फलाः । अध्येतव्या गुरोरेव सर्वविद्याश्च सर्वशः ॥ २७
पुरा दोषो विनाऽऽचार्य विद्यासु कुशलोऽभवत् । भवदद्विष्णुना साधंमस्वन्तकुशलो मुदा ॥ २८
तत्रस्था मुनयो देवास्सर्वाश्शुरगोपयोगिनम् । भगवस्वस्तु तदाऽऽपेत्य माह विष्णुं समागते ॥ २९
अयं गुरुमुखादेव विद्याः प्राप सुखाश्रमः । अयं नैवतु संप्राप्तो विद्याचोदो महात्मनि ॥ ३०
पुनश्च दोषमालोक्य ब्राह्मणस्यो मुनीश्वरः । भवानपीतेव गुरोर्विद्याचोदोऽद्विपुरुष ॥ ३१
सर्वमाप्यो हि विदुषां समुज्झितगुरुर्जनः । विद्याश्च फलदा न पापस्य नास्ति गुरोर्गुरुः ३२

उक्त्वेति शेषमाहेत्थं पुनश्चागस्त्य आत्मवान् । असौ तेऽस्तु गुरुर्विष्णुर्जगत्त्रयगुरुर्महान् ॥ ३३
अस्माल्लब्धोपदेशस्त्वमत ऊर्ध्वं कृतीभव । ततस्त्वं गुरुणाऽनेन प्रसन्नं कुरु नान्यथा ॥ ३४
अगस्त्यवचनं श्रुत्वा समाह भुजगोत्तमः । स्पर्धमानस्त्वहं येन स्यां शिष्यस्तस्य वै कथम् ॥ ३५
परिहास्यं मुनेर्वाक्यमिदं तव न संशयः । मम मास्तु गुरुर्लोके विद्याहेतोर्मुनीश्वर ॥ ३६
यस्त्वयं स्पर्धयिष्येऽहं पूर्वमावसनया मुने । ब्रुवन्तमेवं शेषाहिं पुनराह मुनीश्वरः ॥ ३७
महाक्लिष्टमिदं वाक्यं फणे शेष महामते । तस्मात्त्वमस्य वै विष्णोर्भव त्वं शयनासनम् ॥ ३८
त्वया याऽधिगता विद्या सा न रोचतु तेऽधुना । गदन्तमेवं स मुनिं भीतभीतः प्रणम्य तम् ॥ ३९
प्राञ्जलिः प्रश्रयेणामुं प्रार्थयामास भूरिशः । मयाऽऽलपितं सर्वं सोढुमर्हसि वै मुने ॥ ४०
माभून्मम न शापोऽयं मम कोप समुद्भवः । शापमुक्तिं ममाद्य त्वं कुम्भयोने वदाधुना ॥ ४१
करेति भाषमाणं तं पुनराह मुनीश्वरः । त्वमस्य विष्णोश्शेषाहे शयानस्य कदाचन ताम् ॥ ४२
चिरं प्राप्स्यस्येव त्वं ध्यायमानो दिवानिशम् । अस्माल्लब्धोपदेशस्त्वं प्रसादात्गरुडध्वजात् ॥ [illegible]
समाराध्य महादेवं सुप्रसन्नो विधाय तम् । पश्चात् हेयानि सर्वाणि काद्रवेय गमिष्यसि ॥ ४४
तस्माद्गुरुकटाक्षेण श्रेयस्सर्वोत्तमं ध्रुवम् । पूजया शूलिनस्सिध्येन्नान्यथा मुनिसत्तमाः ॥ ४५
एतद्गुरुशिवपूजाया माहात्म्यमपि वर्णितम् । यथाशक्ति यथाचोक्तं व्यासेन गुरुणा मम ॥ ४६
इयत्तया परिच्छेत्तुं ब्रह्मणापि न शक्यते । अतःपरन्तु योगस्य स्वरूपमनुवर्ण्यते ॥ ४७
ज्ञानस्य च मया सम्यक् शृणुध्वं श्रद्धया सह । एतच्छिवपूजामाहात्म्यं भक्त्या यश्शृणुते नरः ॥ ४८
न पीड्यते महापापैरुपपापैरनेकशः । ब्रह्महा गुरुहा चैव स्तेयी च गुरुतल्पगः ॥ ४९
सुरापः पापसमाचारो मातृहा पितृहाऽपि वा । माहात्म्य श्रवणादेव मुच्यते नात्र संशयः ॥ ५०
विद्याकामो लभेद्विद्यां धनकामो लभेद्धनम् । पुत्रकामो लभेत्पुत्रान् पशुकामः पशून् बहून् ॥ ५१
स्त्रीकामः स्त्रियमाप्नोति भूकामो भुवमुत्तमाम् । तस्मात्सर्वप्रयत्नेन श्रोतव्यमिदमादरात् ॥ ५२
इत्थं मुनीन्द्राः परमेश्वरस्य लिङ्गादि पूजां गुरुदक्षिणाञ्च ।
विद्यास्वरूपं कथितं च भक्त्या श्रुतं च युष्माभिरहीनभव्याः ॥ ५३

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे षडशीतितमोऽध्यायः ॥

---

॥ अथ सप्ताशीतितमोऽध्यायः ॥

अष्टाङ्गयोग निरूपणम् ॥

अतः परं प्रवक्ष्यामि शिवयोगमनुत्तमम् । अनुष्ठितायां चर्यायां क्रियायां विधिना द्विजाः ॥ १
चर्यां तु प्रातरुत्थाय शौचाचमनपूर्वकम् । स्नात्वा विभूतिरुद्राक्षं धृत्वा वैवानुपीनपि ॥ २
सन्तर्प्य पुष्पाण्याऽऽरामात्समानीयातिनिर्मलः । अभिषेचं जलं तद्वदनुलेपन पूर्वकम् ॥ ३
आसीय तत्तत्कृत्यानि निर्वृत्यच यथाक्रमात् । दीपैर्देवालय सर्वमलङ्कुर्याद्विचक्षणः ॥ ४
शिवभक्तवचश्शृण्वन् शिवसेवापरायणः । आचरेदेवमनिशं चर्यां पापप्रणाशिनीम् ॥ ५
इयञ्चर्येति विख्याता क्रियातु समनन्तरा । पञ्चशुद्धिं विधायाग्रे चान्तर्यजनपूर्वकम् । ६

शिवञ्च पूजयेत्पश्चादग्निकार्यं समाचरेत् । क्रियामप्येवमखिलां निर्वृत्यैव यथाक्रमम् ॥ ७
योगे युञ्ज्यान्मनः पश्चाच्छैवे सकलपापहे । अष्टाङ्गानि चैतस्य कथितानि महात्मभिः ॥ ८
प्रथमस्तु यमः प्रोक्तो नियमस्तदनन्तरः । आसनञ्च ततः पश्चात् प्राणायामोऽपि कीर्तितः ॥ ९
प्रत्याहारो धारणा च ध्यानञ्चैव समाधिना । अहिंसासत्यमस्तेयं परद्रव्यानपेक्षता ॥ १०
ब्रह्मचर्यममात्सर्यं यमः प्रोक्तो मनीषिभिः । अक्रोधो लब्धसन्तुष्टिः स्नानतर्पणमेव च ॥ ११
आचार्यशिवभक्तानां वाक्यश्रवणमादरात् । शिवपूजासहायञ्च दया च नियमः स्मृतः ॥ १२
कृष्णाजिनं वा वैयाघ्रमजिनं वा विशेषतः । अधिष्ठायासनं पद्मं कृत्वाऽन्यद्वा यथेच्छया ॥ १३
स्वशरीरानुकूल्येन प्राणस्यो यो दमाननः । समधियैव प्रतिमाख्योगसिद्धिं विचारयन् ॥ १४
पूरयेद्वायुमिड(ळ)या मात्रा षोडशिकं द्विजाः । कुंभयेञ्च चतुष्षष्टिमात्राकालं विशेषतः ॥ १५
मात्रा द्वात्रिंशता वायुं दक्षिणेन विरेचयेत् । एवं दक्षिणमार्गेण पूरयन् कुम्भयेत्तथा ॥ [illegible]
वामतो निस्सरेद्वायुं क्रमेण विधिपूर्वकम् । प्राणायामोऽयमुद्दिष्टस्स द्विधा भिद्यते द्विजाः ॥ १७
सगर्भः प्रथमः पश्चात्तथाऽगर्भोऽपि चापरः । जपध्यानसमायुक्तसगर्भ इति कथ्यते ॥ १८
अगर्भः केवलः प्रोक्तः प्राणायामो महीसुराः । जप्या पञ्चाक्षरी ब्रह्मक्षत्रविड्भिस्सतारका ॥ १९
शूद्रैः प्रणवनिर्मुक्ता जप्या खलु महीसुराः । तिक्ताम्लकटुरूक्षात्युष्णलवणमपि त्यजेत् ॥ २०
भुञ्जीयान्मितमेवान्नं क्षीराज्यं यथाविधि । पिपासुश्च पिबेद्वारि सोष्णं किञ्चिद्यथासुखम् ॥ २१
पञ्चेन्द्रियाणां विजयं प्रत्याहारं वदन्ति [illegible] । धारणा शिवपादाब्जयुगले चित्तधारणम् ॥ २२
ध्यानं शिवैकविज्ञानं द्विजा हृत्कमले मता । समाधिरद्वयाद्वैते सम्यक्सत्यानन्दरूपिणि ॥ २३
साक्षात्समाधनं स्वस्य विस्मृत्य विषयान् बहून् । अष्टाङ्गं योगमेवमभ्यसेद्यस्तु पण्डितः ॥ २४
सिध्यन्ति सिद्धयस्तस्य चाष्टावपि महात्मनः । अष्टविभ्रमपीठाग्रं सूर्यकोटिसमप्रभम् ॥ २५
हृन्मध्ये पश्यति शिवं सर्वालङ्कारसंयुतम् । मूर्तानैतान्महेशस्य पञ्चविंशतिकानपि ॥ २६
सदाशिवञ्च हृदये साक्षात्पश्यति सुव्रताः । स्थितस्थानञ्च तथा सञ्चरस्थानसमन्वितः ॥ २७
सर्वदा सर्वकार्येषु शिवमेव हृदि स्मरन् । एवञ्चरन्ति ये योगं शिवस्य परमात्मनः ॥ २८
ते [illegible] निर्दग्धसकलपापौघाद्यास्सुरप्रियाः । लभन्ते वाञ्छितं सर्वं देहान्तेऽपि शिवात्मना ॥ २९
सायुज्यं यान्ति देवस्य परमानन्दविग्रहम् । एवं वः कथितं सम्यग्योगमार्गो मया द्विजाः ॥ ३०

इति श्री स्कान्दे महापुराणे शाङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे सप्ताशीतितमोऽध्यायः ॥

---

॥ अथ अष्टाशीतितमोऽध्यायः ॥

पशुपाशपतीनां निरूपणम् ॥

सूतः — अथातस्संप्रवक्ष्यामि शिवज्ञानमनुत्तमम् । यच्छ्रुत्वा मुच्यते घोरात् पापात्संसारसंभयात् ॥ १
ऋषयः — किं तद् ज्ञानमिति प्रोक्तं शिवज्ञानेन किं पद । ज्ञाता वा किं फलं तस्य ब्रवीतु त्वं महामते ॥ २
सूतः — पशुपाशपतिज्ञानं यत्तद् ज्ञानमितीरितम् । यदेव मुनिश्रेष्ठैस्संज्ञाभेदेन वर्ण्यते ॥ ३
ब्रह्मानन्दमयं दुःखे ज्ञानेनैव निवार्यते । ज्ञानं शैवपरिच्छित्तिर्ज्ञेयञ्च त्रिविधं मतम् ॥ ४

अजडश्च जडश्चैव नियन्ता च तयोर्द्वयोः । पशुः पाशः पतिश्चेमे वर्ण्यन्ते ब्रह्मवादिभिः ॥ ५
अजडो यः पशुः प्रोक्तस्तेऽक्षरः परिकीर्तितः । पाशः प्रोक्तो जडो योऽयं क्षरः परिकीर्तितः ॥ ६
क्षराक्षरपरश्शंभु [illegible] र्द्वयोऽप्येते ह्यनादयः । योऽक्षरः पशुरित्युक्तः स एव पुरुषः स्मृतः ॥ ७
क्षरात्मकस्तु यः पाशः प्रकृतिस्सा निगद्यते । क्षराक्षरपरो यस्तु तयोः प्रेरक ईश्वरः ॥ ८
मुनयः — एतावेव वयं विद्मः पृथक्पृथगसङ्करम् । ब्रूहि सूत महाबुद्धे यथैतान्विद्महे वयम् ॥ ९
स्वरूपञ्चापि चैतेषां क्रियाश्च यद् तत्त्वतः । सूतः — माया प्रकृतिरुद्दिष्टा शक्तिर्माहेश्वरी जडा ॥ १०
नवित्साधरमाकाशे विलसन्ती शिवाश्रया । पुरुषस्त्वावृतो जीवो मायया जडरूपया ॥ ११
स्वरूपावरणं प्रोक्तं मलशब्देन सूरिभिः । आवृतोऽसौ मलेनैव भुङ्क्ते कर्मफलं स्वकम् ॥ १२
कर्मैव हेतुर्भोगार्थं निवृत्तिस्तु मलक्षयात् । पुण्यपापात्मकं कर्म सुखदुःखफलञ्च तत् ॥ १३
तदीयानुभवो भोगश्शरीरं भोगसाधनम् । बाह्यान्तः करणद्वारा भोक्ता पशुरुदाहृतः ॥ १४
नैवास्य भविता कश्चिन्नासौ भवति कस्यचित् । पथिसङ्गम एवायं दारैरन्यैश्च बन्धुभिः ॥ १५
छादितश्च वियुक्तश्च शरीरैरेव लक्ष्यते । चन्द्रबिम्बवदाकाशे तरलैरभ्रसञ्चयैः ॥ १६
अनागता अतीताश्च तनवोऽस्य सहस्रशः । यथा वासांसि जीर्णानि विहाय वृणुते जनः ॥ १७
एवं शरीराण्यप्यात्मा याचते नूतनं पुनः । आमोक्षं संसरत्येव मत्स्यः कूलद्वयं यथा ॥ १८
स्वर्गपातालभूलोकेष्वात्मकर्मवशानुगः । असौ बद्धः पशुः पाशैस्सुखदुःखाशनः पशुः ॥ १९
ईशलीलाविनोदार्थमिति शास्त्रस्य निर्णयः । पिपीलिकान्ता ब्रह्माद्याः पशवः परिकीर्तिताः ॥ २०
पशूनामेव सर्वेषां प्रोक्तमेतन्निदर्शनम् । मुनयः — या सा प्रकृतिरुद्दिष्टा त्वया मायेति चाधुना ॥ २१
तस्या यद् स्वरूपं नस्तत्कार्यञ्च महामते । सूतः — सैषा प्रकृतिरव्यक्ता सा महेशाश्रया पुनः ॥ २२
पशूनामपि सर्वेषां मायाशब्देन कथ्यते । साऽव्यक्तं प्रकृतिर्माया प्रधानमिति नामभिः ॥ २३
कथिता सा ह्युपादानं कारणञ्चाखिलात्मनाम् । [illegible] कालतस्त्वभिव्यक्तमनभिव्यक्तलक्षणम् ॥ २४
सुखदुःखविमोहात्मा त्रिधैव गुणभेदतः । सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ॥ २५
तन्मात्रपञ्चकञ्चैव भूतपञ्चकमेव च । ज्ञानेन्द्रियाणि पञ्चैव पञ्च कर्मेन्द्रियाणि च ॥ २६
मनोबुद्धिरहङ्कारश्चित्तञ्चेति चतुष्टयम् । समासादेवमव्यक्तं सविकारमुदाहृतम् ॥ २७
तत्कारणदशापन्नमव्यक्तमिति कथ्यते । व्यक्तं कार्यदशापन्नं शरीरादि घटादिवत् ॥ २८
व्यक्तमेतच्छरीरादि नाव्यक्तादतिरिच्यते । तस्मादव्यक्तमेवैकं कारणं करणानि च ॥ २९
शरीरञ्च तदाधारं तद्भोग्यञ्चापि नेतरत् । पशुमिराप्तमात्मानं मायया मोहिता बुधाः ॥ ३०
एतान्येव प्रशंसन्ति पशून् ब्रह्मादिकानपि । ब्रह्माहं ब्राह्मणश्चाहं काणश्च बधिरः कृशः ॥ ३१
श्यामोऽहमपि रक्तोऽहं कृशोऽहं मूक एव च । एभ्यो विलक्षणो ह्यात्मा पश्यन्नेवान् स्वलीलया ॥ ३२
अस्मदीयं शरीरं हि शरीरं नाहमित्यपि । अज्ञान्येतानि सर्वाणि न पश्यन्ति शरीरिणाम् ॥ ३३
तत्र तानि च देवेशः पश्यत्येव न तं पुनः । तानि जीवोऽपि सर्वत्र परिपूर्णमपीश्वरम् ॥ ३४
यदा पश्यति देवेशं नियन्तारं हिरण्मयम् । विधूय पुण्यं पापञ्च तदैवैति तदैक्यताम् ॥ ३५

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे अष्टाशीतितमोऽध्यायः ॥

---

॥ अथ एकोननवतितमोऽध्यायः ॥

श्रीपरमेश्वरस्य पतित्वनिरूपणम् ॥

सूतः —

य एव जीव आख्यातः परतन्त्रः पशुः स्मृतः । स तु देहे स्थितो देही शिवेन समधिष्ठितः ॥ १
अवस्थापञ्चकं तस्य कथितं वेदवादिभिः । अनन्तावैत आत्मानदर्शनाद्वेशवर्तिनः ॥ २
केवलावस्थास्ततः केचित्सकलाशुद्धसंज्ञिताः । तेषु स्यात्परमेशोऽयमुन्निनीषुः कृपावशात् ॥ ३
तस्मिञ्छक्तिर्निपतति साधुकर्म करोति सः । लब्धशास्तु निष्ठावाञ्छिवशास्त्रोक्तवर्त्मसु ॥ ४
तन्निष्ठस्तत्परो भूत्वा शिवे लीनमनास्सदा । मध्ये मध्ये यदा चित्तं शिवात्पृथगसौ तदा ॥ ५
शिवालयदिदृक्षार्थं विहरत्येव नैष्ठिकः । करोति च महेशस्य कैङ्कर्यादिकमप्यसौ ॥ ६
लिङ्गार्चामपि देवस्य करोति बहुविस्तराम् । शिवभक्तान् संयतात्मा सर्पयत्येव भूरिशः ॥ ७
सततं भस्मरुद्राक्षमालालङ्कृतविग्रहः । पञ्चाक्षरीजपासक्तस्सर्वप्राण्यभयप्रदः ॥ ८
विहरत्येव निष्ठावाञ्जीवन्मुक्तस्स ईरितः । एव ज्ञानी विरक्तश्च मतिमान् लोकपूजितः ॥ ९
नानेन सदृशः कश्चित् त्रिषु लोकेषु विद्यते । एतस्य पूजनादेव पूजितः परमेश्वरः ॥ १०
अस्यावज्ञा शिवावज्ञा सत्यमेव न संशयः । अस्य जिह्वाममास्थाय भुङ्क्ते देवः स्वयं शिवः ॥ ११
अस्य दृष्टिं गताश्सर्वे मुक्ता एव ते । तस्मात् ज्ञानेन वै मुक्तिरित्येतत् सत्यं मुनीश्वराः ॥ १२
त्रिलोक्यां ज्ञाननिष्ठस्य दुर्लभं न विद्यते । ऋषयः — पशुपाशौ श्रुतौ विप्रस् पतिं नो ब्रूहि साम्प्रतम् ॥ १३
यद् ज्ञात्वा न पुनर्जन्म लभते मानवो भुवि । सूतः — हन्त वक्ष्यामि देवदेवस्य वैभवम् ॥ १४
यस्य श्रवणमात्रेण कृतार्थः पुरुषो भवेत् । अस्ति कश्चिन्मुनिश्रेष्ठा भुवि विश्वाधिकश्शिवः ॥ १५
अनन्तमहिमापारः कल्याणगुणसागरः । संसृज्य विश्वमादौ तद्धोतान्से सञ्चुकोच सः ॥ १६
विश्वतश्चक्षुरेवायमुताथं विश्वतोमुखः । तथैव विश्वतो हस्तो विश्वतः पादसंयुतः ॥ १७
सर्वज्ञः सर्वकर्ता च सच्चिदानन्दविग्रहः । परिपूर्णः परञ्ज्योतिः पशुपाशविमोचकः ॥ १८
अनादिमलनिर्मुक्तो विभुर्व्यापी सनातनः । निष्कलस्सकलश्चायं अकलङ्क इतीरितः ॥ १९
स क्रियोपाधिभेदेन भिद्यतेऽनेकधा विभुः । शिवोऽमूर्तिश्च मूर्तिश्च कर्ता कर्माद्ययोश्वरः ॥ २०
त इमे पञ्चसादाख्याः परमेश्वरसम्भवाः । स पुनर्विद्यते पञ्चसादाख्य षडङ्गवान् ॥ २१
सदाशिवोऽयमपरो महानपि सदाशिवः । पञ्चविंशति सङ्ख्याका मूर्तयोऽस्य प्रकीर्तिताः ॥ २२
करोति पञ्चकृत्यानि सर्वदाऽयं महेश्वरः । सृष्ट्याख्यं प्रथमं कृत्यं द्वितीयं तस्य रक्षणम् ॥ २३
तृतीयं तथा संहारस्तिरोभावश्चतुर्थकः । पञ्चमोऽनुग्रहः प्रोक्तः पञ्चकृत्यानि धूर्जटेः ॥ २४
स एवैकः परं ब्रह्म तदन्ये पदार्थाः स्मृताः । पश्वा सर्वानिमान् पाशैः शरीरकरणादिभिः ॥ २५
क्रीडत्येव सदा शंभुरसर्वकत्वादिशक्तिमान् । लीलासाधनभूतास्ते ब्रह्माद्याः पदार्थाः प्रभोः ॥ २६
सर्वेशोऽथमतस्सांभुस्सृजत्यवति हन्ति च । तथा पतत्सदादेवस्सर्वानुग्राहकः स्मृतः ॥ २७
योधोऽनादिः परोऽस्येति मोहकस्सकलात्मनाम् । स्वतन्त्रशक्तिर्देवेशः पशून्मोचयति प्रभुः ॥ २८
अलुप्तशक्तिमान्यस्मात्पञ्चकृत्यपरस्सदा । अनन्तादाजयोऽस्त्येति त्रिमिपद्मखिलात्मनाम् ॥ २९
एवं षडङ्गवान् पञ्चब्रह्मरूपी सदाशिवः । ज्ञेयः पशुपतिः सर्वैः पशुपाशविलक्षणः ॥ ३०
अस्य ज्ञानेन सर्वेषां बन्धमुक्तिर्नचान्यथा । अमुं ज्ञात्वा शिवं शान्तिमेति लोकं तरत्यपि ॥ ३१

चर्या क्रिया च योगश्च ज्ञानचेति चतुर्विधम् । आत्मनां बन्धमुक्त्यर्थं कल्पितानि शिवेन वै ॥ ३२
चर्यानुष्ठानतो मर्त्यः शिवसालोक्यमेष्यति । सायुज्यं कालतो यान्ति तस्माच्चर्या च मुक्तिदा ॥ ३३
क्रियापादपरो मर्त्यः शिवसामीप्यमेष्यति च । आप्नोति शिवसायुज्यं ज्ञानेनैव तु केवलम् ॥ ३४
योगाभ्यासरतो यस्तु योगपादोक्तवर्त्मना । संप्राप्य शिवसारूप्यं पश्चात्सायुज्यमेत्यसौ ॥ ३५
ज्ञानाभ्यासपरो यस्तु ज्ञानपादोक्तवर्त्मना । अविलम्बेन सायुज्यमाप्नोत्यस्य प्रभावतः ॥ ३६
तस्मात् ज्ञानेन वै मुक्तिर्ज्ञानं त्रैलोक्यदुर्लभम् । विज्ञानेनच सर्वेषां बन्धमुक्तिर्न संसृतेः ॥ ३७
लब्धज्ञानो नरो लोके जीवन्मुक्तो न संशयः । यं यं कामयते ज्ञानी तं तमाप्नोत्यसंशयः ॥ ३८
तस्मात्सर्वेषु लोकेषु ज्ञानिनां नास्ति दुर्लभम् । योऽधीत्य चतुरो वेदान् सषडङ्गपदक्रमान् ॥ ३९
पुराणन्यायमीमांसा धर्मशास्त्रपुरस्सरान् । सर्वागमार्थतत्त्वज्ञस्समयागततत्त्ववित् ॥ ४०
पतिं पाशान् पशूंश्चैव तत्तल्लक्षणलक्षितान् । ज्ञात्वा ज्ञानेन तेनैव ज्ञाताऽद ज्ञेय ईश्वरः ॥ ४१
ज्ञानञ्च स्वात्मनिष्ठं तद्विज्ञेयकविषयं मतम् । ज्ञात्वैतत् त्रितयं विद्वान् सन्निष्ठो नियतेन्द्रियः ॥ ४२
स जीवन्नेव मुक्तश्च मोचकश्शिवसम्मतः । पतिश्शिवः समाख्यातः परिपूर्णः स्वभावतः ॥ ४३
पञ्चसादाख्यरूपेण पञ्चब्रह्म षडङ्गवान् । सदाशिवस्वरूपेण महांश्चैव सदाशिवः ॥ ४४
पञ्चविंशतिमूर्त्यात्मा परापरविभागवान् । अनादिरेव देवेशस्सर्वानुग्राहकश्शिवः ॥ ४५
पञ्चकृत्यपरो नित्यमात्मनामर्थसिद्धये । एष सदाशिवस्थानस्थः करोति सकलं प्रभुः ॥ ४६
वेत्तीति तत्त्वतो यस्तु स वै ज्ञानी मुनीश्वराः । इति श्रुत्वा मुनिश्रेष्ठास्सर्वे ज्ञानं शिवात्मकम् ॥
अपृच्छन् सूतमनघं सहर्षाविष्टमानसाः ॥ ४७

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे एकोननवतितमोऽध्यायः ॥

॥ अथ नवतितमोऽध्यायः ॥

श्रीपरमेश्वरस्य पञ्चविंशतिमूर्तीनां कृत्यानि ॥

मुनयः — यस्य ब्रह्मणस्सूत पञ्चविंशतिविग्रहाः । अनादय इति प्रोक्तास्त्वयेदानीं पुरा श्रुतम् ॥ १
कैलासशिवलोकादौ कार्यार्थमिति नः श्रुतम् । एतत्संशयं छिन्धि न त्वदन्योऽस्ति तत्त्ववित् ॥ २
सूतः — पञ्चविंशतिमूर्तीनामनादित्वं मुनीश्वराः । यथा श्रुतं तथा वक्ष्ये शृणुत भक्तियोगतः ॥ ३
शिवस्य नित्यशुद्धस्य पञ्चविंशतिमूर्तयः । अनाद्या एव देवस्य सन्ति नित्या महेशितुः ॥ ४
शुद्धे माहेश्वरे तत्त्वे कार्यार्थं विभुना धृताः । किमर्थमिति चेद्विप्रास्तच्छृणुध्वं ब्रुवतो मम ॥ ५
आत्मनामुद्भवार्थं तु लिङ्गोद्भव उदाहृतः । सर्वात्मना महेशेन यादृशी मूर्तिरादृता ॥ ६
आत्मानश्चापि ते सर्वे तादृशाश्च भवन्ति वै । सुखासनात्मिका मूर्तिर्निर्विकारा द्वितीयका ॥ ७
आत्मानश्चापि ते यस्यै निर्विकारा भवन्ति वै । तस्माद् देवः स्वा शक्तिमुमारूपा यतः प्रभुः ॥ ८
ततस्सर्वेऽपि चात्मानः पाणिग्रहणकाङ्क्षिणः । तृतीया सा ततो मूर्तिरुमापरिणयोन्मुखी ॥ ९
कल्याणसुन्दरा मूर्तिः कृतकल्याणरूपिणी । अर्धनारीश्वरीमूर्तिरात्मना मोहकारिणी ॥ १०
तस्माच्च कृतकल्याणा रमन्ते स्त्रीभिरन्वहम् । मोहेन महता युक्ताः कृतशास्त्रपरिश्रमाः ॥ ११
सोमास्कन्दो यतः स्वामी मूर्तिमानभवच्छिवः । आत्मानोऽपि ततो लब्धपुत्राः स्युर्न चान्यथा ॥ १२
प्रससाद यतश्चक्रं विष्णवे विश्वयोनये । तत एवात्मवर्गोऽपि लब्धभोगो न चान्यथा ॥ १३

त्रिमूर्तिमूर्तिमान्देवो भगवानीश्वरो यतः । आत्मानोऽपि ततो मूर्तित्रयं विन्दन्त्ययत्नतः ॥ १४
पुण्यपापे समीहस्व चात्मनामीश्वरेश्वरः । प्रयच्छति स्वात्मशक्तिपरां हरिहरात्मना ॥ १५
परमेशः कृपासिन्धुः परात्परतरः प्रभुः । भक्तानामुपदेशार्थं दक्षिणामूर्तिमाश्रितः ॥ १६
अज्ञातमिममेवैकं ज्ञात्वा जन्मनि धीरधीः । प्रपद्यन्तेऽस्य देवस्य मोक्षार्थं दक्षिणामुखम् ॥ १७
तस्मात्सर्वात्मनां मुक्तिर्दक्षिणामूर्तिसेवया । भाविन्यान्यानपि सुराद्यमुक्तिस्संसृतेर्नृणाम् ॥ १८
भिक्षामटति या मूर्तिश्शंभोः परमशोभना । आत्मभ्यस्समात्तु पक्षेभ्यस्तनुते भोगसंग्रहम् ॥ १९
अत एव तु यो वेद परे व्योम्नि प्रतिष्ठितम् । गुहायां स्वात्मनः मयं ज्ञानमानन्दमद्वयम् ॥ २०
सोऽश्नुते ब्रह्मणा तेन कामान् सर्वान् विपश्चिता । कङ्कालाख्यापि या मूर्तिर्देवेन समलंकृता ॥ २१
तया पक्षात्मनामीशो विदधाति विरागताम् । विषयेभ्यस्समस्तेभ्यस्तस्मादेते विरागिणः ॥ २२
संहृत्य काममीशानो ललाटनयनाग्निना । विधार्य कामजां पीडां पक्षेभ्यः प्रददौ सुखम् ॥ २३
या मूर्तिः कामसंहारनिरता परिकीर्तिता । कालं संहृत्य देवेशः कालकालत्रियंबकः ॥ २४
पक्षात्मनां भयं कालात्सजहे दयया यतः । कालसंहारिणी मूर्तिः कथिता सा मुनीश्वरैः ॥ २५
बिभ्रती या जलंधरस्य मूर्तिं दधे जगद्गुरुः । निगृहीतस्तया कोपो योगिनाममलात्मनाम् ॥ २६
त्रिपुराख्यं पुरीणाञ्च मूर्तिस्संहारकारिणी । तया गुणत्रयं शंभुस्संहृतात्माममलात्मनाम् ॥ २७
या मूर्तिर्दारुणाकारा नारसिंहहरा परा । तया पक्षात्मनां कर्ममाये ते संहृते उभे ॥ २८
कालकूटहरा मूर्तिर्नीलकण्ठाख्या परा । तयाऽणवमलं घोरमनादिमयमाहृतम् ॥ २९
या त्रिपादा चतुष्टया द्विशीर्षा सप्तबाहुका । तया पक्षात्मनां चर्याक्रियायोगाश्च कारिताः ॥ ३०
अजैकपाच्च या मूर्तिरनन्तमहिमास्पदा । तया पक्षात्मनो ज्ञानपादानुष्ठानशीलता ॥ ३१
या शक्तिर्मूर्तिर्देवी मूर्तिस्सर्वैकबन्धविवर्जिता । तयाऽऽत्मानोऽपि पक्षास्ते सर्वसङ्गविवर्जिताः ॥ ३२
आरूढा या वृषं धर्मप्रदिराजाहृति परम् । सा मूर्तिस्सर्वपक्षाणां प्रसादं कर्तुमुद्यता ॥ ३३
चन्द्रशेखरिणि मूर्तिश्चन्द्रखण्डशिरोमणेः । तया तीर्णास्तु आत्मानो जन्ममृत्यू महाबलौ ॥ ३४
या मूर्तिः परमानन्दभरा दिव्यैकसाक्षिणी । नृत्यस्थानमुपास्थाय पादेनैकेन लीलया ॥ ३५
तयैवानन्दितस्सर्वं रसं लब्ध्वेव हि श्रुतिः । पक्षाधारागया मूर्तिः कृपासिन्धोरुमापतेः ॥ ३६
आनन्दाम्बुनिधौ मग्नानात्मनः कुरुते ध्रुवम् । तस्मादेता महेशस्य मूर्तयः पञ्चविंशतिः ॥ ३७
आद्यावेषात्ममोक्षार्थं स्वीकृता विपुला द्विजाः । दृश्यैव महेशेन तत्तत्कालोचितं ध्रुवम् ॥ ३८
स्थिराधीतः स्थिरत्याच्च स्थिरो गिरिरिति हि श्रुतिः । स्वतन्त्रात्क्रियात्वस्मिन् हेतुत्वमावधिपादकः ॥ ३९
न तिष्ठत्यतिष्ठानावर्कस्य च विशेषतः । अतोऽन्यथापादि वेदान्तैर्योगिनाश्चस्मृतिः (संहृतिः) कथम् ॥ ४०
कृतोपहतवाक्यत्वादधर्मो मनाहतेः । अन्यथापि महेशेन नित्यमङ्गीकृतश्च यत् ॥ ४१
तस्मादीशादृताख्यात्तु हेतुवादो विपश्चिता । न कार्योऽत्र द्विजश्रेष्ठाः कुर्वंश्चाशु विनश्यति ॥ ४२
मासु प्रसादयन्तीं पुंसां पञ्चविंशतिमूर्तिषु । कल्याणानि भविष्यन्ति श्रेयांस्यप्यमिताः श्रियः ॥ ४३
सूतः — उपदेशाख्यमेतद्धि काण्डमुक्तं मयाऽधुना । वर्णं शिवरहस्याख्यं सप्तकाण्डसमन्वितम् ॥
भवद्भिश्च श्रुतं सर्वं भाग्यवद्भिर्मुनीश्वराः ॥ ४४

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे नवतितमोऽध्यायः ॥

॥ अथ एकनवतितमोऽध्यायः ॥

स्कान्दपुराण श्रोतॄणां मुनीनां पुरतः सपरिवारस्य श्रीपरमेश्वरस्य आविर्भावः ॥

ऋषयः —

अद्यप्रभृति भो सूत त्वमाचार्यः पिता च नः । शरीरमात्रजनकौ पितरौ सर्वदेहिनाम् ॥ १
ब्रह्मदो ज्ञानदश्चासि तारिताश्च त्वया वयम् । षण्णाञ्च पितॄणां मध्ये गरीयान् ब्रह्मदः पिता ॥ २
येनाशापाशसंसारव्याधिर्घोरोऽपनीकृतः । शरीरमर्थं प्राणांश्च सद्गुरुभ्यो निवेदयेत् ॥ ३
इति वेदविदो लोके पठन्ति विबुधेश्वराः । तस्माद्दत्तानि भवसूत शरीराणि महामते ॥ ४
समर्पितानि प्राणाश्च तुभ्यं सूत जगद्गुरो । अस्माकमीश्वरो मोक्षः कृतार्थाः कृपया तव ॥ ५
सर्वं निवेदयेदर्थमाचार्यायेति हि श्रुतिः । इत्युक्त्वा त नमश्चक्रुस्सोऽपि तान्मुनिसत्तमान् ॥ ६
पुनश्च सूतस्तानाह किं मां ब्रूथ वमीश्वराः । सांब सर्वजगन्नाथं स्तोष्यामस्तत्फलं शिवम् ॥ ७
इति सूतवचश्श्रुत्वा सर्वे ते देवमीश्वरम् । तुष्टुवुर्ध्येयं सुरैस्सर्वैस्स्तुवच्छ्रुतिभिः स्तुतम् ॥ ८
एतस्मिन्नन्तरे देवस्तेषां मध्ये दयानिधिः । आविरासीदुमादेव्या स्कन्दविघ्नेश्वरादिभिः ॥ ९
आरुह्य वृषभं शुभ्रं कैलासगिरिसन्निभम् । आखण्डलमुखाशेषलेखलोकसमावृतः ॥ १०
सर्वे देवास्सगन्धर्वास्सयक्षोरगराक्षसाः । मुमुचुः पुष्पवर्षाणि देवस्याग्रे दिवौकसः ॥ ११
देवदुन्दुभयो नेदुर्दिवि सागरसन्निभाः । निस्साणडिण्डिमानेकसहस्राणि नभस्सदः ॥ १२
तिमिलागोमुखानाञ्च कोटिकोटीरवादयन् । दध्मुश्शङ्खांश्च शङ्खानां शृङ्गाणां पद्ममर्बुदम् ॥ १३
काहलीनाञ्च चित्राणां महापद्मानि सस्वनुः । मृदङ्गतालपटह कोटिकोटीरवादयन् ॥ १४
तिरश्चकार तान् शब्दांस्तुमुलो दुन्दुभिस्वनः । जितार्णवमहारावो गणेश्वरकराहतः ॥ १५
ननृतुर्मुनयस्सर्वे दण्डानुत्क्षिप्य सर्वशः । जगुश्च सामभिः केचित्सामगानविशारदाः ॥ १६
हाहाहूहूश्चित्रसेनो महाचित्ररथश्च सः । तुंबुरुर्नारदश्चापि गान्धर्वश्रुतिपारगाः ॥ १७
किन्नराश्च सपत्नीकास्तथा किं पुरुषोत्तमाः । उपवीणयितुं प्राप्ता गोमायीश्वरकार्मुकम् ॥ १८
तत्र साक्षान्महाविष्णुः स्वाभिर्मूर्तिभिरावृतः । छन्दोमयेन पत्रिणां राज्ञः स्कन्धेन संवृतः ॥ १९
देवदेवं महादेवं सिषेवे वामपार्श्वगः । अपथेकमना रौद्राङ्गणास्सज्जनतापतिम् ॥ २०
पश्चाच्च पद्मिनी स्त्रीणां परिवारसमावृता । पशूनां पतिमीशानं प्रार्थयामास वै गिरा ॥ २१
सौभाग्यमतुलं रूपं सौमङ्गल्यञ्च शाश्वतम् । देवीञ्च गिरिसंभूतां देववामाङ्कसंस्थिताम् ॥ २२
वैष्णवाश्च गणश्रेष्ठा विष्णुचिह्नविराजिताः । सिषेविरे महादेवं सांबं तत्पार्श्वसंस्थिताः ॥ २३
पद्मासनोऽपि भगवान् भारत्या सह हंसगः । भगवन्तमुमाकान्तं भावपूतेन चेतसा ॥ २४
ध्यायन्नेकमना रौद्रसूक्तमन्त्रपरायणः । प्रार्थयामास देवेशं भक्तिमेवांघ्रिपङ्कजे ॥ २५
ब्राह्मणाश्च गणास्सर्वे प्रजानां पतयो नव- । प्रार्थयामासुरीशानं सनकाद्यैश्च योगिभिः ॥ २६
ब्रह्मर्षयो महाभागास्तथा देवर्षयोऽमलाः । योगिनः कपिलाद्याश्च देवं सर्वेऽस्तुवन्मुदा ॥ २७
अथ दिव्यं महच्चारु नानामणिविराजितम् । काञ्चनाद्रिनिभं तप्तकाञ्चनाच्छतमद्भुतम् ॥ २८
सिंहासनं महच्चैकमीश्वरार्हं समुद्बभौ । अनुजग्राह स देवो देवीस्कन्दविनायकैः ॥ २९
चामराणि विचित्राणि व्यजनानि च कोटिशः । वीजयन्तेस्म महार्हाणि कन्यकाभिरादरात् ॥ ३०
धूपायन्तिस्म गणपाः कालागरुजोद्भवैः । ते धूपैश्च निषीदन्ते देवस्थानं मनोहरम् ॥ ३१
दृष्ट्वा तदीदृशं शंभोरास्थानं शौनकादयः । देवं देव्या समासीनं दिव्ये सिंहासनोत्तमे ॥ ३२

दृष्ट्वाऽमितमहानन्दभराक्रान्तात्ममानसाः । विविदुः स्वांस्तथा नान्यानिमं लोकममुं च ते ॥ ३३
ननृतुः केचन परे मुहुर्विवशा भृशम् । व्यलुठंश्चापरे केचिज्जहसुश्च परे द्विजाः ॥ ३४
गायन्तश्च नदन्तश्च विवशीतान्तरात्मता । आनन्दाम्बुजलापूर्णलोचना मुनयः परे ॥ ३५
कुर्वन्तिस्म महोच्छ्वासनिश्वासांश्च केचनावशाः । केचिज्जयजयेत्यूचुः प्रीतिकण्टकितत्वचः ॥ ३६
एवं देवसभामध्ये विवशान्मुनिपुङ्गवान् । महर्षयो वसिष्ठाद्या नारदाद्याः सुरर्षयः ॥ ३७
वसिष्ठः काश्यपः कण्वो विश्वामित्रः पराशरः । हरितोऽग्निर्भृगुः कुत्सस्त्रसदस्युश्च तत्सुतः ॥ ३८
पौरुकुत्सः पौषशिष्टिस्तपोनिष्ठो महातपाः । राथीतरः सत्यवचा नाको मौद्गल्य एव च ॥ ३९
वाजश्रवा उशन्योगी नाचिकेतश्च तत्सुतः । माण्डूकश्चापि कक्षीवानौशिजश्च महातपाः ॥ ४०
वीतहव्यः श्यावसश्च सत्यनिष्ठो महातपाः ॥ ४१
अङ्गिराश्शङ्खलिखितौ दक्षश्च क्रतुरेव च । देवलो मुनिशार्दूलश्शुकः कण्वः पराशरः ॥ ४२
मरीचिः काश्यपश्चैव रोमशो दाल्भ्य एव च । एते चान्ये च मुनयो जनलोकनिवासिनः ॥ ४३
शौनकादिमुनिश्रेष्ठान्नैमिशारण्यवासिनः । आलिङ्ग्य च मुदाऽन्योन्यं शशंसुर्गीर्भिरादरात् ॥ ४४
मुनयो ये महाभागाः यूयं हि कृतिनां वराः । यावदस्याश्रमं रम्यं नैमिशारण्यमाश्रिताः ॥ ४५
ब्रह्मणो हि गिरा नैवावेदश्च सुकृतैकराम् । तत्प्रसङ्गेन ते यूयं सूतवक्त्रनिशाकरात् ॥ ४६
परामृतमसि स्वादु पानीयक्षरितं महत् । पीतवन्तोऽत्र पुण्येन प्रसन्नो योऽद्य शङ्करः ॥ ४७
सह देवैर्गणवरैर्देव्या स्कन्देन नन्दिना । गजवक्त्रेण देवेन सर्वेशो वो कृतार्थयत् ॥ ४८
युष्माभिरीशमालोक्य कृतार्थाः स्म जगद्गुरुम् । अस्तुवन्मुनयो दिव्या मुनीन्वैखानसोत्तमान् ॥ ४९
मनस्संस्तम्भ्य ते चामी महादेवमुमापतिम् । सिंहासने समासीनमस्तुवन् सर्वे एव ते ॥ ५०
मुनयः — जयदेव परानन्द जयदेव जगद्गुरो । जय शंभो जगाधीश जय कान्तार्धविग्रह ॥ ५१
जय कल्याणनिलय जय प्रकृतिसुन्दर । सत्यचिद्घन सर्वेश जय वाचामगोचर ॥ ५२
जय विद्यामयेशान जय विद्यापदामल । जय दुस्तरसंसारतारणार्तिहर प्रभो ॥ ५३
जयामोघमहासत्त्व शुद्धबुद्धिविजृम्भण । त्वं सर्वमङ्गलाकार शतमङ्गलमङ्गलः ॥ ५४
अतोऽत्र ये नमन्ति त्वां ते वै मङ्गलभागिनः । स्तुवन्तो मुनयोऽधीशं प्रणेमुश्च पुनः पुनः ॥ ५५
तानुवाच पुनश्शम्भुः प्रहृष्टेनान्तरात्मना । प्रीतोऽस्मि योऽनया स्तुत्या मुनीन्द्रा ब्रह्मवादिनः ॥ ५६
यूयं प्रियतमा लोके ममात्यर्थं धरास्थिताः । इदं शिवरहस्याख्यखण्डं युष्माभिरादरात् ॥ ५७
श्रुतं तेन प्रसन्नोऽहमाविर्भूतोऽद्रिजासखः । विशेषादनया स्तुत्या प्रीतोऽस्मि मुनिसत्तमाः ॥ ५८
नाहं तपोभिरत्युग्रैर्यज्ञैश्च बहुदक्षिणैः । महादानैरनेकैर्वा नैवं प्रीतोऽस्मि कस्यचित् ॥ ५९
तस्मान्मुक्ता महाभागा वृणीध्वं वरमुत्तमम् । इति वादिनि देवेशे सांबे सर्वेश्वरेश्वरे ॥ ६०
प्रणम्य मुनयो हृष्टा वव्रिरे वरमुत्तमम् । इदं शिवरहस्याख्यखण्डं शृण्वन्ति ये जनाः ॥ ६१
तेषामेव प्रसन्नस्त्वं कृपया देहि वाञ्छितम् । देहि पुत्रार्थिनां पुत्रान्धनं देहि धनार्थिनाम् ॥ ६२
विद्यार्थिनां च विद्यां त्वं विजयं च जयार्थिनाम् । क्षेत्रार्थिनां तथा क्षेत्रं ग्रामं ग्रामार्थिनामपि ॥ ६३
ये यमिष्टमभिध्याय वै शृण्वन्तीदमुत्तमम् । तेषां तं तमभीष्टं त्वमचिरादेव देहि भो ॥ ६४
भक्तानुकम्पया भक्तिरविघ्नाऽस्तु शङ्कर । अंबिकासहितस्येश तव सर्वपरप्रद ॥ ६५
प्रार्थितो मुनिशार्दूलैरिति देवोऽम्बया सह । दत्वाऽर्थितान्वरान् सर्वानन्तर्धिमगमद्विभुः ॥ ६६
अथ ते शौनकप्रष्ठास्सूतेन मुनिसत्तमाः । चक्रुः प्रणामं देवाय कैलासशिखरं प्रति ॥ ६७

हर्षगद्गदया वाचा जगदुश्च परस्परम् । वयं सर्वे कृतार्थाः स्मो वेदान्तसमाश्रयात् ॥
ब्रह्मणो वचनादेव सूतस्यास्य दर्शनात् । ब्रुवतस्तानिति मुनीनथोचे रोमहर्षणः ॥
अहमद्य कृतार्थोऽस्मि संपर्काद्भवतां सताम् । सति श्रोतरि वक्तास्याद्धर्माधर्मस्य भूतले ॥
सयो युष्मद्वयमेवाद्य मयेदं पठितं मुदा । स्कन्दस्य चरितं ह्येतच्छ्रोतॄणां मङ्गलावहम् ॥
यत्र यत्रेदमाख्यानं पठ्यते ब्राह्मणोत्तमाः । तत्र तत्रोमया देवस्सान्निध्यं कुरुते गणैः ॥
इदं पुराणं पठतां श्रोतृभिश्च महत्तरैः । अभ्यर्च्य भारतीपीठे वस्त्रपुष्पाक्षतादिभिः ॥
व्याख्यानमण्डपं सर्वमलंकृत्य वितानकैः । चामरैर्दर्पणैश्चित्रैः कुसुमैर्विविधैश्शुभैः ॥
गव्येन शकृता लिप्य सर्वं व्याख्यानमण्डपम् । देवं धूपैर्धूपयित्वा कालागरुभवैरपि ॥
प्राधान्येन च यच्छ्रोता प्रभुर्वा पृथिवीपतिः । नियमेन परेणासावहरहर्ब्राह्मणैस्सह ॥
आद्यैश्च बहुभिर्मन्त्री पृतनापतिभिस्समम् । सभ्यानभ्यर्च्य विविधैश्चन्दनाद्यैरनेकधा ॥
तांबूलैश्च सकर्पूरैस्सचूर्णैरतिकोमलैः । तैरनुज्ञापितो नित्यं प्रीतैः प्रीतेन चेतसा ॥
सम्यग्भुक्त्वाऽथवाऽभुक्त्वा श्रावयेच्छ्रद्धया सह । फलपुष्पैर्निवेद्याथ गुरुमामिततेजसम् ॥
वक्तारमपि विद्वांसं पुराणस्यास्य शीलिनम् । जितेन्द्रियं जितक्रोधं स्कन्देशाग्न्युपासकम् ॥
वेदवेदान्तनिष्णातं वेदान्तार्थविचारिणम् । कुटुम्बिनं कुलीनं च पुत्रपौत्रकलत्रिणम् ॥
बद्धाञ्जलिकरो विद्वान् ब्रह्मविद्यामिमां क्रमात् । उपक्रम्य शुभे काले चन्द्रताराबलान्विते ॥
दशाहदशाध्यायान् शृणुयात्स समाहितः । समाप्य च चतुरो द्विजवंशाय चैककम् ॥
श्लोकानां दश वार्थैकं तदर्धमपि वाऽऽदरात् । स्कन्दस्य प्रियमन्विच्छन् सामीप्यफलदायिनः ॥
काण्डे काण्डे समाप्ते तु ब्राह्मणान् भोजयेच्छुभान् । अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा ॥
पञ्चाशदपि वा तेषां चतुर्विंशतिकामपि । द्वादशापि च विप्राणां भोजयेत् प्रीतये शिशोः ॥
कल्याणसमये शंभोः स्कन्दपट्टाभिषेचने । तस्यापि च विवाहे च भार्ययोरुभयोरपि ॥
समाप्तावपि काण्डस्य वक्तारं संप्रपूजयेत् । वस्त्रोर्मिकाविभूषाद्यैः केयूराद्यैस्सदक्षिणैः ॥
संपूजय समाप्तौ तु पुराणस्यास्य कृत्स्नशः । महाविभवविस्तारं ब्राह्मणान् भोजयेत्सुधीः ॥
सुब्रह्मण्यप्रसादार्थं सामीप्यफलसिद्धये । वक्तारमपि विद्वांसं बहुसत्कृत्य वाञ्छितैः ॥
धनैरन्यैश्च गोवाजिगजस्यन्दनयानकैः । ग्रामक्षेत्रगृहैरन्यैस्स्तुतिः कार्यं यावत्तये ॥
लोभान्मोहाद्भयाद्वापि यदि सर्वं न कारयेत् । स्वामिनाथोऽपि तस्यैव फलं सर्वं न दास्यति ॥
यानमारोप्य वक्तारं वाद्यमङ्गलवादकैः । ग्रामप्रदक्षिणं कृत्वा स्वगृहं प्रापयेत्सुधीः ॥
एवं कृतश्चेत् स्कन्दोऽपि सर्वाभीष्टप्रदो भवेत् । एवं श्रुते पुराणेऽस्मिन् श्लोके श्लोकार्धमेव वा ॥
चतुर्णामपि वेदानां सषडङ्गपदक्रमैः । जपतो यत्फलं लोके श्रद्धया कोटिसंख्यया ॥
तत्फलं कोटिगुणितं श्रद्धया लभते फलम् । शतानामपि यज्ञानामश्वमेधाभिधायताम् ॥
षोडशानां च दानानां फलं कोटिगुणं भवेत् । पुत्रमित्रकलत्राद्यैर्भुक्त्वा भोगाननेकधा ॥
इहलोके परत्रापि स्कन्दसायुज्यमाप्नुयात् । पुत्रकामो लभेत्पुत्रान् धनकामो लभेद्धनम् ॥
अन्ते च शिवसायुज्यं मोक्षं विन्दन्ति मानवाः । तस्मादहरहर्नित्यं श्रोतव्यमभिवृद्धये ॥

सूतात्मजस्य वचसेति मुनीन्द्रवर्याः सन्तोषवारिधिलहरीततिमग्नचित्ताः ।
संभाव्य सूतमपि तं स्वमती विसृज्य प्रापुस्तदाश्रमपदं परितोषभाजः (तदिमामपि श्रीः) ॥ १००

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे उपदेशकाण्डे एकनवतितमोऽध्यायः ॥

उपदेशकाण्डस्समाप्तः ॥ शिवरहस्यखण्डस्समाप्तः ॥